પ્રકાશક


આગમોદ્ધારક-ગ્રન્થમાલાના એક-કાર્યવાહક

# શા. રમણલાલ જયચંદ

કપડવણજ (જિ. ખેડા)




દ્રવ્યસહાયક

| | |
|---|---|
| ૩૫૦૦-૦૦ | લુણાવાડા શ્રીજૈન સંઘ, જ્ઞાનખાતામાંથી. |
| ૨૫૦૦-૦૦ | સુરત વડાચૌટા સંવેગી મોટો ઉપાશ્રય, જ્ઞાનખાતામાંથી. |
| ૨૫૫૧-૦૦ | પૂ. પં. શ્રી ચિદાનંદસાગરજી ગણિવરના ઉપદેશથી, કપડવણજ પંચનો ઉપાશ્રય, ૨૦૦૦-૦૦ બહેનોનો ઉપાશ્રય, ૫૫૧-૦૦ જ્ઞાનખાતામાંથી. |
| ૫૦૦૦-૦૦ | પૂ. પં. શ્રી સૂર્યોદયસાગરજી ગણિવરના ઉપદેશથી, સુરેન્દ્રનગર જૈનતપગચ્છમૂર્તિપૂજકસંઘ, જ્ઞાનખાતામાંથી. |
| ૧૦૦૦-૦૦ | પૂ. પં. શ્રી સૌભાગ્યસાગરજી ગણિવરના ઉપદેશથી, કપડવણજ, મીઠાભાઇ ગુલાલચંદ જૈન ઉપાશ્રય, જ્ઞાનખાતામાંથી. |
| ૫૦૦-૦૦ | પૂ. મુનિરાજશ્રી ગુણસાગરજી મહારાજના ઉપદેશથી. સુરત, બાઈ ફુલકોર ફકીરચન્દ નેમચન્દ ટ્રસ્ટ. |




મુ .............દ્ર................ક

ભાઈલાલભાઈ મોહનભાઈ પટેલ
મેનેજિંગ ડીરેક્ટર
સહકારી છાપખાનું વડોદરા લિ.
રાવપુરા, વડોદરા

જૈનોદય પ્રેસ
ચૌમુખીપુલ, રતલામ

# પ્રકાશકીય નિવેદન

પ૦ પૂ૦ ગચ્છાધિપતિ આચાર્યશ્રી **માણિક્યસાગરસૂરીશ્વરજી** મહારાજની નિશ્રામાં વિ. સ. ૨૦૧૦ વર્ષે **આગમોદ્ધારક–ગ્રંથમાલાની** સ્થાપના થઇ હતી. આ ગ્રન્થમાલાએ ત્યારબાદ પ્રકાશનોની ઠીક ઠીક પ્રગતિ કરી છે ।

સૂરીશ્વરજીની પુણ્યકૃપાએ મહોપાધ્યાયશ્રી **ધર્મસાગરગણિવર**–વિરચિતવિવરણયુક્ત આ **'જંબુદ્દીવ–પણ્ણત્તી'** નામનો આગમ-ગ્રન્થ આગમોદ્ધારક-ગ્રન્થમાલાના ૫૭ મા રત્ન તરીકે પ્રગટ કરતા અમોને બહુ હર્ષ થાય છે ।

આ ગ્રન્થ બે પ્રેસમાં છપાવવામાં આવ્યો છે, તેથી બે વિભાગ પાડવામા આવ્યા છે, પરન્તુ ગ્રન્થકારનાં કરેલા નથી ।

આના પ્રકાશનમાં પૂજ્ય પંન્યાસ શ્રી અભયસાગરજી ગણિવરે પ્રેસકોપી આપી છે,

આના સંશોધન માટે સુરત 'જૈનાનંદ–પુસ્તકાલય'ની હસ્તલિખિત પ્રતિ તેમજ 'શ્રીનેમિવિજ્ઞાન કસ્તૂરસૂરિ જ્ઞાનમંદિર' સુરતની હસ્તલિખિત પ્રતિ તથા કપડવંજ મીઠાભાઈ ગુલાલચંદ જૈન ઉપાશ્રયના ભંડારની હસ્તલિખિત પ્રતિ અને 'શ્રી અભયદેવસૂરિજ્ઞાનમંદિર' ની હસ્તલિખિત પ્રતિ ઉપયોગમાં લેવામા આવેલ છે ।

આનું સંશોધન પરમ પૂજ્ય ગચ્છાધિપતિ આચાર્યશ્રી **માણિક્યસાગરસૂરીશ્વરજી** મહારાજની પવિત્રદૃષ્ટિ નીચે શતાવધાની પંન્યાસશ્રી લાભસાગરજી ગણિએ કરેલ છે, તે બદલ તેઓશ્રીનો તેમજ જેઓએ આ પ્રકાશનમા દ્રવ્ય તથા પ્રેસકોપી, હસ્તલિખિત પ્રતિ આપવાની સહાય કરી છે, તે બધા ય મહાનુભાવોનો આભાર માનીએ છીએ ।

પ્રકાશક

तपागणेऽभवज्जैन–शासनस्य प्रभावका ।
आगमोद्धारका. पूज्या **आचार्याऽऽनन्दसागराः** ॥ १ ॥
वाचनादिसौकर्याय संशोध्य यै प्रयत्नत ।
युता निर्युक्तिवृत्त्याद्यै. प्रकाशिता जिनागमाः ॥ २ ॥
मुनीनामागमज्ञप्त्यै पत्तनादिपुरेषु यै. ।
षाण्मासिक्य. शुभा. सप्त दत्ता आगमवाचना. ॥ ३ ॥
तलाटिकाया सिद्धाद्रे-स्तथा सूरतबन्दिरे ।
जाते यदुपदेशाद् द्वे रम्ये आगममन्दिरे ॥ ४ ॥
तेषा पट्टे रविरिव गगने **माणिक्यसागरः सूरिः** ।
'जम्बूद्वीपप्रज्ञप्ति' सम्पादितवान् स वृत्तिवृतम् ॥ ५ ॥

- संशोधक.

# विषयानुक्रमः

卐

## प० पू० तपागणसौधस्तंभ–महोपाध्याय–श्री धर्मसागरगणिवर–

## स्तुत्यष्टकम्

सिताम्बरे यो विमले तपागणे–ऽभवत् प्रभावान् नभसीव भास्करः ।
जिनाङ्गषड्दर्शनशास्त्रवेदिनं नमामि तं वाचकधर्मसागरम् ॥१॥

आचार्यवर्यो विजयादिदानसत् सूरीश्वरो वाचकसत्पदाङ्कितम् ।
चकार यं पीतजिनाऽऽगमाऽमृतं नमामि तं वाचकधर्मसागरम् ॥२॥

श्रीकल्पसूत्रे किरणावली बुध–प्रिया सुवृत्ती रचिता सविस्तरा ।
तथाऽन्यशास्त्राण्यपि येन धीमता नमामि तं वाचकधर्मसागरम् ॥३॥

जिनेन्द्रवाणीरसविद्धधातवे यस्मै नमस्यन्ति गुणानुरागिणः ।
जिनेशशास्त्रानुगवाक्यविस्तरं नमामि तं वाचकधर्मसागरम् ॥४॥

यस्माद् भजन्ते स्म भयं कुपाक्षिका चामुण्डिकाद्या हरिणा हरेरिव ।
उत्सूत्रदु:कण्टकभेदनोद्यतं नमामि तं वाचकधर्मसागरम् ॥५॥

यस्य प्रसिद्धो भुवने क्षमावतो यशश्चयः शङ्खशशाङ्कनिर्मलः ।
षड्जीवकायाऽवनतत्परं सदा नमामि तं वाचकधर्मसागरम् ॥६॥

शान्तत्वदान्तत्वमुमुक्षुतादयो यस्मिन् गुणा रत्नवदर्णवे वराः ।
भावानुकम्पाञ्चितचारुचेतसं नमामि तं वाचकधर्मसागरम् ॥७॥

इत्थं स्तुतो हर्षभराद् गणीश्वरः स्तम्भायमानः तपगच्छमन्दिरे ।
श्रीमानुपाध्यायपदाङ्कितः सुधी–र्जयत्यजस्रं गणिधर्मसागरः ॥८॥

## पू० आगमोद्धारक–आचार्यप्रवरश्रीआनन्दसागरसूरीश्वर–

## गुण–स्तुतिः

प्रवर्त्तमानतीर्थेशं वन्दित्वा ज्ञातनन्दनम् । स्तवीमि सूरिराजं सद्–गुरुमानन्दसागरम् ॥१॥

देशे मनोहारिणि गूर्जराख्ये, श्रीविक्रमाद् भूगुणनन्दचन्द्रे (१९३१) ।
वर्षे पुरं कप्पडवञ्जसञ्ज्ञं, व्यधात् पवित्रं निजजन्मना यः ॥२॥

नेमा-वणिग्वंशभवोऽभवत् पिता, श्रीमग्नलालेत्यभिधो यदीयः ।
माता सुशीला यमुनाऽभिधाना, भ्राता सुधी श्रीमणिलालनामा ॥३॥
संसारनैर्गुण्यविदौ यदीयौ, वृद्धः पिता ज्येष्ठसहोदरश्च ।
प्रपन्नवन्तौ विनयाऽभिधान-गुरोः पदाब्जे चरणं जिनोक्तम् ॥४॥
(१९४७) मुन्यब्धिनिध्यब्जसमे गणीनां, जह्नुरवारानिधिसद्गुरूणाम् ।
पादारविन्दे ललनादिसङ्गं, हित्वा व्रतं यः स्व्यकरोत् युवत्वे ॥५॥
यः शब्दतर्कागमशास्त्रवेत्ता, विशुद्धपञ्चाचरणैः पवित्रः ।
आपञ्चमाङ्गं, विधिनोढयोगः, सद्देशनाकारिषु चाग्रगण्यः ॥६॥
धैर्येण गाङ्गेयगिरिः सुधांशुः, सौम्येन गीर्वाणगुरुः सुबुद्धया ।
परार्थकारित्वगुणेन मेघः, सिन्धुश्च गम्भीरतयाऽभवद् यः ॥७॥
यः तत्त्वप्रश्नोत्तर-जैनगीते, सिद्धप्रभानामकशब्दशास्त्रम् ।
न्यायावतारे द्वयविंशिकायां, वृत्तिं तयाऽन्यां व्यदधात् कृतीश्च ॥८॥
यं वत्सरे वेदहयाङ्कचन्द्रे (१९७४), सूर्ये पुरे सूरिपदेन पूज्यम् ।
व्यभूपयत् सङ्घकृतोत्सवेन गुणोदधिं श्रीकमलाख्यसूरिः ॥९॥
वाचयमानां च परःशतानां, श्रुतार्थिनां पत्तनमुख्यपुर्षु ।
षाण्मासिकीः सप्त जिनाऽऽगमानां, यो वाचना अर्पितवान् श्रुतज्ञः ॥१०॥
तत्रादिमा सवति वैक्रमीये भूम्यश्वनन्देन्दुमिते (१९७१) वितीर्णा ।
सुचारुजैनेन्द्रगृहेऽणहिल्ल-पुरे प्रतीते श्रुतवाचनका ॥११॥
द्वन्द्वं तथा कप्पडवञ्जसञ्ज्ञे, स्वजन्मना पूततमे द्वितीया ।
अहम्मदावादपुरे तृतीया, सद्वाचना जैनपुरीति-वित्ते ॥१२॥
जिनाऽऽलयैरागममन्दिराद्यै-र्विभूपिते सूर्यपुरे प्रसिद्धे ।
दत्ते चतुर्थी किल पञ्चमी च, मनोहरे आगमवाचने द्वे ॥१३॥
षष्ठी च शत्रुञ्जयतीर्थभूमौ, श्रीपादलिप्ताऽभिधरम्यपुर्याम् ।
दत्तान्तिमा मालवदेशरत्ने, ख्याते पुरे श्रीरतलामसञ्ज्ञे ॥१४॥
अन्याऽन्यसङ्घाटकसन्मुनीनां सिद्धान्तबोधस्य विवर्धनाय ।
एवं वितीर्य श्रुतवाचनाली-मनुग्रहं यो विदधन् महान्तम् ॥१५॥
निर्युक्तिभाष्यादियुतं कृतान्त-माचारमुख्यं गणभृत्प्रणीतम् ।
यः शोधयित्वा स्वयमेव सम्यक्, प्राकाश्यत शासनवद्धरागः ॥१६॥
सूर्यात् पुरात् सिद्धगिरेः सुसङ्घं यन्निश्रया जीवनचन्द्र इभ्यः ।
चकर्ष षट्सप्तिनिधीन्दुवर्षे (१९७६), रौपट्कपाल बहुसाधुश्राद्धम् ॥१७॥

* देखिये शेष पृष्ठ ८ पर

# परम पूज्य आगमोद्धारक आचार्यप्रवरश्री

# आनन्दसागरसूरीश्वरजी महाराज



जन्म
स १९३१
अषाड वद ०))
कपडवणज

दीक्षा
स १९४७
महा सुद ५
लींबडी



पन्यासपद
स १९६०
जेठ सुद १०
अमदावाद

आचार्यपद
स १९७४
वैशाख सुद १०
सूर्यपूर

स्वर्गवास
स २००६
वैशाख वद ५
शनिवार

कर्त्तारमागमसमुद्धरणस्य सम्यग्
दातारमुत्तमजिनागमवाचनानाम् ।
सत्संयम श्रुतधर भूपबोधकार-
माऽऽनन्दसागरगुरु प्रणमामि सूरिम् ॥१॥

## श्री शान्तिनाथस्य स्तवनम्

(राग अरजी तो कर रहा हू)

वन्दे श्री शान्तिनाथ शान्तिकर जनानाम् ॥

य पूर्णनित्यबोध, जितरागद्वेषयोध. । सुराऽसुरेशमहितं, वन्दे श्रीशान्तिनाथम् ॥१॥
पारापत पतत्रि, त्रातश्च येन श्येनात् । करुणारसाऽम्बुराशि, वन्दे श्री० ॥२॥
य षोडशो जिनोऽस्ति, पञ्चमश्च चक्रवर्त्ती । पदवीद्वय दधान, वन्दे श्री० ॥३॥
विच्छिन्नजन्ममरण, कृतभव्यप्राणिशरणम् । आश्रितदुखहरण, वन्दे श्री० ॥४॥
यस्याऽभिधानमन्त्र, यो नित्यमेव स्मरति । स स्यात् सुखी सदैव, वन्दे श्री० ॥५॥
यस्याऽचिरा सुजननी, पिता च विश्वसेन । मृगलाञ्छनं दधान, वन्दे श्री० ॥६॥
इत्य स्तुत श्रीशान्ति-र्माणिक्यसिन्धुना स । शश्वत्सुख वो दद्यात्, वन्दे श्री० ॥७॥

× × ×

## श्री महावीरस्वामिनः स्तवनम्

(राग–बिना प्रभु पासके देखे)

नम श्री वर्धमानाय, मानमातङ्गसिंहाय ॥

सिद्धार्थवशदीपाय, त्रिशलाकुक्षिरत्नाय । यशोदाकान्तकान्ताय, नम श्री० ॥१॥
भवदावाऽग्निनीराय कर्ममेवालीवाताय । मोहमहीध्रवज्राय, नम श्री० ॥२॥
इन्द्रातिरेकरूपाय, सोमातिशायि सौम्याय । मन्दराधिकधीराय, नम श्री० ॥३॥
जितरागादिदोषाय, देवदेवेन्द्रपूज्याय । वज्रिवन्दितपादाय, नम श्री० ॥४॥
(अपूर्ण)

× × ×

## श्रीजिनेश्वरस्वरूप

सभीको जानने वाले, सभीको देखने वाले । मुक्तिमारग बताते हे, हमारे जैनके ईश्वर ।१।
नहिं क्रोधी नहि मानी, नहिं कामी नहिं मायी । वीतरागी वीतद्वेषी, हमारे० ॥२॥
नहिं जगत् बनाते है, नहिं अवतार लेते है । नहि दुष्टो को हणते है, हमारे० ॥३॥
अशरीरी भी होते है, देहधारी भी होते है । निरजन और निराकारी हमारे० ॥४॥ (अपूर्ण)

※ पृष्ठ ६ का शेष

यदाज्ञया पोपटलालश्रेष्ठी श्रीजामपूर्वान् नगरात् सुपुण्य ।
अकर्षयत् सिद्धगिरे सुसङ्घ षड्रीयुत वेदनवाङ्कगोऽब्दे (१९९४)॥१८॥
न्यवारयन् मालवदेशसैला-नेश हरिश्चन्द्रनृप प्रबोध्य ।
अजादिहिंसा तदधीनदेशे, धस्रेषु च पर्युषणादिकेषु ॥१९॥
सुदीर्घकालस्थितये श्रुतस्य, शुभोपदेशं समवाप्य यस्य ।
मनोरमे देवविमानतुल्ये, जाते शुभे आगममन्दिरे द्वे ॥२०॥
शत्रुञ्जयाद्रेस्तलहट्टिकाया, शीलासमुत्कीर्णकृतान्तमेकम् ।
द्वैतीयिक सुन्दरताम्रपत्रो-त्कीर्णाऽऽगम सूरतवन्दिरे च ॥२१॥
भोपावराख्य जिनशान्तिनाथ-विभ्राजित विश्रुतसुप्रभावम् ।
यस्योपदेशादगमत् प्रसिद्धि, तीर्थं शुभ मालवमण्डलस्थम् ॥२२॥
अन्याऽन्यपीत्थ सुकृतानि जैन-बिम्बप्रतिष्ठाप्रमुखानि सूरि ।
विधाय षट्शून्यनभोऽक्षिवर्षे (२००६),ध्यानस्थित सूर्यपुरेऽगमद् द्याम् ॥२३॥
इत्यस्तुत श्रुतधर शुचिसयमादि-माणिक्यसिन्धुरनगाररणाऽऽनताङ्घ्रि ।
जह्वेरसागरगणीश्वरपट्टदीप, आनन्दसागरगुरुर्जयतात् स सूरि ॥२४॥



## स्वर्गस्थ पूज्य गच्छाधिपति आचार्यश्रीमन्माणिक्यसागरसूरीश्वर

## गुण-स्तुतिः

कर्ता-विद्वान् वैद्यराज शांतिभाई, लुणावाडा

गुरुर्गुरुतमो धाम सत्य सत्यपराक्रम । निमिषोऽनिमिष स्रग्वी वाचस्पतिरुदारधी ॥१॥

गुरु -सर्वविद्याओ आपनार,
गुरुतम -गुरुओना गुरु ब्रह्मादिकने ब्रह्मविद्या आपनारा ।
धाम -सर्वना आश्रयरूप,
सत्य -सत्यमूर्ति
सत्यपराक्रम सत्यपराक्रमवाला,

निमिष -योगनिद्रासमये आख मीचनारा,
अनिमिष -सदा य जागृत रहेनारा,
स्रग्वी-पचतन्मात्रारूपी वैजयन्तीमालाने धारणकरनारा,
वाचस्पति -वाणीना पति-बृहस्पति,
उदारधी -विशाल बुद्धिवाला,
तस्मै श्री गुरवे नम -आवा गुरुदेवने आदरयको नमस्कार हो,

# પરમ પૂજ્ય ગચ્છાધિપતિ આચાર્યપ્રવરશ્રી

# માણિક્યસાગરસૂરીશ્વરજી મહારાજ



જન્મ
स १९४८
મહા વદ ९
જવુમર



दीक्षा
स १९६७
મહા વદ ८
भरुच



ગણિ—પન્યાસપદ
स १९८४
માગશર વદ १०
અમદાવાદ



ઉપાધ્યાયપદ
स १९८५
મહા સુદ १०
ભોયણી



આચાર્યપદ
स १९९२
વૈશાખ સુદ ४
પાલીતાણા



સ્વર્ગવાસ
स २०३१
ચૈત્ર વદ ८ શનિવાર
લુણાવાડા

दान्तप्रशान्तसरलप्रकृति गुणाढ्य
गच्छाधिप नृपतिबोधविधायिन च ।
प्रान्ते समाधिमरणेन दिव गत त
माणिक्यसागरगुरु प्रणमामि सूरिम् ॥१॥

# शुद्धि पत्रकम्

| पृ० | पं० | शुद्धम् |
|---|---|---|
| १० | २६ | तस्करा |
| १४ | २ | गोसीससरस- |
| १४ | १४ | उद्गत धूर्त |
| १७ | १० | वश -सन्तान |
| १८ | १६ | 'वलव' ति । |
| १९ | १७ | पत्रवल्ली |
| १९ | ३० | तया चारुर्मनोहरोवेषो यस्या. सा । |
| २२ | ३ | विउव्विणि- |
| २३ | १ | अहापडिरूवं |
| २४ | १५ | आभिमुख्यो |
| २४ | १९ | त्ति । परिसा पडिगया । |
| २५ | १ | महावीररस |
| २५ | २६ | त्रिकूत्व. |
| २५ | २९ | निषसपम्ह |
| २७ | १६ | अभिमुख. |
| २९ | १० | कादाचित्क |
| ३० | २६ | दृष्टान्तान्तरमाह- |
| ३१ | ११ | स्राणि षोडश सहस्राणिद्वे |
| ३५ | २९ | दीर्घत्वं प्राकृतत्वात् । एवमन्यत्रापि दीर्घत्व |
| ३६ | ७ | मेला. वज्ररत्नैरा- पूरिता फ- |
| ३७ | २५ | श्रेणिप्रश्रेणिस्व- |
| ३७ | ३२ | साम्येऽपि |
| ३९ | १३ | मल्लिका |
| ३९ | २९ | कार्ये- |
| ४१ | १८ | 'भिब्भिसमाणे' |
| ४१ | २८ | वज्ररत्नमयो |
| ४२ | ३० | स्वभावावुप- |
| ४४ | ५ | दीया दर्शनीया अभि- |
| ४६ | १२ | ऊर्ध्वीकृत- |
| ४६ | १५ | नि सक्रोशानि वि- |
| ४९ | ३१ | णाइं देसूण अद्ध- जोयण दा- |
| ५० | २२ | भते |
| ५५ | ६ | पाठस्यैव- |
| ५७ | २ | पुरत्थिम- |
| ६१ | २४ | तगुहाया (गुहातो) |
| ६३ | ३ | भद्राशयपुर |
| ६४ | १६ | अधस्तनभागे पुष्करक- णिकासस्थानसस्थि- तानि, तथा उत्कीर्णमि- |
| ७३ | २२ | प्रवृत्तावपि पौण्डरीक- ह्रद- |
| ७४ | ७ | कोडीए |
| ७५ | ११ | मध्येऽष्टौ उपरि च चत्वारि योजनानि विष्कम्भेन । मूले |
| ७६ | ३ | जोअणसहस्साइ ओगा- |
| ७७ | ३ | काल । उत्सर्पिणी- कालस्तु- |
| ७८ | १ | उच्छ्वास- |
| ७८ | १३ | श्रौच्छ्वासा । उच्छ्- |
| ७८ | १७ | शत् ते च |
| ७८ | २५ | णा वर्षशतसहस्रं लक्ष |
| ७८ | २९ | वासकोडीण' |
| ७९ | ६ | पदकदम्बकमपि |
| ८३ | २ | दुरसमदुस्समा |
| ८५ | १ | छत्तीसयमु- |
| ८६ | २/४ | सङ्ख्ये- |
| ८७ | १ | णट्टमाला |
| ८७ | २८ | करतले इ वा, आ- |
| ८९ | १५ | विचित्तभिगाओ' |
| ८९ | २४ | प्राकृतत्वाद् |
| ८९ | २९ | तस्या सुषमसुषमाया |
| ९२ | २४ | प्रदक्षिणा- |
| ९३ | १३ | उपरितनजङ्घे |
| ९४ | २६ | पत्रले-पक्ष्मवती |
| ९५ | १० | किञ्चिन्न्यून- |
| ९५ | १४ | सह सकामस्व- |
| ९६ | २/३ | त्सर्गो |
| ९६ | २९ | कल्पद्रुमाणामाहारो |
| ९७ | २७ | ज्झययूभ |
| ९८ | २/१३ | प० समणा |
| ९९ | २१ | पाणि गृहाणि आलया- |
| ९९ | २४ | प्रज्ञप्तं |
| ९९ | २७ | त्रसस्थिता, अप्येकका ध्वजसस्थिता.. अप्ये- |
| १०२ | २० | कूटाकाराच्छादितो |
| १०२ | २८ | शृङ्ग |
| १०२ | २९ | 'हव्व' |
| १०३ | ३२ | नुरूपकार्यप्र- |
| १०४ | २ | नायमर्थः समर्थः । |
| १०४ | ९ | पाण्डुरोग- |
| १०६ | १२ | अश |
| १०८ | १५ | णाम समाकाले |
| १०८ | १७ | माए समाए पढम- |
| १११ | ६ | भेदमापन्ना |
| ११२ | ८ | लाहिं कल्लाणाहिं सि- |
| ११२ | १४ | आसिअसमज्जिअ- |
| ११७ | २४ | आभिमुख्येन |
| १२० | २५ | चयफल- |
| १२३ | २० | भगिनी |
| १२४ | २६ | पचाहो |
| १२७ | ५ | आचाराङ्गो- |
| १३८ | १८ | अग्र्ये |
| १३९ | १५ | धूलिमडला |
| १४१ | २ | भूमिभाग |

| पृ० | पं० | शुद्धम् |
|---|---|---|
| १४२ | १० | चने सुगमे । |
| १५१ | २४ | सुपमदुस्समा |
| १५६ | ५ | सहोद्भव स्वभाव । |
| १५६ | २५ | ऊर्ध्वमुख- |
| १५८ | १२ | वयण पडिसुणेति पडिसुणेत्ता भरहस्स अति- |
| १५९ | १६ | अक्खिणित्ता |
| १६० | २० | काल'इत्या- |
| १६३ | १७ | 'मिसिमिसत' |
| १६४ | १ | किङ्किणीभि - |
| १६५ | १९ | ह्रस्वदेहा |
| १६५ | २६ | पुष्पपटलक- |
| १६५ | ३१ | शिलाक्षन- |
| १६५ | ३३ | विशेष सुग- |
| १६६ | ३० | 'कयमाह' |
| १६६ | ३१ | द्विप्रमुक्ता. |
| १६७ | ३३ | हृष्टा |
| १६९ | २ | कट्टु |
| १७१ | २ | भिमतदेवताराधन |
| १७१ | १३ | पूर्णप्राये जाते सति |
| १७३ | ३० | नामिदघ्न- |
| १७४ | ३१ | वर्द्धास्ताभि |
| १७४ | ३३ | चला-चञ्चला |
| १७५ | २३ | रत्नावि- |
| १७७ | १४ | एवाह-अह देवा |
| १७७ | २९ | प्रतिनिष्क्रामति |
| १७९ | १८ | उत्कटानि वराणि-उ० |
| १८१ | २५ | तत्र प्रधान- |
| १८२ | ६ | 'मणिमणि' |
| १८२ | २० | चतुष- |
| १८३ | २ | गमनमार्ग- |
| १८३ | २८ | चामरकणग- |
| १८४ | १८ | शीघ्र |
| १८५ | १३ | खड्गा |
| १८५ | २६ | -धूमुख |
| १८५ | २९ | योजिता |
| १८६ | ९ | माञ्जिष्ठादि |
| १८८ | ६ | उवागच्छति, |
| १८९ | १३ | 'अभिजिए ण'ति |
| १८९ | २२ | यावदष्टम- |
| १९० | १३ | कडगाणि |
| १९१ | ९ | केऊरे |
| १९२ | २१ | वहुसमरमणिज्जे |
| १९४ | १५ | बद्ध-कसा |
| १९६ | ९ | निवृत्ता |
| १९६ | २९ | द्वात्रिंशद्वद्धानि |
| १९७ | ६ | परिग्गहिअ |
| १९९ | ८ | वङ्गच कुब्जा |
| २०० | ८ | गिरिवरा -प्रधान |
| | | **द्वितीय विभागः** |
| ३ | ७ | चतसृषु |
| ३ | ८ | पार्श्वतश्च |
| ३ | १७ | द्व्यङ्गुल |
| ६ | ४ | हेतुभूत |
| ६ | २३ | खभसयसन्निविट्ठे |
| ७ | २२ | नन्वेवमनयो |
| ७ | २३ | जलजन्य क्षेत्रविशेष |
| ११ | ७ | चाण्डिक्यिता- |
| १२ | ३ | विघटिता |
| १२ | ८ | नागाभिप्रायेण |
| १२ | १९ | अगुलट्ठपणय |
| १५ | ५ | यच्छब्दोपादानं |
| १५ | १३ | तत्र अनद- |
| १५ | २२ | पत्तमिव |
| १६ | २३ | ह्रस्वानि |
| १७ | २२ | कर्म्मधारय |
| १७ | २३ | चना प्रकारेण |
| १७ | २४ | गहेऊणमित्यत्र |
| १८ / १९ / २१ | १७ / ३ / २३ | आवाडचिला- |
| २१ | २६ | तत्रैवोपागत्य |
| २२ | ६ | त णवणउइ |
| २२ | २० | रूपकपदपद्धति |
| २३ | ३ | ह्रस्वत्व |
| २३ | ११ | धौतानीव |
| २४ | २ | तत्पुर- |
| २४ | ६ | लोम्यादुक्तत्वात् |
| २४ | ७ | दष्टृणा |
| २४ | १५ | जणविरसुअगुणे |
| २४ | २१ | अणग्घित |
| २६ | ५९ | वीरिए |
| २६ | २२ | णाइमुज्जो एव |
| २७ | ५ | मम एअ |
| २७ | १२ | तनुत्राण |
| २७ | १५ | भरत राजान |
| २७ | २० | 'अहवा णमि' |
| २८ | २ | चरणान्यस्तमस्तका |
| २८ | ३० | तेनैवविधे |
| ३० | २५ | यावच्छब्दात् |
| ३५ | १७ | स्वहृदय |
| ३९ | ३० | सङ्क्रम |
| ४१ | ७ | अट्ठुस्सेहा |
| ४२ | २३ | सर्व्वाण्यपि नवसु |
| ४३ | १७ | वत्थाण य'त्ति |
| ४४ | ३ | आकराणां |
| ४५ | १७ | परमुण्णड |
| ४६ | २६ | हारोत्थयसु |
| ४७ | ३ | मडव |
| ४७ | २० | यणिज्जाहि |
| ४८ | ८ | भवणवरवडि- हत्थिरयणे |
| ४९ | २ | वर्षसह- |
| ४९ | १६ | चामरयु- |
| ५० | २ | उडुपु-अ |
| ५१ | २ | रावयन्त - |
| ५१ | ९ | ललातवर |
| ५१ | १८ | उक्खित्ताकरण |
| ५१ | ५८ | अस्यार्थ |
| ५२ | १५ | 'सखिंखिणी' |

| पृ० | पं० | शुद्धम् |
|---|---|---|
| ५३ | १ | श्रेष्ठा' |
| ५३ | ६ | जनान्तरिताभि- |
| ५३ | २१ | हत्थिरयणमि' |
| ५३ | २७ | प्रविशत. |
| ५४ | २१ | माङ्गल्य |
| ५५ | १६ | ग्रामाकर- |
| ५६ | १ | दर्श्यमान. |
| ५६ | २३ | प्रविष्टो |
| ५६ | २६ | यत्कृतवास्त- |
| ५७ | ३ | णिअगवल- |
| ५९ | ७ | उवोगच्छति |
| ५९ | १४ | वाहप्पभितओ |
| ५९ | २० | २ जाव महा- |
| ६२ | ३० | इत्यादितो |
| ६३ | ४ | पंयन्ति-तत्रैव |
| ६५ | १८ | पउमुप्पलपिहाणेहिं |
| ६७ | ९ | तन्तुनिचय- |
| ६८ | २९ | णव य महाणिहीओ-एते |
| ६९ | २१ | भरहाहिवे णरिंदे |
| ७१ | २ | माहात्म्यात् |
| ७२ | २३ | इत्यादिप- |
| ७७ | ४ | अच्छे |
| ८० | २ | 'तदद्धम्' |
| ८० | ४ | परिवेष्टितम् |
| ८० | १७ | देवसह- |
| ८० | १९/३० | सङ्ख्या- |
| ८० | २१ | मलयगिरिणो |
| ८१ | २० | णउअ |
| ८२ | ६ | सरभचमर- |
| ८३ | २ | भाणिअव्वो। |
| ८३ | ८ | णदी जओ |
| ८४ | २१ | स्ताध शीतल |
| ८५ | ८ | विच्छित्ति- |
| ८५ | ३५ | अत्र महा- |
| ८६ | २६ | पद्म ह्रदस्य |
| ८८ | १९ | पजरुम्मिलिते |
| ८८ | २० | दामालकिए |
| ८९ | ८ | पलिओवम- |
| ९० | १८ | पुण्ड्रविशेषा. |
| ९१ | ११ | देवीना च-इला। |
| ९१ | २३ | महाहिमवद् |
| ९२ | ३ | जवुद्दीवे दीवे |
| ९३ | २ | १३५१०-६/१९ |
| ९३ | १८ | देसभागे |
| ९५ | ८ | मुद्दरस पुर |
| ९५ | १२ | दसुत्तरे |
| ९६ | १७ | सइएण पवाएण |
| १०४ | २२ | पच्चत्थिमाभिमुही |
| १०५ | २१ | द्रष्टव्यम् |
| १०६ | ८ | महाविदेहा. |
| १११ | ८ | दने सिद्धा- |
| १११ | २८ | विस्तरन्ति |
| ११४ | ४ | वण्णओ भूमीओ पासा। |
| ११५ | २५ | जह य परि- |
| ११६ | ३० | यावद् भुञ्जानो |
| ११७ | २७ | चतसृषु |
| ११८ | २ | कृष्णा। |
| ११८ | १० | उवयारिआ |
| १२३ | ७ | 'पहरण- |
| १२३ | १४ | खभसयस- |
| १२४ / १२५ | १८ / ५ | योजनशतानि |
| १३० | २५ | दक्षिणादिषु तिसृषु |
| १३२ | १८ | 'जमिगप्पमाण' |
| १३४ / १ | २८ | विशेषाद् ह-<br>कूटाद्व्यति- |
| १३८ | १० | विस्तीर्ण प- |
| १४० | ४ | योजनान्यायाम |
| १४८ | २ | द्विवचनपर |
| १५१ | २७ | प्रज्ञप्तानि |
| १५२ | १५ | अष्टौ च द्विचत्वा- |
| १५२ | २४ | निषधह्रदस्य |
| १५२ | २४ | निषधह्रदस्य |
| १६० | २५ | कल्वमेव |
| १६१ | २८ | कज्जलप्रभा |
| १६१ | ३१ | तसंकस्तत्रेशा |
| १६२ | १७ | द्वादश सहस्रयो- |
| १७६ | १५ | उत्तरेण लवण- |
| १८१ | ६ | वादित्र- |
| १८२ | २२ | जगत्प्र- |
| १८४ | १ | मुणिऊण |
| १८४ | ३१ | तदबलं |
| १८५ | २२ | वातवि- |
| १८७ | ६ | वद्दलए |
| १८७ | २७ | मनोहारि |
| १८८ | ९ | वार्द्दल |
| १८८ | २० | वैक्रिय |
| १९२ | २२ | बद्ध्वा |
| १९७ | २९ | भर्तृत्व |
| २०२ | ३० | स्पृहत्वात् सि- |
| २१० | १८ | मङ्गलो |
| २१७ | ५ | रुप्पमणि- |
| २१९ | २५ | सहस्रसङ्ख्याकै. |
| २२० | १४ | न्त मनाग् |
| २२१ | २१ | विप्पमुक्कस्स |
| २२२ | ११ | दरिसणिज्जे |
| २२२ | २२ | प्रयुञ्जाना |
| २२३ | ३ | नाटचविधयो |
| २२३ | ८ | कणवीर |
| २२३ | २१ | प्रत्युप्तमध्य |
| २२५ | १५ | आ। तित्थगरस्स तित्थ- |
| २२६ | १० | वत्सुखेनाभि- |
| २२७ | ५ | सकाशात् प्राद् |
| २३५ | १३ | मिवान्तराणामपि |
| २३६ | २८ | परिक्षेपेण- |
| २३९ | १९ | अ पणरसु- |
| २४० | २३ | पञ्चत्रिंश |
| २४२ | १७ | एगमेगेण |
| २४६ | २५ | एकेन मु- |

| पृ० प० — | शुद्धम् | पृ० पं० | शुद्धम् | पृ० पं० | शुद्धम् |
|---|---|---|---|---|---|
| २४७ | ६ सर्वंवाह्यान्म | २८६ | १२ पञ्चदश रात्रयः | ३१० | १ (६) १ |
| २४७ | ९ व्यवहारत. | २८९ | ११ ति / तथा चोक्त | ३१२ | १४ चतुर्दश |
| २५२ | २१ पुव्ववण्णिअ | २९१ | ९ णक्खत्ता | ३१२ | २२ अवाहाए |
| २५३ | १७ चत्वारि योजन— | २९१ | २७ नक्षत्रसङ्ख्या | ३१९ ३२४ | २० } 'अब्भुग्गये' |
| २५४ | १५ वानन्तरो— | २९४ | १३ स्वसीमा— | ३२१ | ८ विमलघणमंडल— |
| २५८ | २२ अणु, अव., आदि, | ३०२ | २३ अमावासा | ३२२ | १५ परिवहन्ति |
| २५९ | ९ गहणक्खत्त | ३०३ | २२ त्वमेव द्रष्टव्यं | ३२५ | १२ प्रमार्जनोपकरण |
| २५९ | १६ महया—णावत्त— | ३०५ ३०६ | २४/२६ १/७/९/१४ } समापयति | ३२७ | २७ सव्वसिंघगाई |
| २६० | २१ गतियुक्ता | ३०८ | २९ द्विपञ्चाशति | ३३१ | २९ सयपभे |
| २७० | २९ च भागशतानि पञ्चपञ्चा- | ३०९ | १७ दर्वात्तानी | ३३४ | १४ पञ्चेन्द्रिय— |
| २७८ | १६ चन्द्रादिचार— | | | | |



णमो त्थु णं समणस्स भगवओ महावीरस्स
पू० आगमोद्धारकाऽऽचार्यप्रवरश्री–आनन्दसागरसूरीश्वरेभ्यो नमः
महामहोपाध्याय–श्रीधर्मसागरगणिवरविरचितविवरणयुतं

# जंबुद्दीव-पण्णत्तिसुत्तं

( जम्बूद्वीपप्रज्ञप्तिसूत्रम् )

जीयात् तेजस्त्रिभुवनतिलकाभं जैनमेनसो मुक्तम् । योगिध्येयममेयं कल्पितकृतिकल्पतरुकल्पम् ॥१॥
जयति जगज्जनरञ्जन–कृतिकुशलो वर्द्धमानजिनचन्द्रः । येन त्रिभुवनभवनं प्रकाशितं वाक्प्रदीपेन ॥२॥
गौतमसुधर्ममुख्या विजयन्तां गणभृतः श्रुताम्बुधयः । यज्ञातसमयरत्ना–लङ्कृतिमन्तो विभान्ति बुधाः ॥
यदनुग्रहाद् भवन्ति श्रुतसागरपारगामिनः सुधियः । सा श्रुतदेवी कामित–कार्यविधौ सावधानाऽस्तु ॥४॥
निजगुरुपदकजयमलं विमलं प्रणिपत्य तदुपदेशेन । विदधे जम्बूद्वीप–प्रज्ञप्तेर्विवरणं किञ्चित् ॥५॥

इह हि जगति सकलोऽपि लोकः सुखाभिलाषी दुःखपराङ्मुखश्च । सुखं च पारमार्थिकं दुःखाननुषङ्ग्येव । तच्च सकलकर्मक्षयलक्षणमोक्षप्रभवं, न पुनरिन्द्रियादिप्रभवं सांसारिकं, तस्य स्रक्चन्दनाङ्गनादिरूपोपाधिकलितत्वेन दुःखानुषङ्गित्वात् आशामात्रविषयत्वेन मरुमरीचिकाजलकल्पत्वात् क्षणदृष्टनष्टत्वेनासारतयाऽऽगमे भणितत्वात् तथैव प्रत्ययजनकत्वेन सर्वजनप्रतीतिगोचरत्वाद्दुःखप्रतीकाररूपत्वाच्च । तेन सुखार्थिना मोक्षार्थं यतितव्यम् । मोक्षार्थोऽपि धर्मफलत्वेन प्रधानपुरुषार्थत्वात् ज्ञानाद्यासेवनयैव सिद्ध्यति । ज्ञानादीनामेव तत्कारणत्वेन मोक्षमार्गत्वात् । यदुक्तम्

'णाणं च दंसणं चेव चरित्तं च तवो तहा । 'एस मग्गो'त्ति पण्णत्तो जिणेहिं वरदंसिहिं' ॥१॥

ज्ञानादिशून्यस्य मोक्षस्यैवाऽसम्पत्तेः कुतस्तज्जन्यसुखास्वादसम्पत्तिः । न हि कोऽपि मार्गमप्रतिपन्नो मार्गात् प्रभ्रष्टो वा समीहितनगरावाप्त्या तत्सुखोपभोगीति । ज्ञानादिष्वपि साक्षान्मोक्षसाधनं सम्यक्संयमानुष्ठानं तच्च सम्यग्ज्ञानपूर्वकमेवातः प्रथमतया ज्ञानमेव प्रयत्नविषयीकार्यम् । यदाह

'पढमं नाणं तओ दया एवं चिट्ठइ सव्वसजए । अन्नाणी किं काही किं वा णाही छेअपावगं' ॥१॥ ति ।

सम्यग्ज्ञानाभावे च हेयोपादेयपदार्थपरिज्ञानशून्यः केवलं प्राणातिपातादिष्वाश्रवेष्वश्रान्तप्रवृत्तिभागेव स्यात् । न पुनरुपदेशादि–परतन्त्रं सयमानुष्ठानमाश्रयेत् । तथा प्रवृत्तेरनादिप्रवाहपतितत्वेन स्वतः सिद्धत्वात् । तेन सम्यग्ज्ञानाभावे संयमवार्तापि दुरापा । सम्यग्ज्ञानमपि मतिश्रुतावधिमनःपर्यायकेवलज्ञानभेदात् पञ्चधा । तेष्वपि श्रुतज्ञानवर्जानि चत्वारि ज्ञानानि मूकाभानि परोपकृतौ श्रुतज्ञानसापेक्षाण्येव । श्रुतज्ञानं तु साक्षादेव परोपकारकमित्युपकारमधिकृत्य श्रुतज्ञानमेव प्रधानम् । यदाह

'सुअणाण महड्ढीअं केवलं तयणंतरं । अप्पणो सेसगाणं च जम्हा तं पविभासगं' ॥१॥ ति ।

तदपि द्रव्यभावभेदेन द्विधा। तत्र द्रव्यश्रुतं भावश्रुतहेतुत्वेन लिपिकर्मादिरूपं। भावश्रुतं तु श्रुतज्ञानावरणक्षयोपशमजन्यप्रकाशरूपं प्रतिप्राणि भिन्नमेव, हेतुभूतस्य द्रव्यश्रुतस्यैक्येऽपि क्षयोपशमवैचित्र्यात्। अत एवैकमपि जिनवचनं श्रोतृविशेषानाऽऽसाद्य विचित्रतया परिणमति। यदागमः

'वासोदगस्स व जहा वण्णाइं हुंति भायणविसेसा। सव्वेसिं पि सभासा जिणभासा परिणमइ एवं'॥ ति।

तद्धायवव्यादिवत् द्रव्यश्रुतसापेक्षमेव परोपकारकं, द्रव्यश्रुतं तु साक्षादेवेति भावश्रुतापेक्षया परोपकृतौ द्रव्यश्रुतमेव प्रधानम्। अत एव योग्याऽयोग्यपर्यालोचनयाऽनेनास्मै श्रुत देयमुपादेयं वाऽस्मादनेनेत्यादिव्यवहारविषयोऽपि द्रव्यश्रुतमेव, तदर्थमेव गुरोः प्रसन्नताया आपादनमपि। यदागमः

'पुज्जा जस्स पसीअंति संबुद्धा पुव्वसंथुआ। पसन्ना लाभइस्संति विउल अट्ठिअं सुअं'॥१॥

एवमुद्देशसमुद्देशानुज्ञादयोऽपि द्रव्यश्रुतविषया एव, भावश्रुतस्य चावध्यादिवत्तदविषयत्वात्, युक्तस्तेन 'नमो बंभीए लिवीए' त्ति पदेन मङ्गलनिमित्तं लिपिकर्मरूपस्य द्रव्यश्रुतस्यैव गणधरकृतो नमस्कारः। आस्तामन्यज्जगद्व्यवहारोऽपि द्रव्यश्रुताधीन एव, तस्यैवेष्टफलसाधकत्वेन सकललोकेनेष्टत्वात्। एव जिनवरवचनं वाग्योगात्मकमपि द्रव्यश्रुत श्रोतॄणां सकलपदार्थविषयकसम्यग्भावश्रुतज्ञानजनकत्वेन निरुपाधिकसुखसम्पादकम्। अत एव जन्मजरामरणरोगशोकेष्टवियोगानिष्टसंयोगाद्यनेकहेतुकानन्तदु खोपनिपातपीडितानां प्राणिनामापन्निवारणेन जिनवरवचनमेव शरणमाप्तप्रणीतत्वात्, न पुनः सुगतादिवचनमपि, अनाप्तमूलकत्वेन धूर्तवाक्यवदनुपादेयत्वात्। यदुक्त वाचकमुख्यैः

'जन्मजरामरणभयैरभिद्रुते व्याधिवेदनाग्रस्ते। जिनवरवचनादन्यत् नास्ति शरणं क्वचिल्लोके'॥१॥ इति।

जिनवरवचनमपि उत्कर्षतो द्वादशाङ्गी। तस्याश्चोत्पत्तिरेवं—समुत्पन्नकेवलज्ञानस्यार्हतो मुखान्निर्गतेन 'उप्पण्णे इ वा विगए इ वा धुए इ व'त्तिमातृकापदत्रयेण तथाविधपुण्योत्कर्षजन्यवीजबुद्धीनां गणधराणां द्वादशाङ्गीरचनाहेतुकर्मक्षयोपशमनिमित्तेन सामान्यतो जगदुदरवर्त्तिसमस्तवस्तुविषयक श्रुतज्ञानं समुपजायते। समस्तस्यापि वस्तुन उत्पादव्ययध्रौव्यात्मकत्वात्। यदुक्त 'उत्पादव्ययध्रौव्ययुक्त सदि'ति। अत एव—'अत्थं भासइ अरह'त्तिवचनात् द्वादशाङ्ग्या अर्थभाषकोऽर्हन्नेव, तथाविधार्हद्वचनेनैव गणधराणामेव तथाविधकर्मक्षयोपशमस्य प्रादुर्भावात्। सूत्ररचना तु अभिलाप्यानामर्थानां वाचकशब्दसन्दर्भरूपा गणधरायत्तैव। यदुक्तं—'सुत्तं गंथंति गणहरा निउणं'ति। पर क्षयोपशमस्यैव वैचित्र्याद् गद्यपद्यरचनोऽपि प्रतिगणधरं भिन्नैव, न चैवमर्थभाषणेऽपि प्रतितीर्थकर भिन्नता शङ्कनीया सर्वेषामपि तीर्थकृतामर्थप्ररूपणे भेदाभावात् तन्निदानस्य केवलज्ञानस्य क्षायिकत्वेन वैचित्र्याभावात्। यदागमः—'खयंमि अविगप्पमाहंसु'त्ति। सामग्रीवैचित्र्यं हि कार्यवैचित्र्ये हेतुरिति। अत एवार्थरूपा द्वादशाङ्गी नित्या शाश्वता ध्रुवा चेति प्रवचने प्रसिद्धिः। न चैवं सूत्ररूपाऽपि भविष्यतीति शङ्कनीयम्? अनियतपाठरचनात्मकत्वेनानित्यत्वानपायात्। ननु अर्थरूपापि द्वादशाङ्गी श्रुतज्ञानं भणितम्। अर्थाश्च स्तम्भकुम्भाम्भोरुहादयो जडाः कथं श्रुतज्ञानं भवितुमर्हन्तीति चेत्? उच्यते न हि स्तम्भादयोऽर्थाः स्वरूपसन्त एव श्रुतज्ञान, किन्तु प्रतिनियततत्तद्वाचकशब्दविशिष्टा एव। तथा च न किञ्चिद् बाधकं, यतो न

ह्यभिलाप्या अर्थाः स्वस्ववाचकशब्दसम्बन्धशून्या न वा तत्तद्वाचकशब्दा अपि स्वस्ववाच्यसम्बन्धशून्याः, अन्यथोभयोरपि स्वरूपस्यैव हानेः। तथा च जैनप्रवचने वाच्यवाचकयोः कथञ्चिदभेदाभ्युपगमादर्थशब्देन निजनिजवाच्यानि विषयीकुर्वन्तस्तत्तद्वाचकाः शब्दा एवावगन्तव्याः। अत एव तद्रूपा द्वादशाङ्गी अर्थतो नित्या वाच्यवाचकभावसम्बन्धस्यानादिनिधनत्वात्। अत एव निर्युक्त्यादेरपि सूत्रव्याख्यानता प्रवचने प्रतीता, सूत्रार्थोभयात्मिका च द्वादशाङ्गी नित्यत्वानित्यत्वाभ्यामुभयात्मिकाऽपि। एवं द्रव्यार्थिक-नय-पर्यायार्थिकनयपर्यालोचनयापि समवसेयम्। एवम्भूताया अपि द्वादशाङ्ग्याः प्रत्यङ्गमेकैकोपाङ्ग-सद्भावात् उपाङ्गान्यपि द्वादशैव। तत्राऽऽचाराङ्गस्यौपपातिकं १, सूत्रकृदङ्गस्य राजप्रश्नीयं २, स्थानाङ्गस्य जीवाभिगमः ३, समवायाङ्गस्य प्रज्ञापना। पाक्षिकसूत्रवृत्तौ तु प्रज्ञापनामहाप्रज्ञापने द्वे अप्युपाङ्गे भणिते, परं सम्भाव्यते द्वयोरप्येकार्थवाचकत्वेन वस्तुगत्या भेदाभावादेकतैव ४, भगवत्याः सूर्यप्रज्ञप्तिः ५, ज्ञातधर्मकथाङ्गस्य जम्बूद्वीपप्रज्ञप्तिः ६, उपासकदशाङ्गस्य चन्द्रप्रज्ञप्तिः ७, अन्तकृद्दशाङ्गादीनां दृष्टिवाद-पर्यन्तानां पञ्चानामप्यङ्गानां कल्पिकादिपञ्चवर्गात्मिका निरयावलिकैवोपाङ्ग १२ मिति योगविधानादि सामाचार्यां। श्रीस्थानाङ्गवृत्तौ तु सूरप्रज्ञप्ति-जम्बूद्वीपप्रज्ञप्ती पञ्चमषष्ठाङ्गयोरुपाङ्गभूते। इतरे तु चन्द्र-प्रज्ञप्ति-द्वीपसागरप्रज्ञप्ती प्रकीर्णकरूपे इति। एवंविधानि द्वादशाप्युपाङ्गान्यङ्गैकादशविस्तरतया गणधरा-दिभिः सूत्रतयैव विरचितानि। सूत्रं च व्याख्यानकुञ्चिकादिनानुन्मुद्रितं द्वारयन्त्रादिपिहितद्वाररत्नमञ्जू-षेव न सम्यग्ज्ञानहेतुः। अत एव केवलसूत्रवादी मिथ्यादृष्टिरेव भण्यते। यदुक्तम्

अपरिच्छिअसुअनिहसस्स केवलमभिण्णसुत्तचारिस्स। सव्वुज्जमेण वि कयं अण्णाणतवे बहुं पडइ ॥१॥ त्ति।

तेन प्रत्युपाङ्गं वृत्त्यादिरूपव्याख्यानं युक्तं। तत्रौपपातिकोपाङ्गं श्रीअभयदेवसूरिभिर्विवृतं निरयावलिका च श्रीश्रीचन्द्रसूरिभिर्विवृता, शेषाणि तूपाङ्गानि श्रीमलयगिरिणा विवृतानि। तत्र जम्बूद्वीप-प्रज्ञप्तिरपि विवृताऽऽसीत्। उक्तं च-'परिधिपरिमाणानयनगणितं च जम्बूद्वीपप्रज्ञप्त्यादावनेकशो भावित-मिति ततोऽवधार्यमिति' प्रज्ञापनायाः षट्त्रिंशत्तमपदवृत्तौ। एवं जीवाभिगमवृत्तावपि-'परिक्षेपपरिमाण-गणितभावना क्षेत्रसमासटीकातो जम्बूद्वीपप्रज्ञप्तिटीकातो वा वेदितव्ये'ति। परं सम्प्रति सा नोपलभ्यते तेन तद्वृत्तिकरणप्रयासो महाफलमिति भावनापरायणेन मया यथाववोधं प्रायोऽङ्गोपाङ्गादिवृत्त्यादि-गतमेव व्याख्यानं किञ्चित्सङ्गत्या समुच्चीयते-'जं सक्कइ तं कीरइ'त्तिवचनात् तथाविधबुद्धिविभवादि-व्यसान्निध्याद्यभावेन तावन्मात्रस्यैव सामर्थ्यस्य सद्भावात्। न चैवमपरेषु वृत्त्यादिषु यथासम्भव व्याख्यानस्य विद्यमानत्वेन तत्समुच्चयकरणप्रयासो विफलो भविष्यतीति चिन्तनीयं। विकीर्णानां धान्यकणानां पुञ्जीकृत्य भोजनोचितीकरणमिव पृथक्पृथक्वृत्त्यादिषु स्थितानपि व्याख्यांशान् समुच्चित्य जम्बूद्वीप-प्रज्ञप्तेर्व्याख्यानोचितीकरणमपरेषामल्पश्रुतवतां बहुश्रुतानां चोपस्थिते प्रयोजने कालानुभावात्तथाविध-पुस्तकादिसामग्र्यभावेनालस्येन चैतत् परिज्ञानविलम्बो मा भूदित्यभिप्रायवतो मे महानिर्जराहेतुत्वात् तेन तथाप्रयासो महाफलवानिति शास्त्रप्रस्तावना।

तत्र प्रेक्षावतां प्रवृत्त्यर्थं शास्त्रस्यादौ मङ्गलादिचतुष्टयमन्वेष्टव्यम्। यदुपदिष्टं शिष्टैः

'मंगलसमुदायत्था संबंधपओअणं ति अ चउक्कं। सत्थाइ निसुईणं सवणनिमित्तं पि वत्तव्वं ॥१॥ ति।

तत्रापि चिकीर्षितस्य शास्त्रस्य निर्विघ्नपरिसमाप्त्यर्थं सम्भावितविघ्नोपशमकोऽभीष्टदेवतानमस्कारादिलक्षणं प्रथमं मङ्गलोपन्यासः कर्तव्यः। स च धर्मश्रद्धानादिमूलमास्तिकवादित्वं सूचयन्नेव प्रकृतस्य शास्त्रस्य श्रेयोभूतत्वमाविष्करोति। अश्रेयोभूते कार्ये विघ्नस्यैवासम्भावितत्वात्। उक्तं च

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः ॥१॥

ननु श्रेयोभूतस्यापि शास्त्रस्य विघ्नोपशमनाय मङ्गलान्वेषणे तत्रापि मङ्गलमन्वेष्टव्यमित्यनवस्थावल्लेरुल्लासोऽशक्यानुरोध इति चेत्? मैवं, सर्वस्यापि श्रेयोभूतस्य वस्तुनः समानशक्तिकत्वाभावात्। न हि कनककामिन्यादिप्रकाशननिमित्तं प्रगुणीकृतस्य प्रदीपस्य स्वप्रकाशननिमित्तं प्रदीपान्तरापेक्षा, न वा कामिनीशोभानिमित्तं निर्मापितकनककुण्डलादिभूषणं स्वसमानापरकुण्डलापेक्षयैव शोभाकारि स्यात्। एवं प्रकृतस्य शास्त्रस्य विघ्नोपशमनाय कृतं मङ्गलं स्वस्यापि विघ्नोपशामकमेवेत्यलं विस्तरेण ॥१॥

अथ कृतेऽपि मङ्गलोपन्यासे सामान्यतोऽनधिगताभिधेयस्य शास्त्रस्य श्रोतुः श्रवणे प्रवृत्तिर्न स्यात् तदर्थं समुदायार्थो वक्तव्यः। सामान्यतो ज्ञातस्यैवार्थस्य विशेषतो जिज्ञासाविषयत्वात्। यथा दूरस्थः पदार्थो वृक्षत्वेन ज्ञात एवायमभीष्टफलसंयुक्तः सहकारो न वेति संशयानन्तरं निश्चिनोमीतिजिज्ञासाविषयः स्यात्। तेन मङ्गलोपन्यासानन्तरं युक्तोऽभिधेयोपन्यासः ॥२॥

अथाभिधेयपरिज्ञानेऽपि किमनेन शब्दात्मकेन शास्त्रेण स्यात्? किं वा सर्वज्ञमूलकमिदमभिधेयनिरूपणमुत यत्किञ्चिन्मूलकं वा? तदपि केन सम्बन्धेनाऽद्य यावदागतं प्रकृतविवरणकर्तुश्च ज्ञानगोचरीभूतमित्याद्युपायोपेयभाव-गुरुपर्वक्रमलक्षणसम्बन्धपरिज्ञानशून्यस्य श्रवणेऽपि न सम्यगास्था स्यात्। तथा च धूर्तवाक्यश्रवणमिव तच्छ्रवणमप्यकिञ्चित्करमेव। तेन युक्तोऽभिधेयोपन्यासानन्तरं सम्बन्धोपन्यासः ॥३॥

अथ तथाविधसम्बन्धपरिज्ञानेऽपि प्रयोजनमवश्यं वाच्यम्, अन्यथा मङ्गलादित्रितयस्यापि वैयर्थ्यात्। न हि प्रयोजनमनुद्दिश्य क्वापि मन्दोऽपि प्रवर्त्तते, तृप्तस्यापि भोजने प्रवृत्तिप्रसङ्गात्। तेन सम्बन्धोपन्यासानन्तरं प्रयोजनोपन्यासोऽवश्यं फलवान् ॥४॥

एवं मङ्गलादिचतुष्टयं श्रोतृणां शास्त्रश्रवणे प्रयोजकमिति सिद्धम्। क्वापि क्रमोपन्यासे प्रयोजनोपन्यासः प्रथमतयाऽभिहितः। सोऽपि युक्त एव, तस्य मङ्गलादित्रितयादपि बलवत्त्वात्। तत्र मङ्गलशब्दस्य व्युत्पत्तिः श्रीविशेषावश्यकादिवृत्तितोऽवसातव्या। तच्च मङ्गलं नाम-स्थापना-द्रव्य-भावभेदाच्चतुर्धा। तत्र नाममङ्गलं यस्य कस्यापि जीवादेर्वस्तुनो मङ्गलमिति नाम। स्थापना च तथैव वर्णानुपूर्व्या पुस्तकादिषु न्यासः स्वस्तिकादिर्वा। द्रव्यमङ्गलं पुनरागमतो नोआगमतश्चेति द्विधा। आगमतो मङ्गलशब्दार्थज्ञाताऽनुपयुक्तश्च। नोआगमतस्तु ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदेन त्रेधा। तत्र ज्ञशरीरं ज्ञातमङ्गलशब्दार्थस्य देवदत्तादेः शिलातलादिगतं शरीरं। भव्यशरीरं ज्ञास्यमानमङ्गलशब्दार्थस्य क्रीडतोऽपि बालादेः शरीरम्। तद्व्यतिरिक्तं च ज्ञानादिभावमङ्गलवानपि तत्रानुपयुक्तः। उपलक्षणात् दधिदूर्वादि शुभवस्त्वपि लोकप्रतीतं द्रव्यमङ्गलम्। तत्र नामस्थापने अप्रयोजके, द्रव्यमङ्गलमपि नाऽवश्यं फलाव्यभिचारीति धिया तान्युपेक्ष्य भावमङ्गलमेवात्राधिकृतं, तस्यावश्यं फलाव्यभिचारित्वात्। तदपि द्विधा-अर्हन्नमस्कारादिरूपं तत्स्मृतिरूपं च। उभयथाऽपि फलाव्यभिचारीति निश्चित्य उभयमपि भावमङ्गलं

ग्रन्थकार एव वक्ष्यति । समुदायार्थस्तु जम्बूद्वीपप्रज्ञप्तिरिति यथार्थनाम्नैवोक्तो द्रष्टव्यः । सम्बन्धोऽप्युपायोपेयभावलक्षणादिरूपोऽनेकविधः । तत्र 'घटमानये' त्यादिवाक्यवद्विवक्षितार्थवाचकशब्दात्मकत्वेनोपायः कारणं शास्त्रमुपेयं च कार्यं तद्वाच्यार्थावगमः । प्रकृते च वक्ष्यमाणव्युत्पत्तिकं जम्बूद्वीपप्रज्ञप्तिनामकमुपाङ्गं कारणं, कार्यं च यथावस्थितस्य भवद्वीपमध्यवर्तिनो जम्बूद्वीपस्य समधिगमः । यद्वाऽर्थोपदेशकत्वेन कारणं तीर्थकृत्, कार्यं च गणधरज्ञानविशेषभूता जम्बूद्वीपप्रज्ञप्तिः । यद्वोक्तस्वरूपा जम्बूद्वीपप्रज्ञप्तिः कारणं, कार्यं च पाठरूपा सैव, ज्ञानपूर्वकत्वात् पाठरचनाया इत्याद्यनेकप्रकारेण कार्यकारणभावलक्षणः सम्बन्धो द्रष्टव्यः । सर्वज्ञमूलकगुरुपर्वक्रमलक्षणसम्बन्धस्तु–'ते ण काले णमि' त्यादिसूत्रव्याख्यावसरे वक्ष्यते । प्रयोजनं तु प्रकृतशास्त्रस्य सर्वज्ञमूलकत्वे सिद्धे सुतरां तदन्यथानुपपत्त्यैव सिद्धम् । यत आस्तां सर्वज्ञस्तदितरोऽपि यः कश्चित प्रेक्षावान् स स्वस्याऽपरेषां च प्रयोजनमुद्दिश्यैव प्रवर्त्तते । यदुक्त–'प्रेक्षावतां हि प्रवृत्तिः स्वार्थकारुण्याभ्यां व्याप्तेति, अन्यथा प्रेक्षावत्त्वस्यैव हानेः' । किञ्चिच्छुभं भावीति नैमित्तिकवाक्येनैवान्यथानुपपत्त्या सामान्यतः सिद्धमपि प्रयोजन व्यक्त्या ज्ञातं सत् श्रोतृणां परमोत्साहप्रवर्धकं स्यादतस्तद्व्यक्तिर्वक्तव्या । सा चैवं–प्रयोजनं तावद् द्विधा–परमपरं च । तदपि कर्तृश्रोतृस्वामिकत्वेन प्रत्येकं द्विप्रकारम् । तत्र कर्तुरपरं प्रयोजनं सत्त्वानुग्रहबुद्ध्या शास्त्रं कुर्वतो महती निर्जरा तीर्थकृन्नामप्रभृतिपुण्यप्रकृतिबन्धश्च । यदुक्तं

न भवति धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात् । ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥१॥ इति

श्रोतुश्चाऽपरं प्रयोजनं यथावस्थितपदार्थावगमपूर्वकसदुपदेशानुष्ठानप्रवृत्त्यादि । उभयोरपि परं प्रयोजनं मोक्ष एव । ततः परमपरप्रयोजनाभावात् । नन्वेवं द्विधापि प्रयोजनं सूत्रकर्तुर्गणधरादेरेव युक्तं, तस्य कृतकृत्यत्वाभावात्, परं तीर्थकृतस्तदर्थोपदेशनप्रयासो विफल एव, तस्य कृतकृत्यत्वेन प्रयोजनाभावादिति चेत् ? मैवं, तीर्थकृतोऽपि प्रयोजनस्य विद्यमानत्वात् । तथाहि- तीर्थकृन्नामकर्मणोऽनुभवमन्तरेण मोक्षाभावात् तदनुभवोऽवश्यं वक्तव्यः । स च सामायिकाद्युपदेशेनैव । यदागम'

तित्थयरो किं कारण भासइ ? सामाइअं तु अज्झयणं । तित्थयरनामगोत्तं कम्मं से वेइअव्वं ति ॥१॥

तथा च सिद्धं तीर्थकृतोऽप्यपरं प्रयोजन सामायिकाद्युपदेशभोग्यतीर्थकरनामकर्मानुभव । परं च प्रयोजनं मोक्ष एव । न चैव कृतकृत्यत्वव्याहतिः, व्यवहारनयापेक्षयैव तदभ्युपगमात् 'व्यवहारोऽपि कृतकृत्यविषयकः केवलज्ञानसाध्यः । तेन केवलिनां कृतकृत्यत्वव्यपदेशे न किञ्चिद्बाधकं सर्वत्रापि व्यपदेशे व्यवहारनयस्यैव बलवत्त्वात् । यद्व्यवहारनयोत्तीर्णं तदेव निश्चयनयावलम्बि । तेन केवलोत्पत्तेरनन्तर यत्प्रयोजनं तन्नैश्चयिकं व्यपदेशबाह्य केवलिनामप्यनिवार्यमित्यल प्रपञ्चेन । एवं उक्तप्रकारेण मङ्गलादि चतुष्टयान्वितमपि प्रकृतं शास्त्रं नाऽनधिगतनामकमुपादेयं स्यात् । 'अज्ञातनामकं फलमनास्वाद्यमि'ति लोकहितोक्तिरपि । तेन प्रकृतस्य शास्त्रस्य नामापि वक्तव्यम् । तच्च द्विधा–सामान्यतो विशेषतश्च । तत्र नृपतिनामवदुपाङ्गमिति सामान्यतो नाम, भरतनामवज्जम्बूद्वीपप्रज्ञप्तिरिति विशेषतो नाम । न हि सामान्यं विशेषाऽनालिङ्गितं न वा विशेषः सामान्याऽनालिङ्गित इत्युभयात्मकं तावत् भरतनृपतिवत जम्बूद्वीपप्रज्ञप्त्युपाङ्गमिति । एवं द्विविधमपि त्रिविध-यथार्थमयथार्थमर्थशून्यं चेति । तत्र यथार्थं प्रदीपादि,

अयथार्थं पलाशादि, अर्थशून्य डित्थादि। तत्र जम्बूद्वीपप्रज्ञप्तिरिति नाम यथार्थमेव। तथाहि—जम्ब्वा-सुदर्शनजम्बूनाम्ना उत्तरकुरुक्षेत्रवर्त्तिना, अत्रैवोपाङ्गे वक्ष्यमाणस्वरूपेण वृक्षेणोपलक्षितो द्वीपो जम्बूद्वीपः, तस्य प्रकर्षेण ज्ञप्तिर्ज्ञापनं यस्यां सा जम्बूद्वीपप्रज्ञप्तिः। एतद्विशेषनामापि निरुक्तिवशाद्यथार्थमेव' जम्बूद्वीपवक्तव्यताधिकारप्रतिबद्धत्वात्। एवं सामान्यतोऽप्युपाङ्गमिति नामाप्यङ्गैकदेशरूपतया, अङ्गसमीपवर्तित्वात् यथार्थम्। ननु किंनाम्नोऽङ्गस्येदमुपाङ्गं? कथं चाऽङ्गैकदेशविस्तर इति चेत्? उच्यते-उपाङ्गं तावत् ज्ञातधर्मकथाङ्गस्य प्रागुक्तमेव। तस्यैकदेशो मेघकुमारपूर्वभववक्तव्यताधिकारे 'इहेव जंबुद्दीवे दीवे' इत्यत्र नाममात्रेण सूचितस्य जम्बूद्वीपस्य विस्तरनिबन्धरूपतयाऽसौ जम्बूद्वीपप्रज्ञप्तिरिति। एतेन समुदायार्थस्तु जम्बूद्वीपप्रज्ञप्तिरिति यथार्थनाम्नैवोक्तो द्रष्टव्य इति प्रागुक्तं समर्थितं समवसेयम्। यथार्थनाम्नस्तथास्वभावात्।

अथाऽर्हन्नमस्कारलक्षणं तत्स्मृतिरूपं चेत्युभयमपि भावमङ्गलं ग्रन्थकार एव वक्ष्यतीति प्रागुक्तं, तत्र प्रथममर्हन्नमस्कारलक्षणं मङ्गलं सूत्रकारः साक्षादाह

## णमो अरिहंताणं

'णमो अरिहंताणमि'ति नमोऽर्हद्भ्यः। अत्र नमः इति नैपातिकं पदं मनोवाक्कायप्रह्वीभावेन नमस्कारवाचकं, सुप्रणिधानेन मनसा वाचा कायेन च नमस्कारो भवत्वित्यर्थः। एतेन 'नमस्तुभ्यमि'त्युपहास्यनमस्कारो न मङ्गलमिति ज्ञापितम्। अथ 'नम' इति निराश्रयपदं यक्षाविष्टवाग्विलासकल्पमतस्तदाश्रयमाह-केभ्यः? अर्हद्भ्यः, अर्हन्ति सुरासुरनरेश्वरकृतां पूजां सिद्धिगमनं चेत्यर्हन्तः। उक्तं च

'अरिहंति वंदणनमंसणाइं अरिहंति पूअसक्कारं। सिद्धिगमणं च अरिहा अरिहंता तेण वुच्चंति' ॥१॥

यद्वा अरिहन्तृभ्यः। तत्रारयोऽष्टकर्मरूपास्तेषां हन्तारः। यदागमः

'अट्ठविहं पि अ कम्मं अरिभूअं होइ सव्वजीवाणं। तं कम्ममरिं हंता अरिहंता तेण वुच्चंति' ॥१॥

कर्मरहितो हि जगत्पूज्यः सिद्धिगमनयोग्यश्च। जगत्पूज्यत्वादिविशिष्टोऽपि कर्मरहित एवेति नियमपर्यालोचनयाऽन्योऽन्यानुविद्धसम्बन्धाविर्भावकव्युत्पत्तिवशान्मनुजादिशब्दवत्सकलार्हद्वाचकत्वेनाऽर्हन्निति सामान्यं नाम, तस्य च याथार्थ्यमुक्तव्युत्पत्त्या स्फुटमेव। बहुवचनं च नामादिभेदभिन्नानामप्यतीतानागतवर्त्तमानानां बहुत्वख्यापनार्थम्। तथा च-'नमोऽर्हद्भ्य' इति अर्हद्विषयको नमस्कारो भावमङ्गलरूपोऽवश्यं फलाव्यभिचारीति सम्पन्नम्। यत्तु क्वचित्—'नमो अरहंताणं'' नमो अरुहंताणं' चेति पाठान्तरं दृश्यते। तत्रापि अर्हति शक्रादिकृतां पूजामित्याद्युक्तव्युत्पत्त्या सिद्धोऽर्हन्नेव शब्दो बोध्यः। 'उच्चार्हती'ति प्राकृतसूत्रेण 'अरिहंताणं' 'अरहंताणं' 'अरुहंताणं' चेति पाठत्रयसिद्धेः। यत्तु भगवतीटीकायां 'अरहंताणमि'ति पाठे अविद्यमानं रहः—एकान्तरूपो देशोऽन्तश्च मध्यं गिरिगुहादीनां सर्ववेदितया समस्तवस्तुस्तोमगतप्रच्छन्नत्वस्याभावेन येषां ते अरहोन्तरस्तेभ्योऽरहोन्तभ्य इत्यादि, तथा 'अरुहंताणमि'ति पाठे अरोहद्भ्योऽनुपजायमानेभ्यः क्षीणकर्मबीजत्वादित्यादि भणितं, तद्भिन्न-

भिन्नश्रुतीनां शब्दानां भिन्नभिन्ननिरुक्तयोऽपि भवन्ति । प्राकृतेऽनेकधापि शब्दव्युत्पत्तेरिति ज्ञापनार्थमेव विज्ञेयमिति । सामान्यतोऽर्हन्नमस्कारलक्षणं मङ्गलं सूत्रे साक्षादेव निबद्धं दर्शितमिति ।

अथ 'णमो अरिहंताणमि'ति सकलार्हत्साधारणनमस्कारेणैव तन्मध्यवर्तिनः श्रीमहावीरस्यापि नमस्कारः कृत एव । परं सम्प्रतितीर्थाधिपतित्वेन प्रस्तुतशास्त्रस्यादिप्रणेतृत्वेन च परमोपकारित्वादनवरतश्रवणाभ्यस्तज्ञानगोचरीभूतव्यतिकरस्य श्रीमन्महावीरस्य निरन्तरस्मरणकरणपरिणतध्यानवतैव शास्त्रकारेण शास्त्रारम्भः कर्तव्यो युक्तः । परमोपकारिणो हि स्मरणस्य परममङ्गलभूतत्वेन प्रस्तुतशास्त्रस्य पारगमनहेतुत्वात् । तच्च स्मरणमपरेषां विनेयादीनामप्रत्यक्षमतस्तद्व्यञ्जकं शास्त्रमुखे–'ते णं काले णमि' त्यत्र कालविशेषणं 'ते णमि'ति वचनमेव । तथाहि–'यत्तदोर्नित्याभिसम्बन्धात' साक्षात्तच्छब्दान्वयं शृण्वानस्य हृदयवर्ती यच्छब्दान्वयो भवत्येव तदविनाभावित्वात् । स च प्रकृते यस्मिन्काले यस्मिन्समये मिथिलायां नगर्यामष्टमहाप्रातिहार्यश्रिया विभूषितो भगवान् श्रीमहावीरो गौतमादिचतुर्दशसहस्रश्रमणादिपरिवृतः समवसृतः । समवसृत्य च यस्मिन्काले यस्मिन्समये चतुस्त्रिंशदतिशयश्रिया विभूषितः श्रीवीरः सदेवमनुजायां पर्षदि दानादिचतुर्विधं धर्ममुपदिष्टवान् । धर्मोपदेशानन्तरं च यस्मिन्काले यस्मिन्समये भगवान् श्रीवीरो जम्बूद्वीपस्वरूपजिज्ञासुना स्वशिष्येण श्रीगौतमेन कीदृशोऽयं जम्बूद्वीप ? इत्यादिवक्ष्यमाणवचनप्रपञ्चैः प्रश्नविषयीकृतः सन् प्रश्नयितारमेव पुरस्कृत्य जम्बूद्वीपस्वरूपं निरूपितवानिति । तथा च यच्छब्दघटितान्वयव्यतिरेकेण प्राग्जन्मोपार्जितपरमपुण्यप्रकृतिरूपतीर्थकरनामकर्मविपाकजन्यपरमसम्पत्समन्वितः स्वशिष्यनामोच्चारपुरस्सरं प्रश्नितार्थनिर्वचनेन शिष्यमनो मोदयन् स्वात्मनः प्रसन्नतां च सूचयन् शास्त्रकारेण प्रकृतशास्त्रारम्भे ध्यानगोचरीकृत एव । अन्यथा 'ते णं काले णमि'ति वचनरचनानुपपत्तेरिति सिद्धं 'ते णमि'ति शास्त्रमुखं तद्व्यञ्जकं तादृशं च तद्विषयकं ध्यानं भावमङ्गलभूतं शास्त्रस्यादौ युक्तमेव, समीहितफलस्यावश्यं जनकत्वात् । राजाऽपि प्रसन्नावस्थामापन्नो विज्ञप्तोऽवश्यं फलदत्तेति लोकोक्तिरपि । यद्यपि वीतरागो नाऽप्रसन्नस्तथापि यथार्थवस्तुप्ररूपणे बाह्यवृत्तिस्तत्संसूचिका भवत्येव । अन्यथा 'जमालिर्मम कुशिष्य' इति वचनानुपपत्तिः स्यात् । एतेन शास्त्रस्यादौ मङ्गलमयुक्तं, मङ्गलमन्तरेणापि शास्त्रस्य उपादीयमानत्वात् शिष्यप्रशिष्यादिप्रवृत्तिगोचरत्वाच्च । यथा प्रकृतोपाङ्गस्याङ्गमेवेति शङ्कापि निरस्ता । 'ते णं काले णमि' त्याद्युक्तप्रकारेणाभीष्टदेवतास्मृतिरूपस्य मङ्गलस्य तत्रापि विद्यमानत्वात् । नन्वेवं प्रकृतशास्त्रेऽपि तावन्मात्रमेवाऽस्तु किमिति गौरवकारिणा 'णमो अरिहंताणमि'ति पदेनेति चेत् ? मैवं, सम्यग् प्रवचनाभिप्रायस्यापरिज्ञानात् । यतः प्रवचने ज्ञानदर्शनचारित्राणां तद्वतां च स्तुतिस्मृतिप्रभृतयो भावमङ्गलत्वेनोक्ताः । तथाहि–'चत्तारि मंगलं–अरिहंता मंगलं, सिद्धा मंगलं, साहू मंगलं, केवलिपण्णत्तो धम्मो मंगलमि'ति । तेन शास्त्रकाराणां कालादिसामग्रीवशेन तथाविधकर्मक्षयोपशमवैचित्र्यात् कदाचित्कचिद्यथोत्साहं यावन्मात्रं यदेव पुरःस्फूर्तिकं तावन्मात्रमेव तत्तदानीं मङ्गलं कर्तव्यं भवतीति । अत एव एककर्तृकेऽप्यङ्गसमुदाये क्वचित् श्रुतज्ञानमेव पुरःस्फूर्तिकं, तेनाऽऽचाराङ्गादौ–'सुअं मे आउसंतेणमि 'ति श्रुतमेव मङ्गलत्वेनाधिकृतं, भगवत्यां च पञ्चपरमेष्ठिनो ब्राह्मी लिपिश्चेति । क्वचिदुत्तराध्ययनादौ साधुरेव, क्वचिद्योक्तप्रकारेण स्मृतिगोचरीभूतोऽर्हन्नेवेत्यादिरूपेण कर्मक्षयोपशमहेतुकं वैचित्र्यं सुदृशां न सम्मोहहेतुरित्यलं विस्तरेण ॥ इत्येवंविधं मङ्गलं शिष्याणां मङ्गलबुद्धिपरिग्रहाय आदौ मध्येऽवसाने चाभिधातव्यम् । यत आदिमङ्गलपरिगृहीतानि शास्त्राणि

निर्विघ्नतया पारगामीनि भवन्ति, मध्यमङ्गलपरिगृहीतानि शिष्यबुद्धावारोपितानि स्थिरपरिचितान्युपजायन्ते, अन्त्यमङ्गलसमलङ्कृतानि पुनः शिष्यप्रशिष्यादिपरम्परानुगामीनि स्युः। उक्तं च

'तं मंगलमाइए मज्झे पज्जंतए अ सत्थस्स। पढमं सत्थत्थाविग्घ-पारगमणाय निद्दिट्ठं' ॥१॥

तस्सेव य थिज्जत्थं मज्झिमयं अंतिम च तस्सेव। अव्वुच्छित्तिनिमित्तं सिस्सपसिस्साइवसस्स' ॥२॥ त्ति।

प्रकृतशास्त्रे चादिमङ्गलं दर्शितमेव। मध्यमङ्गलं तु-'कहि णं भंते! जबूद्दीवे दीवे? महाविदेहे वासे मंदरे णामं पव्वए पण्णत्ते' इत्यादिसूत्रेण मेरुपर्वतवक्तव्यताधिकारेऽर्हदभिषेकशिलासिद्धायतनादिवर्णनम्। अन्त्यमङ्गलं तु 'तए णं समणे भगवं महावीरे' इत्यादि श्रमणादिपर्षन्मध्यगतः श्रीमहावीरो भूयोभूय उपदिशतीति निगमनवाक्येन भगवतः स्मरणमेव।

ननु मङ्गलत्रयं दूरे मङ्गलमात्रमप्यनङ्गीकुर्वतो नास्तिकस्य शास्त्रसमाप्तिस्थैर्याव्युच्छित्तयो निर्विघ्नतया दृश्यन्ते, तत्कथं मङ्गल तत्कारणं? यदभावे यज्जायते न तत्तस्य कारणमितिवचनादिति चेत्? मैवं, नास्तिकशास्त्रस्याश्रेयोभूतत्वेन तत्र मङ्गलस्याकारणत्वात्। एवं, सुगतादिग्रन्थेष्वपि। तत्त्ववृत्त्या सुगतादयोऽपि नास्तिका एव, सर्वज्ञोदितयथावस्थितजीवादितत्त्वानामश्रद्धानात्। तेन तत्कृता ग्रन्था अप्यश्रेयोभूता न मङ्गलसापेक्षाः। यत्तु तैः स्वस्वाभिमतदेवतानमस्कारादिमङ्गलमधिक्रियते तन्मङ्गलानुकृतिमात्रत्वेन मङ्गलाभास एव, न पुनस्तन्मङ्गलं, ज्ञानादीना तद्वता च मङ्गलत्वेन प्रागभिहितत्वात्। न च सुगतादयो ज्ञानादिभाजः, तेषां जैनप्रवचनबाह्यानां ज्ञानादिशून्यत्वादित्यलं विस्तरेण। एव यच्छब्दघटिताध्याहार्यान्वये प्रकृतशास्त्रस्य सर्वज्ञमूलकत्वं गुरुपरिपाट्यागतत्वं च स्फुटमेव। तथाहि-कीदृशोऽयं जम्बूद्वीप? इत्यादिवचोभिः श्रीगौतमेन पृष्टो भगवान् श्रीमहावीरः परोपदेशमन्तरेणैव यथावस्थित वस्तु प्ररूपयन् सर्वज्ञ एवेति सिद्धं सर्वज्ञमूलमिद शास्त्रम्। जम्बूद्वीपस्वरूपजिज्ञासुनेति विशेषणेन गौतमस्य छाद्मस्थ्यमेव ज्ञापितम्। एवमपरेणापि छद्मस्थेन गौतमेनेव जिज्ञासितवस्तु निर्णयनिमित्तं सर्वज्ञः सर्वज्ञसमीपावगततत्त्वस्तदनुज्ञो वाऽवश्य प्रष्टव्यः। एवं च सति प्रकृतशास्त्रस्यार्थः श्रीगौतमपृष्टेन सर्वज्ञेन भगवता वीरेण निरूप्यमाणो गौतमस्येवाऽन्येषामपि श्रीसुधर्मस्वाम्यादीना श्रवणगोचरीभूतः। अत एव जम्बूस्वामिनमुद्दिश्योपदिशन् सुधर्मस्वामी, गौतमस्वामिनं प्रति भगवानेवमुक्तवानित्युक्तवान्। एवं जम्बूस्वाम्यादयोऽपि स्वस्वशिष्यान् प्रत्युपदिशन्तो विज्ञेयाः। यावन्मादृशान् प्रत्यस्मद्गुरवः, परमर्थतस्तीर्थकरापेक्षया आत्मागमः, श्रीसुधर्मस्वामिनोऽनन्तरागमः, श्रीजम्बूस्वाम्यादीनां परम्परागमः। सूत्रतस्तु श्रीसुधर्मस्वामिन आत्मागमः, जम्बूस्वामिनोऽनन्तरागमः, प्रभवस्वाम्यादीनां परम्परागमः। अत एव मम्प्रत्यर्थतः सूत्रतश्च नाऽऽत्मागमो न वाऽनन्तरागमः किन्तु परम्परागम एव। परम्परा च पुरुषायत्तैव। परम्पराऽनङ्गीकारे चागमस्यैवाऽसम्भवात्। प्रकृतशास्त्रस्य निर्मूलताप्रसक्त्या प्रेक्षावतां प्रवृत्तिर्न स्यात्। तस्मादुक्तप्रकारेण सर्वज्ञमूलकत्व गुरुपरिपाट्यागतत्वं च प्रकृतशास्त्रस्य सुस्थम्। एवं च सत्यनुगमाख्यस्य तृतीयस्यानुयोगद्वारस्य भेदभूताया उपोद्घातनिर्युक्तेः प्रतिभेदभूते निर्गमद्वारे प्रस्तुतशास्त्रस्यार्थतः श्रीमन्महावीरनिर्गतत्व दर्शितम्। उपलक्षणसूचित शेषोऽप्युपक्रमनिक्षेपोनुगमनयैर्व्याख्यानविधिर्ग्रन्थगौरवभयादिहानुक्तोऽप्यनुयोगद्वारादिभ्योऽवसेयः।

अथ यस्मिन् काले मिथिलायां नगर्यां श्रीवीरः समवसृतो यावज्जम्बूद्वीपस्वरूपपरिज्ञानार्थं गौतमपृष्टो व्यागृणाति स्म, तस्मिन् काले मिथिलानगरी कीदृश्यासीद् ? इति सम्बन्धेनागते प्रकृतवक्तव्यताधिकारे प्रधानशिष्यत्वेन श्रीजम्बूस्वामिनं पुरस्कृत्य श्रीसुधर्मस्वाम्याह

**ते णं काले णं ते णं समए णं मिथिला णामं णयरी होत्था ।**

'ते णं काले णमि'त्यादि । ते इति प्राकृतशैलीवशात् तस्मिन्निति द्रष्टव्यम् । णंकारो वाक्यालङ्कारे । कालेऽधिकृतावसर्पिणीचतुर्थारकलक्षणे । अत्रापि णंकारः प्राग्वत् । 'ते णं समए णं ति । ते णमिति प्राग्वत् । समयोऽवसरवाची । यस्मिन्समये श्रीवीरो गौतमं प्रति जम्बूद्वीपस्वरूपमुक्तवान् तस्मिन् समये मिथिलानगरी 'होत्थ'त्ति अभवत् । ननु जम्बूस्वामिवाचनासमयेऽपि सा मिथिलाऽस्त्येव कथं तर्हि श्रीसुधर्मस्वामिना 'होत्थ'त्ति भूतप्रयोगोऽदायि ? इति चेत् उच्यते, सर्वेषामपि भावानां प्रतिक्षणं पर्यायपरावृत्त्या वक्ष्यमाणवर्णकोपेतपर्यायवतो मिथिला तदानीमेवासीत्, न पुनर्जम्बूस्वामिवाचनासमयेऽपि । तेन ततोऽसौ भिन्नैवातो युक्तो भूतप्रयोगः ।

सम्प्रत्यस्या नगर्या वर्णकमभिधित्सुरुद्देशस्वरूपेण पदत्रयात्मकविशेषणेन सामान्येन वर्णकमाह

**रिद्धत्थिमिअसमिद्धा वण्णओ ।**

'रिद्धत्थिमिअ'त्ति । कीदृशी मिथिला ? ऋद्धस्तिमितसमृद्धा । ऋद्धा—भवनैः पौरजनैश्चातीव वृद्धिमुपगता, स्तिमिता स्वचक्रपरचक्रतस्करडमरादिसमुत्थभयकल्लोलमालापरिवर्जिता, समृद्धा—धनधान्यादिविभूतिविभूषिता । ततः पदत्रयस्यापि विशेषणसमासः । अथ विशेषतो वर्णनं, कथम् ? इत्याकाङ्क्षायामाह—'वण्णओ'त्ति । ऋद्धेत्यादिविशेषणेन सूचितस्य विशेषतो जिज्ञासायां वर्णकः औपपातिके यथोक्तो वक्तव्य इत्यध्याहार्यं । तत्रापि ऋद्धपदेन सूचितवर्णनस्य विशेषणकदम्बकेन प्रपञ्चनम् । यथा—'पमुइअजणजाणवया आइण्णजणमणूस्सा हलसयसहस्ससंकिट्ठविकिट्ठलट्ठपण्णत्तसेउसीमा कुक्कुडसंडेअगामपउरा उच्छुजवसालिकलिआ गोमहिसगवेलगापभूआ आयारवंतचेइअजुवईविसिट्ठसंनिविट्ठबहुला [अरहंतचेइअजणवइविविहसंनिविट्ठबहुला सूवजागचित्तचेइअजूअचिइसंनिविट्ठबहुल'त्ति ]

अस्यार्थो यथा—'पमुइअजणजाणवय'त्ति । प्रमुदिता हृष्टाः प्रमोदकारणवस्तूनां सद्भावात् जना नगरीवास्तव्यलोकाः जानपदाश्च—जनपदभवास्तत्र प्रयोजनवशादायाताः सन्तो यस्यां सा तथा । अथ पाठान्तरे तूद्यानस्वरूपघटितविशेषणमाह—'मुइअजणुज्जाणजणवय'त्ति । मुदिता—उद्यानिकादिनिमित्तं गताः सन्तो मुदं प्राप्ता जना येषु तानि मुदितजनानि, तानि च तानि उद्यानानि चेति समासः । मुदितजनोद्यानानि जनपदशब्देन जानपदाश्च यस्यां सा तथा । किमुक्तं भवति—मिथिलाधिपतिनिश्रितजनपदेषु मिथिलाया एव प्राधान्यात् मिथिलावास्तव्याः केचन जना आत्मीयसम्पदा कृतकृत्यमिवात्मानं मन्यमाना उद्यानेषु क्रीडापरायणास्तिष्ठन्ति, जानपदाश्च प्रयोजनवशादेव तत्रागताः कृतकृत्यीभूय निज निजस्थानयायिनो भवन्त्यतो मिथिलामधिकृत्य मुदितजनोद्यानजानपदाश्च वर्त्तन्ते इति । यत एवमत

आह–'आइण्णजणमणूस्स–त्ति। मनुष्यजनैराकीर्णा–सङ्कीर्णा प्राकृतत्वात्पदव्यत्ययः। नगरीवास्तव्यैर्जानपदैश्च मनुष्यजनैर्व्याप्तेत्यर्थः। पुनः सा कीदृशी? इत्याह–'हलसयसहस्ससंकिट्ठविकिट्ठलट्ठपण्णत्तसेउसीम'त्ति हलानां–लाङ्गलानां शतैः सहस्रैश्च शतसहस्रैर्वा–लक्षैः सङ्कृष्टा–विलिखिता विकृष्टं–दूरं यावत् विकृष्टा वा नगरबहिर्वर्तिनी लष्टा मनोज्ञा कर्षकाभिमतफलसाधनसमर्थत्वात् प्रज्ञप्ता–बीजवपनस्य योग्यीकृता 'प्राज्ञाप्ता वा'–प्राज्ञैः–निपुणशिल्पिभिराप्ता–परिकर्मिता सेतुसीमा–कुल्याजलसेक्यक्षेत्रसीमा यस्याः सा तथा। अनेन बहुजननिर्वाहोचितधान्याद्युत्पत्तिस्थानानां क्षेत्राणामपि बाहुल्यं दर्शितम्। अन्यथा तन्निर्वाहाऽसम्भवात्। पुनरपि सा कीदृशी? इत्याह 'कुक्कुडसंडेअगामपउर'त्ति। कुर्कुटास्ताम्रचूडाः षण्डेयाः–षण्डपुत्रास्तेषां ग्रामाः–समूहास्ते प्रचुरा–प्रभूता यस्यां सा तथा। अनेन तत्रत्यजनानां प्रमुदितत्वं प्रकटीकृतं, प्रमुदितो हि लोकः क्रीडार्थं कुर्कुटान् पोषयति षण्डाँश्च करोतीति। पुनः सा किंविशिष्टा? 'उच्छुजवसालिकलिय'त्ति। इक्षु–यव–शालिभिर्व्याप्तेत्यर्थः। अनेन च जनानां प्रमोदकारणमुक्तं, न ह्येवंविधवस्त्वभावे जनानां प्रमोदः सम्पद्यते। अथ विशिष्टप्रमोदकारणगर्भितं विशेषणमाह–'गोमहिसगवेलगप्पभूअ'त्ति। गावो–बलीवर्दा महिषाश्च प्रतीताः गावः–स्त्रीगव्यः एडका–उरभ्रास्ते प्रभूता यस्यां सा तथा। पुनः कीदृशी? इत्याह–'आयारवंतचेइअजुवइविसिट्ठसंनिविट्ठबहुल'त्ति। आकारवन्ति सुन्दराकाराणि चैत्यानि–देवताऽऽयतनानि युवतीनां च पण्यतरुणीनां विशिष्टानि सन्निविष्टानि–सन्निवेशनानि–पाटकास्तानि बहुलानि–बहूनि यस्यां सा तथा। पुनः किंलक्षणा? इत्याह–'अरहंतचेइअजणवइविविहसंनिविट्ठबहुल'त्ति। अर्हच्चैत्यानि–जिनप्रतिमाः जनाः–प्रकृतयो व्रतिनः–पाखण्डिनस्तेषां विविधानि सन्निविष्टानि–पाटकास्तैर्बहुला–व्याप्ता या सा तथा। पुनः कीदृशी? इत्याह–'सुवजागचित्तचेइअजूअचिइसन्निविट्ठबहुल'त्ति। सूपयागाः–शोभनयज्ञाः चित्रचैत्यानि–नानादेवताऽऽयतनानि चित्रयुक्तानि वा चैत्यानि यूपचितयो–यज्ञेषु यूपचयनानि द्यूतानि वा क्रीडाविशेषाश्चितयः स्तूपास्तेषां सन्निविष्टानि सन्निवेशास्तैर्बहुला या सा तथा। अनेन च विशेषणत्रयेण कुलादिमर्यादया पाटकरचनया जैनानां तदितरेषां च निजनिजमार्गानुरक्तानां निजनिजधर्ममूलचिह्नभूतैर्नगरालङ्कारिप्रासादादिभिश्च नगरीव्यवस्थास्वरूपं प्रदर्शितं, ग्रामेष्वेवंविधव्यवस्थाया अभावादिति।

अथ स्तिमितपदसूचितस्य वर्णकस्य विस्तरो यथा–'उक्कोडिअगायगंठिभेअभडतक्करखंडरक्खरहिआ खेमा निरुवद्दुआ सुभिक्खा वीसत्थसुहावास'त्ति। अस्यार्थः-उत्कोटा–लञ्चा तया ये व्यवहरन्ति ते उत्कोटिकाः, गात्रात्–मनुष्यशरीरावयवविशेषात् कट्यादेः सकाशात् ग्रन्थिं–कार्षापणादिपोट्टलिका भिन्दन्ति–आच्छिन्दन्तीति गात्रग्रन्थिभेदकाः, भटाश्चारभटाः बलात्कारप्रवृत्तयः, तस्कराश्चौर्यकारिणः, खण्डरक्षा-दण्डपाशिकाः शुल्कपाला वा एभी रहिता या सा तथा। अनेन तत्रोपद्रवकारिणामभावः प्रतिपादितः। अत एव क्षेमा–अशिवरहिता, एवंविधापि यदि राजकृतोपद्रवोपेता स्यात्तदानीं जनाना स्वास्थ्य न स्यादत आह–निरुपद्रुता–अविद्यमानराजादिकृतोपद्रवेत्यर्थः। अथ प्रजानां दातृत्वं सूचयन्नेव भिक्षाचराणामपि स्वास्थ्यहेतुमाह–सुभिक्षा सुष्ठु–मनोज्ञा प्रचुरा वा भिक्षा भिक्षुकाणां यस्यां सा तथा। अत एव 'वीसत्थसुहावास'त्ति। विश्वस्तो–निर्भयः सुखं यथा स्यात्तथा आवासो–वसनं लोकानां यस्यां सा। यद्वा-विश्वस्तानां निर्भयानामनुत्सुकानां वा पाखण्डिनां गृहस्थानां वा सुखः–सुखस्वरूपः शुभो वा आवासो यस्यां सा तथा।

अथ समृद्धपदसूचितवर्णकविस्तरो यथा–' अणेगकोडीकुडुंबिआइण्णणिव्वुअसुहा णडणट्टगजल्ल-मल्लमुट्ठिअवेलंबगकहगपवगलासगआइक्खगलंखमंखतूणइल्लतुंबवीणिअअणेगतालायराणुचरिआ आरामुज्जाणअगडतलायदीहिअवप्पिणिगुणोववेआ णंदणवणसंनिभप्पगासा उव्विद्धविपुलगंभीरखायफलिहा चक्कगयमुसुंढिओरोहसतग्घिजमलकवाडघणदुप्पवेसा धणुकुडिलवंकपागारपरिक्खित्ता कविसीसयवट्टरइअसंठिअविरायमाणा अट्टालयचरिअदारगोपुरतोरणसमुण्णयसुविभत्तरायमग्गा छेआयरिअरइअदढफलिहइंदकीला विवणिवणिअखेत्तसिप्पिआइण्णणिव्वुअसुहा सिंघाडगतिगचउक्कचच्चरपणिआवणविविहवत्थुपरिमंडिआ सुरम्मा नरवइपविइण्णमहिवइपहा अणेगवरतुरगमत्तकुंजररहपहकरसीअसंदमाणी आइण्णजाणजुग्गा विमुउलनवनलिणिसोभिअजला पंडुरवरभवणसन्निमहिआ उत्ताणयणयणपिच्छणिज्जा पासादीआ दरिसणिज्जा अभिरूवा पडिरूवा 'त्ति ।

अस्यार्थः–कथं समृद्धा ? 'अणेगकोडीकुडुंबिआइण्णनिव्वुअसुह 'त्ति । अनेकाः कोटयो–द्रव्यसङ्ख्या निजपुत्रादिपरिकरसङ्ख्या वा येषां ते अनेककोटयस्तैस्तादृशैः कुटुम्बिभिः कौटुम्बिकैराकीर्णा या सा । यद्वा–अनेककोटिभिरनेककोटिसङ्ख्याकैः कुटुम्बिभिराकीर्णा निर्वृता च–सन्तुष्टजनयोगात्सन्तोषवती, शुभा च शुभवस्तूपेतत्वात् । ततः पदत्रयस्य कर्मधारयः । अत एव–' णडणट्टगजल्लमल्लमुट्ठिअवेलंबकहगपवगलासगआइक्खगलंखमंखतूणइल्लतुंबवीणिअअणेगतालायराणुचरिअ 'त्ति । नटा–नाटकानां नाटयितारः, नर्त्तका–ये स्वय नृत्यन्ति, जल्ला–राज्ञः स्तोत्रपाठकाः, मल्लाः–प्रतीताः, मौष्टिका–मल्ला एव ये मुष्टिभिः प्रहरन्ति, विडम्बका–विदूषकाः, कथकाः–प्रतीताः, प्लवका–ये उत्प्लवन्ते नद्यादिकं वा तरन्ति, लासका–ये रासकान् गायन्ति, जयजयशब्दप्रयोक्तारो वा भाण्डा इति यावत्, आख्यायका–ये शुभाऽशुभमाख्यान्ति, लङ्खा महावंशाग्रखेलकाः, मङ्खाः–चित्रफलकहस्ता भिक्षाकाः, तूणइल्लाः–तूणाभिधानवाद्यविशेषवन्तः, तुम्बवीणिकाः–तुम्बवीणावादकाः, तथा अनेके ये तालाचराः–तालादानेन प्रेक्षाकारिण, एतैः सर्वैरनुचरिता–आसेविता या सा तथा । पुनः कथं समृद्धा ? इत्याह–' आरामुज्जाणअगडतलायदीहिअवप्पिणिगुणोववेअ 'त्ति । आरमन्ति येषु माधवीलतागृहादिषु दम्पत्यादीनि ते आरामाः, उद्यानानि–पुष्पफलादिसद्वृक्षसङ्कुलानि उत्सवादौ बहुजनभोग्यानि, ' अगड 'त्ति । अवटाः–कूपाः, तडागानि–प्रतीतानि, दीर्घिकाः–सारिण्यः, ' वप्पिणि 'त्ति केदाराः, एतेषां ये गुणा रम्यतादयस्तैरुपेता–युक्ता या सा तथा । पुनः कीदृशी ? इत्याह ' णंदणवणसंनिभप्पगास 'त्ति । नन्दनवनं–मेरोर्द्वितीयं वनं तत्प्रकाशसन्निभः प्रकाशो यस्याः सा तथा । इह चैकस्य प्रकाशशब्दस्योष्ट्रमुख इत्यादाविव लोप इति ।

अथ समृद्धनगर्या रक्षाकारिवस्तुगर्भितविशेषणान्याह–'उव्विद्धविपुलगंभीरखायफलिह'त्ति । उद्विद्धम्–ऊण्डं, विपुलं–विस्तीर्णं, गम्भीरम्–अलब्धमध्यं, खातम्–उपरि विस्तीर्णम् अधः सङ्कीर्णं, परिखा चाध उपरि समखातरूपा यस्यां सा तथा । पुनः कीदृशी ? 'चक्कगयमुसुंढिओरोहसतग्घिजमलकवाडघणदुप्पवेस 'त्ति । ' चक्रगदामुसुण्ढयः प्रहरणविशेषाः । अवरोधः प्रतोलीद्वारेषु अवान्तरप्राकारः सम्भाव्यते, शतघ्न्यो–महायष्टयो, महाशिला वा या उपरिष्टात् पातिताः शतानि पुरुषाणां घ्नन्तीति, यमलानि–समस्थितानि द्वयरूपाणि यानि कपाटानि घनानि च–निश्छिद्राणि तैर्दुःप्रवेशा या सा तथा । पुनरपि सा कीदृशी ? 'धणुकुडिलवंकपागारपरिक्खित्त'त्ति । धनुः कुटिलं कुटिलधनुः तस्मादपि

वक्रेण प्राकारेण परिक्षिप्ता—मुद्रिकया अङ्गुलीपर्ववत् परितः परिवेष्टितेति भावः। पुनरपि सा 'कविसीसयवट्टरइअसंठिअविरायमाण'त्ति। कपिशीर्षकैर्वृत्तरचितैर्वर्तुलकृतैः संस्थितैर्विशेषसंस्थानवद्भिर्विराजमाना या सा तथा। तथा—'अट्टालयचरियदारगोपुरतोरणसमुण्णयसुविभत्तरायमग्ग'त्ति। अट्टालकाः—प्राकारोपरिवर्त्याश्रयविशेषाः, चर्या—अष्टहस्तप्रमाणा नगरप्राकारान्तरालमार्गः, द्वाराणि—प्राकारद्वारिकाः, गोपुराणि—पुरद्वाराणि, तोरणानि—प्रतीतानि, उन्नतानि—गुणवन्ति उच्चानि वा यस्यां सा तथा। सुविभक्ताः सुविविक्ता राजमार्गा यस्यां सा तथा। ततः पदद्वयस्य कर्मधारयः। तथा—'छेआयरिअरइअदढफलिहइंदकील'त्ति। छेकेन—निपुणेन आचार्येण शिल्पिना रचितो दृढो—बलवान् परिघोऽर्गला इन्द्रकीलश्च—सम्पादितकपाटद्वयाधारभूतः प्रवेशमध्यभागे यस्यां सा तथा। तथा—'विवणिवणिअखेत्तसिप्पिआइण्णनिव्वुअसुह'त्ति। विपणीनां वणिक्पथानां हट्टमार्गाणां च वणिजां च क्षेत्रं-स्थानं या सा, तथा शिल्पिभिः—कुम्भकारादिभिर्निर्वृतः—सुखिभिः शुभैः—स्वस्वकर्मकुशलैराकीर्णा। प्राकृतत्वाच्च सूत्रेऽन्यथा पदोपन्यासः। यद्वा—कुम्भकारादिभिराकीर्णत्वेन समीहितप्रयोजनसंसिद्धेर्जनानां निर्वृता—निर्वृतिहेतुः। अत एव सुखा—सुखावहा या सा तथा। तथा—'सिंघाडगतिगचउक्कचच्चरपणिआवणविविहवत्थुपरिमंडिअ'त्ति। शृङ्गाटकं—शृङ्गाटकफलविशेषाकारं त्रिकोणकं स्थानं, त्रिक—यत्र रथ्यात्रयं मिलति, चतुष्कं—रथ्याचतुष्टयमीलनात्मकं, चत्वरं—बहुरथ्यापातस्थानं, पणितानि—भाण्डानि तत्प्रधाना आपणा—हट्टास्तेषु यानि विविधवस्तून्यनेकप्रकारकाणि द्रव्याणि तैः परिमण्डिता—अलङ्कृतेत्यर्थः। अत एव सुरम्या—अतिशयेन रमणीया। तथा—'नरवइपविइण्णमहिवइपह'त्ति। नरपतिना—राज्ञा प्रविकीर्णो—गमनागमनाभ्यां व्याप्तो महीपतिपथो—राजमार्गो यस्यां सा तथा। अथवा नरपतिना प्रविकीर्णा निरस्ताऽन्येषां महीपतीनां प्रभा यस्यां सा। अथवा नरपतिभिर्निजाज्ञावर्तिसामन्तराजैः प्रवितीर्णा—विस्तारं प्रापिता महीपतेः प्रभा यस्यां सा तथा। तथा—'अणेगवरतुरगमत्तकुंजररहपहकरसीअसंदमाणीआइण्णजाणजुग्ग'त्ति। अनेकैर्वरतुरगैस्तथा मत्तकुञ्जरैः, 'रहपहकर'त्ति रथनिकरैः, शिबिकाभिः—कूटाकारेणाच्छादितजम्पानविशेषैः, स्यन्दमानीभिः—पुरुषप्रमाणजम्पानविशेषैः यानैः—शकटादिभिः युग्यैः—गोल्लविषयप्रसिद्धैर्द्विहस्तप्रमाणैः वेदिकोपशोभितैर्जम्पानैरेवाकीर्णा व्याप्ता या सा तथा। आकीर्णशब्दस्य मध्यनिपातः प्राकृतत्वात्। तथा—'विमुउलनवणलिणिसोभिअजल'त्ति। विमुकुलैः—विकसितैर्नवनलिनैश्शोभितानि जलानि यस्यां सा तथा—'पंडुरवरभवणसन्निमहिअ'त्ति। पाण्डुरैः—सुधाधवलैर्वरभवनैः—प्रासादैः सम्यग् नितरां महितेव महिता—पूजिता या सा तथा। अत एव 'उत्ताणयणयणपिच्छणिज्ज'त्ति। सौभाग्यातिशयादुत्तानकैः—अनिमिषैर्नयनैः—लोचनैः प्रेक्षणीया या सा तथा। 'पासाइअ'त्ति प्रासादीया—चित्तप्रसत्तिकारिणी, यद्वा—प्रासादेषु भवा प्रासादीया प्रासादबहुलेत्यर्थः। अत एव—'दरिसणिज्ज'त्ति। दर्शनीया—द्रष्टुं योग्या पश्यतां चक्षुः श्रमं न गच्छतीत्यर्थः। अत एव 'अभिरूव'त्ति। अभिमुखमतीवोत्कटं रूपम्—आकारो यस्याः सा तथा। अत एव 'प्रतिरूपा' प्रतिविशिष्टमसाधारणं रूपम्—आकारो यस्याः सा प्रतिरूपा द्रष्टारं द्रष्टारं प्रति रूपवतीत्यर्थः।

ननु औपपातिकोक्तो वर्णकोऽतिदेशेनैव वक्तव्यार्हो न पुनरनुवादेनापि, ग्रन्थगौरवापत्तेरिति चेत्? मैवं, सर्वत्राऽप्यतिदेशे

'सुत्तत्थो खलु पढमो वीओ निज्जुत्तिमीसिओ भणिओ। तइओ अ निरवसेसो एस विहि होइ अणुओगे ॥१॥' त्ति व्याख्यानानुक्रमस्य विलोपापत्तेः। तस्माद्व्याख्येयसूत्रानुसारेण क्वचिदतिदेशेन क्वचिच्च साक्षादेवं भणनं युक्तमेव, तथैवागमे प्रयोगस्याप्युपलम्भात्।

अथैवंविधायां मिथिलायां प्रस्तुतोपयोगिनमर्थमाह

**तीसे णं मिहिलाए नयरीए बहिआ उत्तरपुरच्छिमे दिसिभागे एत्थ णं माणिभद्दे णामं चेइए होत्था, वण्णओ।**

'तीसे ण'मित्यादि। तस्या मिथिलानगर्या बहिर्य उत्तरपौरस्त्य—उत्तरपूर्वारूपो दिग्विभाग ईशानकोण इत्यर्थः। एकारो मागधभाषानुरोधतः प्रथमैकवचनस्य 'अत एत् सौ पुंसि मागध्यामि'ति सूत्रेण द्रष्टव्यः। 'एत्थ णं'ति। अत्र उत्तरपौरस्त्ये दिग्विभागे। णमिति प्राग्वत्। माणिभद्रं नाम्ना चैत्यमभवत्। चितेर्लेप्यादिचयनस्य भावः कर्म वा चैत्यम्। तच्च सञ्ज्ञाशब्दत्वात् देवताप्रतिबिम्बे प्रसिद्धं, ततस्तदाश्रयभूतं यद्देवताया गृहं तदप्युपचाराच्चैत्यं व्यन्तरायतनं द्रष्टव्यं, न तु भगवतामर्हतामायतनमिति। 'वण्णओ'त्ति। वर्णको माणिभद्रस्य चैत्यस्य वक्तव्यः। स चैवं—'चिराइए पुव्वपुरिसपण्णत्ते पोराणे सद्दिए वित्तिए कित्तिए णाए सछत्ते सज्झए सघंटे सपडागे पडागातिपडागमडिए सलोमहत्थे कयवियद्दिए लाउल्लोइअमहिए गोसीससरसरत्तचंदणदद्दरदिण्णपंचंगुलितले उवचिअवदणकलसे वंदणघडसुकयतोरणपडिदुवारदेसभागे आसत्तोसत्तविउलवट्टवग्घारिअमल्लदामकलावे पचवण्णसरससुरभिमुक्कपुप्फपुंजोवयारकलिए कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामे सुगंधवरगंधगंधिए गधवट्टिभूए णडणट्टगजल्लमल्लमुट्ठिअवेलंबगपवगकहगलासगआइक्खगलखमंखतूणइल्लतुंववीणिअभुअगमागहपरिगए बहुजणजाणवयस्स विस्सुअकित्तिए बहुजणस्स आहुस्स आहुणिज्जे पाहुणिज्जे अच्चणिज्जे वंदणिज्जे नमसणिज्जे पूअणिज्जे सक्कारणिज्जे सम्माणणिज्जे कल्लाणं मगलं देवयं चेइअं विणएण पज्जुवासणिज्जे दिव्वे सच्चे सच्चोवाए सच्चसेवे संनिहिअपाडिहेरे जागसहस्सभागपडिच्छए बहुजणो अच्चेइ आगम्म माणिभद्दं चेइअं'ति।

अस्यार्थः माणिभद्रं चैत्यं कीदृशं? 'चिराइए'त्ति। चिरकाले—भूतभूयःकाले आदिर्निवेशो यस्य तच्चिरादिकं, चिरकालोऽतीतो यस्मात्तच्चिरातीत वा, चिरान्—चिरकालीनपर्यायप्राप्तानतिक्रम्य गच्छतीति चिरातिगं वा, चिरकालीनेषु श्रेष्ठमित्यर्थः। सर्वत्रापि पुंस्त्वं प्राकृतत्वात्। यतश्चिरादिकमतः पूर्वपुरुषप्रज्ञप्तं—पूर्वपुरुषैरतीतनरैः प्रज्ञप्तमुपादेयतया प्रकाशितं, प्रायश्चिरतनप्रवृत्तिः सर्वेषामुपादेयेति लोकोक्तिरपि। अत एव पुरातनं—जीर्णं शब्दितं—शब्दः-प्रसिद्धिः सञ्जातो यस्य तत्तथा। वित्त—द्रव्यं तद्विद्यते यस्य तद्वित्तिकं, धृतिमाश्रितानां लोकानां ददातीति धृतिदं वा, कीर्तितं जनैः समुत्कीर्तितं कीर्त्तिदं वा। 'णाए'त्ति। न्यायनिर्णायकत्वात् न्यायः ज्ञातं वा ज्ञातसामर्थ्यमनुभूततत्प्रसादेन लोकेनेति। सच्छत्रमित्यादि विशेषणत्रयं स्पष्टम्। 'सपडागाइपडागमडिए'त्ति। सह पताकया वर्तते इति सपताकं, तच्च तत् एकां पताकामतिक्रम्य या पताका साऽतिपताका तया मण्डितं यत्तत्तया। 'सलोमहत्थे'त्ति। लोममयप्रमार्जनयुक्तं। 'कयवियद्दिए'त्ति। कृतवि-

तर्दिक-रचितवेदिकम् । ‘ लाउल्लोइअमहिए ’त्ति । लाइअं—छगणादिनोपलेपनं, ‘ उल्लोइअं ’ सेटिकादिभिः कुड्यमालानां समृष्टीकरणं, ततस्ताभ्यां महितमिव महितं—पूजितं यत्तत्तथा । ‘ गोसीसरत्तचंदणदद्दरदिण्णपचंगुलितले ’त्ति । गोशीर्षसरसरक्तचन्दनेन दर्दरेण—बहुलेन चपेटाप्रकारेण दत्ताः पञ्चाङ्गुलयः तला—हस्तका यत्र तत्तथा । ‘ उवचितवंदणकलसे’त्ति । उपचिता—निवेशिता वन्दनकलशा—विचित्रवर्णचित्रादिसत्कारेण मङ्गलनिमित्तमधिकृताः कलशा वन्दनकलशा उच्यन्ते । यद्वा—मङ्गलहेतुत्वेन ‘ वदुङ् स्तुताविं ’ति वचनाद्वन्दनाय—स्तुत्यर्थं कलशा वन्दनकलशा यत्र तत्तथा । ‘ वंदणवडसुकयत्तोरणपडिदुवारदेसभागे ’त्ति । वन्दनघटाः प्रागुक्तस्वरूपास्ते च सुकृततोरणानि च द्वारदेशभागं प्रति यस्मिन् तत्तथा । तत्र देशभागा एव वोध्याः । ‘ आसत्तोसत्तविउलवट्टवग्घारिअमल्लदामकलाव ’त्ति । आसक्तो—भूमौ सम्बद्ध, उत्सक्त—उपरि सम्बद्धो, विपुलो—विस्तीर्णो, वृत्तो—वर्त्तुलः, ‘ वग्घारिअ ’त्ति प्रलम्बमानः, माल्यदामकलापः—पुष्पमालासमूहो यत्र तत्तथा । ‘ पंचवण्णसरससुरहिमुक्कपुप्फपुंजोवयारकलिए ’त्ति । पञ्चवर्णेन सरसेन सुरभिणा मुक्तेन पुष्पपुञ्जलक्षणेनोपचारेण—पूजया कलितं यत्तत्तथा । ‘ कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघतगंधुद्धुआभिराम ’त्ति । कालागुरुप्रभृतीना धूपाना यो मघमघायमान इत्यनुकरणं दशस्वपि दिक्षु स्थिताना नराणा घ्राणदेशान् सुगन्धपुद्गलसमूहैरापूरयन्नित्यस्य वाक्यस्यावसातव्यम् । उद्धूतः—‘ धूञ् कम्पने ’ इतिवचनात्, उद्धत—भावनिर्देशात् कम्पन यस्मात् स उद्धूताऽप्रकम्पितोऽनवरतसद्भावेनात्रुटितो यो गन्धस्तेनाभिराम मनोज्ञं यत्तत्तथा । ‘ सुगंधवरगंधगंधिए ’त्ति । सुगन्धवरगन्धाः-प्रवरावासास्तेषां गन्धो यत्रास्ति तत्तथा । ‘ गंधवट्टिभूए ’त्ति । सौरभ्यातिशयात् गन्धद्रव्यगुटिकाकल्पमित्यर्थः । तथा—‘ णडणट्टगजल्लमल्लमुट्ठिअवेलंवगपवगकहगलासगआइक्खगलंखमंखतूणइल्लतुंववीणिअभुअगमागहपरिगए ’त्ति । पूर्ववत्, नवरं भुजगा—भोगिनो भोजका वा तदर्थका मागधा—भट्टा इति । तथा वहुजणजाणवयस्स विस्सुअकित्तिए ’त्ति । वहोर्जनस्य—पौरस्य जानपदस्य च—जनपदभवलोकस्य विश्रुता कीर्त्तिर्यस्य तद् वहुजनजानपदविश्रुतकीर्त्तिकं विश्रुतकीर्त्तितं चस्येति वा । सर्वत्र प्रतीतख्यातिकमित्यर्थः । ‘ वहुजणस्स आहुस्स आहुणिज्जे ’त्ति । वहुजनस्याऽऽहोतुर्दातुराह्वनीयं—सम्प्रदानभूतम् । ‘ पाहुणिज्जे ’त्ति । प्रकर्षेणाह्वनीयं तद्भक्तस्याहोतृजनस्याहूतिक्रियाविषय इत्यर्थः । ‘ अच्चणिज्जे ’त्ति । अर्चनीयं चन्दनगन्धादिभिः । ‘ वंदणिज्जे ’त्ति । वन्दनीयं स्तुतिभिः, ‘ नमंसणिज्जे ’त्ति नमस्करणीयं प्रणामतः, ‘ पूअणिज्जे ’त्ति पूजनीयं पुष्पैः, ‘ सक्कारणिज्जे’त्ति सत्कारणीयं वस्त्रैः, ‘सम्माणणिज्जे’त्ति, सन्माननीयं वहुमानविषयतया, ‘ कल्लाणं मंगलं देवयं चेइअं विणएणं पज्जुवासणिज्जे ’त्ति । कल्याणमितिबुद्ध्या पर्युपासनीयं । तत्र कल्याणम्—अर्थसम्पादक, मङ्गलम्—अनर्थप्रतिहन्तृ, दैवत—देवः, चैत्यम्—इष्टदेवताप्रतिमेति तथा । ‘ दिव्वे ’त्ति दिव्यं—प्रधानं, ‘ सच्चे ’त्ति सत्यं सत्यादेशत्वात्, ‘ सच्चोवाए ’त्ति । सत्यावपात—सत्याना चिन्तिताभीष्टजनानाम् अवपातो मीलन यत्र तत्तथा । ‘ सच्चसेवे ’त्ति । सत्या सफलीकरणात् सम्यक् सेवा—पर्युपास्तिर्यस्य तत्तथा । ‘ सन्निहिअपाडिहेरे ’त्ति । सन्निहितप्रातिहार्यं—विहितदेवताप्रातिहार्यं, ‘ जागसहस्सभागपडिच्छए ’त्ति । यागा—ब्राह्मणप्रसिद्धाः पूजाविशेषाः तत्सहस्राणां भागम्—अंश प्रतीच्छतीति यागसहस्रभागप्रतीच्छक, सहस्रशब्देनाऽस्यानेकानि सहस्राणि नरा भक्ता सन्तीति ज्ञापितम् । ‘ वहुजणो अच्चेइ आगम्म माणिभद्द चेइअं ’त्ति । वहुजनो माणिभद्रं चैत्यमागत्यार्चतीति माणिभद्रचैत्यवर्णनम् ।

अथैवंविधमपि माणिभद्रचैत्यं सर्वजनसाधारणाभीष्टवस्तुविशिष्टं विशेषतः सेव्यं स्यादतस्तत्प्रपञ्चनं यथा—' से णं माणिभद्दे चेइए एगेणं महया वणसंडेणं सव्वओ समंता संपरिक्खित्ते । 'से' तत् प्राग्वर्णितस्वरूपं माणिभद्रं चैत्यं, णमित्यलङ्कारे । एकेन महता वनखण्डेन—अनेकजातीयोत्तमवृक्षसमूहात्मकेन, सर्वतः सर्वासु दिक्षु, समन्तात्-सर्वासु विदिक्षु च सम्परिक्षिप्तं—परिवेष्टितं निजकुक्षिनिक्षिप्तमित्यर्थः ।

अथ स वनखण्डः कीदृश ? इत्याह—' किण्हे किण्होभासे नीले नीलोभासे हरिए हरिओभासे सीए सीओभासे णिद्धे णिद्धोभासे तिव्वे तिव्वोभासे किण्हे किण्हच्छाए णीले णीलच्छाए हरिए हरिअच्छाए सीए सीअच्छाए णिद्धे णिद्धच्छाए घणकडिअडच्छाए महामेहनिकुरंबभूए 'त्ति ।

अस्यार्थ—इह प्रायो वृक्षाणां पत्राणि मध्यमे वयसि वर्त्तमानानि कृष्णानि भवन्ति, ततस्तद्योगाद्वनखण्डोऽपि ' कृष्णः ' । न चोपचारमात्रतः कृष्ण इति व्यपदिश्यते, किन्तु तथाप्रतिभासनात तथा चाह—' कृष्णावभासः ' यावति भागे कृष्णानि पत्राणि सन्ति तावति भागे स वनखण्डः कृष्णोऽवभासते, ततः कृष्णोऽवभासो यस्य स कृष्णावभास इति । तथा हरितत्वमतिक्रान्तानि कृष्णत्वमसम्प्राप्तानि पत्राणि नीलानि भवन्ति, तद्योगाद्वनखण्डोऽपि ' नीलः ' । न चैतदुपचारमात्रेणोच्यते, किन्तु तथावभासात तथा चाह-' नीलावभासः ' समासः प्राग्वत् । यौवने तान्येव पत्राणि किशलयत्वं रक्तत्वं चातिक्रान्तानि ईषद्धरितालाऽऽभानि पाण्डूनि सन्ति हरितान्युपदिश्यन्ते, ततस्तद्योगाद्वनखण्डोऽपि ' हरितः ' । एवं ' हरितावभासः ' प्राग्वत् । तथा बालत्वमतिक्रान्तानि पत्राणि शीतलानि भवन्त्यतस्तद्योगाद्वनखण्डोऽपि ' शीतः शीतावभासश्च ' समासादिः प्राग्वत् । अधोभागवर्त्तिनां नराणां नारीणां च तद्योगाशीतवातसंस्पर्शतः स वनखण्डः शीतो भासते इति । तथैते कृष्णनीलहरितवर्णा यथास्वं स्वस्मिन् स्वस्मिन् स्वरूपे वर्तमाना अत्यन्तमुत्कटाः स्निग्धास्तीव्राश्च भण्यन्ते, ततस्तद्योगात् वनखण्डोऽपि ' स्निग्धस्तीव्रश्च ' न चैतदुपचारमात्रं किन्तु तथाऽवभासोऽप्यस्ति, तत उक्तं ' स्निग्धावभासस्तीव्रावभासश्च ' । इहावभासो भ्रान्तोऽपि भवति, यथा मरुमरीचिकासु जलावभासः, ततो नावभासमात्रोपदर्शनेन यथावस्थितं वस्तुस्वरूपमुपवर्णितं स्यादिति तथा स्वरूपप्रतिपादनार्थं विशेषणान्तरमाह—' किण्हे किण्हच्छाए ' इत्यादि । ' कृष्णो ' वनखण्डः कुत ? इति विशेषणद्वारा हेतुमाह—यतः ' कृष्णच्छायः ' कृष्णा छाया—आकारः सर्वाऽविसंवादितया यस्य स कृष्णच्छायः तस्मात् कृष्णः । एतदुक्तं भवति-सर्वाऽविसंवादितया तत्र कृष्ण आकार उपलभ्यते, न च भ्रान्तावभाससम्पादितसत्ताकः सर्वाऽविसंवादितया भवितुमर्हति, ततस्तत्त्ववृत्त्या स कृष्णो न भ्रान्तावभासमात्रव्यवस्थापित इति । एवं ' नीले नीलच्छाए ' इत्यादावपि परिभावनीयं, नवरं 'सीए सीअच्छाए' इत्यत्र छायाशब्द आतपप्रतिपक्षवस्तुवाची द्रष्टव्यः । 'घणकडिअडच्छाए' इति । इह शरीरस्य मध्यभागे कटिस्ततोऽन्यस्यापि मध्यभागः कटिरिव कटिरित्युच्यते । कटिस्तटमिव कटितटं घना—अन्योऽन्यशाखाप्रशाखानुप्रवेशतो निबिडा कटितटे—मध्यभागे छाया यस्य स तथा, मध्यभागे निबिडच्छाय इत्यर्थः । अत एव रम्यो—रमणीयः । तथा 'महामेहनिकुरंबभूए 'त्ति । महान् जलभारावनतः प्रावृट्कालभावी यो मेघनिकुरुम्बो-मेघसमूहस्तं भूतो—प्राप्तो महामेघवृन्दोपम इत्यर्थः । तत्र वर्त्तमाना ये वृक्षास्ते यतो—मूलवन्तः, कन्दवन्तः, स्कन्धवन्तः, त्वग्वन्तः, शालावन्तः, प्रवालवन्तः, पत्रवन्तः, पुष्पवन्तः, फलवन्तो, बीजवन्तः । पुनस्ते वृक्षा मूलादिपरि-

पाटया सुजाताः, रुचिराः स्निग्धतया देदीप्यमानच्छविमन्तः वृत्तभावपरिणताः शाखाप्रशाखाभिः सर्वास्वपि दिक्षु विदिक्षु च प्रसृताः । एकस्कन्धाः अनेकशाखाप्रशाखाः अनेकपुरुषव्याप्तसुप्रसारिताऽग्राह्यविपुलवृत्त-स्कन्धाः दुर्वातगङ्खारिकादोषाभावेन अच्छिद्रपत्राः अन्योऽन्यं शाखाप्रशाखानुप्रवेशोदविरलपत्राः तथाविध-वातनिर्धूतपुराणपाण्डुपत्राः सद्यस्कोत्पन्नारनग्धपत्रपुष्पफलादिभिर्देदीप्यमानाः कृष्णनीलपत्रादिमच्छायसमु-त्थान्धकारगम्भीरमध्यभागाः उपरि विनिर्गतनवतरुणपत्रपल्लवकोमलोज्ज्वलचलत्किशलयसुकुमारप्रवालशो-भितवराङ्कुराग्रशिखराः नित्यं कुसुमिताः, नित्यं मुकुलिताः, नित्य मयूरिता' लोकोक्त्या 'मउरवत' इत्यर्थः, नित्यं पल्लविताः, नित्यं स्तवकिताः, नित्यं सजातीयवृक्षैर्युगलिताः, नित्यं फलभारप्रकर्षप्रणताः, नित्यं निरोगाः–कण्टकवृक्षवर्जिताः, अभ्यन्तरभागे फलोपेताः बाह्यतः पत्राच्छादिताः, नित्यं मञ्जरीमुकुटोप-शोभितशिरस्काः इत्यादिस्वरूपभाजोऽत एव तत्समुदायात्मको वनखण्डः कृष्णत्वादिविशेषणविशिष्टः । स च वनखण्ड' शुकसारसचक्रवाककलहंसमयूरादिशकुनिमिथुनसमूहपरिकरितः । अनेकजालगृहसंयुक्तानेकवा-पीपुष्करिणीदीर्घिकापरिकलितः कुसुमासवलोलमदोन्मत्तमधुकरमधुकरीनिकरगुमगुमायमानगुञ्जद्देशभाग' निरन्तर सुस्वादुफलसमूहोपेतः निरन्तरसुरभिकुसुमादिसमुत्थसुगन्धपुद्गलसमूहान् वमन्निव विराजमा-नोऽनेकराजपुत्रादिजनैरासेव्यमानो रम्यो दर्शनीयः । तस्य च वनखण्डस्य मध्यभागे महानेकोऽशोकवर-पादपः । स च दर्भादितृणजातिविशुद्धमूलः अनेकैस्तिलकबकुलशिरीपसप्तपर्णदधिपर्णलोध्रधवचन्दनार्जुन-नीपकुटजपनसदाडिमसालसहकारतालतमालनन्दिवृक्षादिपरिक्षिप्तः पञ्चवर्णानेकपताकोपशोभितः । तस्य चाशोकवरपादपस्याधस्तादीषत्प्रत्यासन्नो महानेकः पृथिवीशिलापट्टकः प्रज्ञप्तः । स च विष्कम्भायामोत्सेधैः सुप्रमाणत्वेन शोभमानः । कर्केतनेन्द्रनीलबलदेववस्त्रसमानवर्णः। धनः शुषिररहितः । श्लक्ष्णः अष्टकोणः सुमृष्ट-दर्पणतलोपमः रम्यो दर्शनीयो मुक्ताफलजालाञ्चितान्तप्रदेशः । ईहामृगवृषभतुरगनरमकरविहगव्यालकिन्नर-रुरुसरभचमरकुञ्जरवनलतापद्मलतादिचित्रयुक्तभित्त्युपशोभितः । नवनीततूलस्पर्शः । सिंहासनसंस्था-नसंस्थितः । प्रासादीयो दर्शनीयोऽभिरूपः प्रतिरूपश्च । एवं मिथिलाया नगर्यां माणिभद्रचैत्योपलक्षिता वनखण्डाशोकवृक्षपृथिवीशिलापट्टका विज्ञेयाः ।

अथ तस्यां नगर्यां किंनामानौ राजा राज्ञी चेति दर्शयति

## जिअसत्तू राया धारिणी देवी वण्णओ ।

'जिअसत्तू राये' त्यादि । जितशत्रुनामा राजा, 'धारिणी' नाम्ना देवी 'वण्णओ'त्ति । तयोर्वर्णको वक्तव्य' । तत्र प्रथमं राज्ञो वर्णनं, यथा–'तत्थ णं मिहिलाए णयरीए जिअसत्तू णामं राया होत्था । महया हिमवंतमहंतमलयमंदरमहिंदसारे अच्चंतविसुद्धदीहरायकुलवंसप्पसूए निरंतररायलक्खण विराइअंगमंगे बहुजणबहुमाणपूइए सव्वगुणसमिद्धे खत्तिए मुइए मुद्धाभिसित्ते माउपिउसुजाए दयपत्ते सीमकरे सीमंधरे खेमंकरे खेमंधरे मणुस्सिंदे जणवयपिआ जणवयपाले जणवयपुरोहिए सेउकरे केउकरे नरपवरे पुरिसपवरे पुरिससीहे पुरिसवग्घे पुरिसआसीविसे पुरिसवरपुंडरीए पुरिसवरगंधहत्थी अड्ढे दित्ते वित्ते विच्छिण्णविपुलभवणसयणासणवाहणाइण्णे बहुधणबहुजायरूवरजए आओगपओगसंपओग-संपउत्ते विच्छड्डिअपउरभत्तपाणे बहुदासीदासगोमहिसगवेलगप्पभूए पडिपुण्णजंतकोसकोट्ठागाराउहघरे

बलव दुब्बलपच्चामित्ते ओहयकंटयं मलिअकंटयं उद्धिअकंटयं अप्पडिकंटयं ओहयसत्तुं निहयसत्तुं मलिअसत्तु उद्धिअसत्तुं निज्जिअसत्तुं पराजिअसत्तुं ववगयदुब्भिक्खदोसमारि भयविप्पमुक्कं खेमं सिवं सुभिक्खं पसंतडिंबडमरं रज्जं पसासेमाणे विहरति'त्ति ।

अस्यार्थः—'तत्थ णं मिहिलाए णयरीए जिअसत्तू णामं राया होत्थ'त्ति । तत्र मिथिलायां नगर्यां जितशत्रुनामा राजाऽभवदिति । स च किंरूप? इत्याह—'महयाहिमवंतमहंतमलयमंदरमहिंदसारे'त्ति । महता—गुणसमूहेन, अन्तर्भूतभावप्रत्ययत्वाद्वा महत्तया हिमवान्—हैमवतस्य क्षेत्रस्योत्तरतः सीमाकारी वर्षधरपर्वतः, महाँश्चासौ मलयश्च—वन्ध्य इति चूर्णिकृत् महामलयः पर्वतविशेषः सुप्रतीतः, मन्दरो—मेरुः, महेन्द्रः—शक्रादिको देवराजस्तद्वत्सारः—प्रधानो यः स तथा । 'अच्चंतविसुद्धदीहरायकुलवंससुप्पसूए'त्ति । अत्यन्तविशुद्धः—सर्वथा निर्दोषो दीर्घश्च पुरुषपरम्परापेक्षया यो राज्ञां—भूपालानां कुललक्षणो वंशसन्तानस्तत्र प्रसूतो यः स तथा । 'निरंतररायलक्खणविराइअंगमंगे'त्ति । निरन्तरमपलक्षणव्यवधानाभावेन राजलक्षणैः—राज्यसंसूचकैर्लक्षणैश्चक्रस्वस्तिकादिभिर्विराजितान्यङ्गमङ्गानि अङ्गप्रत्यङ्गानि—शिरःप्रभृत्यङ्गुलीप्रभृतीनि यस्य स तथा । मकारस्तु प्राकृतशैलीप्रभव इति । 'बहुजणबहुमाणपूइए'त्ति । बहुभिर्जनैर्बहुमानेन—अन्तरङ्गप्रीत्या पूजितो यः स तथा । कस्मादेवम्? इत्याह—'सव्वगुणसमिद्धे'त्ति । सर्वैः—शौर्योपशमादिभिर्गुणैः समृद्धः—स्फीतस्ततो बहुजनबहुमानपूजितः, गुणवत्सु प्रायः सर्वेषामपि बहुमानसम्भवात् । 'खत्तिए'त्ति । क्षत्रियः । एतेन नवमाष्टमादिनन्दवत् राजकुलवंशप्रसूतोऽपि न हीनजातीयः किन्तूत्तमजातीय इत्यावेदितम् । 'मुइए'त्ति । मुदितो—निर्दोषमातृकः, सर्वकालं हर्षवान्वा, स च हर्षः प्रत्यनीकराजकृतोपद्रवासम्भवात् । तदसम्भवश्च प्रत्यनीकानामेवाभावात् । तथा चाऽऽह—'मुद्धाभिसित्ते'त्ति । सर्वैरपि प्रत्यन्तराजैः प्रतापमसहमानैर्नान्यथाऽस्माकं गतिरिति परिभाव्य मूर्द्धभिः मस्तकैरभिषिक्तः—पूजितो मूर्धाभिषिक्तः । 'माउपिउसुजाए'त्ति । मातृपितृभ्यां सुजातः । अनेकसमस्तगर्भाधानसम्भवदोषविकल इत्यावेदितम् । 'दयपत्ते'त्ति दयां प्राप्तः स्वभावतः शुद्धजीवद्रव्यत्वात् । 'सीमंकरे'त्ति । सेवामागतानामपूर्वापूर्वनृपाणां सीमां—मर्यादां करोतीति यथैवं वर्त्तितव्यम् एवं च नेति सीमङ्करः । 'सीमंधरे'त्ति । पूर्वपुरुषपरम्परायातां स्वदेशे प्रवर्त्तमानां सीमां मर्यादां धारयति—पालयति न तु विलुम्पतीति सीमन्धरः । अत एव 'मणुस्सिंदे'त्ति । मनुष्येन्द्रः । तथा 'जणवयपिअ'त्ति । जनपदस्य पितेव जनपदपिता । कथं जनपदपितेव? इत्याह—'जणवयपाले'त्ति । जनपदं पालयतीति जनपदपालस्ततो भवति जनपदस्य पितेव । 'जणवयपुरोहिए'त्ति । जनपदस्य शान्तिकारित्वात् पुरोहित इव जनपदपुरोहितः । 'सेउकरे'त्ति । सेतुः—मार्ग आपद्गतानां निस्तरणोपायस्तं करोतीति सेतुकरः । तथा 'केउकरे'त्ति । केतुश्चिह्नं तत्करोतीति केतुकरोऽद्भुतसंविधानककारीति भावः । 'नरपवरे'त्ति । नरेषु—मनुष्येषु प्रवरो नरप्रवरः । स च सामान्यमनुष्यापेक्षयापि स्यादत आह—'पुरिसवरे'त्ति । पुरुषेषु—पुरुषाभिमानिषु मध्ये वरः—प्रधानः उत्तमपौरुषोपेतत्वात् । कुत एवं? यतः 'पुरिससीहे'त्ति । पुरुषः सिंह इवाप्रतिमल्लतया पुरुषसिंहः । तथा 'पुरिसवग्घे'त्ति । पुरुषो व्याघ्र इव शूरतया पुरुषव्याघ्रो, रोषे सति रुद्ररूपत्वाद्वा । 'पुरिसआसीविसे'त्ति । पुरुष आशीविष इव दोषवित्ताशनशीलतया कोपसाफल्यकरण-

२

सामर्थ्यतो वा। 'पुरिसवरपुंडरीए'त्ति। पुरुषो वरपुण्डरीकमिवोत्तमतया भुवनसरोवरभूपकत्वात् सुखार्थिभिः सेव्यत्वाद्वा पुरुषवरपुण्डरीकः। 'पुरिसवरगंधहत्थि'त्ति। पुरुषो वरगन्धहस्तीव परानसहमानान् प्रतीति पुरुषवरगन्धहस्ती। ततो भवति पुरुषवरः–'अड्ढे'त्ति। आढ्य.–समृद्धः। 'दित्ते'त्ति दीप्तः शरीरतेजसा देदीप्यमानत्वात्, दप्तो वा दप्तारिमानमर्दनशीलत्वात्। अत एव 'वित्ते'त्ति। वित्तो–जगत्प्रतीतः।

अथ यदुक्तं 'आढ्य' इति तद्विस्तरमुपदर्शयति–'विच्छिण्णविपुलभवणसयणासणजाणवाहणाइण्णे'त्ति। विस्तीर्णानि–विस्तारवन्ति विपुलानि–प्रभूतानि भवनानि–गृहाणि, शयनानि आसनानि च प्रतीतानि,–यानानि रथ्यादीनि वाहनान्यश्वादीनि, एतैराकीर्णो-व्याप्तो यः स तथा। 'बहुधणबहुजायरूवरयए'त्ति। बहुधन बहुजातरूप–सुवर्णं रजतं च रूप्यं यस्य स तथा। तथा–'आओगपओगसंपउत्ते'त्ति। आयोगस्य–अर्थलाभस्य प्रयोगा–उपायाः सम्प्रयुक्ता–व्यापारिता येन तेषु वा सम्प्रयुक्तो–व्याप्तो यः स तथा। 'विच्छड्डिअपउरभत्तपाणे'त्ति। विच्छर्दिते–त्यक्ते बहुजनभोजनदानेन अवशिष्टोच्छिष्टसम्भवात्, सञ्जातविच्छर्दे वा प्रचुरे–प्रभूते भक्तपाने–भोजनपानीये यस्य स तथा। यद्वा–विच्छर्दित–तथाविधविशिष्टोपकारितया विसृष्टं उत्कुरुडिकादिषु प्रचुरं–भक्तपानं यस्मिन् राज्यमनुशासति स विच्छर्दितप्रचुरभक्तपानः। अनेन पुण्याधिकतया तस्मिन् राज्यमनुशासति न दुर्भिक्षनामापीति प्रतिपादितम्। तथा 'बहुदासीदासगोमहिसगवेलगप्पभूए'त्ति। बहूनां दासीनां दासाना गवां–बलीवर्दानां महिषाणां, गवां स्त्रीगवीनाम् एडकानां च प्रभुः बहुदासीदासगोमहिषगवेडकप्रभुः स्वार्थे कप्रत्ययविधानात् प्रभुकः। प्राकृतत्वाद्दीर्घत्वम्। यद्वा–बहुदासीदासादयः प्रभूता यस्य स तथा। 'पडिपुण्णजंतकोसकोट्ठागाराउहघरे'त्ति। प्रतिपूर्णानि यन्त्राणि च–पाषाणक्षेपयन्त्रादीनि कोशश्च गाण्डागारं कोष्ठागारं च–धान्यगृहम् आयुधगृहं च–प्रहरणशाला यस्य स तथा। तथा बलवन्ति–बलवान् प्रभूतसैन्यः। 'दुब्बलपच्चामित्ते'त्ति। दुर्बलाः प्रत्यमित्राः–प्रातिवेश्मिकनृपा यस्य स तथा, दुर्बलप्रत्यवमित्रो वा दुर्बलानामकारणवत्सल इत्यर्थः। एव–भूतः सन् राज्यं प्रशासन् विहरत्यवतिष्ठते इति योगः। कथंभूतं राज्यम्? इत्याह–'ओहयकंटयं'ति। उपहता–विनाशिताः कण्टकाः–प्रतिस्पर्द्धिगोत्रजा यत्र राज्ये तत्तथा, क्रियाविशेषणमिदं वा। यद्वा–अपहताः–अवकाशोऽनासादनेन स्थगिताः कण्टका–देशोपद्रवकारिणश्चरटा यस्मिन् तत्तथा। 'मलिअकंटयं'ति। मलिता म्लानिमापादिताः कण्टका–उपद्रवकारिणो यस्मिन् तत्तथा। 'उद्धिअकंटयं'ति। उद्धृताः–स्वदेशत्याजनेन जीवितत्याजनेन वा कण्टकाः–प्रागुक्ता यत्र तत्तथा। 'अप्पडिकंटयं'ति। न विद्यते प्रतिमल्लः कण्टको यत्र तदप्रतिकण्टकं तथा। 'ओहयसत्तुं'ति। उपहताः–स्वावकोशमलममानीकृताः शत्रवः प्रत्यनीकराजानो यत्र तत्तथा। 'निहयसत्तुं'–निहता-रणाङ्गणे पातिताः शत्रवो यत्र तत्तथा। 'मलिअसत्तुं'ति। मलिताः–तद्गतसैन्यत्रासापादनेन म्लानिमापादिताः शत्रवो यत्र तत्तथा। 'उद्धिअसत्तुं'ति उद्धृताः–स्वातन्त्र्यच्यावनेन स्वदेशच्यावनेन वा जीवितच्यावनेन वा शत्रवो यत्र तत्तथा। अत एव 'निज्जिअसत्तुं पराजिअसत्तुं'ति। विशेषणद्वयं सफलं। तथा 'ववगयदुब्भिक्खदोसमारि भयविप्पमुक्कं'ति। व्यपगतदुर्भिक्ष दोषो मारिश्च यत्र तत्तथा। 'भयविप्पमुक्कं'ति। भयेन–स्वदेशोत्थेन परचक्रकृतेन वा विप्रमुक्तं, अत एव क्षेमं–निरुपद्रवं शिवं–शान्तं सुभिक्षं–शोभना भिक्षा दर्शनिनां दीनाऽनाथादीनां च यत्र तत्तथा।

'पसंतडिंबडमरं'ति । प्रशान्तानि डिम्बानि–विघ्नाः डमराणि च–राजकुमारादिकृतविड्वरा यत्र तत्तथा । एवंविधं राज्यं प्रशासन् जितशत्रुराजा विहरतीति राजवर्णकः ।

अथ धारिणीदेव्या वर्णकमाह–'तस्स णं जिअसत्तुस्स रण्णो धारिणी नाम देवी होत्था । सुकुमालपाणिपाया अहीणपडिपुण्णपंचिंदिअसरीरा लक्खणवंजणगुणोववेआ माणुम्माणपमाणपडिपुण्णसुजायसव्वंगसुंदरंगी ससिसोमागारकंतपिअदंसणा सुरूवा करयलपरिमिअपसत्थतिवलितवलिअमज्झा कुंडलुल्लिहिअपीणगंडलेहा कोमुईरयणिकरविमलपडिपुण्णसोमवयणा सिंगारागारचारुवेसा संगयगयहसिअभणिअचिट्ठिअविलाससललिअसंलावनिउणजुत्तोवयारकुसला सुंदरथणजहणवयणकरचरणणयणलावण्णविलासकलिआ जिअसत्तुणा रण्णा सद्धिं अणुरत्ता अविरत्ता इट्ठे सद्दफरिसरसरूवगंधे पंचविहे माणुस्सए कामभोगे पच्चणुभवमाणी विहरति'त्ति ।

अस्यार्थः तस्यानन्तरोपवर्णितस्वरूपस्य जितशत्रो राज्ञः नाम्ना धारिणी देवी अभवत् । सा च किंलक्षणा ? 'सुकुमालपाणिपाय'त्ति । सुकुमारौ पाणी पादौ च यस्याः सा तथा । 'अहीणपडिपुण्णपंचिंदिअसरीर'त्ति । अहीनानि–अन्यूनानि स्वरूपतः, प्रतिपूर्णानि लक्षणतः, पञ्चापीन्द्रियाणि यस्मिन् एवंविधं शरीरं यस्याः सा तथा । 'लक्खणवंजणगुणोववेअ'त्ति । लक्षणानि–स्वस्तिकचक्रादीनि, व्यञ्जनानि–मषीतिलकादीनि, गुणाः सौभाग्यादयस्तैरुपेता या सा तथा । 'माणुम्माणपमाणपडिपुण्णसुजायसव्वंगसुंदरंगि'त्ति । तत्र मानं–जलद्रोणप्रमाणता । तत्कथम् ? इति चेत् । उच्यते–जलेनाऽतिभृते कुण्डे स्त्रिया निवेशितायां यज्जलं निस्सरति तद्यदि द्रोणप्रमाणं स्यात् तदा सा स्त्री मानप्राप्तेत्युच्यते । उन्मानम्–अर्धभारप्रमाणता, सा चैवं–तुलायामारोपिता स्त्री यद्यर्द्धभारं तुलति तदा सोन्मानप्राप्तेति । तत्र भारप्रमाणं त्वेवं

षट्सर्षपैर्यवस्त्वेको गुञ्जैका च यवैस्त्रिभिः । गुञ्जात्रयेण वल्लः स्याद् गद्याणे ते च षोडश ॥१॥
पले च दशगद्याणास्तेषां सार्द्धशतं मणे । मणैर्दशभिरेका च धटिका कथिता बुधैः ॥२॥

धटीभिर्दशभिस्ताभिरेको भारः प्रकीर्तितः । इति । तथा प्रमाण–स्वाङ्गुलेनाष्टोत्तरशतोच्छ्रयत्ता, ततो मानोन्मानप्रमाणैः प्रतिपूर्णानि–अन्यूनानि सुजातानि–जन्मदोषरहितानि सर्वाण्यङ्गानि–शिरःप्रभृतीनि तैः सुन्दराङ्गी । तथा 'ससिसोमागारकंतपिअदंसण'त्ति । शशिवत्सौम्याकारं, कान्तं–कमनीयमत एव प्रिय–द्रष्टृणामानन्दोत्पादकं दर्शन–रूपं यस्याः सा तथा । अत एव सुरूपा । 'करतलपरिमिअपसत्थतिवलिअवलिअमज्झ'त्ति । करतलपरिमितो–मुष्टिग्राह्यः प्रशस्तलक्षणोपेतस्त्रिवलिको–वलित्रयरूपरेखात्रयोपेतो वलिको–बलवान् मध्यो–मध्यभागो यस्याः सो तथा । तथा 'कुंडलुल्लिहिअपीणगंडलेह'त्ति । कुण्डलाभ्यामुल्लिखिता गण्डलेखा–कपोलपत्रवल्ल्यो यस्याः सा तथा । 'कोमुईरयणिअरविमलपडिपुण्णसोमवयण'त्ति । कौमुदी कार्तिकीपूर्णिमा तस्या रजनीकरश्चन्द्रस्तद्वद्विमलं–निर्मलं, प्रतिपूर्णम्–अन्यूनातिरिक्तमानं सौम्यम्–अरुद्राकारं वदनं यस्याः सा तथा । 'सिंगारागारचारुवेस'त्ति । शृङ्गारस्य रसविशेषस्याऽगारमिवाऽगारं, यद्वा–शृङ्गारो–मण्डनभूषणाटोपस्तत्प्रधान आकार–आकृतिर्यस्याः सा तत्तथा । ततः कर्मधारयः । शृङ्गाराकारचारुवेषा । तथा 'संगयगयहसिअभणिअचिट्ठिअविलाससललिअसंलावनिउण

जुत्तोवयारकुसल 'त्ति। सङ्गता ये गतहसितभणितचेष्टितविलासललितसंलापा निपुणो युक्तश्च यः स्वजनपरजनान् प्रत्युपचारः तेषु कुशला या सा तथा। तत्र सङ्गतं गत-यत् गुप्ततया गृहस्यैवान्तर्गमनं न तु बहिः स्वेच्छाचारितया, सङ्गतं हसितं-यत्कपोलविकाशमात्रसूचितं न त्वट्टहासादि 'हसिअं कवोल-कहिअं'ति वचनात्, सङ्गत भणितं-यत्समागते प्रयोजने नर्मभणितिपरिहारेण विवक्षितार्थमात्रप्रतिपादनं. सङ्गतं-चेष्टितं यत्कुचजघनाद्यवयवाच्छादनपरतयोपवेशनशयनोत्थानादि, सङ्गतो विलासः-स्वकुलौचित्येन शृङ्गारादिकरणम्। तथा 'सुंदरथणजहणवयणकरचरणणयणलावण्णविलासकलिअ'त्ति। सुन्दरैः स्तनजघन-वदनकरचरणनयनलावण्यविलासैः कलिता या सा तथा। अत्र विलासः-स्थानासनगमनादिरूपचेष्टा-विशेषः। यदुक्तं

'स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव। उत्पद्यते विशेषो यः श्लिष्टोऽसौ विलासः स्यात् ॥१॥

अन्ये त्वाहुः विलासो नेत्रजो विकारः। तथा चोक्तं

'हावो मुखविकारः स्याद् भावश्चित्तसमुद्भवः। विलासो नेत्रजो ज्ञेयो विभ्रमो भ्रूसमुद्भवः ॥१॥ इति।

तथा ' जिअसत्तुणा रण्णा सद्धिं अणुरत्ता अविरत्ता इट्ठे सद्दफरिसरसरूवगंधे पंचविहे माणुस्सए कामभोगे पच्चणुभवमाणी विहरति'त्ति। तत्रानुरक्ता-राजाभिप्रायचारिणी अकृत्रिमस्नेहवती, अत एवाऽविरक्ता-विप्रियेऽपि न विरक्ततां गता, एवंरूपा सती जितशत्रुणा राज्ञा सार्द्धं शब्दस्पर्शरस-रूपगन्धान् इष्टान्-अभिलषितान् पञ्चविधान् मानुष्यकान् कामभोगान् प्रत्यनुभवन्तो विहरत्यास्ते इति धारिणीदेवीवर्णकः।

अथैवं सति किं जातम् ? इत्याह

## ते णं काले णं ते णं समए णं सामी समोसढे।

व्याख्या 'ते णं काले णमि'त्यादि। यस्मिन् काले यस्मिन् समये व्यावर्णितस्वरूपा नगर्या-दयः षट् पदार्था अभवन् तस्मिन् काले तस्मिन् समये। णमित्यलङ्कारे। स्वामी-जगद्गुरुर्भगवान् श्रीमहावीरोऽर्हन् सर्वज्ञः सर्वदर्शी सप्तहस्तशरीरप्रमाणोच्छ्रयः समचतुरस्रसंस्थानो वज्रर्षभनाराचसंहनन कज्जलप्रतिमकालिमोपेतस्निग्धकुञ्चितप्रदक्षिणावर्त्तमूर्धज उत्तप्ततपनीयाभिरामकेशान्तकेशभूमिः आत-पत्राकारोत्तमाङ्गसन्निवेशः परिपूर्णशशाङ्कमण्डलादप्यधिकतरवदनशोभः पद्मोत्पलसुरभिगन्धनिःश्वासो वदन-त्रिभागप्रमाणकम्बूपमचारुकन्धरः सिंहशार्दूलवत्परिपूर्णविमलस्कन्धप्रदेशः महापुरकपाटपृथुलवक्षःस्थलाभोगः यथावस्थितलक्षणोपेतश्रीवत्सः परिघोपमप्रलम्बबाहुयुगलो रविशशिचक्रसौवस्तिकादिप्रशस्तलक्षणोपेत-पाणितलः सुजातपार्श्वः झषोदरः सूर्यकरस्पर्शजातविकाशपद्मोपमनाभिमण्डलः सिंहवत्संवर्त्तितकटी-प्रदेशः निगूढजानुः कुरुविन्दवृत्तजङ्घायुगलः सुप्रतिष्ठितकूर्मचारुचरणः प्रशस्तलक्षणाङ्कितचरणतलप्रदेशः अनास्रवो निर्ममश्छिन्नश्रोताः निरुपलेपोऽपगतप्रेमरागद्वेषः चतुस्त्रिंशदतिशयोपेतः देवोपनीतेषु नवसु कनककमलेषु पादन्यास कुर्वन् आकाशगतेन धर्मचक्रेण, आकाशगतेन छत्रेण, आकाशगताभ्यां चाम-

राम्यां, आकाशगतेनातिस्वच्छस्फटिकविशेषमयेन सपादपीठेन सिंहासनेन, पुरतो देवैः प्रकृष्यमाणेन प्रकृष्यमाणेन धर्मध्वजेन चतुर्दशभिः श्रमणसहस्रैः, षट्त्रिंशत्सङ्ख्याकैरार्यासहस्रैः, अनेकदेवकोटिभिः परिवृतः सुखंसुखेन ग्रामानुग्रामं विहरन् मिथिलायां नगर्यां माणिभद्रचैत्ये यत्रैवाशोकवरपादपस्याधोभागवर्ती पृथिवीशिलापट्टकस्तत्र समवसृतः—साध्वादिसमुदायेन सह तत्र स्थितवान्। तत्र भगवत' साधूनां गुणविशेषकृताया विचित्रताया वर्णनं त्वेवम्

'ते णं काले ण ते णं समए णं समणस्स भगवओ महावीरस्स बहवे समणा भगवंतो-अप्पेगइआ उग्गपव्वइआ भोगपव्वइआ राइण्णा णातकोरव्वखत्तिआपव्वइआ भडा—चारभटा इत्यर्थः। जोहा—सहस्रयोधादयः सेणावई पसत्थारो-प्रशास्तारो धर्मशास्त्रपाठकाः। सेट्ठी इब्भा अण्णे य बहवे एवमाइणो उत्तमजाइकुलरूवविणयविण्णाणवण्णविक्कमपहाणसोहग्गकंतिजुत्ता बहुधणधण्णणिचयपरिवारफिडिआ—बहुधनधान्यनिचयपरिवारेभ्यः 'फिडिअ' त्ति। पृथग्भूताः सर्वसङ्गत्यागिन—इत्यर्थः। णरवइगुणाइरेगो—नरपतिभ्यो विभवसुखादिनातिशायिनः, इच्छिअभोगसुहसंपललिआ—ईप्सितभोगसुखेन सम्प्रललिताः प्रकटिताः, किंवागफलोवमं च मुणिअविसयसोक्खं जलबुब्बुअसमाणं कुसग्गजलबिंदुचंचलं जीविअं च णाऊण अधुवमिणं रयमिव पडलग्गं संविधुणित्ताणं चइत्ता हिरण्णं जाव पव्वइआ, अप्पेगइआ अद्धमासपरिआगा, अप्पेगइआ मासपरिआगा, एवं दुमासतिमासचउमास जाव इक्कारस, अप्पेगइआ बारसमासपरिआगा, दुवासतिवासपरिआगा, अप्पेगइआ अणेगवासपरिआगा संजमेणं तवसा अप्पाणं भावेमाणा विहरंति'।

'ते ण काले णं ते णं समए णं समणस्स० अंतेवासी बहवे निग्गंथा भगवंतो अप्पेगइआ आभिणिबोहिअणाणी जाव केवलणाणी'। 'अप्पेगइआ मणबलिआ' मनोबलिका मानसावष्टम्भवन्तः, 'जाव कायबलिअ' त्ति। यावत्कायबलिका'—क्षुधादिपरीषहैरग्लानीभवत्काया यावत्करणात् वाग्बलिकाः—प्रतिज्ञातार्थनिर्वाहकाः—परपक्षक्षोभकारिवचना वा। 'अप्पेगइआ मणेणं सावाणुग्गहसमत्था' मनसैव परेषां शापानुग्रहावपकारोपकारौ कर्तुं समर्थाः। 'अप्पेगइआ खेलोसहिपत्ता' खेलो—निष्ठीवनं स एवौषधिः सकलरोगाद्यनर्थोपशमहेतुत्वात् खेलौषधिस्ता प्राप्ताः। एव 'जल्लोसहि० विप्पोसहि० आमोसहि० सव्वोसहि०' एव प्रागुक्तवन्। नवरं जल्लो—मल', विप्रुषः—प्रस्रवणादिबिन्दवः। अथवा 'वि' इति विष्ठा 'प्र' इति प्रस्रवणं ते एवौषधी इति। आमर्षणमामर्षो—हस्तादिसस्पर्शे, सर्वे खेलजल्लविप्रुट्केशरोमनखादयः। 'अप्पेगइआ कोट्ठबुद्धी' कोष्ठवत् सूत्रार्थधान्यस्याविनाशेनाऽऽजन्मधरणसमर्था बुद्धिः सा येषामिति। 'अप्पेगइआ बीअबुद्धी' बीजमिव विविधार्थाधिगममहातरुजननसमर्था बुद्धिर्येषां ते तथा। 'पडबुद्धो' पटवत् वक्तृविसृष्टविविधप्रभूतसूत्रार्थपुष्पफलग्रहणसमर्था बुद्धिर्येषां ते तथा, 'अप्पेगइआ पयाणुसारी' पदेन सूत्रावयवेनैकेनोपलब्धेन तदनुकूलानि पदशतान्यनुसरन्ति—अभ्यूहयन्तीत्येवंशीला' पदानुसारिणः। 'अप्पेगइआ संभिन्नसोता' सम्भिन्नान् शब्दान् पृथग् युगपत् शृण्वन्तीति सम्भिन्नश्रोतारः। 'अप्पेगइआ खीरासवा' क्षीरवत् मधुरत्वेन श्रोतॄणां कर्णमनःसुखकरं वचनमास्रवन्ति—क्षरन्ति ये ते क्षीरास्रवा'। 'अप्पेगइआ महुआसवा' 'अप्पेगइआ सप्पिआसवा' 'अप्पेगइओ अक्खीणमहाणसिआ' महानसम्—अन्नपाकस्थान

तदाश्रितत्वात् शेद्धान्नमपि महानसमुच्यते, ततश्चाक्षीणं पुरुषशतसहस्रेभ्योऽपि दीयमानं स्वयमेव भुक्तं च सत् तथाविधलब्धिविशेषादत्रुटितं तच्च तत् महानसं च भिक्षालब्धं भोजनमक्षीणमहानसं तदस्ति येषामित्यर्थः। 'अप्पेगइआ उज्जुमती' 'अप्पेगइआ विउलमई' 'अप्पेगइआ विउव्वणिड्ढिपत्ता' विकुर्वणा-वैक्रियकरणलब्धिः सैव ऋद्धिस्तां प्राप्ताः। 'अप्पेगइआ जंघाचारणा' 'अप्पेगइआ विज्जाहरा आगासातिवाई' आकाशमापतन्त्यतिक्रामन्तीत्येवंशीलाः। यद्वा-आकाशात् हिरण्यवृष्ट्यादिकमिष्टमनिष्टं चातिशयेन पातयन्तीत्येवंशीलाः आकाशातिपातिनः, 'अप्पेगइआ कणगावलीतवोकम्मं पडिवण्णा'। एवं 'एकावली खुड्डाग सीहनिकीलिअं तवोकम्मं पडिवण्णा महालयं सीहनिकीलिअं तवोकम्मं पडिवण्णा' यावत् 'संजमेण तवसा अप्पाणं भावेमाणा विहरंति'त्ति।

अथ तत्र देवादीनामागमनं यथा-'ते णं काले णं ते णं समए णं समणस्स भगवओ महावीरस्स वहवे असुरकुमारा देवा अंतिअं पाउब्भवित्था जाव तिविहाए पजलिउडा पज्जुवासंति'। ते णं काले णं ते णं समए णं वहवे असुरिंदवज्जिआ भवणवासी देवा अंतिअं पाउब्भवित्था नागवइणो सुवण्णा विज्जू अग्गीआ दीवा उदही दिसाकुमारा पवण थणिआ जाव महिड्ढिआ जाव पज्जुवासंति। ते णं काले णं ते णं समए णं वहवे वाणमंतरा देवा अंतिअं पाउब्भवित्था पिसाया भूआ य जक्ख रक्खस किंनर किंपुरिस भुजगवइणो अ महाकाया गंधव्वणिकायगणा णिउणगंधव्वगीअरइणो अणपण्णीअ पणपण्णीअ इसिवाईअ भूअवाईअ कंदीअ महाकंदीअ कोहंडे पयए अ जाव महिड्ढिआ जाव पज्जुवासंति। ते णं काले णं ते णं समए णं समणस्स भगवओ महावीरस्स जोइसिआ देवा अंतिअं पाउब्भवित्था विहप्फइ चंद सूर सुक्क सनिच्छरा राहू धूमकेऊ बुहा य अंगारगा य तत्ततवणिज्जकणगवण्णा जे अ गहा जोइसंमि चारं चरंति केऊ अ गइरइआ अट्ठावीसतिविहा य णक्खत्ता देवगणा णाणासंठाणसंठिआओ अ पंचवण्णाओ ताराओ जाव महिड्ढिआ जाव पज्जुवासंति। ते णं काले णं ते णं समए णं समणस्स भगवतो महावीरस्स वेमाणिआ देवा अंतिअं पाउब्भवित्था सोहम्मीसाणसणंकुमारमाहिंदबंभलंतगमहासुक्कसहस्साराणयपाणयारणाच्चुअवई पहिट्ठा देवा जिणदंसणुस्सगा जाव उत्तमविउव्विणो विविहवत्थगंधधरा महिड्ढिआ महज्जुइआ जाव पजलिउडा पज्जुवासंति' इत्यादिस्वरूपेण असुरकुमाराः शेषभवनपतयो व्यन्तरा ज्योतिष्काः वैमानिकाश्च देवा भगवतः समीपमागच्छन्तो वर्णयितव्याः।

अथ तस्मिन्नवसरे किं जातम्? इति प्रकृतसूत्रमाह

## परिसा णिग्गया।

'परिसा णिग्गय'त्ति। पर्षद्-मिथिलानगरीवास्तव्यः समस्तोऽपि लोको भगवन्तमागतं श्रुत्वा भगवद्वन्दनार्थं स्वस्मादाश्रयात् विनिर्गत इत्यर्थः। तन्निर्गमश्चैवं-'तए णं मिथिलाणयरीए सिंघाडगतिगचउक्कचच्चरचउम्मुहमहापहेसु वहुजणो अण्णमण्णस्स एवमाइक्खइ एवं भासइ एवं पण्णवेइ एवं परूवेइ-एवं खलु देवाणुप्पिआ! समणे भगवं महावीरे आदिकरे तित्थगरे जाव सव्वण्णू सव्वदरिसी आगासगएणं छत्तेणं जाव सुहंसुहेण विहरमाणे इहमागए इह समोसढे इहेव मिहिलाए णयरीए

बहिआ माणिभद्दे चेइए अहापाडिरूवं उग्गहं ओगिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरति'। अत्र आख्याति सामान्येन, भाषते-विशेषतः, प्रज्ञापयति-व्यक्तपर्यायवचनतः, प्ररूपयति-उपपत्तित-इति। तत्र लोकोक्तिरेवं-'तं महाफलं भो देवाणुप्पिआ! तहारूवाणं अरहंताणं भगवंताणं नामगोत्तस्स वि सवणयाए किमंग पुण अभिगमणवंदणनमंसणपडिपुच्छणपज्जुवासणयाए। तं सेअं खलु एगस्स वि आयरिअस्स धम्मिअस्स सुवयणस्स सवणयाए किमंग पुण विउलस्स अट्ठस्स गहणयाए। त गच्छामो णं देवाणुप्पिआ! समणं भगवं महावीरं वंदामो नमंसामो सक्कारेमो सम्माणेमो कल्लाणं मंगलं देवयं चेइअं पज्जुवासामो एअं णो' एतन्नोऽस्माकमित्यर्थः। 'इहभवे परभवे अ हिआए सुहाए खमाए निस्सेअसाए आणुगामिअत्ताए भविस्सति'त्ति। तत्र हितम्—अदोषकरमिह परत्र चात्मनः परेषां च पथ्यान्नभोजनवत्, सुखम्—आनन्दस्तृपितस्य शीतलजलपानमिव, क्षमम्—उचितं तथाविधव्याधिव्याघातकौषधपानमिव, निःश्रेयसं—निश्चितं श्रेयः प्रशस्यं भावतः पञ्चनमस्कारकरणमिव, आनुगामिकम्—अनुगमनशील भास्वरद्रव्यजनितच्छायेव भविष्यतीति कृत्वा 'बहवे उग्गा उग्गपुत्ता भोगा भोगपुत्ता एवं दुपडोआरेणं राइण्णा खत्तिआ माहणा भडा जोहा पसत्थारो मल्लइ लेच्छइपुत्ता अण्णे अ बहवे राईसरतलवरमाडंबिअकोडुंबिअइब्भसेट्ठिसेणावइसत्थवाहप्पभितओ अप्पेगइआ वंदणवत्तिअं अप्पेगइआ पूअणवत्तिअ एवं सक्कारवत्तिअं सम्माणवत्तिअं कोऊहलवत्तिअ अस्सुआइं सुणेस्सामो सुआइं निस्संकिआइ करिस्सामो मुंडे भवित्ता अगाराओ अणगारिअं पव्वइस्सामो पंचाणुव्वइअं सत्तसिक्खावइअं दुवालसविहं गिहिधम्मं पडिवज्जिस्सामो 'अप्पेगइआ जिणभत्तिरागेण' 'अप्पेगइआ जीअमेअं ति कट्टु ण्हाया कयबलिकम्मा कयकोउअमंगलपायच्छित्ता सव्वालंकारविभूसिआ पवरवत्थपरिहिआ चंदणोवलित्तगत्ता' 'अप्पेगइआ हयगया गयगया रहगया सिविआगया संदमाणिआगया' 'अप्पेगइआ पादविहारचारिणो पुरिसवग्गुरापरिक्खित्ता' वागुरा-मृगबन्धस्थान, पुरुषा वागुरेव सर्वतोऽवस्थानात् पुरुषवागुरा तया परिक्षिप्ताः, 'महया उक्किट्ठिसीहणायबोलकलकलरवेणं पक्खुब्भिअमहासमुद्दरवभूअं पिव करेमाणा' महता रवेणेति योगः, उत्कृष्टिश्चानन्दध्वनिः, सिंहनादश्च प्रतीतः, बोलश्चाव्यक्तो ध्वनिः। कलकलश्च व्यक्तवचनो ध्वनिः, एतल्लक्षणो यो रवस्तेन प्रक्षुभितमहाजलधिघोषप्राप्तमिव तन्मयं नगरं विदधाना इत्यर्थः। मिथिलाए नयरीए मज्झंमज्झेणं णिग्गच्छति, णिग्गच्छित्ता जेणेव माणिभद्दे चेइए तेणेव उवागच्छंति, उवागच्छित्ता समणस्स भगवतो महावीरस्स अदूरसामंते छत्ताईए तित्थयरातिसेसे पासंति पासित्ता जाणवाहणाइ ठावेंति, ठावेत्ता जाणवाहणाहितो पच्चोरुहति, पच्चोरुहित्ता जेणेव समणे भगव महावीरे तेणेव उवागच्छंति, उवागच्छित्ता एगसाडिअं उत्तरासंगं करेंति, करेत्ता समण भगव महावीरं तिक्खुत्तो आयाहिणं पयाहिणं, करेंति करेत्ता वंदति नमसति वंदित्ता नमंसित्ता णच्च सन्ने नाइदूरे सुस्सूसमाणा अभिमुहा विणएणं पजलिउडा पज्जुवासंति'त्ति। 'तए णं से जिअसत्तू राया बलवाउअ'—बलव्यापृतं सैन्यव्यापारपरायणमित्यर्थः, 'आमंतेइ, आमंतइत्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिआ! आभिसेक्कं हत्थिरयणं पडिकप्पेहि हयगयरहपवरजोहकलिअं चाउरंगिणिं सेणं च सण्णाहेहि'त्ति इत्यादि यावत्—'मिथिलाए णयरीए मज्झंमज्झेणं णिग्गच्छइ, णिग्गच्छित्ता जेणेव माणिभद्दे चेइए तेणेव उवागच्छइ, उवागच्छित्ता' यावत् 'हत्थिरयणं ठवेइ ठवेत्ता हत्थिरयणाओ पच्चोरुहइ, पच्चोरुहित्ता अवहट्टु रायककुहाइं, तं० खग्गं १ छत्तं २ उप्फेसं ३—'मुकुटमित्यर्थ., वाहणाओ ४ वालवीअ-

णिज्जं ५, जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ, उवागच्छित्ता समणं भगवं महावीरं पंचविहेण अभिगमेण अभिगच्छइ। तं जहा–सचित्ताणं दव्वाणं विउसरणयाए १, अचित्ताणं दव्वाणं अविउसरणयाए २, एगसाडिअं उत्तरासंगकरणयाए ३, चक्खुप्फासे अंजलिपग्गहेण ४, मणसा एगत्तीभावकरणेणं ५, समणं भगवं महावीरं तिक्खुत्तो आयाहिणं पयाहिणं करेइ वंदइ नमसइ वंदित्ता नमंसित्ता तिविहाए पज्जुवासणाए पज्जुवासइ, तं० काइयाए १, वाइयाए २, माणसिआए ३। काइआए ताव संकुचिअग्गहत्थपाए सुस्सूसमाणे णमंसमाणे अभिमुहे विणएणं पंजलिउडे पज्जुवासइ, वाइआए जं जं भावं भगवं वागरेति एवमेअं भंते! तहमेअं भंते! अवितहमेअं भंते! असंदिद्धमेअं भंते! इच्छिअमेअं भंते! पडिच्छिअमेअं भंते! इच्छिअपडिच्छिअमेअं भंते! से जहेअं तुब्भे वदह अपडिकूलमाणे पज्जुवासइ, माणसिआए महया संवेगं जणइत्ता तिव्वधम्माणुरागरत्तेण पज्जुवासइ' इत्यादि कोणिकराजवर्णकवद्वर्णनमौपपातिकोक्तं वक्तव्यम्। ततो धारिणीप्रमुखदेव्योऽन्तःपुरान्तः स्नाताः यावत् सर्वालङ्कारविभूषिताः बर्बरादिदेशोत्पन्नाभिः स्वस्वदेशनेपथ्यधारिणीभिरिङ्गितचिन्तितप्रार्थितविज्ञात्रीभिः कुब्जवामनाकारादिधारिणीभिर्दासीभिरन्तःपुररक्षकैः कञ्चुकिभिश्च परिक्षिप्ता अन्तःपुरान्निर्गच्छन्ति, निर्गत्य यत्र प्रत्येकं यानानि तत्रोपागत्यारोहन्ति, मिथिलाया नगर्या मध्यमध्येन निर्गच्छन्ति, निर्गत्य यत्रैव माणिभद्रं चैत्यं तत्रैवोपागत्य यावत् श्रमणं भगवन्तं श्रीमहावीरं त्रिः प्रदक्षिणीकृत्य वन्दित्वा नमंस्यित्वा च जितशत्रुराजानं पुरस्कृत्य स्थिताः सपरिवारा अभिमुख्यो विनयेन प्राञ्जलिपुटाः पर्युपासते।

अथैवं जितशत्रौ राज्ञो धारिणीप्रभृतीनां देवीनां, उक्तस्वरूपस्य साधुवृन्दस्य भवनपत्याद्यनेकदेवदेवीवृन्दानां तदधीशानां च सम्बन्धिन्या अतिमहत्याः पर्षदो मध्यस्थितेन भगवता किं कृतम्? इति प्रकृतसूत्रमाह

## धम्मो कहिओ त्ति।

'धम्मो कहिओ त्ति' धर्मः कथितः तस्याः पर्षदः पुरतो निश्शेषजनभाषानुयायिन्या अर्धमागधभाषया धर्म उपदिष्टः। स चैवम्–'अत्थि लोए, अत्थि अलोए' एवं 'जीवा अजीवा बंधे मोक्खे पुण्णे पावे आसवे संवरे वेअणा निज्जरा अरहंता चक्कवट्टी बलदेवा वासुदेवा' इत्यादि यावत्–'मिच्छादंसणसल्लवेरमणे विवेगे सव्वं अत्थिभावं अत्थि त्ति वदति' यावत्–'इणमेव निग्गंथे पावयणे सच्चे–सद्भ्यो हितं सत्यं, 'अणुत्तरे'–नेतः प्रधानतरमन्यदस्ति, 'केवलिए' 'पडिपुण्णे'–प्रतिपूर्णं अल्पग्रन्थत्वमहार्थत्वादिगुणैः 'संसुद्धे' संशुद्धं–कषायादिरहितं 'सुद्धे' शुद्धं–सुवर्णमिव निर्दोषं 'णेआउए' नैयायिकं–न्यायानुगतं प्रमाणाबाधितमित्यर्थः 'सल्लगत्तणे सिद्धिमग्गे मुत्तिमग्गे निव्वाणमग्गे निज्जाणमग्गे' 'अवितहमविसंधि' अवितथं–सद्भूतार्थम् अविसंधि–अविरुद्धपूर्वापरघटनं 'सव्वदुक्खप्पहीणमग्गे इत्थ ठिआ जीवा सिज्झंति बुज्झंति मुच्चंति परिणिव्वायंति सव्वदुक्खाणमंतं करेंति त्ति' इत्यादिरूपमेवंदेशनां श्रुत्वा पर्षत् किं कृतवती? इत्याह–'परिस'त्ति। पर्षत् प्रतिगता–यस्याः दिशः सकाशात् समवसरणे समागता तामेव दिशं प्रतिगतेत्यर्थः। तत् प्रतिगमस्त्वेवं वाच्यः–'तते णं सा महतिमहालिआ'–महातिमहती महत्या अप्यतिमहती–अतिगरीयसीत्यर्थः सैव महातिमहालिआ।

आलियप्रत्ययस्य स्वार्थिकत्वात् 'मणूसपरिसा समणस्स भगवओ महावीरस्सो अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठ जाव हिअया 'उट्ठाए उट्ठेति' उत्थानमुत्था तया उत्थया–कायस्योर्ध्वभवनेनोत्तिष्ठति। 'उट्ठित्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेति वंदति नमंसति वंदित्ता नमंसित्ता अप्पेगइआ मुंडे भवित्ता अगाराओ अणगारिअं पव्वइआ, अप्पेगइआ पंचाणुव्वइअं सत्तसिक्खावइअं दुवालसविहं गिहिधम्मं पडिवण्णा, अवसेसा ण परिसा समणं भगवं महावीरं वंदइ णमंसइ वंदित्ता णमंसित्ता एव वयासी-सुअक्खाए ण भंते! निग्गंथे पावयणे एवं सुपण्णत्ते सुभासिते सुविणीए सुभाविए'–सुविनीते शिष्ये सुष्ठु भावितं तत्त्वमणनात्। 'अणुत्तरे णं भंते! निग्गंथे पावयणे धम्मे णं आइक्खमाणे उवसमं आइक्खह उवसमं आइक्खमाणे विवेगं आइक्खह'–विवेकं–बाह्यग्रन्थत्यागं 'विवेगं आइक्खमाणे वेरमणं आइक्खह, वेरमणं आइक्खमाणे अकरणं पावाणं आइक्खह, नत्थि णं अण्णे केइ समणे वा माहणे वा जे एरिसं धम्मं आइक्खित्तए, किमंग पुण एत्तो उत्तरतरं? एवं वदेत्ता जामेव दिसं पाउब्भूआ तामेव दिसं पडिगया'।

'तते णं जिअसत्तू राया समणस्स भगवओ महावीरस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठे जाव हिअए उट्ठाए उट्ठित्ता समणं भगवं महावीर तिक्खुत्तो जाव णमंसित्ता एवं वयासी–सुअक्खाए णं भंते! निग्गंथे जाव किमंग पुण एत्तो उत्तरतर? एवं वदित्ता जामेवं दिसं पाउब्भूए तामेव दिसं पडिगए एवं धारिणीपमुहाओ देवीओ वि पडिगयाओ'।

अथ पर्षदि विसर्जितायां श्रीगौतमो यथा पृष्टवान् तथा वक्तुकाम आह

**ते णं काले णं ते णं समए णं समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी इंदभूइ णामं अणगारे गोअमे गोत्तेणं सत्तुस्सेहे समचउरंसे जाव तिक्खुत्तो आयाहिणपयाहिणं करेति।**

'ते णं काले णमि'त्यादि। तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य पूर्वोक्तलक्षणस्य ज्येष्ठोऽन्तेवासी–शिष्यः। अनेन विशेषणद्वयेन गौतमस्य सकलसङ्घनायकत्वं दर्शितम्। 'इंदभूइ'त्ति। इन्द्रभूतिरिति मातापितृकृतनामधेयः। 'नामं'ति। विभक्तिपरिणामान्नाम्नेति द्रष्टव्यम्। अंतेवासी किल विवक्षया श्रावकोऽपि स्यादत आह–'अणगारे'त्ति। नाऽस्याऽगारं विद्यते इत्यनगार. साधुरित्यर्थः। एवंविधश्चावगीतगोत्रोऽपि स्यादत आह–'गोअमे गोत्तेणं'ति। गोत्रेण गौतमो गौतमगोत्र इत्यर्थ। ईदृशश्च तत्कालीनदेहापेक्षया न्यूनाधिकोऽपि स्यादत आह–'सत्तुस्सेहे'त्ति सप्तहस्तोच्छ्रयः। अयं च लक्षणहीनोऽपि स्यादत आह–'समचउरंस'त्ति। समाश्चतस्रोऽस्रयो यस्य शरीरे स समचतुरस्रः। अस्रयश्च पर्यङ्कासनोपविष्टस्य जानुनोरन्तरम् आसनललाटोपरिभागयोरन्तरं दक्षिणस्कन्धवामजानुनोरन्तरं वामस्कन्धदक्षिणजानुनोरन्तरं चेति। 'जाव तिक्खुत्तो'त्ति। यावत् त्रिःकृत्वाः–त्रीन् वारान् 'आयाहिणपयाहिणं'ति आदक्षिणाद्–दक्षिणहस्तादारभ्य प्रदक्षिणः–परितो भ्राम्यतो दक्षिण एव आदक्षिणप्रदक्षिणस्तं करोतीति। यावत्करणाद् इदं दृश्यं–'वज्जरिसहनारायसंघयणे कणगपुलगनियसपम्हगोरे उग्गतवे दित्ततवे तत्ततवे महातवे उराले घोरे घोरगुणे घोरतवस्सी घोरबंभचेरवासी उच्छूढसरीरे संखित्तविउलतेउलेस्से चोद्दसपुव्वी चउणाणोवगए सव्वक्खरसन्निवाई समणस्स भगवओ

महावीरस्स अदूरसामंते उड्ढं जाणू अहोसिरे झाणकोट्ठोवगए संजमेणं तवसा अप्पाणं भावेमाणे विहरति 'त्ति । तत्र समचतुरस्रसंस्थानसंस्थितः कश्चिद्धीनसंहननोऽपि स्यादत आह–'वज्जे 'त्यादि । वज्रर्षभनाराचसंहननः । संहननम्–अस्थिसञ्चयविशेषः । तत्र वज्रादीनां लक्षण त्वेवं

'रिसहो अ होइ पट्टो वज्जं पुण कीलिआ विआणाहि । उभओ मक्कडबंधं नाराय तं विआणाहि'॥१॥ त्ति ।

अयं च निन्द्यवर्णोपेतोऽपि स्यादत आह–'कणगपुलगनिघसपम्हगोरे 'त्ति । कनकस्य-सुवर्णस्य यः पुलको-लवस्तस्य यो निकषः–कषपट्टके रेखालक्षणः, तथा पद्मेति पद्मगर्भः–केसराणि तद्वद् गौरो यः स तथा । अय च विशिष्टचरणरहितोऽपि स्यादत आह–'उग्गतवे 'त्ति । उग्रम्–अप्रधृष्यं तपो–अनशनादि यस्य स उग्रतपाः–यदन्येन प्राकृतपुंसा चिन्तयितुमपि न शक्यते तद्विधेन तपसा युक्त इत्यर्थः । 'दित्ततवे 'त्ति । दीप्त–जाज्वल्यमानदहन इव कर्मवनगहनदहनसमर्थतया ज्वलित तपो–धर्मध्यानादि यस्य स तथा । 'तत्ततवे 'त्ति । तप्त तपो येन स तप्ततपाः । एव हि तेन तत्तपस्तप्तं येन कर्माणि सन्ताप्य पुनस्तेन तपसा स्वात्मापि तपोरूपः सन्तापितः यतो गौतमतात तपोऽन्यस्याऽस्पृश्यमिव जातमिति ।'महातवे 'त्ति । आशंसादिदोषरहितत्वात् प्रशस्ततपाः। 'उराले'त्ति । भीम–उग्रादिविशेषणविशिष्टतपःकरणात् पार्श्ववर्त्तिनामल्पसत्त्वाना भयानक इत्यर्थः । अन्ये त्वाहुः–उदारः–प्रधानः । 'घोरे 'त्ति । घोरो–निर्घृणः परीषहेन्द्रियरिपुगणविनाशमाश्रित्य निर्दय इत्यर्थः । अन्ये त्वात्मनि निरपेक्षं घोरमाहुः । 'घोरगुणे 'त्ति । घोरा–अन्यैर्दुरनुचरा गुणा–मूलगुणादयो यस्य स तथा । 'घोरतवस्सि 'त्ति । घोरतपोभिस्तपस्वीत्यर्थः । 'घोरबंभचेरवासी 'त्ति । घोरं–दारुणमल्पसत्त्वैर्दुरनुचरत्वात् यद् ब्रह्मचर्यं तत्र वस्तुं शील यस्य स तथा । 'उच्छूढसरीरे 'त्ति । उज्झितमिवोज्झितं शरीरं–देहो येन तत्संस्कारपरित्यागात् स तथा । 'संखित्तविउलतेउलेस्से 'त्ति । सङ्क्षिप्ता–शरीरान्तर्लीनत्वेन ह्रस्वता गता विपुला–विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात् तेजोलेश्या–विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा । 'चोद्दसपुव्वी 'ति । चतुर्दश पूर्वाणि विद्यन्ते यस्य तेनैव तेषां रचितत्वात् असौ चतुर्दशपूर्वी । अनेन तस्य श्रुतकेवलित्वं प्रतिपादितमिति । अयं चावधिज्ञानादिवैकल्येऽपि स्यादत आह–'चउणाणोवगए 'त्ति । केवलज्ञानवर्जज्ञानचतुष्टयसमन्वित इत्यर्थः । एवंविधोऽपि कश्चित् न समग्रश्रुतविषयव्यापिविज्ञानो भवति, चतुर्दशपूर्वविदामपि षट्स्थानपतितत्वात् । यदागमः

'ज चोद्दसपुव्वधरा छट्ठाणगया परोप्परं हुंति 'त्ति । तत आह–'सव्वक्खरसन्निवाई 'त्ति । सर्वे च तेऽक्षरसंनिपाताश्च तत्संयोगाः सर्वेषा वाऽक्षराणां सन्निपातास्ते ज्ञेयतया विद्यन्ते यस्य स तथा । यद्वा–श्राव्याणि–श्रवणसुखकारीणि अक्षराणि साङ्गत्येन नितरां वदितु शीलमस्य स श्राव्याक्षरसन्निवादी । स एवं गुणविशिष्टो भगवान् साक्षात् विनयराशिरिवेति कृत्वा शिष्याचारत्वाच्च भगवतो नातिदूरप्रत्यासन्नो विहरतीत्यतः 'समणस्स भगवओ महावीरस्स अदूरसामते ' श्रमणस्य भगवतो महावीरस्य दूरं च–विप्रकृष्ट सामन्त च–संनिकृष्टं तन्निषेधाददूरसामन्त तत्र नातिदूरे नातिनिकटे इत्यर्थः । 'उड्ढं जाणू' ऊर्ध्वं जानुनी यस्याऽसावूर्ध्वजानुः, शुद्धपृथिव्यासनवर्जनात् औपग्रहिकनिषद्याया अभावाच्चोत्कटासन इत्यर्थः । 'अहोसिरे ' अधोमुखः नोर्ध्वं तिर्यग् वा विक्षिप्तदृष्टिः किन्तु नियतभूभागनियमितदृष्टि 'झाणकोट्ठोवगए ' ध्यानं धर्म्यं शुक्लं वा तदेव कोष्ठस्तमुपागतः । यथाहि कोष्ठके धान्यं प्रक्षिप्तमविप्रसृत

स्यात् एवं भगवान् ध्यानतोऽप्रकीर्णेन्द्रियान्तःकरणप्रवृत्तिरिति । 'संजमेणं तवसा अप्पाणं भावेमाणे विहरतीति । 'तए णं से भगवं गोअमे जायसड्ढे' जाता—प्रवृत्ता श्रद्धा—इच्छा वक्ष्यमाणार्थतत्त्वज्ञानं प्रति यस्य स तथा, 'जायसंसए'त्ति । संशयोऽनवधारितार्थज्ञानम् । स च—'कहि णं भंते ! जंबुद्दीवे दीवे ?' इत्यादिवाक्यव्यञ्जितो वक्ष्यते स जातोऽस्येति, 'जायकोऊहले' जात कुतूहलं यस्य जम्बूद्वीपस्वरूपज्ञानाय कथ जम्बूद्वीपस्वरूप भगवान् प्रज्ञापयिष्यतीति जातौत्सुक्यः । उट्ठाए उट्ठेति उत्थानमुत्था—ऊर्ध्वं वर्त्तन तया उत्थया उत्तिष्ठति—ऊर्ध्वो भवति । उत्तिष्ठतीत्युक्ते क्रियारम्भमात्रमपि प्रतीयते यथा वक्तुमुत्तिष्ठते । अतस्तद्व्यवच्छेदार्थमुक्तमुत्थयेति । जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छित्ता समण भगवं महावीरमिति त्रिः प्रदक्षिणयतीति सम्बन्धः ।

अथ त्रिः प्रदक्षिणीकृत्य किं करोति ? इति दर्शयति

**आयाहिणपयाहिणं करेत्ता वंदइ णमंसइ वंदित्ता णमंसिता जाव एवं वयासि ।**

व्याख्या 'आयाहिणपयाहिणं करेत्ते' त्यादि । आदक्षिणप्रदक्षिणं कृत्वा 'वन्दते' वाचा स्तौति 'नमस्यति' कायेन प्रणमति । वन्दित्वा नमस्कृत्य च 'जाव एव वयासि'त्ति यावदेवं वक्ष्यमाणप्रकारं वस्तु अवादीत्—उक्तवान् प्रश्नविषयीकृतवानित्यर्थः । अत्र यावत्करणादिद दृश्यं 'णच्चासन्ने नाइदूरे' नैवात्यासन्नोऽतिनिकटः अवग्रहपरिहारात् नात्यासन्ने वा स्थाने वर्त्तमान इति गम्यं 'णातिदूरे' नैवातिविप्रकृष्टोऽनौचित्यपरिहारान् नातिदूरे वा स्थाने 'सुस्सूसमाणे' भगवद्वचनानि श्रोतुमिच्छन् 'अभिमुहे'—अभि भगवन्तमभिलक्षीकृत्य मुखमस्येति आभिमुखः 'विणएण' विनयेन हेतुना 'पजलिउडे' प्रकृष्टः—प्रधानो ललाटतटघटितत्वेनाञ्जलिर्हस्तन्यासविशेष' प्रतीतः कृतो—विहितो येन सोऽन्याहितादिदर्शनात्प्राञ्जलिकृतः 'पज्जुवासमाणो' पर्युपासीनः—सेवमानः । अनेन च विशेषणकदम्बकेन प्रागुक्तवर्णकविशिष्टस्य महतो गौतमस्य श्रवणविधेरुपदर्शनेनाऽन्येषामप्ययमेव श्रवणविधिरिति दर्शितम् । उक्तं च

'निद्दा—विगहापरिवज्जिएहि गुत्तेहि पंजलिउडेहिं । भत्तिबहुमाणपुव्वं उवउत्तेहिं सुणेअव्व'॥ इति ।

अथ गौतमोऽपि यदुक्तवान् तत्प्रश्नरूपमेव । प्रश्नश्च प्रायः संशये सत्येव सम्भवति । स च प्रकृते जम्बूद्वीपविषयक एव, तं चात्मनिष्ठमपि प्रश्नद्वारा चतुष्प्रकारमाविष्कुर्व्वन्नाह

**कहि णं भंते ! जंबुद्दीवे दीवे ?**
**केमहालए णं भंते ! जंबुद्दीवे दीवे ?**
**किंसंठिए णं भंते ! जंबुद्दीवे दीवे ?**
**किमायारभावपडोआरे णं भंते ! जंबुद्दीवे दीवे पण्णत्ते ? ।**

व्याख्या 'कहि णं भंते' इत्यादि । क—कस्मिन् णंकारोऽलङ्कारे अत्राऽन्यत्रापि च सूत्रेऽवसातव्यः । यत्तु क्वचित्पुनर्भणनं तत्स्मारणार्थं तृतीयैकवचनभ्रान्तिनिरासार्थं च यथास्थानमधिगन्तव्यम् । हे

भदन्त ! 'भदुङ् स्तुतिकल्याणयो' ' इति वचनात् हे परमकल्याणिन् ! जम्बूद्वीपः—जम्ब्वा सुदर्शन-जम्बूनाम्ना वृक्षेणोपलक्षितो द्वीपो जम्बूद्वीपः एतन्नाम्ना द्वोप इति । द्विधा गता आपोऽत्रेति द्वीपः पुल्लिंगः । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इति सूत्रेण समासान्ते सत्याप ईप् । स च कः प्रज्ञप्त ? इत्यनेन जम्बूद्वीप-स्यावस्थानं पृष्टं २ 'केमहालए णं ' इत्यादि । महान् आलय—आश्रयो व्याप्यक्षेत्ररूपो यस्य स तथा किमिति—कि प्रमाणं यस्येति किंप्रमाणः स चासौ महालयश्च किंप्रमाणमहालयः । प्रमाणशब्दस्येह सूत्रानुलोम्यात्लोपो द्रष्टव्यः । एतेन जम्बूद्वीपस्य प्रमाणं प्रश्नविषयीकृतं २ 'किंसठिए णमि 'त्यादि किं संस्थितं—संस्थानं यस्य स किंसंस्थितः । अनेन जम्बूद्वीपस्य संस्थानं पृष्टं ३ 'किमायारे'त्यादि । आकार-भावः—स्वरूपविशेष' कस्याकारभावस्य प्रत्यवतारो यस्य स किमाकारभावप्रत्यवतारः । धर्म्मे मतिर्यस्येत्यादि-वद्व्यधिकरणबहुव्रीहिः । अथवा आकारस्याऽऽकृतेर्भावाः—पर्यायास्तेषामवतारोऽवतरणमाविर्भावः—कः कीदृश आकारभावप्रत्यवतारो यस्य स तथा । यद्वा—आकाराश्च भावाश्च आकारभावाः जम्बूद्वीपस्वरूप तद्गतवर्ष—वर्षधर—जगत्यादिपदार्थाश्चेत्यर्थः । तेषामवतारः । शेष प्राग्वत् । अनेन कीदृशं जम्बूद्वीपस्वरूपं के च कियन्तः किंनामानश्च जगत्यादयोऽत्रैतत्सम्बन्धिनः पदार्थाः कथं वा तेषा पर्याया ? इत्यादि प्रश्नः प्रादुष्कृत । एतच्च—' से णं एगाए वयरामईए जगईए सव्वओ समंता संपरिक्खित्ते ' इत्यादिना वक्ष्यमाणं विज्ञेयम् ४ । ननु यदुक्तं प्रश्नश्च प्रायः संशये सति सम्भवति, संशयश्च ज्ञानचतुष्टयसमन्वितस्य श्रुत-बलेनापि प्रश्निताऽसङ्ख्येयभवनिर्णायकस्य श्रुतकेवलिनो गौतमस्याऽसम्भवी, सम्भवे वा श्रुतकेवलित्वव्या-हतिरिति चेत् ? मैवं, अनाभोगजन्यस्य संशयस्य श्रुतकेवलिनोऽपि सम्भवात् । यतोऽनाभोगो हि छद्मस्थ-मात्रस्य स्यात् यदुक्तं

'न हि नामाऽनाभोगः—छद्मस्थस्येह कस्यचिन्नास्ति । ज्ञानावरणीयं हि ज्ञानावरणप्रकृति कर्म्म ॥ इति । ततोऽनाभोगसम्भवादुपपद्यते भगवतो गौतमस्यापि संशयः । न चैतदनार्षं, यत उक्त उपासकदशासु आनन्दश्रमणोपासकावधिनिर्णयविषये—' तण्णं भंते ! किं आणंदेणं समणोवासएणं तस्स ठाणस्स आलोएअव्व जाव पडिवज्जिअव्वं उदाहु मए ? तते णं गोअमादी समणो भगव महावीरो गोअमं एवं वयासी गुम चेव ण तस्स ठाणस्स आलोएहि जाव पडिवज्जाहि आणंदं च समणोवासगं एअमट्ठ खामेहि । तए णं से भगवं गोअमे समणस्स भगवओ महावीरस्स अंतिए एअमट्ठं विणएण पडिसुणेइ पडिसुणेत्ता तस्स ठाणस्स आलोएति जाव पडिवज्जति आणंदं च समणोवासगं एअमट्ठं खामे-इ'त्ति । परं श्रुतकेवलिनो ह्यनाभोगः क्वचिदंशे कादाचित्क' छाद्मस्थ्यात्सम्भवन्नपि श्रुतानुपयोगादेव सम्भावनीयः, न पुनः प्रश्नविषयीभूतस्य ज्ञेयस्य वस्तुनो ज्ञानाऽगोचरतयेति । ज्ञानगोचरोऽपि छाद्मस्थ्ये गणभृतामसङ्ख्येयकालपर्यायप्राप्त वस्तु न पुनरनन्तकालपर्यायमाश्रितमपि । यदागमः

'संखाईए वि भवे साहइ जं वा परो अ पुच्छिज्जा । न उण अणाइसेसे विआणइ एस छउमत्थो' ॥१॥ त्ति । एवमनाभोगजन्यः संशयोऽपि श्रुतानुपयोगादेवावसातव्यः । न चैवं श्रुतकेवलित्व-व्याहतिः । यतोऽपरेण केनचित्पृष्टः सन् श्रुतोपयोगपुरस्सर प्रश्नितार्थनिर्वचनं सम्यग् विदधात्येव । न चैवमनाभोगवशादयथार्थश्रद्धाने मिथ्यात्वमप्याऽऽशङ्कनीय, सम्यक्त्वे सत्यप्यनाभोगस्याऽनिवार्यत्वात् । यदाहुः श्रीमद्भद्रबाहुस्वामिपादाः

'सम्मद्दिट्ठी जीवो उवइट्ठं पवयणं तु सद्दहइ । सद्दहइ असब्भावं अणभोगा गुरुनिओगा वा' ॥१॥ इति । तस्मादनाभोगो हि द्विविधः—अतिचाररूपोऽनाचाररूपश्च । तत्र मिथ्यादृष्टेरनाभोगोऽनाचार एव । तस्यातिचाराऽसम्भवात् । नहि भस्मीभूतस्य वस्त्रस्य मषीतिलकादिमालिन्यादिसम्भवः । सम्यग्दृष्टेस्त्वनाभोगो द्विविधः—बहुकालीनोऽल्पकालीनश्च, तत्र बहुकालीनोऽतिचाररूपोऽप्यभ्यासवशात्प्रायोऽनाचार एव स्यात् । मया बहुकालमिदमित्थमेवावगत निर्धारित च कथं सम्प्रति सहसा परित्यजामीत्याऽऽग्रहिणोऽभिनिवेशतया परिणतेः । अल्पकालीनोऽपि द्विविधः—पूर्व्वमनवधृतवस्तुविषयकोऽवधृतविषयकश्च, तत्राद्यो बहुश्रुतसन्निधौ सम्यग् निर्णयं करिष्यामीत्यध्यवसायवतः सम्यग निर्णयसामग्रीप्राप्त्यवधिकोऽतिचारः । द्वितीयस्तु विस्मृतश्रुतस्य श्रुताऽनुपयोगवतश्चेत्युभयथापि श्रुतकेवलिनोऽपि न विरुध्यते । न चानुपयोगादयथार्थवस्तुश्रद्धानेऽतिचाराभावः शङ्कनीयः, आनन्दश्रावकावधिज्ञानमधिकृत्य श्रीगौतमस्य मिथ्यादुष्कृतस्याऽसम्भवेन सिद्धान्तवाधापत्तेः । नन्वेवमपि श्रुतकेवलिनो ह्यनाभोगः क्वचिदंशे कादाचित्क इत्यादि प्रागुक्तम् । तथा च प्रकृतशास्त्रवाच्यार्थविषयकाऽनाभोगजन्यसंशयाभावेन जानतोऽपि गौतमस्य क भदंत ! जम्बूद्वीपः प्रज्ञप्त ? इत्यादिप्रश्नसमूहस्यानवकाशः सम्पद्येत । तथा च प्रकृतशास्त्रस्यानुदय एव स्यात्तच्च प्रत्यक्षवाधितमिति चेत् ? मैवं, प्रस्तुतशास्त्ररचनाहेतोः संशयस्य विद्यमानत्वात्, तथाहि संशयो हि विरुद्धानेककोट्यवभासरूपः । तत्रैका वास्तवीं कोटिमपास्य विरुद्धाः शेषाः कोटयोऽवभासमाना आरोपिता एव । आरोपस्तु अपरधर्म्मस्यान्यत्रावभासमानतयैव स्यात् । यथा शुक्तिकाशकले चाकचिक्यादिदर्शनाद्रजतत्वावभासः । प्रकृते त्वेवं योजना कार्या । जम्बूद्वीपः किं सर्व्वद्वीपान्तर्वर्त्ती उत यथाकथंचिद्वर्त्ती सर्व्वद्वीपेभ्यो बहिर्वर्त्ती वा ? सोऽपि किं शतादिसंख्येययोजनप्रमाणः उताऽसंख्येययोजनप्रमाणः ? तथाविधोऽपि संस्थानेन किं त्र्यस्रश्चतुरस्रो वृत्तो वा ? एवं स्वरूपोऽपि कि स्वरूपमात्रं उताऽपरापरवस्तुनामाधारभूत ? इत्यादिरूपेण संशयो भूतभवद्भाविनराणामनेकप्रकारः प्रतीत एव । त च संशयं तथाविधसंशयवता नराणां संशयोच्छेदाय स्वयमेव स्वात्मन्यारोप्य तथाविधसशयविषयीभूतानप्यर्थान् श्रीमहावीरं प्रति प्रश्नविषयीकुर्व्वाणो गौतमोऽपि तत्संशयवान् भण्यते, प्रश्नवाक्यव्यञ्जितारोपितसंशयस्य तस्यापि सत्त्वात् । लोकोऽपि स्वयमप्रयोजनोऽपि यः कश्चित् श्रेष्ठिप्रभृतिर्जनः प्रजापक्षपातीभूय प्रजाप्रयोजननिमित्तमेव राज्ञे विज्ञप्ति कुर्व्वाणस्तत्प्रयोजनवानपि भण्यते । एवं श्रीवीरं प्रति प्रश्नं कुर्व्वाणो गौतमः प्राय आरोपितसंशयवानेव न पुनः प्रतिप्रश्नं संशयवानपि, अन्यथा 'अहोलोए णं भंते ! सिद्धो परिवसंती 'त्यादि—गौतमप्रश्नानुसारेण श्रावककुलोत्पन्नस्य बालादेरप्यल्पश्रुतवत्ता गणभृतोऽपि प्रसज्येत । तथात्वे च तद्रचितागमे कथं सम्यगास्था ? इत्यादयोऽनेके दोषाः स्वयं पर्यालोच्याः । ननु स्वयं निर्णयवानपि परकीयं संशयमभ्युपगम्य किमर्थं पृष्टवानिति चेत् ? उच्यते, श्रीवीरमुखात् त्रिपदीश्रवणमात्रेण तथाविधसञ्जातकर्म्मक्षयोपशमवशात् ज्ञातस्यापि जम्बूद्वीपस्य 'द्विर्बद्धं सुबद्धं भवती 'ति न्यायात् श्रीवीरमुखादेव व्यक्त्या तच्छ्रवणे तत्परिज्ञानस्य दाढर्य्यं स्यात् । अपरेषां च श्रोतॄणां संशयापनोदकत्वेन महानिर्ज्जराहेतुः परमोपकारश्च । तस्मात् सम्यग् ज्ञानवतोऽपि गौतमस्य स्वकीयज्ञानसंवादनार्थम् अज्ञलोकप्रतिबोधनार्थं शिष्याणां च स्ववचसि प्रत्ययोत्पादनार्थं सूत्ररचनाकल्पसंवादनार्थं वा श्रीवीरमधिकृत्य प्रश्नपद्धतिर्न दोषायेति ।

अथानन्तरोक्तप्रश्नचतुष्टये प्रथमप्रश्नत्रयस्य निर्वचनमाह

गोअमा ! अयण्णं जंबुद्दीवे दीवे सव्वदीवसमुद्दाणं सव्वब्भंतरए सव्वखुड्डाए वट्टे ।

'गोअमा ! अयण्णमि'त्यादि । गोअमा ! इति लोकप्रथितमहाविशिष्टगोत्राभिधायकामन्त्रण ध्वनिः दीर्घत्वं च मागधदेशीप्रभवं तेन हे गौतमेति शिष्यामन्त्रण, तदपि गोत्रोच्चारेण शिष्यसम्बोधन परमप्रीतिहेतुः । प्रीतिमांश्च शिष्यो विशेपतः प्रश्नविधानोद्यतः प्रश्नितार्थनिर्व्वचनश्रवणेऽपि सादरः स्यात । 'अयण्णं'ति अयं श्रोतृप्रज्ञापकयोराधारभूतत्वेनाध्यक्षसिद्धः । अनेन जम्बूद्वीपनाम्ना ये ह्यसङ्ख्येया द्वीपसमुद्रास्ते व्यवच्छिन्नाः । णंकारः प्राग्वत् । जम्बूद्वीपो नाम द्वीपः । कथंभूतः ? सव्वाभ्यिन्तरकः-सर्व्वात्मना सामस्त्येनाभ्यन्तरः सर्व्वाभ्यन्तरः स एव सर्वाभ्यन्तरकः स्वार्थे कः । केषां सर्वाभ्यन्तरकः ? सर्व्वद्वीप-समुद्राणा, सर्व्वेऽपि प्रश्नितजम्बूद्वीपव्यतिरिक्ता ग्राह्याः । न हि प्रश्नितजम्बूद्वीपोऽपि सर्व्वात्मना प्रश्नित-जम्बूद्वीपस्य सर्व्वाभ्यन्तरकः स्यादात्माश्रयात् । तेन सर्व्वद्वीपसमुद्राणा सर्व्वाभ्यन्तरकोऽयमेव नान्यः । अत एवासौ न कमपि द्वीप समुद्रं वा परिक्षिप्तवान् । किं त्वेष एव लवणोदसमुद्रेण चक्रवालतया सर्व्वतः परिक्षिप्तो, लवणोदः समुद्रो धातकीखण्डेन, धातकीखण्डः कालोदसमुद्रेण । एवं तावद्वाच्यं यावत्पर्यन्ते स्वयम्भूरमणो द्वीपः स्वयम्भूरमणसमुद्रेण परिक्षिप्तः । एतेन जम्बूद्वीपवर्जा द्वीपाः समुद्राश्च सर्व्वेऽपि वृत्ता अपि वलयाऽऽकारेण द्रष्टव्याः । जम्बूद्वीपपरिधिरूपत्वात् । सकलतिर्यग्लोकमध्यवर्त्ती जम्बूद्वीप इति जम्बूद्वीपस्यावस्थानक्षेत्रमभिहितम् । यतः सर्व्वाभ्यन्तरकः तत एव सर्व्वक्षुल्लकः—सर्व्वद्वीपसमुद्रेभ्यो लघुरित्यर्थः । अपरे च सर्व्वे लवणादयः समुद्राः धातकीखण्डादयश्च द्वीपाः जम्बूद्वीपादारभ्य द्विगुणद्वि-गुणायामविष्कम्भपरिधयो भवन्ति । तच्चैवं—लवणसमुद्रो ह्येकस्यामेव दिशि जम्बूद्वीपात् द्विगुणस्तेन पूर्व्वापरायतरेखया द्विदलीकृते लवणसमुद्रे दक्षिणदिग्वर्त्ती उत्तरदिग्वर्त्ती वा यो विभागः स च घनतया कुण्डलीकृतो जम्बूद्वीपादायामविष्कम्भपरिधिभिर्द्विगुण एव स्यादिति भावः । एतेन शेपद्वीपसमुद्रा-पेक्षया लघुरिति सामान्यतः परिमाणमुक्तम् । विशेषतस्त्वनन्तरसूत्रेण वक्ष्यते । तथा 'वट्टे'त्ति वृत्तो वर्त्तुला-कारः । तादृशास्तु सर्व्वेऽपि द्वीपसमुद्रा भवन्त्येव, ततस्तद्व्यवच्छेदार्थं दृष्टान्तगर्भितविशेषणान्याह

तेल्लापूपसंठाणसंठिए । वट्टे रहचक्कवालसंठाणसंठिए । वट्टे पुक्खरकण्णिआसंठाणसंठिए । वट्टे पडिपुण्णचंदसंठाणसंठिए ।

'तेल्लापूपसंठाणसंठिए'त्ति । वृत्तः सन्नपि तैलापूपसंस्थानसंस्थितः । तैलेन पक्वोऽपूपस्तैलाऽपूपः । अपूप. प्रायस्तैलेन पच्यतेऽतस्तैलविशेषण, तस्येव यत्संस्थानं प्रतरवृत्तत्व तेन संस्थितस्तैलाऽपूपसस्थान-संस्थितः । धातकीखण्डादयस्तु नैवं दृष्टान्तसाध्यवृत्तत्त्वभावमापन्नाः, तेषां वलयवृत्तत्वात् । अपूपः कदा-चिद्वक्रोऽपि स्यात्ततो दृष्टान्तरमाह

'वट्टे रहे'त्यादि । वृत्तोऽपि रथचक्रवालसस्थानसंस्थितः । रथशब्देनात्रावयवे समुदायोपचारात् रथाङ्गं चक्रं विज्ञेयं, तस्य चक्रवालं मण्डल तस्येव यत् संस्थान तेन संस्थितः । अथ रथचक्रवालमपि काष्ठखण्डसमुदायात्मकं कृत्रिमसन्धानादिना न सम्यग्वृत्तं स्यादत आह

'वट्टे पुक्खरे'त्यादि । वृत्त सन्नपि पुष्करकर्णिका—पद्मवीजकोशस्तस्य यत्संस्थानं तेन संस्थितः । पुष्करकर्णिका च वृत्तापि न सर्व्वजनप्रतीता, दृष्टान्तस्तु आबालगोपाल प्रतीतो वक्तव्योऽत आह

'वट्टे पडिपुण्णे'त्यादि। वृत्तः सन्नपि प्रतिपूर्णचन्द्रसंस्थानसंस्थितः। प्रतिपूर्णचन्द्रस्तु पूर्णमासम्बन्धी, स च वृत्ततया सर्वजनप्रतीतः। ननु तर्हि पूर्णचन्द्र एवैको दृष्टान्तोऽस्तु किमर्थं ग्रन्थगौरवकरमपूपादिदृष्टान्तत्रयमिति चेत्? सत्यं, कथञ्चिदेवविधा अपि दृष्टान्ता गुणवच्छिष्यबुद्धिवृद्ध्यै न दुष्टा इति ज्ञापनार्थं अनेकधोपमानोपमेयभावो नानादेशविनेयविशेषप्रतिप्रत्त्यर्थं वा युक्त एवेति ज्ञेयम्। एतेन जम्बूद्वीपसंस्थानमावेदितमिति प्रश्नत्रयनिर्व्वचनम्।

अथ विशेषतः परिमाणमाह

**एगं जोअणसयसहस्सं आयामविक्खभेणं, तिण्णि जोअणसयसहस्साइं सोलस सहस्साइं दोण्णि अ सत्तावीसे जोअणसए तिण्णि अ कोसे अट्ठावीसं च धणुसयं तेरस य अंगुलाइं अद्धं अंगुलं च किंचि विसेसाहिए परिक्खेवेणं पण्णत्ते।**

'एगं जोअणे'त्यादि। एकं योजनशतसहस्रमायामविष्कम्भेन। समाहारद्वन्द्ववशादेकवचनम्। त्रीणि योजनशतसहस्राणि द्वे योजनशते सप्तविंशत्यधिके त्रयः क्रोशाः अष्टाविंशमष्टाविंशत्यधिकं धनुषां शतं धनुःशतं त्रयोदशाङ्गुलानि अर्द्धाङ्गुलं च किञ्चिद्विशेषाधिकमित्येतावान् परिक्षेपेण प्रज्ञप्तस्तीर्थकृद्भिरिति गम्यम्। इदं च परिक्षेपपरिमाणं–'विक्खंभवग्गदहगुणकरणी वट्टस्स परिरओ होइ'त्ति गाथाशकलेन समानेतव्यम्। तथाहि–वृत्तस्य क्षेत्रस्य यो विष्कम्भो–विष्कम्भपरिमाणं तस्य वर्गो विधीयते, वर्गश्च 'तद्गुणो वर्गः' इति वचनात्तेनैव राशिना तस्य गुणनं, तत्र एकस्य वर्ग एकक एव, एकेन गुणितं तदेव भवतीति न्यायात्. द्विकस्य वर्गश्चतुष्कं द्विको द्विगुणीकृतश्चतुष्कमेव भवति. त्रिकस्य वर्गो नवकमित्यादि। प्रकृते च लक्षस्य लक्षेण गुणने एकको दश शून्यानि च, तस्यापि 'दहगुण'त्ति दशभिर्गुणने प्राक्तनोऽङ्कराशिरेकशून्याधिको भवति। तदङ्कस्थापना–१०००००×१०००००×१० = १००००००००००० ततः करणिर्वर्गमूलाऽऽनयनम्। तच्चैवम्

'विसमपयं चइअवग्गे मूले ठाणुट्ठिए दुगुणिए अ। लद्धं पतिठिअं धुअवग्ग दुगुणं पुणद्धिअं करणी ॥१॥ इति गाथोक्तप्रकारेण विज्ञेयम्। अस्या अयं भावः–अन्त्याङ्काद्विषमसमेति क्रियमाणे यद्विषमपदमायाति, तस्माद्विषमात् पदतो यावान् वर्गः पूर्यते तावान् वर्गो विषमात्पदतस्त्यज्यते, स चाऽऽगमिष्यत्सर्वोऽङ्कराशेराद्यत्वान्मूलमिति भण्यते, स च मूलसञ्ज्ञः स्वस्थानादुत्थाप्य द्विगुणीकृत्य च पङ्क्तौ संस्थाप्यते, पश्चात्तेनोपरितनाङ्कराशेर्भागो ह्रियते, हृते च भागे यल्लभ्यते तत्पङ्क्तौ स्थाप्यते 'धुअवग्गमि'ति पङ्क्तिस्थापनादनन्तरं च यल्लब्धं तदुपरितनाङ्कराशेर्धुतवर्गं गतवर्गं क्रियते लब्धाङ्कस्य वर्ग उपरितनराशेस्त्यज्यत इत्यर्थः। लब्धाङ्कश्च पुनरपि द्विगुणीक्रियते, एवं पुनः पुनस्तावत्क्रियते यावता छेद्यो राशिर्भागं न दत्ते, ततोऽन्त्याङ्कवर्जलब्धाङ्कराशिः सर्व्वोऽप्यर्द्धीक्रियते, ततोऽर्द्धीकरणे यावत्यङ्कपङ्क्तिरवाप्यते तदङ्कप्रमाणो विवक्षितस्य क्षेत्रस्य परिधिरायातीति तस्य करणिरिति नाम ज्ञेयम्। ततः प्रकृते व्यक्त्या किञ्चिदङ्कपङ्क्तिर्लिख्यते। एकैकादशशून्य १००००००००००० लक्षणायां पूर्वोक्तायामङ्कपङ्क्तौ 'विषमसमे'ति क्रियमाणे द्वितीयाङ्के प्रथमशून्यलक्षणे विषममायाति, ततो विषमा-

ङ्काद्वर्गस्त्यज्यते दशकात् त्रिकस्य वर्गो नवक इति नवकस्त्यज्यते, शेष एकक एव तिष्ठति। स च लब्धस्त्रिकः स्वस्थानादुत्थाप्यमानो द्विगुणीकृत्य छेदकराशेरधङ्कतया स्थाप्यते। तत्र छेद्यो राशिः—एकको दश शून्यानि च। छेदकराशिः—षट्क एवं तदङ्कस्थापना—१०००००००००० — ६ ततश्च षडिमरुपरितनराशेर्भागो ह्रियते हृते च भागे एको लभ्यते, एकेन गुणित तदेव भवतीतिन्यायात् एकस्य वर्गोऽप्येकक एव। स चोपरितनराशेस्त्यज्यते द्विगुणीकृत्य चाग्रे सञ्चार्यते। तत्र छेद्यो राशिः-त्रिको नवकोऽष्टौ शून्यानि च। छेदकराशिर्द्वाषष्टिः। तदङ्कस्थापना—३९०००००००० — ६२ ततश्च द्वाषष्ट्या उपरितनराशेर्भागो ह्रियते, हृते च भागे षट् लभ्यन्ते, ते च पङ्क्तौ स्थाप्यन्ते, तेश्च षण्णा वर्गः षट्त्रिंशदिति कृत्वोपरितनराशेः षट्त्रिंशत्पात्यन्ते द्विगुणीकृत्य चाग्रे सञ्चार्यन्ते, तत्र छेद्यो राशिः—एककश्चतुष्कद्वयं षट् शून्यानि, छेदकराशिस्तु षट्कस्त्रिको द्विकश्चेति। तदङ्कस्थापना—१४४०००००० — ६३२ ततश्च द्वात्रिंशदधिक षट्शत ६३२ रूपेण छेदकराशिना उपरितनराशेर्भागो ह्रियते हृते च द्वौ लभ्येते तौ च पङ्क्तौ स्थाप्येते द्वयोर्वर्गश्चत्वार इतिकृत्वा चतुष्कलक्षणो निजवर्ग उपरितनराशेस्त्यज्यते द्विगुणीकृत्य चाग्रे सञ्चार्यते। तत्र छेद्यो राशि—एककः सप्तकः पञ्चकः षट्कः शून्यचतुष्टयं च। छेदकराशिस्तु षट्कस्त्रिको द्विकश्चतुष्कश्च। तदङ्कस्थापना—१७५६०००० — ६३२४ ततश्च चतुर्विंशत्यधिकत्रिषष्टिशत ६३२४ रूपेण छेदकराशिना उपरितनराशेर्भागो ह्रियते, हृते च द्वौ लभ्येते तौ च पङ्क्तौ स्थाप्येते, प्राग्वन्निजवर्गे त्यक्ते द्विगुणीकृत्य चाग्रे सञ्चार्यते। तत्र छेद्यो राशिः—चतुष्को नवक एकक एककः षट्कः शून्यद्वयं चेति। छेदकराशिः षट्कस्त्रिकोद्विकः चतुष्कद्वयं तदङ्कस्थापना—४९११६०० — ६३२४४ ततश्च षट्त्रिद्विचतुश्चतुरङ्कलक्षणेन छेदकराशिना उपरितनराशौ विभक्ते सप्त लभ्यन्ते. ताश्च पङ्क्तौ संस्थाप्य सप्तकवर्गेण एकोनपञ्चाशल्लक्षणेन उपरितनराशिर्न्यूनः क्रियते। तदानीमुपरितनराशेर्न्यूनत्वेन लभ्यप्राप्तेरभावात् द्विगुणीकृत्याग्रे सञ्चाराभावः। ततोवर्गमूलानयने षट् लक्षा द्वात्रिंशत्सहस्राणि चत्वारि शतानि सप्तचत्वारिंशदधिकानि ६३२४४७ अत्र पर्यन्तवर्त्तिसप्तकरूपमङ्कस्थानं मुक्त्वा शेषं सर्व्वमपि द्विगुणीकृतमासीत्तन तावानेव राशिरर्द्धीक्रियते। लब्धानि त्रीणि लक्षाणि षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके ३१६२२७। एतानि च योजनानि। शेषमुपरिष्टादिदमुद्धरति—चतस्रो लक्षाश्चतुरशीति सहस्राणि चत्वारि शतानि एकसप्ततिश्चेति। तदङ्कस्थापना-४८४४७१ एतानि च योजनान्युद्धरितानि, योजन च चतुर्भिर्गव्यूतैर्भवति, ततो गव्यूतानयनार्थं एष राशिश्चतुर्भिर्गुण्यते जातान्येकोनविंशतिर्लक्षाणि सप्तत्रिंशत्सहस्राणि अष्टौ शतानि चतुरशीतिश्चेति। एष छेद्यो राशि। छेदकराशिस्तु प्राक्तन षड्लक्षादिरूपः, नवरमन्त्यमपि सप्तकरूपमङ्कस्थानं द्विगुणीक्रियते। ततश्च षट्कस्त्रिकोद्विकश्चतुष्कः पञ्चकश्चतुष्कश्चेति। तदङ्कस्थापना—१९३७८८४ — ६३२४५४ ततश्छेदकेन छेद्यराशेर्भागो ह्रियते हृते च लब्धं क्रोशत्रय शेषमुपरिष्टादिदमुद्धरति चतुष्कः शून्य पञ्चको द्विको द्विकश्चेति। अमूनि च गव्यूतानि। गव्यूतं च धनुषा सहस्रद्वयेन भवति। ततो धनुरानयनार्थमयं राशिः सहस्रद्वयेन गुण्यते जात अष्टक एककः शून्यं चतुष्कद्वय शून्यत्रयं चेति। छेदकराशिः प्राक्तन एव। तदङ्कस्थापना—८१०४४००० — ६३२४५४ ततश्छेदकेन छेद्यराशेर्लब्धमष्टाविंशं धनु शतं १२८ शेषमुपरिष्टादिदमुद्धरति—अष्टको नवकोऽष्टकत्रयं चेति ८९८८८ एतानि च धनूंषि। धनुश्च षण्णवत्याऽङ्गुलैर्भवति। ततोऽयं राशिरङ्गुलानयनाय षण्णवत्या गुण्यते, जातानि अष्टकः षट्को द्विको नवको द्विकश्चतुष्कोऽष्टकश्चेति। अयं छेद्यो राशिः। छेदकराशिस्तु स एव। तदङ्कस्थापना चेयं ८६२९२४८ — ६३२४५४ ततश्छेदकेन छेद्यराशेर्लब्धानि त्रयोदशाङ्गुलानि शेषमुपरिष्टादिदं

चतुष्कः शून्यं सप्तकस्त्रिकश्चतुष्कः षट्कश्चेति ४०७३४६ अयं च राशिरर्द्धाङ्गुलानयनाय द्विगुणीक्रियते, जातम् अष्टक एककः चतुष्कः षट्को नवको द्विकः अयं छेद्यो राशिः। छेदकराशिस्तु स एव। तयोरङ्कस्थापना चेयं-८१४६९२ ÷ ६३२४५४ ततश्छेदकेन छेद्यराशेर्लब्धमर्द्धाङ्गुलं शेषमिदम्—एककोऽष्टको द्विको द्विकस्त्रिकोऽष्टकश्चेति। एते चार्द्धाङ्गुलांशास्ते चतुर्गुणीक्रियन्ते। यतो यवैश्चतुर्भिरर्द्धाङ्गुलमेकं स्यात्। ततो जातोऽयं छेद्यराशिर्यवात्मकः सप्तको द्विकोऽष्टको नवकः पञ्चको द्विकश्चेति। छेदकराशिस्तु स एव। तयोरङ्कस्थापना चेयं-७२८९५२ ÷ ६३२४५४ ततो लब्ध एको यवः। शेष नवकः षट्कश्चतुष्को नवकश्चतुष्कश्च। अयं च राशिरष्टभिर्गुणितो यूकाः स्युः। स च राशिः सप्तकद्वयमेकको नवकोऽष्टकश्चतुष्कश्चेति। अयं च छेद्यो राशिः। छेदकराशिस्तु स एव। तयोरङ्कस्थापना-७७१९८४ ÷ ६३२४५४। ततो लब्धैका यूका। शेषमेककस्त्रिको नवकः पञ्चकस्त्रिकः शून्यं चेति। १३९५३० अयमपि राशिरष्टभिर्गुणितो लिक्षाः स्युः। स च राशिर्यथा—एककत्रयं षट्को द्विकश्चतुष्कः शून्यं च। अयं च छेद्यो राशिः। छेदकराशिस्तु स एव। तयोरङ्कस्थापना-१११६२४० ÷ ६३२४५४ तथा विभज्यमाने लब्धैका लिक्षा शेषं चतुष्कोऽष्टकस्त्रिकः सप्तकोऽष्टकः षट्कश्च। लिक्षा अपि अष्टभिर्गुणिता वालाग्राणि स्युः। स च राशिस्त्रिकोऽष्टकः सप्तकः शून्यं द्विकोऽष्टकद्वयं च। छेदकराशिः स एव। तयोरङ्कस्थापना-३८७०२८८ ÷ ६३२४५४ ततो लब्धानि षट् वालाग्राणि, शेषं तु सप्तकः पञ्चकद्वयं षट्कश्चतुष्कश्चेति। ७५५६४ अयं च राशिरष्टभिर्गुणितो रथरेणवः स्युः। स च राशिः षट्कः शून्यं चतुष्कः पञ्चकः एकको द्विकश्चेति। छेदकराशिस्तु स एव। तयोरङ्कस्थापना-६०४५१२ ÷ ६३२४५४ छेदकराशेर्भूयस्त्वाद्रथरेणवो न लभ्यन्ते। ततश्चायं ६०४५१२ छेद्यो राशिरष्टभिर्गुणितस्त्रसरेणुराशिः। स चैवं—चतुष्कोऽष्टकस्त्रिकः षट्कः शून्यं नवकः षट्कश्च। छेदकराशिस्तु स एव। तयोरङ्कस्थापना यथा-४८३६०९६ ÷ ६३२४५४ ततो लब्धाः सप्त त्रसरेणव.। शेषं ४०८९१८ अयमपि अष्टभिर्गुणितस्त्रिको द्विको सप्तक एककस्त्रिकश्चतुष्कद्वयं च ३२७१३४४ एतस्मिन्नपि छेदकराशिना विभक्ते पञ्च परमाणवो लभ्यन्ते, शेषं तु एककः शून्यं नवकः शून्यं सप्तकश्चतुष्कश्चेति १०९०७४ तेषां च छेद्यत्वं व्यवहारपथातीतत्वात्केवलिगम्यमिति। तथा च 'के महालए'त्ति द्वितीयप्रश्नस्य विशेषतो निर्वचनं विहितमिति।

अथ 'किमायारभावपडोआरे'त्ति प्रश्ने किंस्वरूपोऽयं जम्बूद्वीपः? इति प्रश्नस्य निर्व्वचनप्रतिपादनार्थमाह—

से णं एगाए वयरामईए जगईए सव्वओ समंता संपरिक्खित्ते। सा णं जगई अट्ठ जोअणाइं उड्ढं उच्चत्तेणं, मूले वारस जोअणाइं विक्खंभेणं, मज्झे अट्ठ जोअणाइं विक्खंभेण, उवरिं चत्तारि जोअणाइं विक्खंभेणं, मूले विच्छिण्णा मज्झे संखित्ता उवरिं तणुआ गोपुच्छसंठाणसंठिआ सव्ववयरामई अच्छा सण्हा लण्हा घट्ठा मट्ठा नीरया निम्मला निप्पंका निक्कंकडच्छाया सप्पभा सस्सिरीआ सउज्जोआ पासादीआ दरिसणिज्जा अभिरूवा पडिरूवा। सा णं जगई एगेणं महंतगवक्खकडगेणं सव्वओ समंता संपरिक्खित्ता। से णं गवक्खकडए अद्धजोअणं उड्ढं उच्चत्तेणं पंच धणुसयाइं विक्खंभेणं सव्वरयणामए अच्छे जाव पडिरूवे। तीसे

णं जगईए उप्पिं बहुमज्झदेसभागे एत्थ णं महं एक्का पउमवरवेइआ पण्णत्ता । अद्धजोअणं उद्धं उच्चत्तेणं, पंच धणुसयाइं विक्खंभेणं जगईसमिआ परिक्खेवेणं सव्वरयणामई अच्छा जाव पडिरूवा । तीसे णं पउमवरवेइआए अयं एआरूवे वण्णावासे पण्णत्ते । तं जहा-वइरामया णेमा । एवं जहा जीवाभिगमे जाव अट्ठो जाव धुवा निअया सासया जाव णिच्चा ।

'से ण एगाए 'त्ति । सोऽनन्तरोक्तायामविष्कम्भपरिक्षेपपरिमाणो जम्बूद्वीपो 'णमिं'त्य-लङ्कारे । एकया वज्रमय्या जगत्या-नगरप्राकारकल्पया 'सर्वतः' सर्वासु दिक्षु 'समन्ततः' सामस्त्येन 'सम्परिक्षिप्तः' सम्यग् वेष्टितः । अथ सा कीदृशी ? इत्याह् 'सा णमि'त्यादि । सा च जगती 'उड्ढ 'ति ऊर्ध्वमुच्चैस्त्वेनाष्टौ योजनानि उच्चत्वेनाष्टयोजनप्रमाणेत्यर्थः । मूले द्वादश योजनानि विष्क-म्भेन, मध्येऽष्टौ, उपरि च चत्वारि । अत एव मूले विष्कम्भमधिकृत्य विस्तीर्णा, मध्ये सङ्क्षिप्ता त्रिभागोन-त्वात् उपरि तनुका मूलापेक्षया त्रिभागमात्रविस्तरत्वात् । इह जगत्या मूले मध्ये उपरि च विष्कम्भ-परिमाणमुक्तं, न पुनरपान्तरालेऽपि । ततोऽपान्तराले उपरिष्टादधोमुखगमनेनाधस्ताच्चोपरिगमनेनेप्सित प्रदेशे विष्कम्भपरिज्ञानार्थं प्रसङ्गतः करणं यथा स्वामिरुचितप्रदेशे विष्कम्भपरिमाणजिज्ञासाया मूलाद्यावदूर्ध्वं गतं तावन्मूलविष्कम्भात् द्वादशयोजनसङ्ख्याङ्कादुद्ध्रियते, उपरिष्टाच्च यावदधोऽवतीर्णं ताव-च्छिखरपरिमाणयुक्तं क्रियते, तदेप्सितप्रदेशे विष्कम्भपरिमाण भवति । तथाहि-अधस्ताद्योजनमेकं गते मूलविष्कम्भादेकं योजनमुद्ध्रियते, तत्र प्रदेशे जगत्या विष्कम्भ॰ एकादश योजनानि यावदष्टौ योजनानि गते मूलविष्कम्भादष्टौ योजनान्युद्ध्रियन्ते, शेषं चत्वारि योजनानि तिष्ठन्ति । तावदेव तत्र प्रदेशे विष्कम्भ परिमाणम् । अत एव शिखरे चत्वारि योजनानि विष्कम्भ इत्यर्थः । एवं तावत्क्रियते यावदष्टौ योजना-न्यधो गते द्वादश योजनानि मूले विष्कम्भो भवति । सूक्ष्मपर्यालोचनया चोत्पतनावतरणाभ्यामङ्गुलाद्यपि परिभावनीयम् । यथा-अङ्गुलोत्पतने अङ्गुलोनानि द्वादश योजनानि, अवतरणे चाङ्गुलाधिकं योजन-चतुष्कमिति । अथ जगत्या विष्कम्भमुपमया भावयति 'गोपुच्छे 'त्यादि । गोपुच्छस्येव संस्थानं तेन संस्थिता । यथावस्थितगोपुच्छोपमया तूपरि विस्तीर्णाऽधस्ताच्च तनुका स्यात् । तस्मादूर्ध्वीकृतगोपुच्छा-कारेति भावः । यद्वा-उभयोरपि मूलमधिकृत्योपमानोपमेयभावोऽवसातव्यः । अथ जगतीवर्णनमाह-'सव्व-वयरामई ' इत्यादि । सर्वात्मना-सामस्त्येन वज्रात्मिका । अच्छा-आकाशस्फटिकवदत्यच्छा । 'सण्ह'त्ति श्लक्ष्णा-श्लक्ष्णपुद्गलस्कन्धनिष्पन्ना श्लक्ष्णदलनिष्पन्नपटवत् । 'लण्ह 'त्ति मसृणा घुण्टितपटवत् । 'घट्ठ'त्ति घृष्टेव घृष्टा खरशानया पाषाणप्रतिमावत् । 'मट्ठ 'त्ति मृष्टेव मृष्टा सुकुमारखरशानया पाषाण-प्रतिमावत् । 'निरजा ' स्वाभाविकरजोरहितत्वात् । 'निम्मला ' आगन्तुकमलाभावात् । निष्पङ्का-कलङ्कविकला कर्दमरहिता वा 'निक्कंकडच्छाय 'त्ति निष्कङ्कटा-निष्कवचा निरावरणा निरुपघातेति भाव । तादृशी छाया-दीप्तिर्यस्याः सा तथा । 'सप्रभा' स्वरूपतः प्रभावती । 'सस्सिरिअ'त्ति सश्रीका-वहिर्विनिर्गतकिरणजालेनातिश्रेष्ठा । जीवाभिगमे तु 'समरीइअ 'त्ति पाठस्तत्रापि 'समरीचिके 'त्ति स एवार्थः । अत एव 'सोद्योता ' वहिर्व्यवस्थितवस्तुस्तोमप्रकाशकरी । 'प्रासादीया ' प्रसादाय-मनः-प्रसत्तये हिता तत्कारित्वात् मन प्रह्लत्तिकारिणीत्यर्थः । 'दर्शनीया ' दर्शनयोग्या पश्यतश्चक्षुषी न

श्रमं गच्छत इत्यर्थः । 'अभिरूपा' अभि–सर्वेषां द्रष्टृणां मन प्रसादानुकूलतया अभिमुखं रूपं–स्वरूप यस्याः सा तथा । अत्यन्त कमनीयेति भावः । अत एव 'प्रतिरूपा' प्रतिविशिष्टमसाधारणं रूपं यस्याः सा तथा । अथवा प्रति–प्रतिक्षणं नवं नवमिव रूपं यस्याः सा तथा । एवंविधापि जगती न स्वरूपमात्रावस्थिता किन्तु तदुचितरचनाविशिष्टेत्याह–' सा णं जगई ' इत्यादि । साऽनन्तरोदितस्वरूपा ' णमित्यलङ्कारे । जगती एकेन ' महंत 'त्ति महता गवाक्षकटकेन-महत्या गवाक्षश्रेण्या । यद्वा–महान्तो-विद्याधरक्रीडास्थानतया प्रशस्या ये गवाक्षास्तेषां कटकेन–समूहेन सम्परिक्षिप्ता । तत्र गवाक्षा भवनभित्तिषु लोके प्रसिद्धाः वातायनापरपर्याया. । अत्र गवाक्षश्रेणिरपि जगत्या वहिर्भित्तिप्रदेशगताऽवसातव्या, अन्यथा परिक्षेपासम्भवात् । यत्तु योगशास्त्रवृत्तौ जम्बूद्वीपस्य प्राकारभूता वज्रमयी अष्टयोजनोच्छ्रा जगती द्वादश योजनान्यस्य मूले विष्कम्भः मध्येऽष्टौ योजनानि उपरि चत्वारि योजनानि तदुपरि द्विगव्यूतोच्छ्रयो जालकटको विद्याधरक्रीडास्थानं, तस्याप्युपरि पद्मवरवेदिका देवभोगभूमिरिति भणितं, तद्विचार्यमस्ति । अथ गवाक्षकटकः कीदृश ? इत्याह–' से णं गवक्खे 'त्यादि । स च गवाक्षकटकः ऊर्ध्वमुच्चैस्त्वेनार्द्धं योजनं द्वे गव्यूते विष्कम्भेन पञ्च धनुःशतानि । किंलक्षणः ? सर्वात्मना रत्नमयः । अच्छः–आकाशस्फटिकवत्स्वच्छः । यावत्प्रतिरूपः । यावत्करणात् ' सण्हे लण्हे घट्ठे मट्ठे ' इत्यादिविशेषणानि जगतीवदिहापि वक्तव्यानि । अथ जगत्या उपरि यद्वर्त्तते तत्प्रतिपिपादयिषुराह–' तीसे णं जगईए ' इत्यादि । तस्याः प्रागुक्तस्वरूपाया जगत्या 'उप्पिं'ति । यदुपरितनं चतुर्योजनविस्तारात्मकतलं तस्य यो बहुमध्यदेशभागः 'एत्थ णं'ति अत्रैतस्मिन् प्रदेशे महती एका पद्मवरवेदिका प्रज्ञप्ता मयाऽन्यैश्च तीर्थकृद्भिरिति । अथ कथमसौ वेदिका पद्मवरवेदिकेति व्यपदिश्यते ? उच्यते–तस्यां वेदिकायां तत्र तत्र प्रदेशे उपरितले वेदिकावाहासु वेदिकास्तम्भेषु वेदिकाफलकेषु च सर्वरत्नमयानि शतपत्रसहस्रपत्रादिरूपाणि तेन पद्मवरा पद्मप्रधाना वेदिका पद्मवरवेदिकेति व्यपदेशः । सा चोर्ध्वमुच्चैस्त्वेन अर्द्धं योजनं द्वे गव्यूते पञ्च धनुःशतानि विष्कम्भेन ' जगतीसमिआ ' इति जगत्याः समा–समाना सैव जगतीसमिका परिक्षेपेण–परिरयेण, यावान् जगत्या मध्यभागे परिरयस्तावान् तस्या अपि परिरय इति भावः । सर्वात्मना रत्नमयी, अच्छा–आकाशस्फटिकवत्स्वच्छा ' जाव 'त्ति यावत् प्रतिरूपा-असाधारणरूपवती । यावत्करणात् ' सण्हा लण्हा घट्ठा मट्ठे 'त्यादि विशेषणानि जगतीवद्वक्तव्यानि । अथ तस्या वर्णकमाह–'तीसे णं पउमे'त्यादि । तस्याः पद्मवरवेदिकाया अयं च एतद्रूपः–एवं स्वरूपो वर्ण्णावासो वर्ण्णः–श्लाघा यथावस्थितवस्तुस्वरूपकीर्त्तनं तस्या वासो–निवासो ग्रन्थपद्धतिरूपो वर्ण्णावासो–वर्ण्णकनिवेश इत्यर्थः । प्रज्ञप्तः–प्ररूपितः । अथ यथा प्ररूपितः तथा चाह–' तं जहे 'त्यादि । तद्यथेतीह प्रस्तुतवस्तुस्वरूपोपदर्शने । ' वयरामया णेम 'त्ति । तस्या पद्मवरवेदिकाया' वज्रमयी–वज्ररत्नात्मिका नेमा, नेमा नाम स्वभूमिभागादूर्ध्वं निष्क्रामन्तः प्रदेशाः, ते च सर्वे वज्रमया इत्यर्थः । वज्रशब्दस्य दीर्घत्वं वक्तव्यम् । अथाशेषवर्ण्णकस्येह सूत्रे साक्षाद्भणनेन ग्रन्थगौरवमित्याशयेन–सूत्रान्तरस्यावतारमाह–'एवं जहे'त्यादि । एवं 'वयरामया णेमा' इत्यादि प्रागुक्तस्वरूपेण यथा जीवाभिगमे भणितं तथेहापि वक्तव्यम् । जीवाभिगमोक्तमपि कियद्दूरमित्याह–'जाव अट्ठे'त्ति । यावत् ' से तेणट्ठेणं गोअमा ! एवं वुच्चइ पउमवरवेइआ 'त्ति पर्यन्त ततोऽपि यावत् 'धुवा नियता सासया' इत्यन्तं ततोऽपि यावन्निव्या तावत्पर्यन्तमिह वाच्यम् ।

तच्चैवं–'रिट्ठामया पइट्ठाणा वेरुलिअमया खंभा सुवण्णरुप्पामया फलगा वयरामई संधी लोहिअक्खमईओ सूईउ णाणामणिमया कडेवरा कडेवरसंघाडा णाणामणिमया रूवा रूवसंघाडा अंकामया पक्खा पक्खवाहाओ जोइरसामया वंसा वंसकवेल्लुआओ रयणामईओ पट्टिआओ जाय-रूवमयीओ ओहाडणीओ वयरामईओ उवरि पुंछणीओ सव्वसेअरयणामए आच्छादणे'त्ति ।

अस्यार्थः रिष्टरत्नमयानि प्रतिष्ठानानि–मूलपादाः । वैडूर्यरत्नमयाः स्तम्भाः । सुवर्णरूप्य-मयानि फलकानि । लोहिताक्षरत्नात्मिकाः सूचयः फलकद्वयविघटनाभावहेतुपादुकास्थानीयाः, वज्रमयाः सन्धयः–सन्धिमेलाः फलकानां सन्धय इत्यर्थः । नानामणिमयानि कलेवराणि मनुष्यशरीराणि नाना-मणिमयानि कलेवरसङ्घाटा–मनुष्यशरीरयुग्मानि, नानामणिमयानि रूपाणि–रूपकाणि, नानामणिमय-रूपकसङ्घाटा–रूपकयुग्मानि, अङ्को रत्नविशेषस्तन्मयाः पक्षाः–तदेकदेशाः पक्षवाहवस्तदेकदेशभूता एव 'जोईरसे'त्यादि । ज्योतिरसं नाम रत्नविशेषस्तन्मया वंशाः वंशकवेल्लुकाश्च महतां । पृष्ठवंशोनामुभयतः स्थाप्यमाना वंशाः । कवेल्लुकानि प्रतीतानि । रत्नमय्यः पट्टिकाः वंशानामुपरि कम्बास्थानीयाः । जातरूपं-सुवर्णविशेषस्तन्मय्यो अवघाटिन्यः आच्छादनहेतुकम्बोपरि स्थाप्यमानमहाप्रमाणकलिञ्चस्थानीयाः । वज्रमय्यो–वज्ररत्नात्मिकाः अवघाटिनीनामुपरि पुञ्छन्यो निविडतरच्छादनाहेतुश्लक्ष्णतरतृणविशेष-स्थानीयाः । सर्व्वश्वेतं रजतमयं पुञ्छनीनामुपरि कवेल्लुकानामध आच्छादनमित्याद्यवसेयम् ।

अथ वेदिकाया वहिरन्तश्च प्रत्येकं वनखण्डसद्भावात्तद्वर्णनाय प्रकृतसूत्रमाह

तीसे णं जगईए उप्पिं वाहिं पउमवरवेइआए तत्थ णं महं एगे वणसंडे पण्णत्ते । देसू-णाइ दो जोअणाइं विक्खंभेणं जगईसमे परिक्खेवेणं वणसंडवण्णओ णेअव्वो ।

'तीसे णं जगईए उप्पिमि'त्यादि । तस्या णमिति प्राग्वत् । जगत्या उपरि पद्मवरवेदिकाया 'वाहिं'ति वहिर्यः प्रदेशः । 'तत्थ णं'ति । तत्रैतस्मिन् । णमिति प्राग्वत् । महानेको वनखण्डः प्रज्ञप्तः अनेकजातीयानां महीरुहाणां समूहो वनखण्डः । यदुक्तम्– एगजाईएहिं रुक्खेहिं वणं अणेगजाईएहिं रुक्खेहिं वणसंडे'ति । स चैकैको देशोने द्वे योजने विष्कम्भतः–परिक्षेपेण 'जगतीसमकः' परिरयेण जगतीसमान इत्यर्थः । अत्र च वनखण्डवर्णको ज्ञातव्यः । स च 'किण्हे किण्होभासे' इत्यादिरूपेण माणिभद्रचैत्यवर्णनाधिकारेऽभिहित इति ।

अथ वनखण्डस्य भूमिभागः कीदृश ? इत्याह

तस्स णं वणसंडस्स अंतो वहुसमरमणिज्जे भूमिभागे पण्णत्ते । से जहा णाम ए आलिंग-पुक्खरे इ वा जाव णाणाविहपंचवण्णेहिं मणीहि अ तणेहि अ उवसोभिए । तं जहा-किण्हेहिं एवं वण्णो गंधो फासो सद्दो पुक्खरिणीओ पव्वयगा घरगाइं मंडवगा पुढविसिलावट्ट-गा य णेअव्वा । तत्थ णं वहवे वाणमंतरा देवा य देवीओ अ आसयंति सयंति । तीसे णं जगई-ए उप्पिं अंतो पउमवरवेइआए एत्थ णं एगे वणसंडे पण्णत्ते । देसूणाइं दो जोअणाइं विक्खंभेणं वेइआसमे परिक्खेवेणं किण्हे जाव तणविहूणो णेतव्वो ॥

'तस्स ण वणसंडस्से 'त्यादि । तस्य णमिति प्राग्वत् । वनखण्डस्यान्तर्मध्ये 'वहु'-अतिशयेन समः सन् 'रमणीयो' रम्यः भूमिभागः प्रज्ञप्तः । समत्वे दृष्टान्तमाह 'से जहा णाम ए'त्ति । 'से' इति तत् सकललोकप्रसिद्धम् । यथेत्युदाहरणोपन्यासे, नामेति सम्भावनायां वाक्यालङ्कारे वा, 'ए' इति आमन्त्रणार्थोऽलङ्कारार्थो वा । 'आलिंगपुक्खरे इ व 'त्ति । आलिङ्गो-मुरजो वाद्यविशेषस्तस्य पुष्कर-चर्म्मपुटं तत्किलाऽत्यन्तसममिति तेनोपमा क्रियते । इरितिशब्दः सर्वत्रापि स्वस्वोपमाभूतवस्तुपरि-समाप्तिद्योतकः । वाशब्दः समुच्चये । 'जाव णाणाविह 'त्ति यावन्नानाविधा जातिभेदान्नानाप्रकारा ये पञ्चवर्णा मणयस्तृणानि च तैरुपशोभितः । यावत्करणात्-'मुईगपुक्खरे इ वा सरतले इ वा करतले इ वा आयसमंडले इ वा चंदमडले इ वा सूरमंडले इ वा उरब्भचम्मे इ वा वराहचम्मे इ वा सीहचम्मे इ वा वग्घचम्मे इ वा मिगचम्मे इ वा दीविआचम्मे इ वा अणेगसंकुकीलगसहस्सवितते आवड-पचावडसेढीपसेढीसोत्थिअसोवत्थिअपुस्समाणववद्धमीणमच्छंडमकरंडजारमारफुल्लावलिपउमपत्तसागरतरंग वासंतिपउमलयमत्तिचित्तेहिं सच्छाएहिं सप्पभेहि सस्सिरीएहिं 'ति दृश्यम् ।

अस्यार्थः-मृदङ्गो लोकप्रतीतो यो मर्द्दलस्तस्य पुष्कर-चर्म्मपुटं 'सरतले इ व'त्ति पानीयेन परिपूर्णं भूतं तडागं-सरस्तस्य तलमुपरितनो भागः सरस्तल, करतलं प्रतीत, चन्द्रमण्डलं सूर्यमण्डलं च । यद्यपि तत्त्ववृत्त्या उत्तानीकृतार्द्धकपित्थाकारपाठप्रासादापेक्षया वृत्ताऽऽलेखमिति तद्गतो दृश्यमानो भागो न समतलः, तथापि प्रतिभासते समतल इति तदुपादानम् । आदर्शमण्डल सुप्रसिद्धं, 'उरब्भचम्मे इ वे 'त्यादि । अत्र सर्वत्रापि अनेकशङ्कुकीलकसहस्रविततमिति विशेषणयोगः । उरभ्र-ऊरण । वृषभ-वराहसिंहव्याघ्रमृगाः प्रतीताः । द्वीपी-चित्रकः । एतेषां प्रत्येकं चर्म्म अनेकैः शङ्कुप्रमाणैर्लघुभिः कीलक-सहस्रैर्विततं-ताडितं तथाभूतं च चर्म्म अत्यन्त समं भवति । महद्भिर्हि कीलकैस्ताडितं प्रायो मध्ये क्षामं भवति, न पुनः समतलं तथाभूतताडाऽसम्भवात् अतः शङ्कुशब्दग्रहणम् । अथ कथंभूतैर्मणिभिः ? इत्याह 'आवडपचावडे 'त्यादि । आवर्त्तादीनि-मणीनां लक्षणानि । तत्रावर्त्त प्रतीतः । एकस्याऽऽवर्त्तस्य प्रत्यभिमुख आवर्त्तः प्रत्यावर्त्तः । श्रेणिः-तथाविधविन्दुजातादेः पङ्क्तिस्तस्याश्च श्रेणेर्या विनिर्गताऽन्या श्रेणिः सा प्रश्रेणिः । स्वस्तिकः प्रतीतः । सौवस्तिकपुष्पमाणवौ लोकात्प्रत्येतव्यौ । वर्द्धमानकं-शरावसम्पुटम् । मत्स्यकाण्डमकरकाण्डे प्रतीते । 'जारमारे 'त्ति लक्षणविशेषौ सम्यग्मणिलक्षणवेदिनो लोकाद्वेदितव्यौ । 'फुल्लावलि 'त्ति पुष्पावलिं पद्मपत्रसागरतरङ्गवासन्तीपद्मलताः प्रतीताः । तासां भक्त्या-विच्छित्त्या चित्रमालेखो येषु ते आवर्त्तप्रत्यावर्त्तश्रेणिस्वस्तिकसौवस्तिकपुष्पमाणववर्द्धमानकमत्स्यकाण्डमकरकाण्ड-जारमारपुष्पावलिपद्मपत्रसागरतरङ्गवासन्तीपद्मलताभक्तिचित्रास्तैः, किमुक्तं भवति-आवर्त्तादिलक्षणो-पेतैर्मणिभिरित्यर्थः । तथा सच्छायैः सत्प्रभैः समरीचिकैः-बहिर्विनिर्गतकिरणजालसहितैः सोद्योतैर्बहिर्व्य-वस्थितप्रत्यासन्नवस्तुस्तोमप्रकाशकरोद्योतसहितै एवंभूतैर्नानाजातीयैः पञ्चवर्णैर्मणिभिस्तृणैश्चोपशोभित इति । अथ केनोल्लेखेन पञ्चवर्णोपेतताऽमीषामित्याह-'त जहा किण्हेहिमि 'ति । तद्यथेत्युपदर्शने । 'किण्हेहिमि 'ति । किंविशिष्टैर्मणिभिस्तृणैश्च ? कृष्णैः कृष्णवर्णोपेतैः । एव 'वण्णो'त्ति एवमिति प्रागुक्त-प्रकारेण कृष्णैरिव नीलैर्लोहितैः पीतैः शुक्लैश्च, वर्णाः कृष्णादिपञ्चविधः शोभाहेतुः 'णेअव्व 'त्ति वक्ष्य-माणपदस्य सर्वत्र सम्बन्धादिहापि ज्ञातव्य इति सम्बन्धनीयम् । तत्र कृष्णत्वेन साम्योऽपि अनेका-

र्वान्तरभेदभिन्नानां कृष्णानां मणीनां तृणानां च विचित्रः सन् कृष्णो वर्ण्णः सजलजलधराञ्जनखञ्जनकज्जल-गवलजम्बूफलकोकिलादीनां वर्ण्णेन नोपमयितुं शक्यते, ततोऽप्यतिशायित्वेन अत्यन्तकमनीयत्वेन च मनोहरत्वात् । एवं नीलानां मणीनां तृणानां च नीलत्वेन साम्येऽपि नीलवर्ण्णः इन्द्रनीलोत्पलनीली-गुलीकाशुकशुकपिच्छवलदेवांशुकचाषचाषपिच्छमयूरग्रीवाभृङ्गपत्रवनराजिप्रभृतीनां नीलवर्ण्णादप्यति-शायी अतिकमनीयश्च । तथा रक्तानां मणीनां तृणानां च रक्तवर्णो बालेन्द्रगोपकबालदिवाकरगुञ्जार्द्ध-भागजात्यहिङ्गुलकशिलाप्रवालप्रवालाङ्कुरलाक्षारसजपाकुसुमरक्तोत्पलरक्तबन्धुजीवादीनां रक्तवर्ण्णा-दप्यतिशायी रमणीयश्च । तथा पीतानां मणीनां तृणानां च पीतवर्ण्णः वासुदेववस्त्रचम्पककुसुम-हरिद्राचूर्णहरितालगुलिकावरकनकनिकषसुवर्णयूथिका—कुसुमादीनां पीतवर्ण्णादप्यतिशायी रमणीयश्च । तथा शुक्लानां मणीनां तृणानां च शुक्लवर्ण्णः अङ्कशङ्खचन्द्रकुमुदोदकरजोदधिक्षीरपूरक्रौञ्चहंसवलाहकहा-रावलिमयूरपिच्छमिञ्जादीनां शुक्लवर्ण्णादप्यतिशायी कमनीयश्चेति द्रष्टव्यः चक्षुर्मनसोरत्याह्लादकत्वात् । तथा गन्धोऽपि तेषां मण्यादीनां कर्प्पूरकस्तूरिकागन्धादप्यतीव घ्राणमनःप्रह्लादकारी । स्पर्शोऽपि हंसगर्भोऽर्कतूलनवनीतशिरीषकुसुमसञ्चयस्पर्शादप्यतीवसुकुमारतरः । तथा शब्दोऽपि तेषां मण्यादीनां पूर्व्वादिदिग्विदिक्सम्भवैर्वातैर्मन्द मन्दं प्रकम्प्यमानानां तन्निवासिदेवजनपुण्यानुभावतः सुनिपुणशिल्पि-जनवाद्यमानवेणुवीणामृदङ्गध्वनेरपि तिरस्कारप्रवणध्वनिना श्रुतिमनोनिर्वृतिकरः प्रादुर्भवति । अथैवंविधे भूभागेऽपरमपि यदस्ति तदाह—' पुक्खरिणीओ ' त्ति । अनन्तरोदितमणितृणादिशोभिते वनखण्डभूभागे यथोचितस्थानेषु पुष्करिण्यो वर्त्तन्ते । ताश्च तपनीयमयतलाः वज्रमयपार्श्वाः सुवर्णरजतमयवालुकाः सुखाव-तारोत्तारनानामणिनिबद्धतीर्थाः परमसुगन्धिशतपत्रसहस्रपत्रादिसङ्कीर्ण्णाः बहुतरोत्पलकुमुदनलिन-सुभगसौगन्धिकपुण्डरीकशतपत्रसहस्रपत्रकेसरपुञ्जोपचिताः षट्पदपरिभुज्यमानकमला अतिस्वच्छ विमलसलिलसम्पूर्ण्णाः अतिप्रभूतभ्रमन्मत्स्यकच्छपाः अनेकशकुनिमिथुनकव्याप्ता. प्रत्येकं पद्मवरवेदि-काभ्यां परिक्षिप्ताः काश्चन चंद्रहासादिपरमासवोदकाः, काश्चन वारणसमुद्रसदृशोदकाः, काश्चन क्षीरो-दका., काश्चन घृतोदकाः । एवं इक्षुरसामृतरसस्वाभाविकरसोदका अपि वक्तव्याः । सर्व्वा अपि पुष्करिण्यो वृत्ताकाराः । न च तत्र वनखण्डे केवलं पुष्करिण्य एव सन्ति, किन्तु पुष्करिण्युपलक्षिताः अपरेऽपि जलाश्रयाः । यथा वह्व्यश्चतुरस्राऽऽकारा वाप्यः, वह्व्यः सारिण्यो–दीर्घिकाऽपरपर्यायाः, वह्व्यो वक्रसारिण्यो गुञ्जालिकाऽपरपर्यायाः, बहूनि पुष्पावकीर्ण्णानि सरांसि, वह्व्य सरःपङ्क्तयः, वह्व्यः कूप-पङ्क्तयश्चापि द्रष्टव्या. । तासां च पुष्करिणीनां प्रत्येकं प्रत्येकं चतसृषु दिक्षु चत्वारि वज्रमयनेमानि रिष्टरत्नमयप्रतिष्ठानानि वैडूर्यमयस्तम्भानि सुवर्ण्णरूप्यमयफलकानि नानामणिमयावलम्वनानि, अवलम्वनं नाम अवतरतामुत्तरतां च सुखार्थं हस्तावष्टम्भकम् । एवंविधानि विशिष्टरूपाणि त्रिसोपानकानि सन्ति । तेषां च प्रत्येकं प्रत्येकं नानामणिमयानि नानामणिमयस्तम्भोपविष्टानि विविधमुक्ताफलोपचितान्तराणि तोरणानि । तेषां च तोरणानामुपर्युत्तरङ्गरूपे फलके नानामणिमयानि स्वस्तिक १ श्रीवत्स २ नन्द्यावर्त्त ३ वर्द्धमानक ४ भद्रासन ५ कलश ६ मत्स्ययुग्म ७ दर्पण ८ रूपाण्यष्टावष्टौ मङ्गलकानि । किं च तेषां तोरणानामुपरि वहवो वज्रमया दण्डा कृष्णचामरध्वजाः लोहितचामरध्वजाः शुक्लचामरध्वजाः । तेषां च तोरणानामुपरि यथास्थानं सर्व्वरत्नमयानि छत्रातिच्छत्राणि, पताकाऽतिपताकाः, मधुरध्वनयः क्षुद्रघ-ण्टिकाः, भूयांसः उत्पलसङ्घाताः कुमुदसङ्घाताश्च वर्त्तन्ते । अथ तत्र वनखण्डेऽपरमपि किमस्ति ? इत्याह-

'पव्वयग'त्ति । पर्वतकाः तत्र वनखण्डे तासां पुष्करिणीनामपान्तरालेषु तत्र तत्र देशे प्रदेशे च वहवः उत्पातादिपर्व्वता जीवाभिगमोक्ता ज्ञातव्या इत्यर्थः। तेषु च पर्वतेषु वहवो व्यन्तरा देवा देव्यश्च क्रीडानिमित्तं वैक्रियशरीरमारचयन्ति । अत एव ते क्रीडापर्व्वतका उच्यन्ते । तत्र चैकैकस्मिन् क्रीडापर्व्वते महानेकैकः प्रासादः । तेषु च प्रासादेषु मध्ये प्रत्येकमेकैकमासनं, परं कचित् हंसासनं क्वचिद् गरुडासन कचिद् भद्रासनं कचिन् मकरासनं कचित् सिंहासनमित्यादि । तथाऽपरमप्याह-'घरगाइ'ति । तत्र वनखण्डे गृहाणि वक्तव्यानि । तानि चैवं-तस्य वनखण्डस्य मध्ये तत्र तत्र देशे प्रदेशे च सर्वरत्नमयानि नानाप्रकाराणि गृहाणि ज्ञातव्यानि । तद्यथा-कचित कदलीगृहं क्वचित् केतकीगृहं कचिल्लतागृहं कचित् प्रेक्षणकगृहं कचिदवस्थानगृहं कचित् मज्जनकगृहं कचिन् मण्डनकगृहं कचिन्मोहनगृहं कचित्कुसुमगृहं कचिच्चित्रप्रधानगृहं कचिद्गीतनृत्याभ्यासयोग्यं गन्धर्व्वगृहं क्वचिदादर्शगृहं कचित् जालकगृहं कचित् शालाप्रधानगृहमित्यादि । एतेषां च गृहाणामन्तः प्रत्येकमेकैकसङ्ख्याकानि तन्निवासिदेवजनयोग्यानि सर्व्वरत्नमयानि नानाप्रकाराणि हंसासनगरुडासनप्रभृतीन्यासनानि सन्तीति । अथाऽपरमपि यथा 'मंडवग'त्ति मण्डपकः । तस्य वनखण्डस्य मध्ये तत्र तत्र देशे प्रदेशे च सर्व्वरत्नमया भूयांसो मण्डपका ज्ञातव्या इत्यर्थः । तत्रापि क्वचिज्जातिमण्डपकः क्वचिन् मालतीमण्डपकः क्वचिन् मालिकामण्डपक कचिन्नवमालिकामण्डपक इत्यादि। अथैतेषु मण्डपेषु यदस्ति तदाह-'पुढविसिलावट्टगा य'त्ति । एतेषु मण्डपेषु मध्ये भूयांसो नयनानन्दकारिणः कनकमयाः पृथिवीशिलापट्टकाः ज्ञातव्याः । चकारः समुच्चये । तेष्वपि कश्चिद् हंसासनसंस्थितः कश्चिद् गरुडासनसंस्थितः कश्चिन् मयूरासनसंस्थित इत्यादि । एतच्च वर्ण्णनं जीवाभिगमोक्तानुसारेण दिङ्मात्रतो दर्शित द्रष्टव्यम् । अथैते चोत्पातपर्वतादयः प्रायः केषां भोग्या ? इत्याह-'तत्थ ण वहवे' इत्यादि । तत्रैतेषु उत्पातपर्वतगतहंसासनादिषु यावन्नानारूपसंस्थानसंस्थितपृथिवीशिलापट्टकेषु णमिति प्राग्वत् । प्रागूजन्मोपार्जितपुण्योपचया बहवो वानमन्तरा देवा देव्यश्च यथा सुखमासते, शेरते दीर्घकायप्रसारणेन, न तु निद्रां कुर्व्वन्ति । तेषां देवयोनिकतया तस्या अभावात् । उपलक्षणात् 'चिट्ठंति निसीअंति तुअट्टंति रमंति ललंति मोहंति पुरा पुराणाण सुचिण्णाणं सुपरिकतोणं सुभाण कल्लाणोणं कडाणं कम्माणं फलवित्तिविसेसं पच्चणुभवमाणा विहरंति त्ति ।

अस्यार्थः-तत्र तिष्ठन्त्यूर्ध्वस्थानेन, निषीदन्ति-उपविशन्ति-'तुअट्टंति' त्वग्वर्त्तनं कुर्व्वन्ति वामपार्श्वेत परावृत्य दक्षिणपार्श्वेनावतिष्ठन्ते दक्षिणपार्श्वतो वामपार्श्वेनावतिष्ठन्त इति भावः । रमन्ते-रतिमाबध्नन्ति, ललन्ति-मनईप्सितं यथा भवति तथा प्रवर्त्तन्त इति भावः । क्रीडन्ति-यथासुखमितस्ततो गमनविनोदेन गीतनृत्यादिविनोदेन वा अवतिष्ठन्ते, मोहन्ति-मैथुनसेवां कुर्व्वन्ति । एवप्रकारेण पुरा-पुराणाणमिति । पुरा-पूर्व्वं प्राग्भवे इत्यर्थः । पौराणाना-चिरन्तनानां सुचीर्ण्णानां-सुचरितानाम् । इह सुचरितजनितं कर्मापि कार्ये कारणोपचारात् सुचरितमिति विवक्षितमिति । ततोऽय भावार्थः-विशिष्टतया तथाविधधर्म्मानुष्ठानविषयाऽप्रमादकरणक्षान्त्यादिसुचरितजनितानां । सुपराक्रान्तानाम् । अत्रापि कार्ये कारणोपचारात् सुपराक्रान्तजनितानि सुपराक्रान्तानीत्युक्तं भवति । सकलसत्त्वमैत्री-सत्यभाषण-परद्रव्यानपहार-सुशीलादिरूपसुपराक्रमजनितानामित्यर्थः । अत एव शुभानां-शुभफलानाम् । इह किञ्चिद् शुभफलमपीन्द्रियमतिविपर्यासात् शुभफलमाभाति, ततस्तात्त्विकशुभत्वप्रतिपत्त्यर्थमस्यैव पर्याय-

शब्दमाह–'कल्लाणाणं ति । कल्याणाना तत्त्ववृत्त्या तथाविधविशिष्टफलदायिनाम् । अथवा कल्याणानामनर्थोपशमकारिणां कृतानां कर्म्मणां फलवृत्तिविशेषं प्रत्यनुभवन्तो विहरन्त्यासते इति । एव पद्मवरवेदिकाया बहिर्यो वनखण्डस्तद्वक्तव्यतोक्ता । सम्प्रति तस्या एव पद्मवरवेदिकाया अर्व्वाक् जगत्या उपरि यो वनखण्डस्तद्वक्तव्यतामभिधित्सुराह–'तीसे णं जगईए' इत्यादि । तस्या जगत्या उपरि पद्मवरवेदिकाया अन्तर्मध्येऽत्र महानेको वनखण्डः प्रज्ञप्तः । 'देसूणाइ दो जोअणाइ 'ति देशोने अर्द्ध-तृतीयधनुःशतोने द्वे योजने विष्कम्भेन वेदिकासमः परिक्षेपेण । वर्ण्णकमधिकृत्य 'किण्हे जाव तण-विहूणे 'त्ति कृष्णो यावत्तृणविहीनः । यावत्करणात् वहिर्वनखण्डवन्निरवशेप वक्तव्यम् । नवर तृणविहीनः । 'दण्डाऽभावे दण्डयभाववद्विशेषणाऽभावे विशिष्टस्याप्यभाव' इति वचनात् निपुणशिल्पिजनवाद्यमानवेणु-वीणामृदङ्गध्वनेरपि तिरस्कारप्रवणेन ध्वनिना विशिष्टानि यानि तृणानि तैर्विहीनः-शून्यः ज्ञातव्य' । वर्णक इति गम्य, न पुनः स्वरूपसद्भिरपि तृणैः, तेषां शब्दस्यैव निषिद्धत्वात् । यदुक्तं श्रीजीवाभिगमे–'वण्णसंडवण्णओ तणसद्दविहूणो णेअव्वो त्ति । एतद्वृत्त्येकदेशो यथा–सर्व्वं वहिर्वनखण्डवदविशे-षेण वक्तव्य, नवरमत्र मणीना तृणाना च शब्दो न वक्तव्यः, पद्मवरवेदिकान्तरिततथाविधवाताऽभावतो मणीनां तृणानां च चलनाभावेन परस्परं सङ्घर्षणाऽभावात् । तथा चाह–'वणसंडवण्णओ सद्दवज्जो जाव विहरति 'त्ति । ननु अनन्तरमेव वेदिकाया वहिर्वनखण्डवर्ण्णनाधिकारे तृणानामिव मणीनामपि वर्ण्णगन्धस्पर्शवदविशेषेण ध्वनिरप्यभिहितः । साम्प्रतमर्वाचीनवनखण्डे तृणानामेव शब्दराहित्यं भणित, तत्किमिहापि मणीनां ध्वनिरस्तीति चेत् ? मैवं, तृणानां तथाविधध्वनिनिषेधे मणीनामपि तन्निषेध-स्यावश्यभावात् । यतो द्वयोरपि ध्वनेः कारणस्य वातजन्यपरस्परसङ्घर्षणरूपस्य तौल्येऽपि तृणचाल-नाद्यसमर्थो वातो मणीन्न चालयत्येवेति सिद्धं तृणाना ध्वनेरभावे मणीनामपि ध्वनेरभाव एवेति । यथाऽस्त्यत्र प्रदेशे धूम इति व्याप्योक्तावनुक्तोऽपि व्यापको वह्निः सिद्ध्यत्येव । यद्वा–जैनप्रवचने प्रमेय-साम्ये प्रायः सूत्रपाठोऽपरसूत्रानुसार्येव दृश्यते, तेन 'तणविहूणे 'त्ति स्थाने जीवाभिगमसूत्रानुसारेण 'तणसद्दविहूणो 'त्ति । तट्टीकोक्तसम्मत्यनुसारेण तु सद्दविहूणो इत्यपि पाठो युक्त इवाऽऽभाति । तत्त्वं तु प्रवचनविद्वेद्यमिति ।

अथ जम्बूद्वीपस्य कति द्वाराणि ? इति पृच्छति

जंबुद्दीवस्स णं भंते ! दीवस्स कइ दारा पण्णत्ता ? गो० ! चत्तारि दारा पण्णत्ता । तं० विजये वेजयंते जयंते अपराजिए । कहि णं भंते ! जंबुद्दीवस्स दीवस्स विजए णामं दारे पण्णत्ते ? गोअमा ! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरत्थिमेणं पणयालीसं जोअणसहस्साइं वीति-वइत्ता जंबुद्दीवे दीवे पुरत्थिमपज्जंते लवणसमुद्दपुरत्थिमद्धस्स पच्चत्थिमेणं सीआए महाणईए उप्पिं एत्थ णं जंबुद्दीवस्स विजए णामं दारे पण्णत्ते । अट्ठ जोअणाइं उद्धुं उच्चत्तेणं, चत्तारि जोअणाइं विक्खंभेणं, तावइअं चेव पवेसेणं सेए वरकणगथूभिआए जाव दारस्स वण्णओ जाव रायहाणी । एवं चत्तारि वि दारा सरायहाणीआ भाणिअव्वा ।

'जंबुद्दीवस्स णमि 'त्यादि । जम्बूद्वीपस्य द्वीपस्य भदन्त ! कति द्वाराणि प्रज्ञप्तानि ? भगवानाह-

गौतम ! चत्वारि द्वाराणि प्रज्ञप्तानि । अथ विनीतशिष्यबुद्धिवृद्धयेऽपृष्टोऽपि भगवान् स्वयमेवाह 'तं जहे'-त्यादि । तद्यथेति प्रस्तुतवस्तुव्यक्त्युपदर्शने । विजयं वैजयंतं जयंतं अपराजितं चेति । अथ तत्र प्रथमं विजयद्वारं क्वास्ति ? इति प्रश्नयति–' कहि णं भंते ! 'इत्यादि । क्व भदन्त ! जम्बूद्वीपस्य द्वीपस्य विजयं नामं ति विभक्तिपरिणामात् नाम्ना द्वारं प्रज्ञप्तं ? भगवानाह–गौतम ! जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य 'पुरत्थिमेणं'ति पूर्वेण–पूर्वस्यां दिशीत्यर्थः । पञ्चचत्वारिंशतं योजनसहस्राणि व्यतिव्रज्य–व्यतिक्रम्य यो जम्बूद्वीपस्य ' पुरत्थिमपज्जंते 'त्ति पूर्वपर्यन्तः लवणसमुद्रस्य पूर्वार्द्धस्य ' पचत्थिमेणं 'ति पश्चिमेन पश्चिमदिग्भागे इत्यर्थः । शीताया महानद्या 'उप्पि'ति–उपरि 'एत्थ णं'ति एतस्मिन् प्रदेशे जम्बूद्वीपस्य विजयं नाम्ना द्वारं प्रज्ञप्तं, तच्चोर्ध्वमुच्चैस्त्वेन अष्टौ योजनानि, चत्वारि योजनानि विष्कम्भेन ' तावइअं 'ति तावदेव चत्वारि योजनान्येव प्रवेशेन 'सेए'त्ति श्वेत बाहुल्येनाङ्करत्नमयत्वात् ' वरकणग 'त्ति वरकनका प्रधानकनकमयी स्तूपिका–शिखरं यस्य तत्तथा । पुंस्त्वं च प्राकृतत्वात् । ' जाव दारस्स वण्णओ 'त्ति यावद् द्वारस्य वर्णकः । स च जीवाभिगमोक्त इहापि वक्तव्यः । तथाहि–' ईहामिगउसभतुरगनरमगर-विहगवालगकिंनररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ते ' ईहामृगादीनां चित्रमालेखो यत्र तत्तथा । तत्र ' ईहामृगो-वृकः । शेषा ऋषभादयः प्रतीता एव । ' खंभुग्गयवयरवेइआपरिगयाभिरामे ' स्तम्भोद्गतया–स्तम्भोपरिवर्तिन्या वज्ररत्नमय्या वेदिकया परिगतं सदभिरामं तत्तथा । 'विज्जाहरजमल-जुअलजंतजुत्ते इव ' विद्याधरयोर्यमलयुगलं–समश्रेणिकं स्त्रीपुरुषरूपं द्वन्द्वं तच्च तद्यन्त्रं च–सञ्चारिष्णु-प्रतिमाद्वयरूपं तेन युक्तं तदिव । तथा 'अच्चिसहस्समालिणीए' अर्चिषां–किरणानां सहस्रैर्मालिनीयं–परिवार-णीयं यद् दृष्ट्वा द्रष्टृणां सम्भावना जायते–नूनमेतन्न स्वाभाविकार्चिःसमुदायोपेतं किन्तु विशिष्टविद्या-शक्तिमत्पुरुषविशेषप्रपञ्चप्रयुक्तं, तथा रूपकसहस्रकलित ' भिसिमाणे 'त्ति दीप्यमानं ' भिब्भिसिमाणे 'त्ति अतिशयेन दीप्यमानं ' चक्खुल्लोअणलेसे ' चक्षुः कर्तृभूतं लोकने लिशतीव–श्लिष्यतीव यत्र तत्तथा । ' सुहफासे ' शुभः-कोमलः स्पर्शो यस्य तत्तथा । तथा सश्रीकरूपं–सशोभं रूपं यस्येति । एवंविधस्य विजयद्वारस्य वज्रमया नेमा–नेमा नाम भूमिभागादूर्ध्वं निष्क्रामन्तः प्रदेशाः, रिष्टरत्नमया मूलपादाः, वैडूर्यरत्नमयाः स्तम्भाः, सुवर्णमणिरत्ननिबद्धं भूमितलं, हंसगर्भरत्नमया देहली, गोमेयरत्नमय इन्द्र-कीलकः, लोहिताक्षरत्नमये द्वारशाखे, ज्योतिरत्नमयं द्वारस्योपरि तिर्यग् व्यवस्थितं फलकं, निच्छिद्राऽति-निबिडौ वैडूर्यरत्नमयौ कपाटौ, लोहिताक्षरत्नमय्यः सूचयः ताश्च फलकद्वयसम्बन्धविघटनाऽभावहेतुकाः पादुकास्थानीयाः, वज्ररत्नैरापूरिताः कपाटसम्बन्धिनां फलकानां सन्धयः, नानामणिमयानि समुद्गकाऽऽकृतीनि चूलिकागृहाणि, वज्ररत्नसम्बन्धिनी अर्गला अर्गलाप्रासादश्च, अर्गलाप्रासादो नाम यत्राऽर्गला नियम्यते, रत्नमय्य आवर्त्तपीठिकाः याश्चेन्द्रकीलिकास्थानानि, अङ्करत्नमया उत्तरपार्श्वाः, तथा द्वारस्योभयोः पार्श्व-योस्तिस्रः षट्पञ्चाशतो भित्तिगुलिकाः, ताश्च पीठकसंस्थानीयाः । तासु च भित्तिगुलिकासु तावत्प्रमाणाः शय्याः लीलास्थितसालभञ्जिकाश्च । वज्रमयो माडभागस्तस्य रजतमयं शिखरं, एतच्च द्वारशिखरापेक्षया भिन्नं, तपनीयमय उपरितनभागः, नानामणिरत्नमया गवाक्षाः, अङ्करत्नमयाः पक्षाः । ते च द्वारस्यैकदेशाः, ज्योतिरसमया महान्तः पृष्ठवंशाः तेषां चोभयतः स्थाप्यमाना वंशाः, कवेल्लुकानि च प्रतीतानि, रत्नमय्यः पट्टिकाः ताश्च वंशानामुपरि कम्बास्थानीयाः, जातरूपमय्योऽवघाटन्यः ताश्चाच्छादनहेतुकम्बोपरि स्थाप्य-

माना महाप्रमाणाः कलिञ्चस्थानीयाः, वज्ररत्नमय्योऽवघाटनीनामुपरि पुञ्छन्य' ताश्च निबिडतराऽऽच्छादनहेतुश्लक्ष्णतृणविशेषस्थानीयाः, पुञ्छनीनामुपरि कवेल्लुकानां चाऽवस्तात् सर्व्वश्वेतरजतमयमाच्छादनं, तथा तिलकाऽर्द्धचन्द्रादिचित्रयुक्तम् अन्तर्वहिश्च श्लक्ष्णं तपनीयवालुकाप्रस्तारयुक्तं सुखस्पर्शं शुभस्पर्शं वा सश्रीकरूपमित्यादि द्वारवर्ण्णनम्। तथा विजयद्वारेऽलङ्कारकर्तृणि वस्तूनि–यथा उभयोः पार्श्वयोर्द्वे नैषेधिक्यौ, नैषेधिकी नाम निषीदनस्थानम्। तस्या द्वे द्वे चन्दनकलशपरिपाट्यौ। ते च कलशाः सुरभिवरवारिपरिपूर्णाः कण्ठारोपितरक्तसूत्राः चन्दनचर्चिताः पद्मोत्पलपिधानाः कमलप्रतिष्ठानाः महेन्द्रकुम्भसमाना सर्व्वरत्नमयाः। अच्छा इत्यादिविशेषणानि प्राग्वत्। तथा विजयस्य द्वारस्योभयोः पार्श्वयोर्द्वयोर्नैषेधिक्योः प्रत्येक द्वे द्वे नागदन्तपरिपाट्यौ प्रज्ञप्ते। तत्र नागदन्ता अङ्कुटाः, ते च मुक्ताजालान्तरेषु लम्बमानैः सुवर्णमयदामसमूहैः गवाक्षाऽऽकृतिरत्नविशेषमालासमूहैः क्षुद्रघण्टिकासमूहैश्च सर्व्वतो व्याप्ता'। तिर्यग्भित्तिप्रदेशैर्मनागप्यचलनेन परिगृहीताः। अग्रिमभागे मनागुन्नताः अधोभागे पन्नगार्द्धवदतिसरला दीर्घाश्च गजदन्ताकाराः सर्व्वात्मना वज्रमयाः। अच्छा इत्यादि प्राग्वत्। तथा तेषु नागदन्तेषु बहवः कृष्णसूत्रनिबद्धा अवलम्बमानाः पुष्पमालासमूहाः, बहवो नीलसूत्रबद्धा माल्यदामकलापाः। एवं लोहितहारिद्रशुक्लसूत्रबद्धा अपि वाच्याः। तानि च दामानि तपनीयलम्बूसकयुक्तानि, लम्बूसको नाम दाम्नामग्रिमभागे लम्बमानो गोलकाकृतिमण्डनविशेषः। तथा सुवर्णपत्रमण्डितानि नानामणिरत्नविचित्रहारार्द्धहारोपशोभितसमुदायानि ईषदन्योऽन्यमसंलग्नानि पूर्वादिदिगाऽऽगतैर्वातैर्मन्दं मन्दमेजितानि–कम्पितानि चालितानि परस्परसङ्घर्षणेन उदारमनोज्ञैः श्रोतृजनश्रोत्रमनोनिर्वृतिकरैश्च शब्दैर्युक्तानि सुखोत्पादकानि सर्व्वास्वपि दिक्षु प्रत्यासन्नान् देशान् शब्दैरापूरयन्ति अतीवोपशोभमानानि तिष्ठन्ति। तथा तेषां नागदन्तानामप्युपरि प्रत्येक द्वे द्वे नागदन्तपरिपाट्यौ प्रज्ञप्ते। तेऽपि नागदन्तका' प्रागुक्तनागदन्तका इव यावद्गजदन्तसमानाः प्रज्ञप्ताः। तेषु च नागदन्तकेषु बहूनि रजतमयानि सिक्ककानि, सिक्ककेषु च वैडूर्यरत्नमया धूपघटिकाः। ताश्च कृष्णागरुप्रभृतीनामुद्धतेन इतस्तत' प्रसृतेन सुगन्धेन घ्राणमनोनिर्वृतिकरेण धूमेनाभिरामाः। तथा 'विजयस्स णं दारस्स उभओ पासिं दुहओ णिसीहिआए दो दो सालभंजिआपरिवाडीओ पण्णत्ताओ'। विजयस्य द्वारस्योभयोः पार्श्वयोः एकैकनैषेधिकीसद्भावेन द्विप्रकारायां नैषेधिक्यां द्वे द्वे सालभञ्जिकापरिपाट्यौ प्रज्ञप्ते। ताश्च सालभञ्जिकाः किंलक्षणा? इत्याह–'लीलट्ठिआओ' लीलया–ललिताङ्गनिवेशरूपया स्थिताः। 'सुपइट्ठिआओ' सुष्ठु–मनोज्ञतया प्रतिष्ठिताः। 'सुअलंकिआओ' सुष्ठु–अतिशयेन रमणीयतया अलङ्कृताः। 'णाणाविहरागवसणाओ' नानाविधो–नानाप्रकारो रागो येषामेवंविधानि वसनानि–वस्त्राणि संवृततया यासां तास्तथा 'णाणामल्लपिणद्धाओ' नानारूपाणि माल्यानि पिनद्धानि–आविद्धानि यासां तास्तथा 'मुट्ठिगेज्झसुमज्झिमाओ' मुष्टिग्राह्यं सुष्ठु–शोभनं मध्यं–मध्यभागो यासां तास्तथा 'आमेलगजमलजुअलवट्टिअअब्भुण्णयपीणरइअसंठिअपओहराओ' पीनं–पीवरं रचितं संस्थित–संस्थानं यकाभ्यां तौ पीनरचितसंस्थानौ आमेलक–आपीडः शेखरक इत्यर्थः। तस्य यमलयुगलं–समश्रेणीकं यद्युगलं तद्वद्वर्त्तितौ–वद्धस्वभावावुचितकठिनभावाविति भावः। एवंविधौ चाभ्युन्नतौ च पीनरचितौ सस्थितौ पयोधरौ यासां तास्तथा। 'रत्तावंगाओ' रक्त अपाङ्गो–नयनोपान्तरूपो यासां तास्तथा। 'असिअकेसीओ' असिताः–कृष्णाः केशा यासा तास्तथा। 'मिउविसयपसत्थलक्खणसंवेल्लिअग्गसिरयाओ' मृदवः–सुकुमारा विशदा–निर्म्मलाः

प्रशस्तान्यस्फुटितत्वप्रभृतीनि लक्षणानि येषां ते प्रशस्तलक्षणाः। संवेल्लितं-संवृतमग्रं शेखरककरणाद्येषां ते संवेल्लिताग्राः। एवंविधाः शिरोजाः-केशा यासां तास्तथा। 'ईसि असोगवरपायवसमुट्ठिआओ' ईषन्मनागशोकवरपादपे समुपस्थिता-आश्रिताः। तथा 'वामहत्थगहिअग्गसालाओ'। वामहस्तेन गृहीतमग्रं शालायाः-शाखायाः अर्थादशोकेवरपादपस्य यकाभिस्तास्तथा। 'ईसिं अद्धच्छिकडक्खचेट्ठिएहिं लूसेमाणीओ इव' अर्द्धं-तिर्यक् वलितमक्षि येषु कटाक्षरूपेषु चेष्टितेषु तैः 'लूसेमाणीओ इव'त्ति मुष्णन्त्य इव सुरजनानां मनांसि 'चक्खुल्लोअणलेसेहिं अण्णमण्णं खिज्जमाणीओ विव' अन्योन्य-परस्परं चक्षुषां लोकनेन लेश्याः-संश्लेषास्तैः खिद्यमाना इव। किमुक्तं भवति-एवं तास्तिर्यग्वलिताक्ष-कटाक्षैः परस्परं खिद्यन्त इवेति। पृथिवीपरिणामाः शाश्वतभावमुपागताः, चन्द्राननाः चन्द्रविलासिन्यः चन्द्रार्द्धसमललाटाः चन्द्रादप्यधिकसौम्यदर्शनाः अर्का इवोद्योतमानाः अनावृतसूर्यतेजःप्रकाशाः शृङ्गारागारचारुवेषाः प्रासादीयाः दर्शनीयाः अभिरूपाः प्रतिरूपाश्च। तथा विजयद्वारस्योभयोः पार्श्वयोः द्विप्रकारायामपि नैषेधिक्यां द्वौ द्वौ जालकटकौ। इह जालकटको नाम-जालकाऽऽकीर्णाः रम्यसंस्थानाः प्रदेशविशेषास्ते च सर्वे रत्नमयाः। तथा विजयद्वारस्योभयोः पार्श्वयोः द्वे द्वे घण्टापरिपाट्यौ। ताश्च घण्टा जाम्बूनदमय्यः, वज्रमय्यो लालाः, नानामणिमया घण्टापार्श्वाः, तपनीयमय्यः शृङ्खला यासु ता अवलम्बितास्तिष्ठन्ति रजतमय्यो रज्जवः। ताश्च घण्टा ओघस्वराः-प्रवाहेण स्वरो यासां तास्तथा। एवं मेघस्वराः हंसस्वराः क्रौञ्चस्वराः सिंहस्वराः दुन्दुभिस्वराः नन्दिस्वराः-द्वादशतूर्यसङ्घातो नन्दिः। मञ्जु-स्वराः उदारस्वराः सुस्वराश्च। एवमुभयोः पार्श्वयोर्द्वे द्वे वनमालापरिपाट्यौ। ताश्च वनमाला नाना-द्रुमाणां नानालतानां च यानि किशलयानि ये च पल्लवास्तैः समाकुलाः षट्पदपरिभुज्यमानकमलाश्रयाः सश्रीकाः यावत्प्रतिरूपाः। तथा विजयस्य द्वारस्योभयोः पार्श्वयोः एकैकस्यां नैषेधिक्यां द्वौ द्वौ प्रकण्ठकौ। प्रकण्ठको नाम पीठविशेषः। चूर्णिकारमते तु आदर्शवृत्तः पर्यन्ताऽवनतप्रदेशः पीठः प्रकण्ठ इति। ते च प्रकण्ठाः प्रत्येकं चत्वारि योजनान्यायामविष्कम्भाभ्यां, द्वे योजने बाहल्येन सर्वात्मना वज्रमया अच्छा यावत्प्रतिरूपाः। तेषां च प्रकण्ठकानामुपरि प्रत्येकं प्रत्येकं प्रासादावतंसकः। प्रासादावतंसको नाम प्रासादविशेषः। व्युत्पत्तिरप्येवं-प्रासादानामवतंसक इव-शेखरक इव प्रासादावतंसकः। ते च प्रत्येक चत्वारि योजनान्यूर्ध्वमुच्चैस्त्वेन, द्वे योजने आयामविष्कम्भाभ्यां, तेषां च स्वरूपं यथा-कीदृशास्ते प्रासादाः? 'अब्भुग्गयमूसिअपहसिओ' अभ्युद्गता-आभिमुख्येन सर्वतो विनिर्गता उत्सृता-प्रबलतया सर्वासु दिक्षु प्रसृता या प्रभा तया सिता इव बद्धा इव तिष्ठन्तीति गम्यम्। अन्यथा कथमिव तेऽत्युच्चा निरालम्बास्तिष्ठन्तीति भावः। 'विविहमणिरयणभत्तिचित्ता' विविधा-अनेकप्रकारा ये मणयश्चन्द्रकान्ताद्याः, यानि च रत्नानि कर्केतनादीनि तेषां भक्तिभिर्विच्छित्तिभिश्चित्रा-नानारूपा आश्चर्यवन्तो वा ये ते। तथा 'वाउद्धूअविजयवेजयंतीपडागाछत्ताति(च्छ)त्तकलिआ' वातोद्धूता-वातकम्पिता विजयसूचिका वैजयन्तीनामानो याः पताकाः। अथवा विजया इति वैजयन्तीनां पार्श्वकर्णिका भण्यन्ते तत्प्रधाना वैजयन्त्यो विजयवैजयन्त्यः, छत्रातिच्छत्राणि-उपर्युपरिस्थितान्यातपत्राणि तैः कलिता ये ते तथा 'तुंगा' उच्चा उच्चैस्त्वेन चतुर्योजनप्रमाणत्वात्। अत एव 'गगणतलमणुलिहंत-सिहरा' गगनतलमम्बरतलम् अनुलिखन्त्यतिलङ्घयन्ति शिखराणि येषां ते तथा 'जालंतररयणा' जालानि-जालकानि यानि भवनभित्तिषु प्रतीतानि, तदन्तरेषु विशिष्टशोभानिमित्तं रत्नानि येषु ते

जालान्तररत्नाः 'पंजरुम्मिलिआ इव' पञ्जरादुन्मीलिता इव। यथाहि-किल किमपि वस्तु वंशादिमय-प्रच्छादनविशेषाद्बहिष्कृतमत्यन्तमविनष्टच्छायं भवति, तथा तेऽपि प्रासादावतंसका इति। तेषां शिखराणि मणिकनकमयानि विकसितशतपत्रसहस्रपत्रकमलतिलकार्द्धचन्द्ररूपाणि चित्राणि द्वारादिषु नानामणिमयानि दामानि तैश्चालङ्कृताः। अन्तर्बहिश्च श्लक्ष्णा-मसृणाः तपनीयमयवालुकाविस्तरयुक्ताः सुखस्पर्शाः प्रासादीया अभिरूपाः प्रतिरूपा इति। तेषां भूमिभागवर्ण्णनं 'आलिंगपुक्खरे इ वे'त्यादिना जगतीवनखण्डभूमेरिवावसातव्यम्। तेषां प्रासादानां बहुमध्यदेशभागे प्रत्येकं मणिपीठिकाः। ताश्च योजन-मायामविष्कम्भाभ्यामर्द्धयोजनं च वाहल्येन, सर्वात्मना रत्नमय्यो यावत्प्रतिरूपाः। तासां च मणिपीठि-कानामुपरि प्रत्येकं सिंहासनं, तेषां च वर्ण्णकनिवेशस्त्वेवं-रजतमयाः सिंहाः, सुवर्ण्णमयाः पादाः, तपनीय-मयानि चक्कलानि-पादानामधःप्रदेशाः, नानामणिमयानि पादशीर्षकाणि-पादानामुपरितना अवयवविशेषाः, जाम्बूनदमयानि गात्राणि, वज्ररत्नपूरिताः सन्धयः, नानामणिमयं वेच्चं, वेच्चं नाम वानमित्यर्थः। तानि च सिंहासनानि धृपभाद्यनेकचित्रोपशोभितानि नानामणिरत्नमयपादपीठसहितानि सुकुमाराऽऽच्छादन-युक्तानि नवनीतादिभ्योऽतीव मृदुस्पर्शानि अतिरमणीयेन रक्तवस्त्रेण संवृतानि। तेषां च सिंहासनानामुपरि प्रत्येकं क्षीरोदधिजलफेनसदृशं श्वेतं विजयदूष्यं नाम्ना वस्त्रं, तच्च सर्वात्मना रत्नमयम् अच्छं श्लक्ष्णमित्यादि विशेषणानि प्राग्वत्। तस्य विजयदूष्यस्य वस्त्रस्य बहुमध्यदेशभागे वज्ररत्नात्मकोऽङ्कुशः-अङ्कुशाकारो मुक्तादामालम्बनाश्रयभूतः। तत्र वज्रमयेऽङ्कुशे कुम्भाग्रपरिमाणं-मुक्तादाम प्रज्ञप्तम्। तत्र कुम्भाग्रं मगध-देशप्रसिद्धकुम्भपरिमाणं, तदपि दाम तदर्द्धप्रमाणैरन्यैश्चतुर्भिर्दामभिः सर्वासु दिक्षु सम्परिक्षिप्तम्। एवं सर्व्वेष्वपि सिंहासनेषु उपरिभागे दामानि वक्तव्यानि। तानि च तपनीयलम्बूसकानीत्यादिवर्णन प्राग्वत्। तथा विजयद्वारस्योभयोः पार्श्वयोर्द्विधातो नैषेधिक्यां द्वे द्वे तोरणे स्तः। तानि च तोरणानि नानामणिमयानीत्यादि तोरणवर्णनं निरवशेषं वक्तव्यम्। तेषां तोरणानां पुरतो द्वे द्वे सालभञ्जिके स्तः। सालभञ्जिकावर्णनं च प्राग्वत्। तेषां तोरणानां च पुरतो द्वौ द्वौ नागदन्तकौ, ते च नागदन्तकाः मुक्ताजालान्तरोत्सृता इत्यादि वर्ण्णकः प्राग्वत्। परमत्रोपरि नागदन्तका न वक्तव्यास्तेषामत्रासद्भावात्। तेषां तोरणानां पुरतो द्वौ द्वौ हयसङ्घाटौ द्वौ द्वौ गजसङ्घाटौ द्वौ द्वौ नरसङ्घाटौ किंनरसङ्घाटौ किंपुरुषसङ्घाटावित्यादि। तथा हयादीनां पङ्क्तिवीथीमिथुनकान्यपि चेह ग्रन्थगौरवभयादनुक्तान्यपि जीवाभिगमतो वक्तव्यानि। एवं पद्मलतादयो लताः चन्दनकलशाश्च प्राग्वत् वेदितव्याः। तथा तेषां तोरणानां पुरतो द्वौ द्वावाऽऽदर्शकौ। तेषां चाऽऽदर्शकानामयं वर्ण्णकनिवेशः-तपनीयमयाः प्रकण्ठकाः-पीठविशेषाः, वैडूर्यमया छरुहा आदर्शगण्डप्रतिबन्धप्रदेशाः आदर्शगण्डानां मुष्टिग्रहणयोग्याः प्रदेशा इत्यर्थः। वज्ररत्नमया गण्डाः, नानामणिमयाः शृङ्खलाः, अङ्करत्नमयानि मण्डलानि यत्र प्रतिबिम्बसम्भूतिः चन्द्रमण्डलसदृशा अपरिकर्मितसदोद्योता अर्द्धकायप्रमाणाः। तथा तेषां तोरणानां पुरतो वज्रनाभे द्वे द्वे स्थाले स्तः। तानि च स्थालानि शुद्धस्फटिकवदच्छैस्त्रिश्छटितैः शालितन्दुलैः पृथिवीपरिणामरूपैर्भृतानि जाम्बूनद-मयानि रथचक्रसमानानि महान्ति अच्छानीत्यादि प्राग्वत्। तथा तेषां तोरणानां पुरतो द्वे द्वे पात्र्यौ स्तः। ताश्च पात्र्यः स्वच्छपानीयपरिपूर्ण्णा नानाविधहरितफलपरिपूर्ण्णाश्च तिष्ठन्ति। न च तज्जलं न वा फलानि किन्तु तथारूपाः शाश्वतभावमुपगताः पृथिवीपरिणामाः सर्वरत्नमया इत्यादि प्राग्वत्। एवं नानाविधानि भाण्डानि नानाविधवस्तुभृतानि पृथिवीपरिणामरूपाणि तिष्ठन्ति। तथा तेषां तोरणाना

पुरतो द्वे द्वे मनोगुलिकानामानौ पीठिके। तासु च मनोगुलिकासु सुवर्णमयानि रूप्यमयानि च फलकानि। तेषु च फलकेषु बहवो वज्रमयो नागदन्तकाः। तेषु च नागदन्तकेषु बहूनि रजतमयानि सिक्कानि। तेषु च बहवो वातकरकाः इत्यादि। तथा तेषां तोरणानां पुरतो द्वौ द्वौ रत्नकरण्डकौ निजप्रभाभिः प्रत्यासन्नवस्तुप्रकाशकौ स्तः। तथा तेषां तोरणानां पुरतो द्वौ द्वौ हयकण्ठौ—हयकण्ठप्रमाणौ रत्नविशेषौ। एवं गजनरकिंपुरुषमहोरगवृषभकण्ठा अपि वाच्याः। तेषु च कण्ठकेषु पुष्पमाल्यगन्धचूर्णवस्त्राभरणसिद्धार्थकलोमहस्तकचङ्गेर्योऽपि वक्तव्याः। एताश्च सर्व्वा अपि रत्नमय्योऽवगन्तव्याः। तेषां तोरणानां पुरतो द्वे द्वे छत्रे। तानि च छत्राणि वैडूर्यरत्नविमलदण्डानि जाम्बूनदमयकर्णिकानि वज्रसन्धीनि अष्टसहस्रवरकाञ्चनशलाकानि मलयोद्भवचन्दनवत् सुगन्धशीतलच्छायानि अष्टमङ्गलभक्तिचित्राणि चन्द्रमण्डलवृत्तानि अच्छानीत्यादि प्राग्वत्। तथा तेषां तोरणानां पुरतो द्वे द्वे चामरे स्तः। तानि च चामराणि चन्द्रकान्तवैडूर्यादिरत्नखचितदण्डानि क्षीरोदजलसमुत्थफेनपुञ्जसन्निभानि रजतमयसूक्ष्मदीर्घवालानि अच्छानीत्यादि प्राग्वत्। तथा तेषां तोरणानां पुरतो द्वौ द्वौ सुगन्धितैलसमुद्गकौ। एवं कोष्ठकादीना समुद्गका वाच्याः। ते सर्व्वेऽपि रत्नमयाः। तथा तस्मिन् विजयद्वारे अष्टशत चक्रध्वजानां—चक्रालेखरूपचिह्नोपेतानां ध्वजानाम्। एवं मकरगरुडयुगच्छत्रपिच्छशकुनिसिंहवृषभचतुर्दन्तहस्तिप्रभृतिचिह्नोपेतानां ध्वजानामष्टशतमष्टशतं वक्तव्यम्। सर्व्वाग्रसङ्ख्यया अशीत्यधिकं केतुसहस्रं भवतीति। एवं विजयद्वारे नव भौमानि सन्ति। तत्र भौमनाम्ना विशिष्टस्थानानि भवन्तीति। तेषां च भौमानां भूमिभागा उपरिभागाः पूर्ववद्वक्तव्याः। तेषां च भौमानां बहुमध्यदेशभागे यत्पञ्चमं भौमं तस्य बहुमध्यदेशभागे विजयद्वाराधिपतेर्विजयदेवस्य योग्यं सिंहासनं प्रज्ञप्तम्। तस्य च वर्णनं प्रागुक्तसिंहासनवद्वक्तव्यम्। तस्य सिंहासनस्य वायव्यामुत्तरस्यामैशान्यां च विजयस्य देवस्य सम्बन्धिनां चतुर्णां सामानिकसहस्राणां चत्वारि भद्रासनसहस्राणि, पूर्वस्यां चतसृणामग्रमहिषीणां चत्वारि भद्रासनानि, आग्नेय्यां अभ्यन्तरपर्षद्रूपाणामष्टानां देवसहस्राणां योग्यान्यष्टौ भद्रासनसहस्राणि, दक्षिणस्यां मध्यमपर्षदो दशानां देवसहस्राणां योग्यानि दश भद्रासनसहस्राणि एवं नैर्ऋत्यां बाह्यपर्षदो द्वादशानां देवसहस्राणां द्वादश सहस्राणि भद्रासनानि, पश्चिमायां दिशि सप्तानामनीकाधिपतीनां योग्यानि सप्त भद्रासनानि, तस्य सिंहासनस्य पूर्वादिचतसृषु दिक्षु विजयस्य देवस्य षोडशानामात्मरक्षकदेवसहस्राणां योग्यानि षोडश भद्रासनसहस्राणि। एवं शेषेष्वपि भौमेषु प्रत्येकं सिंहासनं सामानिकादिदेवयोग्यभद्रासनरहित द्रष्टव्यम्। तथा विजयस्य द्वारस्योपरितनाकारः कर्केतनादिभिः षोडशरत्नैरुपशोभितः। विजयस्य द्वारस्योपर्यष्टावष्टौ मङ्गलकानि। तानि च सर्वरत्नमयानीत्यादि प्राग्वत्।

अथ कथमस्य द्वारस्य विजयमिति नामप्रवृत्तिः? इति जीवाभिगमोक्तं गौतमप्रश्नमाह–'से केणट्ठेण भंते! एवं वुच्चइ विजए णं दारे विजए ण दारे? गोयमा! विजए णं दारे विजए णाम देवे महिड्ढिए जाव महाणुभावे पलिओवमट्ठितीए परिवसति, से णं तत्थ चउण्हं सामाणिअसाहस्सीणं, चउण्हं अग्गमहिसीणं सपरिवाराणां, तिण्हं परिसाणं, सत्तण्ह अणिआणं, सत्तण्हं अणिआहिवईण. सोलसण्हं आयरक्खदेवसाहस्सीण, विजयस्स णं दारस्स विजयाए रायहाणीए अण्णेसिं च बहूण विजयरायहाणीवत्थव्वगाणं देवाण य देवीण य आहेवच्चं जाव दिव्वाइं भोगभोगाइं भुंजमाणे विहरति, से तेणट्ठेणं

गोयमा ! एव वुच्चति विजए दारे विजए दारे। अदुत्तरं च णं गोअमा ! विजयस्स दारस्स सासए णामधिज्जे पण्णत्ते। जण्णं ण कया णासी, ण कया णत्थि, ण कया ण भविस्सति, जाव ठिए णिच्चे विजए दारेत्ति।

अत्र 'देवाण य देवीण य' पर्यन्तं सुगमम्। 'आहेवच्चसि'त्यादि। तीर्थकृज्जन्माभिषेकाव-वसरे साक्षात् सूत्रे भणिष्यमाणत्वेन तत्रैव सविस्तरं व्याख्यास्यामः। अथैवं जीवाभिगमोक्तं वर्ण्णनमिह-कियद्दूरं वक्तव्यम्? इति ज्ञापनार्थं प्रकृतसूत्रमाह—'जाव' रायहाणि'त्ति। यावद्विजयदेवस्य राजधानी तावद्वक्तव्यम्। तत्र प्रसङ्गतो दिङ्मात्रेण राजधानीवर्ण्णकोऽपि यथा—इह हि विजयस्य द्वारस्य पूर्वस्यां दिशि तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्याऽपरस्मिन् जम्बूद्वीपे द्वीपे द्वादश योजनसहस्राण्यव-गाह्याऽत्रान्तरे विजयस्य देवस्य विजया नाम राजधानी समस्ति। सा च द्वादश योजनसहस्राण्यायाम-विष्कम्भाभ्यां, सप्तत्रिंशद्योजनसहस्राणि नव शतानि सप्तचत्वारिंशानि किञ्चिद्विशेपाधिकानि परिक्षेपेण। तस्याश्च राजधान्याः समन्ततः परिक्षेपी सर्वकनकमयः प्राकारः। स च सार्द्धानि सप्तत्रिंशद्योजनानि ऊर्ध्वमुच्चैस्त्वेन. विष्कम्भेन तु मूले सार्द्धानि द्वादश योजनानि, मध्ये क्रोशाधिकानि षड् योजनानि, उपरिभागे चार्द्धक्रोशाधिकानि त्रीणि योजनानि, वहिर्वृत्तोऽन्तश्चतुरस्रः ऊर्द्धीकृतगोपुच्छसंस्थानसंस्थित। तस्य प्राकारस्योपरि पञ्चधनुःशतविस्तृतानि क्रोशार्द्धप्रमाणाऽऽयामानि देशोनार्द्धक्रोशोच्चानि सर्व्वमणिमयानि कपिशीर्पाणि। तानि च पञ्चवर्ण्णानि। तस्याश्च राजधान्या एकैकस्यां वाहायां पञ्चविंशं पञ्चविंशं द्वाराणां-शतम्। तानि च द्वाराणि सार्द्धद्वाषष्टियोजनानि ऊर्ध्वमुच्चैस्त्वेन, एकत्रिंशद्योजनानि विष्कम्भतः तावन्त्येव प्रवेशेन। तेषां द्वाराणामुपवर्ण्णनं विजयद्वारवर्ण्णकवत्प्रतिपत्तव्यम्। एकैकस्य द्वारस्योपकण्ठमुभयोः पार्श्वयोः प्रत्येकमेकैको महान् पीठः। ते च सर्वे पीठाः सर्व्वरत्नमयाः वाहल्यतोऽर्द्धतृतीयक्रोशाधिकानि पञ्चदश योजनानि. सक्रोशान्येकत्रिंशद्योजनानि आयामविष्कम्भाभ्यां। तेषां च पीठानामुपरि प्रत्येकमेकैकः प्रासादावतंसकः। तेऽप्यर्द्धतृतीयक्रोशाधिकानि पञ्चदश योजनान्यायामविष्कम्भाभ्याम्, एकत्रिंशद्योजनानि सक्रोशानि उच्चैस्त्वेन। तथा तत्रैकैकस्य द्वारस्य नातिदूरप्रत्यासन्ने भूभागे सप्तदश सप्तदश भौमाः प्रासादा वर्त्तन्ते। तत्र नव नव भौमा मध्यभागे, अष्टावष्टौ तेषां पृष्ठतः। तत्र ये मध्यवर्तिनो नव नव भौमास्तेषामन्तः प्रत्येकं विजयदेवस्य सिंहासनम्। तस्य परिसमन्तात्क्रमेणेन्द्रसामानिकानां देवानां योग्यानि सिंहासनानि, शेपेषु तु वहिर्वर्त्तिषु अष्टसु भौमेषु प्रासादेषु प्रत्येकमेकैकं सिंहासनम्। तत स्तस्या राजधान्या वहिश्चतसृषु दिक्षु पञ्च पञ्च योजनशतान्यतिवाह्यातिवाह्य एकैको वनखण्डः। तत्र पूर्व्वस्यां दिश्यशोकवनं, दक्षिणस्यां सप्तपर्णवन, पश्चिमायां चम्पकवनम् उत्तरस्यां चूतवनम्। एते च वनखण्डा प्रत्येक सातिरेकाणि द्वादशयोजनसहस्राण्यायामेन, पञ्च योजनशतानि विष्कम्भेन, प्रत्येकं प्राकारपरि-क्षिप्ताः। तेपां च वनखण्डानां वहुमध्यदेशभागे प्रत्येकमेकैकः प्रासादावतंसकः। ते च प्रासादावतंसकाः प्रत्येक सार्द्धद्वाषष्टियोजनान्यूर्ध्वमुच्चैस्त्वेन, सक्रोशान्येकत्रिंशद्योजनानि विष्कम्भतः। एषु चान्तः प्रत्येक-मेकैकं सिंहासनम्। तेषु चैव भूतेषु प्रासादेषु प्रत्येकमेकैको महर्द्धिकः पल्योपमस्थितिको देवः परिवसति। तत्र पूर्वस्मिन् प्रासादेऽशोकनामा देवः। एवं दक्षिणस्यां सप्तपर्ण्णनामा। पश्चिमायां चम्पकनामा। उत्तरस्यां चूतनामा। एते च प्रत्येकं स्वस्य स्वस्य वनखण्डस्य स्वकीयानां स्वकीयानां सामानिकदेवानां स्वकीयानां स्वकीयानामग्रमाहिपीणां स्वकीयाना स्वकीयानां पर्षदां स्वकीयानां स्वकीयामनीकानामनीकाधिपतीनां

स्वकीयानां स्वकीयानामात्मकरक्षकदेवानामाधिपत्यं भुञ्जानास्तिष्ठन्ति । तस्याश्च राजधान्या अन्तर्बहुसमरमणीये भूमिभागे शुद्धजाम्बूनदमयपीठिकाबन्धः । स च द्वादश योजनशतान्यायामविष्कम्भाभ्यां, त्रीणि योजनसहस्राणि सप्त शतानि सपञ्चनवतीति किञ्चिद्विशेषाधिकानि परिक्षेपतः, गव्यूतार्द्धं च बाहल्यतः । स चैकया पद्मवरवेदिकया तत्पृष्ठवर्त्तिना चैकेन वनखण्डेन सर्व्वतः–समन्तात् सम्परिक्षिप्तः । तस्य च पीठिकाबन्धस्य चतसृषु दिक्षु प्रत्येकमेकैकं त्रिसोपानमवतरणोत्प्लवनद्वारम् । एकैकस्य द्वारस्य एकैकं पुरतस्तोरणम् । तोरणवर्णकः प्रागुक्तपुष्करीणीतोरणवर्णकवत्परिभावनीयः । तस्य च पीठिकाबन्धस्य मध्ये बहुसमरमणीये भूमिभागे महानेकस्तपनीयमयः प्रासादावतंसकः । स च सार्द्धद्वाषष्टियोजनान्यूर्ध्वमुच्चैस्त्वेन, सक्रोशान्येकत्रिंशद्योजनान्यायामविष्कम्भाभ्याम् । तस्य च प्रासादावतंसकस्योन्तर्वहुमध्यदेशभागे महत्येका सर्वरत्नमयी मणिपीठिका । सा च योजनप्रमाणाऽऽयामविष्कम्भा गव्यूतद्वयबाहल्या । तस्याश्च मणिपीठिकाया उपरि महदेकं विजयदेवयोग्य सिंहासनम् । तच्चेन्द्रसामानिकयोग्यैः सिंहासनैः परिवृतम् । स चैष मूलप्रासादावतंसकोऽन्यैश्चतुर्भिः प्रासादावतंसकैः मूलप्रासादाऽपेक्षयाऽर्द्धाऽऽयामविष्कम्भोच्चैस्त्वैस्समन्ततः परिक्षिप्तः । तेषु प्रासादावतंसकेषु मध्ये प्रत्येकमेकैकं सिहासनम् । तेऽपि चत्वारः प्रासादावतंसकास्तदन्यैश्चतुर्भिः प्रासादैः तदपेक्षयाऽर्द्धाऽऽयामविष्कम्भोच्चैस्त्वैः परिवृताः । तेष्वपि मध्ये प्रत्येकमेक सिंहासनम् । तस्य च मूलप्रासादावतंसकस्योत्तरपूर्व्वस्यां दिशि विजयदेवयोग्या सर्वरत्नमयी दिव्याङ्गनासङ्घपरिकीर्ण्णा निरन्तरप्रवर्त्तमानदिव्यनाटकमनोहरा सुधर्म्मा नाम सभा । सा च सार्द्धानि द्वादश योजनान्यायामेन, सक्रोशानि षट् योजनानि विष्कम्भतः, नव योजनान्युच्चैस्त्वेन । तस्याश्च सुधर्म्मायास्त्रीणि द्वाराणि । तद्यथा–एकं द्वार पूर्व्वस्यां दिशि, एकमुत्तरस्यां, एकं च दक्षिणस्यामिति । तानि च द्वाराणि प्रत्येकं द्वे द्वे योजने उच्चैस्त्वेन, एकैकं योजनं विष्कम्भतः । तेषां च पुरतः प्रत्येकमेको मुखमण्डपकः । ते च मुखमण्डपकाः उत्तप्ततपनीयमयचन्द्रोदयाः प्रत्येकं सार्द्धानि द्वादश योजनानि दैर्घ्येण, सक्रोशानि षड् योजनानि विष्कम्भतः, सातिरेके द्वे योजने उच्चैस्त्वेन । तेषां च मुखमण्डपानां पुरतः प्रत्येकमेकैकः प्रेक्षागृहमण्डपकः । तेप्युत्तप्ततपनीयमयचन्द्रोदया' प्रमाणतोऽपि मुखमण्डपकतुल्या वेदितव्याः । तेषां च प्रेक्षागृहमण्डपकानां बहुमध्यदेशभागे प्रत्येकमेकैका मणिपीठिका । ताश्च मणिपीठिका अर्द्धयोजनबाहल्याः योजनाऽऽयामविष्कम्भाः । तासां च मणिपीठिकानामुपरि प्रत्येकं सिंहासनम् । तेषां च प्रेक्षागृहमण्डपकानां पुरतः प्रत्येकमेकैका द्वियोजनाऽऽयामविष्कम्भबाहल्याः सर्व्वमणिसमुदायात्मिका मणिपीठिकाः । तासां च मणिपीठिकानामुपरि प्रत्येकमेकैकः सर्व्वरत्नमयो देशोनद्वियोजनाऽऽयामविष्कम्भः परिपूर्णद्वियोजनोच्चश्चैत्यस्तूपः । तेषां च चैत्यस्तूपानामुपरि प्रत्येकं सर्व्वरत्नमयान्यष्टावष्टौ मङ्गलकानि । तेषामपि चैत्यस्तूपानां प्रत्येकं चतसृषु दिक्षु प्रत्येकमेकैकयोजनायामविष्कम्भा अर्द्धयोजनबाहल्या मणिपीठिका । तासां मणिपीठिकानां चतसृणां चतसृणामुपरि स्तूपाभिमुखाश्चतस्रश्चतस्रो जिनप्रतिमाः । तद्यथा–ऋषभो वर्द्धमानश्चन्द्राननो वारिषेणश्च । तेषां च चैत्यस्तूपानां पुरतः प्रत्येकमेकैका मणिपीठिका द्वियोजनाऽऽयामविष्कम्भा योजनप्रमाणबाहल्या । तासां च मणिपीठिकानामुपरि प्रत्येकमेकैकोऽष्टयोजनोच्छ्रयश्चैत्यवृक्षः । ते च सर्व्वेऽपि प्रत्येकं सर्व्वरत्नमयाः । तद्यथा वज्रमयमूलाः रिष्टरत्नमयविपुलकन्दाः वैडूर्यरत्नमयस्कन्धाः सुजातजातरूपविशालशाखाः नानामणिरत्नमयमनोहारिप्रशाखाः तपनीयपत्र

वृन्तवैडूर्यरत्नात्मकपत्रसङ्घाताः जाम्बूनदमयसुकुमालकोमलपल्लवा(ङ्)कुरवराः विचित्रमणिरत्नमय-सुरभिकुसुमफलभरनमितशाखाग्राः । ते च चैत्यवृक्षा प्रत्येकं तिलकचन्दनाऽर्जुनप्रभृतिभिर्नाना-प्रकारैस्तरुभिः परिवृताः । तेषामुपरि चैत्यवृक्षाणां पुरतः प्रत्येकमेकैका योजनप्रमाणाऽऽयामविष्कम्भा अर्द्धयोजनबाहल्या मणिपीठिका । तासां चोपरि प्रत्येकमेकैको महेन्द्रध्वजः । ते च महेन्द्रध्वजाः प्रत्येकमष्टयोजनोच्छ्रयाः अर्द्धक्रोशविष्कम्भाः वज्रमयाः वातोद्धूयमानवैजयन्तीपताकाः छत्रातिच्छत्र-कलिता । तेषामपि च महेन्द्रध्वजाना पुरतः प्रत्येकमेकैका नन्दा पुष्करिणी । ताश्च प्रत्येकं सार्द्ध-द्वादशयोजनाऽऽयामाः क्रोशाधिकषड्योजनविष्कम्भाः दशयोजनप्रमाणोद्वेधाः । प्रत्येकमेव च पद्मवरवेदिकया वनखण्डेन च परिक्षिप्ताः । तस्यां च सुधर्म्मायां सभायां पीठिकाः षट्सहस्र सङ्ख्याकाः । तत्र द्वे सहस्रे पूर्वस्या दिशि, द्वे पश्चिमायाम्, एकं सहस्रं दक्षिणस्याम्, एकं चोत्तरस्याम् । ताश्च सर्वा अपि सुवर्णरौप्यमयफलकनिबद्धाः । तेषु च फलकेषु वज्रमया नागदन्ताः । तेषु च लम्बमानानि सुरभिगन्धीनि मनोहराणि पुष्पदामानि । तथा सुधर्म्मायां धूपवासपीठिका अपि षट् सहस्रसङ्ख्याः । तत्रापि द्वे सहस्रे पूर्वस्यां दिशि, द्वे पश्चिमायामेकं सहस्रं दक्षिणस्यामेकमुत्तरस्याम् । ता अपि धूपवासपीठिकाः समस्ता अपि रौप्यमयफलककवचिताः । तेषु च फलकेषु वज्रमया नागदन्ताः तेष्वपि नागदन्तकेषु वज्रमयानि सिक्ककानि । तेषु च सिक्ककेषु वज्रमय्यो निरन्तरधूपसुगन्धिन्यो धूप-घटिकाः । तथा तस्याः सुधर्म्मायाः सभाया बहुमध्यदेशभागे महत्येका द्वियोजनाऽऽयामविष्कम्भा योजनबाहल्या सर्व्वमणिमयी पीठिका । तस्याश्च मणिपीठिकाया उपरि महानेको वज्रमयो माणवका-भिधानश्चैत्यस्तम्भः । स च सार्द्धसप्तयोजनान्युच्चैस्त्वेन, क्रोशार्द्धं बाहल्यतः, क्रोशार्द्धं विष्कम्भेन । तस्य च माणवकस्तम्भस्य ऊर्ध्वमधश्च प्रत्येकं षट् षट् क्रोशान् विहाय शेषेष्वर्द्धपञ्चमेषु योजनेषु बहूनि सुवर्ण-रौप्यमयानि फलकानि । तेषु च फलकेषु प्रत्येक वज्रमया नागदन्तास्तेषु च नागदन्तकेषु वज्रमयानि सिक्ककानि । तेषु च गोलकाकारा वज्रमयाः समुद्गकाः । तेषु च समुद्गकेषु जिनसक्थीनि सन्निक्षिप्तानि तिष्ठन्ति, यानि विजयदेवस्य अन्येषां च बहूनां वानमन्तराणां देवानां देवीनां च कल्याणं मङ्गलमित्यादि बुद्ध्या पूजनीयानि । तस्य च माणवकचैत्यस्तम्भस्योपरि पूर्वस्या दिशि महत्येका योजनप्रमाणोऽऽयाम-विष्कम्भा अर्द्धयोजनबाहल्या मणिपीठिका । तस्याश्चोपरि महदेकं सिंहासनम् । तस्यैव च माणवकचैत्य-स्तम्भस्य पश्चिमायां दिशि योजनप्रमाणाऽऽयामविष्कम्भा क्रोशद्वयबाहल्या महत्येका मणिपीठिका । तस्या उपरि महदेकं सुवर्णमणिमयं देवशयनीयम् । तस्य च देवशयनीयस्य उत्तरस्यां दिशि महानेक इन्द्रध्वजः । तस्य चेन्द्रध्वजस्य पश्चिमायां दिशि महानेकः प्रहरणकोशः । तत्र च परिघरत्नप्रमुखाणि नानारूपाणि प्रहरणानि । तस्याश्च सुधर्मायाः सभायाः उत्तरपूर्व्वस्यां दिशि महदेक सिद्धायतनम् । सुधर्म्मासभातुल्याऽऽयामविष्कम्भपरिमाणम् । तस्य च सिद्धायतनस्य बहुमध्यदेशभागे द्वियोजनाऽऽ-यामविष्कम्भा योजनबाहल्या महत्येका मणिपीठिका । तस्या उपरि सर्व्वरत्नमयो द्वियोजनप्रमाणा-ऽऽयामविष्कम्भोच्चत्वो महानेको देवच्छन्दकः । तस्मिंश्च देवच्छन्दके जिनप्रतिमानामष्टोत्तरशतम् । तस्य च सिद्धायतनस्योत्तरपूर्व्वस्यां दिशि महत्येकोपपातसभा । सा च सुधर्म्मासभेव वेदितव्या । तस्यां चोपपातसभायामन्तर्बहुसमरमणीये भूमिभागे योजनाऽऽयामविष्कम्भा अर्द्धयोजनबाहल्या महत्येका मणिपीठिका । तस्याश्च मणिपीठिकाया उपरि महदेकं देवशयनीयम् । यत्र विजयदेवस्योपपातो भवति ।

तस्या अभ्युपपातसभाया उत्तरपूर्वस्यां दिशि महानेको ह्रदो वर्त्तते। स च प्रागुक्तनन्दापुष्करिणी-तुल्याऽऽयामविष्कम्भोद्वेधपरिमाणः पद्मवरवेदिकया वनखण्डेन च समन्ततः परिक्षिप्तः। तस्यापि च ह्रदस्य उत्तरपूर्वस्यां दिशि महत्येका अभिषेकसभा। तस्याश्चाभिषेकसभाया बहुमध्यदेशभागे अर्द्ध-योजनबाहल्या योजनप्रमाणाऽऽयामविष्कम्भा सर्व्वमणिमयी महत्येका मणिपीठिका। तस्या उपरि महदेकं सिंहासनं यत्रोपविष्टो विजयदेवोऽलङ्क्रियते। तस्या अप्यलङ्कारसभाया उत्तरपूर्वस्यां दिशि महत्येका व्यवसायसभा। तस्या अपि मध्ये योजनप्रमाणाऽऽयामविष्कम्भा अर्द्धयोजनबाहल्या मणि-पीठिका। तस्या उपरि महदेकं सिंहासनम्। तत्रैको विजयदेवसत्कसकलस्थितिप्रतिपादको-महान् सुवर्णमणिरूप्यमणिमयः पुस्तकः। तस्या अपि व्यवसायसभायाः उत्तरपूर्वस्यां दिशि महदेकं द्वियोजनप्रमाणाऽऽयामविष्कम्भं योजनप्रमाणबाहल्यं सर्व्वरत्नमयं बलिपीठं समस्ति। तस्य बलि-पीठस्योत्तरपूर्वस्यां दिशि प्रागुक्तह्रदप्रमाणा नन्दापुष्करिणी। इति विजयद्वाराऽधिपतेर्विजयदेवस्य विज-याभिधाना राजधानी वर्णिता। अथ वैजयन्तादिद्वारस्वरूपप्रतिपादनार्थमतिदेशमाह–'एवं चत्तारि-वी'त्यादि। एवमनन्तरोक्तविजयद्वारवच्चत्वार्यपि द्वाराणि सराजधानीकानि भणितव्यानि। नवरं वैजयन्तद्वारं मेरुमेवावधिकृत्य दक्षिणस्यां दिशि पञ्चचत्वारिंशद्योजनसहस्राण्यतिक्रम्य लवणसमुद्र-दक्षिणभागमवधिकृत्योत्तरस्यां दिशि द्रष्टव्यम्। तस्याधिपतिरपि वैजयन्तनामा विजयदेवसमानर्द्धिको वक्तव्यः। तस्य राजधान्यपि वैजयन्तद्वाराद्दक्षिणस्यां दिशि तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्य तस्मिन्नेवाऽपरस्मिन् जम्बूद्वीपे द्वादश योजनसहस्राण्यवगाह्य अत्रान्तरे वैजयन्ताभिधाना विज्ञेया। तथा जयन्तद्वारं मेरोः पश्चिमायां दिशि पञ्चचत्वारिंशद् योजनसहस्राण्यतिक्रम्य लवणसमुद्रपश्चिम-भागमवधिकृत्य पूर्व्वस्यां दिशि शीतोदाया महानद्या उपरिष्टाद् द्रष्टव्यम्। तस्याधिपतिरपि विजयसमानो जयन्तः। तस्य राजधानी तु जयन्तद्वारात्पश्चिमायां दिशि प्रागुक्तप्रकारेण प्रतिपाद्या। अपराजितद्वारं तु मेरोरुत्तरस्यां दिशि पञ्चचत्वारिंशद् योजनसहस्राण्यतिक्रम्य लवणसमुद्रोत्तरभागमपेक्ष्य दक्षिणस्यां दिश्यवसेयम्। तस्य स्वामी तु विजयसदृशोऽपराजितनामा। राजधान्यप्यपराजितद्वारादुत्तरस्यां दिशि पूर्व्ववद्विज्ञेया। ननु वैजयन्तादिद्वाराणामतिदेशं कुर्व्वताऽऽचार्येण एवं चत्वार्यपीति यदुक्तं तन्न युक्तं, यतो विजयद्वारदृष्टान्तेनातिदेश्यानि त्रीण्येव द्वाराणि सन्तीति चेत्सत्यं, पूर्व्वोक्तवर्णकसाम्येन चतुर्णामपि परस्परमतिदेश्यत्वातिदेशकत्वज्ञापनार्थं तथाप्रयोगस्य युक्तियुक्तत्वात्। अन्यथा यथा चन्द्रवन्मुखं न मुखवच्चन्द्रमा इत्यादि-प्रयोगवैषम्यम्। तथाऽत्रापि वैषम्याऽऽपत्त्या विजयवद्वैजयन्तं वैजयन्त-वद्विजयमिति वक्तुमशक्यत्वाऽऽपत्तेः। अथवा अवशेषादिव्यवच्छेदकपदशून्यस्य केवलसङ्ख्यावाचिनः शब्दस्यातिदेशकप्रक्षेपेणैव प्रायः प्रयोगस्य दृष्टत्वात्। अत एव यथाऽयं तथा चत्वारोऽपीति भ्रातृ-चतुष्टयविषयकलोकोक्तिरपि।

सम्प्रति विजयादिद्वाराणां परस्परमन्तरं प्रश्नयति

जंबुद्दीवस्स णं भंते! दीवस्स दारस्स य दारस्स य केवइए अबाहाए अंतरे पण्णत्ते? गो०! अउणासीति जोअणसहस्साइं बावण्णं च जोअणाइं दारस्स य दारस्स य अबाहाए अंतरे पण्णत्ते।

अउणासीइं सहस्सा बावण्णं चेव जोअणा हुंति । ऊणं च अद्धजोअण दारंतरं जंबुद्दीवस्स ॥१॥

'जंबुद्दीवस्स णमि'त्यादि । जम्बूद्वीपस्य भदन्त ! द्वीपस्य सम्बन्धिनो द्वारस्य च द्वारस्य च कियत्-किंप्रमाणमबाधया-अन्तरत्वाऽप्रतिघातेन अन्तरं प्रज्ञप्तं ? भगवानाह—गौतम ! एकोनाशीतियोजनसहस्राणि द्विपञ्चाशद् योजनानि देशोनं चार्द्धयोजनं द्वारस्य च द्वारस्य चाबाधयाऽन्तरं प्रज्ञप्तम् । तथाहि चतुर्णामपि द्वाराणां प्रत्येकमेकैकस्य कुड्यस्य द्वारशाखाऽपरपर्यायस्य बाहल्यं गव्यूतं, द्वाराणां च विस्तारः प्रत्येकं चत्वारि चत्वारि योजनानि । ततश्च चतुर्ष्वपि द्वारेषु सर्व्वसङ्ख्यया कुड्यद्वारप्रमाणम् अष्टादश योजनानि जम्बूद्वीपस्य परिधिस्तिस्रो लक्षाः षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके (यो०) ३१६२२७ क्रो० ३ अष्टाविंशं धनुःशतं १२८ त्रयोदश अङ्गुलानि एकं चार्द्धाङ्गुलम् ( १३-१/२ ) । अस्माज्जम्बूद्वीपपरिधेः सकाशात् तानि कुड्यद्वारपरिमाणभूतानि अष्टादश योजनानि शोध्यन्ते । शोधितेषु च तेषु परिधिसत्को योजनराशिरेवरूपो जातः—तिस्रो लक्षाः षोडश सहस्राणि द्वे शते नवोत्तरे—३१६२०९ शेष क्रोशधनुरादिकं तु प्रागुक्तमेव । ततो योजनराशेश्चतुर्भिर्भागो ह्रियते, लब्धानि योजनानामेकोनाशीतिसहस्राणि द्विपञ्चाशदधिकानि गव्यूतं चैकं (यो०) ७९०५२ क्रोशः १ । यानि च परिधेः सत्कानि त्रीणि गव्यूतानि धनूंषि क्रियन्ते । जातानि धनुषां षट् सहस्राणि । यच्च परिधिसत्कमष्टाविंशं धनुःशतं तदप्येतेषु धनुःषु मध्ये प्रक्षिप्यते । ततो जातो धनूराशिरेकषष्टिःशतानि अष्टाविंशत्यधिकानि । तेषां चतुर्भिर्भागे हृते लब्धानि धनुषां पञ्चदश शतानि द्वात्रिंशदधिकानि १५३२ यानि च त्रयोदशाङ्गुलानि तेषामपि चतुर्भिर्भागे हृते लब्धानि त्रीण्यङ्गुलानि । यच्चैकमङ्गुलमुद्धरति तस्याप्यष्टौ यवा अर्द्धाङ्गुलसम्बन्धिभिश्चतुर्भिर्यवैः संयुक्ता द्वादश यवाश्चतुर्विभक्ताः लब्धास्त्रयो यवाः एतच्च पूर्व्वोक्तेन गव्यूतेन सह देशोनमर्द्धयोजनं भवति । उक्तं च

कुड्डदुवारपमाणं अट्ठारस जोअणाइं परिहीए । सोहिअ चउहिं विभत्ते इणमो दारंतरं होइ ॥१॥

अउणासीइ सहस्सा बावण्णा अद्धजोअणं चूणं । दारस्स य दारस्स य अंतरमेअं विणिद्दिट्ठं ॥२॥

अथोक्तमेवार्थं गाथाबन्धेन सूत्रकार आह—'अउणासीइ'त्ति गतार्था ।

अथोक्तस्वरूपे जम्बूद्वीपे प्रथमं प्रज्ञाप्यप्रज्ञापकयोराश्रयभूतं भरतक्षेत्रमेव प्रश्नविषयीकरोति

— कहि णं भंते ! जंबुद्दीवे दीवे अंतरे भरहे णामं वासे पण्णत्ते ? गो० ! चुल्लहिमवंतस्स वासहरपव्वयस्स दाहिणेणं, दाहिणलवणसमुद्दस्स उत्तरेणं, पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं, पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं, एत्थ णं जंबुद्दीवे दीवे भरहे णामं वासे पण्णत्ते । खाणुबहुले कंटकबहुले विसमबहुले दुग्गबहुले पव्वयबहुले पवायबहुले उज्झरबहुले निज्झरबहुले खड्डाबहुले दरिबहुले नदीबहुले दहबहुले रुक्खबहुले गुच्छबहुले गुम्मबहुले लयाबहुले वल्लीबहुले अडवीबहुले सावयबहुले तेणबहुले तक्करबहुले डिंबबहुले डमरबहुले दुब्भिक्खबहुले दुकालबहुले पासंडबहुले किवणबहुले वणिमगबहुले ईतिबहुले मारिबहुले कुवुट्ठिबहुले अणावुट्ठिबहुले रायबहुले रोगबहुले संकिलेसबहुले अभिक्खणं अभिक्खणं संखोहबहुले पाईणपडीणायते उदीण-

दाहिणविच्छिन्ने उत्तरतो पलिअंकसंठिए दाहिणओ धणुपिट्ठसंठिए तिहा लवणसमुद्दं पुट्ठे गंगा-सिंधूहिं महानईहिं वेअड्ढेण य पव्वएण छब्भागपविभत्ते। जंबुद्दीवे दीवे णउअसयभागे पंचच्छव्वीसे जोअणसए छच्च एगूणवीसतिभागे जोअणस्स विक्खंभेणं भरहस्स णं वासस्स बहु-मज्झदेसभागे एत्थ णं वेअड्ढे णामं पव्वए पण्णत्ते। जे णं भरहं वासं दुहा विभयमाणे विभय-माणे चिट्ठति॥ तं० दाहिणड्ढभरहं च उत्तरड्ढभरहं च॥

'कहि णमि'ति। क्व—कस्मिन् प्रदेशे भदन्त! जम्बूद्वीपे आन्तरमन्तर्वर्त्ति भारतं नाम्ना वर्षं क्षेत्रं प्रज्ञप्तं? पुंस्त्वनिर्देशः सर्व्वत्र प्राकृतत्वात्। भगवानाह—गौतम! क्षुल्लहिमवतो वर्षधरपर्व्वतस्य दक्षिणेन, दक्षिणलवणसमुद्रस्योत्तरेण, पौरस्त्यलवणसमुद्रस्य पश्चिमेन, पश्चिमलवणसमुद्रस्य पूर्व्वेण। अत्र 'णमि'त्य-लङ्कारे। भारत नाम्ना वर्षं क्षेत्रं प्रज्ञप्तं, मयाऽन्यैश्च तीर्थकृद्भिरिति गम्यते। तच्च भरतक्षेत्रं किंस्व-रूपम्? इति हृदयस्थं गौतमाभिप्रायमङ्गीकृत्य भगवान् स्वयमेवाह—'खाणुबहुले'त्ति। स्थाणवः—कीलकाः। ते च छिन्नवनस्पतीनामवशिष्टमूलादयोऽवयवविशेषाः पश्वादिबन्धननिमित्तं भूमिनिहितप्रदेशाः काष्ठखण्डाश्च तैर्बहुलं—व्याप्तं, ते वा बहुला यस्मिँस्तत् तथा। एवं 'कण्टकबहुलमि'त्यादिविशेषणकदम्ब-केऽपि परिभावनीयम्। तत्र कण्टका—बब्बूलादिवनस्पतीनां लोकप्रतीताः। विषमानि—भूमेर्विषमोन्नत-प्रदेशाः। दुर्गाणि—भयादिना त्रस्तानां त्राणभूतानि विषमस्थानानि। पर्व्वताः—गिरयः। प्रपाता—गिरेर्जल-पतनस्थानानि। 'उज्झर'त्ति अवझरः—पर्वततटादुदकस्याधःपतनं, निर्झरस्तु उदकस्य स्रवणमिति। गर्त्ता—भूमेः खननात् वर्षादिजलप्रवाहाद्वा विषमभूप्रदेशाः। दर्यो—गुहाः गिरिविवराणीत्यर्थः। नद्यः—तर-ङ्गिण्यः। द्रहा—ह्रदाः। वृक्षाः—सहकारादयः। गुच्छा—वृन्ताकीप्रभृतयः। गुल्मानि—नवमालिकाप्रभृतीनि। लताश्चम्पकलतादयः। वल्ल्यः—कुष्माण्डीत्रपुषीप्रभृतयः। अटव्यः—श्वापदादिभयभूमिकानि वनानि। श्वापदाः—सिंहादयः। स्तेनाश्चौर्यकारिणः। तस्करा—स्तेनविशेषा एव। तत्र प्रकारान्तरेणाऽऽजीविकां कुर्व्वाणा अपि कदाचित् स्तैन्यमपि कुर्व्वन्ति ये ते स्तेना भण्यन्ते। तस्करास्तु चौर्यमात्राऽऽजीविका-परायणा महादुष्टाशया इति भेदः। डिम्बा—विघ्ना भिल्लादिदुर्जनकृतोपद्रवाः। डमरा—राजपुत्राणा परस्परं विरोधसमुद्भवाः। दुर्भिक्षं—भिक्षाचराणां भिक्षादौर्लभ्यम्। दुष्टकालो दुःकालः। स च वृष्ट्याद्यभावे भिक्षादौर्लभ्यविशिष्टो दिवसमासादिलक्षणः। पाखण्डाः—शाक्यादयः। कृपणा—अदानबुद्धयः। वनीपकाः—याचनाजीविनो बटुकादयः। ईतयः—स्वराष्ट्रपरराष्ट्राऽतिवृष्ट्यवृष्टिमूषकशलभशुकलक्षणाः। मारिर्मानवा-दीनां देवादिकृतो मरणरूपोपद्रवः। कुवृष्टयो—रोगादिहेतवो जलमुचः। अनावृष्टिर्मर्यादया वृष्टेरभावः। राजानो—नृपास्ते च भूयांसः परस्परविरोधित्वेन लोकोपप्लवकारिणो भवन्ति। रोगा ज्वरातीसारादयः। सङ्क्लेशाः—कुस्वजनकुनृपादिकृताश्चित्तोद्वेगहेतुप्रवृत्तयः। अभीक्ष्णमभीक्ष्णं—भूयो भूयः, सङ्क्षोभाः—परचक्रादिभयसमुत्थाः अस्वास्थ्यरूपा एतैर्बहुलं—व्याप्तमेते वा बहुलाः—प्रचुरा यत्र तत्तथाविधं भरत-क्षेत्रम्। एतच्च वर्णनं यौगलिकधर्म्मे निवृत्ते राज्यस्थितौ धर्म्मस्थितौ च प्रवृत्तायां सत्यामेव द्रष्टव्यं, न पुनः सर्व्वकालीनं, तदप्रवृत्तौ तन्निवृत्तौ च सुषमासुषमादिकाले तथास्वभावाभावात्, किन्तु सुषमा-सुषमादिकाले यौगलिकमनुष्याणां तथाविधपुण्यानुभावात् देवकुर्व्वादिक्षेत्रवत् भरतक्षेत्रस्यापि परिणति-रवगन्तव्या। भोक्तृकर्म्मानुसारेणैव भोग्यवस्तूनां परिणतेः। अत एव भरतैरावतादीनि क्षेत्राणि हिम-

वदादयश्च पर्वताः सर्व्वमपि शुभाशुभकर्म्मनिवन्धनमिच्छाम इति प्रवचने प्रतीतम् । अन्यथा 'दाहिणड्ढभरहस्स णं वासस्स केरिसए आगारभावपडोआरे पण्णत्ते ? गो० । वहुसमरमणिज्जे' इत्यादिना विरोधः स्यात् । तेन यथासम्भवं कालविशेषावच्छेदेन परिभावनीयम् । अथ भरतक्षेत्रस्याऽऽयामाद्याह-'पाईणे'त्यादि । प्राचीनप्रतीचीनयोः-पूर्व्वपश्चिमयोरायतं-दीर्घम् उदीचीनदक्षिणयोरुत्तरयाम्ययोर्विस्तीर्णम् उत्तरतः पर्यङ्कसंस्थितं-पर्यङ्कासनसंस्थानं दक्षिणतो धनुःपृष्ठसंस्थित त्रिधा-पूर्व्वतः पश्चिमतो द्वाभ्यां कोटीभ्यां दक्षिणतो धनुःपृष्ठेन चेति त्रिभिः स्पृष्टं, गङ्गासिन्धुभ्यां महानदीभ्यां वैताढ्येन च पर्व्वतेन षड्भागप्रविभक्तं-षड्भिर्भागैर्विभागीकृतमित्यर्थः । अथ लक्षयोजनप्रमाणस्य जम्बूद्वीपस्य कतितमो भागो भरतमित्याह-'जम्बुदीवे'त्यादि । जम्बूद्वीपे द्वीपे नवतिशतभाग जम्बूद्वीपस्य नवत्यधिकशततमो भागो भरतमित्यर्थः । तच्चैवं-हिमवान् महाहिमवान् निषधो नीली रूपी शिखरी चेति नामानः षड् वर्षधरास्तैरनन्तरितानि भरतं हैमवत हरिवर्षं महाविदेहो रम्यकं हैरण्यवतमैरावत चेति नामानि सप्त वर्षाणि । तत्र भरतक्षेत्रादारभ्य निषधवर्षधरं यावदैरवतक्षेत्रादारभ्य च नीलीवर्षधरं यावत् वर्ष-वर्षधरा द्विगुण-द्विगुणाऽऽयामाः, महाविदेहस्तु निषधवर्षधराद् द्विगुणाऽऽयामः । तथा च एको भागो भरतक्षेत्रं, द्वौ भागौ हिमवान् वर्षधरः, चत्वारो भागा हैमवतक्षेत्रम्, अष्टौ भागा महाहिमवान् वर्षधरः, षोडश भागा हरिवर्षक्षेत्रं द्वात्रिंशद्भागा निषधो वर्षधरः, चतुःषष्टिभागा महाविदेहक्षेत्रं, द्वात्रिंशद्भागा नीलीवर्षधरः, षोडश भागा रम्यकक्षेत्रं, अष्टौ भागा रूपी वर्षधरः, चत्वारो भागा हैरण्यवतक्षेत्रं, द्वौ भागौ शिखरी, एको भाग ऐरवतक्षेत्रं चेति । सर्व्वसङ्ख्यया मीलने नवत्यधिकं शतं स्यात् । तेन तावत्तमो भागो भरतक्षेत्रमिति । अथैकेन भागेन कियन्ति योजनानि ? इत्याह-'पंचच्छव्वीसे' इत्यादि । षड्विंशत्यधिकानि पञ्च योजनशतानि षट् चैकोनविंशतिभागा योजनस्य, योजनस्यैकोनविंशतिभागाः क्रियन्ते । ते च षड् भागा इत्यर्थः । तदङ्कस्थापना यो० ५२६ क० ६ एतावत्प्रमाणं भरतक्षेत्रमिति । अथ वैताढ्यः पर्व्वतः क्व स्थितः ? किं कुर्वन्नस्ति ? इत्याह-'भरहस्स णमि'त्यादि । भरतस्य क्षेत्रस्य वहुमध्यदेशभागे वैताढ्यो नाम्ना पर्व्वतः प्रज्ञप्तः । 'जे णं'ति यो णमिति प्राग्वत् । भरतक्षेत्रं द्विधा-द्वाभ्यां प्रकाराभ्या विभजमानो-विभागीकुर्व्वंस्तिष्ठत्यास्ते । तत्प्रकारद्वयमाह-'त जहे'त्यादि । तद्यथा-दक्षिणार्द्धभरतम् उत्तरार्द्धभरतं च । एतच्चौपाधिकं नामद्वयं प्रवचने प्रतीतम् ।

अथ दक्षिणभरतार्द्धं क्वास्ति ? इति जिज्ञासुर्गौतमः पृच्छति ।

कहि णं भंते ! जंवुदीवे दीवे दाहिणड्ढे भरहे णामं वासे पण्णत्ते ? । गो० ! वेअड्ढस्स पव्वयस्स दाहिणेणं, दाहिणलवणसमुद्दस्स उत्तरेणं, पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं, पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं, एत्थ णं जंवुदीवे दीवे दाहिणड्ढभरहे णामं वासे पण्णत्ते । पाईणपडीणायते उदीणदाहिणविच्छिण्णे अद्धचंदसंठाणसंठिए तिहा लवणसमुद्दं पुट्ठे गंगासिंधूहिं महानईहिं तिभागपविभत्ते दोण्णि अट्ठतीसे जोअणसए तिण्णि अ एगूणवीसतिभागे जोअणस्स विक्खंभेणं, तस्स जीवा उत्तरेणं पाईणपडीणायता दुहा लवणसमुद्दं पुट्ठा, पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठा, पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठा,

नव जोअणसहस्साइं सत्त य अडयाले जोअणसए दुवालस य एगूणवीसतिभागे जोअणस्सायामेणं। तीसे णं धणुपिट्ठे दाहिणेणं नव जोअणसहस्साइं सत्त य छावट्ठे जोअणसए एक्कं च एगूणवीसतिभागे जोअणस्स किंचि विसेसाहिए परिक्खेवेणं पण्णत्ते। दाहिणड्ढभरहस्स णं भंते! वासस्स केरिसए आगारभावपडोआरे पण्णत्ते?। गो०! बहुसमरमणिज्जे भूमिभागे पण्णत्ते। से जहा णाम ए आलिंगपुक्खरे ति वा जाव णाणाविहपंचवण्णेहिं तणेहिं मणीहिं उवसोभिए। तं० कित्तिमेहिं चेव अकित्तिमेहिं चेव। दाहिणड्ढभरहे णं भंते! वासे मणुआणं केरिसए आगारभावपडोआरे पण्णत्ते?। गो०! ते णं मणुआ बहुसंघयणा बहुसंठाणा बहुउच्चत्तपज्जवा बहुआउपज्जवा बहुइं वासाइं आउअं पालेंति पालेत्ता अप्पेगइआ निरयगामी अप्पेगइआ तिरिअगामी अप्पेगइआ मणुअगामी अप्पेगइआ देवगामी अप्पेगइआ सिज्झंति बुज्झंति मुच्चंति परिणिव्वायंति सव्वदुक्खाणमंतं करिंति।

'कहि णं भंते!' इत्यादि। क्व भदन्त! जम्बूद्वीपे द्वीपे दक्षिणार्द्धभरतं प्रज्ञप्तं? भगवानाह–गौतम! वैताढ्यस्य पर्वतस्य दक्षिणेन, दक्षिणलवणसमुद्रस्योत्तरेण, पौरस्त्यलवणसमुद्रस्य पश्चिमेन, पश्चिमलवणसमुद्रस्य पूर्वेण–पूर्वस्यां दिशि 'एत्थ णं'ति। अत्र णमित्यलङ्कारे। जम्बूद्वीपे द्वीपे नाम्ना दक्षिणार्द्धभरतक्षेत्रं प्रज्ञप्तम्। तच्च प्राचीनप्रतीचीनयोः–पूर्वपश्चिमयोरायत-दीर्घम्, उत्तरदक्षिणयोर्विस्तीर्णं संस्थानेन अर्द्धचन्द्रसंस्थानेन संस्थितं त्रिधा–द्वाभ्यां कोटिभ्यां पृष्ठेन चेति त्रिभिः प्रकारैर्लवणसमुद्रस्पृष्टं, गङ्गासिन्धुभ्यां महानदीभ्यां त्रिभागप्रविभक्तमिति। अस्य योजनैः प्रमाणमाह–'दोण्णि'त्ति। अष्टत्रिंशदधिके द्वे योजनानां शते त्रयश्चैकोनविंशतिभागा योजनस्य विष्कम्भेन। तच्चैवं–भरतक्षेत्रस्य विष्कम्भः पञ्च योजनशतानि षड्विंशत्यधिकानि षट् चैकोनविंशतिभागा योजनस्य, तस्मात् वैताढ्यस्य पृथुता पञ्चाशद्योजनानि अपह्रियन्ते, शेष चत्वारि शतानि षट्सप्तत्यधिकानि षट् च कलाः तस्य चार्द्धं द्वे शतेऽष्टत्रिंशदधिके तिस्रश्च कलाः, एतावद्योजनप्रमाण दक्षिणार्द्धं भरतं विष्कम्भेन। तदङ्कस्थापना २३८–३/१९। अथारोपितधनुःसंस्थानस्यास्य जीवाप्रमाणमाह–'तस्स जीवे'त्यादि। तस्य दक्षिणार्द्धभरतस्य जीवा वैताढ्यपर्वतादर्वाचीनाकाशप्रदेशश्रेणिरूपा प्रत्यञ्चाकल्पेत्यर्थः। सा चोत्तरस्यां दिशि वर्त्तमाना प्राचीनप्रतीचीनायता–पूर्वपश्चिमयोर्दीर्घा। अत एव द्विधा लवणसमुद्रं स्पृष्टा, कथं स्पृष्टा? इत्याह–'पुरत्थिमिल्लाए'त्ति। अत्रेल्लप्रत्ययः 'स्वार्थे कश्च वे'ति प्राकृतसूत्रेण स्वार्थिकः सूत्रानुलोम्याद्द्रष्टव्यः। तेन पौरस्त्यया कोट्या एकप्रदेशश्रेणिरूपापि जीवाऽन्त्यप्रदेशात्मिकयाऽङ्गुल्यग्रेण स्पृशत्यङ्कश्रेणिमित्यादिवत् करणभूतयाऽग्रभागेनेत्यर्थः। 'पुरत्थिमिल्लं' पूर्वदिग्व्यवस्थितं लवणसमुद्रं स्पृष्टा 'पच्चत्थिमिल्लाए'त्ति। पश्चिमया कोट्या पश्चिमदिग्व्यवस्थितं लवणसमुद्रं स्पृष्टा। तस्याश्चैकप्रदेशात्मकत्वेन पृथुत्वमुपेक्ष्य दैर्घ्येण योजनप्रमाणमाह–'नव जोअणे'त्यादि। नव योजनसहस्राणि सप्त शतानि अष्टचत्वारिंशच्च योजनानि द्वादश चैकोनविंशति भागा योजनस्यायामेन। तदङ्कस्थापना. यो० ९७४८–१२/१९। अथ दक्षिणभरतार्द्धजीवाया धनुःपृष्ठमाह–'तीसे णं धणुपिट्ठे' इत्यादि। तस्या जीवायाः धनुःपृष्ठं दक्षिणेन नव योजनसहस्राणि सप्त शतानि षट्षष्टिश्च योजनानि एकश्चैकोनविंशतिभागः किञ्चिद्विशेषाधिकः परिक्षेपेण–परिधिना प्रज्ञप्तम्।

तदङ्कस्थापना यो० ९७६६-१/१९ । अथोक्तयोर्जीवाधनुःपृष्ठयोः क्रमेण करणविभावना यथा-जम्बूद्वीपविष्कम्भो विवक्षितेषुनस्तेनैवेषुणा गुणितोऽनन्तरं चतुर्गुणितः एष जीवावर्गस्तस्य च वर्गमूलानयने यथेप्सिता जीवा भवति । यदुक्तं

मंडलखित्तायामो उसुऊणो उसुगुणो उ चउगुणिओ । एसो हु जीअवग्गो मूले उ जहच्छिआ जीव ॥१॥ त्ति । तथाहि-जम्बूद्वीपस्य विष्कम्भो योजनलक्षं, स च कलारूपः कृतः जात एकोनविंशतिलक्षप्रमाणः । तदङ्का-एकको नवकः शून्यपञ्चकं चेति १९००००० ततोऽस्माद्दक्षिणभरतार्द्धाऽऽयामरूप इषुः पञ्चविंशत्यधिकपञ्चचत्वारिंशतशतप्रमाणकलारूपः ४५२५ शोध्यते, शोधिते च तस्मिन् जातः पाश्चात्यो राशिः अष्टादश लक्षाः पञ्चनवतिसहस्राणि चत्वारि शतानि पञ्चसप्तत्यधिकानि १८९५४७५ एष राशिर्दक्षिणभरतार्द्धेषुणा पञ्चविंशत्यधिकपञ्चचत्वारिंशच्छतप्रमाणेन ४५२५ गुण्यते । जातोऽष्टकः पञ्चकः सप्तकः सप्तकः शून्यं द्विकश्चतुष्कस्त्रिकः सप्तकः पञ्चकश्च ८५७७०२४३७५ । अयं च राशिश्चतुर्भिर्गुण्यते जातः त्रिकश्चतुष्कस्त्रिकः शून्यम् अष्टकः शून्यं नवकः सप्तकः पञ्चकः शून्यद्वयं ३४३०८०९७५०० । ततोऽस्य 'विसमपयचइअवग्गे' इत्यादिना प्रागुक्तप्रकारेण वर्गमूलानयने लब्धं कलानामेक लक्षं पञ्चाशीतिसहस्राणि द्वे शते चतुर्विंशत्यधिके १८५२२४ शेषस्तूपरितनो राशिः लक्षमेकं सप्तषष्टिसहस्राणि त्रीणि शतानि चतुर्विंशत्यधिकानि १६७३२४ । छेदको राशिरधस्तात्तिस्रो लक्षाः सप्ततिसहस्राणि चत्वारिशतानि अष्टचत्वारिंशदधिकानि ३७०४४८ वर्गलब्धस्य च राशेर्योजनानयनार्थं एकोनविंशत्या भागो ह्रियते । लब्धानि योजनानां नव सहस्राणि सप्त शतानि अष्टचत्वारिंशदधिकानि कलाश्च द्वादश ९७४८ क० १२ । एवमग्रेऽपि जीवाकरणं विभावनीयम् । अथ धनुःपृष्ठकरणं यथा इषुवर्गं षड्गुणं जीवावर्गे प्रक्षिप्य यत्तस्य वर्गमूलं तद्धनुःपृष्ठमिति । यदुक्तम्-'उसुवग्गे छग्गुणिए जिअवग्गजुए अ करणि धणुपिट्ठ'त्ति । अयं भावः-दक्षिणभरतार्द्धेषुः कलारूपः पञ्चचत्वारिंशत् शतानि पञ्चविंशत्यधिकानि ४५२५ अस्य वर्गो द्विकः शून्यं चतुष्कः सप्तकः पञ्चकः षट्को द्विकः पञ्चकश्च २०४७५६२५ । एष राशिः षड्भिर्गुण्यते । जातः एकको द्विको द्विकोऽष्टकः पञ्चकस्त्रिकः सप्तकः पञ्चकः शून्यं च । १२२८५३७५० । एष राशिर्दक्षिणभरतार्द्धसत्के जीवावर्गे त्रिकश्चतुष्कस्त्रिकः शून्यमष्टकः शून्यं नवकः सप्तकः पञ्चकः शून्यद्वयं ३४३०८०९७५०० चेत्येवं रूपे प्रक्षिप्यते, ततो जातो राशिस्त्रिकश्चतुष्कद्वयं त्रिकः शून्यं नवकः पञ्चक एकको द्विकः पञ्चकः शून्यं च । ३४४३०९५१२५० अस्य वर्गमूले लब्धमेककोऽष्टकः पञ्चकचतुष्टयं १८५५५५ । शेषस्तूपरितनो राशिर्द्विको नवकस्त्रिको द्विकद्वयं पञ्चकश्च २९३२२५ । छेदकराशिस्त्रिकः सप्तक एककत्रयं शून्यं च ३७१११० । वर्गलब्धस्य तु राशेर्योजनकरणार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां नव सहस्राणि सप्त शतानि षट्षष्ट्यधिकानि यो० ९७६६ क० १ । एवमग्रेऽपि भावना कार्या ।

अथ दक्षिणार्द्धभरतस्वरूपं प्रश्नविषयीकुर्वन्नाह-'दाहिणड्ढे'त्यादि । दक्षिणार्द्धभरतस्य भदन्त ! कीदृश आकारभावप्रत्यवतारः प्रज्ञप्तः ? । तत्राकारभावः स्वरूपविशेषस्तस्य प्रत्यवतार-आविर्भावः । यद्वा-आकारश्च भावाश्च आकारभावास्तेषां प्रत्यवतारः कीदृशं भरतक्षेत्रं ? कीदृशं तद्गतमन्यद्वस्त्वित्यर्थः । भगवानाह-गौतम ! 'बहुसमे'त्यादि । बहुत्यर्थं समोऽविषमो रमणीयो भूमिभागो दक्षिणार्द्धभरत-

क्षेत्रस्येतिगम्यम् । तत्र दृष्टान्तमाह–'से जहे' त्यादि । से इति तत् सकललोकप्रसिद्धं, यथेति दृष्टान्तोपन्यासार्थे, नामेति सम्भावने वाक्यालङ्कारे वा, ए इति आमन्त्रणे । आलिङ्गो वाद्यविशेषस्तस्य पुष्करं–चर्म्मपुटं तत्किलाऽत्यन्तं समं भवति, तेन तदुपममित्यर्थः । 'जाव णाणे' त्यादि । यावत् नानाविधा अनेकभेदभिन्नाः पञ्चवर्णा येषां तानि नानाविधपञ्चवर्णानि एवंविधैस्तृणैर्मणिभिश्चोपशोभितं, यावत्करणात् ' मुइंगपुक्खरे इ वा सरतले इ वा करतले इ वा आयंसमंडले इ वे त्यादि सङ्ग्रहः । यत्तु क्वचित् 'नाणामणिवण्णेहिं'ति पाठः । स चाऽशुद्धः सम्भाव्यते । जीवाभिगमादौ व्याख्यातपाठस्यैवं दर्शनात् । यद्वा–नाना–नीलाद्यनेकविधा ये मणयः कर्केतनादयस्तेषामिव दीप्यमानो वर्णो येषां तानि नानामणिवर्णानि । एवंविधानि यानि तृणानि तैस्तथा मणिभिश्चोपशोभितम् । तृणानि मणींश्च विशिनष्टि–कृत्रिमैर कृत्रिमैश्च । चैवकारौ समुच्चयार्थौ । तृणानां जलसेकादिना मणीनां च संस्कारादिना कृत्रिमत्वव्यपदेशः । अकृत्रिमत्वं च तद्विलक्षणं स्वभावसिद्धमेव । न चैवमनन्तरोक्तेन 'खाणुबहुले कंटकबहुले विसमबहुले खड्डाबहुले' इत्यादिना सूत्रेण सहासङ्गतिरित्याशङ्कनीयम् । एकस्मिन्नेव क्षेत्रे शुभाशुभकर्म्मोपभोक्तृवैचित्र्यात् प्रदेशभेदेन कालभेदेन च उभयस्वभावस्यापि युक्तत्वात् । न हि यत्कालावच्छिन्ने यस्मिन् प्रदेशे वैषम्यं तस्मिन्नेव तत्कालावच्छिन्ने बहुसमरमणीयता भणिता, तत्तत्कालावच्छिन्नेषु भिन्नभिन्नप्रदेशेषु विषमत्वं समत्वं च युगपदपि सर्व्वजनानुभवसिद्धम् । न हि देवकुर्व्वादिवद् भरतक्षेत्रस्यापि सर्व्वदा सर्व्वत्र समतैव किन्तु सुषमासुषमादौ भूमिभागः सम एव । दुष्षमादुष्षमायां तु विषम एव । सुषमादुष्षमादावुभयस्वभावोऽपीति दर्शितम् । अथ दक्षिणार्द्धभरतस्यैव मनुष्यविषयं प्रश्नमाह–'दाहिणड्ढे 'ति । दक्षिणार्द्धे भरतक्षेत्रे । णमिति प्राग्वत् । भदन्त ! मनुजानां कीदृश आकारभावप्रत्यवतारः प्रज्ञप्तः ? भगवानाह–गौतम ! ते भरतक्षेत्रोत्पन्ना णमिति प्राग्वि । मनुजा बहुसंहननाः बहूनि–भूयांसि संहननानि वज्रर्षभनाराच–ऋषभनाराच–नाराच–अर्द्धनाराच–कीलिका सेवार्त्तलक्षणानि येषां ते तथा । एकस्यानेकसंहननासम्भवेन षडपि संहननानि प्रतिमनुजं भिन्नान्येव द्रष्टव्यानि । एवंविधा अपि मनुजाः कादाचित्का एव, न पुनः सार्व्वदिकाः, कदाचिदेकद्व्यादिसंहननानामपि सम्भवात् । यथा सम्प्रत्येकमेव सेवार्त्तं, यदुक्त–'संपइ खलु आउसो ! मणुआणं छेवट्ठे संघयणे वट्टइ 'त्ति तन्दुलवैतालि (चारि)के । तथा बहुसंस्थानाः । तत्र संस्थानानि समचतुरस्र–न्यग्रोध–सादि–कुब्ज–वामन–हुण्ड–लक्षणानि षडेव । तान्यपि प्रतिमनुष्य भिन्नान्येव एकस्य द्वयोरसम्भवात्, कालमधिकृत्य कादाचित्कान्येव । यथा सम्प्रत्येकमेव हुण्डसंस्थानम् । यदुक्तं–'संपइ खलु आउसो ! मणुआणं हुंडे संठाणे पण्णत्ते' इति । तथा 'बहुउच्चत्ते'त्यादि । बहव उच्चत्वपर्यायाः उच्चत्वप्रभृतिपर्यायाः उच्चत्व–ह्रस्वत्व–मध्यत्वलक्षणाः पर्याया येषां ते तथा । एतेन भरतक्षेत्रवासिनां समानवयसां मनुजानामुच्चत्वाद्याश्रित्य न देवकुर्व्वादिमनुजवत्समता किन्तु वैचित्र्यमिति दर्शितम् । यद्यप्युच्चत्वाद्याश्रित्य कर्म्मक्षयोपशमकृतं वैचित्र्यं देवकुर्व्वादिष्वपि तथापि तद्व्यवहारपथोत्तीर्णमुपेक्षितं द्रष्टव्यम् । उच्चत्वादिपर्याया अपि परस्परं विरोधिनः संहननादिवत्प्रतिप्राणिनं भिन्ना एव ज्ञेयाः । तथा 'बहु आउ' इत्यादि । बहवोऽन्तर्मुहूर्त्तादारभ्य पल्योपमत्रयं यावदसङ्ख्येया आयुष' पर्यवा येषां ते तथा । अनेन भरतक्षेत्रवर्त्तिनां मनुजानामायुषो वैचित्र्यं दर्शितम् । यतस्तेषां मध्ये-कस्यचिदन्तर्मुहूर्त्तं कस्यचित्समयाधिकमित्यादि क्रमेण यावदुत्कृष्टं त्रिपल्योपममपि । नन्वेवमायुषोऽसङ्ख्येयपर्यवाः सम्पन्नास्ते च सङ्ख्येयानां मनुष्याणामसम्भविन इति चेत् ? मैव अभिप्रायापरिज्ञानात् । यतो

भरतक्षेत्रेऽतीतानागतवर्त्तमानकालवर्त्तिनां मनुजानां मध्ये कोऽपि कस्मिंश्चित्पर्याये वर्त्तमानो भूतो भवति भविष्यति चेत्यभिप्रायेणायुषोऽप्यसङ्ख्येया अपि पर्यवा नासम्भविन इति । अथ तेषां गतिमाह—' बहुइ वासाइं 'ति । बहूनि वर्षाण्यायुः परिपालयन्ति । ' बहूइं वासाइमि 'त्यत्र सविशेषणेन वर्षपदेन तुला-मध्यन्यायेनान्तर्मुहूर्त्तादारभ्य यावन्नरायुःसम्भवी कालो गृहीतो द्रष्टव्यः । अन्यथा गर्भगतानामपि मानवानां म्रियमाणत्वेन ' बहूइं वासाइं 'ति वचनस्याध्यक्षबाधस्तथा चागमबाधोऽपि । यदुक्तं

डहरा वुड्ढा य पासह गब्भत्थावि चयंति माणवा । सेणे जह वट्टयं हरे एव आउक्खयंमि तुट्टइ ॥१॥ त्ति । एवं निजायुः पालयित्वा—समाप्तिं नीत्वा । ' अप्पेगइआ 'त्ति । अप्येकका: अपिः समुच्चये । एकका: केचित् ये मिथ्यादृष्टयो महारम्भपरिग्रहाऽऽसक्तास्तीव्रलोभाभिभूताः सदाचारवर्जिताः पापमतयः पञ्चेन्द्रिय-वधादिना रौद्रपरिणामास्तेऽध्यवसायतारतम्येनानेकभेदभिन्नानि नरकायूंषि बद्ध्वा निरयान् रत्नप्रभा दीन्नरकान् गन्तुं शीलमेषां ते निरयगामिनो भवन्ति । न पुनः सर्व्वे । यदुक्तं

' मिच्छद्दिट्ठी महारंभपरिग्गहो तिव्वलोहनिस्सीलो । निरयाउअं निबंधइ पावमई रोद्दपरिणामो ' ॥१॥ त्ति ॥ तथा अप्येकका: केचित् ये निजनिजमतिरुचिविकल्पितमार्गोपदेशका अर्हदुपदिष्टमार्गना-शकाश्चोत्सूत्रप्ररूपिणः प्रवचनप्रत्यनीकाः नियतेनानन्तानुबन्धिकषायोदयित्वेन महादुराशयाः समुप-र्ज्जितानन्तसंसारबीजभूतकर्म्मसत्ताकाः तथा गूढहृदया मायाविनः शठशीलाः सशल्याः तेऽप्यध्यव-सायतारतम्येनानेकविधानि तिर्यगायूंषि बद्ध्वा एकेन्द्रियादितिर्यग्गतिगामिनो भवन्ति । यदुक्तम्

उम्मग्गदेसओ मग्गनासओ गूढहिअयमाइल्लो । सढसीलो अ ससल्लो तिरिआउं बंधइ जीवो ॥१॥ त्ति ॥ तथा अप्येकका: केचित् स्वभावेनाल्पकषाया दानरुचयः सदाचारसंयमविहीनाः मध्यमगुणैर्युक्ता' मनुष्यायुर्बद्ध्वा मनुजगतिगामिनः स्युः । यदुक्तं

पगइतणुकसाओ दाणरतो सीलसंजमविहूणा । मज्झिमगुणेहिं जुत्तो मणुआउं बंधइ जीवो ॥१॥ त्ति । तथा केचित् अणुव्रतिनो महाव्रतिनो वा बालतपस्विनः अकामनिर्ज्जराभाजो वा सम्यग्दृष्ट-यश्च देवायुर्बद्ध्वा देवगतिगामिनः स्युः । यदुक्तम्

अणुव्वयमहव्वएहि बालतवाकामनिज्जराए अ । देवाउअं निबंधइ सम्मद्दिठी अ जो जीवो ॥१॥ त्ति ॥ तथा केचिदुत्कृष्टसंवरसेविन' सिद्धिमपि यान्तीत्याह—' अप्पेगइआ 'त्ति । अप्येकका: चतुर्गतिगामिभ्यो भिन्नाः केचित् सिद्ध्यन्ति—अवाप्तचरमभवतया सिद्धिगमनयोग्या भवन्ति । 'बुज्झंति'त्ति । प्रागुक्ता एव यदा समुत्पन्नकेवलज्ञानतया स्वपरपर्यायोपेतान् निखिलान् जीवादिपदार्थान् जानन्ति तदा बुद्ध्यन्तीति व्यपदेशः । ' मुच्चति 'त्ति । त एव सञ्जातकेवलबोधात् भवोपग्राहिकर्म्मभिः प्रतिसमयं विमुच्यमाना मुच्यन्ते इति व्यपदिश्यन्ते । ' परिणिव्वाइंति 'त्ति । त एव तेषां कर्म्मपुद्गलानामनुसमयं यथा क्षयमवाप्नुवन्ति तथा शीतीभवन्तः परिनिर्व्वान्तीति प्रोच्यन्ते । ' सव्वदुक्खाणं 'ति । त एव चरम-भवायुषोऽन्तिमसमये क्षपिताऽशेषकर्म्मांशाः सर्व्वदुःखानामन्तं कुर्व्वन्तीति कथ्यन्ते इति ।

अथ भरतक्षेत्रवर्त्तिनो वैताढ्यस्य स्थित्यादि स्वरूपं प्रश्नयन्नाह

कहि णं भंते ! जंबुद्दीवे दीवे भारहे वासे वेअड्ढे णामं पव्वए पण्णत्ते ?। गो० ! उत्तरड्ढभरहवासस्स दाहिणेणं, दाहिणड्ढभरहवासस्स उत्तरेणं, पुरच्छिमलवणसमुद्दस्स पच्चत्थिमेणं, पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं, एत्थ णं जंबुद्दीवे दीवे भारहे वासे वेअड्ढे णामं पव्वए पण्णत्ते । पाईणपडीणायते, उदीणदाहिणविच्छिण्णे, दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठे, पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे, पणवीसं जोअणाइं उड्ढं उच्चत्तेणं, छ सकोसाइं जोअणाइं उव्वेहेणं, पण्णासं जोअणाइं विक्खंभेणं, तस्स बाहा पुरत्थिमपच्चत्थिमेणं चत्तारि अट्ठासीए जोअणसए सोलस य एगूणवीसतिभागे जोअणस्स अद्धभागं आयामेणं पण्णत्ते । तस्स जीवा उत्तरेण पाईणपडीणायता दुहा लवणसमुद्दं पुट्ठा, पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठा, पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठा, दस जोअणसहस्साइं सत्त य वीसे जोअणसए दुवालस एगूणवीसतिभागे जोअणस्स आयामेणं तीसे धणुपट्ठं दाहिणेण, दस जोअणसहस्साइं सत्त य तेआले जोअणसए पण्णरस य एगूणवीसतिभागे जोअणस्स परिक्खेवेणं, रुअगसंठाणसंठिए सव्वरययामए अच्छे सण्हे लण्हे घट्ठे मट्ठे नीरए णिप्पंके निक्कंकडच्छाए सप्पभे सस्सिरीए पासाईए दरिसणिज्जे अभिरूवे पडिरूवे। उभओ पासिं दोहिं पउमवरवेइआहिं दोहि अ वणसंडेहिं सव्वओ समंता संपरिक्खित्ते । ताओ णं पउमवरवेइआओ अद्धजोअणं उड्ढं उच्चत्तेणं पंच धणुसयाइं विक्खंभेणं पव्वयसमिआओ आयामेणं, वण्णओ भाणिअव्वो । ते णं वणसंडा देसूणाइं दो जोयणाइं विक्खंभेणं, पउमवरवेइआ समगा आयामेणं, किण्हा किण्होभासा जाव वण्णओ । वेअड्ढस्स णं पव्वयस्स पुरत्थिमपच्चत्थिमेणं दो गुहाओ पण्णत्ताओ । उत्तरदाहिणायताओ पाईणपडीणविच्छिण्णाओ पण्णासं जोअणाइं आयामेणं । दुवालस जोअणाइं विक्खंभेणं अट्ठ जोअणाइं उड्ढं उच्चत्तेणं वयरामयकवाडोहाडणीआओ जमलजुअलकवाडघणदुप्पवेसाओ निच्चंधकारतमिस्साओ ववगयगहचंदसूरनक्खत्तजोइसप्पहाओ जाव पडिरूवाओ । तं जहा—तमिसगुहा चेव खंडप्पवायगुहा चेव । तत्थ णं दो देवा महिड्ढिआ महज्जुईआ महब्बला महायसा महासोक्खा महाणुभावा पलिओवमठितिआ परिवसंति । तं जहा कयमालए चेव णट्टमालए चेव । तेसि णं वणसंडाणं बहुसमरमणिज्जाओ भूमिभागाओ वेअड्ढस्स पव्वयस्स उभओ पासिं दस दस जोअणाइं उड्ढं उप्पइत्ता एत्थ णं दुवे विज्जाहरसेढीओ पण्णत्ताओ । पाईणपडीणायताओ उदीणदाहिणविच्छिण्णाओ दस जोअणाइं विक्खंभेणं पव्वयसमिआओ आयामेणं उभओ पासिं दोहिं पउमवरवेइआहिं दोहि अ वणसंडेहिं संपरिक्खित्ताओ । ताओ णं पउमवरवेइआओ अद्धजोअणं उड्ढं उच्चत्तेणं पंच धणुसयाइं विक्खंभेणं पव्वयसमिआओ आयामेण वण्णओ णेअव्वो । वणसंडा वि पउमवरवेइआसमगा आयामेणं वण्णओ । विज्जाहरसेढीणं भंते ! भूमी णं केरिसए आगारभावपडोयारे पण्णत्ते ?। गो० ! बहुसमर-

मणिज्जे भूमिभागे पण्णत्ते। से जहा णाम ए आलिंगपुक्खरे इ वा जाव णाणामणिपंचवण्णेहिं मणीहिं उवसोभिए। तं कित्तिमेहिं चेव अकित्तिमेहिं चेव। तत्थ णं दक्खिणिल्लाए विज्जाहरसेढीए गगणवल्लभपामोक्खा पण्णासं विज्जाहरणगरावासा पण्णत्ता, उत्तरिल्लाए विज्जाहरसेढीए रहनेउरचक्कवालपामोक्खा सट्ठिं विज्जाहरणगरावासा पण्णत्ता, एवामेव पुव्वावरेण दाहिणिल्लाए उत्तरिल्लाए विज्जाहरसेढीए एगं दसुत्तरं विज्जाहरणगरावाससयं भवतीतिमक्खायं। ते णं विज्जाहरणगरा रिद्धत्थिमिअसमिद्धा पमुइअजणजाणवया जाव पडिरूवा। तेसु णं विज्जाहरणगरेसु बहवे विज्जाहररायाणो परिवसंति। महया हिमवंतमलयमंदरमहिंदसारा रायवण्णओ भाणिअव्वो। विज्जाहरसेढीणं भंते! मणुआण केरिसए आगारभावपडोआरे पण्णत्ते?। गो०! ते णं मणुआ बहुसंघयणा बहुसंठाणा बहुउच्चत्तपज्जवा बहुआउपज्जवा जाव सव्वदुक्खाणमंतं करेंति। तासि णं विज्जाहरसेढीणं बहुसमरमणिज्जाओ भूमिभागाओ वेअड्ढस्स पव्वयस्स उभओ पासिं दस दस जोअणाइं उड्ढं उप्पतित्ता एत्थ णं दुवे आभिओगसेढीओ पण्णत्ताओ। पाईणपडीणायताओ उदीणदाहिणविच्छिण्णाओ दस दस जोअणाइं विक्खंभेणं पव्वयसमिआओ आयामेणं उभओ पासिं दोहिं पउमवरवेइआहिं दोहिं वणसंडेहिं संपरिक्खित्ताओ। वण्णओ। दोण्हवि पव्वयसमिआओ आयामेणं आभिओगसेढीणं भंते! केरिसए आगारभावपडोआरे पण्णत्ते? गो०! बहुसमरमणिज्जे भूमिभागे पण्णत्ते, जाव तणेहिं उवसोभिए, वण्णाइ जाव तणाणं सद्दोत्ति। तासि णं आभिओगसेढीणं तत्थ तत्थ देसे तहिं तहिं जाव वाणमंतरा देवा अ देवीओ अ आसयंति सयंति जाव फलवित्तिविसेसं पच्चणुभवमाणा विहरंति। तासु णं आभिओगसेढीसु सक्करस देविंदस्स देवरण्णो सोमजमवरुणवेसमणकाइआण आभिओगाण देवाण बहवे भवणा पण्णत्ता। ते णं भवणा बाहिं वट्टा अंतो चउरंसा वण्णओ जाव अच्छरगणसंघविकिण्णा जाव पडिरूवा। एत्थ णं सक्कस्स देविंदस्स देवरण्णो सोमजमवरुणवेसमणकाइआ बहवे आभिओगा देवा महिड्ढिआ महज्जुइआ जाव महासुक्खा पलिओवमठितिआ परिवसंति। तासि ण आभिओगसेढीणं बहुसमरमणिज्जाओ भूमिभागाओ वेअड्ढस्स पव्वयस्स उभओ पासिं पंच पंच जोअणाइं उड्ढं उप्पतित्ता एत्थ णं वेअड्ढस्स पव्वयस्स सिहरतले पण्णत्ते। पाईणपडीणायते उदीणदाहिणविच्छिण्णे दस जोअणाइं विक्खंभेणं पव्वयसमगे आयामेणं एक्काए पउमवरवेइआए एकेण य वणसंडेणं सव्वओ समंता संपरिक्खित्ते पमाणं वण्णओ दोण्हंपि। वेअड्ढस्स णं भंते! पव्वयस्स सिहरतलस्स केरिसए आगारभावपडोआरे पण्णत्ते?। गो०! बहुसमरमणिज्जे भूमिभागे पण्णत्ते। से जहा णाम ए आलिंगपुक्खरे इ वा जाव णाणामणिपंचवण्णेहिं मणीहिं उवसोभिए जाव वावीओ पुक्खरिणीओ जाव वाणमंतरा देवा देवीओ अ आसयंति जाव भुंजमाणा विहरंति। जंबुद्दीवे णं भंते! दीवे भारहे वासे वेअड्ढपव्वए कइ कूडा प०?। गो०! नवकूडा। प० तं०

**सिद्धायतणकूडे दाहिणड्ढभरहकूडे खंडप्पवायगुहाकूडे माणिभद्दकूडे वेअड्ढकूडे पुण्णभद्दकूडे तिमिसगुहाकूडे उत्तरड्ढभरहकूडे वेसमणकूडे ॥**

'कहि णं भंते !' इत्यादि । क णमिति प्राग्वत् । भदन्त ! जम्बूद्वीपे द्वीपे भारते वर्षे वैताढ्यो नाम्ना पर्वतः प्रज्ञप्तः ? भगवानाह–गौतम ! उत्तरार्द्धभरतवर्षस्य दक्षिणेन, दक्षिणार्द्धभरतवर्षस्योत्तरेण, पौरस्त्यलवणसमुद्रस्य पश्चिमेन, पश्चिमलवणसमुद्रस्य पूर्वेण, अत्र णमिति प्राग्वत् । जम्बूद्वीपे द्वीपे भारते वर्षे वैताढ्यो नाम्ना पर्वतः प्रज्ञप्तः । स च प्राचीनप्रतीचीनाऽऽयतः पूर्वपश्चिमाभ्यां दीर्घ इत्यर्थः । उदीचीनदक्षिणविस्तीर्णः–उत्तरदक्षिणयोः पृथुलः द्विधा लवणसमुद्रं स्पृष्टः । द्वैविध्यमाह–' पुरत्थिमिल्लाए ' त्ति । पौरस्त्यया कोटया पौरस्त्यं लवणसमुद्रं स्पृष्टः, पश्चिमया कोटया पश्चिमं लवणसमुद्रं स्पृष्टः । अथ वैताढ्यस्योच्चैस्त्वादिना प्रमाणमाह–'पणवीसमि'त्यादि । पञ्चविंशतियोजनान्यूर्ध्वमुच्चैस्त्वेन सक्रोशानि षट् योजनानि उद्वेधेन, पञ्चाशद्योजनानि विष्कम्भेन तस्य वैताढ्यस्य 'बाह'त्ति । बाहाः–बाहुः पूर्वपश्चिमेन–पूर्वा च पश्चिमा चेति समाहारे पूर्वपश्चिमं तेन । अयं भावः–बाहा तावद् द्विविधा–ऋज्वी वक्रा च । तत्र या ऋज्वी सा पूर्वापरायता एकैव पर्वतमध्यवर्तिनी, वक्रा चोत्तरदक्षिणायता एका पूर्वस्याम्–अपरा च पश्चिमायाम् । तस्याश्च स्वरूपनिरूपणमिह सम्प्रति प्रकृतमस्तीति समवसेयम् । तस्याश्चैकप्रदेशात्मकत्वेन पृथुत्वमुपेक्ष्य दैर्घ्येण योजनप्रमाणमाह–'चत्तारी'त्ति । चत्वारि योजनशतानि अष्टाशीत्यधिकानि षोडशैकोनविंशतिभागाश्च अर्द्धभागश्चार्थात् कलाया, सार्द्धषोडशकला इत्यर्थः । तदङ्कस्थापना चेयं–यो० ४८८–१६॥/१९ आयामेन दैर्घ्येण प्रज्ञप्ता । तस्य वैताढ्यस्य जीवा उत्तरेण–उत्तरदिग्वर्त्तिनी प्राचीनप्रतीचीनायता–पूर्वपश्चिमदीर्घा द्विधा लवणसमुद्रं स्पृष्टा । पौरस्त्यया कोटया पौरस्त्यं लवणसमुद्रं स्पृष्टा, पश्चिमया कोटया पश्चिमं लवणसमुद्रं स्पृष्टा । तस्या दैर्घ्यंण प्रमाण यथा 'दस जोअणसहस्साइं'ति । दश योजनसहस्राणि विंशत्यधिकानि सप्त योजनशतानि च द्वादश चैकोनविंशतिभागा योजनस्य आयामेन । तदङ्का यथा–१०७२०–१२/१९ । तस्या जीवाया धनुःपृष्ठं दक्षिणेन दश योजनसहस्राणि सप्तशतानि त्रिचत्वारिंशदधिकानि पञ्चदश चैकोनविंशतिभागो योजनस्य । तदङ्कस्थापना–१०७४३–१५/१९ परिक्षेपेण–परिधिना । अथ वैताढ्यस्य बाहाजीवाधनुःपृष्ठानां क्रमेण करणानि प्रदर्श्यन्ते–तत्र प्रथमं बाहायाः करणं त्वेवं–बृहद्धनुःपृष्ठाल्लघुधनुःपृष्ठे शोधिते यदवशिष्टं तस्यार्द्धं बाहाया आयामपरिमाणं भवति । यदुक्तं–' गुरुधणुपिट्ठं लघुपिट्ठूणं अद्धिअं बाह'त्ति । तथाहि-वैताढ्यस्य यद्धनुःपृष्ठं तन्महद्धनुपृष्ठं, यत्पुनर्दक्षिणभरतार्द्धस्य धनुःपृष्ठं तल्लघु । तत्र वैताढ्यस्य धनुःपृष्ठं दश सहस्राणि सप्त शतानि त्रिचत्वारिंशदधिकानि योजनानां कला च पञ्चदशेत्येवंरूपात् बृहद्धनुःपृष्ठात् नव सहस्राणि सप्त शतानि षट्षष्टिरेका च कलेत्येवं ९७६६–१/१९ रूपं लघुधनुःपृष्ठं शोध्यते, शोधिते च तस्मिन् शेषमिदं–नव शतानि सप्तसप्तत्यधिकानि योजनानां कलाश्च चतुर्दश । तदङ्कस्थापना–९७७–१४/१९ एतेषामर्द्धे लब्धं चत्वारि योजनशतानि अष्टाशीत्यधिकानि कलाश्च सार्द्धषोडश । तदङ्कस्थापना–४८८–१६॥/१९ एतावत्परिमाणा पूर्वस्यामपरस्यां च दिशि प्रत्येकं वक्रीभूता बाहा । अथ वैताढ्यजीवाकरण यथा–जम्बूद्वीपविष्कम्भः कलारूप एकोनविंशतिलक्षप्रमाणो वैताढ्यसम्बन्धिना इषुणा पञ्चसप्तत्यधिकचतुःपञ्चाशच्छतप्रमाणरूपेण ५४७५ ऊनः क्रियते । जातः शेषो

राशिरष्टादशलक्षाश्चतुर्नवतिसहस्राणि पञ्चशतानि पञ्चविंशत्यधिकानि १८९४५२५ यथोक्तपरिमाणेन ५४७५ वैताढ्येषुणा गुण्यते। जातः एककः शून्यं त्रिकः सप्तको द्विकः पञ्चकः द्विकश्चतुष्कस्त्रिकः सप्तकः पञ्चकः १०३७२५२४३७५। एष राशिर्भूयश्चतुर्भिर्गुण्यते। जातश्चतुष्क एककश्चतुष्कः नवकः शून्यद्वयं नवकः सप्तकः पञ्चकः शून्यद्वयं च ४१४९००९७५००। अस्य राशेर्वर्गमूलानयने लब्धे द्वे लक्षे त्रीणि सहस्राणि षट् शतानि एकनवत्यधिकानि २०३६९१। शेषराशिस्तु चतुःसप्ततिसहस्राणि एकोनविंशत्यधिकानि ७४०१९। छेदकराशिः पुनश्चतस्रो लक्षाः सप्त सहस्राणि त्रीणि शतानि द्व्यशीत्यधिकानि ४०७३८२। वर्गमूललब्धस्य तु कलाराशेर्योजनकरणार्थमेकोनविंशत्या भागो ह्रियते। लब्धानि योजनानां दश सहस्राणि सप्त शतानि विंशत्यधिकानि कलाश्चैकादश १०७२०–११/१९। उद्धरितशेषराश्यपेक्षया किञ्चिदूनैका कला विवक्षितेति द्वादश कला इति। अथ वैताढ्यस्य धनुःपृष्ठकरणं–यथा वैताढ्यस्येषुः कलानां चतुःपञ्चाशच्छतानि पञ्च सप्तत्यधिकानि ५४७५। अस्य वर्गो विधीयते। जात द्विको नवको नवकः सप्तकः पञ्चकः षट्को द्विकः पञ्चक २९९७५६२५ श्चेति। भूय एष राशिः षड्भिर्गुण्यते, जातमेककः सप्तको नवकोऽष्टकः पञ्चकस्त्रिकः सप्तकः पञ्चकः शून्यं १७९८५३७५० चेति। एष राशिर्वैताढ्यसत्को जीवावर्गे प्रक्षिप्यते। जीवावर्गस्तु चतुष्क एककश्चतुष्को नवकः शून्यद्वय नवकः सप्तकः पञ्चकः शून्यद्वयं ४१४९००९७५०० चेति। ततो जातमिदं–चतुष्क एककः षट्कः षट्को नवको नवकः पञ्चकः एकको द्विकः पञ्चकः शून्यं ४१६६९९५१२५० चेति। अस्य वर्गमूलानयने लब्धं द्वे लक्षे चत्वारि सहस्राणि शतमेकं द्वात्रिंशदधिक कलानां २०४१३२। शेषराशिस्तु सप्तसप्ततिसहस्राण्यष्टौ शतानि षड्विंशत्यधिकानि ७७८२६। छेदकराशिश्चतस्रो लक्षाः अष्टौ सहस्राणि द्वे शते चतुःषष्टिश्च ४०८२६४। वर्गमूललब्धस्तु राशिर्योजनकरणार्थमेकोनविंशत्या भज्यते लब्धं योजनानां दश सहस्राणि सप्त शतानि त्रिचत्वारिंशच्च कलाश्च पञ्चदश १०७४३–१५/१९। अथ वैताढ्यस्य संस्थानमाह–'रुअगे'त्यादि। रुचकसंस्थानसंस्थितः। तत्र रुचको नाम वक्षोभूषणविशेषस्तस्य संस्थानेन संस्थितः। स च सर्वात्मना रजतमयः–रूप्यात्मक, इत्यर्थः। 'अच्छे सण्हे' इत्यादिविशेषणानि जगतीवद् व्याख्येयानि। यथा अच्छः–स्वच्छ आकाशस्फटिकवदित्यादि यावत्प्रतिरूपः प्रतिविशिष्टं–प्रतिक्षणं नव नवमिव रूप यस्येत्यादि। स च वैताढ्यो न केवलमुक्तलक्षणस्वरूपत एव किन्तु स्वोचितशोभाकारिवस्तुकलित इत्याह– उभयो पासिं'ति। उभयतो दक्षिणत उत्तरतश्च पार्श्वयो द्वाभ्यां पद्मवरवेदिकाभ्यां वनखण्डाभ्यां च सर्वतः–सर्वासु समन्तात्–सामस्त्येन सम्परिक्षिप्तो–वेष्टित इत्यर्थः। अथ पद्मवरवेदिकयोः स्वरूपमाह–'ताओ णमि'त्यादि। ते पद्मवरवेदिके अर्द्धं योजनमूर्ध्वमुच्चैस्त्वेन पञ्च धनुःशतानि विष्कम्भेन पर्वतसमिके–पर्वतसमाने आयामेन दैर्घ्येण 'वण्णओ'त्ति वर्ण्णको भणितव्यः। स च यथा जगतीवेदिकावर्णक औपपातिकोक्तो भणितस्तथाऽत्रापीत्यर्थः। अथ वनखण्डौ कीदृशौ? इत्याह 'ते णं वणसंडा' इत्यादि। तौ वनखण्डौ देशोने अर्द्धतृतीयधनुःशत २५० विहीने द्वे योजने विष्कम्भेन पृथुतया पद्मवरवेदिकासमानौ चायामेन। तौ च वनखण्डौ कीदृशौ? 'किण्हा किण्होभासा' इत्यादिविशेषणकदम्बकविशिष्टौ। तत्र कृष्णौ–कृष्णवर्णोपेतौ कृष्णावभासौ न पुनर्भ्रान्त्या कृष्णौ किन्तु तद्वदाभासो ययोस्ताविति। 'वण्णओ'त्ति वर्ण्णकः जगतीवनखण्डवर्ण्णको वाच्यः। स च तत्रेवात्राप्यौपपातिकोक्तो वक्तव्यः। अथ तत्रा-

परं किमस्ति ? इत्याह–'वेअड्ढस्स ण'मित्यादि । वैताढ्यस्य णमिति प्राग्वत् । पर्व्वतस्य 'पुरत्थिमपच्चत्थिमेणं'ति । पूर्व्वा च पश्चिमा च पूर्व्वपश्चिम तेन पूर्व्वतः पश्चिमतश्चेत्यर्थः । द्वे गुहे–वैताढ्यस्य विवरविशेषे प्रज्ञप्ते । ते च किंप्रमाणे ? इत्याह–'पण्णासमि'त्यादि । पञ्चाशद्योजनान्यायामेन द्वादशयोजनानि विष्कम्भेन, अष्टौ योजनान्यूर्ध्वमुच्चैस्त्वेन । गुहे च किंलक्षणे ? 'वयरामय'त्ति । वज्रमये कपाटे अवघाटिन्यौ च ययोस्ते वज्रमयकपाटावघाटिन्यौ, प्रतिद्वार द्वयोः कपाटयोरवघाटिन्योश्च सद्भावात् । अवघाटनी नाम एकैकस्य द्वारकपाटस्य पश्चाद्भागेनाऽवष्वष्कमानस्यावष्टम्भभूतश्चतुर्योजनायामविष्कम्भो लोकोक्त्या तोङ्क इति प्रसिद्धः, स्तूपः–कपाटावष्टम्भनहेतुस्तत्पृष्ठिभागे वज्रकीलिका वा सम्भाव्यते । पुनः किंभूते गुहे ? 'जमले'त्यादि । यमलानि–समप्रदेशस्थितानि युगलानि–द्वयरूपाणि घनानि–निश्छिद्राणि कपाटानि यानि तैर्दुःखेन प्रवेशो ययोस्ते तथा । प्राकृतत्वाद्विशेषणस्य परनिपातः । अत एव 'निच्चंधयारे'त्यादि । नित्यान्धकारतमिस्रे नित्य–सर्व्वकालभावि स्वाभाविकं चक्षुष्मतोऽन्धानिव करोतीति अन्धकारम् एवंविधं तमिस्रं–ध्वान्त ययोस्ते नित्यान्धकारतमिस्रे । यत्तु चक्रवर्त्तिलिखितमण्डलोद्योतस्य सद्भावः स चोपाधिकत्वान्न विवक्षितः अतो न नित्यत्वस्य काचित् क्षतिः, अन्यथा नरकेऽपि नित्यान्धकारताया व्याहतिः प्रसज्येत, तत्रापि तीर्थकृज्जन्मादिहेतुकस्य देवकृतस्य चोद्योतस्य सम्भवात् । अथ सर्वदोद्योताऽभावे हेतुमाह–'ववगय'त्ति । विशेषेण प्रकाशोद्भवप्रकाशस्याप्यभावेनापगता–नष्टा ग्रहचन्द्रसूर्यनक्षत्राणामुपलक्षणात्तारकाणामपि ज्योतिष्काणां प्रभा ययोस्ते व्यपगतग्रहचन्द्रसूर्यनक्षत्रज्योतिष्कप्रभे यावत् तत्प्रतिरूपे यावच्छब्दात् वैताढ्यस्यावयवरूपत्वेन वैताढ्यवदनयोरपि 'सव्वरययामयाओ अच्छाओ सण्हाओ'इति विशेषणानि वक्तव्यानि । न च तत्र सर्व्वथा प्रकाशाभावात् 'सप्पभाओ समरीआओ' इत्यादिविशेषणानि अयुक्तानीति शङ्कनीयम् । तथाविधप्रत्यासन्नवस्तुमात्रप्रकाशकानां मण्यादीना प्रभाया विद्यमानत्वात् दूरस्थानामपि प्रकाशकानां ज्योतिष्कानामेव प्रभाया निषिद्धत्वाच्च । अथ द्वयोर्गुहयोर्नाम्ना व्यक्तिमाह–'तं जहे'त्यादि । तद्यथा–तमिस्रागुहा च खण्डप्रपातगुहा च । उभयत्रापि चकारौ समुच्चयार्थौ । एवकारावधारणार्थौ । तत्र प्रथमा तमिस्रागुहा वैताढ्यस्य पश्चिमदिग्भागवर्त्तिनी, द्वितीया पूर्व्वदिग्विभागवर्त्तिनी चेति । इह चानन्तरसूत्रोक्तक्रममतिक्रम्य व्यत्ययेन यदभिधानभणनं तत् चक्रवर्ती प्रादक्षिण्येन देशान् साधयन् उत्तरभरतार्द्धसाधनाय तमिस्राभिधानाया गुहायां प्रविश्य पूर्व्वदिग्वर्त्तिन्यां खण्डप्रपातगुहायां निर्गच्छति तदपेक्षया द्रष्टव्यम् । अथ तत् स्वामिनोः स्वरूपं नामनी चाह–'तत्थ णमि'त्यादि । तयोर्गुहयोः णमिति प्राग्वत् । द्वौ देवौ परिवसतः । किंलक्षणौ ? महर्द्धिकौ–महती ऋद्धिर्भवनपरिवारादिरूपा ययोस्तौ तथा । महती द्युतिराभरणादिप्रभवा ययोस्तौ तथा । एव महाबलौ महायशसौ महासौख्याविति प्रतीतम् । महाभागाविव्यचिन्त्यशक्त्युपेतौ पल्योपमं स्थितिरायुषो ययोस्तौ पल्योपमस्थितिकौ । 'तं जहे'त्ति नामव्यक्त्युपदर्शने । कृतमालको नृतमालकश्च । चकारावेवकारौ च प्राग्वत् । तत्र कृतमालकस्तमिस्रागुहाधिपतिः नृत्तमालकस्तु खण्डप्रपातगुहाधिपतिरिति । अथ कुतः कियद्दूरं वैताढ्ये विद्याधरश्रेण्यौ स्त ? इति दर्शयति–'तेसि णं वणसंडाणमि'त्यादि । तयोर्वैताढ्यस्योभयपार्श्ववर्त्तिनोर्वनखण्डयोर्बहुसमरमणीयाद् भूमिभागाद्वैताढ्यस्योभयोः पार्श्वयोः दश दश योजनानि ऊर्ध्वमुत्पत्य द्वे

विद्याधरश्रेण्यौ प्रज्ञप्ते। कथंभूते ? 'पाईण'त्ति। प्राचीनप्रतीचीनायते उत्तरदक्षिणविस्तीर्ण्णे प्रत्येक दश दश योजनानि विष्कम्भतः पर्व्वतसमे आयामतः। ते चोभयोः पार्श्वयोः द्वाभ्यां पद्मवरवेदिकाभ्यां वनखण्डाभ्यां च परिक्षिप्ते। 'ताओ णमि'त्यादि। ते पद्मावरवेदिके अर्द्धयोजनमुच्चैस्त्वेन पञ्च-धनुःशतानि विष्कम्भतः पर्व्वतसमे चायामतः 'वण्णओ' वर्ण्णकः प्रागुक्तजगतीवेदिकावर्ण्णकवत् ज्ञातव्यः। वनखण्डावपि पद्मवरवेदिकासमानौ आयामेन। वर्णकस्तु द्वयोरपि पूर्ववत्। अथ विद्याधर-श्रेण्योः स्वरूपादि प्रश्नविषयीकुर्वन्नाह-'विज्जाहरे'त्यादि विद्याधरश्रेण्योर्भदन्त। णमिति प्राग्वत। भूम्योः कीदृश आकारभावप्रत्यवतारः प्रज्ञप्तः ? भगवानाह-गौतम ! बहुसमरमणीयो भूमिभागः प्रज्ञप्तः। दृष्टान्तमाह 'से जहे'त्यादि। तद्यथा नामेत्यादि प्राग्वत्। 'आलिंगपुक्खरे इ वा जाव णाणाविह पंचवण्णेहिमि'त्यादि प्राग्वत्। अथ विद्याधरश्रेण्योर्नगरसङ्ख्यामाह 'तत्थ णं दक्खिणिल्लाए' इत्यादि। तत्र तयोर्मध्ये दाक्षिणात्याया विद्याधरश्रेण्यां गगनवल्लभप्रमुखाः-गगनवल्लभप्रधाना पञ्चा-शद्विद्याधरनगरावासाः प्रज्ञप्ताः। तत्र नगराण्येव नगरावासा भण्यन्ते इति। उत्तरस्यां दिशि विद्याधर-श्रेण्यां रथनूपुरचक्रवालप्रमुखाः षष्टिर्नगरावासाः। श्रीआवश्यकचूर्णौ तु 'उत्तरसेढीए विणमी सट्ठि णगराणि गगणवल्लहप्पमुहाणि णिवेसेति नमी दाहिणसेढीए रहनेउरचक्कवालादीणि णिवेसेति त्ति मुख्य-नगरयोर्वैपरीत्येनाप्यभिधानम्। एवं ऋषभचरित्रेऽपि सर्व्वेषामपि नगराणा नामान्युक्तानि। तत्रापि रथनूपुरचक्रवालं दक्षिणश्रेण्यामुत्तरश्रेण्यां च गगनवल्लभं मुख्यतया भणितम्। तथाहि

प्राक् किन्नरनरगीतं वाहुकेतुपुरं ततः। पुण्डरीकं हरित्केतुः सेतुकेतुपुरं तथा ॥१॥
सर्प्पारिकेतुनगरं श्रीवाहु श्रीगृहं तथा। लोहार्गलाऽरिजये च स्वर्गलीलापुरं तथा ॥२॥
वज्रार्गलपुरं वज्र-विमोकनगरं तथा। तथा महीसारपुरञ्जये सुकृतमुख्यपि ॥३॥
चतुर्मुखी वहुमुखी रता च विरताऽपि च। आखण्डलपुरं चापि विलासयोनिपत्तनम् ॥४॥
अपराजितकाञ्चीदामाख्ये सुविनयं नभः। क्षेमङ्करं सहचिह्न-पुरं कुसुमपुर्यपि ॥५॥
सञ्जयन्ती शक्रपुर जयन्ती वैजयन्त्यपि। विजया क्षेमङ्करी च चन्द्रभासपुरं तथा ॥६॥
रविभासपुरं सप्त-भूतलावासमेव च। सुविचित्रं महाभ्रं च चित्रकूटं त्रिकूटकम् ॥७॥
वैश्रमणकूटशशिपुरे रविपुरं तथा। विमुखीवाहिन्यौ सुमुखीनित्योद्योतिनी तथा ॥८॥
श्री रथनूपुरचक्रवालं तु नगरोत्तमम्। इति। तथा
पुर्यर्ज्जुनी वारुणी च वैरिसंहारिणी तथा। कैलासवारुणी विद्युद्दीप्तं किलिकिलं तथा ॥१॥
वासञ्चूडामणिश्चैव चन्द्रभाभूषणं तथा। वशवत्कुसुमचूलं हंसगर्भं च मेघकम् ॥२॥
शङ्करं लक्ष्मीहर्म्यं च चामरं विमलं तथा। असुमत्कृतं च शिवमन्दिरं वसुमत्यपि ॥३॥
सर्वसिद्धस्तुतं चैव सर्वशत्रुञ्जयं तथा। केतुमालाङ्कनगर-मिन्द्रकान्तामिध ततः ॥४॥
महानन्दनाशोकं च वीतशोकं विशोककम्। सुखालोकालकतिलकनभस्तिलकान्यपि ॥५॥
मन्दिरं कुमुदकुन्दं ततो गगनवल्लभं। युवती तिलकसञ्ज्ञमवनीतिलकं ततः ॥६॥

सगन्धर्व्वं मुक्तहारं ततोऽनिमिषविष्टपम् । अग्निज्वाला गुरुज्वाला श्रीनिकेतपुरं तथा ॥७॥
ततो जयश्रीनिवासं रत्नकुलिशपर्व्वतम् । वशिष्ठाश्रयं द्रविण-जयं चाथ सभद्रकम् ॥८॥
भद्राश्वपुरं तस्मात् फेनशिखरमप्यथ । गोक्षीरवरशिखरा-भिधानं तदनन्तरं ॥९॥
वैरक्षोभशिखरकं गिरिशिखरकं ततः । धरणी वारुणीसञ्ज्ञं सुदर्शनपुरं ततः ॥१०॥
दुर्गं दुर्द्धरमाहेन्द्रे विजयं च सुगन्धिनी । सुरतनागरपुरं ततो रत्नपुराभिधम् ॥११॥

एषां प्रधानभूतं तु पुरं गगनवल्लभम् । इति । अथोभयोरपि मीलने सर्व्वसङ्ख्यामाह– 'एवामेवे'ति एवमेव प्रागुक्तप्रकारेणैव 'पुव्वावरेणं'ति पूर्व्वापरदिशोर्दैर्घ्येण, पूर्व्वापरनिर्व्वचनेन पञ्चाशत्षष्टिश्चेति सङ्ख्यामिलनया वा दक्षिणयोत्तरया च श्रेण्या 'एगं दसुत्तरं'ति । एकं दशोत्तरं–दशाधिकं विद्याधरनगरावासशतं भवतीत्याख्यातं तीर्थकरादिभिरिति गम्यम् । अथ विद्याधरनगराणि कीदृशानीति दर्शयति 'ते णं विज्जाहरे'त्यादि । तानि विद्याधरनगराणि ऋद्धस्तिमितसमृद्धानि । तत्र ऋद्धानि भवनैः पौरजनैश्चातीव ऋद्धिमुपगतानि । स्तिमितानि-स्वचक्रपरचक्रतस्करडमरादिसमुत्थभय-कल्लोलमालापरिवर्जितानि, समृद्धानि धनधान्यादिविभूषितानि, ततः पदत्रयस्य कर्म्मधारयः । तथा 'पमुइअजणे'त्यादि 'जाव पडिरूवा' इति पर्यन्तं मिथिलानगरीवर्ण्णकोक्तं वक्तव्यम् । अथ नगरस्थिती राजविरहिता न भवतीत्यत आह 'तेसु णमि'त्यादि तेषु विद्याधरनगरेषु बहवो विद्याधर-राजानः परिवसन्ति राज्यस्थितिं परिपालयन्ति । ते च राजानः कीदृशा ? इत्याह–' महत्ये 'त्यादि । महाहिमवान्–हैमवतस्य क्षेत्रस्योत्तरतः सीमाकारी वर्षधरपर्व्वतः । मलय'-पर्व्वतविशेषः सुप्रतीतः । मन्दरो–मेरुः महेन्द्रः–शक्रादिको देवराजस्तद्वत्साराः प्रधाना ये ते तथा । 'रायवण्णओ 'त्ति । अत्र राजवर्ण्णको वक्तव्यः । स चौपपातिकोक्तो जितशत्रुराजवर्ण्णकोऽत्रैव भणितस्ततो भणितव्यः । स चैवम्– 'अच्चंतविसुद्धरायकुलवसप्पसूया निरतरां रायलक्खणविराइअगमंगा बहुजणबहुमाणपूइआ सव्व-गुणसमिद्धा' इत्यादि । यावत् 'रज्जं पसाहेमाणा विहरंती'ति । अथ तत्र मनुष्याः कीदृशा ? इति प्रश्नयति 'विज्जाहरे 'त्यादि । विद्याधरश्रेण्योर्भदन्त ! मनुष्याणां कीदृश आकारभावप्रत्यवतारः स्वरूप-विशेषप्रादुर्भावः प्रज्ञप्तः ? भगवानाह–गौतम ! 'ते णं 'ति ते णमिति प्राग्वित । मनुजा बहुसहनना बहुसंस्थाना बहूच्चत्वपर्यवा उच्चत्वप्रमुखपर्यवास्तेषां बहव इत्यर्थः । एवं बह्वायुःपर्यवाः यावत् सर्व्वदुःखा-नामन्तं कुर्वन्ति । यावत्करणात् 'बहूइं वासाइं आउअं पालेंति पालेत्ता अप्पेगइआ निरयगामि अप्पेगइआ तिरिअगामी अप्पेगइआ मणुअगामी अप्पेगइआ देवगामी अप्पेगइआ सिज्झंति बुज्झंति मुच्चंति परिणिव्वाइंति' इत्यादिदक्षिणभरतार्द्धमनुष्यवर्ण्णक इहापि वक्तव्यः । अथ पुनरपि वैताढ्ये कुतः कियद् दूरं किमस्ति ? इत्याह–'तासि णमि'त्यादि । तयोर्विद्याधरश्रेण्योर्बहुसमरमणीयाद् भूमिभागात् वैताढ्यस्य पर्व्वतस्योभयोः पार्श्वयोर्दश दश योजनान्यूर्ध्वमुत्पत्य 'एत्थ णं 'ति । अत्र प्रदेशे अभियोग-देवश्रेण्यौ प्रज्ञप्ते । अभियोगाश्च शक्रलोकपालसम्बन्धिन इत्यनन्तरं सूत्रकार एव वक्ष्यति । किंलक्षणे ? प्राचीनप्रतीचीनायते उदीचीनदक्षिणविस्तीर्णे दश दश योजनानि विष्कम्भतः पर्व्वतसमे आयामेन उभयोः पार्श्वयोर्द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां वनखण्डाभ्यां च सम्परिक्षिप्ते 'वण्णओ दोण्ह वि'त्ति-वर्णकः द्वयोरपि पद्मवरवेदिकावनखण्डयोः प्राग्वद् ज्ञातव्यः । तौ च पद्मवरवेदिकावनखण्डौ पर्व्वत-

समावायामेन । अथाभियोगश्रेणिस्वरूपं पृच्छति 'आभिओगे'त्यादि । आभियोगश्रेण्योर्भदन्त ! कीदृश आकारभावप्रत्यवतारः प्रज्ञप्तः ? भगवानाह-गौतम ! 'बहुसमे'ति सुगमम् । यावत् तृणै रुपशोभितः यावत्करणात् 'से जहा णाम ए आलिंगे'त्यादि यावत्तृणानां शब्दः सुनिपुणशिल्पिजनवाद्यमानवेणुवीणामृदङ्गध्वनेरपि श्रुतिमनसोर्निर्वृतिकरः प्रादुर्भवति । अथाभियोगश्रेण्योस्तत्र देशे प्रदेशे चाभियोगा देवाः किं कुर्वन्त सन्ति ? इत्याह-'तासि णमि'त्यादि । तयोराभियोगिकश्रेण्योस्तत्र तत्र देशे 'तर्हि तर्हि'ति देशस्यापि तत्र तत्र प्रदेशे तथाविधोर्क्तहंसाद्यासनविशिष्ट इत्यर्थः । वानमन्तरा देवा देव्यश्च यथासुखमासते शेरते च दीर्घकायप्रसारणेन वर्त्तन्ते, न पुनर्निद्रामपि कुर्वन्ति, तेषां देवयोनिकत्वेन तथास्वभावाऽभावात् । 'जाव'त्ति यावत् फलवृत्तिविशेष-कल्याणरूपफलविपाकं प्रत्यनुभवन्तः-स्वस्य स्वस्य पुण्यानुसारेण पृथग्भावेनास्वादयन्तो विहरन्ति । यावत्करणात् 'चिट्ठंति निसीयंती' त्यादि सङ्ग्रहः । व्याख्या च जगत्यामुत्पातपर्वतवर्णकोक्ताऽवसातव्या । 'तासु णमि'त्यादि । तयोराभियोगिकश्रेण्योः शक्रस्य देवराजस्य सोमयमवरुणवैश्रमणानां कायो-निकायो येषां ते तथा । सोमादिपरिवारभूता तेष्वपि जृम्भका देवास्ते व्यन्तरा अपरे च केचन भवनपतयोऽपीति बोध्यम् । तेषामाभियोगानां देवानां बहूनि भवनानि प्रज्ञप्तानि । तानि च भवनानि वहिर्वृत्तानि-वृत्ताकाराणि अभ्यन्तरे चतुरस्राणि 'वण्णओ'त्ति वर्णको यावदप्सरोगणसङ्घ विकीर्ण्णानि-देवाङ्गनागणसमूहव्याप्तानि यावत्प्रतिरूपाणि तावत्पर्यन्तं वाच्यः । यावच्छब्दसूचितो वर्ण्णकस्त्वेवम्-'अहे पुक्खरकण्णिआसंठाणसठिआ उक्किण्णंतरविउलगंभीरखायपरिहा' उत्कीर्णमिवोत्कीर्णम् अतीव व्यक्तमित्यर्थः । उत्कीर्णमन्तर यासां खातपरिखाणां ता उत्कीर्णान्तरा विपुला-विस्तीर्ण्णा गम्भीरा-अलब्धमध्यभागा खातपरिखा-शाश्वतभावत्वेन खातेव परिखेति तत्पुरुषो विधेयः । यद्वा-परिखा उपरि विशाला अधश्च सङ्कीर्ण्णा खातं तूभयत्रापि सममिति । येषा भवनानां तानि उत्कीर्णान्तरविपुलगम्भीरखातपरिखाणि 'पागारट्टालकवाडतोरणपडिदुवारदेसभागा' प्राकारेषु अट्टालकाः-प्राकारस्योपरि भित्त्याश्रयविशेषाः कपाटानि-प्रतोलीसत्कानि तोरणानि-प्रतीतानि प्रतिद्वाराणि मूलद्वाराऽपान्तरालवर्त्तीनि लघुद्वाराणि तद्रूपा देशविशेषा येषु तानि प्राकाराट्टालकपाटतोरणप्रतिद्वारदेशभागानि । तथा 'जंतसयग्घिमुसलमुसुंढीपरिअरिआ' यन्त्राणि नानाप्रकाराणि शतघ्न्यो-महायष्टयः याः पातिताः सत्यः पुरुषाणां शतानि घ्नन्ति । मुशलानि-प्रतीतानि । मुसुण्ढयः-प्रहरणविशेषास्तै परिवारितानि-समन्ततः परिवेष्टितानि, अत एव 'अउज्झा' अयोध्यानि-परैर्योद्धुमशक्यानि सदा जयानि-सर्वकालं जयवन्ति 'सया गुत्ता' सर्वकालं सप्रहरणैर्योद्धृपुरुषैर्गुप्तानि सर्वतः समन्ततः सम्परिक्षिप्तानि । अत एवासहमानानां परेषां मनागपि प्रवेशासम्भवः । तथा 'अडयालकोट्ठगरइआ' अष्टचत्वारिंशद्भेदभिन्नविच्छित्तिकलितः कोष्ठका-अपवरका रचिताः-स्वयमेव रचना प्राप्ता येषु तानि तथा 'अडयालकयवणमाला' अष्टचत्वारिंशत्कृतवनमालानि 'खेमा' क्षेमानि-परकृतोपद्रवरहितानि 'सिवा' शिवानि सदा मङ्गलोपेतानि 'किंकरामरदंडोवरक्खिआ' किंकरभूता येऽमरास्तैर्दण्डैः करणभूतैरुपरक्षितानि-सर्वतः, समन्ताद्रक्षितानीत्यर्थः । 'लाउल्लोइअमहिआ गोसीससरसरत्तचंदणदद्दरदिण्णपंचंगुलितलिआओ अविअ चंदणकलसा-चंदणघडसुकयतोरणपडिदुवारदेसभागा आसत्तोसत्तविउलवट्टवग्घारिअमल्लदामकलावा पंचवण्णसरससुरहिमुक्कपुप्फपुंजोवयारकलिआ कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुआभिरामा सुगंधवरगंधिआ गंधवट्टिभूआ अच्छरगणसंघविकिण्णा दिव्वतुडिअसद्दसंपणदिआ' त्रुटितानामातोद्यानां वेणुवीणा-

मृदङ्गादीनां ये शब्दास्तैः सम्प्रणदितानि–सम्यक् श्रोतृमनोहारितया प्रकर्षेण सर्व्वकालं नदितानि–शब्दवन्ति 'सव्वरयणामया अच्छा सण्हा घट्टा मट्ठा णीरया निम्मला निप्पंका निक्कंकडच्छाया सप्पभा सस्सिरीआ समरीइआ सउज्जोआ पासाईआ दरिसणिज्जा अभिरूवा पडिरूव'त्ति। अत्र 'लाउल्लोइअ' इत्यादिविशेषणानि प्राग् व्याख्यातानि भरताधिकारे व्याख्यास्यमानानि चेति। अथैवंविधेषु भवनेषु कीदृशा देवाः परिवसन्ति ? इत्याह–'एत्थ णमि'त्यादि। अत्र णमित्यलङ्कारे। भवनेषु शक्रस्य देवेन्द्रस्य देवराजस्य सोमयमवरुणवैश्रमणादिबहव आभियोगा देवा महर्द्धिका महाद्युतिकाः यावन्महासौख्याः यावत्करणान्महाबला महायशसो महानुभागा इति। पल्योपमस्थितिकाः परिवसन्ति। अथ वैताढ्यपर्व्वत एव आभियोगिकश्रेणिभ्यामप्युपरि कियद् दूरं किमस्ति ? इत्याह–'तासि णमि'त्यादि। तयोराभियोगिकश्रेण्योः सम्बन्धिनोर्बहुसमरमणीयाद् भूमिभागात् वैताढ्यस्य पर्वतस्य उभयोः पार्श्वयो पञ्च पञ्च योजनान्यूर्ध्वमुत्पत्य गत्वा 'एत्थ ण'ति अत्रान्तरे वैताढ्यस्य पर्व्वतस्य शिखरतलमुपरितनो विभागः प्रज्ञप्त प्राचीनप्रतीचीनायतम् उदीचीनदक्षिणविस्तीर्णं दश योजनानि विष्कम्भेन, पर्व्वतसममायामेन, एकया पद्मवरवेदिकया–पर्व्वतोपरितलप्राकारकल्पया एकेन च वनखण्डेन–वेदिकायाः बहिःप्रदेशवर्त्तिना वलयाकारेण सर्व्वतः समन्तात् सम्परिक्षिप्तं। प्रमाणं वर्ण्णकश्च द्वयोरपि पद्मवरवेदिकावनखण्डवद्वक्तव्य. ॥

अथ वैताढ्यस्योपरितलस्याकारादिविषयं प्रश्नमाह–'वेअड्ढस्स णमि'त्यादि प्रश्नः सुगमः। भगवानाह–गौतम ! 'से जहे'त्यादि यावद्विहरन्तीति पर्यन्तं जगत्याम् उपरितलविभागवर्णनवद्वाच्यम्। अथ वैताढ्यवर्त्तिकूटवक्तव्यताविषयं प्रश्नमाह–'जम्बुद्दीवे णमि'त्यादि प्रश्नः सुगमः। भगवानाह–गौतम ! नव कूटानि प्रज्ञप्तानि। तद्यथा–'सिद्धायतण'त्ति। सिद्धायतनेन युक्तं कूटं सिद्धायतनकूटम्। दक्षिणभरतार्द्धदेवप्रासादावतंसकोपलक्षितं कूटं दक्षिणभरतार्द्धकूटम्। खण्डप्रपातगुहाधिपतिदेवसम्बन्धिप्रासादावतंसकोपलक्षितं कूटं खण्डप्रपातगुहाकूटम्। एवं माणिभद्रवैताढ्यपूर्णभद्रतमिस्रगुहाउत्तरभरतार्द्धवैश्रमणनामानो ये देवास्तेषां स्वस्वनाम्ना प्रासादावतंसकोपलक्षितानि क्रमेण कूटानि वाच्यानि ॥

अथ वैताढ्येऽपि सिद्धायतनकूटं क्वास्ति ? इति प्रश्नयति

कहि णं भंते ! जंबुद्दीवे दीवे भारहे वासे वेअड्ढपव्वए सिद्धायतणकूडे णामं कूडे पण्णत्ते ? गो० ! पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं दाहिणड्ढभरहकूडस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे भारहे वासे वेअड्ढपव्वए सिद्धायतणकूडे णामं कूडे पण्णत्ते। छ सक्कोसाइं जोअणाइं उड्ढं उच्चत्तेणं, मूले छ सक्कोसाइं जोअणाइं विक्खंभेणं, मज्झे देसूणाइं पंच जोअणाइं विक्खंभेणं, उवरिं साइरेगाइं तिण्णि जोअणाइं विक्खंभेणं, मूले देसूणाइं बीसं जोअणाइं परिक्खेवेणं मज्झे देसूणाइं पण्णरस जोअणाइं परिक्खेवेणं, उवरिं साइरेगाइं नव जोअणाइं परिक्खेवेणं, मूले विच्छिण्णे मज्झे संखित्ते उप्पिं तणुए गोपुच्छसंठाणसंठिए सव्वरयणामए अच्छे सण्हे जाव पडिरूवे। ते णं एगाए पउमवरवेइआए एगेण य वणसंडेणं सव्वओ समंता संपरिक्खित्ते। पमाणं वण्णओ दोण्हंपि। सिद्धायतणकूडस्स णं उप्पिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते। से जहा णाम ए आलिंगपुक्खरे इ

त्ता जाव वाणमंतरा देवा जाव विहरंति। तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे एत्थ णं महं एगे सिद्धायथणे पण्णत्ते। कोसं आयामेणं, अद्धकोसं विक्खंभेणं, देसूणं कोसं उड्ढं उच्चत्तेणं अणेगखंभसयसन्निविट्ठे खंभुग्गयसुकयवरवइरवेइआतोरणवररचितसालभंजिअसुसिलिट्ठविसिट्ठलट्ठसंठिअपसत्थवेरुलिअविमलखंभे णाणामणिरयणखचिअउज्जलबहुसमसुविभत्तभूमिभागे ईहामिगउसभतुरगणरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ते कंचणमणिरयणथूभिआए णाणाविहपंचवण्णघंटापडागपरिमंडिअग्गसिहरे धवले मरीचिकवयं विणिम्मुअंते लाउल्लोइअमहिए जाव झया। तस्स णं सिद्धायतणस्स तिदिसिं तओ दारा पण्णत्ता। ते णं दारा पंच धणुसयाइं उड्ढं उच्चत्तेणं, अड्ढाइज्जाइं धणुसयाइं विक्खंभेणं, तावतिअं चेव पवेसेणं सेआवरकणगथूभिआगा दारवण्णओ जाव वणमाला। तस्स णं सिद्धायतणस्स अंतो बहुसमरमणिज्जे भूमिभागे पण्णत्ते। से जहा णाम ए आयतणस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे एत्थ णं महं एगे देवछंदए पण्णत्ते। पंच धणुसयाइं आयामविक्खंभेणं, सातिरेगाइं पंच धणुसयाइं उड्ढं उच्चत्तेणं, सव्वरयणामए एत्थ णं अट्ठसयं जिणपडिमाणं जिणुस्सेहप्पमाणमेत्ताणं सन्निखित्तं चिट्ठति। एवं जाव धूवकडुच्छुगा॥

'कहि णं भंते!' इत्यादि। क्व भदन्त! जम्बूद्वीपे द्वीपे भारते वर्षे वैताढ्यपर्वते सिद्धायतनकूटं नाम्नो कूटं प्रज्ञप्तं? भगवानाह—गौतम! 'पुरत्थिम'त्ति। पूर्वलवणसमुद्रस्य पश्चिमेन, दक्षिणभरतार्द्धकूटस्य पूर्वेण, अत्र णमिति प्राग्वत्, जम्बूद्वीपे द्वीपे भरतक्षेत्रे वैताढ्यपर्वते सिद्धायतनकूटनाम्ना कूटं प्रज्ञप्तं। तस्योच्चत्वादिप्रमाणं यथा षट् सक्रोशानि योजनान्यूर्ध्वमुच्चैस्त्वेन, मूले सक्रोशानि षट् योजनानि विष्कम्भेन, मध्ये देशोनानि पञ्च योजनानि विष्कम्भेन, उपरि सातिरेकाणि त्रीणि योजनानि विष्कम्भेन, मूले देशोनानि विंशतियोजनानि परिक्षेपेण—परिधिना, मध्ये देशोनानि पञ्चदश योजनानि परिक्षेपेण, उपरि सातिरेकाणि नव योजनानि परिक्षेपेण, अत एव मूले विस्तीर्णं मध्ये संक्षिप्तं उपरि तनुकं गोपुच्छसंस्थानसंस्थितम् ऊर्ध्वीकृतगोपुच्छाकारमित्यर्थः। सर्वात्मना रत्नमयं 'अच्छे'त्यादि प्राग्वत्। तच्च कूटं कीदृशम्? इत्याह 'से णमि'त्यादि। सिद्धायतनकूटं 'णमि'ति प्राग्वत्। एकया पद्मवरवेदिकया एकेन च वनखण्डेन सर्वतः समन्तात्सम्परिक्षिप्तं—वेष्टितम्। 'पमाणमि'त्यादि। प्रमाणं वर्णकश्च 'दुण्हंपि'त्ति। द्वयोरपि वेदिकावनखण्डयोः जगतीवेदिकावनखण्डवदित्यर्थः। सिद्धायथणकूडस्स णं'ति। सिद्धायतनकूटस्य बहुसमरमणीयो भूमिभागः प्रज्ञप्तः 'से जहे'त्यादि यावद्विहरन्तीति पर्यन्तं प्राग्वत्। अथोक्तस्वरूपस्य भूमिभागस्य बहुमध्यदेशभागे यदस्ति तदाह—'तस्स णमि'त्यादि। तस्यानन्तरोक्तस्वरूपस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्रैकं महासिद्धायतनं प्रज्ञप्तं, सिद्धोऽर्हन् तस्याऽऽयतनं—गृहं सिद्धायतनम्। तस्याऽऽयामाद्याह 'कोसमि'त्यादि। कोशमायामेन दैर्घ्येण, अर्द्धक्रोशम् अर्द्धं क्रोशस्यार्द्धक्रोशं क्रोशार्द्धमित्यर्थः विष्कम्भेन, देशोनं क्रोशमूर्ध्वमुच्चैस्त्वेन, पुनः कीदृशम्? 'अणेग'त्ति। अनेकस्तम्भशतैः सन्निविष्टं सङ्कलितं 'खंभुग्गये'त्यादि। स्तम्भोद्गताः—स्तम्भोपरिवर्त्तिन्यः सुकृताः—सुष्ठु निष्पादिताः वराः—प्रधानाः वज्रमय्यो—वज्रात्मिका या

वेदिकाः तोरणानि च प्रतीतानि वरैरर्थान्निपुणशिल्पिभी रचिता इव रचिताः सालभञ्जिकाश्च–पुत्रिका येपु, ते यद्वा–स्तम्भोद्गतवरवज्रवेदिकासु तोरणानि वररचितसालभञ्जिकाश्च येपु स्तम्भेपु ते स्तम्भोद्गत-सुकृतवरवज्रवेदिकातोरणवररचितसालभञ्जिका एवंविधाः सुश्लिष्टाः विशिष्टाः लष्टसंस्थिताः–मनोज्ञ-सस्थानाः प्रशस्ता वास्तुशास्त्रानुसारेण वैडूर्यविमलस्तम्भा–वैडूर्यरत्नमयो विमला स्तम्भा यत्र तत्स्तम्भोद्गत-सुकृतवरवज्रवेदिकातोरणवररचितसालभञ्जिकासुश्लिष्टविशिष्टलष्टसंस्थितप्रशस्तवैडूर्यविमलस्तम्भा ' नाना-मणी 'त्यादि । नानामणयो रत्नानि च खचितानि यत्र भूमिभागे स नानामणिरत्नखचित' तथा उज्वलो बहुसमोऽत्यन्तसमः सुविभक्तो भूमिभागो यत्र तत नानामणिरत्नखचितोज्वलबहुसमसुविभक्तभूमिभागं ' ईहामिगे 'त्यादि । ईहामृगा–वृकाः, व्यालाः–श्वापदभुजगा, रुरवो–मृगाः, शरभा–आटव्या महा-कायाः पशवः, चमरा–आटव्या गाव' ऋषभादयः शेपाः पद्मलतान्ताः प्रतीता, एतासा भक्त्या–विच्छित्त्या चित्रमालेख्य यत्र तत्तथा ' कंचणे 'त्यादि । काञ्चनं च मणयश्च रत्नानि च तेषां तन्मया वा स्तूपिका–शिखर यस्य तत्तथा । ' णाणाविहे 'त्यादि । नानाविधाभिर्नानाप्रकाराभिः पञ्चवर्णाभिः घण्टिकाभिः पताकाभिश्च परि–सामस्त्येन मण्डितमग्रशिखरं यस्य तत्तथा–'चवले' त्यादि । चपलं । चञ्चलं चिकचिकाय-मानत्वात् मरीचिकवचं–किरणजालपरिक्षेपं विनिर्मुञ्चत् ' लाउल्लोइअ 'त्ति । लाइअं नाम यद्भूमेर्गो-मयादिना उपलेपन, उल्लोइअ कुड्यानां मालकस्य च सेटिकादिभिः संमृष्टिकरणं ताभ्यां महितं–पूजितं यद्यपि शाश्वतभावेन तत्र गोमयादिलेपनाऽसम्भवः तथापि मनोहरत्वेनोपमयाऽवसातव्यम् । 'जाव ज्झय'त्ति । यावत् ध्वजा यावत्करणात् 'गोसीससरसे'त्यादि ध्वजपर्यन्तं विजयराजधानीवर्णको वाच्यः ॥

अथ सिद्धायतनस्य द्वारवक्तव्यतामाह–'तस्स णमि'त्यादि । तस्य सिद्धायतनस्य 'तिदिसिं'ति । तिसृपु दिक्षु प्रत्येकमेकैकभावेन त्रीणि द्वाराणि प्रज्ञप्तानि । तानि द्वाराणि पञ्च धनुःशतान्यूर्ध्वमुच्चैस्त्वेन, अर्द्धतृतीयानि धनुःशतानि विष्कम्भतः ' तावइअं चेव 'त्ति तावदेव–विष्कम्भप्रमाणमेव प्रवेशेन ' से-आवरे 'त्यादि । तानि द्वाराणि श्वेतानि प्रायोऽङ्करत्नमयत्वात् वरकनकमय्यः स्तूपिकाः–शिखराणि येपा तानि तथा । 'दारवण्णओ'त्ति विजयद्वारवद्वर्णको वक्तव्यो यावद्वनमाला । 'तस्स णमि'त्यादि । तस्य सिद्धायतनस्य अन्तर्मध्ये बहुसमरमणीयो भूमिभागः प्रज्ञप्तः । 'से जहा णाम ए' इतिपदेन यावदकृत्रि-मैर्मणिभिरित्यन्तं भूमिभागवर्णकोऽवगन्तव्यः । 'आयतणस्स णमि'त्यादि । आयतनस्य–सिद्धायतनस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे 'एत्थ ण'ति । अत्र महानेको देवच्छन्दकोऽर्हदुपवेशन-स्थान प्रज्ञप्तः । स च पञ्च धनुःशतान्यायामविष्कम्भेन. सातिरेकाणि पञ्च धनुःशतान्यूर्ध्वमुच्चैस्त्वेन ' सव्वरयण 'त्ति सर्वात्मना रत्नमयः ' अच्छे सण्हे ' इत्यादिविशेपणकदम्बकमनुक्तमपि स्वयमेव परिभावनीयम् । 'एत्थ ण'ति । अत्र देवच्छन्दके अष्टशतमष्टाधिकं शतं जिनप्रतिमानां जिनोत्सेधप्रमाण-मात्राणा । तत्र जिनोत्सेधो जघन्यतः सप्त हस्ताः उत्कर्षतः पञ्च धनुःशतानि परमिह तिर्यक्लोकवर्तित्वेन पञ्च धनुःशतानामित्यर्थः । यदुक्तं

'तत्थुस्सेहंगुलओ सत्तकरा उड्ढलोअ अहलोए । सासयपडिमा वंदे पणधणुसयमाण तिरिलोए' ॥१॥ इति । यत्तु राजप्रश्नीयोपाङ्गवृत्तौ सूर्याभविमाने जिनप्रतिमानामुत्सेधमधिकृत्य 'इह तु पञ्च धनुः-शतानि सम्भाव्यन्ते' इतिभणित तत्र सूक्ष्मदृशा पर्यालोचनया सम्भावनैव विजृम्भते । पर्यालोचना त्वेवं–

देवानां भवधारणीयशरीरेण तादृग् प्रतिमानां पूजाकरणादावसङ्गतमिवाभाति, न चैवं तिर्यग्लोकेऽपि समानं, यतो देवानां वैक्रियशरीरेण मनुजानां च भरतादिकारितजिनप्रतिमापूजने तदुचितप्रमाणवतैव शरीरेणेति नाऽसङ्गतिगन्धोऽपि । 'सन्निक्खित्तं'ति सन्निक्षिप्तं सम्यग्स्थापितया तिष्ठतीति । 'एवं जाव त्ति एवं यावद्धूपकडुच्छकाः । यावत्करणादिदं तासां वर्णनं

'तासि णं जिणपडिमाणं इमे एआरूवे वण्णावासे पण्णत्ते तं० तवणिज्जमया हत्थतलपायतला, अंकामयाइं णखाइं अंतो लोहिअक्खपडिसेकाइं, कणगामईओ जंघाओ, कणगामया जाणू कणगामया ऊरू, कणगामईओ गायलट्ठीओ, तवणिज्जमयाओ नाभीओ, रिट्ठमईओ रोमराईओ, तवणिज्जमया चुचुआ, तवणिज्जमया सिरिवच्छा, सिलप्पवालमया ओट्ठा, फालिहमया दंता तवणिज्जमईओ जीहाओ, तवणिज्जमया तालुआ, कणगामईओ नासिगाओ अंतो लोहिअक्खपडिसेगाओ, अंकामयाणि अच्छीणि अंतो लोहिअक्खपडिसेगाइं, रिट्ठामईओ ताराओ, रिट्ठामयाणि अच्छिपत्ताणि, रिट्ठामईओ भमुहाओ, कणगामया कवोला, कणगामया सवणा, कणगामईओ णिडालपट्टिआओ, वयरामईओ सीसघडीओ, तवणिज्जमईओ केसंतकेसभूमीओ, रिट्ठामया उवरि मुद्धया' इति ॥

अस्यार्थः तासां जिनप्रतिमानामेतद्रूपो वर्णावासो–वर्णकनिवेशः प्रज्ञप्तः । तद्यथा–तपनीयमयानि हस्ततलपादतलानि, अङ्कमया–अङ्करत्नमया अन्तर्मध्ये लोहिताक्षरत्नप्रतिसेकाः नखाः, कनकमय्यो जङ्घाः, कनकमयानि जानूनि, कनकमया ऊरवः, कनकमय्यो गात्रयष्टयः, तपनीयमया नाभयः अरिष्टरत्नमया रोमराजयः, तपनीयमयाश्चूचुकाः–स्तनाग्रभागाः, तपनीयमयाः श्रीवत्साः, शिलाप्रवालमया–विद्रुममया ओष्ठाः, स्फटिकमया दन्ताः, तपनीयमय्यो जिह्वाः, तपनीयमयानि तालुकानि, कनकमय्यो नासिकाः अन्तर्लोहिताक्षप्रतिसेकाः, अङ्करत्नमयानि अक्षीणि अन्तर्लोहिताक्षप्रतिसेकानि, अरिष्टरत्नमय्योऽक्षिमध्यगतास्तारकाः, रिष्टरत्नमयानि अक्षिपत्राणि, रिष्टरत्नमय्यो भ्रुवः, कनकमया कपोलाः, कनकमयाः श्रवणाः, कनकमय्यो ललाटपट्टिकाः, कनकमय्यः शीर्षघटिकाः, तपनीयमय्यः केशान्तकेशभूमयः–केशान्तभूमयः केशभूमयश्चेति भावः । रिष्टमया उपरि मूर्द्धजाः–केशा इति ॥

अथ तासां जिनप्रतिमानां परिकरवर्णनं यथा

'तासि णं जिणपडिमाणं पिट्ठओ पत्तेअं पत्तेअं छत्तधारपडिमाओ हिमरययकुंदिंदुप्पगासाइं सकोरंटमल्लदामाइं धवलाइं आयवत्ताइं सलीलं धारेमाणीओ चिट्ठंति । तासि णं जिणपडिमाणं उभओ पासे पत्तेअं पत्तेअं दो दो चामरधारपडिमाओ पण्णत्ताओ चंदप्पभवइरवेरुलिअनानामणिरयणखचिअचित्तदंडाओ सुहुमरययदीहवालाओ संखंककुंददगरययअमयमहिअफेणपुंजसन्निगासाओ चामराओ गहाय सलील वीइमाणीओ वीइमाणीओ चिट्ठति । तासि णं जिणपडिमाणं पुरओ दो दो नागपडिमाओ जिणजक्खपडिमाओ कुंडधारपडिमाओ सन्निक्खित्ताओ चिट्ठति । ताओ णं सव्वरयणामईओ अच्छाओ जाव पडिरूवाओ । तत्थ णं तासि णं जिणपडिमाणं पुरओ अट्ठसयं घंटाणं अट्ठसयं भिंगाराणं एवं आयंसाणं थालाणं पाईणं सुपइट्ठाणं मणोगुलिआणं वायकरगाणं चित्ताणं रयणकरंडगाणं हयकंठाणं जाव उसभकंठाणं पुप्फचंगेरीणं जाव लोमहत्थचंगेरीणं पुप्फपडलगाणं जाव लोमहत्थपडलगाणं तेल्लसमुग्गाणं अट्ठसयं धूवकडुच्छगाणं चिट्ठति ॥

अथ यतः सिद्धायतनकूटं पूर्वस्या तद्दक्षिणभरतार्द्धकूटं क्वास्ति ? इति प्रश्नयति

कहि णं भंते ! वेअड्ढपव्वए दाहिणड्ढभरहकूडे णामं कूडे पण्णत्ते ? गो० ! खंडप्पवायकूडस्स पुरत्थिमेणं सिद्धायतणकूडस्स पच्चत्थिमेणं एत्थ णं वेअड्ढपव्वए दाहिणड्ढभरहकूडे णामं कूडे पण्णत्ते । सिद्धायतणकूडपमाणसरिसे जाव तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे एत्थ णं महं एगे पासायवडिंसए पण्णत्ते । कोसं उड्ढं उच्चत्तेणं, अद्धकोसं विक्खंभेणं, अब्भुग्गयमूसिअपहसिए जाव पासाईए तस्स णं पासायवडिंसगस्स बहुमज्झदेसभागे एत्थ णं महं एगा मणिपेढिआ पण्णत्ता । पंच धणुसयाइं आयामविक्खंभेणं, अड्ढाइज्जाइं धणुसयाइं बाहल्लेणं सव्वमणिमई । तीसे णं मणिपेढिआए उप्पिं सिंहासणे पण्णत्ते सपरिवारं भाणिअव्वं । से केणट्ठेणं भंते ! एवं वुच्चइ दाहिणड्ढभरहकूडे दाहिणड्ढभरहकूडे ? गो० ! दाहिणड्ढभरहकूडे णं दाहिणड्ढभरहकूडे णामं देवे महड्ढिए जाव पलिओवमट्ठितीए परिवसति । से णं तत्थ चउण्हं सामाणिअसाहस्सीणं चउण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अणिआणं सत्तण्हं अणिआहिवईणं सोलसण्हं आयरक्खदेवसाहस्सीणं दाहिणड्ढभरहकूडस्स दाहिणड्ढभरहाए रायहाणीए अण्णेसिं च बहूणं देवाण य देवीण य जाव विहरति । कहि णं भंते ! दाहिणड्ढभरहकूडस्स देवस्स दाहिणड्ढभरह णामं रायहाणी पण्णत्ता ? गोअमा ! मंदरस्स पव्वयस्स दक्खिणेणं तिरिअमसंखिज्जे दीवसमुद्दे वीतिवतित्ता अण्णं जंवुदीवं दीवं दाहिणेणं वारस जोअणसहस्साइं ओगाहित्ता एत्थ णं दाहिणड्ढभरहकूडस्स देवस्स दाहिणड्ढभरह णामं रायहाणी भाणिअव्वा जहा विजयदेवस्स । एवं सव्वकूडा णेअव्वा जाव वेसमणकूडे परोप्परं पुरत्थिमपच्चत्थिमेणं इमा से वण्णावासे गाहा

मज्झे वेअड्ढस्स उ कणगमया तिण्णि हुंति कूडाओ । सेसा पव्वयकूडा सव्वे रयणामया हुंति ॥१॥ माणिभद्दकूडे वेअड्ढकूडे पुण्णभद्दकूडे एते तिण्णि कणगामया सेसा छप्पिअ रयणामया, दोण्हं विसरिसनामया देवा तं० कयमालए चेव णट्टमालए चेव । सेसाणं छण्हं सरिसनामया देवा सेसा

जण्णामया य कूडा तन्नामा खलु हवंति ते देवा । पलिओवमट्ठितीआ हवंति पत्तेअं पत्तेअं ॥२॥ रायहाणीओ जंवुद्दीवे दीवे मंदरस्स दाहिणेणं तिरिअमसंखिज्जे दीवसमुद्दे वीइवइत्ता अण्णंमि जंवुद्दीवे दीवे वारस जोअणसहस्साइं ओगाहेत्ता एत्थ णं रायहाणीओ भाणिअव्वाओ विजयरायहाणीसरिसिआओ ॥

'कहि णमि'त्यादि प्रश्ननिर्वचने सुगमे । अथास्योच्चत्वादिप्रमाणमतिदिशति 'सिद्धायतण'त्ति । सिद्धायतनकूटस्य प्रमाणेनोपलक्षणात् संस्थानादिना सदृशं यत् तत्सिद्धायतनकूटप्रमाणसदृशं 'जाव तस्स

णं'ति यावत्तस्य दक्षिणभरतार्द्धकूटस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे 'एत्थ णं 'ति। अत्रैको महान् प्रासादावतंसकः प्रज्ञप्तः। यावत्करणात् 'छ सकोसाइं जोअणाइं उद्धं उच्चत्तेणमि'त्यादि। स च प्रमाणतः कीदृश ? इत्याह–' कोसं 'ति। क्रोशमुच्चैस्त्वेन, अर्द्धक्रोश विष्कम्भेन 'अब्भुग्गय'त्ति अभ्युद्गता–आभिमुख्येन सर्वतो विनिर्गता उत्सृता–प्रबलतया सर्वासु दिक्षु प्रसृता या प्रभा तया सित इव–बद्ध इव तिष्ठतीति गम्यते। अन्यथा कथमिव तेऽत्युच्चा निरालम्बनास्तिष्ठन्तीति भावः। 'जाव'त्ति यावत्प्रासादीय यावच्छब्दात् 'गोपुच्छसंठाणसंठिए' इत्यादित आरभ्य सिद्धायतनवर्ज सर्वमपि समानम्। 'तस्स णमि 'त्यादि। तस्य प्रासादावतंसकस्य बहुमध्यदेशभागे अत्र महत्येका मणिपीठिका प्रज्ञप्ता। सा च पञ्च धनुःशतान्यायामविष्कम्भेन, अर्द्धतृतीयानि धनुःशतानि बाहल्येन सर्वात्मना मणिमयी। 'तीसे णमि 'त्यादि। तस्यां मणिपीठिकाया णमिति प्राग्वत् उपरि सिंहासन प्रज्ञप्तं, तच्च सपरिवारं सामानिकादिपरिवारस्य सम्बन्धीनि यानि सिंहासनानि तैः सहितं–परिकरित भणितव्यम्। अथ नाम्नो निमित्तं पृच्छति–' से केणट्ठेणमि 'त्यादि। से इत्यथार्थे। अथवा तत् अनन्तरोक्तं कूट केनार्थेन भदन्त। एवमुच्यते दक्षिणभरतार्द्धकूटमिति। भगवानाह गौतम। 'दक्षिणार्द्धभरतकूडे णमि'ति प्राग्वत्। दक्षिणार्द्धभरत इति नाम्ना देवो महर्द्धिको यावत्पल्योपमस्थितिकः परिवसति। यावच्छब्दात् 'महज्जुइए' इत्यादि द्रष्टव्यम्। 'से ण तत्थे 'त्यादि। स दक्षिणार्द्धभरतकूटाभिधानो देवः 'तत्थ'त्ति तत्र दक्षिणार्द्धभरतकूटे 'चउण्ह'ति चतुर्णां सामानिकसहस्राणां, प्राकृतत्वात् स्त्रीत्वं, तत्र निजनिजस्वामिना सह समाने-तुल्ये द्युतिविभवादौ भवाः सामानिकाः, आध्यात्मिक इकण, स्वयमाधिपत्यरहिता अपि स्वामिना सह समानद्युतिविभवाः स्वामिनाममात्यपितृगुरूपाध्यायमहत्तरवत्पूजनीयाः तेन स्वस्वामिनं स्वामित्वेन प्रतिपन्नाः। तत्र स्वामिनोऽपि इन्द्रादयोऽनेकविधाः निजनिजसाम्राज्यमधिकृत्यावगन्तव्याः। तथा चतसृणामग्रमहिषीणाम् अग्राः–सर्वान्तःपुरप्रधाना महिष्यः–कृताभिषेका देव्योऽग्रमहिष्यः तासां किं लक्षणानां ? सपरिवाराणा सह परिवारेण प्रत्येक देवीसहस्रलक्षणेन वर्त्तन्ते यास्तास्तासां। तथा तिसृणां पर्षदां। तत्र पर्षत्–परिवारः। सा च त्रिधा प्रत्यासत्तिभेदात् तत्र। ये परिकरभूता देवा देव्यश्च अतिगौरवत्वात् प्रयोजनेष्वाहूता एवाऽऽगच्छन्ति साऽभ्यन्तरा आद्या, ये त्वाहूता अनाहूताश्चाऽऽगच्छन्ति सा मध्यमा द्वितीया, ये त्वनाहूता एवाऽऽगच्छन्ति सा बाह्या तृतीयेति भावः। यद्वा–यया सहानालोचितं निजप्रयोजनमपरेषां निग्रहानुग्रहादि प्रयोजन वा वक्तुमप्यशक्यं परममित्रसंहतिसदृशो या साऽभ्यन्तरपर्षद् अभ्यन्तरपर्षदा सह पर्यालोचितं यस्यै निवेद्यते यथेदमस्माकं पर्यालोचयतां सम्मतमागत युष्माकमपि किमेव सम्मत नवेति सा मध्यमा, यस्यै पुनराद्यपर्षदा सह पर्यालोचितं द्वितीयया च सह दृढीकृत करणायैव निवेद्यते यद्–एव क्रियतामिति सा बाह्या। तासां पर्षदा तथा 'सत्तण्हमि 'ति सप्तानामनीकानां। तत्रानीकानि–सैन्यानि। तानि च गन्धर्व्वनाट्यहयगजरथपदातिमहिषानीकरूपाणि। तत्राद्ये द्वे अनीके उपभोग्ये, शेषाणि तु पञ्चाप्यनीकानि, युद्धोपयोगीनि सप्तानामप्यनीकानां चिन्ताकारिणोऽवश्यं स्वस्वाधिपतयो भवन्त्येव, अन्यथा समुत्पन्ने प्रयोजने सम्यगुपयुक्ता न भवेयुः। अत आह–'सत्तण्ह अणिआहिवईण'ति। सप्तानामनीकाधिपतीनां षोडशानामात्मरक्षकदेवसहस्राणां। तत्राधिकृतकूटाधिपतेर्दक्षिणार्द्धभरतकूटनाम्नो देवस्यात्मानं रक्षयन्तीत्यात्मरक्षका ते तु स्वामिनोऽपायाभावेऽपि स्थितिपरिपालनाय प्रीत्युत्पत्तये च स्वामिन परितो दृढसुबद्धसुभटोचितपरिकरा धनुरादिप्रहरणव्यग्रपाणयः

स्वस्वामिन्यस्तनिश्चलदृष्टयः परेषां क्षोभमापादयन्तोऽङ्गरक्षका इव तिष्ठन्ति । एते च परिवारभूता अपि नियतसङ्ख्याका' केवलप्रस्तुतामात्रसूचकाः भणिताः । अथानियतसङ्ख्याका अप्यनेके अनेकानियतप्रयोजननियुक्ता ये देवा देव्यश्च तान् विविच्य वक्तुमशक्यत्वात् समुदायेनाऽऽह– दाहिणड्ढे'त्यादि । दक्षिणार्द्धभरतकूटस्य देवस्य दक्षिणार्द्धभरतायां राजधान्यामन्येषां च बहूनां देवानां देवीनां चाभियोगिकानां यावद्विहरत्यास्ते । अत्र यावत् करणादिदं दृश्य–'आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महया हयनट्टगीअवाइअतंतीतलतालतुडिअघणमुइंगपडुपडहपवाइअरवेण दिव्वाइं भोगभोगाइं भुंजमाणे विहरति'त्ति । अथास्य राजधानी वैताढ्यवर्त्तिनि निजकूटे एवास्त्यन्यत्र वा ? इति शङ्कायां पृच्छति–'कहि णं भंते !'इत्यादि । क्व भदन्त ! दक्षिणार्द्धभरतकूटनाम्नो देवस्य दक्षिणार्द्धभरतनाम्ना राजधानी प्रज्ञप्ता ? भगवानाह–गौतम ! मन्दरपर्व्वतस्य दक्षिणतस्तिर्यगसङ्ख्येयान् द्वीपसमुद्रान् व्यतिव्रज्य 'अण्णं'ति । अन्यं–श्रोतुरध्यक्षादस्माज्जम्बूद्वीपादपरं जम्बूद्वीप द्वीपं दक्षिणेन द्वादशयोजनसहस्राण्यवगाह्य अत्रान्तरे दक्षिणार्द्धभरतकूटस्य देवस्य दक्षिणार्द्धभरतनाम्ना राजधानी भणितव्या । अनेन प्रस्तुतकूटाधिपतेर्देवस्य वैताढ्यवर्त्तिनि कूटे क्रीडादिप्रयोजनवशादागतस्य कदाचिदेवावस्थितिः, न पुनः सर्व्वदेति सूचितं, राजधान्यामेव प्रायःस्थितेः सम्भवात् । एवमपरेषामपि स्वतन्त्रप्रभूणां देवानां देवीनां चावसातव्यम् । सा च कीदृशी ? इत्यत्रातिदेशमाह–' जहा विजयस्स त्ति । यथा विजयस्य देवस्य विजयानाम्नी राजधानी, सा च द्वादशयोजनसहस्राण्याऽऽयामविष्कम्भाभ्यां सप्तत्रिंशद्योजनसहस्राणि नव शतानि अष्टाशीत्यधिकानि किञ्चिद्विशेषाधिकानि परिक्षेपेण एकेन प्राकारेण सर्व्वतः समन्तात परिक्षिप्ता । स च प्राकारः सप्तविंशतियोजनानि अर्द्धं च योजनमूर्ध्वमुच्चैस्त्वेन मूलेऽर्द्धत्रयोदशयोजनानि विष्कम्भेन मध्ये सक्रोशानि षट् योजनानि विष्कम्भेनेत्यादि, तद्वदियमपि राजधानी वक्तव्या यावत्प्रतिरूपा । अथावशिष्टकूटविषयमतिदेशमाह–' एवं सव्वकूडा 'इति । एवं दक्षिणार्द्धभरतकूटवत् सर्व्वाण्यपि कूटानि ज्ञातव्यानि यावद्वैश्रमणकूटम् । अथ कूटानां परस्पर दिग्विभागेनावस्थितिस्वरूपमाह–' परोप्पर 'मित्यादि । सिद्धायतनकूटादीनि नवापि कूटानि परस्परमन्योन्यं पूर्व्वपश्चिमतो ज्ञातव्यानि । पूर्व्वदिश आरभ्य पश्चिमदिगभिमुखं क्रमेण श्रेण्या व्यवस्थितानीति भावः ॥

अथ कूटानां वर्णकनिवेशं वक्तुमुपक्रमते 'इमा से'त्यादि । से इति अथार्थे । अथ वर्णावासे इमा गाथा–कूटानां व्यक्त्या वर्णकपरिज्ञानायेव वक्ष्यमाणा गाथेत्यर्थः । तथाहि–'मज्झे वेअड्ढस्स'त्ति । वैताढ्यस्य मध्ये त्रिधा विभक्तस्य वैताढ्यस्य मध्यभागेऽर्थान्नवसु मध्यवर्त्तीनि त्रीणि कूटानि कनकमयानि–सुवर्णात्मकानि, शेषाणि सर्व्वाणि पर्व्वतकूटानि रत्नमयानि भवन्तीति गाथार्थः । अथोक्तमेवार्थं नामग्राह व्यक्तीकुर्व्वन्नाह–' माणिभद्दे 'इत्यादि । माणिभद्रकूट वैताढ्यकूटं पूर्णभद्रकूट चैतानि त्रीणि कूटानि कनकमयानि ।'सेस'त्ति । शेषाणि सिद्धायतनकूटदक्षिणार्द्धभरतकूटखण्डप्रपातकूटतमिस्रकूटउत्तरभरतार्द्धकूटवैश्रमणकूटसञ्ज्ञानि षडपि रत्नमयानि । अथ किं नाम्ना कूटस्य किं नामा देवोऽधिपतिः ? इति दर्शयति–'दोण्हमि'त्यादि । नवानां कूटानां मध्ये प्रथमस्य सिद्धायतनकूटस्य स्वामी अर्हन्नेव नाऽपरो देव इत्यष्टानां कूटानामधिपतीन्नामग्राहमाह–'दोण्ह ति । द्वयोः खण्डप्रपाततमिस्राभिधानयोः कूटयोः विसदृशनामकौ देवौ । तद्यथा-कृतमालकश्च नृत्तमालकश्च । चकारैवकारौ समुच्चयावधार-

णार्थौ। 'सेसाणं। छण्ह'त्ति शेषाणां षण्णां दक्षिणार्द्धभरतकूटमाणिभद्रकूटवैताढ्यकूटपूर्णभद्रकूटउत्तरार्द्धभरतार्द्धकूटवैश्रमणकूटनाम्ना कूटानां सदृशनामकाः—सदृशं कूटेन समानं नाम येषां ते सदृशनामका देवा अधिपतयो भवन्ति। अथोक्तमेवार्थं व्यक्तीकुर्व्वन् स्थितिं प्रतिपादयितुं गाथामाह—'सेसा जन्नामया ये'त्यादि। 'सेस'त्ति पदं गाथाया बहिर्भूतमपि गाथापूर्व्वार्द्धसङ्गतिघटकं द्रष्टव्यं, तेन 'सेस'त्ति शेषाणि अधिपतिविसदृशनामभ्यां तृतीयसप्तमाभ्यां सिद्धायतनकूटाच्च अतिरिक्तानि अनुक्तसङ्ख्याकान्यपि षडेव 'ज नामया य'त्ति यन्नामकानि कूटानि तन्नामानः खलुरवधारणे तन्नामान एव देवा अधिपतयो भवन्ति। तच्चैवं—सिद्धायतनकूटसमीपवर्त्तिनो दक्षिणार्द्धभरतकूटस्य स्वाम्यपि दक्षिणार्द्धभरतनामा माणिभद्रकूटस्य माणिभद्रनामेत्यादि। 'पलिओवम'त्ति। ते च देवा' प्रत्येकं प्रत्येकं पल्योपमस्थितिका भवन्तीति गाथार्थ। अथोक्तशेषाणां राजधानीविषयं प्रश्नमाह—'रायहाणिओ'इत्यादि 'रायहाणिओ'त्तिपदेन प्रश्नवाक्यं सूचितम्। तच्चैवं—'कहि णं भंते! सेसाणं सत्तण्ह कडाहिवईणं रायहाणीओ पण्णत्ताओ?। गोअमा! इति। अन्यथा प्रत्युत्तररूपभगवद्वचनस्याऽसम्भवात् अन्ते 'रायहाणीओ'त्ति भणनेन आदौ 'रायहाणीओ'त्ति पदस्याधिकत्वापत्तेश्च। तथा च क भदन्त! शेषाणां दक्षिणार्द्धभरतकूटस्य देवस्य राजधान्या उक्तत्वे तदतिरिक्तानां सप्तानां माणिभद्रप्रमुखाणां कूटाधिपतीनां राजधान्यः प्रज्ञप्ताः?। भगवानाह—गौतम! जम्बूद्वीपे द्वीपे मन्दरस्य पर्व्वतस्य दक्षिणेन असङ्ख्येयान् द्वीपसमुद्रान् व्यतिव्रज्य अण्णमि त्ति अन्यस्मिन् जम्बूद्वीपे द्वीपे द्वादशयोजनसहस्राण्यवगाह्य 'एत्थ ण'त्ति अत्रान्तरे राजधान्यो भणितव्याः। ताश्च विजयराजधानीसदृश्य इत्यतिदेशेन पृथुत्वादिपरिमाणादारभ्य पुष्करिणीपर्यन्त सर्व्वमपि प्रागुक्त विजयराजधानीसदृशं विज्ञेयमिति निर्वचनम्।

अथ वैताढ्यस्य नाम्नो निमित्त प्रश्नयति

से केणट्ठेणं भंते! एवं वुच्चइ वेअड्ढे पव्वए वेअड्ढे पव्वए?। गो०! वेअड्ढे णं पव्वए भारहं वास दुहा विभयमाणे चिट्ठति। तं जहा-दाहिणड्ढभरहं च उत्तरड्ढभरहं च। वेअड्ढगिरिकुमारे एत्थ देवे महिड्ढीए जाव पलिओवमट्ठितीए परिवसति। से तेणट्ठेणं गो०! एवं वुच्चति वेअड्ढे पव्वए वेअड्ढे पव्वए, अदुत्तरं च णं गो०! वेअड्ढस्स पव्वयस्स सासए णामधिज्जे पण्णत्ते जं ण कयाइ ण आसि, ण कयाइ ण भवइ, ण कयाइ ण भविस्सति, भुविं च भवति भविस्सति अ धुवे निअए सासए अक्खए अव्वए अवट्ठिए णिच्चे। कहि णं भंते! जंबुद्दीवे दीवे उत्तरड्ढभरहे णामं वासे पण्णत्ते?। गो०! चुल्लहिमवंतस्स वासहरपव्वयस्स दाहिणेणं वेअड्ढस्स पव्वयस्स उत्तरेणं, पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं, पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं, एत्थ णं जंबुद्दीवे दीवे उत्तरड्ढभरहे णामं वासे पण्णत्ते। पाईणपडीणायते उदीणदाहिणविच्छिण्णे पलिअंकसंठाणसंठिए दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठे पच्चत्थिमं जाव पुट्ठे गंगासिंधूहिं महाणईहिं तिभागपविभत्ते दोण्णि अ अट्ठतीसे जोअणसए तिण्णि अ एगूणवीसतिभागे जोअणस्स विक्खंभेणं, तस्स बाहा पुरत्थिमपच्चत्थिमेणं अट्ठारसबाणउए जोअणसए सत्त य एगूणवीसतिभागे जोअणस्स अद्धभागं चा-

यामेणं, तस्स जीवा उत्तरेण पाईणपडीणायता दुहा लवणसमुद्दं पुट्ठा तहेव जाव चोद्दस जोअणसहस्साइं चत्तारि अ एगहत्तरि जोअणसए छच्च एगूणवीसतिभागे जोअणस्स किंचिविसेसूणे आयामेणं पण्णत्ता । तीसे णं धणुपट्ठे दाहिणेणं चउद्दस जोअणसहस्साइं पंच य अट्ठवीसे जोअणसए एक्कारसए एगूणवीसतिभागे जोअणस्स परिक्खेवेणं । उत्तरड्ढभरहस्स णं भंते ! वासस्स केरिसए आगारभावपडोआरे पण्णत्ते ? । गो० ! बहुसमरमणिज्जे भूमिभागे पण्णत्ते । से जहा णाम ए आलिंगपुक्खरे इ वा जाव कित्तिमेहिं चेव अकित्तिमेहिं चेव । उत्तरड्ढभरहे णं भंते ! वासे मणुआणं केरिसए आगारभावपडोआरे पण्णत्ते ? । गो० ! ते णं मणुआ बहुसंघयणा जाव अप्पेगइआ सिज्झंति जाव सव्वदुक्खाणमंतं करेंति ॥

'से केणट्ठेणमि'त्यादि प्रश्नः सुगमः । भगवानाह—गौतम ! वैताढ्यः पर्वतः 'दुह'त्ति द्विधा—द्वाभ्यां प्रकाराभ्यां विभजमानस्तिष्ठतीति निरुक्त्या वैताढ्य इति नाम्नः सान्वर्थता दर्शिता । तत्र शब्दव्युत्पत्तिरेवं—द्वे अर्द्धे भरतक्षेत्रस्य करोतीति वैताढ्यः । पृषोदरादित्वाद्रूपसिद्धिः । वैताढ्येन द्विधा करणे भरतक्षेत्रस्यापि द्वैविध्यं सम्पन्नं, तदेवाह—'तं जहा दाहिणड्ढे'त्यादि । तद्यथा—दक्षिणार्द्धभरतं चोत्तरार्द्धभरतं चेति । अथ प्रकारान्तरेणापि नाम्नो निमित्तमाह—'वेअड्ढ'त्ति । अत्र पर्वते वैताढ्यगिरिकुमारो देवो महर्द्धिको यावत्पल्योपमस्थितिकः परिवसति । 'से तेणट्ठेणं'ति तदेतेनार्थेन गौतम ! एवमुच्यते वैताढ्यः पर्वतः वैताढ्यः पर्वतः । अथ प्रकारान्तरेणाऽपि नाम्नो निमित्तमाह—'अदुत्तरं च णमि'त्यादि । अथाऽपर चः पुनरर्थे । णं ति प्राग्वत् । गौतम ! वैताढ्यस्य पर्वतस्य शाश्वत नामधेयं प्रज्ञप्तं, यतो वैताढ्यो न कदाचिन्नासीदनादित्वात् सर्व्वदैवासीदिति भावः । तथा न कदाचिन्न भवति वर्त्तमानकालचिन्तायां सर्व्वदैव भवतीति भावः । तथा न कदाचिन्न भविष्यति किन्तु भविष्यचिन्तायामपर्यवसितत्वात् सर्व्वदैव भविष्यतीति प्रतिपत्तव्यं, तदेवं कालत्रयचिन्तायां नास्तित्वप्रतिषेधं विधाय सम्प्रत्यस्तित्व प्रतिपादयति 'भुविं चे'त्यादि । अभूच्च भवति च भविष्यति चेति त्रिकालावस्थायित्वात् ध्रुवो मेर्व्वादिवत् । ध्रुवत्वादेव सदैव स्वस्वरूपेण नियतः । नियतत्वादेव शाश्वतः—शश्वद्भवनस्वभावः । शाश्वतत्वादेव च सततं गङ्गासिन्धुप्रवाहप्रवृत्तावपि पौण्डरीकह्रद इवाऽनेकपुद्गलविचटनेऽपि तावन्मात्रान्यपुद्गलोच्चटनसम्भवात् अक्षयः । न विद्यते यथोक्तस्वरूपाकारपरिभ्रंशो यस्य सोऽक्षयः । अक्षयत्वादेवाव्ययः अव्ययशब्दवाच्यः मनागपि स्वरूपचलनस्य जातुचिदप्यसम्भवात् । अव्ययत्वादेवावस्थितः स्वप्रमाणे मानुषोत्तरपर्व्वताद् बहिस्समुद्रवत् । एवं स्वप्रमाणे सदावस्थानेन चिन्त्यमानो नित्यः धर्म्मास्तिकायादिवत् । अथोत्तरार्द्धभरतस्य स्वरूप पृच्छति—'कहि ण भंते !'इत्यादि । क भदन्त ! जम्बूद्वीपे द्वीपे उत्तरार्द्धभरत नाम्ना वर्षं प्रज्ञप्त ? भगवानाह—गौतम ! क्षुल्लहिमवतो वर्षधरस्य दक्षिणेन, वैताढ्यस्य पर्व्वतस्योत्तरेण, पूर्व्वलवणसमुद्रस्य पश्चिमेन, पश्चिमलवणसमुद्रस्य पूर्व्वेण 'एत्थ ण'ति अत्रान्तरे जम्बूद्वीपे द्वीपे उत्तरार्द्धभरतं नाम क्षेत्र प्रज्ञप्तं प्राचीनप्रतीचीनायतम् उदीचीनदक्षिणविस्तीर्णं पर्यङ्कसंस्थानसंस्थित द्विधा लवणसमुद्रं स्पृष्ट पौरस्त्यया कोट्या पौरस्त्यं लवणसमुद्रं स्पृष्टं, पश्चिमया कोट्या पश्चिमलवणसमुद्र स्पृष्टं, गङ्गासिन्धुभ्यां महानदीभ्यां त्रिभागप्रविभक्तं—त्रिभिर्भागैः प्रविभक्तमित्यर्थः । तच्चाष्टात्रिंशदधिके द्व

योजनशते त्रींश्चैकोनविंशतिभागान् योजनस्य विष्कम्भतः । तदङ्कस्थापना-यो० २३८-३/१९ । तस्य-उत्तरार्द्धभरतस्य बाहा पूर्वपश्चिमाभ्याम् अष्टादश योजनशतानि द्विनवत्यधिकानि सप्त चैकोनविंशतिभागा योजनस्यार्द्धभागश्च कलाया आयामतः । तदङ्कस्थापना-यो० १८९२-७॥/१९ । तस्य जीवा उत्तरेण प्राचीनप्रतीचीनायता द्विधा लवणसमुद्रं स्पृष्टा 'तहेव'त्ति तथैव-वैताढ्यवत् 'जाव चउदसे'त्यादि यावत् चतुर्दश योजनसहस्राणि चत्वारि च एकसप्तत्यधिकानि योजनशतानि षट् चैकोनविंशतिभागान् योजनस्य किञ्चिदूनान् आयामतः प्रज्ञप्ता । तदङ्कस्थापना-यो० १४४७१-६/१९ । यावत् करणात् 'पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठे' त्यादि द्रश्यम् । अथ जीवासम्बन्धिनो धनुःपृष्ठस्य योजनसङ्ख्यामाह-'तीसे णमि'त्यादि । तस्या-जीवाया धनुःपृष्ठं दक्षिणेन चतुर्दश योजनसहस्राणि पञ्च च अष्टाविंशत्यधिकानि योजनशतानि एकादश च भागान् योजनस्य परिक्षेपेण-परिधिना १४५२८-११/१९ । अथोत्तरार्द्धभरतस्वरूपं प्रश्नयति-'उत्तरड्ढभरहस्स णमि'त्यादि । उत्तरार्द्धभरतस्य भदन्त ! वर्षस्य कीदृग आकारभावप्रत्यवतारः प्रज्ञप्तः ? । भगवानाह-गौतम ! बहुसमरमणीयो भूमिभागः प्रज्ञप्तः । 'से जहा णाम ए'इत्यादि प्राग्वत् । अथ तत्रैव मनुष्यविषयं प्रश्नमाह 'उत्तरड्ढे'त्यादि । उत्तरार्द्धे भरते वर्षे भदन्त ! मनुजानां कीदृश आकारभाव प्रत्यवतारः प्रज्ञप्तः ? । भगवानाह-गौतम ! 'ते णं'ति । ते मनुजा बहुसंहनना' यावदप्येकका: सिद्ध्यन्ति यावत्सर्व्वदुःखानामन्तं कुर्व्वन्ति । यावत्करणाद् 'बहुसंठाणा बहुउच्चत्तपज्जवा बहुआउपज्जवा बहूइं वासाइं आउं पालेंति पालेत्ता अप्पेगइआ णिरयगामी अप्पेगइआ तिरिअगामी अप्पेगइआ मणुअगामी अप्पेगइआ देवगामी अप्पेगइआ सिज्झंति बुज्झति मुच्चंति परिणिव्वाइंति त्ति । पर्यन्तव्याख्या च दक्षिणभरतमनुजानामिवावसातव्या । यद्यप्युत्तरभरतार्द्धक्षेत्रे तीर्थकृदाद्यभावेन अनार्यदेशोत्पन्नत्वेन च तत्रत्यानां मनुजानां धर्म्मप्राप्तिसामग्र्यभावः तथापि चैत्यनमस्कारादिप्रयोजनवशेन तत्रगतानां विद्याधरादिसाधूनां जिनप्रतिमानां च दर्शनतः कर्म्मणा क्षयोपशमवैचित्र्यात् आर्द्रकुमारादय इव जातजातिस्मृतयः चक्रवर्त्यादिकाले च तत्रोत्पन्ना अपीह तीर्थकृदादिसमीपे धर्म्मश्रवणादिनाऽवाप्तबोधयस्तथाविधभव्यत्वपरिपाकवशेनाऽवाप्तकेवलज्ञानास्तत्रापि सिद्ध्यन्ति यावन्निर्वान्ति । नात्र किञ्चिद्बाधकं, न चानार्यदेशोत्पन्नत्वमेव तत्र बाधकमिति वाच्यम् । आर्द्रकुमारादेश्चक्रवर्तिस्त्रीणां च सम्यक्त्वादिप्राप्तिश्रुतेस्तस्याऽबाधकत्वात् ॥

अथोत्तरार्द्धभरतमध्यवर्त्तिनमृषभकूटनाम्ना पर्वतं प्रश्नविषयीकरोति

कहि णं भंते ! जंबुद्दीवे दीवे उत्तरड्ढभरहे वासे उसहकूडे णामं पव्वए पण्णत्ते ? । गो० ! गंगाकुंडस्स पच्चत्थिमेणं सिंधुकुंडस्स पुरत्थिमेणं चुल्लहिमवंतस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे एत्थ णं जंबुद्दीवे दीवे उत्तरड्ढभरहे वासे उसभकूडे णामं पव्वए पण्णत्ते । अट्ठ जोअणाइं उड्ढं उच्चत्तेणं दो जोअणाइं उव्वेहेणं मूले अट्ठ जोअणाइं विक्खंभेणं मज्झे छ जोअणाइं विक्खंभेणं उपरि चत्तारि जोअणाइं विक्खंभेणं मूले साइरेगाइं पणवीसं जोअणाइं परिक्खेवेणं मज्झे सातिरेगाइं अट्ठारस जोअणाइं परिक्खेवेणं उवरि साइरेगाइं दुवालस जोअणाइं परिक्खेवेणं । पाठांतरं मूले बारस जोअणाइं विक्खंभेणं मज्झे अट्ठ जोअणाइं विक्खंभेणं उप्पिं चत्तारि जोअणाइं विक्खंभेणं मूले

साइरेगाइं सत्ततीसं जोअणाइं परिक्खेवेणं मज्झे साइरेगाइं पणवीसं जोअणाइं परिक्खेवेणं उप्पिं साइरेगाइं बारस जोअणाइं परिक्खेवेणं मूले विच्छिण्णे मज्झे संखित्ते उप्पिं तणुए गोपुच्छ-संठाणसंठिए सव्वजंबुणदमए अच्छे सण्हे जाव पडिरूवे । से णं एगाए पउमवरवेइआए तहेव जाव भवणं कोसं आयामेणं अद्धकोसं विक्खंभेणं देसूणं कोसं उड्ढं उच्चत्तेणं । अट्ठो तहेव । उप्पलाणि पउमाणि जाव उसमे एत्थ देवे महिड्ढीए जाव दाहिणेणं रायहाणी तहेव मंदरस्स पव्वयस्स जहा विजयस्स अविसेसिअं ॥

'कहि णं भंते !' इत्यादि । क्व भदन्त ! जम्बूद्वीपे द्वीपे उत्तरार्द्धभरते वर्षे ऋषभकूटनाम्ना पर्वतः प्रज्ञप्तः, स च किंप्रमाणः, कीदृशश्च स्वरूपेण ? इत्याह–'अट्ठ जोअणाइमि'त्यादि । अष्टौ योजना-न्यूर्ध्वमुच्चैस्त्वेन द्वे योजने उद्वेधेन मूलेऽष्टौ योजनानि विष्कम्भे मध्ये षट् उपरि च चत्वारि योजनानि विष्कम्भेन, मूले सातिरेकाणि पञ्चविंशतियोजनानि मध्ये सातिरेकाणि अष्टादश योजनानि उपरि च साति-रेकाणि द्वादश योजनानि परिक्षेपेण । पाठान्तरमाह–'मूले बारस'त्ति मूले द्वादश योजनानि विष्कम्भेन, मूले सातिरेकाणि सप्तत्रिंशद्योजनानि परिक्षेपेण, मध्ये सातिरेकाणि पञ्चविंशतियोजनानि उपरि च सातिरेकाणि द्वादश योजनानि परिक्षेपेण । अत एवाह–मूले विस्तीर्णो मध्ये सङ्क्षिप्त उपरि तनुकः । अत एव संस्थानेन गोपुच्छसंस्थानसंस्थितः सर्व्वजाम्बूनदमयः–सर्व्वात्मना सुवर्णविशेषात्मकः । 'अच्छे सण्हे' इत्यादिविशेषणकदम्बकं प्राग्वत् । 'से णं एगाए'त्ति । स च ऋषभकूटनामा पर्व्वतः एकया पद्मवरवेदिकया 'तहेव' वैताढ्यकूटवदेव । तच्चैव–'एगेण य वणसंडेणं सव्वओ समंता संपरिक्खित्ते' इत्यादि कियद् दूरमित्याह 'जाव'त्ति यावद्भवनं 'कोसं'त्ति क्रोशमायामेन अर्द्धक्रोश विष्कम्भेन देशोनक्रोश-मूर्ध्वमुच्चैस्त्वेन । अथ ऋषभकूट इति नाम्नः प्रवृत्तिनिमित्तमतिदेशेनाह–'अट्ठो तहेव'त्ति । अर्थो नाम्नः सान्वर्थता निमित्तं तद्गतवस्तुविशेषः 'तहेव'त्ति तथैव यथा वैताढ्यवर्त्तिनो दक्षिणार्द्धभरतकूटस्य नाम्नो निमित्त तथैवास्यापीति । तदेवाह–'उप्पलाणी'त्यादि । उत्पलानि पद्मानि यावत् ऋषभोऽत्र देवो महर्द्धिकः यावत् करणात् 'से केणट्ठेणं भंते ! एवं वुच्चइ उसमकूडे पव्वए णामं उसमकूडे पव्वए ? गोअमा ! उसमकूडे पव्वए तत्थ तत्थ देसे तहिं तहिं बहूओ खुड्डखुड्डिआओ जाव बिलपंतिआओ तासु खुड्डखुड्डि-आसु जाव बिलपंतिसु बहूइं उप्पलाइं पउमाइं जाव सहस्सपत्ताइं उसमप्पभाइं उसभवण्णाभाइं पण्णत्ताइं । से तेणट्ठेणं एवं वुच्चइ उसमकूडे पव्वए उसमकूडे पव्वए' इत्यादि । तत्र ऋषभ-प्रभाणि–ऋषभाकाराणि ऋषभवर्णाभानि–ऋषभवर्णस्येवाभा–प्रतिभासो येषा तानि ऋषभवर्णाभानि । ततस्तानि तदाकारत्वात्तद्वर्णसादृश्याच्च ऋषभाणीति व्यवह्रियन्ते । तद्योगात् ऋषभसञ्ज्ञदेवस्वामि-कत्वाच्चास्य कूटाकारस्य पर्वतस्यापि ऋषभकूट इति नाम । यद्यपि वैताढ्यवर्त्तिनो दक्षिणार्द्धभरतकूटस्य नाम्नः प्रवृत्तिनिमित्तमुत्पलादिसम्बन्धः साक्षात्सूत्रे नोक्तस्तथापि तादृग् नामविशिष्टवस्तुसम्पर्कादेव तस्यापि तथा नाम्नः प्रवृत्तिरिति सम्भावनीयमिति । पुनरप्यतिदिशन्नाह–'जाव दाहिणेणमि'त्यादि । यावद्दक्षिणेन राजधानी तथैव मन्दरस्य पर्वतस्य यथा दक्षिणभरतार्द्धस्य देवस्य मेरोर्दक्षिणेन राजधानी तथाऽस्यापीत्यर्थः । यावत्करणाच्च 'महज्जुइए महब्बले महायसे महासुक्खे महाणुभावे पलिओ-वमट्ठिईए परिवसति । से तेणट्ठेणं गो० । उसमकूडे पव्वए उसमकूडे पव्वए । अदुत्तरं च णं

गोअमा ! उसभकूडस्स नामधेज्जे धुवे निअए सासए अक्खए अव्वए अव्वट्ठिए णिच्चे'त्ति । तथा 'कहि णं भंते ! उसभकूडस्स देवस्स उसभकूडा नाम रायहाणी पण्णत्ता ? गो० ! मंदरस्स पव्वयस्स दाहिणेणं तिरिअमसंखिज्जे दीवसमुद्दे वीतिवइत्ता अण्णं जंवुद्दीव दीवं दाहिणेणं वारस जोअणाइं ओगाहित्ता एत्थ णं उसभकूडा नाम रायहाणी पण्णत्तेत्ति प्रश्ननिर्वचनसूत्रं चावसेयं । 'जहा विजयस्से' त्यादि । अविशेषितमवशिष्टमुक्तातिरिक्तं राजधानीवर्णनाद्यं यथा विजयदेवस्य तथाऽस्यापीत्यर्थः । इति सकलस्यापि भरतक्षेत्रमात्रस्य वक्तव्यता व्याख्याता ॥

अथ सामान्यतो भरतक्षेत्रवर्त्तिकालविषयं प्रश्नमाह—

जंवुद्दीवे णं भंते ! दीवे भारहे वासे कइविहे काले पण्णत्ते ? । गो० ! दुविहे काले पण्णत्ते । तं० ओसप्पिणीकाले चेव उस्सप्पिणीकाले चेव । ओसप्पिणीकाले णं भंते ! कइविहे पण्णत्ते ? । गो० ! छव्विहे पण्णत्ते । तं०—सुसमसुसमाकाले सुसमाकाले सुसमदुस्समाकाले दुस्समसुसमाकाले दुस्समाकाले दुस्समदुस्समाकाले । उस्सप्पिणीकाले णं भंते ! कइविहे पण्णत्ते ? । गो० ! छव्विहे पण्णत्ते । तं जहा—दुस्समदुस्समाकाले जाव सुसमसुसमाकाले । एगमेगस्स णं भंते ! मुहुत्तस्स केवइआ ऊसासद्धा विआहिआ ? । गो० ! असंखेज्जाणं समयाणं समुदयसमितिसमागमेणं सा एगा आवलिआ पवुच्चइ ॥ संखिज्जाओ आवलिआओ ऊस्सासो संखिज्जाओ आवलिआओ नीस्सासो

हट्ठस्स अणवगल्लस्स निरुवकिट्ठस्स जंतुणो । एगे ऊसासनीस्सासे एस पाणुत्ति वुच्चइ ॥१॥
सत्त पाणूइं से थोवे सत्त थोवाइं से लवे । लवाणं सत्तहुत्तरिए एस मुहुत्तेत्ति आहिए ॥२॥
तिण्णि सहस्सा सत्त य सयाइं तेवुत्तरिं च ऊसासा । एस मुहुत्तो भणिओ सव्वेहिं अणंतनाणीहिं ॥३॥

एतेण मुहुत्तप्पमाणेणं तीसं मुहुत्ता अहोरत्तो, पण्णरस अहोरत्ता पक्खे, दो पक्खा मासे, दो मासा उऊ, तिण्णि उऊ अयणे, दो अयणा संवच्छरे, पंच संवच्छरिए जुगे, वीसं जुगाइं वाससए, दस वाससयाइं वाससहस्से, सयं वाससहस्साणं वाससयसहस्से, चउरासीइं वाससयसहस्साइं से एगे पुव्वंगे, चउरासीइ पुव्वंगसयसहस्साइं से एगे पुव्वे । एवं विगुणं विगुणं णेअव्वं । तुडिए२ अडडे२ अववे२ हूहूए२ उप्पले२ पउमे२ नलिणे२ अत्थणिपुरे२ अजुवे२ पजुते२ नजुते२ चूलिआ२ जाव चउरासीइं सीसपहेलिअंगसतसहस्साइं सा एगा सीसपहेलिआ । एताव ताव गणिए एताव गणिअस्स विसए । तेण परमुवमिए ॥

'जंवुद्दीवे णं भंते !' इत्यादि । जम्बूद्वीपे भदन्त ! द्वीपे भारते वर्षे कतिविधः कालः प्रज्ञप्तः ? भगवानाह—गौतम ! द्विविधः कालः प्रज्ञप्तः । द्वैविध्यमेवाह—'ओसप्पिणी' इत्यादि । अवसर्पिणीकालश्चोत्सर्पिणीकालश्च । तत्र अवसर्प्पन्ति—क्रमेण हानिमुपपद्यन्ते शुभा भावा अस्यामित्यवसर्पिणी । अवसर्पिण्यां हि समस्ता अपि शुभा भावाः क्रमेणानन्तगुणतया हीयन्ते । उपलक्षणात् अशुभाश्च भावाः

क्रमेणानन्तगुणतया परिवर्द्धन्ते। तथा च प्रतिसमयं शुभवर्णादीनां केवलिपरिज्ञया परिच्छिद्यमानस्वरूपैरंशैरनन्तैर्निजनिजधर्म्मैर्हीयमाना ये स्तम्भकुम्भाम्भोरुहादयः पदार्थसार्थास्तैर्विशिष्टो दशकोटाकोटिसागरोपमप्रमाणः कालविशेषोऽवसर्प्पिणीकालः। उत्सर्प्पन्ति—क्रमेण परिवर्द्धन्ते शुभा भावा अस्यामित्युत्सर्पिणी। उत्सर्पिण्यां हि क्रमेण शुभा भावा अनन्तगुणतया परिवर्द्धन्ते अशुभाश्च हीयन्ते। तेन केवलिपरिज्ञया परिच्छिद्यमानैरशनिजनिजधर्म्मैः प्रवर्द्धमाना ये पदार्थास्तैर्विशिष्टा दशकोटाकोटीसागरोपमप्रमाणः कालविशेषः उत्सर्पिणीकालः। कालस्यैक्येऽपि विशेषणभेदाद्विशिष्टभेद इतिवचनात् अव (उत्)सर्पिण्यवसर्पिण्योर्भेदोऽवसातव्यः। तेन पञ्चसु भरतेषु पञ्चसु चैरावतेषु अहोरात्रवत् परावर्त्तमानतेति भावः। अथावसर्पिण्यामपि कालभेदविषयं प्रश्नमाह—'ओसप्पिणी'त्यादि। अवसर्पिणीकालो भदन्त! कतिविधः प्रज्ञप्तः?। भगवानाह—गौतम! षड्विधः प्रज्ञप्तः—'तं जह'त्ति तद्यथा—सुषमसुषमाकालः सुषमाकालः सुषमदुःषमाकालः दुःषमसुषमाकालः दुःषमाकालः दुष्षमदुष्षमाकालः। अथोत्सर्पिणीकालभेदविषयं प्रश्नमाह—'उस्सप्पिणी'त्यादि। उत्सर्पिणीकालो भदन्त! कतिविधः प्रज्ञप्तः?। भगवानाह—गौतम! षड्विधः प्रज्ञप्तः। तद्यथा—दुःषमदुष्षमाकालो यावत्सुषमसुषमाकालः, यावत्करणात् दुःषमाकाल इत्यादि ग्राह्यम्। अथावसर्पिण्यादिकालविशेषपरिज्ञानाय मुहूर्त्तादिकालविशेषस्वरूपं प्रश्नयति—'एगमेगस्स णमि'त्यादि। एकैकस्य भदन्त! मुहूर्त्तस्य कियती 'केवइआ ऊसासद्धा' कतिउच्छ्वासप्रमितः कालविशेषः 'विआहिअ'त्ति व्याख्याता? भगवानाह—गौतम! असङ्ख्येयानां समयानां समुदयेन—समवायेन या समितिः सम्यक् प्राप्तिः तया तस्या वा यः समागमो—मिलनं तेन हेतुभूतेन यावान् कालः सा एका आवलिका। यद्वा—असङ्ख्येयानां समयाना समुदयः—समवायः, स च तेषा विशकलितानामपि तथाविधदेवदत्तादीनामिव स्यादत उच्यते समुदायस्य समितिर्नैरन्तर्येण मीलना, सा च नैरन्तर्यावस्थापिता यः शलाकानामिव परस्परनिरपेक्षाणामपि स्यादत उच्यते तस्याः समुदयसमितेर्यः समागमः—परस्परसम्बद्धतया विशिष्टैकपरिणामः समुदयसमितिसमागमः तेन निष्पन्नो यः कालविशेष सा एका आवलिका प्रोच्यते। ननु कीदृशः समयः केन दृष्टान्तेनावगमविषयो भवति? इति चेत्, उच्यते—समयस्तावत् सर्व्वनिकृष्टः कालविशेषः। तत्र दृष्टान्तस्तूर्णाकदारकेण विदार्यमाणे पटे तन्त्वोरपान्तरालकालोऽसङ्ख्येयसमयात्मकः। तथाहि—कश्चित्तूर्णाकतनयो युवा बलिष्ठो नीरोगः प्रवर्द्धमानवयाः स्वस्थचित्तः प्रारिप्सितकर्म्मकुशलो जीर्णशाटिका गृहीत्वा सर्व्वबलेन झटित्येव हस्तमात्रमपसारयेत् तत्रैकस्मादूर्ध्वतन्तोरधस्तनतन्तुस्त्रुटयन् असङ्ख्येयसमयविलम्बेनैव त्रुटयति। एकस्मिन्नपि तन्तावेकस्मात् पक्ष्मतोऽपरं पक्ष्म त्रुटयत् असङ्ख्येयसमयविलम्बेनेवेति समयस्य सूक्ष्मताऽवसातव्या। विस्तरस्तु 'से किं तं समए? समयस्स परूवणं करिस्सामो'त्याद्यनुयोगद्वारतोऽवसातव्यः॥

अथोच्छ्वासादिमानमाह—'संखिज्जाओ'त्ति। सङ्ख्येया आवलिका उच्छ्वासो निःश्वासोऽपि सङ्ख्येया आवलिकाः, सा च सङ्ख्या नानियता किन्तूच्छ्वासनिःश्वासयोः समुदितयोरावलिकाना द्विपञ्चाशदधिकानि त्रिचत्वारिंशच्छतानि साधिकानि भवन्ति। यत एकस्मिन्नुच्छ्वासकाले क्षुल्लकभवाः साधिकाः सप्तदश भवन्ति। एकैकस्मिंश्च भवे षट्पञ्चाशदधिक शतद्वयमावलिकानां स्यात्। अथ कीदृश

उच्छासनि श्वासः कालप्रमाणचिन्तायामुपयोगी स्याद् ? इत्याह–'हट्ठस्से'ति श्लोकः । हृष्टस्य–शोकादिविकाररहितस्य सशोकस्य हि उच्छ्वासनि श्वासावल्पकालीनौ स्याताम् । अनवकल्पस्य-जरामप्राप्तस्य शोकादिरहितस्य जरापीडितस्य तौ न्यूनाधिककालविशिष्टौ स्याताम् । निरुपक्लिष्टस्य–निर्गतमुप-समीपे क्लिष्टं यस्य स तथा तस्य प्रत्यासन्नकालाऽस्पृष्टरोगस्येत्यर्थः । अल्पकालीनरोगमुक्तो हि युवापि दुर्व्वलो भवति तस्य चोच्छ्वासो न प्रमाणचिन्तोपयोगी स्यात् । जन्तोर्मनुष्यप्राणिनः न पुनर्नारकादीनामपि तेषां भवस्वभावेन मनुष्येभ्यो विलक्षणकालोच्छ्वासनिःश्वासोपयुक्तत्वात् । एवंविधस्य मनुष्यस्य एक उच्छ्वासनिःश्वासश्चेति समाहारद्वन्द्वेऽपि पुंस्त्वं प्राकृतत्वात । यद्वा-उच्छ्वासेन युक्तो निःश्वासः उच्छ्वासनिःश्वास एष प्राण उच्यते । अथ स्तोकादेः प्रवर्द्धमानस्य कालविशेषस्य परिज्ञानाय श्लोकमाह–' सत्त पाणू ' इत्यादि । सप्त प्राणा–उच्छ्वासनिःश्वासलक्षणा यत्तदोर्नित्याभिसम्बन्धात् ये स स्तोकः-स्तोकसञ्ज्ञक. कालविशेषः । ये च सप्त स्तोकाः स लवो–लवसञ्ज्ञः कालविशेषः । लवानां सप्तसप्तत्या एष प्रागुक्तः ' एगमेगस्स णं भंते ! मुहुत्तस्स केवइआ ऊसासद्धा ? 'इति सूत्रेण कालपरिज्ञानाय मूलतयोपन्यस्तो मुहूर्त इत्याख्यातस्तीर्थकृद्भिरिति गम्यम् । अत्र श्लोके वर्णाधिक्यं नाशङ्क्यम् आर्षवाक्ये तथा दृश्यमानत्वात् । यथा–'पढमं हवइ मंगल, भमरो आविअइ रसमि'त्यादि । अथैकस्मिन् मुहूर्ते कियन्त उच्छ्वासनिःश्वासा भवन्तीति परिज्ञानाय गाथामाह– तिण्णि' त्ति । त्रीणि सहस्राणि सप्त च शतानि त्रिसप्ततिश्चोच्छ्वासाश्च निःश्वासान्तर्गता भवन्त्यत उच्छ्वासनिःश्वासाः एषोऽनन्तरोक्तस्वरूपो मुहूर्त्तो भणितः सर्व्वैरनन्तज्ञानिभिस्तीर्थकृद्भि' । एतावती सङ्ख्या त्वेवंसप्तभिरुच्छ्वासैरेकः स्तोकः, सप्तभिः स्तोकैश्चैको लवः, सप्तसप्तभिर्गुणिता एकोनपञ्चाशत् ते च सप्तसप्तत्या गुणिता उक्तसङ्ख्याका भवन्तीति । अथोक्तस्वरूपस्य मुहूर्त्तस्य प्रयोजनमाह 'एतेणं ति । एतेनानन्तरोक्तेन मुहूर्त्तप्रमाणेन त्रिंशन्मुहूर्त्तो अहोरात्रं स्यात् अहोरात्रस्य त्रिंशत्तमो भाग उच्छ्वासादिक्रमेण मुहूर्त्तोऽवगन्तव्यः । एवं तूर्णाकतन्तपटशाटिकादृष्टान्तसाध्यः परमनिकृष्टः कालविशेषः समयः । १ असङ्ख्येयसमयात्मिका आवलिका २ सङ्ख्येयाभिरावलिकाभिरेक उच्छ्वासो निःश्वासश्च ३ द्वयोरपि कालः प्राणः ४ सप्तभिः प्राणैरेकः स्तोकः ५ सप्तभिः स्तोकैरेको लवः ६ सप्तसप्तत्या लवैरेको मुहूर्त्तः ७ त्रिंशता मुहूर्त्तैरेकमहोरात्र ८ मित्युपदर्शित 'पण्णरस'त्ति पञ्चदशाहोरात्राणि पक्षः ९ द्वौ पक्षौ मास १० द्वौ मासौ ऋतुः ११ त्रय ऋतवोऽयनं १२ द्वे अयने संवत्सरः १३ पञ्च सांवत्सरिकं युग १४ विंशतिर्युगानि वर्षशत १५ दश वर्षशतानि वर्षसहस्र १६ शतं वर्षसहस्राणां लक्षमित्यर्थः १७ चतुरशीतिवर्षशतसहस्राणि तदेक पूर्वाङ्ग चतुरशीत्या लक्षैरेक पूर्व्वाङ्ग भवतीत्यर्थः । तदङ्कस्थापना-८४०००००।१८।चतुरशीतिपूर्वाङ्गशतसहस्राश्चतुरशीतिलक्षाश्चतुरशीतिलक्षैर्गुणिता इत्यर्थः एकं पूर्व्वं भवति । तच्च सप्ततिकोटिलक्षाः षट्पञ्चाशत् कोटिसहस्राणि च वर्षाणां स्युः । उक्तं च–

'पुव्वस्स य परिमाणं सयरिं खलु वासकोडिलक्खाउ । छप्पण्णं च सहस्सा बोद्धव्वा वासकोडीणं' ॥१॥ ति । तदङ्कपङ्क्तिरेव–७०५६००००००००००।१९। अथ पूर्वसञ्ज्ञायाः सङ्ख्यायाः प्रतिपादनानन्तर वक्ष्यमाणाना त्रुटितादिसङ्ख्याना गुणकारेण साम्यादतिदेशमाह–'एवं विगुणं विगुणं'ति । 'एवमि'ति प्रागुक्तरीत्या चतुरशीतिलक्षगुणकारलक्षणया न पुनः शतादिगुणकारेणेत्यर्थः । पूर्वाङ्गपूर्व्वदृष्टान्तेन वक्ष्यमाणं त्रुटितादि शीर्षप्रहेलिकापर्यन्त ज्ञातव्यम् । कथं ? 'विगुणं विगुणं' ति । गुणशब्दोऽप्रधानवाची

अपकर्पसूचक' विगतो गुणो–भावनिर्देशादप्राधान्यं यस्मात तद्विगुण वीप्सायां द्वित्वे विगुण विगुणं–प्रधानं प्रधान यथोत्तर प्रकर्पवत् यथा स्यात्तथा क्रियाविशेषणम् । यथा पूर्वाङ्गापेक्षया पूर्व प्रधानं तथा पूर्वापेक्षया त्रुटिताङ्गं प्रधान तदपेक्षया त्रुटितमित्यादि, यावच्छीर्पप्रहेलिका सर्व्वप्रधान वहुतरपदार्थ-विषयत्वात् । यद्वा–विगुण गुणरहितमनादिसिद्धसङ्केतमात्रवशादेव विवक्षितसङ्ख्याभिधायकं न पुनस्त्रयोदश–पोडश–सपादशतादिवद् गुणनिष्पन्नं. तथा च यथा पूर्व्वाङ्ग' पूर्व च तथा त्रुटितादि-पदकदम्बकमपि ज्ञातव्यं वीप्सा च त्रुटितादिपदानामपि वहुत्वात् प्रत्यवतारकल्पत्वेऽपि सान्वर्थत्वा-भावाच्च । ननु अङ्ग तावत्कारण तच्च कार्यसापेक्षमिति पूर्व्वस्याङ्ग–कारण पूर्व्वाङ्गमिति निरुक्त्या पूर्वाङ्गस्य चतुरशीतिलक्षगुणकारेणैव पूर्व्वसङ्ख्याया जायमानत्वात्, सान्वर्थता ? इति चेत्, मैव पूर्वपदस्यैव सान्वर्थताया अभावे कथं तत्कारणस्य सान्वर्थता ? इत्यकुतात । केचित्तु 'विगुणं विगु-णमि'ति पाठमभ्युपगम्य द्विगुणं द्विगुण–द्विभेद द्विभेदमिति वदन्ति । तेषामिदमाकूत यथा–पूर्वाङ्गं पूर्व्व चेति द्वौ भेदौ तथा त्रुटितादिष्वपि त्रुटिताङ्ग त्रुटितमिति द्वौ भेदौ वक्तव्यौ यावच्छीर्षप्रहेलिकाङ्गं शीर्ष-प्रहेलिका चेति, परमेतत्पाठावलोकने यतनीयमिति । अथ प्रकृतमुच्यते 'तुडिए' इत्यादि । पुवसङ्ख्या-याश्चतुरशीतिलक्षगुणकारेण त्रुटिताङ्गं ३ तथैव च त्रुटितं ४ एतदपि चतुरशीत्या लक्षैर्गुणितम् अटटाङ्गम् ५ अटटाङ्गं चतुरशीतिलक्षगुणितमटटम् ६ । एवं अववाङ्गम् ७ अवव ८ हूहूकाङ्गं ९ हूहूकम् १० उत्प-लाङ्गम् ११ उत्पल १२ पद्माङ्ग १३ पद्म १४ नलिनाङ्ग १५ नलिनम् १६ अर्थनिपूराङ्गम् १७ अर्थनिपूरम् १८ अयुताङ्गम् १९ अयुतं २० प्रयुताङ्गं २१ प्रयुत २२ नयुताङ्गं २३ नयुत २४ चूलिकाङ्गं २५ चूलिका २६ 'जाव'त्ति यावत् चतुरशीतिशीर्पप्रहेलिकाङ्गशतसहस्राणि शीर्पप्रहेलिकाङ्ग चतुरशीत्या लक्षैर्गुणितमित्यर्थः सैका शीर्पप्रहेहिका भवति । यावत्करणात त्रुटिताद्युपलक्षिताना त्रुटिताङ्गादीना शीर्ष-प्रहेलिकाङ्गपर्यन्ताना पूर्व्वाङ्कराशेरारभ्य शीर्पप्रहेलिकाङ्काङ्कराशिपर्यन्तं चतुरशीत्या लक्षैरेव गुणकारस्य परिग्रहः । तेन शीर्पप्रहेलिकाङ्गं २७ शीर्पप्रहेलिका २८ चेति । तत्र शीर्षप्रहेलिकाङ्कराशिरेवं–सप्तकः पञ्चकोऽष्टको द्विकः षट्कः त्रिको द्विक पञ्चकस्त्रिकः शून्य सप्तकस्त्रिकः शून्यमेककः शून्यं द्विकश्चतुष्क एककद्वयं पञ्चकः सप्तको नवकः सप्तकस्त्रिक -पञ्चकः षट्को नवकद्वयं सप्तकः पञ्चकः षट्को नवकः षट्कश्चतुष्कः शून्यं षट्को द्विक एककोऽष्टको नवकः षट्कद्वयमष्टकश्चतुष्कोऽष्टकः शून्य-मष्टकः शून्यमेककोऽष्टकस्त्रिको द्विको नवकः षट्कश्चत्वारिंशं शून्यशत च । अङ्कस्थापना-यथा–७५८२६३२५३०७३०१०२४११५७९७ ३५६९९७५६९६४०६२१८९६६८ ४८०८०१८३२९६ इत्येव चतु'पञ्चाशदङ्कानामग्रे शून्यशतं-च चत्पारिंशदधिकमिति । तदेवं शीर्षप्रहेलिकायां सर्व्वाण्यमूनि चतुर्नवत्यधिकशतसङ्ख्यान्यङ्कस्थानानि भवन्तीति । अथ,शीर्पप्रहेलिकाया उपर्यपि सङ्ख्येयं भविष्यतीति पराशङ्कामपाकर्तुमाह–'एताव ताव'त्ति । तावत् आदौ क्रमेण वा वक्ष्यमाणयोर सङ्ख्येयानन्तयोः सङ्ख्येय-प्ररूपणाधीनत्वात् प्रथमतः सङ्ख्येय वक्तव्यम् । तच्च 'एताव'त्ति एतावदेव अनन्तरोक्त शीर्षप्रहेलिका-पर्यन्तमेव गणितम् । एतदपि व्यावहारिकमित्यध्याहार्यं व्यवहारपथावलम्बि गणितमेतावदेव स्यान्न परत इत्यर्थः । यच्चाऽसांव्यवहारिक सङ्ख्येयं तच्चानतिशयज्ञानवतां पल्योपमया प्ररूपित ज्ञानविषयो भवत्यतस्तदपि प्रसङ्गतः किञ्चिदुच्यते–सङ्ख्यातं त्रिधा–जघन्यं मध्यममुत्कृष्टं च । तत्र जघन्यं सङ्ख्यात द्वौ एकस्यैकत्वेनैव गणनागोचरातिक्रान्तत्वात् मध्यम सङ्ख्यातं त्रिप्रभृति यावदेकरूपहीनमुत्कृष्टं सङ्ख्यातम् ।

उत्कृष्ट सङख्यातं तावदेवम् । इह चत्वार' पल्याः कल्प्यन्ते । ते च जम्बूद्वीपप्रमाणाः अधस्ताद्योजनसहस्रावगाढा. उपरिष्टादष्टयोजनोच्छ्रितचतुरष्टद्वादशयोजनोपरिमध्याधोविस्तृतप्राकाराः तदुपरि पञ्चधनु शतविस्तृतद्विगव्यूतोच्छ्रितवेदिकान्तसहिताः । तत्र प्रथमोऽनवस्थितनामा पल्यः । द्वितीयः शलाकापल्यः । तृतीयः प्रतिशलाकापल्यः । चतुर्थो महाशलाकापल्यः । प्रथमस्य प्रथममनवस्थितव्यपदेशोऽसौ योग्यतामात्रेण राज्याहकुमारस्य राजव्यपदेशवद् द्रष्टव्यः । तत्राद्यपल्योऽनवस्थितनामा सशिखाकः सर्षपैरापूर्यते यावदेकोऽप्यन्यः सर्पपस्तत्र प्रक्षिप्तो नावस्थातु शक्नोति । ततः कल्पनया कश्चन देवो दानवो वा तं पल्यं वामकरतले धृत्वा एकं सर्षप द्वीपे प्रक्षिपेत् एक च समुद्रे । एव तावत्प्रक्षेपो वाच्यो यावदसावनवस्थितपल्योऽशेषो निष्ठितः स्यात् । ततोऽनवस्थितपल्यसम्बन्धिसर्षपेभ्योऽन्य एवैक सर्षपः शलाकापल्ये प्रक्षिप्यते । ततो यत्र द्वीपे समुद्रे वाऽसावनवस्थितपल्यो निष्ठा गतः तदन्ता ये द्वीपसमुद्रास्तावत्प्रमाणः पुनरन्यः पल्यः प्रकल्प्यते । सोऽपि पूर्ववत् सशिखाकः सर्षपैरापूर्यते । ततस्तमुत्पाटय्य यस्मिन् द्वीपे समुद्र वा प्रथमपल्यो निष्ठितस्ततः परतो द्वीपसमुद्रेषु एकैकं सर्षप प्रक्षिपेत् तावद्यावदसौ निर्लेपः स्यात् । ततः शलाकापल्ये द्वितीया सर्षपरूपा शलाका प्रक्षिप्यते । अन्ये त्वेषैव प्रथमशलाकेत्याहुः । ततो यस्मिन् द्वीपे समुद्रे वा द्वितीयः पल्यो निष्ठितः तदन्ता मूलत' सर्व्वेऽपि द्वीपसमुद्राः तावत्प्रमाणः पुनरन्यः पल्य प्रकल्प्यते पूर्ववत्सर्षपैरापूर्यते । ततस्तावत्प्रमाणं पल्य समुत्पाटय्य ततो निष्ठितस्थानात् परतो द्वीपसमुद्रेष्वेकैक सर्षपं प्रक्षिपेत् यावदसौ निष्ठितः स्यात् । ततस्तृतीया सर्षपशलाका शलाकापल्ये प्रक्षिप्यते । एवमनेन क्रमेण पुनः पुनरनवस्थितपल्य सर्षपाऽऽपूरणरिक्तीकरणलब्धैकैकरूपाभिः शलाकाभिः शलाकापल्यो यथोक्तप्रमाणः सशिखाकस्तावदापूरयितव्यो यावत्तत्रैकोऽप्यन्यः सर्षपा न मातीति । ततः पूर्वपरिपाट्याऽऽगतोऽनवस्थितपल्यः सर्षपैरापूरणीयः । ततः शलाकापल्यं वामकरतले कृत्वा प्राक्तनानवस्थितपल्यचरमसर्षपाऽऽक्रान्तात् द्वीपात् समुद्राद्वा परत प्रतिद्वीप प्रतिसमुद्रे चैकैक सर्षप प्रक्षिपेत् यावदसौ निष्ठितः स्यात् । ततः प्रतिशलाकापल्ये सर्षपरूपा प्रथमा प्रतिशलाका प्रक्षिप्यते । ततोऽनन्तरोक्तानवस्थितपल्य उत्पाटयते । ततः शलाकापल्यचरमसर्षपाऽऽक्रान्तात् द्वीपात् समुद्राद्वा परतः पूर्वक्रमेण द्वीपसमुद्रष्वेकैकं सर्षपं प्रक्षिपेत् यावदसौ निष्ठितः स्यात् । ततः शलाकापल्ये पुनरपि सर्पपरूपा एका शलाका प्रक्षिप्यते । ततोऽनन्तरोक्ताऽनवस्थितपल्यचरमसर्षपाऽऽक्रान्तो यो द्वीपः समुद्रो वा तदन्तमनवस्थितपल्यं सर्षपैर्भृत्वा ततः परतः पुनरप्येकैक सपप प्रतिद्वीपं प्रतिसमुद्र च प्रक्षिपेत् यावदसौ निष्ठितः स्यात् । ततो द्वितीया शलाका शलाकापल्ये प्रक्षिप्यते । एवमपरापराऽनवस्थितपल्यापूरणरिक्तीकरणलब्धैकैकसर्षपैर्यदा शलाकापल्य आपूरितः स्यात् पूर्वपरिपाट्या(चाऽ)वाऽनवस्थितपल्यः तदा शलाकापल्यमुत्पाटय्य प्राक्तनाऽनवस्थितपल्यचरमसर्षपाऽऽक्रान्तात् द्वीपात्समुद्राद्वा परतः प्रतिद्वीपं प्रतिसमुद्रं च एकैकं सर्षपं प्रक्षिपेत् यावदसौ निर्लेपः स्यात् । ततः प्रतिशलाकापल्ये द्वितीया शलाका प्रक्षिप्यते । ततोऽनवस्थितपल्यमुत्पाटय्य अनन्तररिक्तीकृतशलाकापल्यचरमसर्षपाऽऽक्रान्तात् द्वीपात्समुद्राद्वा परतः पूर्वक्रमेण द्वीपसमुद्रेष्वेकैकं सर्पप प्रक्षिपेत् यावदसौ निष्ठितः स्यात् । ततः पुनरपि शलाकापल्ये सर्पपरूपा शलाका प्रक्षिप्यते । यत्र चासौ द्वीपे समुद्रे वा निष्ठितः तावत्प्रमाणविस्तरात्मकमनवस्थितपल्यं सर्षपैरापूर्य ततः पूर्वक्रमेण द्वीपसमुद्रेष्वेकैक सर्पप प्रक्षिपेत् यावदसौ निष्ठितः स्यात्ततः शलाकापल्ये द्वितीया शलाका प्रक्षिप्यते ।

एवमनेन क्रमेण तावद्वक्तव्यं-यावत् त्रयोऽपि प्रतिशलाकापल्यशलाकापल्याऽनवस्थितपल्याः परिपूर्णमापूरिताः स्युः । ततः प्रतिशलाकापल्यमुत्पाट्य निष्ठितस्थानात्परतः प्रतिद्वीपं प्रतिसमुद्रं चैकैकं सर्षपं प्रक्षिपेत् यावदसौ निष्ठितः स्यात् । ततो महाशलाकापल्ये एका सर्षपरूपा शलाका प्रक्षिप्यते । ततः शलाकापल्यमुत्पाट्य प्रतिशलाकापल्यगतचरमसर्षपाऽऽक्रान्तात् द्वीपात्समुद्राद्वा परतः प्रतिद्वीपं समुद्रं च एकैकं सर्षपं प्रक्षिपेत् यावदसौ निष्ठितः स्यात् । ततः प्रतिशलाकापल्ये एका शलाका प्रक्षिप्यते । ततोऽनवस्थितपल्यमुत्पाट्य शलाकापल्यगतचरमसर्षपाऽऽक्रान्तात् द्वीपात्समुद्राद्वा परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेत् यावदसौ निष्ठितः स्यात् । ततः प्रतिशलाकापल्ये प्रथमा शलाका प्रक्षिप्यते । ततोऽनन्तरोक्ताऽनवस्थितपल्यगतचरमसर्षपाऽऽक्रान्तो द्वीपः समुद्रो वा यस्तत्पर्यन्तविस्तरात्मकमनवस्थितपल्यं सर्षपैरापूर्य ततः उत्पाट्य निष्ठितस्थानात् परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेत् यावदसौ निष्ठितः स्यात् । ततो द्वितीयशलाका शलाकापल्ये प्रक्षिप्यते । एवं शलाकापल्यः पूरणीयः । एवमापूरणोत्पाटनप्रक्षेपपरम्परया तावद्वक्तव्यं यावन्महाशलाकापल्यादयश्चत्वारोऽपि समापूरिताः स्युः । एते च यावन्तोऽनवस्थितपल्यशलाकापल्यप्रतिशलाकापल्यसर्षपैर्व्याप्ता द्वीपसमुद्राः यावन्तश्च चतुष्पल्यसर्षपा एतावत्प्रमाणो राशिरेकरूपोनम् उत्कृष्टसङ्ख्यातकं स्यात् । सिद्धान्ते च यत्र कुत्रचित् सङ्ख्यातग्रहणं तत्र सर्वत्रापि जघन्योत्कृष्टापान्तरालवर्त्ति मध्यमं सङ्ख्यातं द्रष्टव्यमित्यनतिशयिसंव्यवहारवाह्यं सङ्ख्येयप्रसङ्गतोऽभिहितम् । अथ प्रकृतमुच्यते-एतावदेतावदेव गणितं स्यात् । तत्कुत ? इत्याह-'एतावे'त्यादि । यत एतावान् गणितस्य विषयः शीर्षप्रहेलिकापर्यन्तं गणनप्रमेयं भवति । न परतोऽपि तस्मादेतावदेव गणितम् । यद्वा-यस्मादेतावदेव गणितम् अत एतावानेव गणितविषय इति भावः । अयं च सङ्ख्यानुक्रमो माथुरीवाचनानुगतो वलभीवाचनानुगतस्तु ज्योतिष्करण्डकेऽन्यथापि दृश्यते । तथाहि-पूर्वाङ्ग १ पूर्वं २ लताङ्ग ३ लता ४ महालताङ्गं ५ महालता ६ नलिनाङ्गं ७ नलिनं ८ महानलिनाङ्गं ९ महानलिनं १० पद्माङ्गं ११ पद्मं १२ महापद्माङ्ग १३ महापद्मं १४ कमलाङ्ग १५ कमलं १६ महाकमलाङ्ग १७ महाकमलं १८ कुमदाङ्ग १९ कुमुदं २० महाकुमुदाङ्ग २१ महाकुमुदं २२ त्रुटिताङ्ग २३ त्रुटितं २४ महात्रुटिताङ्ग २५ महात्रुटितम् २६ अटटाङ्गम् २७ अटटं २८ महाअटटाङ्गं २९ महाअटटम् ३० ऊहाङ्गम् ३१ ऊह ३२ महोहाङ्ग ३३ महोह ३४ शीर्षप्रहेलिकाङ्ग ३५ शीर्षप्रहेलिका ३६ चेति । न चात्र सम्मोहः कर्तव्यः । दुर्भिक्षादिदोषेण श्रुतहान्यां यस्य यादृशं स्मृतिगोचरीभूतं तेन तथा सम्मतीकृत्य लिखितं, तच्च लिखनमेकं मथुरायामपरं च वलभ्यामिति । यदुक्तं ज्योतिष्करण्डवृत्तावेव-इह स्कन्दिलाचार्यप्रवृत्तौ दुष्षमानुभावतो दुर्भिक्षप्रवृत्त्या साधूनां पठनगणनादिकं सर्वमप्यनेशत् । ततो दुर्भिक्षातिक्रमे सुभिक्षप्रवृत्तौ द्वयोः सङ्घयोर्मेलापकोऽभवत् । तद्यथा-एको वलभ्यामेको मथुरायां, तत्र सूत्रार्थसङ्घटने परस्परं वाचनाभेदो जातः । विस्मृतयोर्हि सूत्रार्थयोः स्मृत्वा स्मृत्वा सङ्घटने भवत्यवश्यं वाचनाभेदो न काचिदनुपपत्तिः । तत्रानुयोगद्वारादिकमिदानीं वर्तमानं माथुरीवाचनानुगतं ज्योतिष्करण्डकसूत्रकर्त्ता चाऽऽचार्यो वालभ्यस्ततः इदं सङ्ख्यास्थानप्रतिपादनं वालभ्यवाचनानुगतमिति नास्यानुयोगद्वारप्रतिपादितसङ्ख्यास्थानैः सह विसदृशत्वमुपलभ्य विचिकित्सितव्यमिति । तथाऽनुयोगद्वारे प्रयुतनयुतयोः परावृत्तिरप्यस्तीति । अथोक्तस्वरूपशीर्षप्रहेलिकातः प्रवर्धमानस्य कालस्य परिमाणं किंसञ्ज्ञं स्यात् ?

कथं वा तत्परिज्ञानम् ? इत्याह–' तेण पर 'मित्यादि । ततः परमौपमिकम् उपमया पल्यादिलक्षणया निवृत्तमौपमिकं कालपरिमाण स्यात् । गणनातिक्रान्तस्य कालस्य परिमाणमुपमयैव निरतिशयिना ज्ञातुं शक्यते नान्यथेति भावः ॥

से किं तं ओवमिए ? ओवमिए दुविहे पण्णत्ते । तं० पलिओवमे अ सागरोवमे अ। से किं तं पलिओवमे ? पलिओवमस्स परूवणं करिस्सामि । परमाणू दुविहे पण्णत्ते । तं० सुहुमे अ वावहारिए अ । अणंताणं सुहुमपरमाणुपोग्गलाणं समुदयसमिइसमागमेणं वावहारिए परमाणू णिप्फज्जति । तत्थ णो सत्थं कमति ।

'सत्थेण सुतिक्खेण वि छेत्तुं भेत्तुं च जं किर न सक्का । तं परमाणुं सिद्धा वयंति आइं पमाणाणं ॥१॥ अणंताणं वावहारिअपरमाणूणं समुदयसमितिसमागमेणं सा एगा उस्सण्हसण्हिआइ वा सण्हसण्हिआइ वा उड्ढरेणूति वा तसरेणूति वा रथरेणूति वा वालग्गेति वा लिक्खाति वा जूआति वा जवमज्झेति वा उस्सेहंगुलिआति वा । अट्ठ उस्सण्हसण्हिआओ सा एगा सण्हसण्हिआ, अट्ठ सण्हसण्हिआओ सा एगा उड्ढरेणू, अट्ठ उड्ढरेणूओ सा एगा तसरेणू, अट्ठ तसरेणूओ सा एगा रथरेणू, अट्ठ रहरेणू से एगे देवकुरुउत्तरकुरूणं माणुसाणं वालग्गे, अट्ठ देवकुरुउत्तरकुरुवालग्गे से एगे हरिवासरम्मगवासाणं मणुस्साणं वालग्गे, एवं हेमवयहेरण्णवयाणं मणुस्सणं पुव्वविदेहअवरविदेहाणं मणुस्साणं वालग्गे सा एगा लिक्खा, अट्ठ लिक्खाओ सा एगा जूआ, अट्ठ जूआओ सा एगे जवमज्झे, अट्ठ जवमज्झा से एगे अंगुले । एतेण अंगुलप्पमाणेणं छ अंगुलाइं पाओ, बारस अंगुलाइं विहत्थी, चउवीसं अंगुलाइं रयणी, अडयालीसं अंगुलाइं कुच्छी, छण्णउइ अंगुलाइं से एगे अक्खेति वा दंडेति वा धणू ति वा जुगेति वा मुसलेति वा नालिआति वा । एतेण धणुप्पमाणेणं दो धणुसहस्साइं गाउअं, चत्तारि गाउआइं जोअणं, एतेण जोअणप्पमाणेणं जे पल्ले जोअणं आयामविक्खंभेणं जोअणं उड्ढं उच्चत्तेणं तं तिगुणं सविसेसं परिक्खेवेणं, से णं पल्ले एगाहिअवेहिअतेहिअ उक्कोसेणं सत्तरत्तप्परूढाणं सम्मट्ठे सण्णिचिए भरिए वालग्गकोडीणं । ते णं वालग्गा णो अग्गी डहेज्जा, णो वाए हरेज्जा, णो कुच्छेज्जा, णो परिविद्धंसेज्जा, णो पूतित्ताए हव्वमागच्छेज्जा । तओ णं वाससए वीससए एकमेकं वालग्गं अवहाय जावतिएणं कालेणं से पल्ले खीणे नीरए निल्लेवे निट्ठिए भवति । से तं पलिओवमे ॥

एएसिं पल्लाणं कोडाकोडी हविज्ज दस गुणिआ । तं सागरोवमस्स उ एकस्स भवे परीमाण ॥१॥ एतेणं सागरोवमप्पमाणेणं चत्तारि सागरोवमकोडाकोडीओ कालो सुसमसुसमा, तिण्णि सागरोवमकोडाकोडीओ कालो सुसमा, दो सागरोवमकोडाकोडीओ कालो सुसमदुस्समा, एगा सागरोवमकोडाकोडी बायालीसेहिं वाससहस्सेहिं ऊणिआ कालो दुस्समसुसमा, एकवीसं

वाससहस्साइं कालो दुस्समा, एक्कवीसं वाससहस्साइं कालो दुस्समदुस्समा । पुणरवि उस्सप्पिणी-एक्कवीसं वाससहस्साइं कालो दुसमदुसमा, एवं पडिलोमं णेअव्वं जाव चत्तारि सागरोवमकोडा-कोडीओ कालो सुसमसुसमा । दस सागरोवमकोडाकोडीओ कालो ओसप्पिणी । दस सागरो-वमकोडाकोडीओ कालो उस्सप्पिणी । वीसं सागरोवमकोडाकोडीओ कालो ओसप्पिणी उस्सप्पिणी ॥

'से किं तमि'त्यादि । अथ किं तदौपमिकम् ? इति प्रश्ने कृते गुरुराह–औपमिक द्विविध प्रज्ञप्तं, तद्यथा–पल्योपमं सागरोपमं च । तत्र पल्यो वक्ष्यमाणस्वरूपस्तेनोपमा यस्य तत्तथा । सागरो-दशकोटाकोटिपल्योपमात्मकत्वेन दुस्तरत्वात् समुद्रः स एवोपमा यस्य तत्तथा । 'से किं तमि'ति । अथ किं तत्पल्योपमम् ? इत्युक्ते भगवानाह–पल्योपमस्य प्ररूपणं करिष्यामि । तच्च परमाण्वादिस्वरू-पनिरूपणमन्तरेण निरूपयितुमशक्यमतः परमाणुस्वरूपमाह–'परमाणु'त्ति । परमाणुर्द्विविधः प्रज्ञप्तः तद्यथा–सूक्ष्मश्च व्यावहारिकश्च । तत्रानन्तानां सूक्ष्मपरमाणुपुद्गलानां सम्बन्धिनो ये समुदयाः–सङ्घाता-स्तेषां याः समितयो–बहूनि मीलनानि तासां समागमः संयोगः एकीभवन समुदयसमितिसमागमस्तेन व्यावहारिकः परमाणुर्निष्पद्यते । निश्चयनयस्तावत्

'कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः । एकरसगन्धवर्णो द्विस्पर्शः कार्यलिङ्गश्च ॥१॥ इत्यादिलक्षणसिद्धं निर्विभागमेव परमाणुमिच्छति । यत्वेतैरनेकैर्जायते तं सांशत्वात् स्कन्धमेव व्यपदिशति । व्यवहारस्तु तदनेकनिष्पन्नोऽपि यः शस्त्रच्छेदाग्निदाहादिविषयो न भवति तमद्यापि स्थूलताया अप्रतिपत्तेः परमाणुत्वेन व्यवहरति । अयं भावः–अनन्तैः सूक्ष्मैः परमाणुभिर्विस्रसा-परिणामेन सङ्घातविशेषमापन्नैरेको व्यावहारिकः परमाणुर्निष्पद्यते । ततोऽसौ निश्चयतः स्कन्धोऽपि व्यवहारनयमतेन व्यावहारिकः परमाणुरुक्तः । अथायमनन्तसूक्ष्मपरमाणुसमूहात्मकत्वेन शस्त्रादिच्छेद्यो भविष्यति तथा च वक्ष्यमाणपरमाणुलक्षणवियुक्तः कथ परमाणुः ? इति पराऽऽशङ्कामपाकर्तुमाह–'तत्थ णो सत्थमि'त्यादि । 'तत्थ'त्ति । तत्र व्यावहारिकपरमाणौ शस्त्रं–खड्गादि उपलक्षणादग्निजलाद्यपि नाक्रा-मति–छेदनभेदनदहनादिनिमित्त प्रयुक्तमपि व्यावहारिकपरमाणुविषये फलवन्न भवतीत्यर्थः । अथ पर-माणोर्लक्षणमाह–'सत्थेण' गाहा । शस्त्रेण खड्गादिना सुतीक्ष्णेनापि छेत्तु–द्विधा कर्तुं भेत्तुं सूच्यादिना सरन्ध्रमापादयितुं, वा विकल्पार्थे, यं पुद्गलविशेष किलेति लक्षणमेवास्याभिधीयते न पुनस्तं कोऽपि छेत्तुं भेत्तुं वा आरभते इति सूचनार्थः । न शक्ताः पुमांसः तं परमाणुं परमसूक्ष्मं घटाद्यपेक्षया सिद्धाः–सिद्धान्तवेदि-तया प्रसिद्धाः । यद्वा–ज्ञानसिद्धाः केवलिनो वदन्ति, न पुनः सिद्धिगताः तेषां वचनस्याऽसम्भवात् । प्रमाणा-नामङ्गुलहस्तादीनामादि–मूलमिति परमाणोर्लक्षणम् । यद्यप्यनन्तपरमाणुनिष्पन्नाः काष्ठादयः शस्त्रच्छे-दादिविषया दृष्टाः तथाप्यनन्तकस्यानन्तभेदभिन्नत्वात् तावत्प्रमाणेनैव परमाण्वनन्तकेन निष्पन्नोऽसौ व्यावहारिकः परमाणुर्ग्राह्यो यावत्प्रमाणेन निष्पन्नोऽद्यापि सूक्ष्मत्वात् न शस्त्रच्छेदादिविषयतामासादय-तीति भावः । यथा सूक्ष्मः परमाणुः छेदनोद्यतपुरुषप्रयत्नविषयीभूतखड्गादिधारागतोऽपि न छिद्यते । एवं सूच्याद्यग्रभागगतोऽपि न भिद्यते । पुष्करावर्त्तादिमेघजलधारान्तर्गतोऽपि नार्द्रो भवति । न चाग्निना दह्यते ।

तथा व्यावहारिकोऽपि परमाणुः खड्गाद्यच्छेद्योऽग्निप्रभृतिभिरदाह्योऽतः परमाणुलक्षणसाम्यादुभयत्रापि परमाणुव्यपदेशो युक्त एव बाधकाभावात् । यदागमः–'से किं त परमाणू ? परमाणू दुविहे पं० तं० सुहुमे अ वावहारिए अ । तत्थ सुहुमो ठप्पो । सुहुमाण परमाणुपोग्गलाणं समुदयसमितिसमागमेण वावहारिए परमाणुपोग्गले निप्फज्जइ । से णं असिधारं खुरधारं वा ओगाहेज्जा ? हंता ओगाहेज्जा । से ण तत्थ छिज्जेज्ज वा भिज्जेज्ज वा ? गो० ! णो इणट्ठे समट्ठे णो खलु तत्थ संकमइ' इत्यादि । ननु व्यावहारिकपरमाणोरिव सूक्ष्मपरमाणोरपि प्ररूपणा कथ न कृता ? इति चेत् । उच्यते–तस्य सर्वाधस्तनवर्तित्वेन कस्यापि कार्यभूतत्वाभावात व्यावहारिकपरमाणुवत्प्ररूपयितुमशक्यत्वात् । अनन्तसूक्ष्मपरमाणुसमुदायात्मकत्वेन व्यावहारिके परमाणौ सिद्धेऽर्थात्तदनन्ततमो भागः सूक्ष्मः परमाणुरित्येव रूपेण तस्यापि प्ररूपणायाः स्वतः सिद्धत्वाच्चेत्यल प्रसङ्गेन । अथ व्यावहारिकपरमाणोरनन्तरानन्तरकार्यमाह–'अणंताण'ति । अनन्तानां व्यावहारिकपरमाणुपुद्गलानां समुदया–द्व्यादिसमुदायास्तेषां समितयो–मीलनानि तासां समागमः–परिणामवशादेकीभवन समुदयसमितिसमागमस्तेन या परिमाणमात्रेतिगम्यं, सा एकाऽतिशयेन श्लक्ष्णा श्लक्ष्णश्लक्ष्णा सैव श्लक्ष्णश्लक्ष्णिका उत्तरप्रमाणापेक्षया उत्प्राबल्येन श्लक्ष्णश्लक्ष्णिका उच्छ्लक्ष्णश्लक्ष्णिका । इतिरुपदर्शने, वा उत्तरापेक्षया समुच्चये । एवं श्लक्ष्णश्लक्ष्णिकेति वा इत्यादिष्वपि वाच्यम् । एते च उत्श्लक्ष्णश्लक्ष्णिकादयो यद्यपि यथोत्तरमष्टगुणत्वेन प्रतिपादयिष्यन्ते तथापि प्रत्येकमनन्तपरमाणुनिष्पन्नत्वसाम्यं न व्यभिचरन्त्यतः प्रथमं निर्विशेषितमप्युक्तं 'सा एगा उस्सण्हसण्हिआइ वे'त्यादि । 'सण्हसण्हिअ'त्ति । प्राक्तनप्रमाणादष्टगुणत्वादूर्ध्वरेण्वपेक्षया त्वष्टमभागवर्त्तित्वात् श्लक्ष्णश्लक्ष्णिका । 'उड्ढरेणु'त्ति । स्वतः परतो वा ऊर्ध्वाधस्तिर्यक्चलनधर्म्मा रेणुरूर्ध्वरेणुः । तस'त्ति । त्रस्यति–पौरस्त्यादिवायुप्रेरिता गच्छति यो रेणुः स त्रसरेणुः । रथगमनोत्खातो रेणू रथरेणू । वालाग्रलिक्षादयः प्रतीताः । यद्यपि ग्रन्थान्तरे 'परमाणू तसरेणू' इत्यादिगाथायामुच्छ्लक्ष्णश्लक्ष्णिकादीनि त्रीणि पदानि नोक्तानि तथाऽप्युपलक्षणसूचितानि तत्रापि द्रष्टव्यानि । अथैतेषां प्रमाणमधिकृत्य क्रमेण सामान्यतो महत्त्वेऽपि कुत. किं कियन्महद् ? इति स्वरूपेण परिज्ञानाय विशेषमाह–'अट्ठ उस्सण्हे'त्यादि । अष्टौ उच्छ्लक्ष्णश्लक्ष्णिका सा एका श्लक्ष्णश्लक्ष्णिका, अष्टौ श्लक्ष्णश्लक्ष्णिका सा एका ऊर्ध्वरेणु, ततो यथोत्तरमष्टगुणवृद्धया त्रसरेणुः रथरेणु देवकुरूत्तरकुरुमनुष्यवालाग्र हरिरम्यकमनुजवालाग्र पूर्वापरविदेहमनुजवालाग्रं चेत्येव देवकुर्वादिमनुष्याणां तु केशस्थूलता क्रमेण क्षेत्रशुभानुभावहानेर्भावनीया । लिक्षादयो ह्यङ्गुलपर्यन्ताः भावाः प्रतीताः । अङ्गुलं चात्रोत्सेधाङ्गुलमेव बोध्यं परमाण्वादिक्रमेण प्रागुत्सेधाङ्गुलस्यैव पठितत्वात् । एतेनानन्तरोक्तस्वरूपेणाङ्गुलप्रमाणेन षडङ्गुलानि पादः–पादस्य मध्यतलप्रदेश षडङ्गुलविस्तीर्णः पादैकदेशत्वात्पादः । द्वादशाङ्गुलानि वितस्तिः, द्वौ च युग्मीकृतौ पादौ वितस्तिरित्यर्थः । चतुर्विंशतिरङ्गुलानि 'रयणि'त्ति रत्निर्हस्त इत्यर्थः । अष्टचत्वारिंशदङ्गुलानि कुक्षिः रत्निद्वयं कुक्षिं परिधिना कुक्षिरेतावानेवेत्यर्थः । षण्णवतिरङ्गुलानि षट् प्रमाणविशेषास्ते चामी 'से एगे अक्खेति वे'त्यादि । एकः स षण्णवत्यङ्गुलप्रमाणोऽक्षः–शकटावयवविशेषः । इतिरुपदर्शने । वा विकल्पार्थः । नालिका–यष्टिविशेषः । दण्डधनुर्युगमुशलानि प्रतीतानि । एतानि षडपि चतुर्हस्तप्रमाणानि भवन्तीत्यर्थः । अत्र यत्समानप्रमाणवाचकत्वेऽपि षण्णामुपदर्शनं तत् शतसहस्रलक्षयोरिव शास्त्रेषु भिन्नभिन्नप्रयोगानुसारतोऽवसातव्यम् । यथा–'पुरओ जुगमायाए पेहमाणो महिं चरे'त्ति ।

पळधणुसय आयामा धणूणि विच्छिन्न पण्णवीसं तु । छत्तीससयमुव्विद्धा सोआ चंदप्पहा भणिअ'त्ति ॥१॥ एतेन धनुःप्रमाणेन द्वे धनुःसहस्रे गव्यूतं, चत्वारि गव्यूतानि योजनम्, अनेन योजनप्रमाणेन यः पल्यः—धान्यपल्यः धान्यपल्य इव पल्य इत्यर्थः । स च वृत्तत्वादायामविष्कम्भाभ्यां—दैर्घ्यविस्तराभ्यां प्रत्येकमुत्सेधाङ्गुलक्रमनिष्पन्नं योजनमूर्ध्वमुच्चस्त्वेनापि तद्योजनं त्रिगुणं सविशेषं परिरयेण प्रमितिमङ्गीकृत्येति भावः । सर्वस्यापि वृत्तपरिधेः किञ्चिन्न्यूनषड्भागाधिकत्रिगुणत्वादस्यापि पल्यस्य किञ्चिन्न्यूनषड्भागाधिकानि त्रीणि योजनानि परिधिर्भवतीत्यर्थः । स पल्यः 'एगाहियवेहिअ'त्ति । षष्ठीबहुवचनलोपात् एकाहिकद्व्याहिकत्र्याहिकीनामुत्कर्षतः सप्तरात्रप्ररूढानां भृतो वालाग्रकोटीनामिति सम्बन्धः । तत्र मुण्डिते शिरस्येकेनाह्ना यावत्प्रमाणा वालाग्रकोटयः उत्तिष्ठन्ति ता एकाहिक्यः, द्वाभ्यां तु या उत्तिष्ठन्ति ता द्व्याहिक्यः, एवं त्र्याहिक्यः । कथं भृत ? इत्याह संमृष्टः—आकर्णं पूरितः सन्निचितः—प्रचयविशेषान्निबिडीकृतः । किंबहुना तथा कथञ्चनापि भृतोऽसौ यथा तानि वालाग्राणि नाग्निर्दहेत् न वायुरपहरेत् अतीव निचितत्वात् अग्निपवनावपि न तत्र क्रामत इत्यर्थः । 'ण कुच्छेज्ज'त्ति । नो कुथ्येयुः—प्रचयविशेषादेव शुषिराभावात् वायोरसम्भवित्वेनासारतां गच्छेयुः । अत एव 'न परिविद्धंसेज्ज'त्ति । कतिपयपरिशाटमप्यङ्गीकृत्य न परिविध्वंसेरन्नित्यर्थः । अत एव च 'नो पूइत्ताए हव्वमागच्छेज्ज'त्ति । नो पूतित्वेन कदाचिदप्यागच्छेयुः—न कदाचिद् दुर्गन्धतां प्राप्नुयुरित्यर्थः । 'तओ ण'ति । तेभ्यो वालाग्रेभ्यो वर्षशते वर्षशते एकैकं वालाग्रमपहाय—हृत्वा कालो मीयते इतिशेषः । ततश्च 'जावइएणमि'त्यादि । यावता कालेन स पल्यः क्षीणो वालाग्रकर्षणात्क्षयमुपागतः, आकृष्टधान्यकोष्ठागारवत् । तथा 'नीरए'त्ति । निर्गतरजाः—रजःकल्पसूक्ष्मवालाग्रशून्योऽपकृष्टधान्यरजःकोष्ठागारवत् । 'निल्लेव'त्ति । अत्यन्तसंश्लेषात्तन्मयतागतवालाग्रलेपाऽपहारान्निर्लेपोऽपनीतभित्त्यादिगतधान्यलेपकोष्ठागारवत् । एभिस्त्रिभिः प्रकारैर्निष्ठितो विशुद्ध इत्यर्थः । एकार्थिका वा एते शब्दा अत्यन्तविशुद्धिप्रतिपादनार्थमवगन्तव्याः । एतावत्कालस्वरूपं बादरमद्धापल्योपमं भवति । एतच्च पल्यान्तर्गतवालाग्राणां सङ्ख्येयत्वात् सङ्ख्येयैर्वर्षैस्तदपहारसम्भवात् सङ्ख्येयवर्षमानं द्रष्टव्यम् । निगमनमाह—'से तमि'त्यादि सुगमम् । अथ सागरोपमस्वरूपमाह 'एएसिं गाहा' एतेषां पल्यानां कोटाकोटिर्दशगुणिता भवेत् तदेकस्य सागरोपमस्य परिमाणं भवेत् दशकोटाकोटिपल्योपमैरेकं सागरोपममित्यर्थः । एताभ्यां च पल्योपमसागरोपमाभ्यां केवलं प्रज्ञापनैव क्रियते न पुनरन्यत्किमपि प्रयोजनम् । यदागमः एएहिं वावहारिअपलिओवमसागरोवमेहिं किं पओअणं ? नत्थि किंचि पओअणं पण्णवणा कज्जइ'त्ति । न च निरर्थकस्य प्ररूपणमयुक्तमिति शङ्कनीयं, बादरे प्ररूपिते सूक्ष्मं सुखावसेयं स्यात्, ततस्तावन्मात्रप्रयोजनसद्भावेन प्ररूपणाया युक्तत्वात् । तेनेदमेव पल्योपमं सागरोपमं च यदा असङ्ख्येयखण्डीकृतैकैकवालाग्रभृतपल्यात् वर्षशते वर्षशते खण्डस्योद्धारः क्रियते तदा सूक्ष्ममुच्यते । अत्र चाधिकारः सूक्ष्माद्धासागरोपमस्यैव अवसर्पिण्यादिकालस्य तेनैव प्ररूपणीयत्वात् । तस्मादत्रानुक्तमपि बादरोपलक्षितं सूक्ष्ममेव ग्राह्यम् । अन्यथाऽनुयोगद्वारादिभिर्विरोधापत्तेः । सुषमासुषमादिनराणामायुः सूक्ष्माद्धापल्योपमैरेव भणितम् । यदागमः—'एएहिं सुहुमअद्धापलिओवमसागरोवमेहिं किं पओअणं ? नेरइअतिरिक्खजोणिअमणुस्सदेवाणं आउआइं मविज्जंति'त्ति । तथाविधायुषो मनुजास्तु सूक्ष्माद्धासागरोपमरूपायामेवावसर्पिण्यामुत्सर्पिण्यां च सम्भवन्तीति तात्पर्यम् । ननु यानि देवकुर्वादिमनुष्याणां मुण्डिते

शिरस्येकाहिकानि द्व्याहिकानि त्र्याहिकानि यावदुत्कर्षेत सप्ताहिकानि वालाग्राणि बुद्ध्या गृहीत्वा पल्यो भृतः तेषां वालाग्राणां सम्बन्ध्येकैकं वालाग्रमसङ्ख्येयानि खण्डानि क्रियन्ते । असङ्ख्येय चासङ्ख्येयभेद-भिन्नमतः किंप्रमाण तदसङ्ख्येय खण्डमिति चेत् ? उच्यते इह हि विशुद्धलोचनः छद्मस्थ' पुरुषो यदतीव सूक्ष्मं द्रव्यं चक्षुषा पश्यति तदसङ्ख्येयभागमात्रमसङ्ख्येयं खण्डम् । इद च द्रव्यतोऽसङ्ख्येयस्य खण्डस्य प्रमाणं क्षेत्रतः पुनरिदं सूक्ष्मस्य पनकजीवस्य या जघन्यावगाहना तया यद्व्याप्तं क्षेत्र तदसङ्ख्येयगुणक्षेत्रा-वगाहिद्रव्यप्रमाणमसङ्ख्येयगुणं खण्डम् । तथा चात्रार्थेऽनुयोगद्वारसूत्र—'तत्थ ण एगमेगे वालग्गे असंखे-ज्जाइं खंडाइं किज्जति । ते णं वालग्गा दिट्ठीओगाहणाओ असंखेज्जइभागमेत्ता सुहुमस्स पणगजीवस्स सरीरो-गाहणाओ असंखेज्जगुणा'इति । अत्र वृद्धाः पूर्व्वपुरुषपरम्परायातसम्प्रदायवशादेव व्याख्यानयन्ति— बादर-पर्याप्तपृथिवीकायिकशरीरप्रमाणमसङ्ख्येयं खण्डमि'ति । तथा चाहानुयोगद्वारटीकाकारो हरिभद्रसूरिः— 'बादरपृथिवीकायिकपर्याप्तशरीरतुल्यान्यसङ्ख्येयानि खण्डानी'ति वृद्धवोधः । अथ सूक्ष्माद्धासागरो-पमस्य प्रयोजनमाह—'एतेणमि'त्यादि । एतेन प्रागुक्तस्वरूपेण सागरोपमप्रमाणेनावसर्प्पिण्यामित्य-ध्याहार्यम् । अग्रे पुनरपीत्यादिसूत्रेणोत्सर्पिण्याः साक्षादुक्तत्वेन चतस्रः सागरोपमकोटाकोटयः कालः सुषमसुषमानामा अवसर्प्पिणीमधिकृत्य प्रथमारकः तिस्रः सागरोपमकोटाकोट्यः कालः सुषमानामा द्वितीयारकः, द्वे सागरोपमकोटाकोट्यौ कालः सुषमदुष्षमानामा तृतीयारक', एका सागरोपम-कोटाकोटिः द्विचत्वारिंशद्वर्षसहस्रैरूना कालो दुष्षमसुषमानामा चतुर्थारकः, एकविंशतिर्वर्षसहस्राणि कालो दुःषमानामा पञ्चमारकः, एकविंशतिर्वर्षसहस्राणि कालो दुष्षमदुष्षमानामा षष्ठारक इत्येव-मवसर्प्पिण्या षण्णामप्यरकाणां कालमानं भणितम् । अथोत्सर्प्पिण्यामरकाणां व्यवस्थामाह— पुण-रवी'त्यादि । ये सुषमसुषमादयोऽरका अवसर्प्पिण्यामुक्तास्त एव पुनरपि नान्ये इत्यर्थ. । उत्सर्प्पिण्या-मेकविंशतिर्वर्षसहस्राणि दुष्षमदुष्षमाकालः प्रथमारकः ' एवं 'ति एवमनन्तरोक्तकालमान प्रतिलोमं-पश्चानुपूर्व्वि यथा स्यात्तथा ज्ञातव्यं यावत् चतस्रः सागरोपमकोटाकोटयः सुषमसुषमाकालः षष्ठारकः । अथ षड्भिरपि समुदितैररकैः कियान् किंसञ्ज्ञश्च काल ? इत्याह—'दस सागर'त्ति । दशसागरोपम-कोटाकोटयः दशसङ्ख्याका सूक्ष्माद्धासागरोपमकोटाकोटयः काल एकावसर्प्पिणी । एवमुत्सर्प्पिण्यपि तावत्प्रमाणैव । एतावता विंशतिः सागरोपमकोटाकोटयः अवसर्पिणी युक्तोत्सर्पिणी अवसर्पिण्युत्सर्प्पिणीति कालचक्रमित्यभिधीयते।

एवं जम्बूद्वीपवर्त्तिनि भरतक्षेत्रे कालस्वरूपं निरूप्याधुना तत्रैव क्षेत्रस्वरूपं पृच्छन्नाह

जंबुद्दीवे णं भंते ! दीवे भारहे वासे इमीसे ओसप्पिणीसमाए सुसमसुसमाए समाए उत्तिमकट्ठपत्ताए भारहवासस्स केरिसए आगारभावपडोआरे होत्था ? । गो० ! बहुसमरमणिज्जे भूमिभागे होत्था । से जहा णाम ए आलिंगपुक्खरेति वा जाव णाणामणिपंचवण्णेहिं तणेहि अ मणीहि अ उवसोभिए । तं जहा कण्हेहिं जाव सुक्किलेहिं । एवं वण्णो गंधो सद्दो फासो तणाण य मणीण य भाणिअव्वो जाव तत्थ णं बहवे मणुस्सा मणुस्सीओ अ आसयंति सयंति चिट्ठंति निसीअंति तुअट्टंति हसंति रमंति ललंति । तीसे णं समाए भारहे वासे बहवे उद्दाला कोद्दाला

मोद्दाला कयमाला णट्टमाला दंतमाला सिंगमाला संखमाला सेअमाला णामं दुमगणा पण्णत्ता। कुसविकुसविसुद्धरुक्खमूला पत्तेहि अ पुप्फेहि अ फलेहि अ उच्छण्णा पडिच्छण्णा सिरीए अईव उवसोभेमाणा चिट्ठंति। तीसे णं समाए भारहे वासे तत्थ तत्थ बहवे हेरुआलवणाणि भेरुआलवणाणि मेरुतालवणाणि सेरुतालवणाणि सालवणाणि सरलवणाणि सत्तवण्णवणाणि पूगफलवणाणि खज्जूरीवणाणि नालिएरीवणाणि कुसविकुसविसुद्धरुक्खमूलाइं जाव चिट्ठंति। तीसे ण समाए भारहे वासे तत्थ तत्थ बहवे सेरिआगुम्मा जाव महाकुंदगुम्मा रम्मा महामेहनिकुरंबभूआ दसद्धवण्णं कुसुमं कुसुमेंति। जेणेव भारहे वासे बहुसमरमणिज्जं भूमिभागं वायविधुअग्गसालामुक्कपुप्फपुंजोवयारकलिअं करेंति। तीसे णं समाए भारहे वासे तत्थ तत्थ बहवे वणराईओ पण्णत्ताओ। किण्हाओ किण्हाभासाओ जाव मणोहराओ रयमत्तछप्पयकोरिंटगभिंगारकोणालजीवंजीवणंदिमुहकविलपिंगलखगकारंडचक्कवाककलहंससारसअणेगसउणिगण मिहुणविरइअसद्दोण्णइअमहुरसरणाइआओ संपिंडिअ० णाणाविहगुच्छ० वावीपुक्खरिणीदीहिआ० सुणि० विचित्त० अब्भि० साउफलाओ० निरोअसव्वोउअपुप्फफलसमिद्धाओ पिंडिम० जाव पासाईआओ।

'जंबुद्दीवे णमि'त्यादि। जम्बूद्वीपे भदन्त! द्वीपे भरतक्षेत्रेऽस्यामवसर्प्पिण्यां समायां, समाशब्दो वैकल्पिकबहुवचनान्तः संवत्सरवाचकोऽपि ज्योतिष्करण्डवृत्तौ सामान्यतः कालवाची व्याख्यातः। प्रकृते च तथैव युक्त इतिकृत्वा अवसर्प्पिणीलक्षणा या समा-कालः तस्यामवसर्प्पणीसमाया तत्रापि कालविशेषमाह-'सुसमे'ति। शोभना समा सुषमा एकान्तसुषमा सर्व्वथा दुष्षमाभावरहिता सुषमसुषमा। यद्वा-सुषमा अवसर्प्पिण्यामेव द्वितीयारकलक्षणः कालविशेषः। ततोऽपि सुषमा सुषमसुषमा तस्या, किंलक्षणायाम्? उत्तिमे'ति। उत्तमा-प्रकृष्टा या काष्ठा-तत्कालोचिता दशावस्थेति यावत्तां प्राप्ता तस्यामुत्तमकाष्ठाप्राप्तायां भरतस्य-भरतक्षेत्रस्य कीदृश आकारभावप्रत्यवतारः आकारस्याकृतेर्भावाः-पर्यायाः। यद्वा-आकाराश्च भावाश्च आकारभावास्तेषां प्रत्यवतारोऽवतरणमाविर्भावः आकारभावप्रत्यवतारः। यद्वा-आकारभावस्य-स्वरूपस्य प्रत्यवतारः सम्भवः। 'होत्थ'त्ति अभवत्? भगवानाह-गौतम! 'बहुसमे'त्यादि। बहुसमोऽत्यन्तसमोऽविषमः सोऽपि रमणीयोऽत्यन्तं कमनीयो भूमिभागोऽभवत्। अथ समत्वे दृष्टान्तमाह-से जहे'ति 'से'ति। तत् सकललोकप्रसिद्धं, यथेति दृष्टान्तोपदर्शने, नामेति सम्भावने वाक्यालङ्कारे वा, 'ए' इत्यामन्त्रणार्थोऽलङ्कारार्थो वा। आलिङ्गपुष्करं-मुरजमुखपुटम् इतिरुपदर्शने, वा, समुच्चये 'जाव णाणे त्यादि यावन् नानाविधमणीनामिव पञ्चवर्णा येषां तैस्तादृशैस्तृणैर्मणिभिश्चोपशोभितः। पञ्चवर्णत्वमाह-तद्यथा कृष्णैर्यावत शुक्लैः यावच्छब्दात् 'मुइंगपुक्खरे इ वा सरतले इ वा आयंसमंडले इ वा चंदमंडले इ वे'त्यादिपरिग्रहः। एवमिति प्रागुक्तप्रकारेण तृणानां मणीनां च वर्णो गन्धः स्पर्शः शब्दश्च भणितव्यः। तत्र वर्णादीना स्वरूपं तावदेव वक्तव्यम्-कृष्णवर्णस्तावदञ्जनखञ्जनकज्जलादिभ्योऽतिमनोहरः। नीलवर्णोऽपीन्द्रनीलनीलोत्पलनीलीनीलीगुटिकादिभ्योऽतिमनोहरः। रक्तवर्णः पुनर्बालेन्द्रगोपकबालदिवाकरगुञ्जार्द्धभागजातहिङ्गुलकशिलाप्रवालपत्रालाकूकुरजपाकुसुमरक्तो-

त्पलादिभ्योऽत्यतिरमणीयः । तथा पीतवर्णश्चम्पककुसुमहरिद्राचूर्णहरितालगुटिकावरकनकनिकषसुवर्णयूथिकादिभ्योऽप्यतिशोभनः । शुक्लवर्णोऽपि पुण्डरीकस्फटिकादिभ्योऽपि रम्यतरः । एवं पञ्चानामपि वर्णाना चक्षुर्मनसोरत्याह्लादकत्वमेव भावनीयम् । तथा गन्धोऽपि तेषां कर्पूरकस्तूरिकागन्धादप्यतीव घ्राणमनःप्रह्लादकारी । स्पर्शोऽपि हंसगर्भार्कतूलनवनीतादिभ्योऽतीव सुकुमारः । शब्दस्तु तेषां पूर्वादिदिग्विदिक्सम्भववर्तिमन्दं मन्दं प्रकम्प्यमानानां तन्निवासिमनुजानां पुण्यानुभावतः सुनिपुणशिल्पिजनवाद्यमानवेणुवीणामृदङ्गध्वनेरपि श्रुतिमनसोरतिनिर्वृतिकरः प्रादुर्भवति । एवभूतस्तृणमणिभिश्चोपशोभितो भूभाग इत्यर्थः । अथैवंविधभूमेर्वर्णनं कियद् दूरं वक्तव्यम् ? इत्याह— जाव तत्थ णमि'त्यादि । यावत्तत्र मनुष्याः मानुष्यश्च 'आसयंति' यथासुखमासते, शेरते—दीर्घकायप्रसारणेन सनिद्रं निर्निद्रं वा तेषामुभयोरपि सम्भवात्, तिष्ठन्त्यूर्ध्वस्थानेन, निषीदन्त्युपविशन्ति, 'तुअट्टंति' त्वग्वर्त्तनं कुर्वन्ति—वामपार्श्वतः परावृत्य दक्षिणपार्श्वेनावतिष्ठन्ते दक्षिणपार्श्वतः परावृत्यवामपार्श्वेनेति, हसन्ति-ईषदास्यविकाशेन स्मितं कुर्वन्ति, रमन्ते—रतिमावध्नन्ति, ललन्ति—मनईप्सितं यथा स्यात्तथा प्रवर्त्तन्त इति भावः । यावच्छब्दात् 'पुरापोराणाण सुचिण्णाणं सुपडिक्कताण सुभाण कल्लाणाणं कडाण कम्माणं फलवित्तिविसेसे पच्चणुभवमाणा विहरंति'त्ति । व्याख्या च प्राग्वत् । अथ पुनरपि तत्र तदानीं किमासीद् ? इत्याह—'तीसे णं'मित्यादि । तस्यां सुषमसुषमायां कालविशेषे भारते वर्षे बहव उद्दालाः कोद्दालाः मोद्दालाः कृतमालाः नृत्तमालाः दन्तमालाः शृङ्गमालाः शङ्खमालाः श्वेतमाला इति नाम्ना द्रुमगणाः—वृक्षजातिविशेषसमूहाः प्रज्ञप्ताः केवलिभिरिति । ते च कथभूताः ? इत्याह—'कुसे'त्यादि । कुशा—दर्भा विकुशा विल्वजातयस्तैर्विशुद्धानि—विरहितानि वृक्षानुरूपाणि मूलानि येषां ते कुशविकुशविशुद्धवृक्षमूलाः । पुनस्ते कीदृशा ? इत्याह—'पत्तेहिमि'त्यादि । पत्रैः पुष्पैः फलैश्च उच्छन्ना—आच्छादिता प्रतिच्छन्नाः—विशेषेणाच्छादिताः श्रिया—शोभया । यद्वा—वृक्षाणां श्री पत्रादिलक्षणा तयाऽतीवोपशोभमानास्तिष्ठन्तीति । यौगलिकनराणां प्रमोदहेतवे वृक्षविशेषा दर्शिताः । अथ वनान्याह—'तीसे ण समाए'त्ति । तस्यां समायां भारते वर्षे तत्र तत्र देशे प्रदेशे च बहूनि सूत्रे पुंस्त्वं प्राकृतत्वात् हेरुतालवनानि भेरुतालवनानि यावत्तिष्ठन्तीति सुगमम् । अथ सुगन्धकुसुमप्रधानानां गुल्मानां वर्णनमाह—'तीसे णमि'त्यादि । तस्यां समायां तत्र तत्र देशे प्रदेशे बहवः सेरिकगुल्माः यावन्महाकुन्दगुल्माः । यावत्करणात् 'नवमालिअगुम्मा कोरटयगुम्मा बंधुजीवगगुम्मा मणोवज्जगुम्मा' इत्यादिसङ्ग्रहः । किम्भूताः ? रम्या—रमणीया. महामेघनिकुरुम्बभूता. कृष्णवर्णैः पत्रैस्तथाभूता न पुनः कुसुमादिभिरपि । ते च गुल्माः किं कुर्वन्ति ? इत्याह—'दसद्ध'त्ति । दशार्द्धवर्णं कुसुमं, जातावेकवचन कुसुमसमूहं कुसुमयन्ति—उत्पादयन्तीति भाव । येन कुसुमोत्पादनेन भरतक्षेत्रस्य बहुसमरमणीय भूमिभाग 'वायविधुअ'त्ति । वातेन विधूताः—कम्पिताः वातविधूताः ताश्च ता अग्रशाखाश्च वातविधूताग्रशाखास्ताभिर्मुक्तो यः पुष्पपुञ्जः, स एवोपचारः—पूजा तेन कलितं कुर्वन्ति । अथ वनराजयोऽपि तत्र सन्तीत्याह 'तीसे णमि'त्यादि । तस्यां समायां भारते वर्षे बह्व्यो वनराजयो वनश्रेणयः प्रज्ञप्ताः । किंलक्षणाः ? कृष्णावर्णोपेताः कृष्णावभासाः—कृष्ण एवावभासो यासां ताः कृष्णावभासाः 'जाव मणोहराओ'त्ति । यावन्मनोहरा—चेतसः प्रमोदकारिण्य । यावच्छब्दात् 'नीला नीलावभासा हरिता हरितावभासा' इत्यादिप्रागुक्तजगतीवनवर्णको वक्तव्यः । तथा 'रइअमत्त'त्यादि । रतिं ददतीति रतिदाः गुञ्जन् शब्दैः श्रोतॄणामिति गम्यं, मत्ताश्च ते षट्पदाश्च

मत्तषट्पदा' रतिदाश्च ते मत्तषट्पदाश्च कोरण्टकाश्च भृङ्गाराश्च कोणालाश्च जीवंजीवाश्च नन्दिमुखाश्च कपिलाश्च पिङ्गलाश्च खगाश्च कारण्डाश्च चक्रवाकाश्च कलहंसाश्च [हंसाश्च] सारसाश्चेति द्वन्द्वे रतिदमत्तेत्यादि पदाख्यानामनेकेषां शकुनिगणानां मिथुनैः स्त्रीपुरुषयुग्मैर्यद्विरचितमितस्ततो गमनं यच्च शब्दोन्नतिकम्–उन्नतशब्दकं मधुरस्वरं च नादितं–लपित यासु तास्तथा। 'संपिंडिअ'त्तिपदेन 'संपिंडिअदरिअभमरमहुअरिपहकरपरिलिंतमत्तछप्पयकुसुमासवलोलमहुरगुमगुमतगुंजंतदेसभागाओ'त्ति समग्रमपि विशेषणं वनराजीनां वाच्यम्। एवमग्रेऽप्याद्यवचनोपलक्षितानि ज्ञेयानि। तत्र सम्पिण्डिता–एकत्र पिण्डीभूता दृप्ता–मदोन्मत्ततया दर्पाध्माताः भ्रमरमधुकरीणां पहकराः–'पहकरऊरोहसंघाया' इति देशीवचनात् सङ्घाता यासु तास्तथा 'परिलिंत'त्ति। परिलीयमाना–अन्यत आगत्याश्रयन्तो मत्ताः षट्पदाः कुसुमासवलोलाः–किञ्जल्कपानलम्पटाः मधुरगुमगुमायमानाः गुञ्जन्तश्च–शब्दविशेषं विदधाना देशभागेषु यासां तास्ततो विशेषणसमासः। तथा 'णाणाविहगुच्छ'त्ति पदेन 'नाणाविहगुच्छगुम्ममंडवगसोहिआओ'त्ति विशेषणं सूचितम्। अत्र नानाविधाः-अनेकभेदभाजो गुच्छा–वृन्ताक्यादयो गुल्मा नवमालिकादयो मण्डपका लतामण्डपकादयस्तैः शोभिताः 'वावीपुक्खरिणी'त्यादिपदेन 'वावीपुक्खरिणीदीहिआसु अ सुनिवेसिअरम्मजालघरगाउ'त्ति विशेषणम्। तत्र वाप्यश्चतुरस्राकारा ता एव वृत्ताः पुष्करिण्यः, दीर्घिका–ऋजुसारण्यस्तासु सुष्ठु निवेशितानि रम्याणि जालगृहकाणि यासु तास्तथा। 'झुणि'त्ति पदेन 'झुणिविचित्तभंगाओ'त्ति विशेषणम्। ध्वनिविचित्रा भृङ्गा यासु तास्तथा। 'विचित्त'त्ति वचनेन 'विचित्तसुहकेतुवहुलाओ'त्ति विशेषणम्। विचित्रैर्विविधप्रकारैः शुभैर्मङ्गलभूतैः केतुभिर्ध्वजैर्बहुला व्याप्ता 'अब्भिं'ति वचनेन 'अब्भिंतरपुप्फफलाओ बाहिरपत्तच्छण्णाओ पत्तेहि अ पुप्फेहि अ उच्छन्नपडिच्छन्नाउ'त्ति विशेषणकदम्बकं ग्राह्यम्। अभ्यन्तराण्यभ्यन्तरभागवर्तीनि पुष्पाणि फलानि च यासां तास्तथा। वहिस्तात्पत्रैश्छन्ना–व्याप्ताः पुष्पैश्च पत्रैश्चावच्छन्नप्रतिच्छन्ना–अत्यन्तमाच्छादिताः 'साउफलाओ'त्ति स्वादूनि फलानि यासां तास्तथा। 'निरोअ'त्ति 'निरोअगाओ निरोगका–रोगवर्जिताः 'सव्वोउअ'त्ति सर्व्वर्तुकपुष्पफलसमृद्धाः 'पिंडिम'त्तिवचनेन 'पिंडिमनीहारिमं सुगंधिं सुहसुरभिमणहरं महया गंधद्धुणिं मुअंतीओ'त्ति ग्राह्यम्। तत्र पिण्डिता सती निर्हारिमा–दूर विनिर्गच्छन्तीना सुगन्धि–सद्गन्धिकां शुभसुरभिभ्यो–गन्धान्तरेभ्यः सकाशात् मनोहरां च। महया इति प्राकृत्वाद् द्वितीयार्थे तृतीयेति महतीमित्यर्थः। गन्धघ्राणि–यावद्भिर्गन्धपुद्गलैर्गन्धविषये घ्राणिस्तृप्तिरुपजायते तावती गन्धपुद्गलसंहतिर्गन्धघ्राणिरुच्यते तां निरन्तरं मुञ्चन्त्यः यावत्प्रासादीया इत्यादि प्राग्वत्॥

अथ तत्र तदानीं यौगलिकनराणां समीहितार्थसिद्धिहेतून् वृक्षविशेषान् कल्पवृक्षानाह

तीसे णं समाए भारहे वासे तत्थ तत्थ मत्तंगया णाम दुमगणा पण्णत्ता। जहा से चंदप्पभ जाव उच्छण्णपडिच्छण्णा चिट्ठंति। एवं जाव अणिअया णाम दुमगणा पण्णत्ता।

'तीसे णमि'त्यादि। तस्यां सुषमायां समायां भारते वर्षे तत्र तत्र प्रदेशे वहवो मत्ताङ्गका नाम द्रुमगणाः प्रज्ञप्ताः। तत्र मत्तं–मदस्तस्याङ्गं–कारणं मदिरारूपं ददतीति मत्ताङ्गदाः। यद्वा–मत्तस्य मदस्याङ्गं–

कारणं मदिरारूपं येषु ते मत्ताङ्गास्त एव मत्ताङ्गकाः । ते च किंविशिष्टा ? इत्याकाङ्क्षायां 'जहा से चंद-प्पभे'त्यादि जीवाभिगमोक्तमवतारणीयं, कियद् दूरम् ? इत्याह–'जाव'त्ति । यावद्वच्छन्नप्रतिच्छन्नास्तिष्ठन्तीति-पर्यन्तमिति । अनेनैव क्रमेण अन्ये नवापि कल्पवृक्षा वक्तव्या इत्याह–'एवं जावे'त्यादि । एवमिति प्रागुक्तमत्ताङ्गककल्पवृक्षप्ररूपणाप्रकारेण तावद्वक्तव्यं यावत् अनग्नका नाम द्रुमगणाः प्रज्ञप्ताः । एतेन दशानामपि कल्पद्रुमाणां विस्तरतो वर्णनं जीवाभिगमादिभ्योऽवसेयमिति दर्शितम् । सङ्क्षेपतस्त्वेवं–मत्तगया भिंगंगा तुडिअंगा दीवंगा जोइअंगा चित्तंगा चित्तरसा मणीअंगा गेहागारा अणिअया इति । व्याख्या–मत्ताङ्गका व्याख्याताः । 'भिंगंग'त्ति । भृतं–भरणं पूरणं तत्राङ्गानि–कारणानि भृताङ्गानि भोजनानि । नहि भरणक्रिया भरणीयं भाजनं विना भवतीति तत्सम्पादकत्वाद्वृक्षा अपि भृङ्गाः । प्राकृतत्वात् भिंगागा इत्युच्यन्ते । 'तुडिअ'त्ति । त्रुटितानि–तूर्याणि तत्कारणत्वात् त्रुटिताङ्गास्तूर्यदायिनः । दीपः–प्रकाशकं वस्तु तत्कारणत्वाद्दीपाङ्गाः । ज्योतिरग्निरतत्र च सुषमसुषमायामग्नेरभावात् ज्योतिरिव यद्वस्तुत्तोमप्रकाशकमिति भावस्तत्कारणत्वाज्ज्योतिरङ्गाः । चित्रस्य–अनेकविधविवक्षाप्राधान्यान्माल्यस्य कारणत्वात् चित्राङ्गाः । तथा चित्रा–विविधा मनोज्ञा रसा–मधुरादयो येभ्यस्ते चित्ररसाः–भोजनाङ्गा इति भावः । मणीनां मणिमयाऽऽभरणानां कारणत्वात् मण्यङ्गा आभरणहेतव । गेहं–गृहं तद्वदाकारो येषां ते गेहाकाराः । 'अणिअय'त्ति अनग्नका–वस्त्रदायिनः । तत्र मत्ताङ्गवनामानः कल्पवृक्षा विशिष्टवलवीर्यकान्तिहेतुविस्रसापरपर्यायत्तथाविधक्षेत्रादिसामग्रीविशेषजनितस्वभावपरिणतसरससुगन्धिस्वादुमनोहारिनोनाप्रकारविविधपरिपाकागतद्यानवद्यपरिपूर्णकोशकैः स्फुटित्वा स्फुटित्वा मद्यं मुञ्चद्भिः फलैरिवोपशोभमानास्तिष्ठन्ति । तेभ्यस्तेषां यौगलिकनराणां सुखपेयपरमातिशयसम्पन्नवर्णादिविशिष्टसुपक्वेक्षुक्षोदादिरसनिष्पन्नमद्यावाप्तिर्भवतीति । भृताङ्गाः पुनर्यथेह मणिकनकरजतादिमयविशिष्टभाजनानि दृश्यन्ते तथैव विस्रसापरिणतैः स्थालकच्चोलकादिभिरनेकैर्भाजनैः फलैरिव शोभमानाः प्रेक्ष्यन्ते तेभ्यस्तेषां मनोवाञ्छितभाजनानि जायन्ते । त्रुटिताङ्गास्तु ततविततघनशुषिरभेदभिन्नैर्बहुप्रकारैरातोद्यैः फलैरिवोपशोभमानास्तिष्ठन्ति । तत्र

ततं वीणादिकं ज्ञेयं विततं मुरजादिकम् । घनं तु कांस्यतालादि शुषिरं पटहादिकम् ॥१॥ इति । तेभ्यस्तेषां यथोक्तरीत्या सम्बद्धानि बहुप्रकाराण्यातोद्यानि भवन्तीति । दीपाङ्गाः पुनर्यथेह स्निग्धाः प्रज्वलन्त्यः कनकमणिमय्यो दीपिका उद्योतं कुर्वाणा दृश्यन्ते तद्वद्विस्रसापरिणतेन प्रकृष्टोद्योतेन सर्वमुद्योतयन्तस्तिष्ठन्ति । ज्योतिरङ्गास्तु मार्त्तण्डमण्डलमिव स्वतेजसा सर्वमवभासयन्तो वर्त्तन्ते । चित्राङ्गास्तु विचित्रसरससुरभिपञ्चवर्णमाल्यमालाभिराकीर्णास्तेषां नानावर्णसुरभिशतपत्रादिकुसुमदामदायिनो भवन्ति । चित्ररसास्तु इहत्यविशिष्टकलमशालिदालिपक्वान्नव्यञ्जनादिभ्योऽतीवापरिमितमाधुर्यस्वादुतादिगुणोपेतसकलेन्द्रियपुष्टिहेतुद्यखाद्यभोज्यवस्तुपरिपूर्णैः फलमध्यैर्विराजमानाः सन्तिष्ठन्ते तेभ्यस्तेषां समीहितभोजनं जायते इति । मण्यङ्गाः पुनर्विस्रसापरिणतातिविमलमहार्घ्यसुवर्नैकसारस्फारकटककेयूरनूपुरप्रभृतिभिः प्रभूतभूषणैर्विभूषिता भासन्ते तेभ्यस्तेषामशेषभूषणानि जायन्ते । गेहाकाराः पुनर्विस्रसापरिणामत एव प्राशुप्राकारोपगूढसुखारोहसोपानपङ्क्तिविचित्रशालारतिगृहगवाक्षगुप्तप्रकटानेकापवरककुट्टिमतलाद्यलङ्कृतविविधभवनसमनुगताः सन्तिष्ठन्ते । तेषु च तेषां यथावसरमवस्थितिरुपजायते । अनग्ना अपि विस्रसावशात एव स्फुरत्प्रचुरतेजोऽतिसूक्ष्मसुकुमालदेवदूष्यानुकारि-

प्रचुरविचित्रवस्त्रानुगताः प्राप्यन्ते तेभ्यस्तेषां मनोहारीणि निर्म्मलभांसि वासांसि समुपजायन्ते । इति सङ्क्षेपतो दशविधकल्पद्रुमस्वरूप दर्शितम् ॥

अथ सुषमसुषमाकालीनमनुष्यविषयकं प्रश्नमाह

तीसे णं भंते ! समाए भारहे वासे मणुआणं केरिसए आगारभावपडोआरे पण्णत्ते ? । गो० ! ते णं मणुआ सुपइट्ठिअकुम्मचारुचलणा जाव लक्खणवंजणगुणोववेआ सुजायसुविभत्तसंगयंगा पासाईआ जाव पडिरूवा । तीसे णं भंते ! समाए भारहे वासे मणुईणं केरिसए आगारभावपडोआरे पं० ? । गो० ! ताओ णं मणुईओ सुजायसव्वंगसुंदरीओ पहाणमहिलागुणेहिं जुत्ताओ अतिकंतविसप्पमाणमिउसुकुमालकुम्मसंठिअविसिट्ठचलणाओ पउममिउसुजायपीवरसुसंहयंगुलीओ अब्भुण्णयरइअतलिणतंवसुचिरुइरागिद्धणखाओ रोमरहिअवट्टलट्ठसंठिअअजहण्णपसत्थलक्खणअकोप्पजंघजुअला सुनिगिअसुगूढजाणु-मंसलसुवद्धसंधी कयलीखंभाइरेगसंठिअनिव्वणसुकुमालमउअमंसलअविरलसमसहिअसुजायवट्टपीवरानिरंतरोरू अट्ठावयवीचिपट्ठसंठिअपसत्थविच्छिण्णपिहुलसोणीओ वयणायामप्पमाणदुगुणिअविसालमंसलसुवद्धजहणवरधारिणीओ वज्जविराइअपसत्थलक्खणणिरोदराओ तिवलिअवलिवलिअतणुणमिअमज्झिआओ उज्जुअसमसंहिअजच्चतणुकसिणणिद्धआदेज्जलडहसुजायसुविभत्तकंतसोभंतरुचिलरमणिज्जरोमराई गंगावत्तगपयाहिणावत्ततरंगभंगरविकिरणतरुणवोहिअअकोसायंतपउमगंभीरविअडनाभा अणुब्भडपसत्थपीणकुच्छीओ सण्णयपासा संगयपासा सुजायपासा मिअमाइअपीणरइअपासा अकरंडुअकणगरुअगनिम्मलसुजायनिरुवहयगायलट्ठी कंचणकलसप्पमाणसमसंहिअलट्ठचूचुअआमेलगजमलजुअलवट्टिअअब्भुण्णयपीणरइअपीवरपओहराओ भुजंगअणुपुव्वतणुगगोपुच्छवट्टसमसंहिअणमिअआएज्जललिअवाहाओ तंवणहा मंसलग्गहत्था पीवरकोमलवरंगुलीआ णिद्धपाणिलेहा रविससिसंखचक्कसोवत्थिअविभत्तसुविरइअपाणिलेहा पीणुण्णयकक्खवक्खवत्थिप्पएसा पडिपुण्णगलकवोला चउरंगुलसुप्पमाणकंबुवरसरिसगीवा मंसलसंठिअपसत्थहणुआ दाडिमपुप्फप्पगासपीवरपलंवकुंचिअवराधरा सुंदरुत्तरोट्ठे दहिदगरयचंदकुंदवासंतिअमउलअच्छिद्दविमलदसणा रत्तुप्पलरत्तमउअसुकुमालतालुजीहा कणवीरमुकुलअकुडिलअब्भुग्गयउज्जुतुंगणासा सारयनवकमलकुमुदकुवलयविमलदलनिकरसरिसलक्खणपसत्थअजिम्हकंतनयणा पत्तलचवलायंततंवलोअणाओ आणामिअचावरुइलकिण्हब्भराइ-संगयसुजातभमुआ अल्लीणपमाणजुत्तसवणा सुसवणाओ पीणमट्ठगंडलेहा चउरंसपसत्थसमणिडाला कोमुईरयणीअरविमलपडिपुण्णसोमवयणा छत्तुण्णयउत्तमंगा अकविलसुसिणिद्धसुगंधदीहसिरया छत्त १ ज्झय २ जूव ३ थूभ ४ दामिणि ५ कमंडलु ६ कलस ७ वावि ८ सोत्थिअ ९ पडागा १० जव ११ मच्छ १२ कुम्म १३ रहवर १४ मकरज्झय १५ सुक १६ थाल १७ अंकुस १८ अट्ठावय १९ सुपइट्ठ २० मऊर २१ सिरिआभिसेअ २२ तोरण २३ मेइणी

२४ उदहि २५ वरभवण २६ गिरि २७ वरआयंस २८ सलीलगय २९ उसभ ३० सीह ३१ चामर ३२ उत्तमपसत्थबत्तीसलक्खणधरीओ हंससरिसगईओ कोइलमहुरगिरसुस्सराओ कंता सव्वस्स अणुमयाओ ववगयवलिपलिअ वंगदुव्वण्णवाहिदोहग्गसोअमुक्काओ उच्चत्तेण य णराण थोवूणमूसिआओ सहावसिंगारचारुवेसा संगयगयहसिअभणिअचिट्ठिअविलाससंलावनिउण- जुत्तोवयारकुसला सुंदरथणजहणवयणकरचरणणयणा लावण्णवण्णरूवजोव्वणविलासकलिआ नंदणवणविवरचारिणीउव्व अच्छराओ भरहवासमाणुसच्छराओ अच्छेरगपेच्छणिज्जाओ पासाई- आओ जाव पडिरूवाओ। ते णं मणुआ ओघस्सरा हंसस्सरा कोंचस्सरा णंदिस्सरा णंदीघोसा सीहस्सरा सीहघोसा सूसरा सूसरणिग्घोसा छायाउज्जोविअंगमंगा वज्जरिसहनाराय- संघयणा समचउरंससंठाणसंठिआ छविनिरातंका अणुलोमवाउवेगा कंकग्गहणी कवोअपरि- णामा सउणिपोसपिट्ठंतरोरूपरिणया छद्धणुसहस्समूसिआ। तेसि णं मणुआणं वेछप्पण्णा पिट्ठि- करंडगसया पण्णत्ता समणाउसो! पउमुप्पलगंधसरिसनीसाससुरभिवयणा। ते णं मणुआ पगई- भद्दया पगईउवसंता पगईपयणुकोहमाणमायालोभा मिउमद्दवसंपन्ना अल्लीणा भद्दया विणीया अप्पिच्छा असंनिहिअसंचया विडिमंतपरिवसणा जहिच्छिअकामकामिणो

'तीसे ण'मित्यादि। तस्यां भदन्त! समायां—सुषमसुषमारूपकालविशेषे भारते वर्षे मनुजानां कीदृशकः—कीदृश आकारभावप्रत्यवतारः—स्वरूपसम्भव प्रज्ञप्तः? भगवानाह—गौतम! 'ते णं मणुआ' इत्यादि। ते मनुजाः 'सुइपट्ठिअ'त्ति। सुष्ठु—शोभनं यथा भवत्येव प्रतिष्ठिताः कूर्म्मवदुन्नतत्वेन चारवो— मनोज्ञाश्चरणाः—पादा येषां ते सुप्रतिष्ठितकूर्म्मचारुचरणाः यावल्लक्षणव्यञ्जनगुणोपपेताः। तत्र लक्षणानि— स्वस्तिकादीनि व्यञ्जनानि—मषीतिलकादीनि गुणाः—क्षान्त्यादयस्तैरुपपेता-युक्ताः। तथा 'सुजाय'त्ति। सुजातानि—सुनिष्पन्नानि जन्मदोषरहितत्वात् सुविभक्तानि—अङ्गप्रत्यङ्गोपाङ्गानां यथोक्तवैभक्त्य- सद्भावात् सङ्गतान्युचितानि अङ्गानि-शरीराणि येषां ते तथा। प्रासादीयाः यावत्प्रतिरूपा इत्यादि पदचतुष्टयं प्राग्वत। यावल्लक्षणेत्यत्र यावच्छब्दात् यौगलिकमनुजवर्ण्णनं विस्तरतो जीवाभिगमोक्त- मवसातव्यम्। सङ्क्षेपत पुनरेवं-ते च मनुष्याः सुप्रतिष्ठितकूर्म्मचारुचरणाः सुकुमारश्लक्ष्णप्रविरल- रोमकुरुविन्दवृत्तजङ्घायुगलाः निगूढसुबद्धसन्धिजानुप्रदेशाः करिकरसमवृत्तोरवः कण्ठीरवतुल्यकटि- प्रदेशाः शक्रायुधसममध्यभागाः प्रदक्षिणावर्त्तनाभिमण्डलाः श्रीवत्सलाञ्छितविशालमांसलवक्षः- स्थलाः पुरपरिघानुकारिदीर्घबाहवः सुश्लिष्टमणिबन्धा रक्तोत्पलपत्रानुकारिशोणितपाणिपादतलाः चतु- रङ्गुलप्रमाणसमवृत्तकम्बुग्रीवाः शारदशशाङ्कसौम्यवदनाः छत्राकारशिरसः अस्फुटितस्निग्धकान्ति- श्लक्ष्णमूर्द्धजाः छत्रचामरादिरूपप्रशस्तोत्तमद्वात्रिंशल्लक्षणधरा इति। अथ मिथुनकनराणां स्त्रीविषयं प्रश्नमाह—'तीसे ण'मित्यादि। प्रश्नः सुगमः। भगवानाह—गौतम! 'ताओ णं'ति। ता मनुज्यः 'सुजाय'त्ति। सुजातानि—यथोक्तप्रमाणोपेततया शोभनजन्मानि यानि सर्व्वाङ्गानि-उदरप्रभृतीनि तैः सुन्दर्यः—सुन्दरा- काराः। 'पहाण'त्ति। प्रधाना—अतिशायिनो ये महिलागुणाः प्रियंवदत्वभर्तृचित्तानुवर्तकत्वप्रभृतयस्तै- र्युक्ताः। 'अतिकत'त्ति। अतिकान्तौ—अतिकमनीयौ। 'विसप्पमाण'त्ति। विशिष्टस्वप्रमाणौ अथवा

विसर्प्पन्तावपि-सञ्चरन्तावपि मृदूनां मध्ये सुकुमालौ कूर्म्मसंस्थितौ-उन्नतत्वेन कच्छपसंस्थानौ विशिष्टौ-मनोज्ञौ चलनौ-पादौ यासां तास्तथा । 'पउम'त्ति । पद्मवन्मृदवोऽकर्कशाः सुजाता-यथोक्तप्रमाणोपेताः पीवरा-उपचिताः सुसंहताः-सुष्ठु विरलाः अङ्गुल्यः-पादाङ्गुलयो यासां तास्तथा । 'अब्भुण्णय'त्ति । अभ्युन्नताः-उन्नता. रतिदा'-सुखदाः तलिनाः-प्रतलाः ताम्रा-आरक्ताः शुचय'-पवित्राः रुचिरा-मनोज्ञाः स्निग्धा'-स्निग्धच्छायाः नखा यासां तास्तथा । 'रोमे'त्यादि । रोमरहितं-निर्लोमं वृत्तं-वर्त्तुल लष्टसंस्थितं-मनोज्ञसंस्थानं क्रमेणोर्ध्वस्थूरं स्थूरतरमिति भावः अजघन्यप्रशस्तलक्षणं जघन्यपदरहित-शेषप्रशस्तलक्षणाङ्कितम् अकोप्यमद्वेष्य मनोज्ञं जङ्घायुगलं यासां तास्तथा । 'सुनिम्मिअ'त्ति । सुनिर्मितौ-सुन्यस्तौ सुनिगूढौ-अनुपलक्ष्यौ जानुनोरष्ठीवतोर्मांसलौ-मासोपचितौ सुवद्धौ-स्नायुभिरतीव वद्धौ सन्धी-सन्धाने यासां तास्तथा । 'कयली'त्यादि । कदलीस्तम्भाभ्यामतिरेकेण-अतिशायितया संस्थित-संस्थान ययोस्तौ कदलीस्तम्भातिरेकसंस्थितौ निर्व्रणौ-विस्फोटकादिकृतक्षतरहितौ सुकुमारावकर्कशौ मृदू-अकठिनौ कोमलौ-दृष्टिसुभगौ मासलौ-मांसोपचितौ अविरलौ-परस्परासन्नौ समौ-समप्रमाणौ सहितौ-संयुक्तौ लक्षणैरिति गम्यम् । अथवा सहिकौ-क्षमौ सुजातौ-जन्मदोषरहितौ वृत्तौ-वर्त्तुलौ पीवरौ-सोपचयौ निरन्तरौ-परस्परनिर्विशेषौ ऊरू-ऊपरितमजङ्घे यासां तास्तथा । 'अट्ठावय'त्ति । अष्टापदस्य-द्यूतविशेषस्य वीचय इव वीचयस्तरङ्गाकारा रेखास्तत्प्रधानपृष्ठमिव पृष्ठं-फलकम् अष्टापदवीचिफलकं तत्संस्थिता-तत्सस्थाना प्रशस्ता-प्रशस्तलक्षणोपेता विस्तीर्ण्णोर्ध्वाधः पृथुला-दक्षिणोत्तरतः श्रोणिः-कटेरग्रभागो यासां तास्तथा । 'वयणायामे'त्यादि । वदनस्य-मुखस्याऽऽयामप्रमाण द्वादशाङ्गुलानि ततो द्विगुणित-द्विगुणं चतुर्वि शत्यङ्गुलं विशाल-विस्तीर्णं मांसलमुपचितं सुवद्धमतीव बद्धावयवं जघनवरं-प्रधानकटिपूर्व्वभाग धारयन्ति यास्ताः तथा । 'वरे ति विशेषणस्य परनिपातः प्राकृतत्वात् । वज्ज'त्ति । वज्रवद्विराजिता क्षाममध्यभागत्वेन वज्रविराजिताः प्रशस्तलक्षणाश्च निरुदराश्च-तुच्छोदराः यास्तास्तथा । 'तिवलिअ'त्ति । तिसृभिर्वलिभिर्वलितः सञ्जातवलिकस्तनुः-कृशो नमितो-नतो मध्यो-मध्यभागो यासां ताः तथा । 'उज्जुअ त्ति । ऋजुका-अवक्रा समा न क्वाप्युद्दन्तुरा संहिता-सन्तता न त्वपान्तरालव्यवच्छिन्ना जात्या-प्रधाना तन्वी न तु स्थूरा कृष्णा-न तु मर्कटवर्णा स्निग्धा-स्निग्धच्छाया आदेया-द्रष्टुं योग्या सुभगेत्यर्थः । एतदेव समर्थयति-लटहा-सविलासा सुजाता-जन्मदोषरहिता सुविभक्ता-सुविभागा कान्ता-कमनीया अत एव शोभमाना-देदीप्यमाना रुचिरा-रुचिविराजिता रमणीया-द्रष्टृमनोरमण-शीला रोमराजिर्यासां तास्तथा । 'गंगावत्त'त्यादि । गङ्गावर्त्तक इव प्रदक्षिणावर्त्ता तरङ्गैरिव तरङ्गैस्ति-सृभिर्वलिभिर्भङ्गा-भङ्गुरा रविकिरणैः सूर्यकिरणैस्तरुणमभिनवं तत्प्रथमतया तत्कालमित्यर्थः । यद्बोधितम्-उन्निद्रीकृतमत एव अकोशायमानं-विमुकुलीभवद्यत्पद्मं तद्वद् गम्भीरा विकटा च नाभिर्यासा तास्तथा । अत्समासान्तेन 'नाभा'इति सिद्धिः । 'अणुब्भड'त्ति । अनुद्भटा-अनुल्बणा प्रशस्ता-प्रशस्त-लक्षणोपेता पीना-उपचिता कुक्षिर्यासां तास्तथा । 'सण्णयपासा' इति । सन्नताधोऽधः क्रमेण नतौ पार्श्वौ यासां तास्तथा । 'संगय'त्ति । सङ्गतौ-देहप्रमाणोचितौ पार्श्वौ यासां तास्तथा । सुजात पार्श्वौ सुनिष्पन्नपार्श्वौ इत्यर्थः । 'मिअ'त्ति मितं-परिमितं यथा भवति देहानुसारेणेत्यर्थः । आयतौ-दीर्घौ पीनावुपचितौ रचितौ-स्वनामकर्म्मोदयनिर्वर्त्तितौ रतिदौ-सुखदौ वा पार्श्वौ यासां तास्तथा । 'अकरंडुअ'त्ति । अकरण्डुका-अनुपलक्ष्यपृष्ठास्थिका कनकरुचकवत्-काञ्चनरुचिवन्निर्म्मला सुजाता-बीजादारभ्य जन्म-

दोषरहिता निरुपहता-ज्वरादिदेशाद्युपद्रवरहिता च गात्रयष्टिर्देहलतिका यासां तास्तथा। 'कंचणकलस'त्ति। काञ्चनकलशयोरिव प्रमाणं ययोस्तौ समौ-तुल्यौ परस्परमन्यूनाधिकौ संहितौ-अपान्तरालविकलौ लष्टचूचुकामेलकौ-शोभनस्तनमुखशेखरौ यमलौ-समश्रेणीकौ युगलौ-युगलरूपौ वर्त्तिताविव वर्त्तितौ कठिनाविति भावः। अभ्युन्नतौ-पत्युरभिमुखोन्नतौ पीनौ-पुष्टौ रचितौ-स्वकर्म्माभिनिर्वर्त्तितौ पीवरौ-सर्व्वात्मना विशिष्टौ पयोधरौ यासां तास्तथा। 'भुजग'त्ति। भुजङ्गवन्नागवदानुपूर्व्या-क्रमेण तनुकौ अत एव गोपुच्छवद् वृत्तौ समौ-समप्रमाणौ संहितौ-मध्यकायापेक्षया अविरलौ नतौ स्कन्धदेशस्य नतत्वात् आदेयौ-सुभगतयोपादेयौ ललितौ-सविलासचेष्टाकलितौ बाहू-भुजौ यासां तास्तथा। 'तंवण-ह'त्ति। ताम्रा-ईषदारक्ता नखा यासां तास्तथा। 'मासल'त्ति। मांसलावग्रहस्तौ-बाह्वग्रभागवर्त्तिनौ हस्तौ यासां तास्तथा। 'पीवर'त्ति। पीवरा-उपचिताः कोमलाः-सुकुमालाः वराः-प्रमाणलक्षणोपेततया प्रधाना अङ्गुलयो यासां तास्तथा। 'णिद्धपाणि'त्ति। स्निग्धाः पाणौ रेखा यासां तास्तथा। रवि-शशिशङ्खचक्रसौवस्तिकाकारा विभक्ता-विभागवत्यः सुविरचिताः-सुष्ठु कृता पाणौ रेखा यासां तास्तथा। 'पीणुण्णय'त्ति। पीना-उन्नताः कक्षा-भुजामूलं वक्षो-हृदयं बस्तिप्रदेशश्च-गुह्यदेशो यासां तास्तथा। 'पडिपुण्ण'त्ति। प्रतिपूर्णौ गल्लः कपोलौ च यासां तास्तथा। 'चउरंगुल'त्ति। चतुरङ्गुलप्रमितं शोभनं प्रमाणं यस्यां सा चतुरङ्गुलप्रमाणा कम्बुवरसदृशी-उन्नततया वलित्रययोगेन च प्रधानशङ्खसन्निभा ग्रीवा यासां तास्तथा। 'मसल'त्ति। मांसलं-मांसोपचितं सस्थितं-विशिष्टसंस्थानं प्रशस्तं-प्रशस्तलक्षणो-पेतं हनुकं-चिबुकं यासां तास्तथा। 'दाडिम'त्ति। दाडिमपुष्पप्रकाशो रक्त इत्यर्थः पीवरः-उपचितः प्रलम्बः-ईषल्लम्ब उपरितनौष्ठापेक्षयेति गम्यम्। कुञ्चित-आकुञ्चितो वरः-प्रधानोऽधरोऽधस्तनदशनच्छदो यासां तास्तथा। 'सुंदरुत्तरोट्ठ'त्ति। सुन्दरः-सुन्दराकृतिः उत्तर-उपरितन ओष्ठो यासां तास्तथा। 'दहिद-ग'त्ति। दधि प्रतीत दकरज-उदककणाः चन्द्र-इन्दुः कुन्द -कुन्दकुसुमं वासन्तिका-वनस्पतिविशेषस्तस्या मुकुल कलिका तद्वदच्छिद्रा-अविरला विमला-स्वाभाविकाऽऽगन्तुकमलरहिता दशना-दन्ता यासां तास्तथा। 'रत्तुप्पल'त्ति। रक्तोत्पलवद्रक्ते मृदू-अकठिने सुकुमारे-अकर्क्कशे तालुजिह्वे च यासां तास्तथा। 'कणवीर'त्ति। कणवीरमुकुलमिव अकुटिला-अवक्रा अभ्युद्गता-अग्रे उच्चा ऋजुः-सरला सती तुङ्गा चोच्चा नासा यासां तास्तथा। 'सारय'त्ति। शरदि भवं शारद-शरन्मासभावि यन्नवं-प्रत्यग्रं कमलं-चादित्यबोध्यं कुमुदं च-चन्द्रविकास्य कुवलयं च-नीलोत्पलम् एषां यो विमलो-निर्म्मलो दलनिकर-स्तत्सदृशे लक्षणप्रशस्ते अजिह्मे-अमन्दे कान्ते-कमनीये नयने यासां तास्तथा। एतदेव किञ्चिद्विशेषेणाह-'पत्तल'त्ति। पत्तले-पक्ष्मवती चपलायमाने ताम्रे क्वचित्प्रदेशे ईषद्रक्ते लोचने यासां तास्तथा। 'आणामिअ'त्ति। आ-ईषन्नामित यच्चाप तद्वद्वक्रेतिगम्य कृष्णाभ्रराजिरिव रुचिरा सङ्गता सुजाता भ्रूर्यासां तास्तथा। 'अल्लीण'त्ति। आलिनौ न तु टप्परौ प्रमाणयुक्तौ-प्रमाणोपेतौ श्रवणौ-कर्णौ यासां तास्तथा अत एव सुश्रवणाः। 'पीण'त्ति। पीना मसृणा गण्डरेखा-कपोलपाली यासां तास्तथा। 'चउरंस'त्ति। चतुरस्र-चतुःकोणं प्रशस्तं सममूर्ध्वाधस्तया दक्षिणोत्तरतया च तुल्यप्रमाण ललाटं यासां तास्तथा। 'कोमुई'त्ति कौमुदी-कार्त्तिकी पूर्णिमा तस्यां रजनीकर इव-चन्द्र इव विमलं प्रतिपूर्णं सौम्यं वदनं यासां तास्तथा। 'छत्तुण्णय'त्ति। छत्रवन्मध्ये उन्नतमुत्तमाङ्गं-शिरो यासां तास्तथा। 'अकविल'त्ति। अकपिलाः-केवलकृष्णवर्णाः सुस्निग्धाः [सुगन्धाः] दीर्घाश्च शिरोजाः-केशा यासां तास्तथा।

'छत्तज्झय'त्ति । छत्रं १ ध्वजः २ यूपः ३ स्तूपः ४ एतान्यन्यान्यपि च प्रायः प्रसिद्धानि' 'दामिणि'त्ति रूढिगम्य ५ कमण्डलुः ६ कलशो ७ वापी ८ स्वस्तिकः ९ पताका १० यवो ११ मत्स्यः १२ कूर्म्मः १३ रथवरः १४ मकरध्वज-कामदेवः १५ शुकः १६ स्थाल १७ अङ्कुशः १८ अष्टापदं-द्युतफलकं १९ सुप्रतिष्ठकं-स्थापनकं २० मयूर' २१ श्रियोऽभिषेकः २२ तोरणं २३ मेदिनी २४ उदधिः २५ वरभवनं २६ गिरिः २७ वरादर्शः २८ सलीलो गजः २९ वृषभः ३० सिंहः ३१ चामरं ३२ ततो द्वन्द्व' । एतान्युत्तमानि प्रशस्तानि सामुद्रिकशास्त्रेषु प्रशंसास्पदानि द्वात्रिंशल्लक्षणानि धरन्तीति । तथा 'हंस'त्ति । हंसस्य सदृशी गतिर्यासा ता. । 'कोइल'त्ति । कोकिलाया इव मधुरा गीस्तया सुस्वराः कान्ताः-कमनीयाः सर्व्वस्य-तत्प्रत्यासन्नवर्तिनो लोकस्यानुमताः-सम्मता न मनागपि द्वेष्या इति भावः । 'ववगय'त्ति । व्यपगतवलिपलिताः । 'वंग'त्ति व्यङ्ग दुर्व्वर्ण्णव्याधिदौर्भाग्यशोकमुक्ताः । तत्र व्यङ्गो-न्यूनाङ्गता । शेषं सुगमम् । ततः कर्म्मधारयः । 'उच्चत्तेण य'त्ति । उच्चत्वेन च नराणां-पुरुषाणां स्तोकोनमुच्छ्रिताः-किञ्चिन्न्यूनत्रिगव्यूतोच्छ्रिता इत्यर्थ' । 'सहाव'त्ति । स्वभावत एव शृङ्गाररूपश्चारुः-प्रधानो वेषो यासां तास्तथा । 'संगय'त्ति सङ्गतं-सुश्लिष्टं यद्गत-गमनं हंसीगमनवत्, हसितं-कपोलविकोशि प्रेमदर्शितं च भणितं-भणनं-गम्भीरं मन्मथोद्दीपि च. चेष्टितं-चेष्टनं सकाममङ्गप्रत्यङ्गोपदर्शनादि विलासो-नेत्रजो विकार', संलापः-पत्या सह स्वहृदयप्रत्यर्प्पणक्षम परस्परसम्भाषण निपुणो-नैपुणोपेतो युक्तश्च य उपचारः तत्र कुशला' । एवविधविशेषणोपेताश्च स्वस्वपतिं प्रति द्रष्टव्याः न पुनः परपुरुष प्रत्यपि । तथा क्षेत्रस्वाभाव्यात् प्रतनुकामतया परपुरुषं प्रति तासामभिलाषाऽसम्भवात । पूर्व्वोक्तमेवार्थं सम्पिण्ड्य प्राह-'सुदरे'त्यादि । सुन्दराणि स्तनजघनवदनकरचरणनयनानि यासा तास्तथा । 'लावण्ण'त्ति । लावण्येन स्पृहणीयतया वर्ण्णेन सुवर्णचम्पकसवर्णेन, रूपेणाकारविशेषेण, यौवनेन प्रतीतेन, विलासेन-नेत्रजविकारेण कलिताः । 'नदण'त्ति । नन्दनवनविवरचारिण्य इवाप्सरसो-देव्यः । तत्र नन्दनवनं मेरोर्द्वितीयवनं 'भरह'त्ति भरतक्षेत्रसम्बन्धिन्यो मानुषरूपा अप्सरसो यास्तास्तथा । 'अच्छेरग'त्ति । आश्चर्यकमिदमित्येवरूपेण प्रेक्षणीयाः-द्रष्टुं योग्याः पुण्यवतामेव दृग्पथगोचरार्हा इत्यर्थः । अत एव प्रासादीया यावत्प्रतिरूपा इति प्राग्वत् । अथ सामान्यतस्तत्रत्यमनुष्याणां स्वरूपमाह-'ते णं मणुआ' इत्यादि । ते सुषमासुषमाकालभाविनो मनुष्याः ओघः-प्रवाही स्वरो येषा ते ओघस्वराः । हंसस्येव मधुरस्वरो येषां ते हंसस्वराः । एव क्रौञ्चस्वराः नन्दी-द्वादशतूर्यनिर्घोषस्तद्वत्स्वरो येषां ते नन्दीस्वराः । नन्द्या इव घोषोऽनुनादो येषां ते नन्दीघोषाः । तत्र घण्टा शब्दानुप्रवृत्त रणितमिव यः शब्दः स घोषः उच्यते । एवं सिंहस्वराः सिंहघोषाः सुस्वराः सुस्वरनिर्घोषा अपि वाच्याः । 'छाय'त्ति । छायया-दीप्त्या उद्योतितं-प्रकाशितम् 'अंगमग' अङ्ग-प्रत्यङ्गं येषां ते तथा । मकारः प्राकृतत्वात् । वज्रर्षभनाराचसंहननाः समचतुरस्रसंस्थानसंस्थिताः । 'छवि'त्ति छविमन्त उदात्तवर्ण्णेन सुकुमारया च त्वचा युक्ता इत्यर्थः । निरातङ्काः-नीरोगाः 'अनुलोम'त्ति अनुलोमोऽनुकूलो वायुवेगः-शरीरान्तर्वर्त्तिवातजवो येषां तेऽनुलोमवायुवेगाः वायुगुल्मरहितोदरमध्यप्रदेशा इत्यर्थ' । यदुक्त जीवाभिगमवृत्तौ-उदरमध्यप्रदेशे वायुगुल्मो येषां भवति तेषामनुलोमो वायुवेगो न भवति । तदभावाच्च तेषा मिथुनकनराणामनुलोमो भवति वायुवेग' इति । कंकग्गहणी ति कङ्क -पक्षिविशेषस्तस्येव ग्रहणिर्गुदाशयो नीरोगवर्च्चस्कतया येषां ते कङ्कग्रहणयः । 'कवोअ ति । कपोतस्य-पक्षिविशेषस्य परिणाम-आहारपाको येषा ते तथा । कपोतस्य जाठराग्निः पाषाणलवानपि जरयतीति श्रुति ।

एवं तेषामत्यन्तर्गलाहारग्रहणेऽपि न जातुचिदपि अजीर्णदोषः प्रादुर्भवति । 'सउणीपोस'त्ति । शकुनेरिव पक्षिण इव पुरीषोत्सर्गे निर्लेपतया 'पोस'त्ति पोसोऽपानदेशः 'पुसः उत्सर्गे' पुसन्ति-पुरीषं व्युत्सृजन्तीति व्युत्पत्तेः पुरीषोत्सर्गे निर्लेपापाना, इत्यर्थः । तथा लघुपरिणामतया च पृष्ठं च प्रतीतं अन्तरे च पृष्ठोदरयोरन्तराले पार्श्वावित्यर्थः । ऊरू चेति द्वन्द्वस्ते परिणता येषां ते शकुनिपोसपृष्ठा-न्तरोरुपरिणताः । क्तान्तस्य परनिपातः प्राकृतत्वात् । 'छद्धणु त्ति । षट्धनुःसहस्रोच्छ्रिताः-त्रिगव्यूत-प्रमाणोच्छ्रया इत्यर्थः । अथ पुनरपि सामान्यतस्तेषां स्वरूपमाह-'तेसि णमि'त्यादि । तेषां सुषमासुषमा-रकमनुष्याणां द्वे पृष्ठकरण्डकशते षट्पञ्चाशदधिके प्रज्ञप्ते 'समणाउसो'त्ति हे श्रमण ! हे आयुष्मन् ! इति शिष्यामन्त्रणं । किं लक्षणास्ते इत्याह-'पउमुप्पल'त्ति । पद्मोत्पले प्रतीते, यद्वा-पद्मं-पद्मकाभिधानगन्ध-द्रव्यम् उत्पल चोत्पलकुष्टं तयोर्गन्धेन-सौरभ्येण सदृशः-समो यो निःश्वासस्तेन सुरभि-सुगन्धि वदनं येषां ते तथा । अथ पुनस्ते किंभूता ? इत्याह-'ते णं मणुआ' इत्यादि । ते सुषमासुषमाकालभाविनो मनुजाः प्रकृत्या-स्वभावेन भद्रकाः-परानुपतापहेतुकायवाङ्मनश्चेष्टा तथा 'पगईउवसंत'त्ति । प्रकृत्या-स्वभावेन न तु परोपदेशतः परेभ्यो भयतो वा उपशान्ताः । तथा प्रकृत्या प्रतनवोऽतिमन्दीभूताः क्रोधमानमायालोभा येषां ते तथा । अत एव मृदु-मनोज्ञं परिणामसुखावहं यन्मार्दवं तेन सम्पन्नाः मृदुमार्दवसम्पन्नाः न पुनः कपटमार्दवोपेताः । 'अल्लीणा'इति । आसमन्तात्सर्वासु क्रियासु लीना-गुप्ता आलीना -नोल्वणचेष्टाकारिण इत्यर्थः । भद्रकाः-सकलतत्क्षेत्रोचितकल्याणभागिनः विनीताः-वृहत्पुरुषविनयकरणशीलाः अल्पेच्छा मणिकनकादिविषयप्रतिबन्धरहिताः । अत एव असन्निधि-सञ्चयाः-न विद्यते सन्निधिरूपः सञ्चयो येषां ते तथा 'विडिमंतरे'त्यादि । विडिमन्तरेषु-शाखान्तरेषु प्रासादाद्याकृतिषु परिवसनमाकालमावासो येषां ते तथा 'जहिच्छिअ'त्ति । यथेप्सितान् मनोवा-ञ्छितान् शब्दादीन् कामयन्ते इत्येवं शीला ये ते तथा

पुढविपुप्फफलाहारा णं ते मणुआ प० समणाउसो ! तीसे णं भंते ! पुढवीए केरिसए आसाए पण्णत्ते ? । गो० ! से जहा णाम ए गुले इ वा खंडे इ वा सक्करा इ वा मच्छंडिआ इ वा पप्पडमो-अए इ वा भिसे इ वा पुप्फुत्तरा इ वा पउमुत्तरा इ वा विजयाति वा महाविजयाति वा आकासिआ ति वा आदंसिआ इ वा आगासफलोवमा इ वा उवमा ति वा अणोवमा ति वा भवे एआरूवे ? णो ति० सा णं पुढवी इत्तो इट्ठतरीआ चेव जाव मणामतरीआ चेव अस्सादेणं पण्णत्ते । तेसि णं भंते ! पुप्फफलाणं केरिसए आसाए पण्णत्ते ? गो० ! से जहा णाम ए रण्णो चाउरंतचक्कवट्टिस्स कल्लाणए भोअणजाए सयसहस्सनिप्फन्ने वण्णेणुववेए जाव फासेणुववेए आसायणिज्जे विसा-यणिज्जे दीवणिज्जे दप्पणिज्जे मयणिज्जे विंहणिज्जे सव्विंदिअगायपल्हायणिज्जे भवे एआरुवे ? णो तिणट्ठे० तेसि णं पुप्फफलाणं एत्तो इट्ठतराए चेव जाव आसाए पण्णत्ते ।

'पुढवि'त्ति । पृथिवी-भूमिः पुष्पफलानि च कल्पद्रुमाणाहारो येषां ते तथा । णमित्यलंकारे । एवंविधास्ते मनुजाः प्रज्ञप्ताः हे श्रमण ! हे आयुष्मन् ! । अथाहारतयोक्तानां पृथिव्यादीनामास्वादं प्रश्नयति 'तीसे णं भंते !' इत्यादि । तस्या भदन्त ! पृथिव्याः कीदृश आस्वादः प्रज्ञप्तः ? भगवानाह-गौतम !

'से जहा णाम ए' इत्यादि तत्-लोकप्रसिद्धं। यथा नाम ए इति वाक्यालङ्कारे। 'गुलेइ व'त्ति गुड इति वा। इतिशब्द उपमाभूतवस्तुनामपरिसमाप्तिद्योतकः। वाशब्दो विकल्पार्थः। एवं सर्व्वत्र। खण्ड इति वा, शर्करेति वा इय च काशादिप्रभवा द्रष्टव्या। मत्स्यण्डिका इति वा मत्स्यण्डी खण्डविकृतिः, पर्पटमोदक इति वा, विशकंद इति वा पुष्पोत्तरा इति वा पद्मोत्तरा इति वा विजया इति वा महाविजया इति वा आकाशिका इति वा आदर्शिका इति वा आकाशफलोपमा इति वा उपमा इति वा अनुपमा इति वा। पार्पटमोदकादयः खाद्यविशेषा लोकतः प्रत्येतव्याः। अथैवं भगवतोक्ते गुडाद्युपमानमुपमेयपृथिव्यपेक्षया-न्यूनमेव स्यात्तथा च तदास्वादनं पुण्योत्कर्षवतां यौगलिकनराणामनुचितमित्याशङ्कायां गौतम आह 'भवे एआरूवे ?'त्ति। अत्रेनकारोऽध्याहार्यः। भगवन्! भवेदेतद्रूप एव पृथिव्या आस्वादः? भगवानाह-गौतम! 'णो'ति नो'तिणट्ठे समट्ठे'त्ति नायमर्थः समर्थः किन्तु 'सा णं पुढवी'त्ति सा। णमित्यलङ्कारे। पृथिवी इतो गुडखण्डशर्करादेरिष्टतरा चेव यावत् 'मनोमतरा चेव' मनःप्रियेत्यर्थः। यावत्करणात् कान्ततरा चैव प्रियतरा चेव मनोज्ञतरा चेवेति सङ्ग्रहः। एवंविधास्वादेन प्रज्ञप्ता। अथ पुष्पफलादीनामास्वादं पृच्छन्नाह-'तेसि णं भंते!' इत्यादि। तेषां कल्पवृक्षसम्बन्धिनां पुष्पफलानां कीदृश आस्वादः प्रज्ञप्तः?। भगवानाह-गौतम! 'से जहे'त्यादि। तद्यथा नाम। 'ए'त्ति प्राग्वत्। 'रण्णे'त्ति राज्ञः। स च राजा लोके कतिपयदेशाधिपतिरपि स्यादत आह-'चाउरंत'त्ति चातुरन्तचक्रवर्त्तिनः। चतुर्षु अन्तेषु त्रिसमुद्रहिमवत्परिच्छिन्नेषु चक्रेण वर्त्तितु शील यस्यासौ चातुरन्तचक्रवर्त्ती तस्य कल्याणमेकान्तसुखावहं भोजनजातं भोजनमेव। तच्च किंलक्षणमित्याह-शतसहस्रनिष्पन्नं-लक्षनिष्पन्नं वर्णेनातिशायिनेति गम्यम्। उपपेत-संयुक्तं यावदतिशायिना गन्धेनोपपेतं, यावत्करणादतिशायिभ्यां रसस्पर्शाभ्यामुपपेतम्। आस्वादनीय सामान्येन, विस्वादनीयं विशेषतः, अथ रसप्रकर्षमधिकृत्य विशेषणान्याह-'दीवणिज्ज'त्ति दीपयति जाठराग्निमिति दीपनीयम्-अग्निवृद्धिकरं। बाहुलकात्कर्त्तर्यनीयप्रत्ययः। एवं दर्पणीयमुत्साहवृद्धिहेतुत्वात्, मदनीयं-मन्मथजननात्, बृंहणीयं-धातूपचयकारित्वात्, सर्व्वाणीन्द्रियाणि गात्रं च प्रह्लादयतीति तथा विशदतया तत्प्रह्लादनहेतुत्वात्। अथैवं भगवतोक्ते प्राग्वत्। गौतम आह-भगवन्! भवेदेतद्रूप एव पुष्पफलानामास्वादः? भगवानाह-गौतम! 'णो इणट्ठे'त्ति। प्राग्वन्नायमर्थः समर्थः। तेषां पुष्पफलानामितश्चक्रवर्त्तिभोजनादिष्टतर एव यावदास्वादः प्रज्ञप्तः। यावत्करणात् कान्ततर इत्यादि सङ्ग्रहः।

अथ तेषां च वासस्थानं प्रश्नयति

ते णं भंते! तमाहारमाहारेत्ता कहिं वसहिं उविंति?। गो०! रुक्खगेहालया णं ते मणुआ पण्णत्ता समणाउसो!। तेसि णं भंते! रुक्खाणं केरिसए आगारभावपडोआरे पण्णत्ते?। गो०! कूडागारसंठिआ पेच्छाच्छत्तज्झयथूभतोरणगोपुरवेइआचोप्पालगअट्टालयपासायहम्मिअगवक्खवालग्गपोइआवलभीघरसंठिआ। अण्णे एत्थ बहवे वरभवणविसिट्ठसंठाणसंठिआ दुमगणा सुहसीअलच्छाया पण्णत्ता समणाउसो!। अत्थि णं भंते! तीसे समाए भरहे वासे गेहाति वा गेहायतणाति वा? णो इणट्ठे समट्ठे। रुक्खगेहालया णं ते मणुआ पं० समणाउसो!। अत्थि णं भंते! तीसे समाए भरहे वासे णगराति वा जाव सन्निवेसाति वा? णो इणट्ठे समट्ठे। जं

नेच्छिअक्कामगामिणो णं ते मणुआ पं० समणाउसो ! । अत्थि णं भंते ! असीति वा मसीति वा किसीति वा पणिएति वा वाणिज्जेति वा ? णो तिणट्ठे समट्ठे । ववगयअसिमसिकिसिपणिवाणिज्जा णं ते मणुआ पं० समणाउसो ! । अत्थि णं भंते ! हिरण्णे इ वा सुवण्णे इ वा कंसे इ वा दूसे इ वा मणिमोत्तिअसंखसिलप्पवालरत्तरयणसंतसारसावइज्जे इ वा ? हंता अत्थि । णो चेव णं तेसिं मणुआणं परिभोगत्ताए हव्वमागच्छति । अत्थि णं भंते ! भारहे रायाति वा जुवरायाति वा ईसरतलवरमाडंबिअकोडुंबिअइब्भसेट्ठिसेणावइसत्थवाहाति वा ? । णो इणट्ठे समट्ठे । ववगयइड्ढिसक्कारा णं ते मणुआ पण्णत्ता समणाउसो ! । अत्थि णं भंते ! भारहे वासे दासेति वा पेसेति वा सिसएति वा भाइल्लेति वा कम्मारएति वा ? णो इणट्ठे समट्ठे । ववगयआभिओगा णं ते मणुआ पण्णत्ता समणाउसो ! । अत्थि ण भंते ! तीसे समाए भारहे वासे माताति वा पिताति वा भाइभगिणीभज्जापुत्तधूआसुण्हाति वा ? हंता अत्थि । णो चेव णं तिव्वे पेम्मबंधणे समुप्पज्जति । अत्थि णं भंते ! भारहे वासे अरीति वा वेरिएति वा घायएति वा वहएति वा पडिणीएति वा पच्चामित्तेति वा ? णो इणट्ठे समट्ठे । ववगयवेराणुसया णं ते मणुआ पं० समणाउसो ! । अत्थि णं मित्ताति वा वयंसाति वा णायएति वा घाडिएति वा सहाति वा सुहीति वा संगइएति वा ? हंता अत्थि । णो चेव णं तेसिं मणुआणं तिव्वरागबंधणे समुप्पज्जति । अत्थि णं भारहे वासे आवाहाति वा वीवाहाति वा जण्णसड्ढेति वा थालीपागाति वा मितपिंडनिवेदणाति वा ? णो तिणट्ठे० । ववगयआवाहवीवाहजण्णसड्ढथालीपागमितपिंडनिवेदणा णं ते मणुआ पं० समणाउसो ! । अत्थि णं भारहे इंदमहाति वा खंदणागजक्खभूअअगडतलागदहणदिरुक्खपव्वयथूभचेइअमहाति वा ? णो ति० । ववगयमहिमा णं ते मणुआ पण्णत्ता । अत्थि णं भारहे णडपेच्छाति वा णट्टजल्लमल्लमुट्ठिअवेलंबगकहगपवगलासगपेच्छाति वा ? णो तिणट्ठे समट्ठे । ववगयकोउहल्ला णं ते मणुआ पण्णत्ता समणाउसो ! । अत्थि णं भारहे सगडा इ वा रहा इ वा जाणजुग्गा इ वा गिल्लिथिल्लिसीअसंदमाणिआति वा ? णो तिणट्ठे समट्ठे । पायचारविहारा णं ते मणुआ पण्णत्ता समणाउसो ! । अत्थि णं भंते ! भारहे वासे गाविति वा महिसीति वा अजाति वा एलगाति वा ? हंता अत्थि । णो चेव ण तेसिं मणुआणं परिभोगत्ताए हव्वमागच्छति । अत्थि णं भंते ! भारहे वासे आसाति वा हत्थीउट्टगोणगवयअयएलगपसयमिअवराहरुरुसरभचमरसंवरकुरंगगोकण्णमादिआ ? हंता अत्थि । नो चेव णं तेसिं मणुआणं परिभोगत्ताए हव्वमागच्छंति । अत्थि णं भंते ! भारहे वासे सीहाति वा वग्घाती वा विगदीविगअच्छतरच्छसिआलाति वा विरालसुणककोकंतिअकोलसुणगाति वा ? हंता अत्थि । नो चेव णं तेसिं मणुआणं आबाहं वा पबाहं वा छविच्छेअं वा उप्पाएंति । पगइभद्दया णं ते सावयगणा पण्णत्ता समणाउसो ! । अत्थि णं भंते ! भारहे वासे सालिति वा वीहिगोधूमजवजवजवाति वा कलममसूरमुग्गमासतिलकुलत्थनिप्फावचआलिसंदगअयसिकुसुंभगकोद्दवकंगुरालगसणसरिसव-

मूलगवीआति वा ? हंता अत्थि । णो चेव णं तेसिं मणुआणं परिभोगत्ताए हव्वमागच्छंति । अत्थि णं भंते ! भारहे वासे गत्ताति वा दरीओवातपवातविसमविज्जलाति वा ? णो इणट्ठे समट्ठे । भारहे णं वासे बहुसमरमणिज्जे भूमिभागे पण्णत्ते । से जहा णाम ए आलिंगपुक्खरेति वा । अत्थि णं भंते ! भारहे वासे खाणूति वा कंटगतणकयवराति वा पत्तकयवराति वा ? णो इणट्ठे समट्ठे । ववगयखाणुकंटगतणकयवरपत्तकयवरा णं सा समा पण्णत्ता समणाउसो ! । अत्थि णं भंते ! भारहे वासे दंसाति वा मसगाति वा जूआति वा लिक्खाति वा ढंकुणाति वा पिसुआति वा ? णो इणट्ठे समट्ठे । ववगयदंसमसगजूअलिक्खढंकुणपिसुअउवद्दवबाहाविरहिआ णं सा समा पण्णत्ता । अत्थि णं भंते ! भारहे वासे अहीति वा अयगराति वा ? हंता अत्थि । नो चेव णं तेसिं मणुआणं आबाहं वा विबाहं वा छविच्छेअं वा उप्पाएंति । पगइभद्दया णं ते वालगगणा पण्णत्ता समणाउसो ! । अत्थि णं भंते ! भारहे वासे डिंबाति वा डमराति वा कलहबोलखारवइरमहाजुद्धाति वा महासंगामाति वा महासत्थपडणाति वा महापुरिसपडणाति वा महारुहिरपडणाति वा ? णो इणट्ठे समट्ठे । ववगयवेराणुबंधा णं ते मणुआ पण्णत्ता । अत्थि णं भंते ! भारहे वासे दुब्भूअरोगाति वा कुलरोगाति वा मंडलरोगाति वा गामरोगाति वा पोट्टसीसवेअणाति वा कण्णवेअणाति वा ? अत्थि णं भदंत ! वेअणाति वा कासाति वा सासाति वा सोसाति वा जराति वा दाहाति वा अरिसाति वा अजीरकाति वा तउअराति वा पंडुरोगाति वा भगंदराति वा एगाहिआति वा बेआहिआति वा तिआहिआति चउत्थाहिआति वा धणुग्गहाति वा खंदग्गहाति वा कुमारग्गहाति वा जक्खग्गहाति वा भूअग्गहाति वा मत्थगसूलाति वा हिअयपोट्टकुच्छीजोणिअसूलाति वा गाममारीति जाव संनिवेसमारीति वा पाणक्खयाति वा जणक्खयाति वा कुलक्खयाति वा वसणभूअमणारिआति वा ? णो इणट्ठे समट्ठे । ववगयरोगायंका णं ते मणुआ पण्णत्ता समणाउसो ! ।

'ते णं भंते' इत्यादि । ते भदन्त ! मनुजाः तमनन्तरोक्तमाहारमाहार्य क्व वसतौ—कस्मिन्नुपाश्रये उपयान्ति—उपागच्छन्ति ? । भगवानाह—गौतम ! वृक्षगृहालयाः—वृक्षरूपाणि आलया—आश्रया येषां ते वृक्षगृहालयाः । 'णमि'त्यलङ्कारे । ते मनुजाः प्रज्ञप्ताः हे श्रमण ! हे आयुष्मन् ! । अथ गृहालयवृक्षस्वरूप प्रश्नयति- तेसि णं भंते !' इत्यादि । तेषां भदन्त ! वृक्षाणां कीदृश आकारभावप्रत्यवतारः—स्वरूपविशेषसमवतारः प्रज्ञप्तः ? भगवानाह—गौतम ! ते द्रुमगणाः कूटाकारसंस्थिताः—शिखराकारसंस्थिता इत्यर्थः । अप्येकका इति गम्यं । तथा प्रेक्षाछत्रध्वजस्तूपतोरणगोपुरवेदिकाचोप्पालाऽट्टालकप्रासादहर्म्यगवाक्षवालाग्रपोतिकावलभीगृहसंस्थिताः । अयं भावः—अप्येकका वृक्षाः—प्रेक्षागृहसंस्थिताः, अप्येककाश्छत्रसंस्थिताः, अप्येककाः स्तूपसंस्थिताः, अप्येककास्तोरणसंस्थिताः, अप्येकका गोपुरसंस्थिताः—गोभिः पूर्यते इति गोपुरं पुरद्वारम्, अप्येकका वेदिकासंस्थिताः । वेदिका नाम उपवेशनयोग्या भूमिः, अप्येककाश्चोप्पालसंस्थिताः । चोप्पालं नाम मत्तवारणम्, एवमट्टालकादिष्वपि भावनीयम् । तत्राट्टालकः—प्राकारस्योपरिमित्त्याश्रयविशेषः । प्रासादाश्च देवानां राज्ञां च भवनानि उत्सेधबहुला वा प्रासादाः चोभयेऽपि

पर्यन्तशिखराः हर्म्यं–शिखररहितं धनवतां भवनं, गवाक्षः प्रतीतः। वालाग्रपोतिका नाम तडाकादिषु जलस्योपरि प्रासादः वलभी–गृहाणामाच्छादनम्। एते सर्व्वेऽपि कीदृशा ? इत्याह्–'सुह'त्ति शुभा शीतलछाया येषां ते तथा। हे श्रमण ! हे आयुष्मन् !। अथ पुनरपि वृक्षगृहातिरिक्तगृहाणां व्यतिरेकं निर्णेतु प्रश्नयति–'अत्थि णं भंते !' इत्यादि। सन्ति 'णमि'ति प्राग्वत्। तस्यां–सुषमसुषमारूपायां समायां भरतक्षेत्रे गृहाणि-सम्प्रति दृश्यमानगृहकल्पानि गृहायतनानि–तेषु गृहेषु मनुष्याणामायतनानि–गमनानि गृहायतनानि ? भगवानाह–गौतम ! नायमर्थः समर्थः। यतो वृक्षगृहालयास्ते मनुजाः प्रज्ञप्ताः हे श्रमण ! हे आयुष्मन् !। अथ पुनः प्रश्नान्तरमाह–'अत्थि णं भंते !' इत्यादि। सन्ति भदन्त ! तस्यां समायां भरतक्षेत्रे नगराणीति वा यावत्सन्निवेशा इति वा यावत्करणात् ग्रामनगरखेटकर्व्वटमडम्बपट्टणपत्तनद्रोणमुखाऽऽकराऽऽश्रम-सम्बाधराजधानीनां सङ्ग्रहः। तत्र न विद्यते करो येषु तानि नगराणि। नखादय इतिनिपातनात् नञोऽनादेशाभावः, ग्रामाः–ग्रसन्ति बुद्ध्यादीन् गुणान् शास्त्रोक्ताष्टादशकराणां गम्या वा ग्रामाः, निगमाः–प्रभूतवणिग्वर्गावासाः, पांशुप्राकारनिबद्धानि खेटानि, पत्तनानि–जलस्थलमार्गगम्यानि, क्षुल्लप्राकारवेष्टितानि कर्व्वटानि, अर्द्धतृतीयगव्यूतान्तर्ग्रामरहितानि मडम्बानि, पट्टणानि–नौभिरेव गम्यानि, द्रोणमुखानि-बाहुल्येन जलनिर्गमप्रवेशानि, आकरा–हिरण्याकरादयः, आश्रमास्तापसस्थानानि, सम्बाधा–यात्रासमागतप्रभूतजननिवेशाः राजधानी–नगरादौ यत्र राजाऽभिषिच्यते, सन्निवेशाः तथाविधसार्थनिवासस्थानानि ? भगवानाह–गौतम ! नायमर्थः समर्थः। यद्यस्मात् 'नेच्छिअ'त्ति न इच्छितम्–इच्छाविषयीकृत नेच्छितम्। अत्र नञ्शब्दाभावादनादेशाभावः किन्तु 'नैके द्वेषस्य पर्याया' इत्यादाविव नशब्दो ज्ञेयः। तेन ममैतादृशमास्पद सम्पद्यतामितीच्छारहित्येन कामं–स्वेच्छया गच्छन्तीत्येव शीला नेच्छितकामगामिनस्ते मनुजाः प्रज्ञप्ताः। क्वचिदादर्शे 'जहिच्छिअकामगामिणो' इति पाठो दृश्यते पर जीवाभिगमवृत्तौ तथाव्याख्यानस्यानुपलम्भान्न व्याख्यात.। अथाऽऽजीविकादिनिमित्त शस्त्रादिधरणं तस्य व्यतिरेकं निर्णेतु प्रश्नयति–'अत्थि ण भंते !' इत्यादि। सन्ति भदन्त ! तस्या समायां असयः–अस्युपलक्षिताः सेवकनरा'। 'मसीति व'त्ति मषो–मष्युपलक्षिताः लेखनजीविनः। किसीति व'त्ति कृषिकर्म्मोपजीविनः। 'पणिएति व'त्ति पण्यमिति क्रयविक्रयजीविनः। 'वाणिज्जेति व'त्ति वाणिज्जमिति वणिग्जनोचितवाणिज्यकलोपजीविनः ? भगवानाह–गौतम ! नायमर्थ' समर्थः। यतः 'ववगय'त्ति व्यपगता सिमषीकृषिपण्यवाणिज्यास्ते मनुजाः प्रज्ञप्ताः। णमिति प्राग्वत्। अथ विद्यमानमपि हिरण्यादि यद्वस्तुजात तस्य भोगमधिकृत्य तद्व्यतिरेक निर्णेतुं प्रश्नयति–'अत्थि णं भंते !' इत्यादि। अस्ति भदन्त ! तस्यां समायां हिरण्यमिति वा सुवर्णमिति वा। तत्र हिरण्यमघटितं, सुवर्णं घटितं कांस्यमिति कांस्यभाजनजाति., दूष्यमिति वा दूष्यं–वस्त्रजातिः, मणिमौक्तिकशङ्खशिलाप्रवालसत्सारस्वापतेयानि, तत्र सत्–सार प्रधानं स्वापतेयं–धनं शेष सुगम। भगवानाह–'हंते ति कोमलामन्त्रणे उक्तार्थानामभ्युपगमवचनार्थो वा। दीर्घत्व च मागधदेशीप्रभवम्। अस्ति–विद्यते 'नो चेव णमि'त्यादि। न पुनस्तेषां मनुजानां हिरण्योदिकं 'परिभोगत्ताए'त्ति परिभोग्यतया हव्वं–शीघ्रमागच्छति। श्रीजीवाभिगमे तु तीव्रममत्वाभाव एवाभिहितः। तथाहि–'अत्थि णं भंते ! एगोरुअदीवे हिरण्णे इ वा सुवण्णे इ वा कसे इ वा दूसे इ वा मणी इ वा मुत्तीए इ वा विपुलधणकणगरत्तरयणमणिमोत्तिअसंखसिलप्पवालसंतसारसावइज्जे इ वा ? हंता अत्थि नो चेव ण तेसिं मणुआणं तिव्वममत्तभावे समुप्पज्जति'त्ति। अथ तत्र राजस्थितिमधिकृत्य प्रश्न-

यति–'अत्थि ण भंते !' इत्यादि। सन्ति भदन्त ! तस्यां समायां भरतक्षेत्रे राजेति वा युवराजेति वा ईश्वरतलवरमाडम्बिककौटुम्बिकेभ्यश्रेष्ठिसेनापतिसार्थवाहा इति वा। तत्र राजा चक्रवर्त्ती बलदेवो वासुदेवो वा महामाण्डलिको वा, युवराज–उच्छ्रितासन . ईश्वरो–भोगिकादि अणिमाद्यष्टविधैश्वर्ययुक्तो वेत्यन्ये, तलवरो नाम परितुष्टनरपतिप्रदत्तनानारत्नालङ्कृतसौवर्णपट्टविभूपितोत्तमाङ्ग', माडम्बिको-यस्य प्रत्यासन्नमपरनगरग्रामादि नास्ति तत्सर्वतश्छिन्नं जनाश्रयविशेषरूप मडम्बं तस्याधिपतिः, कौटुम्बिकः–कतिपयकुटुम्बप्रभुः, इभ्य–इभो हस्ती तत्प्रमाण द्रव्यमर्हति यः स यदि वा यत्सत्कपुञ्जीकृत-हिरण्यरत्नादिद्रव्येणान्तरितो हस्त्यपि न दृश्यते स इभ्यः, श्रेष्ठी–श्रीदेवताध्यासितसौवर्णपट्टविभूषि-तोत्तमाङ्गः पुरश्रेष्ठो वणिग्विशेष इत्यर्थः, सेनापतिः–हस्त्यश्वरथपदातिसमुदायलक्षणायाः सेनायाः प्रभु', सार्थवाहः पुनरेवं

गणिमं धरिमं मेज्जं पारिच्छं चेव दव्वजायं तु। घित्तूणं लाभत्थी वच्चइ जो अण्णदेसंमि ॥१॥

निववहुमओ पसिद्धो दीणाणाहाण वच्छलो पंथे। सो सत्थवाहणामं धणुव्व लोए समुव्वहइ॥२॥
एते राजादयस्तदानीं सन्तीति गौतमप्रश्नः। भगवानाह गौतम ! नायमर्थः समर्थः। येन कारणेन व्यपगतर्द्धिसत्काराः–व्यपगता ऋद्धिर्विभवैश्वर्यं सत्कारश्च सेव्यतालक्षणो येभ्य एवंविधास्ते मनुजाः प्रज्ञप्ताः हे श्रमण ! हे आयुष्मन् !। अथ दासादिविषयं प्रश्नमाह–'अत्थि णं भंते !' इत्यादि। अस्ति भदन्त ! तस्यां समायां भरतक्षेत्रे दास इति वा दास–आमरणं क्रयक्रीतः। एव प्रेष्यादिष्वपि वाच्यम्। पर प्रेष्यः–प्रेषणयोग्य , भृतको–नियतकालमधिकृत्य वेतनेन कर्म्मकरणाय धृतः, भागिको नाम द्वितीयांशस्य तृतीयांशस्य वा ग्राहकः, कर्म्मकरो–लोहादिकर्म्मकारः ? । भगवानाह–गौतम ! नायमर्थः समर्थ'। यतो व्यपगताभियोग्यास्ते मनुजाः प्रज्ञप्ताः। शेपं प्राग्वत। अथ प्रेमहेतुमात्रादिविषयं प्रश्नमाह–'अत्थि णं भंते !' इत्यादि अस्ति भदन्त ! तस्यां समायां भारते वर्षे मातेति वा पितेति वा भ्रातृभगिनीभार्यापुत्रदुहितृस्नुषा इति वा ?। भगवानाह–हंत। अस्ति। तथाहि–या प्रसूते सा माता यो बीजं निषिक्तवान् स पिता एकमातृपितृको भ्राता पुरुषः इतरा च भगिनी, भोग्यत्वाद्भार्या यः स्वमातापित्रोः स पुत्रः इतरा दुहिता स्वपुत्रभोग्या स्नुषेति ?। 'नो चेव णं'ति न पुनस्तेषां मनुजानां तीव्रं प्रेमबन्धनं समुत्पद्यते तथाक्षेत्रस्वभावात्। अथ द्वेषहेतुवैरिप्रभृतिविषयं प्रश्नमाह–'अत्थि णं भंते !' इत्यादि। अस्ति भदन्त ! भरतक्षेत्रे तदानीमिति गम्यम्। 'अरीति व'त्ति अरिः–शत्रु'. वैरी–जातिनिबद्धवैरोपेत', घातको–योऽन्येन घातयति. वधकः स्वयं हन्ता, प्रत्यनीकः–छिद्रान्वेषी प्रत्यमित्रः पूर्वं मित्रं भूत्वा पश्चादमित्रतामाश्रितः। शेष प्रश्नादियोजना प्राग्वत्। भगवानाह–गौतम ! 'णो इणट्ठे'त्ति नायमर्थः समर्थः। यतो व्यपगतवैरानुशयाः। णमिति प्राग्वत। ते मनुजाः प्रज्ञप्ताः। अथ रागहेतुमित्रादिविषयं प्रश्नमाह–'अत्थि ण भंते !' त्यादि अस्ति-भदन्त ! तस्यां समायामिति गम्यं। मित्रमिति वा मित्र–स्नेहविषयः, वयस्य'–समानवयाःगाढतरस्नेह-विषयः, ज्ञातकः–स्वज्ञातीयः, घाटिको–गुह्यप्रवृत्तिसहायः, सखा–समानखादनपानो गाढतरस्नेहस्थानं, सुहृन्मित्रमेव. सकलकालमव्यभिचारि हितोपदेशदायि च, साङ्गतिक–सङ्गतिमात्रघटितः ? भगवा-नाह–हन्त। अस्ति 'नो चेव'त्ति। नैव तेषां मनुजानां तीव्रं रागबन्धनं समुत्पद्यते। अथ प्रेमहेतुकं लौकिककार्यविषयं प्रश्नमाह–'अत्थि णमि'त्यादि। सन्ति भदन्त ! तस्यां समायां भरतक्षेत्रे आवाहा इति

वा आहूयन्ते स्वजनास्ताम्बूलदानाय यत्रेति आवाहः, विवाहात् पूर्वं ताम्बूलदानोत्सवः विवाहः—परिणयनं, यज्ञाः—प्रतिदिवस स्वस्वेष्टदेवतापूजा, श्राद्ध- पितृक्रिया, स्थालीपाकः प्रतीतः, 'मितपिण्ड'त्ति मृतेभ्यः श्मशाने तृतीयनवमादिषु दिनेषु पिण्डनिवेदनानि मृतपिण्डनिवेदनानि ? । भगवानाह—गौतम ! नायमर्थः समर्थः । यतो व्यपगतावाहविवाहयज्ञश्राद्धस्थालीपाकमृतपिण्डनिवेदनास्ते मनुजाः प्रज्ञप्ताः हे श्रमण ! हे आयुष्मन् ! । अथ लौकिकमहोत्सवाद्यधिकृत्य प्रश्नयति-'अत्थि ण भारहे' इत्यादि । इन्द्रमहः-शक्रस्य प्रतिनियतदिवसभाव्युत्सवः, 'खदनाग'त्ति स्कन्दः कार्तिकेयः, नागो—भवनपतिविशेष', यक्षभूतौ-व्यन्तरविशेषौ, अवटः-कूप, स्तूपश्चैत्यस्तूपः । चैत्यं-प्रतिमा शेष प्रतीतम् । अथ महोत्सवप्रकर्षद्योतकम् जनसमुदायमधिकृत्य प्रश्नयति-'अत्थि णमि'त्यादि । अस्ति भदन्त ! तदानीं भरतक्षेत्रे नटप्रेक्षा इति वेति-प्राग्वत् । नटा—नाटकाना नाटयितारस्तेषा प्रेक्षा 'नट्टजल्ले'त्यादि । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते । अतो नृत्तप्रेक्षा जल्लप्रेक्षा इत्यादि वक्तव्यम् । तत्र नृत्यन्ति स्मेति नृत्तास्तेषां प्रेक्षाः, जल्ला—वरत्राग्रखेलकाः राज्ञः स्तोत्रपाठका इत्यन्ये, मल्लाः प्रतीताः, मौष्टिका-मल्लविशेषा एव ये मुष्टिभिः प्रहरन्ति, विडम्बका—विदूषकाः नानावेषकारिण इत्यर्थः, कथकाः प्रतीताः, प्लवका—ये उत्प्लवन्ति गर्त्तादिक झम्पादिभिर्लङ्घयन्ति नद्यादिक वा तरन्ति । लासका—ये रासकान् गायन्ति जयजयशब्दप्रयोक्तारो वा भाण्डा इत्यर्थः । भगवानाह 'नो इणट्ठे'त्ति । नायमर्थः समर्थः । यतो व्यपगतकौतुकास्ते मनुजाः प्रज्ञप्ताः । अथ सुखाद्यर्थं पापोपादानहेतुशकटाद्यधिकरणमधिकृत्य प्रश्नयति-'अत्थि णं भारहे' इत्यादि । शकटानि प्रतीतानि । रथाश्च द्विविधाः यानरथाः सङ्ग्रामरथाश्च । तत्र सङ्ग्रामरथस्य प्राकारानुकारिणी फलकमयी वेदिका अपरस्य तु न भवतीति विशेषः । यानानि—गन्त्र्यादीनि, युग्यानि—चतुरस्रवेदिकोपशोभितानि द्विहस्तप्रमाणानि गोल्लविषयप्रसिद्धानि जम्पानानि, गिल्लिर्हस्तिन उपरि या कोल्लररूपा मानुष गिलतीव, थिल्लिर्लाटाना यत् अड्डपल्लाणं रूढ तदन्यविषये थिल्लिरित्युच्यते, शिविका—कूटाकारच्छादितो जम्पानविशेषः, स्यन्दमानिका—पुरुषप्रमाणो जम्पानविशेषः ? । भगवानाह—'णो'त्ति प्राग्वत् । यतः पादचारविहारास्ते मनुजाः । अथ चतुष्पदोपभोगमधिकृत्य प्रश्नयति-'अत्थि णमि'त्यादि । गावः स्त्रीगव्यः, एवं महिष्योऽजा एडका प्रतीताः ? हन्त सन्ति न पुनस्तेषामुपभोग्यतया हव्वं—शीघ्रमागच्छन्ति । अथ यानरूपचतुष्पदोपभोगमधिकृत्य प्रश्नयति– अत्थि णमि'त्यादि । तत्र जात्या आशुगमनशीला अश्वा शेषास्तु घोटका इत्यभिधीयन्ते । हस्तिन उष्ट्राश्च प्रतीताः । गोणा लघुतरवत्साः, गवयाः-गवाऽऽकृतयोऽपि वर्तुलकण्ठा', अजाश्छागाः, एडकाः प्रतीताः, प्रसया—द्विखुरा आटव्यपशुविशेषाः, मृगाः—सामान्यहरिणाः, वराहाः—शूकराः, रुरवो—मृगविशेषाः, शरभा—महाकायाः परासरा इत्यपरपर्यायाः आटव्यपशुविशेषाः ये हस्तिनमपि पृष्ठे समारोपयन्ति, चमरा—आरण्यगावः, सम्बरा—येषा शृङ्गे अनेकशाखे भवतः, कुरङ्गा—मृगाः, गोकर्णा—द्विखुरचतुष्पदविशेषाः ?। भगवानाह—हन्त सन्ति न पुनस्तेषां—मनुजानां परिभोग्यतया 'हव्वं'ति शीघ्रमागच्छन्ति । अथ क्रूराशयचतुष्पदविषय प्रश्नमाह—'अत्थि णमि'त्यादि । सन्ति भदन्त ! तस्या समाया सिंहा व्याघ्राश्च प्रतीताः वृका—ईहामृगापरपर्यायाः, द्वीपिकाश्चित्रकाः, ऋच्छाः प्रतीताः, तरक्षा—अच्छभल्लाः, शृगाला बिडालाः शुनकाश्च प्रतीताः । कार्कन्तिका—लुङ्कटिकाः कोलशुनकाः—महाशूकराः ? । भगवानाह—हन्त सन्ति न पुनस्ते परस्य तेषा वा मनुजाना काञ्चिदाबाधाम्-ईषत्पीडां प्रबाधा—महतीं पीडा छविच्छेदं वा छविः-शरीरं त्वग्वा तस्याश्छेदश्छ-

विच्छेदः कर्णनासिकागलहस्तपादादिच्छेदनमित्यर्थः। उत्पादयन्ति-कुर्वन्तीत्यर्थः। यतः प्रकृतिभद्रकास्ते श्वापदगणाः प्रज्ञप्ताः। अथ मनुष्यभोजनोचितधान्यविषय प्रश्नमाह-'अत्थि णमि'त्यादि। तत्र शालिव्रीहिगोधूमयवाः प्रतीता, यवयवो धान्यविशेषः, कलमः शालिविशेष एव, मसूरो-मिलिङ्गः, चनकिका इत्यन्ये, मुद्गमाषतिलकुलत्था प्रतीता एव, निष्पावका-वल्लाः, आलिसन्दकाश्चपलकप्रकाराः चपलका एवेत्यन्ये। कुसुम्भो-लट्टा, कोद्रवकङ्गू प्रसिद्धौ, रालकः कङ्गुविशेषः सणः' सनः-त्वक्प्रधाननालो धान्यविशेषः, सर्षपाः प्रतीताः, मूलकबीजानि शाकविशेषबीजानि ?। भगवानाह-हन्त सन्ति न पुनस्तेषां मनुजानां परिभोग्यतया हव्वमागच्छन्ति। अथ पीडाहेतुगर्तादिविषयं प्रश्नमाह-'अत्थि णमि'त्यादि-तत्र गर्त्ता-महती खड्डा, दरी-मूषकादिकृता लध्वी खड्डा, अवपातस्थानं-पतनस्थानं, प्रपातस्थान-प्रकर्षेण पतनस्थानं, विषमस्थानं-निम्नोन्नतं विजलं-कर्दमाविलं स्थलं ?। भगवानाह-नायमर्थः समर्थः। तत्र हेतुमाह-'भारहे णमि'त्यादि। तस्या समाया भारते वर्षे बहुसमरमणीयो भूमिभागः प्रज्ञप्तः। 'से जहे'त्यादि। भूमिभागवर्णन प्रागभिहितमिहापि द्रष्टव्यम्। अथ पीडाहेतुस्थाणवादिविषय प्रश्नमाह-'अत्थि णमि'त्यादि। तत्र स्थाणुः-कीलकः कण्टकाः प्रतीताः, तृणकचवरः-तृणसंयुक्तकचवरः, यद्वा तृणानि कचवरश्चेति द्वन्द्वः। एवं पत्रकचवरकोऽपि ?। भगवानाह-नायमर्थः समर्थः। तत्र हेतुमाह 'ववगय'त्ति यतो व्यपगतस्थाणुकण्टकतृणकचवरपत्रकचवरका सा-सुषमासुषमालक्षणा समा-कालविशेषः प्रज्ञप्ता हे श्रमण! हे आयुष्मन्!। अथ बाधाहेतुदंशादिविषयं प्रश्नमाह-'अत्थि णमि'त्यादि। तत्र दंशा मशका यूका लिक्षाश्च प्रतीताः, ढङ्कुणा-मत्कुणाः, पिंशुकाश्चश्चटकादयः ?। भगवानाह-गौतम! नायमर्थः समर्थः। येन व्यपगतदंशमशकयूकालिक्षाढङ्कुणपिंशुकोपद्रवबाधाविरहिता सा समा प्रज्ञप्ता। अथ प्राणान्तपीडाकारिवस्तुविषय प्रश्नमाह-'अत्थि णमि'त्यादि। अहयः-सर्पाः, अजगरा-शयुपर्याया उरःपरिसर्प्पविशेषा ?। भगवानाह-हन्त सन्ति न पुनस्तेऽन्योन्यं तेषां वा मनुजाना काञ्चिदाबाधा वा विबाधां वा छविच्छेद वोत्पादयन्ति। यत प्रकृतिभद्रकास्ते व्यालगणाः प्रज्ञप्ताः। अथ चित्तोद्वेगकारिवस्तुविषयं प्रश्नमाह-'अत्थि णमि'त्यादि। सन्ति भदन्त! तदानीं 'डिंबाति व'त्ति डिम्बाः-स्वदेशजाः भिल्लादिदुर्ज्जनकृतोपद्रवाः, डमरा-राजपुत्राणां परस्परविरोधसमुद्भवा उपद्रवाः, 'कलहे'त्यादि। कलहो-वचनराटिः, बोलोऽव्यक्ताक्षरध्वनिसमूहः आर्त्तानां बहूनां कलकलपूर्व्वको मेलापको वा क्षारः-परस्परं मत्सरः, वैर-परस्परमसहमानतया हिंस्यहिंसकभावाद्यध्यवसायः, महासङ्ग्रामाश्चेटककोणिकराजयोरिव सव्यवस्थां चक्रादिव्यूहरचनोपेतमहारणा महाशस्त्रपतनानि वा, महाशस्त्रपतनं यन्नागबाणादीनां दिव्यास्त्राणां प्रक्षेपण नागबाणादयो हि बाणा महाशस्त्राणि तेषामद्भुतविचित्रशक्तिकत्वात्। तथाहि-नागबाणा धनुष्यारोपिताः बाणाकारा मुक्ताश्च सन्तो जाज्वल्यमानाऽसह्योल्काः दण्डरूपाः तत परशरीरं सङ्क्रान्ता नागमूर्त्तीभूय पाशत्वमुपगच्छन्ति। यदुक्तं

चित्रं श्रेणिक! ते बाणा भवन्ति धनुराश्रिता। उल्कारूपाश्च गच्छन्तः शरीरे नागमूर्त्तयः ॥१॥

क्षणं दण्डा क्षण बाणाः क्षणं पाशत्वमागताः। आमरा ह्यस्त्रभेदास्ते यथाचिन्तितमूर्त्तयः ॥२॥

इत्यादि। तामसबाणाश्च पर्यन्ते सकलसङ्ग्रामभूमिव्यापिमहान्धकारतामसरूपतया परिणमन्ते। एवमुपलक्षणात अग्निबाणजलबाणादयो निजनिजनामानुरूप कार्यप्रसाधका अवसातव्याः। 'महापुरिस'त्ति

महापुरुषपतनानि महारुधिरपतनानि चेति प्रतीत। महाशस्त्रपतनादयस्त्रयोपि महायुद्धादिकार्यभूता विज्ञेया। भगवानाह-नायमर्थः। यतो व्यपगतवैरानुबन्धास्ते मनुजाः प्रज्ञप्ताः। अथ बाधाहेतुरोगविषयं प्रश्नमाह-'अत्थि णमि'त्यादि। सन्ति भदन्त! तदानीं भारते वर्षे 'दुब्भूअ'त्ति दुर्दुष्टा धान्यादीनामुपद्रवहेतुत्वात् भूता'-सत्त्वाः प्राणिविशेषाः यूकामत्कुणोन्दरतिड्डप्रभृतय ईतय इत्यर्थः। त एव रोगा दुर्भूत रोगा कुलरोगा इति विवक्षितकुलक्षयहेतुभूता रोगाः। 'मंडल'त्ति मण्डल-देशस्तदवच्छिन्ना विवक्षितदेशनिवासिजनमात्राश्रिता रोगा मण्डलरोगाः। 'गाम'त्ति तत्तद्ग्रामनिवासिजनमात्राश्रिता रोग ग्रामरोगाः, उपलक्षणान्नगरादिरोगाणा सङ्ग्रहः। 'पोट्ट'त्ति पोट्टमुदरं महाराष्ट्रे तथैव प्रसिद्धः। शीर्ष-मस्तक तयोर्वेदना कर्णोक्षिनखदन्तवेदनाः कासश्वासशोषज्वरदाहार्शोऽजीर्णाश्च प्रतीताः। 'तउअर'त्ति त्रपुकरः कुष्ठविशेषः सम्भाव्यते। पण्डुरोगभगन्दरौ प्रतीतौ। एकाहिकद्व्याहिकत्र्याहिकचतुर्थाहिका लोकप्रसिद्धा ज्वराः धनुर्ग्रहादयो हि व्यन्तरादिदेवकृतोपद्रवा' सम्भाव्यन्ते रूढितो वाऽवसातव्याः। 'मत्थग'त्ति मस्तकशूल, 'हिअय'त्ति हृदयं, पोट्ट'त्ति उदर, कुक्षियोनी प्रतीते, तेषा शूलं, ग्राममारिर्यावत्संनिवेशमारिः यावत्करणात् खेटकर्व्वटादिपरिग्रहः 'पाण'त्ति प्राणक्षयो-मारिकृतप्राणक्षयः, एव जनक्षयकुलक्षयावपि 'वसण'त्ति व्यसनभूतैवानार्यता व्यसनभूतानार्यता द्यूतादिव्यसनानीत्यर्थः न त्वनार्यदेशोत्पन्नता। मकारोऽलाक्षणिकः। भगवानाह-नायमर्थः समर्थः। यतो व्यपगतरोगातङ्कास्ते मनुजाः प्रज्ञप्ताः। हे श्रमण! हे आयुष्मन्!॥

अथ तेषा मनुष्याणामायुःस्थितिमधिकृत्य प्रश्नयति

तीसे णं समाए भारहे वासे मणुआणं केवइअं कालं ठिई पण्णत्ता ? गो०! जहण्णेणं देसूणाइं तिण्णि पलिओवमाइं उक्कोसेणं तिण्णि पलिओवमाइं। तीसे णं समाए भारहे वासे मणुआणं सरीरा केवइअं उच्चत्तेणं पं० ? गो०! जहण्णेणं देसूणाइं तिण्णि गाउआइं उक्कोसेणं तिण्णि गाउआइं। ते णं भंते! मणुआ किंसंघयणी पं० ? गो०! वइरोसभणारायसंघयणी पण्णत्ता। तेसि णं भंते! मणुआणं सरीरा किंसंठिआ पण्णत्ता ? गो०! समचउरंससंठाणसंठिआ पण्णत्ता। तेसि णं मणुआणं बेछप्पण्णा पिट्ठकरंडगसया पण्णत्ता समणाउसो!। ते णं मणुआ कालमासे कालं किच्चा कहिं गच्छंति ? कहिं उववज्जंति ?। गो०! छम्मासावसेसाउआ जुगलगं पसवंति एगूणपण्णराइंदिआइं संरक्खंति संगोविंति संगोवित्ता कासित्ता छिंदित्ता जंभाइत्ता अकिट्ठा अव्वहित्ता अपरिताविआ कालमासे कालं किच्चा देवलोएसु उववज्जंति। देवलोगपरिग्गहिआ णं ते मणुआ पण्णत्ता समणाउसो!। तीसे णं समाए भारहे वासे कइविहा मणुस्सा अणुसज्जित्था? गो०! छव्विहा तं जहा-पउमगंधा १ मिअसयगंधा २ अमम। ३ सही ४ तेअतली ५ सणिंचारी ६।

'तीसे णं समाए' इत्यादि। तस्या समायां भरतक्षेत्रे मनुष्याणा कियन्तं कालं स्थितिः प्रज्ञप्ता ? भगवानाह-गौतम! जघन्येन देशोनानि-पल्योपमाऽसङ्ख्येयभागोनानि त्रीणि पल्योपमानि, उत्कर्षतः परिपूर्णानि त्रीणि पल्योपमानि। अथ तेषां देहमान प्रश्नयति-'तीसे णमि'त्यादि। तेषां मनुजानां शरीराणि कियदुच्चैस्त्वेन प्रज्ञप्तानि? भगवानाह-गौतम! जघन्येन देशोनानि त्रीणि गव्यूतानि उत्कर्षतस्त्रीणि परि-

पूर्णानि गव्यूतानि । अथ संहननमधिकृत्य प्रश्नयति-'ते णमि'त्यादि । ते भदन्त ! मनुष्याः किंसंहननिनः-षण्णां संहननानां मध्ये किंसंहननधारिणः प्रज्ञप्ताः ? भगवानाह-गौतम ! वज्रर्षभनाराचसंहननिन' । एवकारो गम्यस्तेनान्यसंहनननिषेधः । अथ संस्थानप्रश्नमाह-'तेसि णमि'त्यादि । तेषां भदन्त ! मनुष्याणां शरीराणि किंसंस्थानानि प्रज्ञप्तानि ? भगवानाह- गौतम ! समचतुरस्रसंस्थानसंस्थितानि । अथ भगवानेव पृष्ठकरण्डकान्याह-'तेसि णमि'त्यादि । तेषां मनुजानां द्वे षट्पञ्चाशदधिके पृष्ठकरण्डकशते प्रज्ञप्ते । द्वितीयारके षष्ठभक्तेनाहारार्थस्य वक्ष्यमाणत्वादिहानुक्तोऽप्यष्टमभक्तेनाहारार्थो द्रष्टव्यः । अथ तेषां मनुष्याणां परलोकमधिकृत्य प्रश्नयति-'ते णं भंते !' इत्यादि । ते भदन्त ! मनुजाः कालमासे-मरणकाले कालं मरण 'किच्च'त्ति कृत्वा क्व गच्छन्ति-एतदेव व्याचष्टे क्वोत्पद्यन्ते इति ? भगवानाह-गौतम ! ते मनुजाः षण्मासाऽवशेषायुषः कृतपरभवायुर्बन्धा' स्वकाले युगलकं प्रसुवते । प्रसूय च एकोनपञ्चाशतं रात्रिंदिवानि तद्युगलं संरक्षन्ति संगोपयन्ति संगोप्य च कासित्वा क्षुत्वा जृम्भयित्वा अक्लिष्टाः-स्वशरीरोत्थक्लेशरहिताः अव्याहता'-परेणाव्यापादिता. अपरितापिता'-स्वतः परतो वाऽनुपजातकायमनःपरितापाः कालमासे कालं कृत्वा देवलोकेषु-भवनपत्याद्याश्रयेषु ईशानपर्यन्तेषु उत्पद्यन्ते । यदुक्तं-

नरतिरिअसंखजीवा सव्वे नियमेण जंति देवेसु । निअआउसमहीणाउएसु ईसाणअंतेसु ॥१॥ इति । ईशानादूर्ध्वं सनत्कुमारादौ जघन्यतोऽपि द्विसागरोपमादिस्थितिकत्वात् न तत्र तेषामुत्पाद इति भावः । तत्र हेतुमाह-'देवलोग'त्ति । देवलोको-भवनपत्याद्याश्रयरूपस्तथाक्षेत्रस्वाभाव्यात् तद्योग्यायुर्बन्धनेन परिगृहीतो यैस्ते देवलोकपरिगृहीताः । क्तान्तस्य परनिपातः प्राकृतत्वात् । णमित्यलङ्कारे । यत एवंविधास्ते मनुजाः प्रज्ञप्ताः हे श्रमण ! हे आयुष्मन् ! । अथ तदानीं यौगलिकमनुष्याणां भेदविषयं प्रश्नमाह-'तीसे णमि'त्यादि । तस्यां समायां भारते वर्षे कतिविधा-जातिभेदेन कतिप्रकारा मनुष्याः 'अणुसज्जित्था'इति-अनुसक्तवन्तः ? निजनिजसन्तानेन पूर्वकालात् कालान्तरमनुवृत्तवन्त इत्यर्थः । भगवानाह-गौतम ! षड्विधाः-षड्प्रकारा अनुसक्तवन्त इतिगम्यम् । तद्यथेत्युपदर्शने । पद्मगन्धाः मृगमदगन्धा अममाः तेजस्तलिनः सही शनैश्चारिणश्च । एते शब्दाः मनुष्याणां जातिभेदवाचका इति जीवाभिगमवृत्तौ । भगवतीवृत्तौ तु-'पम्हगंध'त्ति पद्मसमगन्धयः । 'मिअगंध'त्ति मृगमदगन्धयः । 'अमम'त्ति ममकाररहिताः । 'तेअतलि'त्ति तेजश्च तलं च रूपं येषामस्ति ते तेजस्तलिनः । 'सहि'त्ति सहिष्णवः समर्थाः । 'सणिंचारि'त्ति शनैर्मन्दमुत्सुकत्वाभावाचरन्तीत्येवंशीलाः शनैश्चारिण इत्यवसर्पिण्यां प्रथमारकस्वरूपं निरूपितम् ॥

अथ क्रमप्राप्तं द्वितीयारकस्वरूपं निरूपयितुमाह

तीसे णं समाए चउहिं सागरोवमकोडाकोडीहिं काले वइक्कंते अणंतेहिं वण्णपज्जवेहिं अणंतेहिं गंधपज्जवेहिं अणंतेहिं रसपज्जवेहिं अणंतेहिं फासपज्जवेहिं अणंतेहिं संघयणपज्जवेहिं अणंतेहिं संठाणपज्जवेहिं अणंतेहिं उच्चत्तपज्जवेहिं अणंतेहिं आउपज्जवेहिं अणंतेहिं गुरुलघुपज्जवेहिं अणंतेहिं अगुरुलघुपज्जवेहिं अणंतेहिं उट्ठाणकम्मबलवीरिअपुरिसक्कारपरक्कमपज्जवेहिं अणंतगुणपरिहाणीए परिहीयमाणे परिहीयमाणे एत्थ णं सुसमा णामं समाकाले पडिवज्जिंसु समणाउसो ! ।

जंबुद्दीवे णं भंते ! दीवे इमीसे ओसप्पिणीए सुसमाए समाए उत्तिमकट्ठपत्ताए भरहवासस्स केरिसए आगारभावपडोआरे होत्था ?। गोअमा ! बहुसमरमणिज्जे भूमिभागे होत्था । से जहा णामए आलिंगपुक्खरे ति वा । तं चेव जं सुसमसुसमाए पुव्ववण्णिअं । णवरं णाणत्तं चउधणुसहस्समूसिआ एगे अट्ठावीसे पिट्ठिकरंडगसते छट्ठभत्तस्स आहारट्ठो चउसट्ठिं राइंदिआइं सारक्खंति दो पलिओवमाइं आउं । सेसं तं चेव । तीसे णं समाए चउव्विहा मणुआ अणुसज्जित्था । तं जहा–एगा पउरजंघा कुसुमा सुसमणा ।

'तीसे णमि'त्यादि । तस्याः समयाः–सुषमसुषमालक्षणायाश्चतसृभिः सागरोपमकोटाकोटीभिः काले व्यतिक्रान्ते 'अणंतेहिं वण्णपज्जवेहिं'ति । अनन्ता ये वर्णपर्यवाः वर्ण्यतेऽलङ्क्रियते वस्त्वनेनेति वर्णः कृष्णादि' पञ्चधा प्रतीत एव । तस्य पर्यवाः परिसमन्तादवन्त्यपगच्छन्ति न तु द्रव्यवत् सदैवाधितिष्ठन्ते इत्यर्थः । अथवा परि–समन्तादवनानि–द्रव्यस्यावस्थान्तरप्राप्तिरूपाणीति पर्यवा एकगुणकालत्वादयः । ते चैकैकपरमाणुसम्बन्धिनः उत्कृष्टस्य कृष्णवर्णस्य कैवलिप्रज्ञया परिच्छिद्यमानस्य सर्वजीवानन्तगुणाविभागपलिच्छेदरूपाः अंसाः तादृशैरनन्तैर्वर्णपर्यवैः अनन्तगुणपरिहान्या । 'गुणोऽश' इति नन्दिवृत्तिवचनात् अनन्तांशपरिहान्या हीयमाने हीयमाने इति सम्बन्धः । अयं भाव'–यस्मिन् परमाणौ यतः कृष्णवर्णादपरस्मिन् कस्मिंश्चिदपि परमाणौ उक्तलक्षणेनांशेनापकृष्टः कृष्णवर्णो न स्यात् स कृष्णवर्णस्तस्मिन् परमाणौ जघन्योऽवसातव्यः । स चोक्तांशानामनन्तानामेव समुदायात्मक' । तस्मादेकद्व्याद्यशैरधिको मध्यमस्तावद्यावद्यस्मिन् परमाणौ यतः कृष्णवर्णादेकेनाप्युक्तलक्षणांशेन समधिकोऽपरस्मिन् कृष्णवर्णो न स्यात् तादृश उत्कृष्टः कृष्णवर्णः सम्पद्यते, न चैवं जघन्यादीनामनन्तांशात्मकत्वेनाविशेषापत्ति' शङ्कनीया, अनन्तमनन्तगुणं तदप्यनन्तमनन्तगुणमित्येवं प्रकारेण अनन्तमनन्तभेदभिन्नं प्रवचने प्रतीत, तेन प्रतिसमयमनन्तांशहान्या हीयमानमपि स्वरूपतः कृष्णत्व न जहाति । यदि पुनर्गुणकारेणानन्तगुणहान्या हीयते तदा तत्समय एव स्वरूपेण मूलतो विलयापत्तेः । तथा च द्वितीयसमये कृष्णत्वव्यपदेशाविषयः स्यात्तच्च प्रत्यक्षबाधितमिति । तेन सानन्तांशरूपा हानिः प्रतिसमयभाविनी सातिशयज्ञानिगम्येति । यत्तु तथाविधाऽल्पकालानुभूतघृतस्निग्धतास्वभावाः केचन वक्तारो घृते सम्प्रति कालानुभावात् स्नेहहानिमनुभवाम इति वदन्ति, तत्र गवादीना तथाविधाहाराद्यभावजन्यायां हानौ कालानुभावस्यारोपणावसातव्या । अन्यथा स्वल्पेनैव कालेन जलसदृशमेव घृतं सम्पद्येतेति पर्यालोच्यम् । एवं नीलपीतादिपर्यवा अपि भावनीयाः। तथा 'अणंतेहिं गंध'त्ति । आघ्रायते इति गन्धः । स च सुरभिर्दुरभिश्च । तत्राभिमुख्यकृत्सुरभिः वैमुख्यकृच्च दुरभिः। उभयसंयोगजस्तु तदनन्यत्वात् नाधिकः । तथा 'अणंतेहिं रस'त्ति रस्यते–आस्वाद्यते इति रसः । स च तिक्तकटुककषायाम्लमधुरभेदात्पञ्चविधः । तत्र श्लेष्मादिदोषहन्ता निम्बाद्याश्रितस्तिक्तः । स च सेवितः श्लेष्मारुचिपित्ततृट्कुष्ठविषज्वरादेर्हन्ता बुद्धेः कर्त्ता च १ । कटुर्मरीचिनागराद्याश्रितः स च सेवितः गलामयकफाद्युपहन्ता अग्निदीपको धान्यरुचिकृत् २ । कषायः विभीतकामलककपित्थाद्याश्रितः रक्तदोषकफपित्ताद्युपहन्ता रूक्षः शीतो गुरुश्च ३ । अम्लोऽम्लिकाद्याश्रितः अग्निदीपकः शोपपित्तकफाद्युपहन्ता वातमूढतादिकृत ४ । मधुर' शर्कराद्याश्रितः पित्तकफादिहन्ता धातुवृद्धिकरो गुरुः केशकृत् बालवृद्धक्षीणौजसा च पथ्य ५ । यत्तु स्तम्भिताहारवन्वविध्वसादिविधायी सैन्धवाद्याश्रितो लवणो रस' स चेह पृथक् न विवक्षितः ।

तस्य सर्व्वरसानां लवणप्रक्षेपे स्वादुत्वप्रतिपत्तेर्माधुर्यान्तःपातित्वात्। तथा 'अणंतेहिं फास'त्ति। स्पृश्यते इति स्पर्शः कर्कशादिरष्टविधः। तत्र स्तब्धताकारणं दृषदादिगतः कर्कशः। सन्नतिकारणं तिनिसलतादिगतो मृदुः। अधःपतनहेतुरयोगोलकादिगतो गुरुः। प्रायस्तिर्यगूर्ध्वाधोगमनहेतुरर्कतूलादिगतो लघुः। देहस्तम्भादिहेतुर्हिमाद्याश्रितः शीतः। आहारपाककारणं वह्न्याद्यनुगत उष्णः। पुद्गलद्रव्याणां मिथः संयुज्यमानानां बन्धनिबन्धनं तैलादिस्थितः स्निग्धः। तेषामेवाबन्धनिबन्धनं भस्मादिगतो रूक्षः। एतत्संसर्गजास्तु एतेष्वेवान्तर्भाव्नीयाः। एव व्युत्पन्नानामेषां गन्धादीनां ये पर्यवा अनन्तांशलक्षणास्तैरनन्तैरित्यादि वर्ण्णपर्यायवत्स्वयं नियोजनीयम्। तथा अनन्तैः सहननपर्यवैः। तत्र संहननानि वज्रर्षभनाराचादीनि। तेषां पर्यवाः पुद्गलोपचयापचयादिकृतास्तैरनन्तैः। तथा संस्थानानि समचतुरस्रादीनि। तेषामपि संहननादिवत् पुद्गलोपचयापचयादिकृताः पर्यवास्तैरनन्तैः। तथा उच्चत्वपर्यवाः शरीरमात्रप्रमाणभेदविशेषास्तेऽपि तथाविधपुद्गलनिमित्तका अनन्तास्तैः। तथा आयुषः पर्यवाः अप्येवमेव तैरप्यनन्तैः। तथा गुरुलघुपर्यवाः पुद्गलाश्रिताः स्पर्शविशेषास्तैरनन्तैः। तथा अगुरुलघुपर्यवा अपि स्पर्शविशेषाः पुद्गलगता एव न पुनर्धर्म्मास्तिकायादिगता अपि। तेषां कालमाहात्म्यात्तथाहानेरसम्भवात्। तथा 'अणंतेहिं उट्ठाणे' त्यादि। तत्र उत्थानमूर्ध्वीभवनं कर्म्मोत्क्षेपणावक्षेपणादि। बलं—शारीरः प्राणः। वीर्यं—जीवोत्साहः। पुरुषकारश्च—पौरुषाभिमानः पराक्रमश्च स एव साधिताभिमतप्रयोजनः पुरुषकारपराक्रमः। अथवा पुरुषकारः—पुरुषक्रिया। सा च प्रायः स्त्रीक्रियातः प्रकर्षवती भवति तत्स्वभावादिति विशेषेण तद्ग्रहणं, पराक्रमस्तु शत्रुनिराकरणं ततो द्वन्द्वः। तेषां पर्यवा जीवाश्रितास्तैरनन्तैः। 'अणंतगुणपरिहाणीए'त्ति। अनन्ताश्च ते गुणाश्चांशास्तेषां हानिस्तया परिहीयमाने परिहीयमाने काले इति गम्यम्। अत्र वीप्सावचनेन प्रतिसमयं क्रमः सूचितः। तेन सहसैव युगपत् हानिर्न स्यादिति ज्ञापितम्। अत एव पञ्चकल्पभाष्येऽपि

समए समएणंतो परिहायंते उ वण्णमाईआ। दव्वाई पज्जाया अहोरत्तं तत्तिअं चेव ॥१॥

त्ति। यद्यप्यमूर्त्तत्वात्कालस्य तथापर्यायैर्हानेरसम्भवः तथाप्युक्तप्रकारेण पदार्थस्वरूपहान्या तद्विशिष्टस्य कालस्यापि हानिरेव। एवं हानिरपि शुभानामेव भावानां न पुनरशुभानामपि तेषां वृद्धेरेव ज्योतिष्करण्डवृत्त्यादौ पठितत्वात्। तेन पूर्व्वपूर्व्वकालापेक्षयोत्तरोत्तरकालः शुभानां भावानां हान्यैव हीनतया व्यपदिश्यते इत्यवसर्पिण्याः स्वभाव इत्यर्थः। 'एत्थ'त्ति अत्रान्तरे—एवमवसरे 'सुसमा णामं'ति सुषमानाम्ना समाकालः-कालविशेषः प्रतिपन्नवान् सञ्जात इत्यर्थः। यद्वा—समोपलक्षितः कालः समाकालः भरतैरावतक्षेत्रमात्रवर्त्ती काल इत्यर्थः। महाविदेहादौ समाविशिष्टस्य कालस्याभावात्। 'सुसमा णामं'ति सुषमा नाम सुषमा सञ्ज्ञा प्रतिपन्नवान्—अवाप्तवान्। एतेन समेति कालविशेषणस्य वैयर्थ्यशङ्कापि व्युदस्ता। हे श्रमण! हे आयुष्मन्!। अथ सुषमायामेव भरतस्वरूपं प्रश्नविषयीकरोति'जंबुद्दीवे णमि'त्यादि। जम्बूद्वीपे भदन्त! द्वीपे सुषमायां समायां 'उत्तिम'त्ति उत्तमा—प्रकृष्टा। इत्वं चार्षत्वात् या काष्ठा—तत्कालोचितावस्था ता प्राप्ता तस्यां भरतवर्षस्य कीदृश आकारभावप्रत्यवतारः—स्वरूपसम्भवः 'होत्थ' त्ति अभवत्? भगवानाह—गौतम! बहुसमरमणीयो भूमिभागोऽभवत्। 'से जहे'त्यादि। प्राग्वत्। 'तं चेव'त्ति। तदेव यत्पूर्व्वं सुषम-सुषमायां वर्ण्णितम्। अथ ततो यो विशेषस्तमाह—'नवरमि'ति। नवरं केवलमिदं नानात्वं भेदः। तत्रैव—'चउधणु'त्ति। चतुर्द्धनुःसहस्रोच्छ्रिताः मनुजाः सुषमायाममभवन्निति सर्व्वत्र वाच्यम्। अयं भावः सुषम-

सुषमायां षट्धनुःसहस्रोच्छ्रिताः मनुजा अभवन् परं सुषमसुषमाया आदावेव तदुत्तरकालं तु 'अणंतेहिं उच्चत्तपज्जवेहिं'ति वचनात् क्रमेण प्रतिसमयमुच्चत्वे हीयमाने हीयमाने यावत् सुषमायामादौ चतुर्धनुःसहस्रोच्छ्रिताः। तथा 'एगे अट्ठे'त्यादि। प्रथमारकमनुजानां पृष्ठकरण्डकानां षट्पञ्चाशदधिके द्वे शते अभवतां। सुषमाया तु 'अणंतेहिं संघयणपज्जवेहिं'तिवचनात् क्रमेण हीयमाने हीयमाने यावदेकमष्टाविंशत्यधिकं पृष्ठकरण्डकशतं। तथा तेषामाहारार्थः षष्ठभक्तस्य सप्तम्यर्थे षष्ठीति षष्ठमक्तेऽतिक्रान्तेऽभवत्–अन्तरा दिनद्वय विमुच्याहारप्रयोजनमभूदित्यर्थः। 'चउसट्ठिं'ति चतुःषष्टिं रात्रिदिनानि अपत्यानि संरक्षन्ति-परिपालयन्ति। प्रथमारके तु अष्टमभक्तेऽतिक्रान्ते आहारार्थ एकोनपञ्चाशतं दिनान्यपत्यपरिपालनेति भेदः। 'दो पलिओवमाइं'ति 'अणंतेहिं आउपज्जवेहिं'ति वचनात् क्रमेण हीयमाने द्वे पल्योपमे आयुरभूत। अतिदेशम ह–'सेसं'ति। शेषमुक्तविशेषातिरिक्तं देवलोकगत्यादिकं तदेव सुषमसुषमानराणामिवेत्यर्थः। अथ तस्या समायां मनुष्यभेदानाह–'तीसे णमि'त्यादि। तस्यां समाया मनुष्याश्चतुर्विधाः अनुसक्तवन्तः–निजनिजसन्तानेन पूर्वकालात्कालान्तरमनुवृत्तवन्तः। तद्यथा–एकाः प्रचुरजङ्घाः कुसुमाः सुशमनाः। एते शब्दाः मनुष्यजातिविशेषवाचका एव द्रष्टव्याः। इति द्वितीयारकस्वरूपं संक्षेपतो दर्शितम्॥

अथ क्रमप्राप्तं तृतीयोरकस्वरूपं प्रज्ञयति

तीसे णं समाए तिहिं सागरोवमकोडाकोडीहिं काले वीइक्कंते अणंतेहिं वण्णपज्जवेहिं जाव अणंतगुणपरिहाणीए परिहीयमाणे परिहीयमाणे एत्थ णं सुसमदुस्समा णामं काले पडिवज्जिसु समणाउसो!। सा णं समा तिहा विभज्जइ। तं० पढमे तिभागे मज्झिमे तिभागे पच्छिमे तिभागे। जंबुद्दीवे णं भंते! दीवे इमीसे ओसप्पिणीए सुसमदुस्समाए पढममज्झिमेसु भाएसु भरहस्स वासस्स केरिसए आगारभावपडोआरे पुच्छा ?।-गो० ! बहुसमरमणिज्जे भूमिभागे होत्था। सो चेव गमो णेअव्वो। णाणत्तं दो धणुसहस्साइं उड्ढं उच्चत्तेणं तेसिं च मणुआणं चउसट्ठि पिट्ठिकरंडगा चउत्थभत्तस्स आहारट्ठे समुप्पज्जति। ठिति पलिओवमं एगूणासीतिं राइंदिआइं सारक्खंति संगोवेंति जाव देवलोगपरिग्गहिआ णं ते मणुअगणा पण्णत्ता समणाउसो!। तीसे णं भंते! समाए पच्छिमे तिभागे भरहस्स वासस्स केरिसए आगारभावपडोआरे होत्था ?। गो०! बहुसमरमणिज्जे भूमिभागे होत्था। से जहा णाम ए आलिंगपुक्खरेति वा जाव मणीहिं उवसोभिए तं कित्तिमेहिं चेव अकित्तिमेहिं चेव। तीसे णं भंते! समाए पच्छिमे तिभागे भारहे वासे मणुआणं केरिसए आगारभावपडोआरे होत्था ?। गो० ! तेसिं मणुआणं छव्विहे संघयणे छव्विहे संठाणे बहूणि धणुसयाइं उड्ढं उच्चत्तेणं जहण्णेणं संखेज्जाणि वासाणि उक्कोसेणं असंखेज्जाणि वासाणि आउअं पालेंति पालित्ता अप्पेगइआ निरयगामी, अप्पेगइआ तिरिअगामी, अप्पेगइआ मणुअगामी, अप्पेगइआ देवलोअगामी, अप्पेगइआ सिज्झंति जाव सव्वदुक्खाणमंतं करेंति॥

'तीसे णमि'त्यादि। तस्याः सुषमायाः समायास्तिसृभिः सागरोपमकोटाकोटीभिः काले व्यति-

क्रान्ते अनन्तैर्वर्णपर्यवैर्यावदनन्तगुणपरिहान्या परिहीयमाने परिहीयमाने 'एत्थ णं'ति। अत्रान्तरे सुषमदुष्षमा नाम्ना कालः प्रतिपन्नवान्—सञ्जातः। हे श्रमण! हे आयुष्मन्!। 'सा णमि'त्यादि। सा समा त्रिधा—त्रिभिः प्रकारैर्विभिद्यते। तद्यथा—प्रथमस्त्रिभागः मध्यमस्त्रिभागः पश्चिमस्त्रिभागः इति। अथाद्यभागद्वयवर्त्तिभरतक्षेत्रस्वरूपपरिज्ञानाय प्रश्नमाह—'जम्बुद्दीवे णमि'त्यादि। जम्बूद्वीपे भदन्त! द्वीपे अस्यामवसर्पिण्यां सुषमदुष्षमायां समायां प्रथममध्यमयोस्त्रिभागयोर्भरतवर्षस्य कीदृश आकारभावप्रत्यवतार? इति पृच्छा। भगवानाह—गौतम! बहुसमरमणीयो भूमिभागोऽभवत्। अतिदेशमाह—सो चेव गमो'त्ति। स एव योऽनन्तरोक्तो गमः-पाठः 'णेअव्वो'त्ति ज्ञातव्यः। प्राक्तनकालापेक्षया हीनत्वेऽपि पाठस्याभेद इत्यर्थः। णाणत्तं'ति ततो भेदः। स चैवं-ते नरा द्वे धनुःसहस्रे ऊर्ध्वमुच्चैस्त्वेन, तेषां च मनुजानां चतुःषष्टिपृष्ठकरण्डकानि, चतुर्थभक्तेऽतिक्रान्ते आहारार्थः समुत्पद्यते। स्थितिस्त्वेषां पल्योपमम् एकोनाशीतिं रात्रिंदिवानि संरक्षन्ति—स्वापत्यानि युगलरूपाणि संगोपयन्ति—माऽस्मदीयमपत्यं किञ्चित्स्वतः परतोऽपि पीडाभागभूदित्यभिप्रायेण पुनः पुनस्तच्चिन्तापरायणा भवन्तीत्यर्थः। शेषं प्राग्वत्। अथ पश्चिमे त्रिभागे भरतक्षेत्रस्य स्वरूपं प्रश्नयति। 'तीसे णमि'त्यादि। तस्यां भदन्त! समायां पश्चिमे त्रिभागे भरतस्य वर्षस्य कीदृश आकारभावप्रत्यवतारः—स्वरूपसम्भवोऽभवत्?। गौतम! 'बहुसमरमणिज्जे'ति। व्याख्या च प्राग्वत्। अथ तदानीं मनुष्यस्वरूपविषयं प्रश्नमाह—'तीसे णमि'त्यादि प्रश्नः प्राग्वत्। गौतम! तेषां मनुष्याणां षड्विधं—षट्प्रकारं संहननं—षट् संहननानीत्यर्थः। एवं संस्थानान्यपि षडेव 'बहूणि'त्ति बहूनि धनुःशतान्यूर्ध्वमुच्चैस्त्वेन ते मनुजा इत्यध्याहार्यम्। 'जहण्णेणं'ति जघन्येन सङ्ख्येयानि वर्षाणि उत्कर्षेणासङ्ख्येयानि वर्षाणि आयुष्कं पालयन्ति पालयित्वा च 'अप्पेगइअ'त्ति अप्येकका। अपिर्विस्मये। एके केचन न पुनः सर्व्वेऽपि निरयगामिनः। अप्येककास्तिर्यग्गामिनः। अप्येकका मनुष्यगामिनः। अप्येकका देवलोकगामिनः। अप्येककाः सिध्यन्ति यावत्सर्व्वदुःखानामन्त—विनाशं कुर्व्वन्ति। एतच्च सविस्तरं सामान्यतो दक्षिणभरतार्द्धवक्तव्यतावसरे व्याख्यातम्॥

अथ तदानीं स्वरूपविशेषमाह

**तीसे णं समाए पच्छिमे तिभागे पलिओवमट्ठभागावसेसे एत्थ णं इमे पण्णरस कुलगरा समुप्पज्जित्था। तं० सुमती १ पडिसुती २ सीमंकरे ३ सीमंधरे ४ खेमंकरे ५ खेमंधरे ६ विमलवाहणे ७ चक्खुमं ८ जसमं ९ अभिचंदे १० चंदाभे ११ पसेणई १२ मरुदेवे १३ नाभी १४ उसभे १५ त्ति॥**

'तीसे णमि'त्यादि। तस्याः समायाः पश्चिमे त्रिभागे पल्योपमाष्टमभागावशेषे। 'एत्थ णं'ति। अत्रान्तरे इमेऽनन्तरं वक्ष्यमाणाः पञ्चदश कुलकराः समुत्पन्नाः। कुल—लोकप्रसिद्धकुलव्यवस्था कुर्व्वन्तीति कुलकराः—शेषजनापेक्षया विशिष्टशरीरसौन्दर्यकान्त्यादिगुणोपेता आदेयवचनाः बुद्धिपाटवेन न्यायान्यायविवेककरणसमर्थाः पुरुषप्रधानाः। तद्यथेत्युपदर्शने। ते चामी—सुमतिः प्रतिश्रुतिः सीमङ्करः सीमन्धरः क्षेमङ्करः क्षेमन्धरः विमलवाहनः चक्षुष्मान् यशस्वी अभिचन्द्रः चन्द्राभः प्रसेनजित् मरुदेवः

नाभिः ऋषभश्चेति नामानि । ननु स्थानाङ्गादौ सप्तैव कुलकरा भणितास्तथाहि-'जंबुद्दीवे दीवे भारहे वासे इमीसे ओसप्पिणीए सत्त कुलगरा होत्था । तं जहा-

'पढमित्थ विमलवाहण चक्खुम जसमं चउत्थमभिचंदे । तत्तो पसेणई पुण मरुदेवे चेव नाभी अ' ॥१॥त्ति । इह तु श्रीऋषभदेवसंयुक्ताः पञ्चदश भणिताः तेष्वप्यभिचन्द्रप्रसेनजितोरन्तराले चन्द्राभो भणितः । एवं च सति कथमन्योऽन्यं सङ्गतिरिति चेत् ? सत्यं, कुलकरा हि द्विविधा भवन्ति कुलकरकृत्येषु नियुक्ताः स्वतन्त्रप्रवृत्ताश्च । तत्र ये विमलवाहनादयो नियुक्तास्ते स्थानाङ्गादौ भणिता इह कुलकरकृत्यं कुर्वन्तः कुलकरा भवन्त्येवेत्यभिप्रायेणोभयेऽप्युपात्ताः । यदुक्तं विशेषणवत्यां

सत्त य सत्तमठाणाइएसु दस कुलगरा दसमठाणे । पण्णत्तीए भणिआ पण्णरस जंबुद्दीवस्स ॥१॥

सत्तग्गहणेण जे विमलवाहणाई परेण से ण सगहिआ । भणिओत्ति ट्ठिअ ते कुलगरत्तणं जेण कयवतो

पण्णरस कुलगरत्तणसामण्णाओत्ति तेवि संगहिआ । जत्थ दसण्हं सत्तगभणिउत्त तत्थ तिगमाहु ॥३॥ इति । यद्यप्येवं सङ्गतिः श्रीजिनभद्रगणिक्षमाश्रमणैरभिहिता परं परमार्थचिन्तायामेतदभिप्रायं सम्यग नावसीयते । यतो दण्डनीतावसङ्गतेस्तादवस्थ्यमेव । तथाहि-विमलवाहनचक्षुष्मतोः काले 'हे'तिरूपा दण्डनीति १ । यशस्विदभिचन्द्रयोः कालेऽल्पाऽपराधिनां'हे'तिरूपा तदितरेषां तु 'मे'तिरूपा दण्डनीतिः २ । प्रसेनजिन्मरुदेवनाभीनां कालेऽल्पोऽपराधिनां'हकार'रूपा मध्योऽपराधिनां 'मकार'रूपा उत्कृष्टाऽपराधिनां च 'धिक्कार'रूपा दण्डनीति ३ । श्रीस्थानाङ्गसूत्रादौ भणिता । इह तु विमलवाहनकाले हक्कारमकार रूप नीतिद्वयं वक्ष्यति तथात्राभिचन्द्रादनु चन्द्राभः प्रोक्तः, स्थानाङ्गादौ तु तन्नामाऽपि नास्ति । तथा श्रीस्थानाङ्गे-सप्तमस्थानकेऽतीताऽनागतयोरवसर्प्पिण्योः सप्त कुलकरा भणिताः दशमस्थानके च दश । तत्र नाम्नामप्य-सङ्गतिरित्यादि बहु विचार्यमस्त्यतोऽसङ्गतिर्हेतुर्वाचनाभेद एव । स च शीर्षप्रहेलिकापर्यन्तसङ्ख्यावसरे-प्रदर्शितः ॥

अथ केषां कुलकराणां काले का दण्डनीतिः ? इत्याह

तत्थ णं सुमतीपडिसुतीसीमंकरसीमंधरखेमंकराणं एतेसिं पंचण्हं कुलगराणं हक्कारे णामं दंडनीई होत्था । ते णं मणुआ हक्कारेण दंडेणं हया समाणा लज्जिआ विलिआवेड्डा भीआ तुसिणीआ विणओणया संचिट्ठंति । तत्थ णं खेमंधरविमलवाहणचक्खुमंजसमं अभिचंदाणं एतेसि णं पंचण्हं कुलगराणं मक्कारे णामं दंडनीई होत्था । ते णं मणुआ मक्कारेणं दंडेणं हया समाणा लज्जिआ विलिआवेड्डा भीआ विणओणया तुसिणीया संचिट्ठंति । तत्थ णं चंदाभपसेणईमरुदेव-नाभिउसभाणं एतेसि णं पंचण्हं कुलगराणं धिक्कारे णामं दंडनीती होत्था । ते णं मणुआ धिक्कारेण दंडेण हया समाणा लज्जिआ विलिआवेड्डा भीआ विणओणया तुसिणीआ संचिट्ठंति ॥

'तत्थ णमि'त्यादि । तत्र पञ्चदशसु कुलकरेषु सुमत्यादीनामेतेषां पञ्चानां कुलकराणां 'हक्कार' इति नाम्ना दण्डनीतिरभवत् । तत्र 'हा' इत्यधिक्षेपार्थः तस्य करणं हाकारः । सूत्रे चार्षत्वात् हक्कारेति पाठः ।

दण्डनं दण्डोऽपराधिनामनुशासनं तस्य वा, स एव वा नीतिर्नयो दण्डनीतिः । 'ते णमि'त्यादि । णमित्यलङ्कारे । ते मनुजाः मिथुनकनराः 'हा'कारेण दण्डेन 'हया समाणा त्ति हताः' सन्तः । अय भावः—परस्परं विवदमानाः कुलकरसमीपमागतास्तेषां मध्येऽपराधिनस्ते कुलकरेण 'हा'कारमात्रेणाक्रोशिताः सन्तः कीदृशा भवन्ती ? इत्याह— लज्जिअ'त्ति जातलज्जा लज्जां प्राप्ता इत्यर्थः । अत एव 'विलिअ'त्ति व्यलिकिताः संजातव्यलिकाः । यद्वा—विलिता 'विलिन् भेदे' इति वचनात् भेदमापन्नाः—नैनत्पुनः करिष्याम इति स्व भावान्तरमाश्रिताः । यद्वा—अमलिनमुखा अपि मलिनमुखतया भेदमापन्ना इति भावः । एवं कुत ? इति विशेषणद्वारा हेतुमाह—'वेड्डा'इति । यतस्ते व्रीडाऽमीषामस्तीति भूमार्थे मत्वर्थीयस्याऽप्रत्ययस्य विधानात् । व्रीडाः—लज्जाप्रकर्षवन्त इत्यर्थः । यद्वा—वेड्याः 'विड् आक्रोशे' इति वचनात् वेडनं वेडस्तस्यार्हा—योग्या वेड्याः । कथमेतद्भवद्भिर्विहितमित्येवरूपेण सर्व्वेषामप्याक्रोशविषयीभूता इत्यर्थः । अत एव भीतास्त्रस्ताः—'हा'एवं कुलकरकृतदण्डमवाप्य क्व यास्यामः किं करिष्याम इत्यादिरूपेण कान्दिशीका सञ्जज्ञिरे इति भावः । अत एव तूष्णीकाः—मौनावलम्बिनः भयाकुलितत्वेन सदसद्वा प्रत्युत्तरादिदातुमशक्ता इति । एवंविधा अपि किंलक्षणाः ? 'विणओ'त्ति विनयावनता' विनयेन नियोजितकरकुड्मलादिमत्तया अवनता—नम्रीभूताः सन्तिष्ठन्ते—एतावन्मात्रेणैव दण्डेन हृतसर्व्वस्वमिवात्मानं मन्यमानाः पुनरपराधस्थाने प्रवृत्तिमकुर्वाणा' सम्यग् प्रकारेण आज्ञावचनं प्रतीच्छन्त एव तिष्ठन्तीत्यर्थः । अथ कालानुभावात् क्षेमन्धरादीनां पञ्चानां कालेऽपराधवृद्धौ दण्डान्तरमाह—'तत्थ णमि'त्यादि । तत्र-क्षेमन्धरादीनां पञ्चानां कुलकराणां 'मा'कार इतिनाम्ना दण्डनीतिरभवत् । अर्थात्तदानीं महत्यपराधे'मा'-इत्यस्य निषेधार्थस्य करणमभिधानं 'मा कारस्तद्रूपा दण्डनीतिः । अल्पापराधे तु प्राक्तना 'हा'काररूपा नीतिरेनुवर्त्तत एव । स्थानाङ्गसूत्रादौ प्राक्तननीतेरग्रेऽप्यनुवर्त्तनस्य भणितत्वात् । ते ण'ति—ते मनुजास्तदानीमुत्कृष्टाऽपराधिनो 'मा'कारेण दण्डेन हताः सन्तो लज्जिता इत्यादि प्राग्वत् । अथान्तिमकुलकरपञ्चककाले दण्डनीतिस्वरूपमाह—'तत्थ णमि'त्यादि । तत्र चन्द्राभादीनां पञ्चानां कुलकराणां कालेऽपराधवृद्धौ 'धिक्कार' इति नाम्ना दण्डनीतिरभूत् । तत्र धिगधिक्षेपार्थ एव तस्य करणमुच्चारणं धिक्कारः । स चोत्कृष्टापराधिनां विज्ञेय । अल्पमध्यमापराधिनोः क्रमेण 'हा'कार 'मा'कारलक्षणयोरनुवर्त्तनात् । तथा च तत्कालवर्त्तिनां मनुजानां नीतित्रयमभूदित्यर्थः । 'ते णमि'त्यादि । ते मनुजाश्चन्द्राभादिकुलकरकालवर्त्तिनो धिक्कारेण दण्डेन न पुनर्हकारमकाराभ्यामपि लज्जिता इत्यादि प्राग्वत् ॥

अथान्तिमकुलकरः श्रीऋषभः । स च प्रथमतीर्थाधिपतिरतस्तद्वर्णनं किञ्चिद्विस्तरत आह—

नाभिस्स णं कुलगरस्स भारिआए मरुदेवाए कुच्छिंसि एत्थ णं उसहे णामं अरहा कोसलिए पढमराया पढमजिणे पढमकेवली पढमतित्थंकरे पढमधम्मवरचक्कवट्टी समुप्पज्जित्था । तओ णं उसमे अरहा कोसलिए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसइ । वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसित्ता तेवट्ठिं पुव्वसयसहस्साइं महारायवासमज्झे वसइ । तेवट्ठिं पुव्वसयसहस्साइं महारायवासमज्झे वसमाणे लेहाइआओ गणिअप्पहाणाओ सउणरुअपज्जवसाणाओ बावत्तरिं कलाओ चउसट्ठिं महिलागुणे सिप्पसयं च कम्माणं तिण्णिवि पयाहिआए उवदिसइ ।

उवदिसित्ता पुत्तसयं रज्जसए अभिसिंचति अभिसिंचित्ता तेसीइं पुव्वसयसहस्साइं महारायवास-मज्झे वसइ वसित्ता जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले तस्स णं चित्तबहुलस्स नवमीपक्खेणं दिवसस्स पच्छिमे भागे चइत्ता हिरण्णं चइत्ता सुवण्णं चइत्ता कोसं चइत्ता कोट्ठागारं चइत्ता बलं चइत्ता वाहणं चइत्ता पुरं चइत्ता अंतेउरं चइत्ता विपुलधणकणगरयणमणिमोत्तिअसंख-सिलप्पवालरत्तरयणसंतसारसावइज्जं विच्छड्डइत्ता विगोवइत्ता दायं दाईआणं परिभाएत्ता सुदंसणाए सीयाए सदेवमणुआसुराए परिसाए समणुगम्ममाणमग्गे संखिअचक्किअणंगलिअमुहमंगलिअ-पूसमाणवद्धमाणगआइक्खगलंखमंखघंटिअगणेहिं इट्ठाहिं कंताहिं पिआहिं मणुण्णाहिं मणामाहिं उरालाहिं सिवाहिं धण्णाहिं मंगल्लाहिं सस्सिरीआहिं हिअयगमणिज्जाहिं हिययपल्हायणिज्जाहिं कण्णमणणिव्वुइकरीहिं अट्ठसइआहिं अपुणरुत्ताहिं वग्गूहिं अणवरयं अभिणंदंता य अभिथुणंता य एवं वयासी जय जय णंदा जय जय भद्दा धम्मे णं अभीए परीसहोवसग्गाणं खंतिखमे भयभेरवाणं धम्मे ते अविग्घं भवउ त्तिकट्टु अभिणंदंति अ अभिथुणंति अ। तए णं उसभे अरहा कोसलिए णयणमालासहस्सेहिं पत्थिज्जमाणे पत्थिज्जमाणे एवं जाव णिग्गच्छति जहा उववाइए जाव आउलबोलबहुलं नहं करेंते विणीआए रायहाणीए मज्झंमज्झेणं णिग्गच्छति निग्गच्छित्ता आसिअसंमज्जिअसित्तसुइअपुप्फोवयारकलिअं सिद्धत्थवणविउल-रायमग्गं करेमाणे हयगयरहपहकरेण पाइक्कचडकरेण य मंदं मंदं उद्धयरेणुअं करेमाणे करेमाणे जेणेव सिद्धत्थवणे उज्जाणे जेणेव असोगवरपायवे तेणेव उवागच्छइ। उवागच्छित्ता असोगवरपायवस्स अहे सीअं ठावेइ ठावइत्ता सीआओ पच्चोरुहइ पच्चोरुहित्ता सयमेवाभरणालंकारं ओमुअई ओमुइत्ता सयमेव चउहिं अट्ठाहिं लोअं करेइ करेत्ता छट्ठेणं भत्तेणं अपाणएणं आसाढाहिं नक्खत्तेणं जोगमुवागएणं उग्गाणं भोगाणं राइण्णाणं खत्तिआणं चउहिं पुरिससहस्सेहिं सद्धिं एगं देवदूसमादाएय मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए॥

नाभिस्स णमि'त्यादि। नाभेः कुलकरस्य भार्याया मरुदेवायाः कुक्षौ 'एत्थ ण'त्ति। अत्र भरत-क्षेत्रे। णमित्यलङ्कारे। 'उसहे'त्ति ऋषभ इति नाम्ना। अथवा 'उसहे'त्ति ऋषभो वृषभो वा भण्यते। यतः ऋषति-गच्छति परमपदमिति ऋषभः 'उदृत्वादौ' (हैम० ८-१-१३१) इत्युत्त्वे उसहेत्ति रूपसिद्धिः। वर्षति-सिञ्चति देशनाजलेन दुःखाग्निना दग्ध जगदित्यन्वर्थः। 'वृषभे वा वा' (हैम० ८-१-१३३) इत्यनेन सूत्रेण वकारेण सह ऋत उत्वे उसहेत्ति सिद्धिः। प्रकारान्तरेणापि सान्वर्यता यथा-ऊर्वोर्वृषभो-लाञ्छनमभूत् भगवतो जनन्या च चतुर्दशानां स्वप्नानामादौ वृषभो दृष्टस्तेन ऋषभो वृषभो वा भगवतोऽ-भिधान। यदुक्तं-'ऊरुसु अ उसहलञ्छणमुसभं सुमिणमि तेण उसहजिणो'त्ति। एतच्च नाम मातापितरौ हृष्टौ शुभदिने दत्तवन्तौ। यदुक्त-

'ततस्य ऋषभ इति नामोत्सवपुरस्सरम्। तौ मातापितरौ हृष्टौ विदधाते शुभे दिने'॥१॥

इति। 'कोसलिए'त्ति। कोशलायामयोध्याया भवः कौशलिक'। 'पढमराय'त्ति प्रथमराजाऽयमेवासीत्।

यतः प्रथमतीर्थकृतो राज्याभिषेको जीतत्वात् शक्रेण प्रथमतः कृतोऽतोऽस्यामवसर्प्पिण्यामभिषिक्तो राजाऽयमेव नापरः । तथा प्रथमो जिनः रागादिजेतृत्वात् । प्रथमकेवली प्रथममृषभस्यैव केवलोत्पत्तेः । प्रथमतीर्थंकरः । तत्र तीर्थं—प्रथमगणधरश्चतुर्वर्ण्णः सङ्घो वा तं करोतीति तीर्थंकरः । तथा 'पढमधम्म'त्ति । चक्रेण वर्त्तितुं शीलमस्य स चक्रवर्त्ती, धर्म्मेण वरो धर्म्मवरः स चासौ चक्रवर्त्ती चेति, प्रथमोऽशेषधर्म्मवरचक्रवर्त्तिषु वर्त्तमानावसर्प्पिणीभाविषु तीर्थंकरेषु आद्यो वृषभनामा जिनेन्द्रोऽतः प्रथमधर्म्मवरचक्रवर्त्ती । 'समुप्पज्जित्थ'त्ति समुत्पन्नवान् । धर्म्मवरचक्रवर्त्तित्वं च चतुर्द्दशस्वप्ना नाभिकुलकरेण फले निवेदिते मरुदेवायास्तुष्ट्यर्थं शक्रादिभिः सर्व्वैरपीन्द्रैर्मरुदेवायै अधिकफलज्ञापनेन प्रथमत एव निवेदितमासीत् । यदुक्तं—'नाभिस्स कुलगरस्स मरुदेवाए भारिआए कुच्छिंसि गब्भत्ताए उववण्णो चउद्दस सुमिणे उसभगयसीहमादी पासित्ता पडिवुद्धा णाभिस्स कहेति । तेण भणिअं तुज्झ पुत्तो वड्डो कुलगरो होहित्ति । सक्कस्स आसणं चलिअं सिग्घ आगतूण भणति- देवाणुप्पिआ ! तव पुत्तो सयलभुवणमंगलओ पढमधम्मवरचक्कवट्टी महइ महाराया भविस्सति । अण्णे भणंति वत्तीसं पि इंदा भणंति । ततो मरुदेवा हट्ठा गब्भं वहति । 'ततो णं'ति । ततः समुत्पत्त्यनन्तरं—जन्मानन्तरमित्यर्थः । णमित्यलङ्कारे । ऋषभोऽर्हन् कौशलिको विंशतिपूर्व्वशतसहस्राणि कुमारवासमध्ये—कुमारतया राज्येऽनभिषिक्ततया वसनं कुमारवासस्तस्य मध्ये वसति । तथा 'वसित्त'त्ति उषित्वा 'तेवट्ठिं'ति—त्रिषष्टिं पूर्व्वशतसहस्राणि महाराज्यवासमध्ये वसति । तावन्त तत्र वसन् 'लेहाइआओ'त्ति । लिखनं लेखो—लिपिकर्म्म स आदिर्यासा ता लेखादिकाः गणितप्रधानाः—गणितमङ्कविद्या तेन प्रधानाः शकुनरुतपर्यवसानाः द्वासप्ततिकलाः । ताश्च 'लेह गणिअं रूवं नट्टमि'त्याद्यौपपातिकोक्ताः प्रतीताः । काव्यकल्पलतापरिमलादौ त्वेवं—'लक्षण—साहित्यनिरीक्षण—तर्क—सिद्धान्तसम्पर्कलिखित-गणित-गीत-नृत्य वादित्र—विनोद—सन्देहपरिच्छेद-वास्तुशास्त्र—वैद्यकशास्त्र—ज्योतिःशास्त्र-नीतिशास्त्र-शकुनविचार स्वप्नविचार—मन्त्रवाद—रसवाद—गन्धवाद—तन्त्रवाद—धातुवाद—सत्यवाद— अश्वलक्षण—गजलक्षण—पुरुषस्त्रीलक्षण—रत्नपरीक्षा—बलीवर्द्दादिनिर्णयः—खड्गादिविजयः—लेपकर्म्म—तन्तुवायकर्म्म—सूचिकर्म्म—लेपकर्म्म—काष्ठोत्करण-दन्तघटना सुवर्णादिघटना—मुष्टिभेद—पत्रच्छेदेन्द्रजालज्ञान—क्रियाकालज्ञान-शृङ्गारकरण—जलतरण—रन्धन—केशबन्धन—कथाकथन—पुष्पग्रथन—युद्ध- नियुद्ध—कृषिकर्म्म—नियोगकार्य—मर्द्दनकर्म्म—वन्दनमर्म्म—आरामारोपण— आकारगोपन —सुरभिवस्तुकरण—अदृश्यसञ्चरण — सकलदेशवेष—अशेषभाषाविशेष—नव्यकाव्यलव—सम्यग्हस्तलाघव—दण्डलक्षण-परिचितोपलक्षण—द्यूतभेद—दर्शनप्रतिभेद-रणचर्या—रथचर्या—वस्तुविचार—देशाचार—रसायनसञ्चना—कालवञ्चना—धर्म्मध्यानयोगज्ञानसञ्ज्ञा' इति । एवंविधा द्वासप्ततिकला भगवान् श्रीऋषभदेव उपदिशतीति क्रियाग्रे वक्ष्यमाणा इहापि सम्बन्धनीया । एवं महिलागुणेषु शिल्पशते च क्रियापदयोजना कार्या । तत्र 'चउसट्ठि महिलागुणे'त्ति । चतुष्षष्टिं महिलागुणान् । ते च गुणाः गीतनृत्तादयः प्रश्नप्रहेलिकापर्यन्ताः । यदुक्तं—

ज्ञेया नृत्यौचित्ये चित्रं वादित्रमन्त्रतन्त्राश्च । धनवृष्टिफलाकृष्टी संस्कृतजल्पः क्रियाकल्पः ॥

ज्ञानविज्ञानदम्भाम्बुस्तम्भा गीततालयोर्मानम् । आकारगोपनारामरोपणे काव्यशक्तिवक्रोक्ती ॥

नरलक्षण गजहयवरपरीक्षणे वास्तुशुद्धिलघुवुद्धी । शकुनविचारो धर्म्माचारोऽञ्जनचूर्णयोर्योगः॥

गृहिधर्म्म सुप्रसादनकर्म्म कनकसिद्धिवर्णिकावृद्धी। वाक्पाटवकरलाघवललितचरणतैलसुरभिताकरणे

भृत्योपचारगेहाचारौ व्याकरणपरनिराकरणे। वीणानादवितण्डावादाङ्कस्थितिर्जनाचारः ॥

कुम्भभ्रमसारिश्रमरत्नमणिभेदलिपिपरिच्छेदाः। वैद्यक्रिया च कामाविष्करण रन्धनं चिकुरबन्धः॥

शालीखण्डनमुखमण्डने कथाकथनसुकुसुमग्रथने। वरवेषसर्व्वभाषाविशेषवाणिज्यभैषज्ये॥

अभिधानपरिज्ञानाभरण-यथास्थानविविधपरिधाने। अन्त्याक्षरिका प्रश्नपहेलिका स्त्रीकलाश्चतुष्षष्टिः॥

इति। 'सिप्पसतं च कम्माणमि'ति। कर्म्मणां कृषिवाणिज्यादीनां मध्ये शिल्पशतं च कुम्भकारलोहकार-चित्रकारतन्तुवायनापितशिल्पानां प्रत्येकं विंशतिभेदत्वात्। तथा चागमः—

पंचेव य सिप्पाइं घडलोहे चित्तणंतकासवए। इक्किक्कस्स य इत्तो वीसं वीसं भवे भेआ ॥१॥

इति। एतच्च शिल्पशतं भगवानेवोपदिष्टवान्। अत एव अनाचार्योपदेशज कर्म्म, आचार्योपदेशजं शिल्प-मिति कर्म्मशिल्पयोर्विशेषः। कर्म्माणि च क्रमेण स्वयमुत्पन्नानीति प्रसङ्गतोऽवसातव्यम्। अथैतानि किमर्थं भगवानुपदिष्टवान्? इति दर्शयति—'तिण्णि वि'त्ति। त्रीण्यपि द्वासप्ततिकलाचतुष्षष्टिमहिलागुण-शिल्पशतरूपाणि। अपिशब्दस्त्रयाणामप्यविशेषेण प्रयोजनवत्तासूचकः। न ह्यमीषामेकमपि प्रयोजनम-विकृत्यान्यथाभावमापन्नमिति हृदयम्। प्रजानां—सर्व्वजन्तूनां हिताय—उपकाराय पथ्यान्नवदुपदिशति। प्राकृते विभक्तिपरिणामादुपदिष्टवानित्यर्थः। ननु श्रीऋषभदेवस्य भगवतः सकललोकव्यवहारप्रवर्त्तनमयुक्तं भूतोपघातरूपत्वादिति चेत्, मैवं सकललोकव्यवहारप्रवर्त्तनस्य लेशतः सदोषत्वेऽपि बहुदोषनिवारकतया निर्दोषत्वेनैवाभिमतत्वात्। यदाह श्रीहरिभद्रसूरिः—

इत्तोच्चिअ निद्दोसं सिप्पाइविहाणमो जिणिंदस्स। लेसेणं सदोसं पि हु बहुदोसनिवारणत्तेण ॥१॥

इति। किंचाप्रतिपातिज्ञानत्रयोपेत एकान्तपरहितैकनिरतः सर्व्वकाल निरवद्यमनोवाक्कायव्यापारवान् महासत्त्वः प्रकृष्टपुण्यप्रकृतिभाजनं भगवान् प्रजानां बहुगुण ज्ञात्वैव शिल्पादिकमुपदिष्टवान्। तथा च तस्य भगवतश्चारित्रमोहनीये वर्त्तमानस्य तथैव प्रवर्त्तने यथोचितं प्राणिनः संरक्षतः कथं दोषसम्भव-शङ्कापि?। यदाह—

'वरबोहिलाभओ सो सव्वुत्तमपुण्णसंजुओ भयवं। एगंतपरहितरओ विसुद्धजोगो महासत्तो॥१॥

जं बहुगुणं पयाणं तं णाऊणं तहेव दंसेइ। ते रक्खंतस्स तओ जहोचिअ कह भवे दोसा?॥२॥

इति। एवं राज्यावस्थायामपि बहुदोषनिवारणेनैव शुभा योगाः। चारित्रप्रतिपत्तौ तु सर्व्वसावद्यप्रत्याख्याने-नैव केवलोत्पत्तौ पुनस्तीर्थप्रवर्त्तनादेव। ननु परहितरतस्यापि भगवतः आरम्भदोषः प्रत्यक्षगोचरः। स च बलवतापि पराकर्तुमशक्योऽतः कथं तथाविधदोषकलुषितस्य शुभा योगा? इति चेत्। मैव बहुदोष-निवारणस्यैव प्राधान्यात्। यदुक्तं— 'तत्थ पहाणो अंसो बहुदोसनिवारणाउ जगगुरुणो'त्ति। नहि प्रधानभावोऽप्रधानभावेन बाधितु शक्यते। तेनाल्पो दोषोऽदोष एव। यथा नागादिरक्षणे आकर्षणदोषेऽपि शुभयोगः। यदुक्तं— 'नागाइरक्खणे जह कड्ढणदोसे वि सुहजोगो'त्ति। अयं भावः— काचिज्जननी निजपुत्रं गर्तायां रममाणं श्रुत्वा तत्पतनाद्युपद्रवभीत्या तदानयनाय गता सती बलभं निजपुत्रं प्रति

द्रुतमभिसर्पन्तं सर्पमालोक्य मरणादिमहानर्थनिवारणधिया सहसैव निजपुत्रमाकर्षन्ती शुभयोगवत्येव न पुनस्तदाकर्षणपीडाजन्यस्तस्या अशुभो योगः। मरणादिमहानर्थनिवारणाभिप्रायस्यैव प्राधान्यात्। आकर्षणजन्यपीडानर्थोऽप्यर्थ एव, तत्राभिप्रायाभावेन तस्याः पीडाया अकिञ्चित्करत्वात्। तथा भगवानप्यन्योऽन्यहननधनहरणाद्यनेकदोषनिवारकनीतिप्रवर्त्तनेन परमोपकारित्वात् शुभयोगीति। नन्वेवं नीतिप्रवर्त्तनेन यदि शुभयोगी कथं तर्हि चक्रवर्त्त्यादयस्तथाभूता एव नरकगामिन ? इति चेत्, सत्यं, यद्यपि ते न्यायमार्गेणैव निग्रहानुग्रहाभ्यां लोकस्थितिं परिपालयन्ति तथापि न केवलं प्रजानां हितायैव किन्त्वन्यायकारिणो जनानुच्छिद्य यथेप्सितसुखावाप्तिहेतुनिष्कण्टकराज्यश्रीभोक्तारो भविष्याम इत्यभिप्रायेणैव। स चाभिप्रायोऽतिक्लिष्टो नरकादिहेतुरेव। यदागमः–

सल्लं कामा विसं कामा कामा आसीविसोपमा। कामे पत्थेमाणा अकामा जंति दुग्गइं ॥१॥

ति। किञ्च नरदेवावस्थाया अपि वासुदेवपदव्या इव तथास्वभावोऽभ्युपगन्तव्यः। यत्तु तीर्थकृतोऽपि राज्यादिश्रियं भुक्तवन्तः तन्न वैषयिकसुखपिपासयैव किन्तु प्राग्जन्मोपार्जितशुभकर्म्मोपभुक्तये। अत एवानन्तबलभाजोऽपि श्रीवासुपूज्य–श्रीनेमिनाथ–श्रीपार्श्वनाथ–श्रीमहावीरनामानश्चत्वारोऽपि तीर्थकृतो न राज्यश्रियमभिलषितवन्तः। श्रीनेमिनाथस्तु भोग्यकर्म्माभावात् वासुदेवादिना बहुयाचितोऽपि नैकामपि स्त्रियमङ्गीकृतवानित्यादि–पर्यालोचनया तीर्थकृत्प्रवृत्तिः शुभयोगपूर्व्विकैवेति सिद्धम्। श्रीऋषभस्य सकललोकव्यवहारप्रवर्त्तनं प्रजानां हितार्थमेव। अत एव जिनपूजादिलक्षणा समानापि क्रिया जिनभक्तिपरायणानां सम्यग्दृशां तदितरेषां ऐहिककनककामिन्याद्यर्थिनामैहिकफलसम्पत्तिसाम्येऽपि पारत्रिकफलवैषम्यं प्रवचने प्रतीतम्। किं च–राज्यस्थितिमन्तरेण न धर्म्मस्थितिः, तदभावाच्च न तीर्थप्रवृत्तिः। अतः प्रथमतीर्थकृतः शिल्पशताद्युपदेशनं धर्म्मार्थमेव। धर्म्मस्तु प्रजानां परमोपकार एवेत्यलं प्रसङ्गेन। 'उवदिसित्तं'ति। उपदिश्य पुत्रशतं राज्यशते अभिषिञ्चति। तत्र पुत्रा भरतादिप्रभञ्जनपर्यवसानाः। यदुक्तं–

सङ्घो अ विस्सवि (क) म्मो विमल सुलक्खण य अमल चित्तङ्गो।
तह खायकित्ति वरदत्त दत्त सागर जसहरो अ ॥१॥

वरपवर कामदेवो धुव वच्छो नन्दसूर य सुनन्दो। कुरुअङ्ग वङ्ग कोसलवीरकलिङ्गे अ मागहविदेहे
संगम दसन्न गम्भीर वसुवम्मसुवम्मरट्ठयसुरट्ठे। बुड्ढिकरे विविहकरे सुजसे जसकित्ति जसकरए
कित्तिकर सुरण बम्भसेण विक्कन्तउ नरुत्तमओ। तह चंदसेण महसेण सुसेणे भाणु कन्ते अ
पुप्फजओ सिरिहरो दुद्धरिसो सुसुमार दुज्जओ अ। जयमाणसुधम्मवम्मसेण आणन्दणाणन्दे
णन्दो अवराजिअविस्ससेण हरिसेणओ जउ विजओ। विजयन्तपहाकरओ अरिदमणो माण महवाहू
तह दीहबाहु मेहे सुघोस तह विसववराहवसुसेणे। कविले सेलविआरी अरिंजओ कुंजरबलो अ
जयदेवनागदत्तो कासववलवीरसुहमई सुमई। तह पउमनाहसीहो सुजाई संजय सुनाहो य
नरदेवचित्तहरसुरवरो अ दढरहपभंजणो एए। अढनवइ भरहमाया संखाइपभंजणवसाणा।

भरतो-बाहुबलिप्रभृति पुत्रशतं राज्यशते स्वस्वनामाङ्कितदेशसम्बन्धिनि अभिषिञ्चति। अभिषिच्य च 'तेसीअपुव्वे'त्यादि। त्र्यशीतिपूर्वशतसहस्राणि महाराजवासमध्ये—महाराजतया यो वासस्तस्य मध्ये तदन्तरित्यर्थः वसति। न चैवम् 'उसभे णं अरहा कोसलिए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसइ वसित्ता तेवट्ठिं पुव्वसयसहस्साइं महारायवासमज्झे वसइ'त्ति। अत्रैवानन्तरोक्तसूत्रेण सह विरोधः शङ्कनीयः। यतो 'भाविनि भूतवदुपचार' इति न्यायात् राज्यार्हकुमारराजवत् कुमारावस्थापि महाराजावस्थैव भणिता। एवं त्र्यशीतिं पूर्वलक्षाणि महाराजवासमध्ये उषित्वा 'जे से'त्ति। यः स'गिम्हाणं'ति। आर्षे ग्रीष्मशब्दः स्त्रीलिङ्गो बहुवचनान्तश्च। ततो ग्रीष्मस्येत्यर्थः। प्रथमो मासः प्रथमः पक्षः चित्रवहुलस्तस्य चित्रबहुलस्य—चित्रकृष्णपक्षस्येत्यर्थः। 'नवमीपक्खेणं'ति नवमीदिने। अयं च पाठो वाचनान्तरगतोऽवसातव्यः। यतः पर्युषणाकल्पे निर्युक्त्यादौ चाऽष्टम्येव विख्याता। 'दिवसस्स'त्ति दिवसस्य पश्चिमे भागे—मध्याह्नोत्तरकाले 'चइत्ता हिरण्णमि'त्यादि। त्यक्त्वा हिरण्य रजतम्—अघटितस्वर्णमित्यपि केचित्। सुवर्णं—घटितं कोशं—भाण्डागारं कोष्ठागारं—धान्यगृहं बलं चतुरङ्गसैन्यं वाहनं—वेगसरादि। पुरान्तःपुरे प्रतीते। एवं विपुलधनकनकरत्नमणिमौक्तिकशङ्खशिलाप्रवालरत्नसत्स्वापतेयमिति सुगमं। त्यक्त्वा सामान्यतो। विच्छर्द्य विशेषतः त्यक्त्वा निष्क्रमणमहिमकरणतो विच्छर्दवद्वा कृत्वा विच्छेदो-विस्तारः। तथा 'विगोवइत्ता' तदेव रजतादिकं विगोप्य-गुप्त सत्प्रकाशीकृत्य। 'दाइआणं'ति। दायं-दानं दायो-भागो स्त्येषामिति दायिका—गोत्रिकास्तेभ्यः परिभाज्य—विभागशो दत्त्वा। यदत्र केवलं गोत्रिकाणामेव ग्रहणं तत्तदानीं याचकानामभावादेव। यदागमः-'न वि ताव जणो जाणइ का भिक्खा केरिसा व भिक्खयरा'त्ति। ननु गोत्रिका अपि याचमाना याचका एव भण्यन्ते, कथ तर्हि याचकानामभाव ? इति चेत्। मैवं, गोत्रिकाणा याचनामुखेन धनादिग्रहणाभावात् किन्तु प्रव्रज्याभिमुखेन भगवता निजकल्पपरिपालनाय दानार्थमाहूय यथेप्सितं गृह्णन्त्वित्युदीरिता अपि भगवतः प्रव्रज्यास्वरूपमवगम्य तेऽपि वैराग्यभाजो भगवतः शेषामात्रमेवोपात्तवन्तः। यदुक्तं—

जातसंसारवैराग्या दीक्षायां स्वामिनो जनाः। शेषामात्रमदो गृह्णन्निच्छोदानेऽपि नाधिकम् ॥१॥

इति श्रीऋषभचरित्रे। एवमजितादिजिनानामपि यद्गोत्रिकाणां दान तच्छेषामात्रमेव न पुनर्याचना यत्तु यथेप्सित याचमानानां दानं तद्याचकानामेव नान्येषा। ननु तीर्थकृतां पुरस्ताद्याचने किं बाधकमिति चेत् ? उच्यते, भिक्षा तावत् त्रिधा सर्वसम्पत्करी आजीविका पौरुषघ्नी चेति। तत्राद्या साधूनामेव। द्वितीया याच्ञा विना ह्यनिर्वाहकाना निर्द्धनान्धपङ्ग्वादीनाम्। तृतीया तद्व्यतिरिक्तानां। तेन याच्ञा विना निर्वाहकरणसमर्थानां गृहस्थानां महापुरुषेभ्योऽपि याचनमनुचितमेव। अत एव श्रीमहावीरदानाधिकारसूत्रे 'दानं दायारेहिं'ति पदमधिकं याचकग्रहणार्थं, तेन याचकानां यथेप्सितयाचितदानमितरेषां तु कुलादिक्रमायातं वर्द्धापनिकाप्राहेणकशेषादिकल्पमवसातव्यं, न पुनः सकललोकसाधारण, ग्राहकाणा नामग्रहणे इभ्यादिनामनुक्तत्वात्। तथाहि— 'तए णं भगवं कल्लाकल्लिं जाव मागहओ पायरासोत्ति बहूणं सणाहाण य अणाहाण य पंथिआण य पहिआण य कोरडिआण य कप्पडिआण य जाव एगा हिरण्णकोडी' त्यादि श्री आवश्यकचूर्णौ। ननु अजितादिजिनानां याचकेभ्यो यथेप्सितदानेऽपि द्रव्यव्ययमधिकृत्य कथ श्री ऋषभप्रभुसमतेति ? चेत्। उच्यते—तत्तत्कालानुभावसंयुक्ततीर्थकृदतिशयवशेन यथेप्सितयाचनोद्घोषणेऽपि नाधिकद्रव्यव्ययोचितयाचयितारो याचका भवन्ति। यदुक्तम्—

अनुभावेन कालस्य स्वामिनश्च प्रभावतः। यथेप्सितप्रदानेऽपि नाधिकग्राहिणोऽभवन् ॥१॥ इति श्रीशम्भवचरित्रे। तच्च दानमेका कोटिरष्ट-लक्षाधिका सुवर्णस्य प्रत्यहं भोजनावसरपर्यन्तम्। यदुक्तम्-

'एगा हिरण्णकोडी अट्ठेव अणूणगा सयसहस्सा। सूरोदयमाईअं दिज्जइ जा पायरासाओ'त्ति ॥१॥ वर्षसङ्कलितं तु त्रीणि कोटिशतानि अष्टाशीत्यधिकानि अशीतिर्लक्षाश्च। यदागमः-

तिण्णेव य कोडिसया अट्ठासीई च हुति कोडीओ। असीइं च सयसहस्सा एअं संवच्छरे दिण्णं' ति ॥१॥ सुदंसणाए'त्ति। सुदर्शनायां-सुदर्शनाभिधायां शिबिकायाम् आरूढमिति गम्य। सदेव-मनुजासुरया पर्षदा-स्वर्गमर्त्यपातालवासिजनसमुदायेनेत्यर्थ। 'समणु'त्ति। सम्यग् अनुव्रज्यमान भगवन्त-मिति गम्यम्। अग्गे-अग्रभागे संखिअ' इत्यादि। शाङ्खिकादिगणैः परिवृतमिति गम्यम्। तत्र शाङ्खिकाश्चन्दनगर्भशङ्खहस्ता मङ्गल्यकारिणः शङ्खवादका वा। चाक्रिकाश्चक्रप्रहरणा' कुम्भकारतैलिका-द्यो वा, लाङ्गलिका-गलावलम्बितसुवर्णमयलाङ्गलाकारधारिणो भट्टविशेषाः कर्षका वा, मुखमङ्गलिका-मुखे मङ्गलं येषां ते तथा मङ्गलपाठका इत्यर्थः। पुष्पमाणवका मागधा पुरोहितस्थानीया मान्या वा, वर्द्धमानकाः-स्कन्धारोपितनराः, आख्यायकाः-शुभाशुभकथकाः, लङ्खा-वंशाग्रखेलका, मङ्खाश्चित्रफलक-हस्ताः, भिक्षाका गौरीपुत्रा इति रूढाः। घण्टया चरन्तीति घाण्टिकाः-राउलिकास्तेषां गणैः। इट्ठाहिं' इत्यादि। इष्टादिविशेषणोपेताभिर्वाग्भिरभिनन्दन्तोऽभिष्टुवन्तश्च प्रक्रमात्कुलमहत्तरादिस्वजना एवमवा-दिपुरिति सम्बन्धः। तत्र इष्टाभिः-इष्यन्ते स्मेतीष्टा-वाञ्छितास्ताभिः, प्रयोजनवशादिष्टमपि किञ्चित्स्व-रूपतः कान्तं स्यादकान्तं वेत्यत आह-कान्ताभिः-कमनीयशब्दाभिः, प्रियाभिः- प्रियार्थाभिः 'मणुण्णा-हिं'ति। मनसा ज्ञायन्ते सुन्दरतया यास्ता मनोज्ञा-भावत' सुन्दरास्ताभिः, 'मणामाहिं'ति। मनसा अम्यन्ते-गम्यन्ते पुनः पुनर्याः सुन्दरत्वातिशयात्ता मनोमास्ताभिः, उदाराभिः-शब्दतोऽर्थतश्च कल्याणाभि - शुभार्थसूचिकाभिः, शिवाभिरुपद्रवरहिताभि., धन्याभिर्धनलाभकारिणीभिः, माङ्गल्याभिर्मङ्गलेऽनर्थप्रतिघाते साध्वीभिः, सश्रीकाभिः-शोभायुक्ताभिः, हृदयगमनीयाभिः- सुबोधाभिः, हृदयप्रह्लादनीयाभिः हृदयगत-कोपशोकाभिग्रन्थिविलयनकरीभिरित्यर्थः, कर्णमनोनिर्वृतिकरीभिः श्रोत्रचेतसोरत्याह्लादकरीभिरित्ति भावः। अर्थशतिकाभिः-अर्थशतानि सन्ति यासा ता अर्थशतिकास्ताभिः। अपुनरुक्ताभिरिति व्यक्तं। 'वग्गूहि ति वाग्भिर्गीर्भिः। एकार्थिकानि प्राय इष्टादीनि वागृविशेषणानि हर्षप्रकर्षद्योतकानीति। अनवरतं-निरन्तरं अभि-नन्दयन्तो-भगवन्तं समृद्धिमन्तमाचक्षाणाः। अभिष्टुवन्तश्च-अभिमुख्येन स्तुतिं कुर्वाणाः। 'जय जये'ति सम्भ्रमे द्विर्वचन। जय जय त्वं। 'नंदे'ति। नन्दति-समृद्धो भवतीति नन्दस्तस्यामन्त्रणं हे नन्द! दीर्घत्वं च प्राकृतत्वात्। अथवा हे जगन्नंद! त्व जय। भुवनसमृद्धिकारक हे भद्र! कल्याणवत्! कल्याणकारी त्वं जय जय। अथवा जगद्भद्रकारिन्! त्वं जयेति। कथंभूतस्त्व? 'धम्मेणे'ति। धर्म्मेण हेतुभूतेन न त्वभिमाना-दिना। अभीतः-परीषहोपसर्गेभ्यः भयमाकस्मिकादि, भैरव सिंहादिसमुत्थं तयोः क्षान्त्या क्षमः, न पुनरसा-मर्थ्यादिना। धर्म्मे-प्रस्तुतसंयमरूपे तवाविघ्नं-विघ्नाभावो भवत्विति कट्टु इत्युच्चार्य पुनरपि अभिनन्दति-अभिष्टुवते च स्वजना एव। 'तए ण उसभे' इत्यादि। ततस्तदनन्तरं ऋषभोऽर्हन् कौशलिकः 'नयणे'त्यादि। नयनमालाः-श्रेणिस्थितजननेत्रपङ्क्तयस्तासां सहस्रैः-प्रेक्ष्यमाणः प्रेक्ष्यमाणः- पुन पुनरवलोक्यमानः। एवं यावन्निर्गच्छति यथौपपातिके यावदाकुलबोलबहुलं नभः कुर्वन् विनीताया राजधान्या मध्य मध्येन

निर्गच्छति । तच्चौपपातिके यथा 'हिअयमालासहस्सेहिं अभिनंदिज्जमाणे अभिनंदिज्जमाणे, मणोरहमाला-सहस्सेहिं विच्छिप्पमाणे विच्छिप्पमाणे, वयणमालासहस्सेहिं अभिथुव्वमाणे अभिथुव्वमाणे, कंतिदिव्व-सोहग्गगुणेहिं पत्थिज्जमाणे पत्थिज्जमाणे, दाहिणहत्थेण बहूण णरणारिसहस्साणं अंजलिमालासहस्साइं पडिच्छमाणे पडिच्छमाणे अंगुलिमालासहस्साइं दाइज्जमाणे दाइज्जमाणे, भवणपंतिसहस्साइं समइच्छमाणे समइच्छमाणे, ततीतलतालतुडिअगीअवाइअरवेणं महुरेण य मणहरेण जयसद्दघोसमीसिएण मंजुमंजुणा घोसेण पडिबुज्झमाणे पडिबुज्झमाणे, कंदरगिरिविवरकुहरगिरिवरपासाउद्धघणभवणदेवकुलसिंघाडगतिग-चउक्कचच्चरआरामुज्जाणकाणणसहापवापदेसदेसभागे पडिसुअसयसहस्ससंकुलं करेंते हयहेसिअहत्थि-गुलगुलाइअरहघणघणाइअसद्दमीसिएणं महता कलकलरवेणं जणस्स महुरेण पूरयंते सुगंधवरकुसुमचुण्ण-उव्विद्धवासरेणुकविलनभं करेंते कालागुरुकुंदुरुक्कतुरुक्कधूवनिवहेण जीवलोकमिव वासयंते समंतओ खुभि-अचक्कवालं पउरजणबालवुड्ढपमुइअतुरिअपहाविअवाउलाउलबोलबहुलं नहं करेंते विणीआए रायहाणीए मज्झं मज्झेणं निग्गच्छइ त्ति' । अस्यार्थः—'हिअय'त्ति । हृदयमालासहस्रैरुत्प्राबल्येन नन्द्यमानः— समृद्धि-मुपनीयमानः 'जय जीव नंदे' त्यादिपर्यालोचनादिति भावः । 'मणोरह'त्ति । मनोरथमालासहस्रस्य निरन्तर परिचर्यापरायणा भवाम इत्यादिसर्जनविकल्पैर्विशेषेण स्पृश्यमानः । 'वयण'त्ति । वचनमाला-सहस्रैरभिष्टूयमानः । कान्तिदिव्यसौभाग्यगुणैर्हेतुभूतैः प्रार्थ्यमानो—भर्तृतया—स्वामितया वा स्त्रीपुरुषजने-नाभिलष्यमाण इत्यर्थः । 'दाहिण'त्ति । दक्षिणहस्तेन बहूना नरनारीसहस्राणा अञ्जलिमालासहस्राणि प्रतीच्छन्—गृह्णन् । 'अंगुलि'त्ति । अङ्गुलिमालासहस्रैर्दर्श्यमानः । 'भवण'त्ति । भवनपङ्क्तिसहस्राणि समतिक्रामन् । 'तंतीतल'त्ति । तन्त्र्यादीनां गीते—गीतमध्ये यद्वादितं—वादनं तेन यो रवः—शब्दस्तेन मधु-रेण—मनोहरेण जयशब्दघोषमिश्रितेन मञ्जुमञ्जुना—न ज्ञायते कोऽपि किमपि जल्पतीति अतिकोमलेन वा घोषेण च लोकाना स्वरेण प्रतिबुध्यमानः—सावधानीभवन् । 'कंदरे'त्यादि । कन्दराणि दर्यः, गिरीणां विव-रकुहराणि गुहा पर्व्वतान्तराणि वा । गिरिवराः—प्रधानपर्व्वताः । प्रासादाः—सप्तभूमिकादयः । 'उद्धघण'त्ति ऊर्ध्वघनभवनानि—उच्चाविरलगेहानि । देवकुलानि प्रतीतानि । शृङ्गाटकचतुष्कचत्वराणि प्राग्वत् । आरामाः—पुष्पजातिप्रधानाः । उद्यानानि—पुष्पादिमद्वृक्षयुक्तानि । काननानि—नगराद्दूरवर्त्तीनि । सभा—आस्थायिकाः । प्रपा—जलदानस्थानं, एतेषां ये प्रदेशदेशरूपा भागाः । तत्र प्रदेशाः—लघुतरा भागाः देशास्तु महत्तरा भागास्तान् 'पडिसुअ'त्ति । प्राकृतत्वाद् बहुवचनार्थमेकवचन ततश्च तान् प्रदेशदेशभागान् प्रतिशब्दशतसहस्रसङ्कुलान् कुर्व्वन् भगवान् निर्गच्छतीति सम्बन्धः । 'हयहेसिअ'त्ति । हयाना हेषितरूपो हस्तिनां गुलगुलायितरूपो रथानां घनघनायितरूपश्च यः शब्दस्तेन मिश्रितेन जनस्य महता मधुरेण च कलकलरवेण पूरयन्नित्यत्र नभ इत्यनेन प्रदेशदेशभागानित्यनेन वा सम्बन्ध । 'सुगंधे'त्यादि । सुगन्धानां वरकुसुमानां चूर्णानां उद्विद्धः—ऊर्ध्वं गतो यो वासरेणुर्वासक रजस्तेन कपिलमेवंविधं नभः कुर्व्वन् । तथा 'कालागुरु'त्ति । कालागुरु-कुन्दुरुक्कतुरुष्कधूपनिवहेन जीवलोकं वासयन्निव समन्ततः—सर्व्वतः क्षुभितानि चक्रवालानि—जनमण्डलानि यत्र निर्गमे तद्यथा भवतीत्येवं । तथा 'पउरे'त्यादि । प्रचुरजनाश्च । अथवा पौरजनाश्च बालवृद्धाश्च ये प्रमुदितास्त्वरिताः प्रधाविताश्च—शीघ्रं गच्छन्तस्तेषां व्याकुलाकुलानामतिव्याकुलानां यो बोल.—शब्दः स बहुलो यत्र तत्तथा । तदेवंभूत नभः कुर्व्वन् ऋषभो भगवान् विनीतायां राजधान्यां मध्य मध्येन निर्गच्छति निर्गत्य च यत्कृतवांस्तदाह 'आसिअसंमज्जिअ'त्ति । आसिक्तमुदकच्छटाभिः संमार्जित-कच-

वरशोधनेन सिक्तशुचिकं संमार्जितेन हेतुभूतेन सिक्तं सत् शुचिर्भवति नान्यथेति । अत एव पुष्पोपचार-कलित. यतः कचवरशोधनपुरस्सरं जलच्छटादिना सिक्त एव पुष्पोपचारार्हो भवति तस्मादेवेत्यर्थः । पुष्पैर्य उपचारस्तेन कलितं पुष्पैः पूजितमित्येवेत्यर्थः । एतादृशं सिद्धार्थवनविपुलराजमार्गं सिद्धार्थवनस्य यो विपुलो-विस्तीर्णो राजमार्गस्तं कुर्वन् । यद्यपि भगवान् स्वयं तथाक्रियावान्न भवति तथापि भगवद्भक्त्यैव भगवन्तमुद्दिश्य कुर्वाणो देवादिजनोऽपि भगवत्युपचर्यते । पुनरपि कीदृशं कुर्वन्नित्याह- हयगये'त्यादि । हयगजरथानां 'पहकर'त्ति । समूहवाचीदेशीशब्दस्तेन 'पाइक्कचडकरेण'त्ति । पदातिजनसमूहेन पदातिजनवेगसञ्चारेण वा मन्दं मन्दं यथा भवति तथा हयादिसञ्चारक्रमेण न पुनः सहसैवेत्यर्थः । उद्धतरेणुकम् उत्प्राबल्येन हता-मर्दिता रेणवो यत्र स तथा त । यद्वा 'हनङ्क हिंसागत्योरि'तिवचनात् उद्-ऊर्ध्वं हता-गता गगनव्यापिन्यो रेणवो यत्र स तथा तं । तादृशं कुर्वन् यत्रैव सिद्धार्थवनमुद्यानं यत्रैवाशोकवरपादप-अशोकनाम्ना वृक्षविशेषस्तत्रैवोपागच्छति, उपागत्य च तस्याधः शिबिका स्थापयति, स्थापयित्वा च शिबिकायाः प्रत्यवतरति, प्रत्यवतीर्य च स्वयमेवाभरणालङ्कारम् अवमुञ्चति अवमुच्य च स्वयमेव चतसृभिः अष्टाभिः-स्तोककेशग्रहणलक्षणाभिरर्थादिह मुष्टिभिरित्यर्थः । लोचं कृत्वा । तत्र चतस्रो मुष्टयस्त्वेवम्-एकया-मुष्ट्या श्मश्रुकूर्चयोर्लोचः तिसृभिर्मुष्टिभिश्च यावता मस्तके लोचः कृतस्तावत । एका मुष्टिं-मुष्टिग्राह्यकेशलक्षणां वायुनोभयोः स्कन्धयोर्लुठन्तीं कनककलशोपरि नीलोत्पलपिधानानुकारिणीं वीक्ष्य प्रमुदितहृदयेन शक्रेण सोपरोधं विज्ञप्तो भगवान् एतां मुष्टिं यथावस्थितामेव रक्ष प्रभो ! ततो भगवता शक्रोपरोधात सा रक्षितेति । यदुक्तं-

नाथ ! त्वदंसयोः स्वर्णरुचोर्मरकतोपमा । वातानीता विभात्येषा तदाऽऽस्तां केशवल्लरी ॥१॥

तथैव धारयामास तामीशः केशवल्लरीं । याच्ञामेकान्तभक्तानां स्वामिनः खण्डयन्ति न ॥२॥

इति । 'छट्ठेणं'ति । षष्ठेन भक्तेन उपवासद्वयलक्षणेन तपसा अपानकेन-पानीयाहारवर्जितेन 'आसाढाहिं'ति । आसाढशब्देनोत्तराषाढा पदैकदेशे पदसमुदायोपचारात् 'पच उत्तरासाढे'त्ति वक्ष्यमाणत्वाच्च बहुत्वमार्षत्वात्सूत्रानुलोम्याच्च उत्तराषाढानक्षत्रेण योगमुपागतेनार्थाच्चन्द्रेणेति योज्यम् । 'उग्गाणं'ति । उग्रा-ऋषभदेवेन ये आरक्षकत्वेन नियुक्तास्तद्वंशजाः । भोगा-ये तेनैव गुरुत्वेन व्यवहृतास्तद्वंशजाः । एवं राजन्या वयस्यतया व्यवस्थापिताः । क्षत्रिया-ज्ञाताः शेषप्रकृतितया व्यवस्थापिताः । तेषां चतुर्भिः पुरुषसहस्रैर्बन्धुसुहृद्वर्गेण भरतेश्वरेण च भूयोभूयो निवार्यमाणैरपि स्वामिनः पूर्वमतिशायिनमुपकारं संस्मरद्भिः षट्पदैरिव भगवत्पादपद्मविरहासहिष्णुभिः तृणवत्पुत्रकलत्रादिराज्यं च परित्यज्य या स्वामिनो गतिः सैवास्माकमपीति कृतनिश्चयैः सार्द्धं 'एगं देवदूसमादाए'त्ति । एकं देवदूष्यं-इन्द्रेण वामस्कन्धेऽर्पित दिव्यवस्त्रविशेष आदाय-गृहीत्वा । मुण्डो द्रव्यभावाभ्यां द्रव्यतः-शिरःकूर्चलोचनेन भावतः-क्रोधाद्यपनयनेन भूत्वा अगारात्-गृहात् निष्क्रम्येति शेषः । अनगारितां साधुतां प्रव्रजितः-श्रमणीभूत इत्यर्थ ॥

अथ प्रव्रज्यां प्रतिपन्नो भगवान् कीदृशः सञ्जात ? इत्याह

**उसभे णं अरहा कोसलिए संवच्छरं साहिअं चीवरधारी होत्था । तेण परं अचेलए । जप्पभिइं च णं उसभे अरहा कोसलिए मुंडे भवित्ता णं अगाराओ अणगारिअं पव्वइए तप्पभिइं च**

णं उसभे अरहा कोसलिए णिच्चं वोसट्ठकाए चिअत्तदेहे जे केइ उवसग्गा उप्पज्जंति तं०। दिव्वा वा ३ जाव पडिलोमा वा अणुलोमा वा। तत्थ पडिलोमा वित्तेण वा जाव कसेण वा काए आउट्टेज्जा। अणुलोमा वंदेज्ज वा जाव पज्जुवासेज्ज वा। ते सव्वे सम्मं सहइ जाव अहिआसेइ। तए णं से भगवं समणे जाए इरिआसमिए जाव पारिट्ठावणिआसमिए। मणसमिए वयसमिए कायसमिए। मणगुत्ते जाव गुत्तबंभयारी अकोहे जाव अलोहे संते पसंते उवसंते परिनिव्वुडे छिन्नसोए निरुवलेवे संखमिव णिरंजणे, जच्चकणगमिव जावरूवे, आदरिसपलिभागे इव पागडभावे, कुम्मो इव गुत्तिदिए, पुक्खरपत्तमिव निरुवलेवे, गयणमिव निरालंबे, अणिले इव णिरालए, चंदो इव सोमदंसणे, सूरो इव तेअस्सी, विहग इव अप्पडिबद्धगामी, सागरो विव गंभीरे, मंदरो इव अकंपे, पुढवि विव सव्वफाससहे, जीवो विव अप्पडिहयगई। नत्थि णं तस्स भगवंतस्स कत्थ वि पडिबंधे। से अ पडिबंधे चउव्विहे भवइ। तं जहा—दव्वओ खित्तओ कालओ भावओ। दव्वतो इह खलु माया मे, पिता मे, भाया मे, भगिणी मे, जाव संगयसंथुअं मे, मे हिरण्णं, मे सुव्वण्णं, जाव उवगरणं मे। अहवा समासओ सच्चित्ते वा अच्चित्ते वा मिसए वा दव्वजाए सेवं तस्स ण भवइ। खित्तओ गामे वा णगरे वा अरण्णे वा खेत्ते वा खले वा गिहे वा अंगणे वा एवं तस्स ण भवति। कालओ थोवे वा लवे वा मुहुत्ते वा अहोरत्ते वा पक्खे वा मासे वा उऊ वा अयणे वा संवच्छरे वा अण्णयरे वा दीहकाले वा पडिबंधे एवं तस्स ण भवति। भावओ कोहे वा जाव लोहे वा भए वा हासे एवं तस्स ण भवति। से णं भगवं वासावासवज्जं हेमंतगिम्हासु गामे एगराइए णगरे पंचराइए ववगयहाससोगअरइरइभयपरित्तासे निम्ममे निरहंकारे लहुभूए अगंथे वासीछेअणे अदुट्ठे, चंदणाणुलेवणे अरत्ते, लेट्ठुंमि अ कंचणमि अ समे, इहलोए परलोए अपडिबद्धे जीविअमरणे निरुवकंखी संसारपारगामी कम्मसंगणिग्घायणट्ठा अब्भुट्ठिए विहरइ। तस्स णं भगवंतस्स एतेण विहारेणं विहरमाणस्स एगे वाससहस्से वइक्कंते समाणे पुरिमतालणगरस्स बहिआ सगडमुहउज्जाणंसि णग्गोहवरपायवस्स अहे झाणंतरिआए वट्टमाणस्स फग्गुणबहुलस्स एक्कारसीए पुव्वण्हकालसमयंसि अट्ठमेणं भत्तेणं अपाणएणं उत्तरासाढाणक्खत्तेणं जोगमुवागएणं अणुत्तरेणं णाणेणं अणुत्तरेणं दसणेणं अणुत्तरेणं चरित्तेणं अणुत्तरेणं तवेणं अणुत्तरेणं बलेणं वीरिएणं आलएणं विहारेण भावणाए खंतीए मुत्तीए गुत्तीए तुट्ठीए अज्जवेणं मद्दवेणं लाघवेण सुचरिअसोवचयफलनिव्वाणमग्गेणं अप्पाणं भावेमाणस्स अणंते अणुत्तरे निव्वाघाए णिरावरणे कसिणे पडिपुण्णे केवलवरणाणदंसणे समुप्पण्णे। जिणे जाए केवली सव्वण्णू सव्वदरिसी सनेरइअतिरिअनरामरस्स लोगस्स पज्जवे जाणइ पासइ। तं जहा-आगइं गइं ठिइं उववायं भुत्तं कडं पडिसेविअं आवीकम्मं रहोकम्मं तं तं कालं मणवयकायजोगे एवमादी जीवाण वि सव्वभावे अजीवाण वि सव्वभावे मोक्खमग्गस्स विसुद्धतराए भावे जाणमाणे पासमाणे

एस खलु मोक्खमग्गस्स मम अग्गेसिं च जीवाणं हिअसुहनिस्सेसकरे सव्वदुक्खविमोक्खणे परमसुहसमाणणे भविस्सति त्ति। तए णं से भगवं समणाणं णिग्गंथाणं णिग्गंथीण य पंच महव्वयाइं सभावणगाणि सव्वजीवणिकाए धम्मे देसमाणे विहरति। तं जहा—पुढविकाइए भावणागमेणं पंच महव्वयाइं सभावणगाणि भाणिअव्वाइं। उसभस्स णं अरहओ कोसलिअस्स चउरासीई गणहरा होत्था। उसमस्स णं अरहओ कोसलिअस्स उसमसेणपामोक्खाओ चुलसीइ समणसाहस्सीओ उक्कोसिआ समणसंपया होत्था। उसमस्स णं बंभिसुंदरिपामोक्खाओ तिण्णि अज्जिआसयसाहस्सीओ उक्कोसिआ अज्जिआसंपया होत्था। उसमस्स णं सेज्जंसपामोक्खाओ तिण्णि समणोवासगसयसाहस्सीओ पंच य साहस्सीओ उक्कोसिआ समणोवासगसंपया होत्था। उसमस्स णं अरहओ सुभद्दापामोक्खाओ पंच समणोवासिआसयसाहस्सीओ चउपण्णं च सहस्सा उक्कोसिआ समणोवासिआसंपया होत्था। उसभस्स णं अजिणाणं जिणसंकासाणं सव्वक्खरसण्णिवाईणं जिणो विव अवितहवागरमाणाणं चत्तारि चोद्दसपुव्वीसहस्सा अद्धट्ठमा य सया उक्कोसिआ चोद्दसपुव्वीसंपया होत्था। उसमस्स णं नव ओहिणाणीसहस्सा उक्कोसिआ०, वीसं जिणसहस्सा, वीसं वेउव्विअसहस्सा छच्च सया [पण्णासा] बारस वादिसहस्सा छच्च सया पण्णासा। उसमस्स णं गइकल्लाणाणं ठिइकल्लाणाणं आगमेसिभद्दाणं बावीसं अणुत्तरोववाइअसहस्सा णव य सया। उसमस्स णं वीसं समणसहस्सा सिद्धा, चत्तालीसं अज्जिआसहस्सा सिद्धा सट्ठिं अंतेवासिसहस्सा सिद्धा। अरहओ णं उसमस्स बहवे अंतेवासी अणगारा भगवंतो अप्पेगइआ मासपरिआगा एवं जहा उववाइए सव्वो अणगारवण्णओ जाव उड्ढं—जाणू अहोसिरा झाणकोट्ठोवगया संजमेणं तवसा अप्पाणं भावेमाणा विहरंति। अरहओ णं उसमस्स दुविहा अंतगडभूमी होत्था। तं जहा-जुगंतकडभूमी अ परिआअंतगडभूमी अ। जुगंतगडभूमी जाव असंखेज्जाइं पुरिसजुगाइं, परिआअंतगडभूमी अंतमुहुत्तपरिआए अंतमकासी ॥

'उसमे ण' मित्यादि। ऋषभोऽर्हन् कौशलिकः साधिकं-मासेनाधिकं संवत्सरं यावच्चीवरधारी अभवत्। ततः परमचेलको वस्त्ररहितः। यद्यप्येतत्सूत्रं बहुष्वादर्शेषु दृश्यते। परं

'सक्को अ लक्खमुल्लं सुरदूसं ठवइ सव्वजिणखंवे। वीरस्स वरिसमहिअं सया वि सेसाण तस्स ठिई' ॥१॥ त्ति ग्रन्थान्तरवचनादधिकं सम्भाव्यते। 'जप्पमिइं'ति। यद्दिनादारभ्य यावद्भगवान् प्रव्रजितः 'तप्पमिइं'ति। तत्प्रभृति ऋषभोऽर्हन् कौशलिको नित्य—निरन्तरं व्युत्सृष्टकायः—उपेक्षितशरीरः संस्काराभावात्। यद्यपि व्युत्सर्गशब्देन त्यागोऽपि भण्यते तथापीह संस्काराभावहेतुकव्युत्सर्गाङ्गीकारे उपेक्षैव युक्ता, तत्रैव संस्काराभावसम्भवात्। अत एव त्यक्तदेहः देवादिकृतोपसर्गसहनान् नेदं शरीरमस्मदीयमिति धिया, त्यागमन्तरेण तथोपसर्गसहनासम्भवात्। केषुचिदादर्शेषु 'उसमस्स णं अरहओ

कोसलिए वोसट्ठकाए' इत्यादि-पाठो दृश्यते, तत्रान्वयाभावात् विभक्तिपरिणामो लेखकदोषो वाऽन्यथा सङ्गतिर्वा घटनीया । 'जे केइ उवसग्ग'त्ति । ये केचिदुपसर्गा उत्पद्यन्ते । तद्यथेत्युपदर्शने । दिव्या-देव-सम्बन्धिनो देवैः कृता इत्यर्थः । यावत्करणात् मनुष्यतिर्यक्कृता अपि वाच्याः । ते चोपसर्गाः प्रतिलोमाः-प्रतीपा लोम्नां प्रतिलोमा. अत्समासान्तः प्रतिकूला इत्यर्थ' । एवमनुलोमा-अनुकूलाः । अथानुकूलप्रतिकूलयोः कथं सद्भाव ? इति शिष्याकूते सत्याह-'तत्थे' त्यादि । तत्र प्रतिकूलानुकूलयोर्मध्ये प्रतिलोमास्तावत 'वित्तेण'त्ति । अनार्योऽनार्यकल्पो वा कश्चित् वेत्रेण जलजवंशात्मकेन, यावत् कशेन चर्मविकारेण यावच्छव्दा-दण्डादीना परिग्रहः। 'काए'त्ति प्राकृतत्वात् द्वितीयार्थे प्रथमा सप्तमी वेति कृत्वा काय-शरीरं आकुट्टयेत्ताडयेत काये पीडामुत्पादयेदिति भावः । एवं प्रतिलोमपरीपहसम्भवः । यद्यपि तदानीं प्रतिलोमोपसर्गकारिणां मनुजानामभाव एव सम्भाव्यते, तथापि भगवत. स्वरूपाविष्करणनिमित्तमेवैतद् भणनमिति । अनुलोमास्तु भक्त्युल्लसितमानसः कश्चिदिन्द्रादिरिति गम्यम् । 'वदेज्ज'त्ति । वन्देत यावत्पर्युपासीत-सेवां कुर्वीत, यावत्करणात् पूजासत्कारादीना परिग्रहः । पूजयेत् पुष्पादिना, सत्कारयेत् वस्त्रादिनेत्यादि । एवमनुलोमपरीषहसम्भवः । अथैवं समुत्पन्नेषु परीषहेषु भगवान् किं करोति ? इत्याह-'ते सव्वे'त्ति तान् सर्व्वान् प्रति-लोमानुलोमान् उत्पन्नानितिगम्यं सम्यक् सहते-भयाभावेन, यावदध्यासयति-अविचलकायतया यावत्करणात् क्षमते-क्रोधाद्यभावेन । तितिक्षते-दैन्यानवलम्बनेन । 'तए णं'ति । ततः स भगवान् श्रमणोऽनगारो जातः । किंलक्षणः ? 'इरिआसमिए'त्ति । ईर्यायां-गमनागमनादौ सम्यगितः-प्राप्त ईर्यासमित' । एव सर्व्वत्र समासविधिः । यावत्पारिष्ठापनिकासमितः, यावत्करणात् 'भासासमिए' इत्यादि ग्राह्यम् । तत्र भाषायां-भाषणे समितः भाषासमितः । एषणाया-द्विचत्वारिंशद्दोषविशुद्धाहारग्रहणे समितः एषणासमितः । वद्धस्य मोक्ष इत्यादिवचनवदात्तस्य निक्षेपणं स्यात् तेनाऽऽदानपूर्व्विका वस्त्रपात्रादेर्या निक्षेपणा तस्यां समितः आदानभाण्डमात्रनिक्षेपणासमितः। उच्चारप्रस्रवणखेलजल्लसिङ्घानपारिष्ठापनिकासमितः। तत्रोच्चारप्रस्रवणे-पुरीषमूत्रे खेल-निष्ठीवनं सिङ्घानो-नासिकामलः जल्लः-शरीरजो मलस्तेषां परिष्ठापना तस्यां समित' निर्दोष-स्थण्डिले व्युत्सर्ज्जनात् । यद्यपि भाण्डादिसिङ्घानाद्यभावादन्त्यसमितिद्वयं तीर्थकृतां न सम्भवति तथापि सूत्रपाठस्य गृहस्थानामपि पारिष्ठापनिकाऽऽकारस्यैवाऽखण्डतैव युक्तेति न दोषः । तथा 'मणसमिए'त्ति । मनश्चित्तं तत्र समितः कुशलमनःप्रवर्त्तकः । एव वच काययोरपि वाच्यम् । तथा 'मणगुत्ते'त्ति । मनसोऽशुभप्रवृत्तिनिषेधः । यतः समितिः सत्प्रवृत्तिः गुप्तिस्तु अशुभप्रवृत्तिनिरोध इति । जाव 'गुत्तबंभयारि'त्ति । यावत् गुप्त-नवगुप्तिसंयुक्तं ब्रह्म-मैथुनविरतिरूपं चरतीत्येवंशीलो गुप्तब्रह्मचारी । यावत्करणात् 'वयगुत्ते कायगुत्ते गुत्ते गुत्तिंदिए'त्ति सङ्ग्रहः । तत्र वचःकाययोर्गुप्तिर्मनोवत् । 'गुत्ते'त्ति गुप्तः सर्व्वात्मना गुप्तत्वात् । गुप्तेन्द्रियो-गुप्तानि इन्द्रियाणि यस्य रागाद्यभावात् स तथेति । 'अकोहे'त्ति । अक्रोधः-क्रोधरहितो यावद्-लोभो-लोभरहित' । यावत्करणात् 'अमाणे अमाए'त्ति । मानमायाभ्या रहितः । यद्यपि छाद्मस्थ्ये भगवतोऽपि सञ्ज्वलनाः क्रोधादयः सन्ति तथापि तेषामपि प्रतनुकत्वात् तज्जन्यफलाभावाच्च अभावशब्दवाच्यत्वेऽपि न दोषः । अत एव 'संते पसंते' इत्यादि वचनम् । तत्र शान्तोऽन्तर्वृत्त्या, प्रशान्तो बहिर्वृत्त्या, उपशान्त उभयतः । अथवा श्रान्तो-भवभ्रमणात् । प्रश्रान्तः- प्रकृष्टचित्तत्वात् । उपशान्तो- निवृत्तः पापकर्म्मभ्यः । केचित्तु शान्त-उपशमवान् प्रशान्त-इन्द्रियनोइन्द्रियाभ्या उपशान्तः-क्रोधाद्यकरणेन । अत एव परिनिर्वृतः-सकलसन्तापवर्जितः । 'छिन्न'त्ति । छिन्नशोकश्छिन्नश्रोता वा छिन्नसंसारप्रवाह इत्यर्थः । 'निरुव'त्ति ।

निर्गतो लेपो-लेपनं, द्रव्यतः शरीरमलो भावतो मिथ्यात्वं च यस्मात् स निरुपलेपः। शङ्ख इव निरञ्जनः-निर्गतमञ्जनं-कालिमा यस्मात्स निरञ्जनः। यद्वा-रञ्जनं रागः-इन्द्रियार्थेष्वभिष्वङ्गस्तस्मान्निर्गत इत्यर्थः। 'जच्च'त्ति। जात्यकाञ्चनमिव जातरूपः जातं रूपं-स्वरूपं रागादिकुद्रव्यविरहात् यस्य स तथा। 'आदरिस'त्ति। आदर्शस्य-दर्पणस्य परिभाग-उपरितल स इव प्रकटा-व्यक्ताः स्फुटा इति यावत् भावाः-स्तम्भकुम्भाम्भोरुहादिपदार्थसार्था यत्र स तथा। अय भावः- यथाऽऽदर्शतलेऽभिमुखवस्तुजातं यथावत्प्रतिबिम्बते तथा भगवत्यपि जगदुदरवर्त्ति वस्तुजातं यथावत्प्रतिभासते इति। 'कुम्मो इव'त्ति। कूर्म्मवद् गुप्तेन्द्रियः। 'पुक्खर'त्ति। पुष्करं-पद्मं तस्य पत्रमिव निरुपलेपः पङ्कजलकल्पस्वजनविषयस्नेहराहित्यात्। 'गयण'त्ति। गगनमिव निरालम्बनो देशग्रामकुलाद्यालम्बनरहितत्वात्। 'अणिले इव'त्ति। अनिल इव-वायुरिव निरालय-आलयवर्जितः, वायोरिवैकत्रावस्थानाभावात् क्षेत्रादौ प्रतिबन्धवन्ध्यत्वेनौचित्येन निरन्तरविहारित्वादित्यर्थः। 'चंदो इव'त्ति। चन्द्रवत्सौम्यदर्शनः दर्शनमात्रेणाऽपि जनानामानन्दहेतुत्वात्। 'सूर इव'त्ति। सूर इव तेजस्वी, द्रव्यतो देहदीप्त्या भावतो ज्ञानेन परेषां क्षोभजनकत्वात्। 'विहग इव'त्ति। विहगः-पक्षी स इवाप्रतिबद्धतया गमनशीलोऽप्रतिबद्धगामी। 'सागरो विव'त्ति। सागरः-समुद्रस्स इव गम्भीरो हर्षशोकादिकारणसद्भावेऽप्यविकृतचित्तः। 'मंदरो इव'त्ति। मन्दरो-मेरुः स इवाऽप्रकम्पः-कम्पनरहितः उत्पन्नेष्वपि प्रतिकूलानुकूलेषूपसर्गेषु कल्पान्तकालपवनेन मेरुरिवाचलस्वभाव इत्यर्थः। 'पुढवि'त्ति। पृथिवीव सर्व्वान् स्पर्शान्-प्रतिकूलेतरान् शीतोष्णादीन् सहत इति सर्व्वस्पर्शसहः। 'जीवो विव'त्ति। जीववदप्रतिहतगतिः सर्व्वत्रौचित्येनास्खलितविहारित्वात प्रत्यनीककुतीर्थिकादियुक्तेष्वपि देशनगरादिषु विहरतो भगवतः स्खलनाभावादिति भावः। संयमेऽप्रतिहतवृत्तेर्वा अप्रतिहतगतिरित्युच्यते। अथ द्रव्यादिषु भगवतः प्रतिबन्धाभावं दर्शयति-'नत्थि णमि'त्यादि। नास्त्ययं पक्षो यदुत-तस्य भगवतः कुत्रचिदपि प्रतिबन्धो भवति। तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतश्च। तत्र द्रव्यत' 'इह'त्ति। इह-मनुष्यलोके। खलुर्वाक्यालङ्कारे। 'माया मे' त्ति। माता मे पिता मे भ्राता मे भगिनि मे जाव 'संगंथसथुअं मे' त्ति यावत्सद्ग्रन्थसंस्तुतं मे। तत्र सद्ग्रन्थः-स्वजनस्यापि स्वजनः पितृव्यपुत्रशालादि संस्तुतं-भूयो भूयो दर्शनेन परिचित, यावत्करणात् स्नुषादीना परिग्रहः। एवं हिरण्यादिष्वपि भाव्यम्। अथ प्रकारान्तरेणापि द्रव्यतः प्रतिबन्धमाह-'अहवेत्यादि। अथवेति प्रकारान्तरद्योतक'। समासतः- संक्षेपतः सचित्ते-सचेतने गजाश्वादौ, वाकारो विकल्पार्थः, अचित्ते-अचेतने आभरणादौ मिश्रेऽलङ्कृतभोजनादौ द्रव्यजाते तस्य भगवतः स प्रतिबन्धः- एवं मदीयमिदमित्येवंरूपेणाभिप्रायो न भवतीत्यर्थः। अथ क्षेत्रत आह-'खेत्तओ' इत्यादि स्पष्टम्। नवरं क्षेत्रं-धान्यजन्मभूमिः खलं-धान्यमलनपवनादि स्थण्डिलम्। एवं प्रागुक्तप्रकारेण ममकारस्तस्य भगवतो न भवतीत्यर्थः। 'कालओ'त्ति। कालतः स्तोके वा-सप्तप्राणात्मके लवे-सप्तस्तोकात्मके मुहूर्त्ते-सप्तसप्ततिलवप्रमाणे, अहोरात्रादि प्रतीतं। नवरमन्यतरस्मिन् वा दीर्घकाले वर्षशतसहस्रादौ। एवं प्रागुक्तप्रकारेण मदीयमिदमिति बुद्ध्या तस्य भगवतः प्रतिबन्धो न भवतीत्यर्थः। अथ भावत आह-'भावओ'त्ति। भावतः क्रोधे यावल्लोभे यावच्छब्दात् मानमाययोर्ग्रहणम्। तत्र 'भए व'त्ति। भयमिहलोकादिभेदतः सप्तप्रकारं तद्यथा

इहपरलोगादाणमकम्हा आजीवमरणमसिलोगो। सत्त य भयठाणाइं जिणेहिं सिद्धंतभणिआइं॥१॥

इति। तत्र। तथा हास्ये वा, उपलक्षणात् 'पिज्जे वा दोसे वा कलहे वा अब्भक्खाणे वा पेसुण्णे वा

परपरिवाए वा मायामोसे वा जाव मिच्छादंसणसल्ले वा' इति । तत्र पिज्जे'त्ति । प्रेमणि-अनभिव्यक्तमायालोभस्वभावेऽभिष्वङ्गमात्रे । 'दोसे त्ति । द्वेषे-अनभिव्यक्तक्रोधमानस्वरूपे अप्रीतिमात्रे । यद्वा प्रेम-रागः-सुखाभिज्ञस्य सुखानुस्मृतिपूर्व्वः सुखे तत्साधनेष्वभिमते विषये गर्द्धस्तस्मिन् । द्वेषो-दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्व्वो दुःखे तत्साधने वा अप्रीतिस्तस्मिन् । तथा 'कलहे' असभ्यवचनराटयादौ । अभ्याख्याने-असद्दोषाविष्करणे । परपरिवादे-विप्रकीर्ण्णपरगुणदोषवचने । 'अरइ'त्ति । अरतिर्मोहनीयोदयाच्चित्तोद्वेगफला रतिर्मोहनीयोदयाच्चित्ताभिरतिः रतिश्चारतिश्चेति समाहारद्वन्द्वे अरतिरतिः तस्मिन् । मायामृषे-मायामोषे वा वेषान्तरभाषान्तरकरणेन वा परवञ्चन मायया सह मृषा मोषो वा तस्मिन् मायामृषे मायामोषे वा । मिथ्यात्व-कुश्रद्धानं शल्यमिवानेकानन्तदुःखहेतुत्वात् मिथ्यात्वशल्यं तस्मिन् । एवममुना प्रकारेण तस्य भगवतः प्रतिबन्धो न भवतीति । अथ हेमन्तादिकालविभागेन भगवतोऽवस्थानं कथं केन प्रकारेण ? इत्याह- से ण भगवमि'त्यादि । से अथार्थे । णमित्यलङ्कारे । वर्षावासवर्ज्जं हेमन्तग्रीष्मयोः ग्रामे एका रात्रिर्वासहेतुर्यस्य स एकरात्रिकः । एवं नगरे पञ्चरात्रिको विहरतीति सम्बन्धः । किंभूत ? इत्याह-'ववगय'त्ति । व्यपगता-दूरं गताः निस्सत्ताकीभूता इत्यर्थः । हासश्च शोकश्चारतिश्च रतिश्च भय च परित्रासश्चेत्येते यस्मात् स तथा । निर्म्ममः- निर्गतः सर्व्ववस्तुषु ममेति प्रतिबन्धसूचकः शब्दो यस्मात्स तथा । निरहङ्कारः निर्गतोऽहङ्कारो मानमूलकाऽऽत्मोत्कर्षरूपो यस्मात् स तथा । लघुभूतः परिग्रहाभावात् । अत एवाग्रन्थः-बाह्याभ्यन्तरग्रन्थरहितः । तथा वासी-सूत्रधारशस्त्रविशेषस्तया छेदने-तक्षणे अदुष्टो-न द्वेषाकुलचित्तः । चन्दनानुलेपनेऽरक्तो-न रागवान् । लेष्टु- पाषाणस्तस्मिन् काञ्चनं-सुवर्णं तस्मिंश्च समः-उपेक्षणीयत्वेन तत्र साम्यभाग्, न पुन सुवर्णं पाषाणत्वेन जानाति न वा पाषाणं सुवर्ण्णत्वेन मिथ्यात्वप्रसक्तेः । इहास्मिन् लोकेऽवाप्तमनुजभवे परलोके च देवभवादिलक्षणे अप्रतिबद्धः- प्रतिबन्धरहितः । अथवा इहलोकशब्देन ऐहिकसुखहेतवो धनादीनि, परलोको-देवभवादिलक्षणः तत्राप्रतिबद्धः । जीवितमरणयोर्निरुपकाङ्क्षी सुरासुरनरेश्वरकृतां पूजामवाप्य जीवितं दुस्सह्यपरीषहानवाप्य च मरणं नाभिलषतीत्यर्थः । 'संसार'त्ति । संसारश्चतुर्गतिकसंसरणरूपस्तस्य पारं-तीरं गन्तु शीलमस्येति संसारपारगामी । 'कम्मे'त्यादि । कर्म्मसङ्गो-ज्ञानावरणीयादिकर्म्मसम्बन्धस्तस्य निर्घातनं-विनाशस्तदर्थमभ्युत्थित-उद्यतः सन् विहरतीति । न चैव 'गामे एगराइए'त्यादिप्रवचनबलेन साधूनामपि मुख्यवृत्तिरियमेव भविष्यतीति शङ्कनीयं, यतः साधूनधिकृत्यैवविधसूत्रपाठोऽभिग्रहविशेषवत एवावसातव्यम् । औपपातिकवृत्तौ तथैव व्याख्यानात् । अत एव सामान्यतः साधूनां विहारे विचित्रताप्यागमे प्रतीता । तथाहि-'एगाहं पंचाह मासं च जहा समाहीए'त्ति श्रीनिशीथभाष्ये । अस्य व्याख्या-'पडिमापडिवण्णाणं एगाह पंचहो अहालदे । जिणसुद्धाणं मासो निक्कारणओ अ थेराणं ॥१॥ पडिमापडिवण्णाणं एगाहो अहालंदिआणं पचाहो 'जिण'त्ति । जिणकप्पिआणं सुद्ध-विसुद्धपारिहारिआणं, सुद्धगहणं पच्छित्तावत्तपारिहारिआनिसेहणत्थं, थेराणं च । एतेसि मासकापविहारो निव्वाघाए कारणाभावे, वाघाए पुण थेरकप्पिआ ऊणं अइरित्तं वा मासं अच्छंति ।

ऊणाइरित्तमासा एवं थेराण अट्ठ णायव्वा । इअरे अट्ठ विहरिउं नियमा चत्तारि अच्छंति ॥१॥ एवं ऊणा अइरित्ता थेराण अट्ठ मासा णायव्वा । इअरे णाम पडिमोपडिवण्णा अहालंदिआ विसुद्धपारिहारिआ जिणकप्पिआ य जहा विहारेण अट्ठ विहरिऊण वासारत्तिआ चउरो मासा सव्वे एगखित्ते

'अच्छति'। अथैवं विहरतो भगवतः कियता कालेन कस्मिन्नगरे कथं केवलोत्पत्तिः? इति वक्तुकाम आह 'तस्स णमि'त्यादि। तस्य भगवतः एतेन-प्रागुक्तप्रकारेण विहारेण विहरमाणस्य एकस्मिन् वर्षसहस्रे व्यतिक्रान्ते पुरिमतालस्य नगरस्य बहिः शकटमुखे उद्याने न्यग्रोधो-वटस्तन्नाम्ना वर-प्रधानो यः पादपो-वृक्षस्तस्याधः 'झाणंतरिआए'त्ति। ध्यानान्तरे। प्राकृतत्वादिकप्रत्ययः स्त्रीत्वं च। शुक्लध्यानविशेषे। अय भावः-शुक्लध्यानं चतुर्द्धा-पृथक्त्ववितर्कं सविचारम्, एकत्ववितर्कमविचारं, सूक्ष्मक्रियमप्रतिपाति, समुच्छिन्न-क्रियमनिवर्ति च। तेषामाद्ये भेदद्वये ध्याते अग्रेतनभेदद्वयस्यासम्प्राप्तौ एवंविधं यदन्तरं तद्ध्यानान्तरं तस्मिन् वर्त्तमानस्य फाल्गुनबहुलस्य-फाल्गुनकृष्णपक्षस्य एकादश्यां पूर्वाह्णकालसमये दिवसस्य पूर्वार्द्धसमये अष्टमेन भक्तेन-समयप्रसिद्धोपवासत्रयलक्षणेन अपानकेन-पानीयाहारवर्जितेन उत्तराषाढानक्षत्रेण योगमुपागतेन अर्थाच्चन्द्रेण सहेति गम्यम्। हेतुभूतेन अनुत्तरेणान्यासाधारणेन ज्ञानेन-मत्यादिचतुष्टयेन, दर्शनेन-चक्षुर्दर्शनादिना सम्यक्त्वेन वा, चारित्रेण-महाव्रतादिना तपसा-चतुर्थादि-संवत्सरपर्यन्तेन, बलेन-कायसमुत्थेन कर्म्मारिहननसमर्थेन, पराक्रमेण-वीर्यविशिष्टोत्साहस्तेन, आलयेन-स्त्रीजनाद्यसंसक्तेन, विहारेण-देशादिषु चङ्क्रमणेन भावनया-शुभाशुभभावानामनित्यतादिचिन्तनलक्षणया, क्षान्त्या-क्रोध-निग्रहरूपया, मुक्तिर्निर्ल्लोभता तया, गुप्तिर्मनःप्रभृतीनां गोपनं-संयमनं तया, तुष्टिर्मनःप्रसत्तिस्तया, आर्ज्जवेन-मायानिग्रहेण मार्दवेन-माननिग्रहेण, लाघवेन-क्रियासु दक्षत्वेन। अथवा लाघवं द्रव्यतोऽल्पोप-धिकत्वं भावतो गौरवत्रयत्यागस्तेन। 'सुचरिअ'त्ति। सुष्ठु-शोभनं चरितमाचरणं तेन सोपचयं स्फीतं फल-मुक्तिलक्षणं यस्यैवंविधेन निर्व्वाणमार्गेण-ज्ञानाद्यात्मकेनात्मानं भावयतो-वासयतः। अनेनात्मज्ञान-मेव प्रधानं मोक्षसाधनमित्युक्तम् 'अणंते'त्ति। अनन्तमनन्तार्थविषयत्वात् अक्षयाद्वा। अनुत्तरं सर्व्वोत्तम-त्वात्। निर्व्याघातं कटकुड्याद्यप्रतिहतत्वात्। निरावरणं क्षायिकत्वात्। कृत्स्नं सकलार्थग्राहकत्वात्। प्रतिपूर्णं सर्व्वांशसमन्वितत्वात् राकाचन्द्रवत्। केवलमसहायं, स्वविषयप्रकाशने नान्यत्सजातीयमपेक्षत इत्यर्थः। अत एव वरं-प्रधानं स्वरूपतो, न पुनः श्रुतज्ञानवत्परोपकारकत्वेन। ज्ञानं च दर्शनं च ज्ञानदर्शनं, ततः प्राग्पदाभ्यां कर्म्मधारयः। पुंस्त्वं च प्राकृतत्वात्। ननु अनन्तमनुत्तरमित्यादिविशेषणैरुभयोरप्य-विशेषेणोक्तत्वात् अनयोः कः प्रतिविशेषः? इति चेत्, उच्यते समानविषयत्वेपि ज्ञानं तावत् प्रधानविशेषो-पसर्ज्जनीकृतसामान्यार्थग्रहणलक्षणं, दर्शनं पुनः प्रधानसामान्योपसर्ज्जनीकृतविशेषार्थग्रहणलक्षणमिति विशेषः। अय भावः-ज्ञानं तावत्स्वविषयं प्रकाशयदशेषविशेषान् प्रधानभावेन प्रकाशयति यावत्सामान्यानि तु गौणभावेन, दर्शनं तु यावत्सामान्यानि प्राधान्येनाशेषविशेषांश्च गौण्येन। तत्र सामान्यानि सचेतना-चेतनादिद्रव्यसाधारणानि द्रव्यत्वादीनि, विशेषास्तु चेतनत्वादयोऽचेतनेष्ववर्त्तित्वादिपर्यालोचनया यावन्ति सामान्यानि तावन्त एव। अतो ज्ञानदर्शनयोः सामान्यानां विशेषाणां च प्राधान्याप्राधान्याभ्यामवभासकृतो विशेषोऽवसातव्यः। 'समुप्पण्णे'त्ति। सम्यगुत्पन्नं सर्व्वथा तदावरणापगमात् सर्व्वतः सर्वांशैः प्रादुर्भूत-मित्यर्थः, न पुनः क्षायोपशमिकमित्यादिवदभ्यासवशात्क्रमेण प्रवर्द्धमानं न वा असदेवोत्पन्नं नासतो जायते भावो नाभावो जायते सत' इति वचनात् तस्य चात्मना सहानादिसिद्धत्वात्। अयोत्पन्ने च केवलज्ञाने भगवान् कीदृशः संजात? इत्याह-'जिणे जाए'त्ति। जिनो-रागादिजेतृत्वाज्जातः-सम्पन्नः। तथा केवलमसहायमर्थात् ज्ञानं यस्य स केवली। यद्वा-केवलानि-परिपूर्णानि शुद्धान्यनन्तानि ज्ञानादीनि यस्येति। अत एव सर्व्वज्ञः-एकस्मिन् समये विशेषसामान्यात्मकान् सर्व्वानर्थान् जानातीति सर्वज्ञः। एवमपरस्मिन्

समये सामान्यविशेषात्मकान् सर्व्वानर्थान् पश्यतीत्येवं शीलः सर्व्वदर्शी। एतेन ज्ञानदर्शनयोरुत्पत्तेरारभ्य क्रमभावित्वं दर्शितम्। यद्यपि जीवस्वभावाद्युगपत् ज्ञानदर्शने न भवतः। यदागमः

'नाणंमि दंसणंमि अ इत्तो एगयरंमि उवउत्तो। सव्वस्स केवलिस्सवि जुगवं दो नत्थि उवओगा॥१॥ इति। एतच्च मतिज्ञानश्रुतज्ञानयोर्युगपत्कर्मक्षयोपशमससमुद्भवयोरपि युगपदुपयोगाभावदृष्टान्तेन विशेषणवतीकारेण समर्थितम्। अतीन्द्रियवस्तुषु युक्त्यपेक्षया सर्व्वज्ञोपदिष्टसिद्धान्तपक्षस्यैव बलवत्त्वात्। अत एवाह 'सनेरइअ'इत्यादि। यतः सर्वज्ञः सर्व्वदर्शी अत एव सनैरयिकतिर्यग्नरामरस्य-नारकतिर्यक्नरामरैः सहितस्य लोकस्य, उपलक्षणादलोकस्यापि पर्यायान् उत्पादव्ययलक्षणान् जानाति केवलज्ञानेन, पश्यति केवलदर्शनेन। न चैवं पर्यायानित्युक्ते द्रव्य न जानातीति शङ्कनीयम्। उत्पादव्ययोर्निराधारयोरनुत्पत्तेः तयोर्ज्ञानयोरविष्वग्भाववर्तिष्णु अन्वयि द्रव्यमपि ज्ञातमेव। तथा चाहु-

'द्रव्यं पर्यायवियुतं पर्याया द्रव्यवर्जिताः। क्व कदा केन किंरूपा दृष्टा मानेन केन वा॥१॥ अपिप्युक्तं-

'जं जं जे जे भावे परिणमइ पओगवीससा दव्वं। तं तह जाणइ जिणो अपज्जवे जाणणा नत्थि॥१॥ त्ति। अथ लोकस्य पर्यायान् कथं जानाति? इत्याह- 'तं जहे'त्ति। तद्यथेत्युपदर्शने। आगतिं गतिमित्यादि। जानातिपश्यतीति क्रियापदद्वयं 'डमरुकमणिन्यायेन'इहापि सम्बध्यते। तत्राऽऽगतिर्यतः स्थानादागच्छन्ति विवक्षितं स्थानं जीवाः, गतिर्यत्र मृत्वोत्पद्यन्ते, स्थितिः-कायस्थितिभवस्थितिभेदेन द्वेधा, च्यवनं-देवलोकाद्देवाना मनुष्यतिर्यक्ष्ववतरणम्, उपपातं-देवनारकाणा जन्मस्थानं, भुक्तमशनपुष्पादि, कृतं चौर्यादि, प्रतिषेवितं मैथुनादि, आविष्कर्म्म-प्रकटवृत्तं, रहःकर्म्म-प्रच्छन्नकृतमिति। 'त त कालमि'त्यादि। सप्तम्यर्थे द्वितीयेति तस्मिन् तस्मिन् काले मनोवाक्कायिकान् योगान् इत्येवमादीन् जीवानामपि सर्व्वभावान् अजीवानामपि-परमाण्वादीनामपि। अपिशब्द उभयत्रापि चकारार्थः समुच्चयेऽवसातव्यः। सर्व्वभावान् रूपरसगन्धस्पर्शादीन् पर्यायान् तथा मोक्षमार्गस्य 'विसुद्ध'त्ति विशुद्धतरान्-निर्म्मलतरान् भावान्-कर्म्मनिर्ज्जराहेतून् ज्ञानाद्यासेवनादिविधीन् जानन् पश्यंश्च एष उक्तो वक्ष्यमाणश्च, खलुरवधारणे, मोक्षमार्गो ज्ञानाद्यात्मकः षष्ठी चात्र प्रथमार्थे प्राकृतत्वात् ममान्येषा च जीवाना 'हिअ'त्ति। हितं-पथ्यं सुखं-शर्म्म निःश्रेयस-मोक्षः कल्याणं वा ततो द्वन्द्वः। तानि करोतीति हितसुखनिःश्रेयसकरः। अत एव सर्व्वदुःखविमोक्षणः। सर्व्वं मनोवाक्कायप्रभवं दुःखमसातवेदनीयोदयजन्यं विशेषेण सर्वांशनिःसत्ताकीभावेन 'मोक्षण् क्षेपे' इति वचनात् मोक्षयति-क्षेपयति विनाशयतीति यावत् सर्व्वदुःखविमोक्षणः। न च दुःखविमोक्षणमात्रेण सन्तुष्टिरत आह- 'परमसुह'त्ति। परमसुत्कृष्टं यत्सुखं तत्समानयति-सम्प्रापयतीति परमसुखसमाननः। यद्वा-परमसुखस्य समन्तात परमसुखतुल्यान्-परमसुखानन्यानित्यर्थः करोतीति परमसुखसमानयति 'णिज् वहुल नाम्नः कृगादिषु' इति सूत्रेण णिजि कर्त्तर्यनटि च परमसुखसमानन इति सिद्धिः। प्राणिनां परमसुखस्वरूपजनक इति भावः। 'भविस्सति'त्ति भविष्यति। इतीत्यमुना प्रकारेण मत्वा 'तते ण' मित्यादि। ततस्तदनन्तर स भगवान् श्रमणाना-तपःकर्म्मोद्यताना निर्ग्रन्थानां-साधूनां निर्ग्रन्थीनां साध्वीनां पञ्च महाव्रतानि सभावनकानि-निजनिजभावनोपेतानि। तथा षड् जीवनिकायान्-पृथिव्यादित्रसपर्यन्तान्। तथा धर्मौ-श्रुतचारित्ररूपौ अगारानगारमार्गरूपौ वा, द्विवचनस्य बहुवचनं प्राकृतत्वात्। देशयन्-उपदेशविषयी-

कुर्व्वन् विहरति-आस्ते विचरति वा । अथोक्तमेवार्थं व्यक्त्या भावयन्नाह-'तं जह'त्ति । तद्यथा-षट् जीवनिकायानिति सामान्येनाविशेषितमुक्तं तत्र षट् जीवनिकाया' के ? इति विशेषाऽऽकाङ्क्षायां 'पुढवि त्ति । पृथिवीकायिकान् पृथ्वी-पाषाणादिस्वरूपा प्रतीतैव सैव कायः-शरीरं येषा ते पृथिवीकायास्त एव पृथिवीकायिकास्तान् उपलक्षणादप्कायिकादिग्रहणम् । अथ कानि महाव्रतानि काश्च भावना ? इत्याकाङ्क्षायामाह-'भावणागमेण'ति । भावनागमेन-आचाराङ्गोक्तभावनासूत्रपाठेन पञ्च महाव्रतानि सभावनकानि भाव्यन्ते-वास्यन्ति गुणविशेषं प्रत्यारोप्यन्ते महाव्रतानि यकाभिस्ता भावनाः । ताश्च प्रति महाव्रतं पञ्च पञ्च भवन्ति । तेन सह पञ्चविंशत्या भावनाभिर्यानि तानि सभावनकानि । इहेति गम्य । यथा श्रीआचाराङ्गे सभावनकानि पञ्च महाव्रतानि भणितानि तथेहापि भणितव्यानीत्यर्थः । महाव्रतानि त्वेवं-सर्व्वस्मात् प्राणातिपाताद्विरमण, एवं सर्व्वेभ्यो मृषावादादत्तादानमैथुनपरिग्रहेभ्यो विरमणम् । एतेषा महत्त्वं च श्रावकव्रतापेक्षया सर्वसावद्यप्रत्याख्यानरूपतया चावसातव्यम् । ननु'अविसेसिअमुद्देसो विसेसओ होइ णिद्देसो'त्तिवचनात् 'तए ण से भगवमि'त्यादिसूत्रे प्रथमं महाव्रतान्युद्दिष्टानि 'तं जहे'त्यादि निर्देशसूत्रे तु पृथिवीकायिकपुरस्कारेण निर्देशः । तथा च कथं 'यथोद्देशं निर्देश'इति न्यायस्य संस्थितिः ? इति चेत् । उच्यते-इह प्रथमवाक्ये तीर्थकृतो देशनानुक्रमः सूचितः । यतस्तीर्थकृतस्तीर्थप्रवर्त्तनकाले प्रथमं महाव्रतान्येवोपदिशन्ति । तत् श्रुत्वा च गणधरादयः केचनपुरुषाः तथाविधचारित्रमोहनीयक्षयोपशमवशात् मुख्यवृत्त्योपदिष्टां सर्व्वविरतिमेव प्रतिपद्यन्ते । केचिच्च तथाविधचारित्रमोहनीयक्षयोपशमाभावात् महाव्रतेष्वक्षमाः द्वितीयपदवर्त्तिनं श्रावकधर्म्मं प्रतिपद्यन्ते । 'तं जहे' त्यादिना तु गणभृता सूत्ररचनानुक्रम' सूचितः । यतस्तीर्थकृत्सकाशात् तथा श्रुत्वापि गणधरादयः षट्जीवनिकायपरिज्ञानपूर्व्वकसम्यक्श्रद्धावत एव चारित्रं नान्यथेति धिया प्रथम षट्जीवनिकायानेव शास्त्रेषु निबध्नन्ति । अत एवाचाराङ्गे तथैव रचना तथैव चात्र निर्देशेऽपि ज्ञातव्यम् । यथोद्देशमितिन्यायोऽपि सूत्ररचनामाश्रित्य बाहुल्यपथपतितो द्रष्टव्यः । तेनैव क्वचिदल्पवक्तव्यत्वादिहेतुना व्यत्ययोऽपि प्रवचने प्रतीत इत्यल विस्तरेण । अथ श्रीऋषभस्य परिकरसम्पदमाह-'उसभस्स णमि'त्यादि । ऋषभस्य णमिति प्राग्वत् । अर्हत कौशलिकस्य चतुरशीतिर्गणधराः । तत्रैकवाचनाऽऽचारयतिसमुदाया गणास्तान् धरन्तीति गणधराः सर्व्वसाधूत्तमा इत्यर्थः । 'होत्थ'त्ति । अभवन्निति सर्व्वत्र योज्यम् । तथा ऋषभसेनप्रमुखाणि चतुरशीतिः 'समणसाहस्सीओ'त्ति । स्त्रीत्वं दीर्घत्व चार्षत्वादेव श्रमणसहस्राणि उत्कर्षत.-उत्कृष्टा श्रमणसम्पदभवत् । तथा 'उसभस्स णं बंभी'ति । श्रीऋषभस्य ब्राह्मीसुन्दरीप्रमुखाणि त्रीणि आर्यिकाशतसहस्राणि-आर्यिकालक्षा' उत्कर्षतः आर्यिकासम्पदभूत् । एव श्रेयांसप्रमुखाणि त्रीणि श्रमणोपासकशतसहस्राणि पञ्च च सहस्राणि श्रमणोपासकसम्पदभूत । 'सुभद्द'त्ति । सुभद्राप्रमुखाणि पञ्च श्रमणोपासिकाशतसहस्राणि चतुःपञ्चाशत्सहस्राधिकानि उत्कर्षतः श्रमणोपासिकासम्पदभूत् । तथा 'अजिणाणं'ति । अजिनानामपि जिनसङ्काशानां-जिनसन्निभाना 'सव्वक्खर'त्ति । सर्व्वेऽक्षरसन्निपाताः-वर्णसयोगा ज्ञेयतया विद्यन्ते येषां ते तथा तेषा । 'जिणो विव'त्ति । जिन इवावितथं व्याकुर्व्वाणाना पदार्थप्ररूपणाया श्रुतकेवलिनोऽपि केवलिवदेव सम्यग्वादिनः, परं तेऽसङ्ख्येयभवनिर्णायकाः नाधिकम् । यदागमः-

संखाइए वि भवे साहइ ज वा परो अ पुच्छिज्जा । न उण अणाइसेसी विआणइ एस छउमत्थो ॥१॥ इति । एतादृशानां चतुर्दशपूर्व्वधराणां चत्वारि सहस्राणि अर्द्धाष्टमशतसहितानि-सार्द्धसप्तशत-

संयुक्तानि उत्कृष्टा चतुर्दशपूर्विसम्पदभूत । तथा नवसङ्ख्याकानि अवधिज्ञानिसहस्राणि । विंशतिर्जिन-सहस्राणि । विंशतिर्वैक्रियलब्धिमत्सहस्राणि षट्शताधिकानि । द्वादश विपुलमतिसहस्राणि षट् च शतानि पञ्चाशदधिकानि । तत्र विपुला-बहुविधविशेषणोपेतमन्यमानवस्तुग्राहित्वेन विस्तीर्णा मतिर्मनःपर्यायज्ञानं येषा ते तथा । तत्र बहुविधविशेषणोपेतत्वं त्वेव-घटोऽनेन चिन्तितः । स च द्रव्यतः सौवर्णादिः, क्षेत्रतः पाटलीपुत्रीयादिः, कालतः शारदादि, भावतः कृष्णादिरित्येवं विपुलमतयो जानन्ति । ऋजुमतयस्तु घटोऽनेन चिन्तित इति सामान्यत एव जानन्ति । द्वादश वादिसहस्राणि षट् च शतानि पञ्चाशदधिकानि । 'उसभस्स ण गइकल्लाणाणमि'त्यादि । गतिर्देवगतिरूपा कल्याणी-कल्याणकारिणी येषा ते तथा तेषाम् । एव स्थितिर्देवायूरूपा कल्याणी येषां ते तथा तेषाम् । अथवा गतौ मनुष्यगतौ-सर्व्वसुरासुरनरेश्वर-पूज्यत्वेन यावत्पर्युपासनीयत्वेन कल्याण येषा त तथा तषा । स्थितौ देवभवेऽपि कल्याण येषा वीतराग-प्रायत्वात् । अथवा गतौ-जीवापगमेऽपि स्थितौ-जीवितेऽपि कल्याणं येषा ते तथा । यदुक्त

'तवनियमसुट्ठिआण कल्लाणं जीविअं पि मरण पि । जीवतज्जंति गुणा मुआ वि पुण सुग्गइं जंति ॥१॥ इति । अत एवागमिष्यद्भद्राणामागामिभवे सेत्स्यमानत्वात् एवविधानां द्वात्रिंशतिरनुत्तरोपपातिकानां-विजयादिविमानोत्पत्तिमतां सहस्राणि नव च शतान्युत्कृष्टा सम्पदभवदिति सर्व्वत्र योज्यम् । विंशति श्रमणसहस्राणि सिद्धानि, चत्वारिंशदार्यिकासहस्राणि सिद्धानि, अत एव 'सट्ठि'ति । षष्टिरन्तेवासिसहस्राणि सिद्धानि । अथानगाराणा स्वरूपतो वैचित्र्यमाह-'अरहओ णमि'त्यादि । अर्हत ऋषभदेवस्य बहवोऽन्तेवासिनोऽनगारा भगवन्तः कीदशाः ? अप्येककाः मासपर्यायाः एवमनुना प्रकारेण यथौपपातिके सर्व्वोऽनगारवर्णकः स इहापि वक्तव्यः । कियद् दूरमित्याह 'जाव उड्ढमि'त्यादि । ऊर्ध्वं जानुनी येषां ते ऊर्ध्वजानवः-शुद्धपृथिव्यासनवर्ज्जनादौपग्रहिकनिषद्याया अभावाच्चोत्कटिकासना इत्यर्थः । 'अहोसिर'त्ति । अधोमुखा नोर्ध्वं तिर्यग्वा विक्षिप्तदृष्टय' किन्तु नियतभूभागनियमितदृष्टय इति भावः । 'झाणकोट्ठो'त्ति । ध्यान धर्म्मं शुक्लं वा तदेव कोष्ठः-कुसूलो ध्यानकोष्ठस्तमुपागताः तत्र प्रविष्टा ध्यानकोष्ठोपगताः । यथाहि-कोष्ठके धान्य प्रक्षिप्तं न विप्रसृतं भवति, एवं भगवन्तोऽनगाराः अप्रकीर्णेन्द्रियान्तःकरणप्रवृत्तय इति । 'संजमेण'ति । सयमेन-संवरेण तपसाऽनशनादिना । चकारः समुच्चयेऽध्याहार्यः । संयमतपसोर्ग्रहणं चानयोः प्रधानमोक्षाङ्गत्वख्यापनार्थम् । प्रधानत्व च संयमस्य नवकर्म्मानुपादानत्वेन तपसश्च पुराणकर्म्मनिर्ज्जरा-हेतुत्वेन, भवति चाभिनवकर्म्मानुपादानात् पुराणकर्म्मक्षपणाच्च सकलकर्म्मक्षयलक्षणो मोक्ष इति । 'अप्पाणं'-ति । आत्मानं भावयन्तो-वासयन्तो विहरन्ति-तिष्ठन्तीति । अथ ऋषभस्यान्तकृद्भूमिः कतिविधाऽऽसीत् ? इत्याह-'अरहओ णमि'त्यादि । अन्त-संसारस्य पर्यवसानं कुर्व्वन्तीति अन्तकृतो निर्व्वाणयायिन इत्यर्थः । तेषा भूमिरधिकरण कालविशेषलक्षणं द्विधाऽभवत् । तद्यथा-'जुगंत'त्ति । युगानि-कालमानविशेषाः तानि च क्रमवर्तीनि तत्साधर्म्यात् ये क्रमवर्त्तिनो गुरुशिष्यप्रशिष्यादिरूपाः पुरुषास्तेऽपि युगानि तैः प्रमिता अन्तकृद्भूमिर्या सा युगान्तकृद्भूमि निरन्तरमुक्तियायिनां गुरुशिष्यादीनां कालभूमिरित्यर्थः । ये त्वन्तरान्तरा मुक्तियायिनस्ते युगशब्देनोपेक्षिता । छद्मस्थगुरुशिष्यादिव्यवहितत्वेन कृतद्वापरादियुगानामिव तेषा नैरन्तर्याभावात् । पर्यायः- तीर्थकृतः केवलित्वकालस्तमाश्रित्यान्तकृद्भूमिः पर्यायान्तकृद्भूमिः । चकारौ समुच्चयार्थौ । तत्र युगान्तकृद्भूमिः श्रीऋषभस्यान्वये यावदसङ्ख्येयानि पुरुषयुगानि सिद्धानि । यत्तु

चतुर्द्दश लक्षा इत्यादिक्रमः, स च ऋषभवंशजाना नरपतीनामेव ज्ञातव्यः। यदुक्तं नन्दिवृत्तौ-आदित्ययशः-प्रभृतयो भगवन्नाभेयवंशजाः त्रिखण्डभरतार्द्धमनुपाल्य पर्यन्ते पारमेश्वरीं दीक्षामभिगृह्य तत्प्रभावतः सकल-कर्म्मक्षयं कृत्वा चतुर्द्दश लक्षा निरन्तरं सिद्धिमगमन्नित्यादि। पर्यायान्तकृद्भूमिस्तु 'अंतमुहुत्त'त्ति। अन्तर्मु-हूर्त्तपर्याये केवलित्वपर्यायापेक्षया भगवति जिने सति अन्तं—भवान्तमकार्षीत्। यतो भगवतः केवलोत्प-त्त्यनन्तरमन्तर्मुहूर्त्तेनैव मरुदेवास्वामिनी अन्तकृत्केवलितां प्राप्ता॥

अथ श्रीऋषभस्य पञ्च कल्याणकानि राज्याभिषेकश्चेति षट् वस्तूनि यस्मिन्नक्षत्रे जातानि तद्दर्शयति-

**उसभे णं अरहा पंचउत्तरासाढे अभिईछट्ठे होत्था। तं० उत्तरासाढाहिं चुए, चइत्ता गब्भं वक्कंते, उत्तरासाढाहिं जाए, उत्तरासाढाहिं रायाभिसेअं पत्ते, उत्तरासाढाहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए, उत्तरासाढाहिं अणंते जाव समुप्पण्णे, अभिइणा परिणिव्वुए॥**

'उसभे णमि'त्यादि। ऋषभो णमित्यलङ्कारे। 'पंच'त्ति। पञ्चसु—च्यवनजन्मराज्याभिषेक-दीक्षाकेवलज्ञानलक्षणेषु उत्तराषाढा यस्य स पञ्चोत्तराषाढः। अभिजिति—अभिजिन्नाम्नि नक्षत्रे षष्ठं वस्तु निर्व्वाणकल्याणकलक्षणं यस्य सोऽभिजित्षष्ठः। होत्था-अभवत्। अथोक्तमेवार्थं तद्यथेत्यादिना व्यक्तीकुर्व्व-न्नाह-'त जहे'त्ति। उत्तराषाढनक्षत्रेण चन्द्रयोगे सति च्युतो, देवभवात् सर्व्वार्थसिद्धविमानात् च्युत्वा च गर्भं व्युत्क्रान्त—उत्पन्नः। एवं जातो—योनिवर्त्मना निर्गत'। 'रायाभिसेअं'त्ति। राज्याभिषेक प्रथमतीर्थ-कृद्राज्याभिषेकोऽस्माकं जीतमिति विकल्पवता शक्रेण क्रियमाणं प्राप्तोऽभिषिक्तो राजा सञ्जात इत्यर्थः। 'मुंडे'त्ति। मुण्डो भूत्वा अगारादनगारितां—साधुतां प्रव्रजितो—धातूनामनेकार्थत्वात् साधुत्व स्वीकृतवा-नित्यर्थः। तथा 'अणंत'त्ति। अनन्तं यावत्समुत्पन्नं, यावत्करणात् 'अणुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरणाणदसणे समुप्पण्णे'त्ति प्रागुक्तार्थं विज्ञेयम्। 'अभिइण'त्ति। अभिजिन्नक्षत्रेण चन्द्र-योगे सति परि-सामस्त्येन निर्वृतः-सकलकर्म्मांशैर्विमुक्त इत्यर्थः। ननु श्रीऋषभराज्याभिषेकस्य शक्रजीत-त्वेन श्रीमहावीरगर्भसंहरणस्येव षष्ठं कल्याणकत्वमेवास्त्विति चेत्। मैवम् उभयोरपि कल्याणकत्वाभावेन दृष्टान्तदार्ष्टान्तिकत्वायोगात्। न हि रूपमिव रसोऽपि श्रोत्रेन्द्रियग्राह्यो भवत्विति भवन्तं विहायाऽन्यः कोऽपि वक्तुं वाचालो दृष्टः श्रुतो वेति॥

अथ भगवतो विशेषणत्रयेण शरीरस्वरूपमाह

**उसभे णं अरहा कोसलिए वज्जरिसहनारायसंघयणे समचउरंससंठाणसंठिए पंच धणुसयाइं उड्ढंउच्चत्तेणं होत्था। उसभेणं अरहा वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसित्ता तेवट्ठिं पुव्वसयसहस्साइं रज्जवासमज्झे वसित्ता तेसीइं पुव्वसयसहस्साइं अगारवासमज्झे वसित्ता मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए। उसभे णं अरहा एगं वाससहस्सं छउमत्थपरिआगं पाउणित्ता एगं पुव्वसयसहस्सं वाससहस्सूणं केवलिपरिआगं पाउणित्ता एगं पुव्वसयसहस्सं बहु-**

पडिपुण्णं सामण्णपरिआगं पाउणित्ता चउरासीइं पुव्वसयसहस्साइं सव्वाउअं पालइत्ता जे से हेमंताणं तच्चे मासे पंचमे पक्खे माहबहुले तस्स णं माहबहुलस्स तेरसीपक्खेणं दसहिं अणगार-सहस्सेहिं सद्धिं संपरिवुडे अट्ठावयसेलसिहरंसि चउद्दसमेणं भत्तेणं अपाणएणं संपलिअंकनिसन्ने पुव्वण्हकालसमयंसि अभिइणा नक्खत्तेणं जोगमुवागएणं सुसमदुसमाए समाए एगूणणउएहिं पक्खेहिं सेसेहिं कालगए वीइक्कंते जाव सव्वदुक्खप्पहीणे। जं समयं च णं उसहे अरहा कोसलिए कालगए वीइक्कंते समुज्जाए छिन्नजाइजरामरणबंधणे सिद्धे बुद्धे तं समयं च णं सक्कस्स देविंदस्स देवरण्णो आसणे चलिए। तए णं से सक्के देविंदे देवराया आसणं चलिअं पासइ। पासित्ता ओहिं पउंजइ। पउंजित्ता भगवंतं तित्थगरं ओहिणा आभोएति। आभोएत्ता एवं वयासी-परिणिव्वुए खलु जंबुद्दीवे दीवे भारहे वासे उसहे अरहा कोसलिए। तं जीअमेअं तीअपच्चुप्पण्णमणागयाणं सक्काणं देविंदाणं देवराईणं तित्थगराणां परिणिव्वाणमहिमं करित्तए। तं गच्छामि णं अहं पि भगवतो तित्थगरस्स परिणिव्वाणमहिमं करेमि त्तिकट्टु एवं वंदइ णमंसइ वंदित्ता णमंसित्ता चउरासीहिं सामाणिअसाहस्सीहिं, तायत्तीसाए तायत्तीसएहिं, चउहिं लोगपालेहिं जाव चउहिं चउरासीईहिं आयरक्खदेवसाहस्सीहिं अण्णेहिं बहूहिं सोहम्मकप्पवासीहिं वेमाणिएहिं देवेहिं देवीहि अ सद्धिं संपरिवुडे ताए उक्किट्ठाए जाव तिरिअमसंखिज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं जेणेव अट्ठावए पव्वए जेणेव भगवओ तित्थगरस्स सरीरए तेणेव उवागच्छति। उवागच्छित्ता विमणे णिराणंदे अंसुपुण्णणयणे तित्थगरसरीरगं तिक्खुत्तो आयाहिणपयाहिणं करेति। करेत्ता णच्चासन्ने णातिदूरे सुस्सूसमाणे जाव पज्जुवासति। ते णं काले णं ते णं समए णं ईसाणे देविंदे देवराया उत्तरड्ढलोगाहिवई अट्ठावीसविमाणसयसहस्साहिवई सूलपाणी वसहवाहणे सुरिंदे अरयंबरवत्थधरे जाव विउलाइं भोगभोगाइं भुंजमाणे विहरइ। तए णं तस्स ईसाणस्स देवरण्णो आसणे चलति। तए णं से ईसाणे जाव देवराया आसणं चलिअं पासति। पासित्ता ओहिं पउंजति पउंजित्ता भग-वंतं तित्थगरं ओहिणा आभोएति। आभोएत्ता जहा सक्के। णिअगपरिवारेण भाणिअव्वं जाव पज्जुवासइ। एवं सव्वे देविंदा जाव अच्चुते णिअगपरिवारेण आणेअव्वा। एवं जाव भवण-वासीण वि इंदा, वाणमंतराणं सोलस, जोइसिआणं दोण्णि णिअगपरिवारा णेअव्वा। तए णं से सक्के देविंदे देवराया ते बहवे भवणवइ वाणमंतर-जोइस-वेमाणिए देवे एवं वयासी-खिप्पामेव भो देवाणुप्पिआ! णंदणवणाओ सरसाइं गोसीसवरचंदणकट्ठाइं साहरह [साहरित्ता] तओ चिअगाओ रएह। एगं भगवओ तित्थगरस्स, एगं गणहराणं, एगं अवसेसाणं अणगाराणं। तए णं ते भवणवइ जाव वेमाणिआ देवा णंदणवणाओ सरसाइं गोसीसवरचंदणकट्ठाइं साहरंति। तओ चिअगाओ रएंति। एगं भगवओ तित्थगरस्स, एगं गणहराणं, एगं अवसेसाणं अणगाराणं। तए णं से सक्के देविंदे देवराया अभिओगे देवे सद्दावेति सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ! खीरोदग-

समुद्दाओ खीरोदगं साहरेह । तए णं ते अभिओगा देवा खीरोदगसमुद्दाओ खीरोदकं साहरंति । तए णं से सक्के देविंदे देवराया तित्थगरसरीरगं खीरोदएणं, ण्हाणेति ण्हाणेत्ता सरसेणं गोसीसवरचंदणेणं अणुलिंपति, अणुलिंपित्ता हंसलक्खणपडसाडगं णिअंसेअ सव्वालंकारविभूसिअं करेति । तए णं ते भवणवइ जाव वेमाणिआ गणहरअणगारसरीरगाइं पि अ खीरोदगेणं ण्हावेंति ण्हावेत्ता सरसेणं गोसीसवरचंदणेण अणुलिंपंति, अणुलिंपित्ता अहयाइं दिव्वाइं देवदूसजुअलाइं णिअंसेंति सव्वालंकारविभूसिआइं करेंति । तए णं सक्के देविंदे देवराया ते बहवे भवणवइ जाव वेमाणिए देवे एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! ईहामिगउसभतुरग जाव वणलयभत्तिचित्ताओ तओ सिविआओ विउव्वह । एगं भगवओ तित्थगरस्स, एगं गणहराणं, एगं अवसेसाणं अणगाराणं । तए णं ते बहवे भवणवइ जाव वेमाणिआ तओ सिविआओ विउव्वंति । एगं भगवओ तित्थगरस्स एगं गणहराणं एगं अवसेसाणं अणगाराणं । तते णं से सक्के देविंदे देवराया विमणे णिराणंदे अंसुपुण्णणयणे भगवओ तित्थगरस्स विणट्ठजम्मजरामरणस्स सरीरगं सिविअं आरोहेति, आरोहेत्ता चिइगाए ठवेति । तए णं ते बहवे भवणवइ जाव वेमाणिआ देवा गणहराणं अणगाराण य विणट्ठजम्मजरामरणाण य सरीरगाइं सीअं आरुहेंति, आरुहेत्ता चिइगाए ठवेंति । तए णं से सक्के देविंदे देवराया अग्गिकुमारे देवे सद्दावेति सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! तित्थगरचिइगाए जाव अणगारचिइगाए अ अगणिकायं विउव्वह, विउव्वेत्ता एअमाणत्तिअं पच्चप्पिणह । तए णं ते अग्गिकुमारा देवा विमणा णिराणंदा अंसुपुण्णणयणा तित्थगरचिइगाए जाव अणगारचिइगाए अ अगणिकायं विउव्वंति । तए णं से सक्के देविंदे देवराया वाउकुमारे देवे सद्दावेइ सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! तित्थगरचिइगाए जाव अणगारचिइगाए अ वाउकायं विउव्वह विउव्वेत्ता अगणिकायं उज्जालेह तित्थगरसरीरगं गणहरसरीरगाइं अणगारसरीरगाणि अ झामेह । तए णं ते वाउकुमारा देवा विमणा णिराणंदा अंसुपुण्णणयणा तित्थगरचिइगाए जाव विउव्वंति विउव्वेत्ता अगणिकायं उज्जालेंति उज्जालेत्ता तित्थगरसरीरगं जाव अणगारसरीराणि अ झामेंति । तते णं से सक्के देविंदे देवराया ते बहवे भवणवइ जाव वेमाणिए एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! तित्थगरचिइगाए जाव अणगारचिइगाए अ अगुरु तुरुक्क धयमहुं च भारग्गसो अ साहरह । तए णं भवणवइ जाव तित्थगर जाव भारग्गसो साहरंति । तते णं से सक्के देविंदे देवराया मेहकुमारे देवे सद्दावेइ सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! तित्थगरचिइगं जाव अणगारचिइगं च खीरोदएणं निव्ववेएह । तए णं ते मेहकुमारा देवा तित्थगरं जाव णिव्ववेंति । तते णं सक्के देविंदे देवराया भगवओ तित्थगरस्स उवरिल्लं दाहिणं सकहं गेण्हति । ईसाणे देविंदे देवराया उवरिल्लं वामं सकहं गेण्हति । चमरे असुरिंदे असुरराया हेट्ठिल्लं दाहिणं सकहं गेण्हति । बली वइरोअणिंदे वइरोअणराया हेट्ठिल्लं वामं सकहं गेण्हति । अवसेसा भवणवइ जाव वेमाणिआ देवा जहारिहं अवसेसाइं अंगुवगाइं केइ

जिणभत्तीए केइ जीअमेअं तिकट्टु केइ धम्मो त्तिकट्टु गिण्हंति । तए णं से सक्के देविंदे देवराया बहवे भवणवइ जाव वेमाणिए देवे जहारिहं एवं वयासी–खिप्पामेव भो देवाणुप्पिआ ! सव्वरयणामए महति महालए तओ चेइअथूमे करेह । एगं भगवओ तित्थगरस्स चिइगाए एगं गणहरचिइगाए एगं अवसेसाणं अणगाराणं चिइगाए । तए णं ते बहवे जाव करिंति । तए णं ते बहवे भवणवइ जाव वेमाणिआ देवा तित्थगरस्स परिणिव्वाणमहिमं करिंति करेत्ता जेणेव नंदीसरवरे दीवे तेणेव उवागच्छंति । तते णं से सक्के देविंदे देवराया पुरत्थिमिल्ले अंजणगपव्वए अट्ठाहिअं महामहिमं करेति । तए णं सक्कस्स देविंदस्स चत्तारि लोगपाला चउसु दहिमुहपव्वएसु अट्ठाहिअं महामहिमं करेंति । तए णं ईसाणे उत्तरिल्ले अंजणगे अट्ठाहिअं, तस्स लोगपाला चउसु दहिमुहप० अट्ठाहिअं, चमरो अ दाहिणिल्ले, तस्स लोगपाला दहिमुहपव्वएसु, बली पच्चत्थिमिल्ले लोगपाला चउसु दहिमुहगेसु । तए णं ते बहवे भवणवइ जाव अट्ठाहिआओ महामहिमाओ करेंति करेत्ता जेणेव साइं साइं विमाणाइं जेणेव साइं साइं भवणाइं जेणेव साओ साओ सभाओ सुहम्माओ जेणेव समाणवगा चेइअखंभा तेणेव उवागच्छंति उवागच्छित्ता वयरामएसु गोलवट्टसमुग्गएसु जिणसकहाओ पक्खिवंति । पक्खिवित्ता अग्गेहिं वरेहिं गंधेहिं अ मल्लेहि अ अच्चेंति अच्चेत्ता विपुलाइं भोगभोगाइं भुंजमाणा विहरंति ॥

'उसभे णमि'त्यादि । ऋषभोऽर्हन् वज्रर्षभनाराचसंहननः समचतुरस्रसंस्थानसंस्थितः । एतयोश्च स्वरूपं प्रागभिहितम् । पञ्च धनुःशतान्यूर्ध्वमुच्चत्वेनाभवदिति । अथ कुमाराद्यवस्थानां कालमानमाह–'उसभे णमि'त्यादि । ऋषभोऽर्हन् विंशतिः पूर्वशतसहस्राणि कुमारवासमध्ये उषित्वा त्रिषष्टिं पूर्वशतसहस्राणि राज्यवासमध्ये उषित्वा त्र्यशीतिं पूर्वशतसहस्राणि अगारवासमध्ये उषित्वा मुण्डो भूत्वाऽगारादनगारितां प्रव्रजितः । अथ छाद्मस्थ्यादिपर्यायकालमानमाह–'उसभे णमि'त्यादि । ऋषभोऽर्हन् एकं वर्षसहस्रं छाद्मस्थ्यपर्यायं पालयित्वा, एकं पूर्वशतसहस्रं पूर्वलक्षमित्यर्थः । वर्षसहस्रोनं केवलिपर्यायं पालयित्वा, एकं पूर्वलक्षं बहुप्रतिपूर्णं श्रामण्यपर्यायं पालयित्वा, चतुरशीतिपूर्वशतसहस्राणि सर्वायुः पालयित्वा 'जे से हेमंताणं'ति । यः स हेमन्तर्त्तोः बहुत्वं चापेक्षया तृतीयो मासः पञ्चमः पक्षः माघासितपक्षः तस्य त्रयोदशीदिवसे दशभिरनगारसहस्रैः सार्द्धं सम्परिवृतः । 'अट्ठावय'त्ति । अष्टापदशैलशिखरे चतुर्दशेन भक्तेनोपवासषट्केन अपानकेन–पानीयाहाररहितेन तपसा संयुक्त इति गम्यं । कृताऽपानीयचतुर्दशभक्त इत्यर्थः । 'संपलिअंक'त्ति । सम्यक् पर्यङ्कासनेन निषण्णः–संस्थितः पूर्वाह्णकालसमये अभिजिता नक्षत्रेण योगमुपागतेन चन्द्रेण सुषमदुष्षमायाः समायाः एकोननवतौ पक्षेषु शेषेषु सत्सु । सप्तम्यर्थे तृतीया प्राकृतत्वात् । कालगतः–आयुःकर्म्म निःसत्ताकत्वलक्षणं प्राप्तः कायस्थितिभवस्थित्योः कालात्गत इत्यर्थः । व्यतिक्रान्तः संसारात् । 'जाव सव्व'त्ति । यावत् सर्वाणि शारीरमानसानि दुःखानि प्रक्षीणानि यस्य स तथा । यावत्करणात् 'समुज्जाए छिन्नजाइजरामरणबंधणे सिद्धे बुद्धे मुत्ते अंतगडे परिनिव्वुडे'त्ति । तत्र सम्यगूर्ध्वं यातः समुद्यातः । न पुनरधस्तात्पुनर्भवावतारी । यतः–

ज्ञानिनो धर्म्मतीर्थस्य कर्त्तारः परमं पदं। गत्वाऽऽगच्छन्ति भूयोऽपि भवं तीर्थनिकारतः ॥१॥ इति तद्वचः। 'छिन्ने'त्यादि। छिन्नं जात्यादीनां बन्धनहेतुभूत कर्म्म येन स तथा। सिद्धः- साधितार्थः। बुद्धः- अवगततत्त्वः। मुक्तः-भवोपग्राहिकर्म्मांशेभ्यः। अन्तकृत-सर्व्वदुःखानां। परिनिर्वृतः- कर्म्मकृत-सकलसन्तापविरहादिति। अथ श्रीऋषभस्वामिनि सिद्धिं गते यज्जातं तदाह-'जं समय च णमि'त्यादि सुगमं। 'तं समयं च ण'त्ति। तस्मिन् समये शक्रस्य देवेन्द्रस्य देवराजस्य आसनं चलितं-नित्यमचलस्वभाव-मपि जगत्स्वभावात् भगवन्निर्व्वाणसमयज्ञापनाय प्रकम्पितमित्यर्थः। 'तए णं'ति। तत-आसनप्रकम्पा-नन्तरं स शक्रो देवेन्द्रो निजविमानं चलित पश्यति, दृष्ट्वा चावधिं प्रयुङ्क्ते, प्रयुज्य च भगवन्तं तीर्थकरम-वधिना आभोगयति-पश्यति, दृष्ट्वा चैवमवोदीत् 'परिनिव्वुडे' इत्यादि। परिनिर्वृतः। खल्ववधारणे। जम्बूद्वीपे द्वीपे भारते वर्षे वृषभो भगवान् कौशलिकः। 'तं जीअमेअं'ति। तदेतज्जीतमाचरितं केषाम्? इत्याह 'तीअ'त्ति। अतीतानागतवर्त्तमानानां शक्राणां देवेन्द्राणा देवराजानां। किं तदित्याह-'तित्थगराण'त्ति। तीर्थकराणां परिनिर्व्वाणमहिमा कर्त्तुं 'त'त्ति। तस्मात् गच्छामि। णमिति प्राग्वत्। अहमपि भगवतस्तीर्थकृतः परिनिर्व्वाणमहिमा करोमीति कृत्वा। एव वन्दते-सद्भूतार्थस्तवनेन नम-स्यति-पश्चाङ्गप्रणिपातेन नमस्करोति, वन्दित्वा नमस्यित्वा च चतुरशीत्या सामानिकसहस्रैः, त्रयस्त्रिंशता त्रायस्त्रिंशैः-शक्रस्य पूज्यस्थानीयैः मन्त्रिकल्पैर्वा। तथा चतुर्भिर्लोकपालैः। 'जाव चउहिं'ति। यावच्चतुर्भिः शक्रस्य चतसृष्वपि दिक्षु प्रत्येक चतुरशीतेरात्मरक्षकदेवसहस्राणा सद्भावात् चतुर्गुणितैश्चतुरशीत्यात्म-रक्षकदेवसहस्रैः षट्त्रिंशत्सहस्राधिकलक्षत्रयप्रमाणैरित्यर्थः, स्त्रीत्व चार्षत्वात्। यावत्करणात् 'अट्ठहिं अग्ग-महिसीहि सपरिवाराहिं सत्तहि अणिएहिं सत्तहि अणिआहिवईहिमि'त्ति दृश्यम्। 'अण्णेहिमि'त्यादि सुगमम्। एभिः सार्द्धं सम्परिवृत'। 'ताए उक्किठाए'त्ति। तयो देवजनप्रसिद्धया उत्कृष्टया-प्रशस्तविहायोगति-नामकर्म्मोदयात् प्रशस्तया 'जाव तिरिअ'त्ति। यावत्तिर्यगसङ्ख्येयानां द्वीपसमुद्राणां यावत्करणात् 'तुरि-आए चवलाए चंडाए सिग्घाए जवणाए उद्धुआए दिव्वाए देवगइए वीईवयमाणे वीईवयमाणे'त्ति परिग्रह। तत्र त्वरा सञ्जाता अस्या इति त्वरिता तया। तथा चवलेव-विद्युदिव चपला तया। क्रोधाविष्टस्येव श्रमाऽसवेदनात् चण्डेव चण्डा तया। तथा निरन्तरं शीघ्रत्वयोगात शीघ्रा तया। जवना-परमोत्कृष्टवेग-परिणामोपेता तया। उद्धूतया-वातोद्धूतस्य दिगन्तव्यापिनो रजस इव या गतिः सोद्धूता तया। दिवि-देवलोके भवा दिव्या तया। एवंविधया देवगत्या व्यतिव्रजन् व्यतिव्रजन् तिर्यगसङ्ख्येयानां द्वीपसमुद्राणां मध्यंमध्येन 'जेणेव'त्ति। यत्रैवाष्टापदः पर्व्वतः यत्रैव च भगवतस्तीर्थकरस्य शरीरकं तत्रैवोपागच्छति। उपागत्य 'विमणे' इत्यादि। विगतमिव मनो यस्य स तथा। चिन्तिताऽपरापरप्रयोजनानां विस्मृतत्वात् भगवति श्रीऋषभे तीव्ररागतया तद्वियोगे शोकस्यापि तीव्रत्वात्। यद्वा-विपरीत-पूर्व्वस्वरूपापेक्षया अन्यथाभूतं मनो यस्य स तथा निरुत्साहमनस्क इत्यर्थः। निरानन्दः-प्रमोदरहितः। अश्रुपूर्णनयनः-अश्रुभिर्नेत्रजलबिन्दुभिः पूर्णे नयने यस्य स तथा। न च देवाना

'केसट्ठिमंसनहरोमरुहिरवसचम्ममुत्तपुरिसेहिं। रहिआ निम्मलदेहा सुगंधनीसास गयलेवा॥१॥ इति वचनादश्रूणामप्यभावः शङ्कनीय', देवशरीरेऽपि हर्षविषादजन्यपुद्गलद्रावस्याऽऽगमप्रसिद्धत्वात। कथम-न्यथा वीर्यद्रावोऽपीति पर्यालोच्यम्। 'तित्थगर'त्ति। तीर्थकरशरीरकं 'तिक्खुत्तो'त्ति। त्रिः कृत्वस्त्रीन् वाराना-

दक्षिणप्रदक्षिणं–आदक्षिणात्-दक्षिणपार्श्वादारभ्य प्रदक्षिणं–दक्षिणपार्श्ववर्ति यत्तदादक्षिणप्रदक्षिणम्। एवंविधं करोति दक्षिणपार्श्वतस्त्रीन् वारान् भ्राम्यतीत्यर्थः। कृत्वा च नात्यासन्नो–नातिनिकटोऽत्रावग्रहपरिहारात्। नातिदूरः–नातिविप्रकृष्टः अनौचित्यपरिहारात् 'सुस्सूसमाणे' इति। श्रोतुमिच्छन् शुश्रूषन् तदानीमप्यतिरागाद्भगवद्वचनश्रवणेच्छाया अनिवृत्तत्वात्। यावत् पर्युपास्ते–सेवते। यावत्करणात् 'नमंसमाणे अभिमुहे विणएणं पंजलिउडे'त्ति सङ्ग्रहः। तत्र नमस्यन्–नमस्कुर्वन्। अभि.–भगवन्तं लक्षीकृत्य मुखमस्येति अभिमुखो भगवतः सन्मुख इत्यर्थः। विनयेन प्राञ्जलिकृतः–विनयहेतुना प्रकृष्टोऽञ्जलिः कृतो येन भालतलविहितहस्तन्यासविशेष इत्यर्थः। एवंविधः पर्युपास्ते। अत्रातीतकालेऽपि वर्त्तमानप्रयोगः सूत्रस्य त्रिकालविषयत्वात्। एवमुक्तविशेषणकदम्बकेन शक्रस्य भगवति तीव्ररागवत्त्वं धर्म्मनीतिज्ञत्वं च सूचितम्। ननु ज्ञानादिशून्यस्यापि तीर्थकृच्छरीरस्य यद्वन्दनादि पर्युपासनपर्यन्तं भणितं तच्छक्रस्य जीतमेव न पुनर्द्धर्म्मनीतिः? इति चेत्। मैवं स्थापनाजिनस्यापि वन्दनादेर्धर्म्मनीतावनन्तर्भावापत्तेः। इष्टापत्तिरेवेति चेत्। मैवं, स्थापनाजिनाराधनस्याच्छिन्नपरम्परागतत्वादागमसम्मतत्वात् युक्तिक्षमत्वाच्च। तत्राऽऽगमस्तावत् 'कुलगणसंघचेइअट्ठे निज्जरट्ठी वेआवच्चं अणिस्सिअं दसविहं बहुविहं वा करेइ' इत्यादि बहुप्रतीत एव। युक्तिस्तु प्रवचने यदाराध्यं तन्नामादि चतुर्द्धाऽपि यथासम्भवविधिनाऽऽराध्यम्। तत्र ज्ञानादिमत्त्वमेकस्यैव भावजिनस्य। शेषाणि नामादीनि तच्छून्यान्येव। तस्मादाराध्यत्वे ज्ञानादिमत्त्वं न नियामकं किन्तु ज्ञानादिप्रसूतिहेतुत्वमेव। तथा च यथा तीर्थकृद्दर्शनात्तीर्थकरपरिज्ञानं तथा जिनप्रतिमादर्शनादपि। एतच्च प्रतिमाप्रतिपक्षस्यापि सम्मतम्। यतो जम्बूद्वीपाऽऽलेख्यकपट्टकं दृष्ट्वा जम्बूद्वीपस्यैव संस्थानादेः परिज्ञानं, न पुनर्वृक्षादेः। एवं जिनप्रतिमादावपि भाव्यम्। अत एव समवसरणेऽर्हद्रूपत्रयमर्हत्परिज्ञानहेतव एव सुरैर्विधीयते इति जैनप्रवचने प्रतीतमेव। तथा च सिद्धं श्रीऋषभदेवशरीरकदर्शनमपि यावत् श्रीऋषभदेवव्यतिकरं स्मृतिपरिज्ञानहेतुः तद्विषयं च ज्ञानं महानिर्ज्जराहेतुरित्यागमे प्रतीतम्। किञ्च–तीर्थकृच्छरीरस्यार्चादिकं तीर्थकरविषयकपरमरागेणैव सम्भवति। अत एव भगवता तीर्थकृतां दंष्ट्रा अपि प्रतिमामिव शक्रादयः पूजयन्तीत्यत्रैवाग्रे वक्ष्यते। ननु तथाविधं शरीरं नामादिषु नान्तर्भवतीति कथमाराध्यम्? इति चेन्, मैवं नोआगमतो ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तद्रव्यतीर्थकरत्वेन द्रव्येऽन्तर्भावात्। अतः शक्रस्याप्याराध्यमिति शक्रेण पर्युपास्यमानमासीदिति। अथ तत्र शक्रवदीशानादीनामप्यागमनं दर्शयति–'ते णं काले णमि'त्यादि। तस्मिन् काले तस्मिन् समये ईशान इति नाम्ना द्वितीयकल्पाधिपतिः देवेन्द्रो देवराजः उत्तरार्धलोकाधिपतिः मेरोरुत्तरतो वर्त्तमानस्य लोकस्य स्वामीत्यर्थः। 'अट्ठावीस'त्ति। अष्टाविंशतिविमानशतसहस्राधिपतिः। शूलं पाणौ यस्य स शूलपाणिः। वृषभवाहनः सुरेन्द्रः 'अरय'त्ति। अरजांसि–निर्मलानि अम्बरवस्त्राणि–स्वच्छतया आकाशकल्पवसनानि धरति यः स तथा। यावद्विपुलान् भोगभोगान् भुञ्जानो विहरति-आस्ते। यावत्करणात् 'आलइअमालमउडे नवहेमचारुचित्तचंचलकुंडलविलिहिज्जमाणगल्ले महिड्ढीए महज्जुईए महब्बले महायसे महाणुभावे महासुक्खे भासुरबोंदि पलंबवणमालधरे जाव महयाहयनट्टगीअवाइअततीतलतालतुडिअघणमुइंगपडुप्पडहप्पवाइअरवेणमि'ति पर्यन्तम्। व्याख्या च प्राग्वत्। अथ तदानीं किं जातमित्याह–'तते णमि'त्यादि। तत. श्रीऋषभनिर्व्वाणादनन्तरं। णमिति प्राग्वत्। तस्य प्रागुक्तस्वरूपस्य ईशानदेवराजस्यासनं चलति। तत. स ईशानो यावद्देवराज आसनं चलितं पश्यति, दृष्ट्वा चावधिं प्रयुङ्क्ते, प्रयुज्य च भगवन्तं तीर्थकरमवधिनाऽऽभोगयति 'जहा सक्के'त्ति। इत आरभ्य यथा शक्रस्तथाऽय-

मीशानोऽपि निजकपरिवारेण परिकरितो भणितव्यो यावत् पर्युपास्ते । 'एवं'ति । एवं प्रागुक्तप्रकारेण सर्व्वे देवेन्द्राः अर्थादृशैव यावदच्युतः आसनचलनावधिज्ञानोपयोगाऽऽगमनादि यावन्निजकपरिवारेण 'आणेअ-व्व'त्ति । आ-मर्यादया येषां यथासम्भवस्ते तथैव ज्ञातव्याः– अवसातव्याः । एवं यावद्भवनवासिनामपि अर्थाद्विंशतिः, वानमन्तराणां षोडश, ज्योतिष्काणां द्वौ । एते सर्व्वेऽपि निजकपरिवारयुक्ता ज्ञातव्याः । ननु व्यन्तरेन्द्रा द्वात्रिंशद्भवन्ति तर्हि कथं षोडश भणिता ? इति चेत् । उच्यते-ये चात्र षोडशोक्तास्ते महर्द्धिकास्तदुपलक्षिता इतरेऽपि भणितव्याः । यत्तु ज्योतिष्कौ चन्द्रसूर्यनामानौ द्वावेवोक्तौ तज्जात्यपेक्षया, अन्यथा असङ्ख्येया एव ज्योतिष्केन्द्राः सन्तीति । सर्व्वसङ्ख्यया चतुःषष्टिरिन्द्रा मिलिता इत्यर्थः । अथैव सति शक्रः किं करोति ? इत्याह–'तए णं से सक्के' इत्यादि । ततश्चतुष्षष्टीन्द्रमिलनानन्तरं शक्रो देवेन्द्रो देवराजस्तान् बहून् भवनपत्यादीन् एवं वक्ष्यमाणमवादीत् । किमित्याह–'खिप्पामेवे'त्यादि । क्षिप्रमेव–शीघ्रमेव भो देवानुप्रियाः ! नन्दनवनात् सरसाण्यार्द्राणि न पुनः शुष्कानि गोशीर्षवरचन्दनकाष्ठानि–गोशीर्षनाम्ना यद्वरं–प्रधानं चन्दनं तस्य काष्ठानि संहरत–नन्दनवनादानीयेह स्थापयतेत्यर्थः । संहृत्य च तिस्रश्चिताः–वृत्तादिरचनाविशेषयुक्ता रचयत–कुरुत । तत्रैकां भगवतस्तीर्थकृतः एकां गणधराणां एकामवशेषाणामनगाराणां–सामान्यसाधूनां । 'तए णमि'त्यादि । ततः शक्रवचःश्रवणानन्तरं ते भवनपति–वानमन्तरादयो देवाः नन्दनवनात्सरसाणि गोशीर्षवरचन्दनकाष्ठानि संहरन्ति तिस्रश्च चिता रचयन्ति । तत्रैकां चितां शक्रादेशात्पूर्व्वस्यां दिशि वृत्ताकारां तीर्थकरनिमित्तं गोशीर्षचन्दनैः । एवं त्र्यस्रां चितां गणधरनिमित्तं दक्षिणस्यां, चतुरस्रां च पश्चिमायां शेषसाधुनिमित्तं रचयन्तीति सर्व्वत्रापि योज्यम् । ननु 'निव्वाणं चिइगाइ जिणस्स इक्खागसेसगाणं तु' इति श्री आवश्यकनिर्युक्तौ द्वितीया चिता इक्ष्वाकुनिमित्तं भणिता इह तु गणधरनिमित्तमिति कथं सङ्गति ? इति चेत् । उच्यते–गणधराणामिक्ष्वाकुकुलोत्पन्नत्वेन इक्ष्वाकुमात्रोपलक्षकत्वेन च नाऽसङ्गतिशङ्कागन्धोऽपीति । अथ चितानां रचनानन्तरं शक्रः किं कृतवान् ? इत्याह–'तए णं से सक्के' इत्यादि । ततश्च स शक्रो देवेन्द्रो देवराजः आभियोगान् देवान् शब्दापयति शब्दापयित्वा च एवमनन्तरं वक्ष्यमाणमवादीत् 'खिप्पामेव'त्ति । क्षिप्रमेव भो देवानुप्रियाः ! क्षीरोदकसमुद्रात् क्षीरोदकं संहरत–आनीयोपतिष्ठध्वम् । 'तए णं'ति । ततश्च ते आभियोगा देवाः क्षीरोदसमुद्रात् क्षीरोदकं संहरन्ति । 'तए णं से'त्ति । ततः स शक्रो देवेन्द्रो देवराजः तीर्थकरशरीरकं क्षीरोदकेन स्नपयति, स्नपयित्वा च सरसेन गोशीर्षवरचन्दनेनानुलिम्पति । 'हंसलक्खण'त्ति । हंसा–आलेख्यरूपा लक्षणं–चिह्नं यस्यैवंविधं पटशाटकं–परिधानवस्त्रं 'निअंसेअ'त्ति । परिधाप्य च सर्व्वालङ्कारविभूषितं–कुण्डलमुकुटकेयूरहाराद्र्धहारादिविभूषणैरुपशोभितं करोति । अथ गणधरादिशरीरकविधिमाह– 'तते णमित्यादि । ततश्च ते भवनपत्यादयः गणधरानगारशरीराण्यपि च क्षीरोदकेन स्नपयन्ति । शेषं प्राग्वत् । 'अहयाइ'ति । अहतान्यखण्डानि दिव्यानि–प्रधानानि देवदूष्ययुगलानि–देवसम्बन्धिवस्त्रयुग्मानि परिधापयन्ति-सर्व्वालङ्कारविभूषितानि कुर्व्वन्ति । अथ पुनरपि शक्रः किं करोति ? इत्याह-'तते णं से सक्के'त्ति । ततः स शक्रो देवेन्द्रो देवराजस्तान् बहून् भवनपत्यादीन् देवान् एवमवादीत् । 'खिप्पं'ति । क्षिप्रमेव भो देवानुप्रियाः ! 'ईहामिअ'त्ति । ईहामृगवृषभतुरगादि यावद्वनलताभक्तिचित्रास्तिस्रः शिबिका विकुर्व्वत 'विकुर्व्व' इत्यागमिको धातुः । वैक्रियाः कुरुत । तासां विभागः 'एग'मित्यादि प्राग्वत् । अथ शिविकासु विकुर्व्वितासु शक्रः किं करोति ? इत्याह–'तए णं से सक्के' इत्यादि । ततः स शक्रो देवेन्द्रो देव-

राजो विमनस्को निरानन्दोऽश्रुपूर्णनयनः सन् भगवतस्तीर्थकरस्य 'विणट्ठ'त्ति। विनष्टानि—विशेषेणापुनर्भावेन नाशमुपगतानि जन्मजरामरणानि यस्मात् तस्य। शरीरकं शिबिकायामारोहयति—स्थापयतीत्यर्थः। आरोह्य च शिबिकां चितायां स्थापयति। 'तए णमि'त्यादि। नवरं शक्रस्थाने भवनपत्यादयो देवा इत्यादि। भेदस्तु सर्वत्रापि सूत्रेणैव सुखावसेयः। अथ शक्राज्ञामात्रविषयं यत्कृत्य तदाह—'तए णं से सक्के'त्ति। ततः शक्रो देवेन्द्रो देवराजः अर्थात् भगवति तीव्ररागवशेन चितायामग्निना दह्यमानं भगवच्छरीरकं द्रष्टुमशक्तो दृग्गोचरभूप्रदेशस्थितः अग्निकुमारान् देवान् शब्दापयति—सम्बोधनपुरस्सरमाकारयति शब्दापयित्वा च एवमवादीत्—किमेवमित्याह—'खिप्प'त्ति। क्षिप्रमेव भो देवानुप्रियाः! तीर्थकरचितिकायां यावदनगारचितिकायाम् अग्निकायं विकुर्वत एनामाज्ञप्तिं प्रत्यर्प्पयत-कृत्वा निवेदयतेत्यर्थः। 'तए णमि'त्यादि आज्ञाकरणसूत्रं सुगमम्। 'एअमाणत्तिअं पच्चप्पिणंति'त्ति अध्याहार्यम्। अथाग्निर्वायुप्रेरित एव प्रवर्धमानोऽभिमतकार्यसम्पादकः स्यादतो वायुकुमारदेवानाज्ञापयन्नाह—'तए णं से सक्के' इत्यादि। तत्र 'अग्निकायं उज्जालेह'त्ति। अग्निकायमुज्ज्वालयत—उत्—प्राबल्येन दीप्तिमन्तं कुरुत। तीर्थकरशरीरकं गणधरशरीरकाणि अनगारशरीरकाणि 'झामेह'त्ति। ध्मापयत 'ध्मां शब्दाग्निसंयोगयोरि'ति वचनात् अग्निसम्बन्धव्याप्तानि कुरुत ज्वालयतेत्यर्थः। 'तए णं ते' इत्यादि 'झामेंति'त्ति पर्यन्तं सुगमम्। अथ यद्वस्तुजातेनाग्निरुद्दीप्तिमान् स्यात् तदानयनाय भवनपत्यादीनाज्ञापयन्नाह—'तए णं से सक्के' इत्यादि। तत्र अगुरु तुरुष्कं घृतं मधु च भाराग्रशः, चशब्दादन्यदपि तथाविधं वस्तु संहरत—नन्दनवनादिभ्यः समानीयाऽत्र चितासु प्रक्षिपतेत्यर्थः। तत्रागुरुकाष्ठं तुरुष्ककाष्ठं च अग्निसम्पर्कादेव सुरभिधूमसमूहेन दशापि दिशः सुरभयदेवाग्निमुद्दीपयति। मधु घृतं च लोकप्रतीतमेव अग्नेरुद्दीपकं, तदपि प्रमाणतो भाराग्रशोऽनेकभारपरिमाणम्। तत्र भारस्वरूपं प्रागुक्तं मन्तव्यम्। 'तए णं 'ति। ततः शक्राऽऽज्ञानन्तरं यावत् संहरन्ति-नन्दनवनादिभ्य आनीय चितासु प्रक्षिपन्तीत्यर्थ.। अथ शक्र एव चितानिर्वापणनिमित्तं मेघकुमारान् देवान् आज्ञापयति। 'तए णमि'त्यादि। ततः शक्रो मेघकुमारान् देवान् शब्दापयति शब्दापयित्वा चैवमवादीत्-क्षिप्रमेव भो देवानुप्रियाः! तीर्थकरचितिका यावदनगारचितिकां च क्षीरोदकेन निर्व्वापयत—विध्यापयत यावत्ते मेघकुमारा. क्षीरोदकेन अदग्धास्थिकाश्चिता निर्व्वापयन्ति। यतोऽस्थीनि दंष्ट्रादीनि च शक्रादयो देवाः पूजाद्यर्थं ग्रहीष्यन्तीति। सम्प्रति वक्ष्यते तदेवाह—'तते णमि'त्यादि। ततः शक्रो देवेन्द्रो देवराजो भगवतस्तीर्थकृतः उपरितनं दक्षिणं—दक्षिणपार्श्ववर्त्तिनं सक्थिं गृह्णाति। ईशानो देवेन्द्रो देवराजः उपरितनं वामं सक्थि गृह्णाति। 'अवसेस'त्ति। अवशेषाः—उक्तशेषाः भवनपत्यादयो यावद्वैमानिका देवा 'जहारिहं ति। यथार्ह—यथायोग्यम् अवशेषाण्यङ्गानि हस्तमस्तकादीनि—अर्थात् तद्गतान्यस्थीनि उपाङ्गानि-अङ्गसमीपवर्त्तीन्यङ्गुल्यादिगतान्यस्थीनि गृह्णन्तीति गम्यम्। तत्र सर्व्वेषां तद्ग्रहणेऽभिप्रायसाम्यं वैषम्यं वेति पराशङ्कायामाह—'केइ'त्ति। केचिद्देवा जिनभक्त्या जिने—श्रीऋषभप्रभौ भक्तिस्तया हेतुभूतया। अयं भावः— जिनदंष्ट्रादिकं जिन इवाराध्यं जिनसम्बन्धिवस्तुत्वात् जिनप्रतिमावत् जिनस्थापिततीर्थवद्वा। तथा च येषां जिने भक्तिस्तेषामेव तत्सम्बन्धिदंष्ट्रादौ भक्तिः, अन्यथा तथाभक्तेरसम्भवात्। न ह्यमित्रस्याकृतिं दृष्ट्वा नामादि च श्रुत्वा मोदमानस्तद्भक्तिं वा कुर्व्वाणः कोऽपि केनापि दृष्टः श्रुतो वा?। तेन दंष्ट्रादिभक्तिर्जिनभक्तिरेव। ननु जिनप्रतिमायास्तावज्जिनाकृतिमत्त्वेन जिनस्मृतिहेतुत्वात् तीर्थस्य च तीर्थकरस्थापितत्वात् सर्व्वगुणानामाश्रयत्वात् तीर्थकृतोऽपि नमस्करणीयत्वाच्च युक्तमेवाराधनं वस्तुगत्या जिना-

राधनत्वादेव, परं दंष्ट्राद्याराधने कथं जिनभक्तिः ? इति चेत् । उच्यते—यथैकमेव हरिवंशकुलम् इदं श्रीनेमिनाथकुलमित्यादिरूपेण श्रीनेमिनाथोपलक्षितं महाफलं भवति, न तथेदं श्रीकृष्णवासुदेवकुलमित्यादिना कृष्णवासुदेवोपलक्षितमपि । एवं दंष्ट्रापि श्री ऋषभदेवसम्बन्धिनीत्यादितीर्थकरनामोपलक्षिता श्रवणपथमवतीर्णापि महाफलहेतुः किमङ्ग पुनस्तत्पूजनादिकमपि । किञ्च—प्रतिमास्तावत्तीर्थकरस्याकृतिमात्रमेव, न पुनः शरीरं तदवयवो वा, दंष्ट्रा तु साक्षाच्छरीरावयव एव । इयं दंष्ट्रा श्रीऋषभदेवसम्बन्धिनीत्येवंरूपेण स्वयं चिन्त्यमाना श्रूयमाणा वा महानिर्जराहेतुरिति कृत्वा स्वयमेव सम्यग् विचारयतो नाऽऽशङ्कागन्धोऽपि । तेन केषाञ्चित् सम्यग्दृशां तदस्थ्यादिग्रहणं तत्पूजनं च जिनभक्त्यैवेति सिद्धम् । 'केइ जीअमेअं'ति । तथा केचिद्देवा जीतमित्याचरितमासीत्कीनैः प्राक्तनैरिन्द्रादिभिरित्यस्माभिरपि कर्त्तव्यमेवेदमितिकृत्वा दंष्ट्रादिग्रहणं तत्पूजनादि च कुर्व्वन्ति । तथा 'केइ धम्मो'त्ति । केचिद्देवाः सम्यग्दृशः धर्म्मः सम्यक्त्वममलत्वहेतुरस्माकमिति, मिथ्यादृशोऽपि केचित्सम्यक्त्वाभिमुखाः अहो ! शक्रादयो धर्म्मार्थमित्थं विदधति तदस्माकमपापाल्यं विधाने धर्म्मो भवत्विति कृत्वाऽस्थिप्रभृति गृह्णन्ति । अथ शक्रः किमाज्ञापयतीत्याह—'तए णं से सक्के' इत्यादि । ततो जिनभक्त्यादिना दंष्ट्रादिग्रहणानन्तरं शक्रो देवेन्द्रो देवराजः बहून् भवनपतीन् यावद्वैमानिकान् देवान् यथार्ह—चैत्यं यद्योग्यं तत्तस्यैवेत्यर्थः एवमवादीत् क्षिप्रमेव भो देवानुप्रियाः ! सर्व्वरत्नमयान् 'महइ'त्ति । अत्यन्तमहालयान्—अतिविस्तीर्णान् त्रीन् चैत्यस्तूपान् चैत्येन—क्रमेण तीर्थकृद्गणधरसाधुप्रतिमारूपेणोपलक्षिताः स्तूपाश्चैत्यस्तूपास्तान् कुरुत—निर्म्मापयत । त्रयाणामपि विवेचनं 'एगमि'त्यादिना प्राग्वत्सुगमम् । 'तते णं ते' इत्यादि । ततस्ते बहवो यावत्कुर्व्वन्ति, यावत्करणात् 'भवणवइ जाव वेमाणिआ देवा खिप्पामेव सव्वरयणामए महतिमहालए तओ चेइअथूभे'त्ति सङ्ग्रहः । अथ देवाः किं कुर्व्वन्ति ? इत्याह—'तते णमि'त्यादि । शक्रस्तावदाज्ञामात्रं दत्त्वैव नन्दीश्वरद्वीपे गतवान् न पुनस्तत्र स्तूपकरणानन्तरं महिमाकरणं यावत्तस्थिवान् । तेन शक्राज्ञामन्तरेणैव केवलनिजभक्त्या शक्रविरहिता अपि ततः स्तूपत्रयकरणानन्तरं बहवो भवनपत्यादयो देवास्तीर्थकरस्य भगवतः परिनिर्व्वाणमहिमा कुर्व्वन्ति, कृत्वा च यत्रैव प्रदेशे नन्दीश्वरद्वीपः जम्बूद्वीपादारभ्याष्टमो नन्दीश्वरनाम्ना द्वीपस्तत्रैवोपागच्छन्ति । अथ शक्रो नन्दीश्वरे किं करोति ? इत्याह—'तए णमि'त्यादि । ततः स शक्रो देवेन्द्रः पौरस्त्ये—पूर्व्वदिग्वर्त्तिन्यञ्जनकपर्व्वते अष्टाह्निकामहामहिमा करोति । ननु नन्दीश्वरद्वीपेऽष्टाह्निकामहिमाकरणकारणं किमस्ति ? इति चेत् । उच्यते—चतुरशीतिलक्षत्रिषष्टिकोटयधिकैकशतकोटियोजनप्रमाणः १६३८४००००० विष्कम्भो नन्दीश्वरद्वीपस्तस्य बहुमध्यदेशभागे चतसृषु दिक्षु चत्वारोऽञ्जनकगिरयः । ते च मूले साधिकदशयोजनसहस्रविस्ताराः उपरि च योजनसहस्रपृथुलाः चतुरशीतियोजनसहस्रोच्चाः । तेभ्यश्च प्रत्येकं योजनलक्षे गते चतसृषु दिक्षु चतस्रः पुष्करिण्यः । एवं षोडशापि पुष्करिण्यो योजनसहस्रोद्वेधाः योजनलक्षविष्कम्भायामाः । तासां च मध्ये प्रत्येकमेकैकसद्भावेन षोडश दधिमुखगिरयः । ते च पल्याकृतिमत्त्वान्न उपरि मूले च दशयोजनसहस्रविस्तरायामाः योजनसहस्रावगाढाश्चतुष्षष्टियोजनसहस्रोच्छ्रयाश्च । तथा पुष्करिणीनामन्तरान्तरा द्वयोर्द्वयो रतिकरपर्व्वतयोः सद्भावेन द्वात्रिंशद्रतिकरपर्व्वताः । ते च दशयोजनसहस्रायामविष्कम्भाः योजनसहस्रोच्चाः सर्व्वरत्नमयाः झल्लरीसंस्थानसंस्थिताः । एवं द्विपञ्चाशति पर्व्वतेषु प्रत्येकमेकैकजिनभवनसद्भावेन द्विपञ्चाशज्जिनभवनानि । तानि च सर्व्वाण्यपि चतुर्मुखानि योजनशतदीर्घाणि पञ्चाशद्योज-

नायामानि द्विसप्ततियोजनोच्चानि। तेषु च जिनायतनेषु गर्भगृहे प्रत्येकं प्रतिमानामष्टोत्तरशतं भवति। तत्र शक्रादयो देवा जिनजन्माद्युत्सवानन्तरमष्टाह्निकामहोत्सवं कृत्वैव निजनिजस्थानं यान्ति। अतः श्रीऋषभस्वामिनो निर्व्वाणमहिमानं कृत्वा निजनिजस्थाने जिगमिषवो नन्दीश्वरेऽष्टाह्निकामहः कुर्व्वन्तीति। अत्र शक्रस्य लोकपालाः क्व महिमानं कुर्व्वन्ति? इति दर्शयति—'तए णं सक्कस्स'त्ति। ततः शक्रस्य देवेन्द्रस्य चत्वारः सोमयमवरुणवैश्रमणनामानो लोकपालाः चतुर्षु दधिमुखपर्व्वतेषु अष्टाह्निकामहामहिमानं कुर्व्वन्ति। अथेशानेन्द्रस्य तत्रैव महिमाकरणमुतान्यत्र? इत्याह-'ईसाणे'त्ति। ईशानो देवेन्द्र 'उत्तरिल्ले'त्ति। उत्तरदिक्सम्बन्धिनि अञ्जनकपर्व्वते तस्य लोकपाला अपि तथैव। शेषं प्राग्वत्। 'चमरो अ'त्ति। चमरेन्द्रो दाक्षिणात्ये अञ्जनगिरौ तस्य लोकपालास्तत्रैव। 'वली'त्यादि। वलीन्द्रः पश्चिमदिग्वर्त्तिन्यञ्जनगिरौ लोकपाला अपि तत्रैव दधिमुखपर्व्वतेषु। अथोक्तशेषा देवा यत्कुर्व्वन्ति तदाह्—'तए णं ते' इत्यादि। ततस्ते वह्वो भवनपत्यादयो देवा अष्टाह्निका—महामहिमानं कुर्व्वन्ति कृत्वा च 'जेणेव'त्ति। यत्रव स्वकीयानि स्वकीयानि विमानानि वैमानिकदेवाना, यत्रैव स्वकीयानि स्वकीयानि भवनानि भवनपत्यादीनां, यत्रैव स्वीयाः स्वीयाः सुधर्म्माः सभाः, तत्र सुष्ठु-शोभना धर्म्मश्छन्दकरूपा यासु ताः सुधर्म्माः विशिष्टच्छन्दकोपेता इत्यर्थः। यद्वा सुष्ठु—शोभनः सम्यक्त्वनैर्मल्यहेतुत्वेन प्रधानतरो धर्म्मः कारणे कार्योपचारात् धर्म्महेतवः सम्यग्दृशां देवानां देवीनां च अर्चनीया यावत्पर्युपासनीया वज्रमयेषु गोलवृत्तेषु समुद्गकेषु जिनदंष्ट्रा विद्यन्ते यासु ताः सुधर्म्माः। अथवा तत्र गतानां सम्यग्दृशां देवादीना जिनदंष्ट्राऽर्च्चनाद्यभिप्रायो जायते तेन सम्यक्त्वनैर्मल्यहेतुजिनदंष्ट्राऽर्च्चनादिलक्षणो धर्म्मो यासु ताः सुधर्म्माः। वहुत्वं च स्थानकानां वहूनां सद्भावेन वहुसभाना विवक्षणात्। यत्रैव च स्वमाणवकाश्चैत्यस्तम्भाः तत्रैवोपागच्छन्ति, उपागत्य च वज्रमयेषु गोलवृत्तसमुद्गकेषु 'जिणसकहाउ'त्ति। जिनदंष्ट्राः प्रक्षिपन्ति, प्रक्षिप्य चाग्र्यैः— प्रत्यग्रैः वरैः—प्रधानैर्माल्यैर्गन्धैश्चार्च्चयन्ति, अर्च्चयित्वा च विस्तीर्ण्णान् भोगभोगान्-उत्कृष्टभोगान् भुञ्जानास्तिष्ठन्ति। अत्र यद्यपि शक्रादयो नामग्राहं नोक्तास्तथापि प्रागुक्ताः सर्व्वेऽपि ग्राह्याः। दंष्ट्रापदं चोपलक्षणपरं तेन यथासम्भवमस्थ्याद्यपि ग्राह्यमिति। इति तृतीयारकस्वरूपं निरूपितम्॥

अथ भगवानेव हे श्रमण हे आयुष्मन्नित्यादिना सम्बोध्य तृतीयारकाच्चतुर्थारकप्रतिपत्तिक्रममाह—

तीसे णं समाए दोहिं सागरोवमकोडाकोडीहिं काले वीइक्कंते अणंतेहिं वण्णपज्जवेहिं तहेव जाव अणंतेहिं उट्ठाणकम्म जाव परिहायमाणे परिहायमाणे एत्थ णं दूसमसुसमा णामं समाकाले पडिवज्जिसु समणाउसो!। तीसे णं भंते! समाए भरहस्स वासस्स केरिसए आगारभावपडोआरे पण्णत्ते?। गो०! वहुसमरमणिज्जे भूमिभागे पं०। से जहा णाम ए आलिंगपुक्खरे ति वा जाव मणीहि उवसोभिए तं कित्तिमेहि चेव अकित्तिमेहि चेव। तीसे णं भंते! समाए भरहे वासे मणुआणं केरिसए आगारभावपडोआरे पं०?। गो०! तेसि मणुआणं छव्विहे संघयणे छव्विहे संठाणे वहूइं धणूइं उड्ढं उच्चत्तेणं जहण्णेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडीआउअं पालेंति। पालेत्ता अप्पेगइआ णिरयगामी जाव देवगामी अप्पेगइआ सिज्झंति जाव सव्वदुक्खाणमंतं करेंति। तीसे णं समाए तओ वंसा समुप्पज्जित्था। तं जहा-अरहंतवंसे चक्कवट्टिवंसे दसारवंसे।

तीसे णं समाए तेवीसं तित्थयरा, एक्कारस चक्कवट्टी, नव बलदेवा, नव वासुदेवा समुप्पज्जित्था । तीसे णं समाए एक्काए सागरोवमकोडाकोडीए बयालीसाए वाससहस्सेहिं ऊणियाए काले वीतिक्कंते अणतेहिं वण्णपज्जवेहिं तहेव जाव परिहायमाणे परिहायमाणे एत्थ णं दूसमा णामं समाकाले पडिवज्जिस्सति समणाउसो ! । तीसे णं भंते ! समाए भरहवासस्स केरिसए आगारभावपडोआरे भविस्सति ? । गो० ! बहुसमरमणिज्जे भूमिभागे पं० । से जहा णाम ए आलिंगपुक्खरे ति वा मुइंगपुक्खरे ति वा जाव णाणामणि पंच जाव कित्तिमेहि चेव अकित्तिमेहिं चेव । तीसे णं भंते ! समाए भरहस्स वासस्स मणुआणं केरिसए आगारभावपडोआरे पं० ? । गो० ! तेसि णं मणुआणं छव्विहे संघयणे, छव्विहे संठाणे, बहुरयणीओ उद्धं उच्चत्तेणं, जहण्णेणं अंतोमुहुत्तं उक्कोसेणं सातिरेगं वाससयं आउअं पालेंति पालेत्ता अप्पेगइआ णिरयगामी जाव सव्वदुक्खाणमंतं करेंति । तीसे णं समाए पच्छिमे तिभागे गणधम्मे पासंडधम्मे रायधम्मे जायतेए धम्मचरणे अ वोच्छिज्जिस्सति । तीसे णं समाए एक्कवीसाए वाससहस्सेहिं काले वीइक्कंते अणंतेहिं वण्णपज्जवेहिं गंधरसफासपज्जवेहिं जाव परिहायमाणीए परिहायमाणीए एत्थ णं दूसमदूसमा णामं समाकाले पडिवज्जिस्सति समणाउसो ! । तीसे णं समाए उत्तिमकट्ठपत्ताए भरहस्स केरिसए आगार० भविस्सति ? । गो० ! काले भविस्सति हाहाभूए भंभाभूए कोलाहलभूए समाणुभावेण य णं खरफरुसधूलिमला दुव्विसहा वाउला भयंकरा य वाया संवट्टका य वाहिंति । इह अभिक्खणं धूमाहिंति अ दिसा समंता रयस्सला रेणुकलुसा तमपडलनिरालोआ समयलुक्खयाए अ णं अहिअं चंदा सीअं मोच्चिहिंति । अहिअं सूरिआ तविस्संति । अदुत्तरं च णं गो० ! अभिक्खणं अरसमेहा विरसमेहा खारमेहा खत्तमेहा अग्गिमेहा विज्जुमेहा विसमेहा अजवणिज्जोदगा वाहिरोगवेअणोदीरणपरिणामसलिला अमणुण्णपाणिअगा चंडानिलपहयतिक्खधारानिवायपउरं वासं वासिहिंति । जे णं भारहे वासे गामागरणगरखेडकब्बडमडंबदोणमुहपट्टणासमगं जणवयं चउप्पयं गवेलए खहयरे पक्खिसंघे गामारण्णप्पयारणिलए तसे अ पाणे अ बहुप्पयारे रुक्खगुच्छगुम्मलयवल्लिपवालंकुरमादीए तणवणप्फइकाइए ओसहीओ अ विद्धंसेहिंति । पव्वयगिरिडुंगरुच्छलमट्ठिमादीए अ वेअड्ढगिरिवज्जे विरावेहिंति । सलिलबिलविसमगड्डणिण्णुण्णताणि अ गंगासिंधुवज्जाइं समीकरेहिंति । तीसे णं भंते ! समाए भरहस्स वासस्स भूमीए केरिसए आगारभावपडोआरे भविस्सति ? । गो० ! भूमी भविस्सति इंगालभूआ मुम्मुरभूआ छारिअभूआ तत्तकवेल्लुअभूआ तत्तसमा जोइभूआ धूलिबहुला रेणुबहुला पंकबहुला पणयबहुला चलणिबहुला बहूणं धरणिगोअराणं सत्ताणं दुन्निगमा यावि भविस्सति । तीसे णं भंते ! समाए भरहे वासे मणुआणं केरिसए आगारभावपडोआरे भविस्सति ? । गो० ! मणुआ भविस्संति दुरूवा दुव्वण्णा दुग्गंधा दुरसा दुफ्फासा अणिट्ठा अकंता अप्पिआ असुभा अमणुण्णा अमणामा हीणस्सरा दीणस्सरा अणिट्ठस्सरा अकंतस्सरा अप्पिअस्सरा अम-

णुण्णस्सरा, अमणामस्सरा अणादिज्जवयणपच्चायाता णिल्लज्जा कूडकवडकलहवहबंधवेरनिरया मज्जायातिक्कमप्पहाणा अकज्जनिच्चुज्जता गुरुनिओअविणयरहिआ य विगलरूवा परूढनहकेसमंसुरोमा काला खरफरुससामवण्णा फुट्टसिरा कविलपलिअकेसा बहुण्हारुणिसंपिणद्धदुद्दंसणिज्जरूवा संकुडिअवलीतरंगपरिवेढिअंगमंगा जरापरिणय व्व थेरगणरा पविरलपरिसडिअदंतसेढी उब्भडघडमुहा विसमणयणवंकणासा वंकवलीविगयभेसणमुहा दद्दुकिडिभसिब्भफुडिअफरुसच्छविचित्तलंगमंगा कच्छूखसराभिभूआ खरतिक्खणहकंडूइअविक्खयतणू टोलागितिविसमसंधिबंधण- उक्कुडुअट्ठिअविभत्तदुब्बल-कुसंघयण-कुप्पमाण-कुसंठिआ कुरूवा कुसंठाणासण कुसिज्ज कुभोइणो असुइणो अणेगवाहिपरिपीलिअंगमंगा खलंतविब्भलगई निरुच्छाहा सत्तपरिवज्जिआ विगयचेट्ठा नट्ठतेआ अभिक्खणं अभिक्खणं सीउण्हखरफरुसवायविज्झडिअमलिणपंसुरओगुंडिअंगमंगा बहुकोहमाणमायलोहा बहुमोहा असुहदुक्खभागी ओसण्णं धम्मसण्णसम्मत्तपरिब्भट्ठा उक्कोसेणं रयणिप्पमाणमेत्ता सोलसवीसइवासपरमाउसो बहुपुत्तनत्तुपरियालपणयबहुला गंगासिंधूओ महाणईओ वेअड्ढपव्वयं णिसाए बावत्तरिं णिओआ बीअमेत्ता बिलवासिणो मणुआ भविस्संति । ते णं भंते ! मणुआ किमाहारेस्संति ? । गो० ! ते णं काले णं ते णं समए णं गंगासिंधूओ महाणईओ रहपहमेत्तवित्थराओ अक्खसोअप्पमाणमेत्तं जलं वोज्झिहिंति । से विअ णं जले बहुमच्छकच्छभाइण्णे णो चेव णं आउबहुले भविस्सति । तए णं ते मणुआ सूरुग्गमणमुहुत्तंसि सूरत्थमणमुहुत्तंसि बिलेहिंतो णिद्धाइस्संति । बिलेहिंतो णिद्धाइत्ता मच्छकच्छभे थलाइं गाहेस्संति, मच्छकच्छभे थलाइं गाहेत्ता सीआतवतत्तेहिं मच्छकच्छभेहिं इक्कवीसं वाससहस्से वित्तिं कप्पेमाणा विहरिस्संति । ते णं भंते ! मणुआ णिस्सीला णिव्वया णिम्मेरा णिप्पच्चक्खाणपोसहोववासा ओसण्णं मंसाहारा मच्छाहारा खुद्दाहारा कुणिमाहारा कालमासे कालं किच्चा कहिं गच्छिहिंति ? कहिं उववज्जिहिंति ? । गो० ! ओसण्णं नरगतिरिक्खजोणिएसु उववज्जिहिंति । तीसे णं भंते ! सीहा वग्घा विगा दीविआ अच्छा तरच्छा परस्सरा सिआलबिरालसुणगाकोलसुणगा ससगा चित्तलगा ओसण्णं मंसाहारा मच्छाहारा खोद्दाहारा कुणिमाहारा कालमासे कालं किच्चा कहिं गच्छिहिंति ? कहिं उववज्जिहिंति ? । गो० ! ओसण्णं नरगतिरिक्खजोणिएसु उववज्जिहिंति । ते णं भंते ! ढंका कंका पिलगा मग्गुई-सिहीओ ओसण्णं मंसाहारा जाव कहिं गच्छिहिंति ? जाव उववज्जिहिंति ? गो० ! ओसण्णं नरगतिरिक्ख जाव उववज्जिहिंति ।

'तीसे णमि'त्यादि । तस्या अवसर्पिण्याः समायाः— सुषमदुष्षमारूपायाः द्वाभ्यां सागरोपमकोटाकोटीभ्यां कालो व्यतिक्रान्तः। कथम् ? इत्याह—'अणंतेहिं'ति । अनन्तैर्वर्णपर्यवैः तथैव यावदनन्तैरुत्थानकर्म्मादिपर्यवैर्यावत् परिहीयमान इत्यादि प्राग्वदुक्तमिहापि सङ्ग्राह्यम् । 'एत्थ णं'ति । अत्रावसरे 'दूसमे'ति दुष्षमसुषमा नाम समाकालः कालविशेषः प्रतिपन्नवान्-सञ्जात इत्यर्थः । अथैवंविधे कालविशेषे भरत-

क्षेत्रस्वरूपं प्रश्नयन्नाह–'तीसे णमित्यादि। तस्यां भदन्त! समायां भरतस्य वर्षस्य कीदृश आकारभावप्रत्यवतारः प्रज्ञप्तः? भगवानाह–गौतम! बहुसमरमणीयो भूमीभागः प्रज्ञप्तः। 'से जहा णाम ए'इत्यादि 'अकित्तिमेहिं चेव'त्ति पर्यन्तं प्राग्वत्। अथ मनुष्यविषयं प्रश्नमाह–'तीसे णमि'त्यादि। तस्या भदन्त! समायां–दुष्षमसुषमायां भरते वर्षे मनुष्याणां कीदृश आकारभावप्रत्यवतारः प्रज्ञप्तः? भगवानाह–गौतम! तेषां मनुष्याणां षड्विधं संहननं प्रज्ञप्तं वज्रर्षभनाराचादीनि षडपि संहननानि तेषां भवन्तीत्यर्थः। एवं समचतुरस्रादीनि षट् संस्थानान्यपि भवन्तीति। बहूनि धनूंषि ऊर्ध्वमुच्चैस्त्वेन। 'जहण्णेण'त्ति। जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतः पूर्वकोटिमेकामायुः प्रतिपालयन्ति। अथ निजमायुः प्रतिपाल्य ते मनुजा यौगलिकवदेकगतिगामिनो भिन्नभिन्नगतिगामिनो वा स्युः? इत्याकाङ्क्षायामाह 'अप्पेगइअ'त्ति। अप्येकका–केचिन्मनुष्या निरयगामिनः यावद्देवगामिनः, यावत्करणात् तिर्यग्मनुष्यगामिनोऽपि स्युः। अप्येककाः सिद्ध्यन्ति यावत्सर्वदुःखानामन्तं कुर्वन्ति। यावत्करणात् 'बुज्झंति मुच्चंति परिणिव्वायंति'त्ति पर्यन्तं प्रायः सुषमदुष्षमारकसमानमेवात्र द्रष्टव्यम्। अथ विशेषमाह–'तीसे णमि'त्यादि। तस्यां समायां त्रयो वंशा मनुष्येष्वपि जातिभेदविशेषाः समुत्पन्नाः सुषमदुष्षमायां च नोत्पन्ना इति विशेषः। वंशत्रिकमाह–तद्यथेति। अर्हतां वंशोऽर्हद्वंशः। चक्रेण वर्त्तितुं शीलमेषामिति चक्रवर्त्तिनस्तेषां वंशश्चक्रवर्त्तिवंशः। 'दसार'त्ति। दशारा रूढितो नवापि वासुदेवाः, अन्यथा वासुदेवो दशारो वा कृष्ण एवाभिधातव्यो भवेत्। दशाराणां त्रिपृष्ठादीनां वंशो दशारवंशः। यद्यप्यवसर्प्पिणीमधिकृत्य तीर्थकृच्चक्रवर्त्तिनां वंशयोराद्यभूतौ श्रीऋषभभरतौ सम्भूतौ। यदागमः–

अहयं च दसाराणं पिआ मे चक्कवट्टिवंसस्स। अज्जो तित्थयराणं अहो कुलं उत्तमं मज्झ॥१॥त्ति।

तथापि तृतीयारके तावेकैकावेवेत्यतस्तौ तत्र वंशत्वेन नोक्तौ, वंशस्यैकजातीयक्रमवर्त्तिपुरुषसमुदायात्मकत्वात् तयोश्च तथात्वाभावात्। न ह्येकः समुदायो भवितुमर्हति। अत एवानन्तरं वंशत्रयपुरुषसङ्ख्यायां तयोरभणनमपीति। अथ चतुर्थारके त्रयाणामपि वंशानां पुरुषसङ्ख्यामाह–'तीसे णमि'त्यादि। तस्यां समायां–दुष्षमसुषमालक्षणायां त्रयोविंशतिस्तीर्थकराः। ते चाजितादयो वर्द्धमानान्ताः प्रतीताः। ऋषभस्य तृतीयारकसमुत्पन्नत्वेनेहाविवक्षितत्वात्। एकादश चक्रवर्त्तिनस्तेऽपि भरतस्य तृतीयारकसमुत्पन्नत्वेन सगरो मघवान् सनत्कुमारः शान्तिः कुन्थुः अरः सुभूमो महापद्मो हरिषेणो जयो ब्रह्मदत्तश्चेतिनामानः। नव बलदेवाः। ते च अचलो विजयो भद्रः सुप्रभः सुदर्शनः आनन्दो नन्दनः पद्मो रामश्चेतिनामानः। नव वासुदेवाः। ते च त्रिपृष्ठो द्विपृष्ठः स्वयम्भूः पुरुषोत्तमः पुरुषसिंहः पुरुषपुण्डरीको दत्तो नारायणः कृष्णश्चेति। एवमुक्तनामानश्चतुर्थो द्विपञ्चाशत्पुरुषास्त्रिष्वपि वंशेषु समुत्पन्नाः। द्वौ च श्रीऋषभभरतनामानौ तृतीयारकसम्भूतौ। एवं सर्व्वसङ्ख्यया चतुष्पञ्चाशदुत्तमपुरुषाः अस्यामवसर्प्पिण्यां सञ्जाताः। एवमन्यस्यामप्यवसर्प्पिण्यामवसातव्याः। यदागमः–'भरहेरवएसु वासेसु एगमेगाए ओसप्पिणीए चउप्पण्णं उत्तमपुरिसा उप्पज्जिंसु वा उप्पज्जंति वा उप्पज्जिस्संति वा। चउवीसं तित्थगरा। बारस चक्कवट्टी। नव बलदेवा। नव वासुदेवा' इति समवायाङ्गे। इति प्रसङ्गतो ज्ञेयम्। यत्तु त्रिषष्टिशिलाकापुरुषान्तर्वर्त्तिनामपि प्रतिवासुदेवानां चतुर्थो वंशो नोक्तस्तन्निदानं तु प्रतिवासुदेवा हि वासुदेवापहृतराज्यतया परिम्लानयशस्विनो नेहोत्तमपुरुषे विवक्षिता अतो गणनामधिकृत्य तद्वंशोऽप्युपेक्षितो

द्रष्टव्य इति । ननु तर्हि एकजातीयक्रमवर्त्तिपुरुषसमुदायात्मकत्वादुत्तमपुरुषत्वाच्च चतुर्थो वंशो बलदेवानामपि कथं नोक्त ? इति चेत् । उच्यते-यद्यप्येवं तथापि वासुदेवस्य बलदेवाविनाभाविस्थितिकत्वात् बलदेवस्य च वासुदेवोपार्जितराज्यश्रीसंविभागभोक्तृत्वात् भ्रातृत्वेऽप्यत्यन्तस्नेहेन द्वयोरप्यन्योन्यानुविद्धप्रवृत्तिमतोरेकतया एव प्रसिद्धेर्वंशस्याप्येकतैवेत्यदोषः । इति चतुर्थारकस्वरूपं निरूपितम् ॥

अथ पञ्चमारकप्रतिपत्तिक्रममाह–'तीसे णमि'त्यादि । हे श्रमण ! हे आयुष्मन् ! तस्याश्चतुर्थारकलक्षणायाः समायाः एकया सागरोपमकोटाकोट्या द्विचत्वारिंशद्वर्षसहस्रोनितया कालो व्यतिक्रान्तः। कथम् ? इत्याह–'अणंतेहिं'ति । अनन्तैर्वर्णपर्यवैः-केवलिपरिज्ञया परिच्छिद्यमानांशरूपैः । तथैव-प्रागुक्तप्रकारेणैव यावत्परिहीयमाने परिहीयमाने 'एत्थ णं'ति। अत्रान्तरे दुष्षमानाम्ना कालः प्रतिपत्स्यति । प्रज्ञापयितुः श्रीवीरस्यापेक्षयाऽनागतप्रयोगो, यतः श्रीवीरनिर्वाणादेकोननवतिपक्षेषु गतेषु पञ्चमारकसम्पत्तिः । अथ पञ्चमारके भरतक्षेत्रस्वरूपजिज्ञासया प्रश्नयति–'तीसे णमि'त्यादि । प्रश्ननिर्वचनसुगमे । अथ तत्र मनुष्यविषयं प्रश्नमाह–'तीसे णमि'त्यादि । व्याख्या चाऽस्य चतुर्थारकवत् । नवरमुत्कर्षतः सातिरेकं वर्षशतं–विंशत्यधिकं वर्षशतमित्यर्थः । यदुक्तं–'वाससय पि सविसं सपंचदिणमाउ मणुअ इत्थीणं'ति । क्वचित् त्रिंशदधिकं शतमित्यपि । तेन श्रीवज्रसेनस्याष्टाविंशत्यधिकं शतं वर्षाणामायुर्युक्तमेवेति बोध्यम् । एवंविधमायुस्ते मनुजाः पालयन्ति । वर्त्तमाना भविष्यदर्थे, पालयिष्यन्ति । पालयित्वा च तेषां मध्ये अप्येकेकाः केचिन्निरयगामिनो भविष्यन्तीति क्रियापदमध्याहार्यम् । 'जाव सव्व'त्ति । यावत्सर्वदुःखानामन्त कुर्वन्ति । अत्र भविष्यदर्थेऽपि वर्त्तमानप्रयोगो मोक्षगमनहेतोः कालस्य स्वल्पत्वसूचकः सूत्ररचनाया विचित्रतासूचको वाऽवसातव्यः। अथ पञ्चमारके अभूतपूर्व्वं किं किं ? भविष्यतीति दर्शयन्नाह–'तीसे णमि'त्यादि । तस्याः समायाः पञ्चमारकलक्षणायाः त्रिभागे-तृतीये भागे 'गणधम्मे'त्ति । गणः–श्रीवीरजिनप्रवर्त्तितं साध्व्यादिसमुदायलक्षणं तीर्थं, तस्य धर्म्मः–श्रुतचारित्ररूपः । स व्युच्छेत्स्यति-व्युच्छित्तिं यास्यति, तदाधारभूतस्य सङ्घस्य तदानीमेव व्युच्छेत्स्यमानत्वात् । यदुक्तम्-

पञ्चमारकपर्यन्ते दीक्षां द्वादशवार्षिकः । दुःप्रसभो द्विहस्ताङ्गो ग्रहीता शुद्धवासनः ॥१॥

षोडशाब्दो महाचा(वी)र्यो दशवैकालिकागमः । युगप्रधानो भवितोत्कृष्टषष्ठतपोऽन्वितः ॥२॥

फल्गुश्रीनामतः साध्वी नागिलः श्रावकस्तथा । सत्यश्री श्राविका सङ्घः पूर्व्वाह्णे क्षयमेष्यति ॥३॥

इति । श्रीमहानिशीथे तु विष्णुश्रीसाध्वी, जिनदत्तः श्रावकः, फल्गुश्री श्राविका चेति नामानि सन्तीति । एतेन 'पच्छिमे तिभागे' इति प्रस्तुतागमवचनात् एकविंशतिवर्षसहस्रात्मकस्य पञ्चमारकस्य चतुर्दशवर्षसहस्रातिक्रमे सप्तवर्षसहस्राणि यावत्तृतीयो भागो भवति । तत्र जिनधर्म्मस्य व्युच्छेदो भावीति परस्य सम्भावनावचोऽपि निरस्तम् । यत इह तृतीयभागेऽपि तृतीयभागतश्चरमदिवसो ग्राह्यः, तस्यापि तृतीयभागत्वानपायात् अन्यथा प्रवचनबाधा स्यात् । प्रवचने च पञ्चमारकपर्यन्तं श्रीवीरतीर्थस्याच्छिन्नप्रवृत्तिरुक्ता । यदागमः– 'जंबुद्दीवे ण भंते ! दीवे भारहे वासे इमीसे ओसप्पिणीए देवाणुप्पिआण केवइअं कालं तित्थं अणुसज्जिस्सति ? त्ति । गो० ! जंबुद्दीवे दीवे भारहे वासे इमीसे ओसप्पिणीए मम एक्कवीसं वाससहस्साइं तित्थं अणुसज्जिस्सति'त्ति श्रीभगवत्यां विंशतितमे शतकेऽष्टमोद्देशके । एतेन केचित् दुष्षमानु-

भावात् प्रवचनप्रत्यनीकतया व्युच्छिन्नमपि तीर्थं पुस्तकसिद्धान्तेनैवाऽस्माभिः प्रादुष्कृतमिति वदन्ति, तेऽपि परास्ताः। श्रीवीरतीर्थस्य एकविंशतिवर्षसहस्राणि यावदच्छिन्नाया एव प्रवृत्तेरुक्तत्वात्। आस्तां पुस्तकमपरपुरुषो वा, व्युच्छिन्नस्य तीर्थस्य तीर्थकरव्यतिरिक्तेन केवलिनापि प्रादुष्कर्तुमशक्यत्वात् तीर्थकरा-धिक्यप्रसङ्गाच्चेति। तथा 'पासडधम्मे'त्ति। पाषण्डा-जैनव्यतिरिक्ताः सर्वेऽपि शाक्यादयस्तेषां धर्मः-अग्निपूजा-सन्ध्यावन्दनादिलक्षणस्तस्य व्युच्छेद क्रमप्राप्तोऽपि पूर्वाह्ण एवावसातव्यः। तथा 'राय-धम्मो'त्ति। राजधर्मोऽपराधिनां दण्डविधानादिः छत्रादिराजचिह्नादिः सेव्यसेवकभावव्यवहारादिलक्षणश्च मध्याह्ने व्युच्छेत्स्यति। तथा जाततेजा-अग्निः अपराह्णे व्युच्छेत्स्यति। यदुक्तम्-

मध्याह्ने सुमुखो मन्त्री नृपो विमलवाहनः। विनंक्ष्यतोऽपराह्णे तु वह्निर्विध्यास्यति क्षितौ ॥१॥

चकारः समुच्चयार्थः। तथा धर्माचरणं-लौकिकधर्मप्रवर्त्तनम् उद्वाहादिकृत्य माङ्गल्यादिनिमित्तं गृहद्वारादौ तोरणचित्रादिविरचनं गीतगानातोद्यादिवादनं चन्दनादिना तिलकादिकरणं जलादिना शौचादिकर्म चेत्यादि सर्वं व्युच्छेत्स्यति। चः समुच्चये। एतत्पञ्चकं पञ्चमारकान्तमिति तात्पर्यम्। इति पञ्चमारकस्वरूपं प्रदर्शितम्॥

अथ षष्ठारकप्रतिपत्तिक्रममाह- 'तीसे ण समाए' इत्यादि। हे श्रमण! हे आयुष्मन्! तस्याः दुष्षमारकलक्षणायाः समायाः एकविंशत्या वर्षसहस्रैः काले व्यतिक्रान्ते। कथम्? इत्याह-'अणतेहिं'ति प्राग्वत्। 'एत्थ ण'ति। अत्रान्तरे दुष्षमदुष्षमा नाम्ना कालः प्रतिपत्स्यते। अथ तस्मिन् काले भरत-क्षेत्रस्वरूपपरिज्ञानाय प्रश्नमाह- 'तीसे णमि'त्यादि। तस्या दुष्षमादुष्षमालक्षणायां भदन्त! समायां 'उत्तिमकट्ठ'त्ति। उत्तमा-प्रकृष्टा काष्ठा कालोचितावस्था तां प्राप्ता। यद्वा परमं यत्कष्टं-कृच्छ्रं दुःखमिति यावत्, प्राप्ता तस्यां भरतस्य वर्षस्य कीदृश आकारभावप्रत्यवतारः? आकृतिस्वरूपस्यावतरण भविष्यतीति प्रश्नविषयीकृतो भगवानाह- गौतम! कालो दुष्षमादुष्षमालक्षणो भविष्यति। किंस्वरूपः? हाहाभूतः-हा हा इत्येवरूपस्य दुःखार्त्तलोकेन करणं हाहोच्यते तद्भूतस्तत्स्वरूपः कालो हाहाभूतः। तथा 'भंभा-भूए'त्ति। भां भामित्यस्य शब्दस्य दुःखार्त्तगवादिभिः करणं भंभोच्यते तद्भूतः कालो भंभाभूतः। अथवा भभा-भेरी सा चान्तःशून्या ततो भभेव यः कालो जनक्षयात् तच्छून्यः स भभाभूत उच्यते। 'कोला-हल'त्ति। कोलाहल इहार्त्तशकुनिसमूहध्वनिस्त भूत-प्राप्तः कोलाहलभूतः। एवविधस्य कालस्यानुभावात् तदानीं वाताः कीदृशाः वास्यन्ति? इत्याह-'समाणुभावेण य णमि'ति। समानुभावेन षष्ठारकलक्षणकाल-विशेषसामर्थ्येन। चकार एवकारार्थे मुख्यत्वद्योतकस्तेन स्वभावनियत्यादिषु सत्स्वपि कालस्यैव प्राधान्या-त्कालानुभावेनैवेत्यर्थः। णमित्यलङ्कारे। 'खर'त्यादि। खरपरुषा-अत्यन्तकठोराः धूल्या च मलिनास्ततः कर्मधारयः। दुव्विसह'त्ति। दुर्विषहाः- अतिदुःसहा इत्यर्थः। 'वाउल'त्ति। व्याकुलाः- असमञ्जसा इत्यर्थः। 'भयंकर'त्ति। भयोत्पादकाः वाताः संवर्त्तयन्ति तृणकाष्ठादीनिति संवर्त्तका वास्यन्तीति। अथा स्मिन् काले दिश कीदृश्यो भविष्यन्ति? इत्याह-'इह अभिक्खं'ति। इहास्मिन् काले अभीक्ष्ण-वार वारं 'धूमाहिंति'त्ति धूमायिष्यन्ति-धूममुद्वमिष्यन्ति। च समुच्चये। दिशः पूर्वादिका दशापि। किंभूता दिशः? 'समत'त्ति समन्तात्-सर्वतो रजःस्वलाः-रजोयुक्ताः। अत एव 'रेणुकलुस'त्ति। रेणुना-धूल्या कलुषा-मलिना रेणुकलुषाः। तमःपटलेन-अन्धकारवृन्देन निरालोका-निरस्तप्रकाशा निरस्तदृष्टिप्रसरा इत्यर्थः। ततः कर्मधारयः। अथ कालस्य रूक्षतया तदानीं चन्द्रादित्याः कीदृशा भविष्यन्ति? इत्याह-'समय'त्ति।

समयस्य कालस्य रूक्षतया च । णमिति प्राग्वत् । 'अहिअं'ति । अधिकं अहितं वा अपथ्यं चन्द्राः शीतं मोक्ष्य-न्ति । अधिकमहितं वा सूर्यास्तापं करिष्यन्ति । अथान्यमपि तदानीं भाविनमर्थं भगवान स्वयमेवाह-'अदुत्तरं च णं'ति । अथवाऽपरं हे गौतम ! अभीक्ष्णं-वारं वारं 'अरसमेह'त्ति । अरसा मनोज्ञरसवर्जितजला मेघास्ते । 'विरस'त्ति । विरसमेघा-विरुद्धरसमेघाः । एतदेवाभिव्यज्यते 'खार'त्ति । क्षारमेघाः-सर्जादिक्षारसमान-रसजलोपेता मेघाः । 'खत्तमेह'त्ति । करीषसमानरसजलोपेता मेघाः । 'अग्गिमेह'त्ति । अग्निवद्दाहकारि-सलिला मेघाः । 'विज्जुमेह'त्ति । विद्युत्प्रधाना एव जलवर्जिता मेघा इत्यर्थः । विद्युन्निपातवन्तो वा विद्युन्नि-पातकार्यकारिसलिलनिपातवन्तो वा । 'विसमेह'त्ति । विषमेघा-जनमरणहेतुजला इत्यर्थः । 'अजवणिज्जोद-ग'त्ति । अयापनीयमयापनाप्रयोजनमतृप्तिहेतुरुदकं येषां ते अयापनीयोदकाः । 'वाहिरोग'त्ति । व्याधयः-स्थिराः कुष्ठादयो रोगाः-सद्योघातिनः शूलादयः तज्जन्यायां वेदनायाः या उदीरणा सैव परिणामो यस्य सलिलस्य तत्तथा, तदेवंविधं सलिलं येषां ते तथा । अत एव 'अमणुण्ण'त्ति । अमनोज्ञपानीयकाः । एते मेघा वर्षं वर्षिष्यन्ति-वृष्टिं करिष्यन्तीति हृदयम् । वर्षं च कीदृशम् ? इत्याह-'चंडानिल'त्ति । चण्डानिलेन प्रहतानां तीक्ष्णानां वेगवतीनां धाराणां यो निपातः स प्रचुरो यत्र वर्षे स तथा तम् । अथ तेन वर्षेण मेघाः यत्करिष्यन्ति तदाह-'जेणं'ति । येन वर्षेण करणभूतेन पूर्वोक्तविशेषणा मेघा ग्रामादीन् विध्वंसयिष्य-न्तीति सम्बन्धः । 'गामागरे'त्यादि प्राग्वत् । 'जणवय'ति । जनपदं-मनुष्यलोकं चतुष्पदं-महिष्यादिकं 'गवेल-ए'त्ति । गवेडकान् । गोशब्देन गावः एडकाश्चोरभ्राः । 'खयहरे'त्ति । खचरान्-पक्षिसङ्घातान् 'गामारण्ण'त्ति । ग्रामारण्ययोर्यः प्रचार तत्र निरतान् 'तसे अ'त्ति । त्रसांश्च द्वीन्द्रियादीनित्यर्थः । 'बहुप्पयारे'त्ति । बहुप्रकारान् 'रुक्खगुच्छे'त्यादि । वृक्षाश्चूतादयः गुच्छा वृन्ताकीप्रभृतयः । गुल्मा-नवमालिकाद्याः । लताअशोकलताद्याः । वल्ल्यो-वालुङ्किकीप्रभृतयः । प्रवालाः-पल्लवाङ्कुराः । अङ्कुराः-शाल्यादिबीजसूचयः । ततो द्वन्द्वः । ते आदिर्येषां ते तथा तान् आदिशब्दात् कदल्यादिवलयानि पद्मादयश्च जलजविशेषाः ग्राह्या इत्यादीन् 'तणवण'त्ति । तृणवनस्पतिकायिकान् बादरवनस्पतीनित्यर्थः । 'ओसहीओ'त्ति । औषधीश्च शाल्याद्याः । एतान् पदार्थान् पूर्वोक्ता मेघा विध्वंसयिष्यन्तीति सर्वत्र सम्बन्धनीयम् । पुनरपि ते मेघाः किं करिष्य-न्तीत्याह-'पव्वये'त्यादि । यद्यपि पर्वतगिरिडुङ्गरा अन्यत्रैकार्थतया रूढाः तथापीह विशेषो द्रष्टव्यः । तथाहि पर्वाण्युत्सवान् तन्यन्ति-विस्तारयन्तीति पर्वताः-क्रीडापर्वता उज्जयन्तवैभारादयः । 'गिरि'त्ति । गृणन्ति-शब्दायन्ते जननिवासभूतत्वेनेति गिरयः गोपालगिरिचित्रकूटादयः । 'डुङ्गर'त्ति । डुङ्गानां शिलावृन्दानां चौर-वृन्दानां वाऽस्तित्वात् डुङ्गराः शिलोच्चयमात्ररूपाः । 'उच्छल'त्ति । उत्-उन्नतानि स्थलानि धूल्युच्छ्रयरूपाणि 'भट्ठ'त्ति । पांस्वादिवर्जिता भूमयः । तत एतेषां द्वन्द्वः । ते आदिर्येषां ते तथा तान् । आदिशब्दात् प्रासादादि शिखरादिपरिग्रहः वैताढ्यगिरिवर्जान् 'विरावेहिंति'त्ति । विद्रावयिष्यन्ति । अथ पुनस्ते मेघाः किं करिष्य-न्ति ? इत्याह-'सलिले'त्यादि । सलिलबिलानि-भूनिर्झराः । विषमाणि-विषमभूमिप्रतिष्ठितानि गर्त्ताः-श्वभ्राणि । निम्नोन्नतानि च प्रतीतानि । ततो द्वन्द्वः । तानि च गङ्गासिन्धुमहानदीद्वयवर्जानि समीकरिष्यन्ति-समानि निष्पादयिष्यन्ति । अथ षष्ठारके कीदृशी भूमिर्भविष्यति ? इति प्रश्नयति-'तीसे णमि'त्यादि । तस्यां भदन्त ! समायां-दुष्षमादुष्षमालक्षणायां भरतस्य वर्षस्य भूमेः कीदृश आकारभावप्रत्यवतारो भविष्यति ? इति प्रश्नः । भगवानाह-गौतम ! भूमिर्भविष्यति कीदृशी ? 'इंगालभूआ'त्ति । अङ्गारभूता ज्वालारहितपिण्डाग्निरूपा । मुर्मुरभूता-विरलाग्निकणस्वरूपा । 'छारिअ'त्ति । भस्मभूता । तप्तकवेल्लुकभूता-कवेल्लुकानि प्रतीतानि

तानि चाग्निसम्पर्केण पच्यमानानि अतिदुःसह्यस्पर्शानि स्युः। तद्भूता-तत्सदृशी। तथा 'तत्तसम'त्ति। तप्तेन तापेन समा-तुल्या। ज्योतिषा-वह्निना भूता या सा तथेति। 'धूलिवहुले'त्यादि। धूलिः-पांसुः। रेणुर्वालुका। पङ्कः कर्दमः। पनकः-प्रतलः कर्दमविशेषः। चलनप्रमाणः कर्दमः चलनीत्युच्यते एभिर्बहुला-व्याप्ता। दुर्निर्गमा चापि भविष्यति दुःखेन निर्गमो यस्या सा दुर्निर्गमा पादाभ्यां दुरतिक्रमणीयेत्यर्थः। चकारः समुच्चये। अपिशब्दात् दुःशयनदुरुपवेशनादि सूचितं द्रष्टव्यम्। केषां दुर्गमेत्याह-'बहूण'त्ति। वहूनां धरणिगोचराणां सत्त्वानां। धरणिर्भूमिर्गोचरो-गमनागमनादौ विषयो येषां ते तथा तेषां धरणि-गोचराणाम्। एतेन मानवगवादीनामेव दुर्गमा न तु देवादीनामपीति भावः। अथ षष्ठारके मनुष्य विषयं प्रश्नमाह-'तीसे णमि'त्यादि। तस्यामिति प्रश्नः प्राग्वत्। भगवानाह-गौतम। मनुजा भविष्यन्ति। कीदृशा? इत्याह-'दुरूव'त्ति। दुरूपाः दुर्वर्ण्णाः-श्यामवर्णा अपि कुत्सितवर्ण्णा इत्यर्थः। दुर्गन्धा-दुरभि-गन्धोपेताः। दूरसा-दुष्टरसोपेताः। दुःस्पर्शाः-कर्कशादिदुष्टस्पर्शोपेताः। 'अणिट्ठ'त्ति। इष्यन्ते स्मेतीष्टा-स्तन्निषेधादनिष्टाः। अनिष्टमपि किञ्चित्कमनीयं स्यात् अत उच्यते अकान्ता-अकमनीयाः। अकान्तमपि किञ्चित्कारणवशात् प्रीतये स्यादत आह-अप्रियाः-अप्रीतिहेतवः। अप्रियत्वं च तेषां कुतः? यतोऽशुभा-अशुभस्वभावाः। ते च सामान्यतोऽपि भवन्त्यतः 'अमणुण्ण'त्ति। न मनसाऽन्तःसंवेदनेन शुभतया ज्ञायन्ते इत्यमनोज्ञाः। अमनोज्ञता चैकदापि स्यादत आह-'अमणाम'त्ति। न मनसा अम्यन्ते-गम्यन्ते पुनः पुनः स्मरणतया ये ते अमनोमाः। एकार्थिका अप्येते शब्दा अनिष्टताप्रकर्षप्रतिपादनार्था इति। न चैते शरीरमधिकृत्यैवानिष्टाः किन्तु वचनतोऽपीत्याह-'हीणस्सर'त्ति। हीनो-अश्लाघ्यमानः स्वरो येषां ते हीन स्वराः। दीनः-परेषां करुणोत्पादकः स्वरो येषां ते दीनस्वराः। अनिष्टादयः शब्दाः उक्तार्था एव स्वरेण संयोजनीयाः। 'अणादिज्ज'त्ति। अनादेयं वचनं-वचः प्रत्याजातं च-जन्म येषां तेऽनादेयवचनप्रत्याजाताः। निर्लज्जा-लज्जास्वभावशून्याः। 'कूडकवड'त्ति। कूटं-भ्रान्तिजनकं द्रव्यं। कपटं-परवञ्चनाय वेषान्तरकरणं। कलहो-राटिः। वधबन्धवैराणि प्रतीतानि। ततो द्वन्द्वः। तत्र निरताः सततमासक्ताः। 'मज्जाय'त्ति। मर्यादाया अतिक्रमणमुल्लङ्घनं तत्र प्रधानाः-श्रेष्ठाः। 'अकज्ज'त्ति। अकार्यमनुचितकृत्यं तत्र नित्यं सततमुद्यताः-सोद्यमाः। 'गुरुणिओग'त्ति। गुरुषु-तदानीं धर्म्माचार्य कलाचार्यादीनामभावात् मात्रादिषु नियोगेनाऽव-श्यंतया यो विनयस्तेन रहिता ये ते तथा। चकारः समुच्चये। 'विगल'त्ति विकलमसम्पूर्ण्णं रूपं येषां ते विकलरूपाः। 'परूढ'त्ति। प्ररूढान्युत्पत्तेरारभ्य संस्काराभावात् वृद्धिंगतानि नखकेशश्मश्रुरोमाणि येषां ते तथा। कालाः-शरीरत्वचा श्यामवर्ण्णा न पुनः केशैस्तेषां पलितत्वमग्रे वक्ष्यते। 'खर'त्ति। खरफरुषाः-स्पर्शतोऽतीव कठोराः। श्यामवर्ण्णा-अनुज्ज्वलवर्ण्णाः। 'फुट्टसिर'त्ति। स्फुटितशिरसः अर्थात् विकीर्ण्ण शिरोजा इत्यर्थः। 'कविल'त्ति। कपिलाः कपिलवर्णाः पलिताश्च-शुक्लाः केशा येषां ते तथा। 'बहुण्हारुणि'त्ति। बहुस्नायुभिः सम्पिनद्धं-बद्धमत एव दुःखेन दर्शनीयं रूपं येषां ते तथा। 'संकुडिअ'त्ति। सङ्कुडितं-वक्रीभूतं वलीलक्षणतरङ्गैः परिवेष्टितम् 'अंगमंग'त्ति। अङ्गं शरीरं येषां ते तथा। के इव? इत्याह-'जरापरिण-यव्व'त्ति। जरापरिणता इव स्थविरनराः जराव्याप्ताः स्थविरनरा इवेत्यर्थः। न च स्थविरा जरापरिणता एव स्युरिति व्यर्थं जरापरिणतेति विशेषणमिति वाच्यं; सिद्धान्ते स्थविराणां श्रुतपर्यायवयोभिस्त्रैविध्यमुक्तं तेन श्रुतपर्यायस्थविरयोर्व्यवच्छेदकत्वेन सार्थकत्वात्। 'पविरले'त्यादि। प्रविरला-विरलदन्तत्वेन वा दन्त-

श्रेणिर्येषां ते तथा । 'उब्भड'त्ति । उद्भटं-विकरालं घटमुखमिव मुखं मुखच्छदशनच्छदत्वाद्येषां ते तथा । क्वचिदादर्शे 'उज्झडघडोमुहे'त्ति पाठः । तत्र उज्झटेऽस्पष्टे घटोमुखे-शिरोदेशविशेषो येषां ते तथा । 'विसम'त्ति । विषमे नयने येषां ते तथा । वक्रा नासा येषां ते तथा । ततो विशेषणसमासः । 'वंक'त्ति । वक्र वलिभिर्विकृतं च बीभत्सं 'भेसण'त्ति । भीषणं-भयजनकं मुखं येषां ते तथा । 'दद्दुकिडिभ'त्ति । दद्रुकिटिभसिध्मानि कुष्ठविशेषाः तत्प्रधानाः स्फुटिता परुषा च छविः-शरीरत्वक् येषां ते तथा । अत एव 'चित्तलंग'त्ति । कर्बुरावयवाः । 'कच्छु'त्ति । कच्छुः-पामा तथा खसरा-लोकप्रसिद्धाः क्षतविशेषास्तैः अभिभूता-व्याप्ता ये ते तथा । 'खरतिक्ख'त्ति । खरतीक्ष्णनखानां कण्डूयितेन विक्षता-कृतव्रणा तनुः-शरीरं येषां ते तथा । 'टोलागिति'त्ति । टोलाऽऽकृतयोऽप्रशस्ताकाराः । क्वचित् 'टोलगइ'त्ति पाठः । तत्र टोलगतय उष्ट्रादिसमप्रचाराः । विषमाणि-दीर्घह्रस्वादिना सन्धिरूपाणि बन्धनानि येषां ते विषमसन्धिबन्धना । उक्कुडुकानि-यथास्थानमनिविष्टानि अस्थिकानि-कीकसानि विभक्तानीव दृश्यमानान्तराणीव येषां ते तथा । अथवा उत्कुटुकस्थिताः तथास्वभावत्वात् विभक्ताश्च भोजनविशेषरहिता ये ते तथा । दुर्बलाबलहीनाः कुसंहननाः- सेवार्तसंहननाः कुप्रमाणाः- प्रमाणहीनाः कुसंस्थिताः-दुःसंस्थानाः । ततः एषां टोलाऽऽकृत्यादिपदानां कर्मधारयः । अत एव 'कुरूव'त्ति । कुरूपा । 'कुसंठाण'त्ति । कुत्सितसंश्रयाऽऽसनकुशय्याकुभोजिनः अशुचयः- स्नानब्रह्मचर्यादिवर्जितत्वात् अश्रुतयो वा-शास्त्रवर्जिताः । 'अणेगवाहि'त्ति । अनेकव्याधिपरिपीडिताङ्गाः । 'खलत'त्ति । स्खलन्ती विह्वला चाइविततद्दो गतिर्येषां ते तथा । निरुत्साहाः- सत्त्वपरिवर्जिताः । विकृतचेष्टा-नष्टतेजस इतिव्यक्तम् । 'अभिक्खणं'ति । अभीक्ष्णं-वारं वारं शीतोष्णेन खरपरुषवातेन 'विज्झडिअ'ति । मिश्रित व्याप्तमित्यर्थः । मलिनं च पांसुरूपेण रजसा-द्रव्यरजसेत्यर्थः । 'उग्गुंडिअं'ति । उद्धूलितमङ्गं येषां ते तथा । बहुक्रोधमानमायालोभाः । बहुमोहाः । 'असुह'त्ति । अशुभं दुःखानुबन्धि यद्दुःखं तद्भागिन इत्यर्थः । 'ओसण्णं'ति । ओसन्नं-प्रायेण धम्मसण्ण'त्ति । धर्म्मसञ्ज्ञा-धर्म्मश्रद्धा सम्यक्त्वं-तत्त्वार्थश्रद्धानं ताभ्यां परिभ्रष्टा-रहिताः । प्रायोग्रहणात् तदानीमपि केषाञ्चित्सम्यक्त्वप्राप्तिर्भवत्यपि । यदुक्तम्

सम्मत्तस्स सुअस्स य पडिवत्ती छव्विहंमि कालंमि । विरइं विरयाविरइं पडिवज्जइ दोसु तिसु वावि ॥१॥ त्ति । 'उक्कोसेणं'ति । उत्कर्षतो रत्नेर्हस्तस्य यत्प्रमाणं चतुर्विंशत्यङ्गुललक्षणं तेन मात्रा-परिमाणं येषां ते रत्निप्रमाणमात्राः । 'सोलस'त्ति । षोडश विंशतिश्च वर्षाणि परमुत्कृष्टमायुर्येषां ते तथा । क्रमेण स्त्रियः पुरुषाश्च । यदुक्तं-'नृणां विंशतिरब्दानि स्त्रीणां षोडश जीवितमि'ति । 'बहुपुत्त'त्ति । बहुर्भूयान् पुत्राणां-सुतानां नप्तॄणां च पौत्राणामुपलक्षणात् पुत्रीदौहित्र्यादीनां परिवारः-परिकरः तत्र च प्रणयः- स्नेहः स बहुलो-बहुर्येषां ते तथा । क्वचिदादर्शे 'पुत्तनत्तुपरिपालनबहुल'त्ति पाठः । तत्र पुत्रादीनां परिपालनं बहुलं-बाहुल्येन येषां ते तथा । एतेन तेषामल्पायुष्कत्वेऽपि बह्वपत्यतोक्ता स्वल्पेनैव कालेन यौवनसद्भावादिति । 'गंगासिंधूओ'त्ति । गङ्गासिन्धू महानद्यौ वैताढ्यपर्वतं च निश्राय-निश्रां कृत्वा द्वासप्ततिर्निगोदाः- कुटुम्बानीत्यर्थः । 'बीअ'त्ति । बीजमिव बीजं भविष्यतां जनसमूहानां हेतुत्वात् बीजभूता इत्यर्थः । 'बीयमेत्त'त्ति । बीजस्येव मात्रा-परिमाणं येषां ते बीजमात्राः स्वरूपतः स्वल्पा इत्यर्थः । बिलवासिनो मनुष्या भविष्यन्ति । बिलानि च वैताढ्यमूलवर्त्तीनि वैताढ्यस्योभयोः पार्श्वयोः गङ्गासिन्धु-

पार्श्वेषु नव नव भवन्ति । यदुक्तम्

बहुमच्छचक्कपहगंगासिंधुपासेसु नव नव बिलाइं । वेअड्ढोभयपासे विसयरि बहुरोगिनरठाणा ॥१॥ इति । तेन वैताढ्यस्यार्वाचीनमूले षट्त्रिंशद्बिलानि दक्षिणभरतार्द्धमनुजनिवासभूतानि परत्र चोत्तरभरतार्द्धमनुजानामिति । अथ बिलवासिनां मनुष्याणामाहारविषयं प्रश्नमाह- 'ते णं भंते !' इत्यादि । ते प्रागुक्तस्वरूपा मनुजाः किमाहारयिष्यन्ति ? भगवानाह-गौतम ! 'ते णं काले णमि'त्यादि । तस्मिन् काले तस्मिन् समये गङ्गासिन्धू महानद्यौ किंलक्षणे ? 'रह'त्ति । रथपथः-शकटचक्रद्वयप्रमितो मार्गस्तन्मात्रो विस्तरो ययोस्ते रथपथमात्रविस्तरे 'अक्खसोअ'त्ति । अक्षश्रोतश्चक्रे धुरःप्रवेशरन्ध्रं तदेव प्रमाणमक्षश्रोतःप्रमाण तेन मात्रा-परिमाणमवगाहतो यस्य तं तादृशं जल-पानीय 'वोज्झिहिंति'त्ति । वक्ष्यतः-वहनक्रियाभाजौ भविष्यतः । 'से वि अ णमि'त्यादि । तदपि जल बहुमत्स्यकच्छपाकीर्णं भविष्यति । 'णो चेव णं'ति । नैव अव्बहुलं-बह्वप्कायमित्यर्थः । 'तए णमि'त्यादि । ततस्ते मनुष्याः सूर्योद्गमनमुहूर्त्ते सूर्यास्तमनमुहूर्ते च बिलेभ्यो निर्द्धाविष्यन्ति-निर्गमिष्यन्ति । बिलेभ्यो निर्द्धाव्य-निर्गत्य मत्स्यकच्छपान् 'थलाइ'ति स्थलानि-वालुकासमूहरूपाणि ग्राहयिष्यन्ति-प्रापयिष्यन्ति गङ्गासिन्धुजलेभ्यो निष्काश्य तान् तापप्रदानार्थं स्थलेषु स्थापयिष्यन्तीत्यर्थः । मत्स्यकच्छपान् स्थलानि ग्राहयित्वा ते कीदृशैस्तैर्निजवृत्तिं करिष्यन्ति ? इत्याह 'सीआतव'त्ति । शीतो-नाऽत्यन्तमुग्रो न वा मन्दः किन्तु विवक्षितकार्यमात्रप्रसाधको य आतपः-प्रातःकालीनः सायन्तनो वा सूर्यसम्बन्धी तापस्तेन पक्वैर्मत्स्यकच्छपैः 'एक्कवीसं'ति । एकविंशतिवर्षसहस्राणि वृत्तिमाजीविका कल्पमाना विहरिष्यन्ति-स्थास्यन्ति । अथैतेषां मनुष्याणां स्वरूपमाविष्कुर्वन्नेवं तत्कार्यभूतां परलोकगतिं प्रश्नयति-'ते णं भंते !'इत्यादि । ते प्रागुक्तस्वरूपा मनुष्याः 'णिस्सील'त्ति । निश्शीला-गताचाराः । निर्व्रता-महाव्रताणुव्रतविकलाः । निर्गुणाः- उत्तरगुणरहिताः । निर्मेरा अविद्यमानकुलादिमर्यादाः । 'णिप्पचक्खाण'त्ति । निर्गतं प्रत्याख्यानं पौरुष्यादि-पौषधोपवासश्चाष्टम्यादिपर्व्वोपवासो येभ्यस्ते तथा । 'ओसण्ण'त्ति । प्रायो मांसाहाराः । कुतः ? यतो मत्स्याहाराः । 'खुद्द'त्ति । क्षुद्रं मधु तदाहारो येषां ते मधुभोजिनः । अथवा 'क्षुदृंपी संपेषे' इतिधातोः क्षुद्यते-सम्पिष्यते इति क्षोद्यं तृणादिमर्दनादिना लभ्यमित्यर्थ. । तच्च मणिचव्यादि सूक्ष्मौदनरूप तद्भोजिनः । न चात्र कथं क्षोद्यौदनसम्भव इति शङ्कनीयम् । वैताढ्यमूले तथाविधजलसंसर्गेण तृणवनस्पतीनामुत्पत्तिरपि सम्भाव्यते । अत एवाग्रे ओसन्नपदसूचितं देवलोकादिगमनमपि तेषां भणिष्यते, अन्यथा मधुनोऽप्यसम्भवापत्तेः मधुमक्षिकाभ्रमर्यादीनामपि प्रायो वनस्पतेरेवोपष्टम्भकत्वात् । 'कुणिम'त्ति । कुणपः- शवः तद्रसोऽपि वसादिः कुणपस्तदाहाराः । एवंविधास्ते 'कालमासे' मासपदं दिवसमुहूर्त्तादेरुपलक्षकं तेन यावत्कालमुहूर्त्ते 'कालं' मरणं कृत्वा 'कहिं'ति । कस्यां गतौ गमिष्यन्ति 'कहिं'ति । कस्यां योनावुत्पत्स्यन्ते ? भगवानाह-गौतम ! ओसण्णं प्रायो नरकतिर्यग्योनिकेषु उत्पत्स्यन्ते । प्रायोग्रहणात्कस्यचित् सूदगौदनभोजिनः तथाविधरुद्रपरिणामाऽभावात् मनुष्येपूत्पादः कस्यचित्तथाविधक्षयोपशमवशात् सम्यक्त्वलाभादिसंयुक्तस्य देवलोकगतिरपि । अथ तदानीं चतुष्पदविषयं प्रश्नमाह-'तीसे ण भंते !' इत्यादि । तस्यां भदन्त ! समायां सिंहाः व्याघ्राश्च प्रतीता वृका-अरण्यश्वानः । द्वीपिकाश्चित्रकाः । 'अच्छ'त्ति ऋक्षाः । 'तरच्छ'त्ति । व्याघ्रविशेषाः । 'परस्सर'त्ति शरभाः अष्टापदा इत्यर्थः । शृगालविडालशुनका प्रतीताः । 'कोलसुणग'त्ति । कोलशुनका वराहाः । शशकाः प्रतीताः

चित्रका चित्रलकाश्च चित्रकजातिभेदाः । एते च प्रायो मांसाहाराः मनुष्या इव मत्स्यादिखादकाः कुणिमाहाराः नरकतिर्यक्योनिषूत्पत्स्यन्ते इत्यन्तं प्राग्वत् । अथ तदानींतनपक्षिविषयं प्रश्नमाह-'ते णं भंते !' इत्यादि । एतत् सूत्रं प्राग्वत्परिभावनीयम् । तत्र मद्गवो-जलवायसः । शेषास्तु पक्षिविशेषाः प्रतीताः । पिलका रूढिगम्याः । उपलक्षणादन्येऽपि चतुष्पदादिजातिभेदा यावन्तो गर्भजास्ते सर्व्वेऽपि द्रष्टव्याः । इति षष्ठारकस्वरूपं निरूपितम् । एतस्मिंश्च निरूपिते अवसर्प्पिण्या अपि स्वरूपं निरूपितम् ॥

अथोत्सर्प्पिणीकालप्रतिपत्तिक्रमं सविस्तरमाह

**तीसे णं समाए इक्कवीसाए वाससहस्सेहिं काले वीइक्कंते आगमिस्साए उस्सप्पिणीए सावणबहुलपडिवए वालवकरणंसि अ अभिइणक्खत्ते चउद्दसपढमसमए अणंतेहिं वण्णपज्जवेहिं जाव अणंतगुणपरिवुड्ढीए परिवड्ढमाणे परिवड्ढमाणे एत्थ णं दूसमदूसमा णामं समाकाले पडिवज्जिस्सति समणाउसो ! । तीसे णं भंते ! समाए भरहेवासस्स केरिसए आगारभावपडोआरे भविस्सति ? । गो० ! काले भविस्सति हाहाभूए भंभाभूए एवं सो चेव दुसमादुसमा वेढो णेअव्वो । तीसे णं समाए एक्कवीसाए वाससहस्सेहिं काले वइक्कंते अणंतेहिं वण्णपज्जवेहिं जाव अणंतगुणपरिवुड्ढीए परिवड्ढमाणे परिवड्ढमाणे एत्थ णं दुसमा णामं समाकाले पडिवज्जिस्सति समणाउसो ! ॥**

'तीसे णं समाए'इत्यादि । तस्याः समायाः षष्ठारकलक्षणायाः एकविंशत्या वर्षसहस्रैः काले व्यतिक्रान्ते सति आगमिस्साए'त्ति । आगमिष्यत्या उत्सर्प्पिण्याः श्रावणबहुलप्रतिपदि वालवनाम्नि करणे च अभिजिन्नक्षत्रे अर्थाच्चन्द्रेण सह योगमुपागते 'चउद्दसपढमसमए'त्ति । चतुर्दशमर्थात् सूर्येणोपभुज्यमान पुष्यनक्षत्रं, यतः पूर्णमास्यन्ते सूर्यनक्षत्रचन्द्रनक्षत्रयोरन्तरालवर्तीनि त्रयोदशैव नक्षत्राणि भवन्ति । तदनन्तरं यन्नक्षत्रं तच्चतुर्दशमुच्यते, तच्चन्द्रोपभुज्यमानादभिजिन्नक्षत्रात् पुष्यमेव, तस्य प्रथमसमये एतावता सूर्यसम्बन्धिपुष्यनक्षत्रप्रथमसमये उत्सर्प्पिण्याः प्रतिपत्तिः । यद्वा चतुर्दशशब्देन समयसङ्केतितो दिवसः सम्भाव्यते । तया च तदानीं दिवसस्य प्रथमसमये उत्सर्प्पिण्याः प्रतिपत्तिः । एतस्य संवादोऽग्रे ज्योतिष्कवक्तव्यताधिकारे 'किमादिआ णं भंते ! संवच्छरा ? किमादिआ अयणा ? किमादिआ उऊ ?' इत्यादिसूत्रव्याख्याया-'दिवसो भरहेरवए राई अ विदेहवासेसु'त्ति ज्योतिष्करण्डकसम्मत्याऽवसातव्यः । यतः तत्र युगस्यादिश्चन्द्रसंवत्सरस्तस्याप्यादिः भरतैरावतेषु दिवसः महाविदेहे च रात्रिः तयोरपि प्रथमसमय इति वक्ष्यते । 'अणंतेहिं'त्ति । अनन्तैर्वर्ण्णपर्यवैरुक्तलक्षणैर्यावदनन्तगुणपरिवृद्ध्या परिवर्धमाने परिवर्धमाने काले इति गम्यम् । अवसर्प्पिण्याश्चरमसमयापेक्षया उत्सर्प्पिण्याः प्रथमसमयोऽनन्तगुणवर्णादिपर्यायैः परिवर्धमानो भवतीत्यर्थः । 'एत्थ णं'ति । अत्रान्तरे । णंकारोऽलङ्कृतौ । दुष्षमदुष्षमा नाम्ना समाकाल-उत्सर्प्पिण्याः प्रथमारकलक्षणः कालः प्रतिपत्स्यते हे श्रमण ! हे आयुष्मन् ! इति । सम्बोधनद्वयं शिष्यस्य शुश्रूषाभिमुखीकरणायेति बोध्यम् । अथोत्सर्प्पिण्याः प्रथमारके भरतस्वरूपपरिज्ञानाय प्रश्नयति-तीसे णमि'त्यादितो 'भंभाभूए' इत्यन्तं प्रश्ननिर्व्वचनवाक्य प्राग्वत् । 'एवं चेव'त्ति । एवमेव प्रागुक्तप्रकारेणैव दुष्षमादुष्षमाया 'वेढो'त्ति । वेष्टो नाम विवक्षितैकवस्तुस्वरूपनिरूपकपदपद्धतिलक्षणो वर्ण्णक एव

ज्ञातव्यः । परमवसर्पिण्याः षष्ठारको वर्णादिभिः परिहीयमानोऽयं च परिवर्द्धमान इतिव्यत्ययेनेति तात्पर्यम् । अथोत्सर्पिण्यां द्वितीयारकलक्षणायाः दुष्षमायाः प्रतिपत्तिक्रममाह–'तीसे णमि'त्यादि । तस्याः समाया'– दुष्षमादुष्षमालक्षणस्य प्रथमारकस्य एकविंशत्या वर्षसहस्रैः काले व्यतिक्रान्ते, कथम् ? इत्याह- 'अणंतेहिं ति । अनन्तैर्वर्णपर्यवैर्यावदनन्तगुणपरिवृद्ध्या परिवर्द्धमाने परिवर्द्धमाने 'एत्थ णं'ति । अत्रान्तरे दुष्षमानाम्ना समाकालः प्रतिपत्स्यते हे श्रमण ! हे आयुष्मन् ! ॥

अथोक्तकालापेक्षया विशेषमाह

ते णं काले णं ते णं समए ण पुक्खलसंवट्टए णामं महामेहे पाउब्भविस्सति भरहप्पमाणमित्ते आयामेणं तयणुरूवं च णं बाहल्लेणं । तए णं से पुक्खरसंवट्टए महामेहे खिप्पामेव पतणतणाइस्सति । खिप्पामेव पतणतणाइत्ता खिप्पामेव पविज्जुत्ताइस्सति । खिप्पामेव पविज्जुत्ताइत्ता खिप्पामेव जुगमुसलमुट्ठिप्पमाणमेत्ताहिं धाराहिं ओघमेघं सत्तरत्तं वास वासिस्सति । जेणं भरहस्स वासस्स भूमिभागं इंगालभूअं मुम्मुरभूअं छारिअभूअं तत्तकवेल्लुअभूअं तत्तसमजोईभूअं निव्वावेस्सति । तंसि च णं पुक्खलसंवट्टगंसि महामेहंसि सत्तरत्तं निवतिअंसि समाणंसि एत्थ णं खीरमेहे णामं महामेहे पाउब्भविस्सति भरहप्पमाणमेत्ते आयामेणं तयणुरूवं च णं विक्खंभबाहल्लेणं । तए णं से खीरमेहे णामं महामेहे खिप्पामेव पतणतणाइस्सति जाव खिप्पामेव जुगमुसलमुट्ठि जाव सत्तरत्तं वासं वासिस्सति । जे णं भरहवासस्स भूमीए वण्णं गंधं रसं फासं च जणइस्सति । तंसि च णं खीरमेहंसि सत्तरत्तं निवतितंसि समाणंसि एत्थ णं घयमेहे णामं महामेहे पाउब्भविस्सति भरहप्पमाणमेत्ते आयामेणं तयणुरूवं च णं विक्खंभबाहल्लेणं । तए णं से घयमेहे महामेहे खिप्पामेव पतणतणाइस्सति जाव वासं वासिस्सति । जेणं भरहस्स वासस्स भूमीए सिणेहभावं जणइस्सति । तंसि च णं घयमेहंसि सत्तरत्तं निवतिअंसि समाणंसि एत्थ णं अमयमेहे णामं महामेहे पाउब्भविस्सति भरहप्पमाणमेत्ते आयामेणं जाव खिप्पामेव पतणतणाइस्सति जाव वासं वासिस्सति । जे णं भरहे वासे रुक्खगुच्छगुम्मलयवल्लितणपव्वगहरिओसहिपवालंकुरमाइए तणवणप्फइकाइए जणइस्सति । तंसि च णं अमयमेहंसि सत्तरत्तं निवतितंसि समाणंसि एत्थ णं रसमेहे णामं महामेहे पाउब्भविस्सति भरहप्पमाणमेत्ते आयामेणं जाव वासं वासिस्सति । जेणं तेसिं बहुरुक्खगुच्छगुम्मलयवल्लितणपव्वगहरिओसहिपवालंकुरमाईणं तित्तकडुअकसायअंबिलमहुरे पंचविहे रसविसेसे जणइस्सति । तए णं भारहे वासे भविस्सति । परूढरुक्खगुच्छगुम्मलयवल्लितणपव्वयहरिओसहिए उवचिअतयपत्तपवालपल्लवंकुरपुप्फफलसमुदिते सुहोवभोग्गे आविभविस्सति ॥

'ते णं काले णमि'त्यादि । तस्मिन् काले तस्मिन् समये-प्रथमसमये द्वितीयारकस्याद्यसमये प्रारम्भमधिकृत्येत्यर्थः । पुष्करसंवर्त्तको नाम्ना महामेघः प्रादुर्भविष्यति । कीदृश ? इत्याह–'भरहे' त्यादि । भरतस्य यत्प्रमाण तदेव मात्रा–प्रमाणं यस्य स तथा । केनेत्याह– 'आयामेणं ति । आयामेन–दैर्घ्येण

साधिकैकसप्ततिचतुःशताधिकचतुर्दशयोजनसहस्र १४४७१ प्रमाण इत्यर्थः । 'तयणुरूवं च णं'ति । तदनुरूपश्च विष्कम्भबाहल्येन–विष्कम्भबाहल्याभ्यां भरतक्षेत्रसदृश इत्यर्थः । अयं भावः– भरतक्षेत्रस्य विष्कम्भो योजनानां पञ्च शतानि षड्विंशत्यधिकानि षट् च कलाः । मेघस्यापि विष्कम्भ एतावानेव । बाहल्यं च यावता जलभारेण यावदवगाढभरतक्षेत्रतप्तभूमिमार्द्रीकृत्य ताप उपशाम्यते तावज्जलदलनिष्पन्नमेव ग्राह्यमिति । अथ पुष्करावर्त्त' प्रादुर्भूतः सन् किं करिष्यति ? इत्याह–'तए णमि'त्यादि । ततः प्रादुर्भवनानन्तरं स मेघः क्षिप्रमेव प्रस्तनस्तनयिष्यति–स्तननं स्तनो–गर्ज्जन स्तनात्स्तनः स्तनस्तनः प्रकर्षेण स्तनस्तनः प्रस्तनस्तनः तं करिष्यतीति प्रस्तनस्तनयिष्यति । प्राकृतत्वाद्दीर्घत्व । क्षिप्रमेव प्रस्तनस्तनयित्वा क्षिप्रमेव प्रविद्युतयिष्यति प्रकर्षेण विद्युतं करिष्यति । क्षिप्रमेव प्रविद्युतयित्वा क्षिप्रमेव 'जुग'त्ति । युगं च मुशलं च मुष्टयश्च युगमुशलमुष्टयस्ताभिः प्रमाण यासां तास्ताभिर्धाराभिरोघमेघम्-ओघेन–सामान्येनाविशेषेण मेघो यत्रति ओघमेघ वर्षविशेषणं क्रियाविशेषणं वा सर्वत्र समस्वभावं यथास्यात्तथा, न पुनः क्षीरादिमेघवद्विषमस्वभावम् । क्षीरादयो हि मेघा वर्णरसादिजनकास्ते च विचित्राः स्वस्वस्थानकनियताश्च । यथा जम्ब्वादिफलेषु कृष्णवर्णं तदीयपत्रेषु नीलवर्णं, जपाकुसुमादिषु रक्तवर्णं, चम्पकादिषु पीतवर्णं, कर्पासपुण्डरीकादिषु श्वेतवर्णं जनयन्ति । एवं रसादिष्वपि मधुरतिक्तादिभेदेन वैषम्यं स्वयमेव परिभावनीयम् । 'सत्तरत्तं'ति । सप्तरात्रं–सप्ताहोरात्र वर्षं वर्षिष्यति । येन वर्षेण हेतुभूतेन भरतस्य वर्षस्य भूमिभागम् अङ्गारभूत मुर्मुरभूत रक्षाभूतं तप्तकवेल्लुकभूत तप्तसमज्योतिर्भूत 'निव्वावेस्सति'त्ति । निर्वापयिष्यति–शीतिभूतं करिष्यति । 'तंसि च णमि'त्यादि । तस्मिंश्च पुष्करसंवर्त्तके महामेघे सप्ताहोरात्रं यावन्निपतिते सति 'एत्थ णं'ति । अत्रान्तरे क्षीरमेघो नाम्ना महामेघः प्रादुर्भविष्यति । 'भरहप्पमाण'त्ति । यावत्सप्तरात्र वर्ष वर्षिष्यतीति प्राग्वत् । 'जेणं भरह'त्ति । येन वर्षेणाय मेघो भारतस्य वर्षस्य भूमौ वर्णं गन्ध रसं स्पर्शं वा जनयिष्यति–उत्पादयिष्यति । 'तसि च णं'ति । तस्मिन् क्षीरमेघे सप्तरात्र यावन्निपतिते सति 'एत्थ ण'ति । अत्रान्तरे घृतनाम्ना महामेघः प्रादुर्भविष्यति । स च कीदृश? इत्याह 'भरहप्पमाणमेत्ते' इत्यादि 'वासं वासिस्सती'ति पर्यन्तं प्राग्वत् । 'जेण'ति । येन वर्षेणाऽसौ भरतवर्षस्य भूमौ स्नेहभावं स्निग्धत्वमित्यर्थः । जनयिष्यति । 'तंसि च णमि'त्यादि । तस्मिंश्च घृतमेघे सप्तरात्रं निपतिते सति अत्रान्तरे अमृतमेघो नाम्ना महामेघ प्रादुर्भविष्यति । 'भरहे' इत्यादि प्राग्वत् । 'जेणं'ति । येन वर्षेण हेतुभूतेनामृतमेघो भारते वर्षे 'रुक्खे'त्यादि । वृक्षाश्चूतादयः । गुच्छा–वृन्ताकीप्रभृतयः । गुल्मा–नवमालिकाप्रभृतयः । लता–अशोकलताद्याः । वल्लयो–वालुङ्किकाप्रभृतयः । तृणानि प्रतीतानि । पर्व्वगा–इक्ष्वादयः । हरितानि-दूर्वादीनि । औषध्यः–शाल्यादयः । प्रवालाः–प्रवालाङ्कुराः । अङ्कुरा –शाल्यादिबीजसूचयः । इत्यादीन् तृणवनस्पतिकायिकान् बादरवनस्पतीनित्यर्थः । जनयिष्यति । 'तंसि च णमि'त्यादि । तस्मिंश्चामृतमेघे सप्तर त्र निपतिते सति अत्रान्तरे रसमेघो नाम्ना महामेघः प्रादुर्भविष्यति । अयमपि 'भरहे'त्यादि प्राग्वत् । 'जेणं ति । येन वर्षेण हेतुभूतेन अयं रसमेघः तेषामेव अमृतमेघजनितानां बहुवृक्षगुच्छगुल्मलतावल्लीतृणपर्व्वगहरितौषधीप्रवालाङ्कुरादीना तिक्तकटुककषायाम्लमधुरान् पञ्चविधान् रसविशेषान् जनयिष्यति । तत्र तिक्तो रसो–निम्बाद्याश्रित' इत्यादि प्राग्वत् विज्ञेयम् । अथैवमोघमेघादिवृष्ट्यनन्तर कीदृशं भरतक्षेत्र भविष्यति ? इत्याह–'तए णमि'त्यादि । ततस्तदनन्तर वृष्टिचतुष्टयानन्तरं भारतो वर्षो भविष्यति । किंविशिष्ट ? इत्याह–'परूढे'त्यादि । प्ररूढा–उद्गता वृक्षगुच्छगुल्मलतावल्लीतृणपर्व्वगहरितौषध्यो यत्र स

तथा। 'उवचिअ'त्ति। उपचितानि पुष्टिमुपगतानि यानि त्वक्पत्रप्रवालपल्लवाङ्कुरपुष्पफलानि तैः समुदितः-सम्यक् प्रकारेण सर्व्वतः उदितः समृद्धः। अत एव सुखेनोपभोग्यः सुखोपभोग्यश्चापि भविष्यति॥

अथ यतो भारतो वर्षः सुखोपभोग्योऽतस्तद्भोक्तारः के कीदृशा ? भविष्यन्तीति दर्शयति—

तए णं ते मणुआ भरहं वासं परूढरुक्खगुच्छगुम्मलयवल्लितणपव्वयहरितओसहीकं उवचिअतयपत्तपवालपल्लवंकुरपुप्फफलसमुदितं सुहोवभोगं जायं चावि पासिहिंति। पासित्ता बिलेहिंतो निद्धाइस्संति। निद्धाइत्ता हट्ठा तुट्ठा अण्णमण्णं सद्दाविस्संति। सद्दावेत्ता एवं वदिस्संति। जाए णं देवाणुप्पिआ! भारहे वासे परूढरुक्खगुच्छगुम्म जाव सुहोवभोगे। तं जे णं देवाणुप्पिआ! अम्हं केई अज्जप्पभिई असुहं कुणिमं आहारं आहारेस्संति से णं अणेगाहिं छायाहिं वज्जणिज्जत्ति कट्टु संठिइं ठवेस्संति। ठवेत्ता भारहे वासे सुहंसुहेणं अभिरममाणा अभिरममाणा विहरिस्संति। तीसे णं भंते! समाए भरहस्स वासस्स केरिसए आगारभावपडोआरे भविस्सति ? गो०! बहुसमरमणिज्जे भूमिभागे भविस्सति जाव कित्तिमेहिं चेव अकित्तिमेहिं चेव। तीसे णं भंते! समाए मणुआणं केरिसए आगारभावपडोआरे भविस्सति ?। गो०! तेसि णं मणुआणं छव्विहे संघयणे छव्विहे संठाणे बहुरयणीओ उड्ढं उच्चत्तेणं जहण्णेणं अंतोमुहुत्तं उक्कोसेणं सातिरेगं वाससयं आउअं पालेहिंति पालेत्ता अप्पेगइआ णिरयगामी जाव अप्पेगइआ देवगामी ण सिज्झंति। तीसे णं समाए इक्कवीसाए वाससहस्सेहिं काले वइक्कंते अणंतेहिं वण्णपज्जवेहिं जाव परिवड्ढमाणे परिवड्ढमाणे एत्थ णं दूसमसुसमा नामं समाकाले पडिवज्जिस्सति समणाउसो!। तीसे णं समाए भरहस्स वासस्स केरिसए आगारभावपडोआरे भविस्सति ?। गो०! बहुसमरमणिज्जे जाव अकित्तिमेहिं चेवत्ति। तेसि णं भंते! मणुआणं केरिसए आगारभावपडोआरे भविस्सति ?। गो०! तेसि णं मणुआणं छव्विहे संघयणे छव्विहे संठाणे बहूइं धणूइं उड्ढं उच्चत्तेणं जहण्णेणं अंतोमुहुत्तं उक्कोसेण पुव्वकोडिंआउअं पालेहिंति पालेत्ता अप्पेगइआ णिरयगामी जाव अंतं करेहिंति। तीसे णं समाए तओ वंसा समुप्पज्जिस्संति। तं० तित्थगरवंसे चक्कवट्टिवंसे दसारवंसे। तीसे णं समाए तेवीसं तित्थयरा एक्कारस चक्कवट्टि नव बलदेवा नव वासुदेवा समुप्पज्जिस्सति। तीसे णं समाए एगाए सागरोवमकोडाकोडीए बायालीसाए वाससहस्सेहिं ऊणिआए काले वीइक्कंते अणंतेहिं वण्णपज्जवेहिं जाव परिवुड्ढीए परिवुड्ढमाणे परिवुड्ढमाणे एत्थ णं सुसमदुसमा णामं समा काले पडिवज्जिस्सति समणाउसो। सा णं समा तिहा विभजिस्सति। पढमे तिभागे मज्झिमे तिभागे पच्छिमे तिभागे। तीसे णं भंते! समाए पढमे तिभागे भरहस्स वासस्स केरिसए आगारे जाव भविस्सति?। गो०! बहुसमरमणिज्जे जाव भविस्सति। मणुआणं जाव ओसप्पिणीए पच्छिमे तिभागे वत्तव्वया सा भाणिअव्वा कुलगरवज्जा उसमसामिवज्जा। अण्णे पढंति तीसे णं समाए पढमे तिभागे इमे पण्णरस कुलकरा समुप्पज्जिस्संति। तं० सुमती जाव उसभो सेसं तं चेव। दंडनीतीओ पडिलोमाओ

**णेतव्वाओ। तीसे णं समाए पढमे तिभागे रायधम्मे जाव धम्मचरणे अ वोच्छिज्जिस्सति तीसे णं समाए मज्झिमपच्छिमेसु तिभाएसु जा पढममज्झिमेसु वत्तव्वया ओसप्पिणीए सा भाणिअव्वा। सुसमा तहेव सुसमसुसमा वि तहेव जाव छव्विहा मणुस्सा अणुसज्जिस्संति जाव सणिच्चारी ॥**

'तए ण ते मणुआ' इत्यादि। ततस्ते—विलवासिनो मनुजाः भारतं वर्षं 'परूढे'त्यादि। पूर्व्वोक्तविशेषणविशिष्टं जात चापि 'पासिहि'ति। द्रक्ष्यन्ति दृष्ट्वा च विलेभ्यो निर्द्धाविष्यन्ति—निर्गमिष्यन्ति। निर्गत्य च 'हट्ठे'त्यादि। हृष्टा—विस्मितास्तुष्टास्तोषवन्तः। एवंविधाः सन्तोऽन्योन्यं 'सद्दावेस्संति'त्ति। शब्दापयिष्यन्ति शब्दापयित्वा च एवं वदिष्यन्ति। किं तद्? इत्याह— 'जाए णं'ति। जातो भो देवानुप्रिया! भारतो वर्षः प्ररूढवृक्षगुच्छगुल्म यावत्सुखोपभोग्यश्च 'त जे णं'ति। तत्तस्मात् कारणात् यो। णमित्यलङ्कारे। देवानुप्रिया! अस्माकं मध्ये कश्चित् अद्यप्रभृति—इतो दिनादारभ्य अशुभं कुणपं—मांसादिमयमाहारमाहारयिष्यति सोऽनेकाभिश्छायाभिर्भोजनासनोदिपङ्क्तिभिर्वर्ज्जनीय इति कृत्वा संस्थितिं—मर्यादां स्थापयिष्यन्ति। स्थापयित्वा च भारते वर्षे सुखं सुखेन-यथेप्सितसुखोनुभवनेन अभिरममाणाः—क्रीडां कुर्व्वाणाः विहरिष्यन्ति—आसिष्यन्ते। अथ तदानीं भरतक्षेत्रस्वरूपं प्रश्नयति— तीसे णमि'त्यादि। प्रश्नवाक्यं 'गोअमे'त्यादि निर्व्वचनवाक्यं च प्राग्वत्। नवरं 'न सिज्झंति'त्ति। द्वितीयारकवर्त्तिनो मनुजाः न सिध्यन्ति। वर्त्तमानप्रयोगोऽपि भविष्यत्तयाऽवसातव्यः। तेन न सेत्स्यन्ति—सकलकर्म्मक्षयलक्षणां सिद्धिं न प्राप्स्यन्तीत्यर्थः।

अथ भगवानेव 'हे श्रमण! हे आयुष्मन्नि'त्यादि सम्बोधनपुरस्सरं द्वितीयारकात्तृतीयारकप्रतिपत्तिक्रममाह— 'तीसे णं समाए' इत्यादि। तस्याः समायाः दुष्षमालक्षणाया एकविंशत्या वर्षसहस्रैः काले व्यतिक्रान्ते, कथम्? इत्याह 'अणंतेहि'ति। अनन्तैर्वर्ण्णपर्यवैर्यावत् परिवर्द्धमाने परिवर्द्धमाने 'एत्थ ण'ति। अत्रावसरे दुष्षमासुषमानाम्ना समाकाल-उत्सर्पिण्यास्तृतीयारकलक्षणः प्रतिपत्स्यते। अथ तदानीं भरतक्षेत्रस्वरूपविषयं प्रश्नमाह— तीसे णमि'त्यादि। तस्यां भदन्त! समायां भारतस्य वर्षस्य कीदृश? इत्यादि यावत्सन्मणिभिरुपशोभितो भूमिभागो भविष्यतीति प्राग्वत्। अथ मनुष्यविषयं प्रश्नमाह—'मणुआणमि'त्यादि जाव 'अंतं करेहिंति'त्ति पर्यन्त प्राग्वत्। नवरं सर्व्वत्रातीतकालप्रयोगस्थाने भविष्यत्कालप्रयोग इति विशेषः। अथ वंशोत्पत्तिमाह— 'तीसे णमि'त्यादि प्राग्वत्। अथ वंशत्रये पुरुषसङ्ख्यामाह— 'तीसे णमि'त्यादि। तस्यां दुष्षमसुषमालक्षणायां तीर्थकरवंशे त्रयोविंशतिस्तीर्थकराश्चतुर्विंशतितमस्य भद्रकृदभिधानस्य चतुर्थारकभावित्वात्। तथा चक्रवर्त्तिवंशे द्वादशस्यारिष्टाभिधानस्य तत्रैव भावित्वात् एकादश चक्रवर्त्तिनः। दशारवंशे नव वलदेवा नव वासुदेवाश्च समुत्पत्स्यन्ते। तत्र त्रयोविंशतिस्तीर्थकरास्त्वेवं—पद्मनाभ सूरदेव—सुपार्श्व—स्वयंप्रभ—सर्व्वानुभूति—देवश्रुतो-दय-पेढाल—पोट्टिल-शतकीर्त्ति—[मुनि]सुव्रता—ऽमम—निष्कषाय—निःपुलाक—निर्म्ममं—चित्रगुप्त-समाधि-संवर—यशोधर-विजय—मल्ल—देवा—नन्तवीर्यनामानः। एकादश चक्रवर्त्तिनस्त्वेवं—दीर्धदन्त—गूढदन्त—शुद्धदन्त—श्रीचन्द्र—श्रीभूति—श्रीसोम—पद्म महापद्म—दशमा—ऽमल—विमलनामानः। नव वलदेवा पुनरेवं-जयन्त व्याजित—धर्म्म—सुप्रभ सुदर्शना—ऽऽनन्द—नन्दन—पद्म सङ्कर्षणनामानः। नव वासुदेवास्तु नन्दि—नन्दिमित्र—सुन्दरवाहु—सुवाहु—महावाहु—रतिवल—वल—द्विपृष्ठ—त्रिपृष्ठनामानः। ये तु प्रतिवासुदेवाः—तिलक—लोहजङ्घ वज्रजङ्घ-केसरि—वलि—प्रल्हादना—ऽपराजित—भीम—सुग्रीवनामानस्ते च पूर्व्वोक्तकारणादेवेहानुक्ता इति।

अथ तृतीयारकाच्चतुर्थारकप्रतिपत्तिक्रममाह– 'तीसे ण समाए' इत्यादि। तस्याः समायाः एकया सागरोपमकोटाकोट्या द्विचत्वारिंशद्वर्षसहस्रन्यूननया काले व्यतिक्रान्ते, कथम्? इत्याह– 'अणंतेहिं' ति। अनन्तैर्वर्णपर्यवैर्यावत्परिवृद्ध्या वर्द्धमाने वर्द्धमाने 'एत्थ ण'ति। अत्रान्तरे सुषमादुष्षमा-नाम्ना समाकालः–उत्सर्प्पिण्याश्चतुर्थारकलक्षणः प्रतिपत्स्यते। 'सा णमि'त्यादि। साऽनन्तरोक्तसमा त्रिधा विभक्ष्यति-त्रिधा त्रिभाग प्राप्स्यति। तद्यथा-प्रथमस्त्रिभागो मध्यमस्त्रिभागोऽन्तिमस्त्रिभाग-श्चेति। अथ प्रथमत्रिभागे क्षेत्रविषयं प्रश्नमाह– 'तीसे णमि'त्यादि प्रश्ननिर्व्वचने प्राग्वत्। अथ मनुष्य-विषयं प्रश्नमाह– मणुआणमि'त्यादि। मनुजानां कीदृश आकारभाव? इति प्रश्ने या अवसर्प्पिण्यास्तृतो-यारकस्य पश्चिमे त्रिभागे वक्तव्यता सा भणितव्या। अथ तत्र विशेषमाह– 'कुलगरवज्ज'त्ति। कुलकरा हि शेषजनेभ्यो विशिष्टज्ञानसौभाग्यसौन्दर्य्यादिगुणोपेता अराजानोऽपि राजनीतिप्रवर्त्तकत्वेन राजकल्पाः प्रथमतीर्थकृतः पूर्व्वजा एव भण्यन्ते। तेषु च प्रथमः प्रजाव्यवस्थापितोऽपरे च कुलकरव्यवस्थापितास्तेषां वर्ज्जो यस्या सा कुलकरवज्जा। अथैवं सामान्यतः कुलकरनिषेधे कुलकरपङ्क्तिव्यवस्थितस्य श्रीऋषभ-स्वामिन इव चतुर्विंशतितमस्य तीर्थंकरस्य तदानीं वर्त्तमानस्य कुलकरत्वं मा भूत्तत्पूर्व्वजानामभिषिक्त-राजत्वेन कुलकरत्वाभावात् पर स तीर्थंकरः श्रीऋषभस्वामिनाम्ना भविष्यतीति पराकूतमपाकर्तुमाह– 'उसभसामिवज्ज'त्ति। ऋषभस्वामीति नाम्ना यस्तीर्थंकरस्तस्य वर्ज्जो यस्यां सा तथा श्रीऋषभस्वामि-तीर्थंकररहितेत्यर्थः। विशेषनिषेधे सामान्यनिषेधस्यानावश्यकत्वात् तत्प्रतिमोऽपरनाम्ना तीर्थकृद्भविष्यतीति सूचितम्। अन्यथा 'कुलकरवज्ज त्ति पाठवत् 'तित्थकरवज्ज'त्ति सामान्यनिषेधपरां पाठरचनाम-करिष्यत्। अथ मतान्तरमाह–'अण्णे पढति'त्ति। अन्ये केचिदाचार्याः पठन्ति–तस्यां समायां प्रथमे त्रि-भागे इमे पञ्चदश कुलकराः समुत्पत्स्यन्ते। तद्यथा–सुमतिर्यावदृषभः। यावत्करणात् प्रतिश्रुति–सीमङ्करा-दीना प्रागुक्तानां सङ्ग्रहः। एतच्च मतान्तरं सूत्रोक्तमपि बहु विचार्यं। यत कुलकराः बुद्ध्यादिगुणैरधिका-अराजानोऽपि राजनीतिप्रवर्त्तकत्वेन राजकल्पा. प्रथमतीर्थकृतः पूर्व्वजा भण्यन्ते, ते च स्थानाङ्गादौ श्रीपद्म-नाभतीर्थकृत एवोक्ताः। तथा च कथं पुनस्ते चरमतीर्थकृतः सम्भवन्ति? तस्याभिषिक्तराजकुलोत्पन्नत्वात् अन्यथा श्रीमहावीरस्यापि तथाप्रसक्तेरित्यादि। तत्त्व तु केवलिगम्यमिति। अथ मतान्तरानुसारेणाति-देशमाह–'सेसं त चेव'त्ति। शेषमुक्तविशेषातिरिक्तं यदवसर्प्पिण्यां सुषमदुष्षमानाम्नस्तृतीयारकस्य तृतीये भागे भणितं तदेवाखिलमिह चतुर्थारकप्रथमभागेऽवसातव्यं, परं दण्डनीतयः प्रतिलोमाः ज्ञातव्याः– पश्चानुपूर्व्या ज्ञातव्याः। अवसर्प्पिण्यां या प्रथमा सा चोत्सर्प्पिण्यां चरमेत्यर्थः। अथ प्रथमे अभूत-पूर्व्वं यद्भविष्यति तदाह–'तीसे णमि'त्यादि। तस्याः समायाः सुषमदुःषमालक्षणायाः प्रथमे त्रिभागे राजधर्म्मोऽपरा विना दण्डविधानादिरूपो व्युच्छेत्स्यति यावद्धर्म्मचरणं चोद्वाहादिलौकिकस्थितिहेतुः तदपि व्युच्छेत्स्यति। यावत्करणात् 'तुलामध्यन्यायेन मध्यग्रहणे आद्यन्तयोर्ग्रहणमिति' न्यायात् राजधर्म्मस्यो-भयोः पार्श्ववर्त्तिनां गणधर्म्म–पाषण्डधर्म्म–जाततेजसामुपादानं कार्यं, तेषामपि तत्र व्युच्छेत्स्यमानत्वात्। 'तीसे णमि'त्यादि। तस्याः मध्यमपश्चिमयोस्त्रिभागयोरवसर्प्पिण्या मध्यमप्रथमयोस्त्रिभागयोर्या वक्तव्यता भणिता सा चोत्सर्प्पिण्यामपि वक्तव्या। अथ सुषमासुषमसुषमयोः स्वरूपमतिदेशेनाह–'सुसमा तहे-व'त्ति। सुषमा–पञ्चमारकलक्षणः कालविशेषः तथैवावसर्प्पिण्या द्वितीयारकवदित्यर्थः। 'सुसमसुसमा

वि'त्ति । सुषमासुषमापि-षडारकलक्षणः कालविशेषः सोऽपि तथैव-प्रथमारकवदित्यर्थः । कियद्दूरमित्याह-'जाव छव्विहा मणुस्स'त्ति । यावत् षड्विधा मनुष्या अनुसज्यन्ति-सन्तत्याऽनुवर्त्तनं करिष्यन्ति । यावच्छनैश्चारिणः । यावत्करणात् 'पउमगन्धा मिअमयगन्धा अममा सहि तेअलि'त्ति प्रागुक्तं सव्याख्यानं ग्राह्यम् । इत्येवमुत्सर्पिणीस्वरूपं दर्शितं तद्दर्शिते चोत्सर्पिण्युत्सर्पिणीरूपं कालचक्रमपि दर्शितम् ॥

अथ भरतक्षेत्रस्य नामप्रवृत्तिजिज्ञासया प्रश्नमाह

**से केणट्ठेणं भंते ! एवं वुच्चति भरहे वासे भरहे वासे ? । गोअमा ! भरहे णं वासे वेअड्ढस्स पव्वयस्स दाहिणेणं चोद्दसुत्तरं जोअणसयं एक्कारस एगूणवीसतिभागे जोअणस्स अबाहाए लवणसमुद्दस्स उत्तरेणं चोद्दसुत्तरं जोअणसयं एक्कारस य एगूणवीसतिभागे जोअणस्स अबाहाए गंगाए महाणईए पच्चत्थिमेणं, सिंधुए महाणईए पुरत्थिमेणं, दाहिणड्ढभरहमज्झिल्लतिभागस्स बहुमज्झदेसभागे एत्थ णं विणीता णामं रायहाणी पण्णत्ता । पाईणपडीणायता उदीणदाहिणविच्छिण्णा दुवालसजोअणायामा नवजोअणविच्छिण्णा धणवइमइणिम्मिया चामीकरपागारा णाणामणिपंचवण्णकविसीसगपरिमंडिआभिरामा अलकापुरीसंकासा पमुइअपक्कीलिआ पच्चक्खदेवलोगभूआ रिद्धत्थिमिअसमिद्धा पमुइअजणजाणवया जाव पडिरूवा इति ॥**

'से केणट्ठेणमि'त्यादि । सेशब्दोऽथार्थे । अथ केनार्थेन भदन्त ! एवमुच्यते यत् भरतक्षेत्रं भरतक्षेत्रमिति ? गौतमेन पृष्टे भगवानाह- गौतम ! भरते वर्षे । णमिति प्राग्वत् । 'वेताढ्यस्य पव्वतस्य दाहिणेणं'ति । दक्षिणतः चतुर्दशोत्तरं योजनशतम् एकादश च योजनैकोनविंशतितमभागरूपाः कला अबाधया, तथा लवणसमुद्रस्योत्तरतश्चतुर्दशोत्तरं योजनशतमेकादश चोक्तलक्षणाः कला' अबाधया-अन्तराले विमुच्येत्यर्थः, गङ्गाया महानद्याः पश्चिमतः, सिन्धोर्महानद्याः पूर्वतो, दक्षिणभरतार्द्धमध्यमत्रिभागस्य बहुमध्यदेशभागे । 'एत्थ णं'ति । अत्रान्तरे विनीतानाम्नी राजधानी प्रज्ञप्ता । तत्र राजा धीयते विधीयतेऽभिषिच्यते यस्यां सा राजधानी-जनपदस्य मध्ये प्रधाननगरीत्यर्थः । सा च कथम्भूता ? इत्याह-'पाईणे'त्यादि । प्राचीनप्रतीचीनायता उत्तरदक्षिणविस्तीर्णा द्वादशयोजनायामा नवयोजनविस्तीर्णा धनपतिमत्या-धनदबुद्ध्या निर्मिता चामीकरस्य-सुवर्णस्य प्राकारो यस्याः सा तथा । 'नाणामणि'त्ति । नानामणिपञ्चवर्णकपिशीर्षकपरिमण्डिता सत्यभिरामा-मनोज्ञा 'अलक'त्ति । अलकापुरी-धनदनगरी तत्सङ्काशा-सदृशी या सा तथा । 'पमुइअ'त्ति । प्रमुदितप्रक्रीडिता जनैः सहाभेदोपचारात् प्रमुदितजनैर्नगर्यपि प्रमुदिता भण्यते । एवं प्रक्रीडितापि । किं बहुना प्रत्यक्षदेवलोकभूता । कुत ? इति हेतुगर्भं वर्णकमाह-'रिद्धत्थिमिअसमिद्धे' त्यादि । यतः सा ऋद्धा-भवनैः पौरजनैश्चातीव वृद्धिमुपगता । स्तिमिता-स्वचक्रपरचक्रतस्करडमरादिसमुत्थभयकल्लोलमालापरिवर्जिता । समृद्धा-धनधान्यादिविभूतिविभूषिता । ततः पदत्रयस्यापि विशेषणसमासः । 'पमुइअ'त्ति । प्रमुदिता-हृष्टाः प्रमोदकारणवस्तूनां सद्भावात् जना-नगरीवास्तव्यलोकाः जानपदाश्च जनपदभवाः तत्र प्रयोजनवशादायाता सन्तो यस्या सा प्रमुदितजनजानपदा । यावत्प्रतिरूपाप्रतिविशिष्टमसाधारणरूपमाकारो यस्याः सा प्रतिरूपा-द्रष्टारं द्रष्टारं प्रति रूपवतीत्यर्थः । इतिरधिकारपरिसमाप्तौ । यावत्करणात् 'पमुइअजणुज्जाणजणवयो आइण्णजणमणूसा' इत्यादि प्रागुक्तमिथिलानगरीवर्णकः समग्रोऽपीह वक्तव्यः ।

अथैवंविधायां राजधान्यां किं जातम् ? इत्याह–

तत्थ णं विणीआए रायहाणीए भरहे णामं राया चाउरंतचक्कवट्टी समुप्पज्जित्था। महयाहिमवंतमलयमंदर जाव रज्जं पसासेमाणे विहरति। बिइओ गमो रायवण्णगस्स इमो। तत्थ असंखेज्जकालवासंतरेण उप्पज्जइ जसंसी उत्तमे अभिजायसत्तवीरिअपरक्कमगुणे। पसत्थवण्णसरसारसंघयणतणुगबुद्धिधारणामेहासंठाणसीलप्पगई पहाणगारवच्छायागइए। अणेगवयणप्पहाणे। तेअआउबलवीरिअजुत्ते। अज्झुसिरघणनिचितलोहसंकलणारायवइरउसभसंघयणदेहधारी झस-जुग-भिंगार-वद्धमाणग-भद्दासण-संख-छत्त-वीअणि पडाग-चक्क-णंगल-मुसल-रह सोत्थिअ-अंकुस-चंदाइच्च-ग्गि-जूव-सागर-इंदज्झय-पुहवि-पउम-कुंजर सीहासण दंड-कुम्भ-गिरिवर-तुरंगवर-मुकुट-कुंडल-नंदावत्त-धणु-कोंत - भवण - विमाण णेगलक्खणपसत्थसुविभत्तचित्तकरचरणदेसभागे। उद्धवमुहलोमजालसुकुमालणिद्धमउआवत्तपसत्थलोमविरइअसिरिवच्छच्छण्णाविउलवच्छे। देसखित्तसुविभत्तदेहधारी। तरुणरविरस्सिबोहिअवरकमलविबुद्धगब्भवण्णे हयपोसणकोससन्निभपसत्थपिट्ठंतनिरुवलेवे पउमुप्पलकुंदजाइजूहिअवरचंपगणागपुप्फसारंगतुल्लगंधी। छत्तीसा अहिअपसत्थपत्थिवगुणेहिं जुत्ते। अव्वोच्छिन्नातपत्ते पागडउभयजोणीविसुद्धनिअगकुलगयणपुण्णचंदे चंदे इव सोम्मयाइ नयणमणनिव्वुइकरे। अक्खोभे सागरो व्व थिमिए। धणवइ इव भोगसमुदयसद्दव्वयाए समरे अपराजिए। परमविक्कमगुणे। अमरवइसमाणसरिसरूवे। मणुअवई भरहचक्कवट्टी भरहं भुंजति पणट्ठसत्तू ॥

'तत्थ णमि'त्यादि। तस्यां राजधान्यां भरतनाम्ना राजा चातुरन्तचक्रवर्ती। त्रयः समुद्राश्चतुर्थो हिमवानिति चत्वारः क्षितेरन्तास्तेषु प्रभुतया भवति इति चातुरन्तः स चासौ चक्रवर्ती च सर्व्वराजातिशायी चातुरन्तचक्रवर्त्ती समुत्पन्न इति। स च कीदृश ? इत्याह–'महयाहिमवंत'त्ति। महाहिमवान् हैमवतस्य क्षेत्रस्योत्तरतः सीमाकारी वर्षधर. पर्व्वतः। मलयः पर्व्वतविशेषः सुप्रतीतः। मदरो-मेरुः। 'जाव'त्ति। यावत्करणात् 'महिदसारे अच्चतविसुद्धरायकुलवंसप्पमूए' इत्यादि-प्रागुक्तः सर्व्वोऽपि जितशत्रुराजवर्णको वक्तव्यः। तस्य व्याख्यापि प्रागुक्ताऽवसातव्या। कियद्दूरम् ? इत्याह-यावद्राज्यं प्रशासयन् विहरतीतिपर्यन्तम्। अत्र वर्त्तमानप्रयोगो वर्त्तमानावसर्प्पिण्यपेक्षया द्रष्टव्यः। अथ प्रस्तुतभरतव्यतिकरमात्रेणैव 'से तेणट्ठेणमि'त्यादिना वक्ष्यमाणं नामनिमित्ततानिगमनमसम्भवीत्यभिप्रायेणाह–'बिइओ गमो'त्ति। द्वितीयो गमो-राजवर्णकस्य महान्तं कालमधिकृत्य सकलकालवर्त्तिना प्रस्तुतभरतसदृशव्यतिकराणां भरतनाम्ना वर्णकस्य प्रतिपादकः शास्त्ररचनात्मक. पाठविशेष इत्यर्थ.। स चायमनन्तरं वक्ष्यमाणो ज्ञातव्य इतिशेषः। तमेव पाठमाह–'तत्थ'त्ति। तत्र–तस्यां पुर्यामसङ्ख्येयकालवर्षान्तरेण असङ्ख्येयानि कालवर्षाणि–कालरूपाणि वर्षाणि तेषा तैर्वाऽन्तरेणाबाधया। तत्र वर्षो वृष्टिरपि, ततः कालेति। कालस्तु समयादिरप्यतो वर्षेति। उत्पद्यते भरतचक्रवर्त्तीति सम्बन्धः। स च कीदृश ? इत्याह–'जसंसी'ति। यशस्वी उत्तमः–प्रधान 'अभिजाय'त्ति। अभि–व्याप्य जाता.–सम्पन्नाः सत्त्ववीर्यपराक्रमरूपाः गुणा यस्य सोऽभिजातसत्त्ववीर्यपराक्रमगुणः। तत्र सत्त्वं–साहसरूप बलं–मानस

वीर्यं—जीवोत्साहः । पराक्रमः—इष्टनिगारकमिति । 'पसत्थ'त्ति । प्रशस्ताः—प्रधानाः सकलान्यजनापेक्षया विशिष्टतरा इति यावत् । वर्णः-शरीरत्वग्वर्त्ती यथास्थानोचितो गौरादिः स्वरः-'स्वरे चाज्ञे'ति वचनात् सकलजनादेयत्वप्रकृतिगम्भीरत्वादिगुणालङ्कृता ध्वनिविशेषः । सारं शरीरवर्त्ती शक्तिविशेष. । संहननं वज्रर्षभनाराच । तनुकमौदारिकशरीर । बुद्धिरौत्पत्तिक्यादिरूपा । धारणा-बहुकालस्थायिपूर्वानुभूतवस्तुगोचरस्मृतिज्ञानविशेषः । मेधा—धारणक्षमा बुद्धिः । संस्थानं समचतुरस्रं । शील-सदाचारः । प्रकृतिः सहोद्भवः । ततो द्वन्द्वस्ते यस्य स तथा । 'पहाण'त्ति । प्रधाना उत्तमाः गौरव—गरिमा महिमेति यावत् । छाया-शरीरकान्तिः गतिश्च—गमन यस्य स तथा । 'अणेग'त्ति । अनेकैरात्मन परेषा च प्रवृत्तिनिवृत्त्याद्यनेकप्रयोजनहेतुत्वैर्नैं पुनर्वारं वारमुच्चरितैर्वचनैः प्रधानः-उत्पन्ने प्रयोजने यथौचित्येन च वक्ता अनुत्पन्ने चावक्तेति स एष स्वरवचन श्रेष्ठतर इत्यर्थः । 'तेअ आउ'त्ति । तेजः—शरीरदीप्तिः । आयुर्जीवित । बल-शरीरप्रभव सामर्थ्य । वीर्यं-जीवप्रभव सामर्थ्यं तैर्युक्त —सातत्येन सङ्गत इति पूर्व्वापेक्षया भेदः । 'अज्झुसिर'त्ति । अशुषिरं-निश्छिद्र घनं-निबिड निचितं—भरितं यल्लोहमय शृङ्खलं तदुपमं नाराच-वज्रर्षभनाराचमिति प्रवचनप्रसिद्धनाम । न च ऋषभनाराचयोः प्रसिद्धनामापेक्षया व्यत्यये किञ्चिद्बाधकं शङ्कनीयम् । यता नाराचमुभयोमर्कटबन्ध वज्र—कीलिका ऋषभः— पट्टक इत्येतत्त्रयं यस्मिन् सहनने भवति तस्य प्रवचनप्रसिद्धनाम्ना अन्यथा वा भणने न कश्चिद्दोषः । एवंविधनामक सहननं यत्र तदेवंविध देह-शरीर धरतीत्येवंशीलोऽशुषिरघन निचितलोहशृङ्खलानाराचवज्रर्षभसंहननदेहधारी । 'झस—जुगे'त्यादि । झष—युग—भृङ्गार — वर्द्धमानकभद्रासन—शङ्ख —छत्र—व्यजनी—पताका—चक्र लाङ्गल—मुशल—रथ—स्वस्तिक-अङ्कुश-चन्द्रा-ऽऽदित्या—ग्नि-यूप—सागरे—न्द्रध्वज —पृथिवी—पद्म—कुञ्जर — सिंहासन - दण्ड—कूर्म्म—गिरिवर—तुरङ्गवर—मुकुट कुण्डल—नन्दावर्त्त—धनुः—कुन्त—भवन—विमानप्रमुखानि यान्यनेकानि अष्टाधिकसहस्रप्रमाणानि लक्षणानि चक्रवर्त्तिनामष्टोत्तरसहस्रलक्षणानां सद्भावात । यदुक्तं- 'पागयमणुआण बत्तीस लक्खणाणि अट्ठसय बलदेववासुदेवाणं, अट्ठसहस्सं चक्कवट्टितित्थगराणं'ति निशीथचूर्णौ । तैः लक्षणैः प्रशस्ताः सुविभक्ताश्चित्ताश्चित्रिता इव करचरणयोर्देशभागो यस्य स तथा । 'उड्ढमुह'त्ति । ऊर्ध्वं मुख येषां तान्यूर्ध्वमुखानि एवंविध नि चानि लोमानि तेषां जालं—समूहो यत्र तथा सुकुमालानि स्निग्धानि मृदूनि आवर्त्तप्रशस्तानि दक्षिणावर्त्तानि यानि लोमानि तैर्विरचितोऽलङ्कृतो यः श्रीवत्सः जिनप्रतिमाया प्रसिद्धो वक्षोऽन्त सुप्रमाणोन्नतमांसलप्रदेशविशेषस्तेन छन्नमाच्छादितं यत्तत् तथा विपुलं—विस्तीर्णं ततश्च पदत्रयकर्मधारयः तादृश वक्षो—हृदयं यस्य स ऊर्ध्वमुखलोमजालसुकुमालस्निग्धमृद्वावर्त्तप्रशस्तलोमविरचितश्रीवत्सच्छन्नवक्षाः । तथा 'देसखित्त'त्ति । देशश्च मगधादिरार्यदेशः, क्षेत्रं च देशैकदेशभूतं विनीतानगरीप्रभृतिकं ते उभे अप्यपेक्ष्य सुविभक्तो निजनिज लक्षणोपेतहस्तपादाद्यवयवैरलङ्कृतो देहः— शरीरं तं धरतीत्येवशीलो देशक्षेत्रसुविभक्तदेहधारी । तत्तदेशक्षेत्रनिवासिजनेभ्योऽतिसुन्दरशरीरधारीत्यर्थः । 'तरुणरवि'त्ति । तरुणरविरश्मय—सद्यः समुद्गतसूर्यकिरणास्तैर्बोधितं यत्कमल तत्र विबुद्धो-विकस्वरो यो गर्भो—बीजकोशस्तद्वद्विशुद्धो वर्णो यस्य स तथा । 'हयपोसण'त्ति । हयपोसणं 'पुस उत्सर्गे' इति वचनात् अश्वापानदेशः स एव कोश इव कोशः सुगुप्तत्वात तत्सन्निभस्तत्सदृशः प्रशस्तः पृष्ठयन्तोऽपानदेशो निरुपलेप-उपलेपवर्जितो यस्य स तथा । 'पउमुप्पल'त्ति । पद्मोत्पलादीनि प्रतीतानि । तत्र नागो-वृक्षविशेषस्तस्य पुष्पमेतेषां यस्सारो—रसस्तेन तुल्यः-सदृशो योऽङ्गे गन्धः सोऽस्यास्तीति । यद्वा—एषां सारो—गर्भस्तस्य यान्यङ्गानि-चूर्णलक्षणा अवयवास्तैस्तुल्यो यो गन्धः

विद्यते यस्य स तथा । 'छत्तीसाहिअ'त्ति । षट्त्रिंशत्सङ्ख्याका येऽधिकप्रशस्ता-अतिशोभनप्रशंसास्पदानि पूर्वोक्ताः पार्थिवगुणास्तैर्युक्ताऽन्वितः । 'अब्भोच्छिन्न'त्ति । अव्युच्छिन्नमच्छिन्नपरिपाट्यागतमातपत्रं-छत्रं छत्रोपलक्षितं राज्यं वा यस्य स तथा । चक्रवर्त्तिनो ह्यसिपिकच्छत्रपतिकुलसमुत्पन्ना अपि सर्वकालं पराऽनपहार्यराज्यश्रीभोक्तारो भवन्ति नरदेवत्वेन तदधिकबलवदमित्रासम्भवादिति । 'पागड'त्ति । प्रकटे-सर्वत्र विख्याते उभययोनी-मातृपितृपक्षौ यस्य स तथा उभयपक्षविशुद्धतया ख्यात इत्यर्थः । यत एवमत आह- 'विसुद्ध'त्ति । विशुद्धमुभयपक्षविशुद्धतया निर्म्मलं यन्निजककुलं तद्रूपं यद्गगनं तत्रोद्योतकारकत्वेन पूर्णचन्द्र इव-राकाशशाङ्क इव यः स तथा । अत एव 'चंद इव'त्ति । चन्द्र इव सौम्यतया नयनमनसोर्निर्वृतिकरः-आनन्दकारीत्यर्थः । अक्षोभ्यः-परैः क्षोभयितुमशक्यः । सागर इव स्तिमितो-भयवर्जितः । यथा सागरः शीताशीतोदादिनदीसम्बन्धिभिः पञ्च पञ्च योजनशतप्रमाणविस्तीर्णजलप्रवाहैर्गाम्भीर्यादिनिजस्वभावव्ययभयवर्ज्जितः तथा भरतोऽप्यपरपराभवभयवर्ज्जित इत्यर्थः । 'धणवइ'त्ति । धनपतिरिव-धनद इव कथं ? इत्याह-'भोगे'त्यादि । भोगस्य समुदयः-सम्यगुदयः समुदायो वा भोगसमुदयः सद्द्रव्यमुत्तमवस्तु भोगसमुदयाय तत्सहितं वा सद्द्रव्यं यस्य स तथा तस्य भावस्तत्ता तया हेतुभूतया धनदसमान इत्यर्थः । तथा समरे-सङ्ग्रामे अपराजितोऽपरैरिति गम्यं । परमविक्रमगुण-उत्कृष्टपराक्रमगुणान्वितः । 'अमरवइ'त्ति । अमरपतिना समानसदृशमतीवसमानं रूपं यस्य स तथा । अथवा अमरपतिसमान इन्द्रसामानिकस्तत्सदृश रूपं यस्य स इन्द्रसमानसदृशरूपः । 'मणुअवई'त्ति । मनुजानां पतिः-स्वामी भरत इति नाम्ना चक्रवर्ती उत्पद्यते इति क्रियासम्बन्धः । प्रागेव समर्थितः उत्पन्नः सन् भरतं च भुङ्क्ते । चकारो गम्यः । किंलक्षणः सन् ? प्रणष्टशत्रुः-प्रणष्टाः-प्रकर्षेण नाशं गताः शत्रवो यस्य स प्रणष्टशत्रुः । यत एवंविधो भरतोऽसङ्ख्येयवर्षान्तरैरुत्पद्यते भरतं च भुङ्क्ते अत इदं भरतक्षेत्रमुच्यते इति निगमनावसरे वक्ष्यते ॥

अथ प्रस्तुतभरतवक्तव्यतामभिधित्सुराह —

तए णं तस्स भरहस्स रण्णो अण्णया कयाइ आउहघरसालाए दिव्वे चक्करयणे समुप्पज्जित्था । तए णं से आउहघरिए भरहस्स रण्णो आउहघरसालाए दिव्वं चक्करयणं समुप्पण्णं पासति पासित्ता हट्ठतुट्ठचित्तमाणंदिए णंदिए पीतिमणे परमसोमणस्सिए हरिसवसविसप्पमाणहिअए जेणामेव से दिव्वे चक्करयणे तेणामेव उवागच्छति उवागच्छित्ता तिक्खुत्तो आयाहिणपयाहिणं करेइ करेत्ता करयल जाव कट्टु चक्करयणस्स पणामं करेति करेत्ता आउहघरसालातो पडिणिक्खमति पडिणिक्खमित्ता जेणामेव बाहिरिआ उवट्ठाणसाला जेणामेव भरहे राया तेणेव उवागच्छइ उवागच्छित्ता करयल जाव जएणं विजएणं वद्धावेति वद्धावेत्ता एवं वयासी-एवं खलु देवाणुप्पिआणं आउहघरसालाए दिव्वे चक्करयणे समुप्पण्णे । तं एअण्णं देवाणुप्पिआणं पिअट्ठयाए पिअं निवेएमो पिअं मे भवउ । तए णं से भरहे राया तस्स आउहघरिअस्स अंतिए एअमट्ठं सोच्चा निसम्म हट्ठ जाव सोमणस्सिए विअसिए विअसिअवरकमलणयणवयणे पयलिअवरकडगतुडिअकेऊरमउडकुंडलहारविरायंतरइअवच्छे पालंबपलंबमाणघोलंतभूसणधरे ससंभमं तुरिअं चवलं नरिंदे सीहासणाओ अब्भुट्ठेइ अब्भुट्ठेत्ता पायपीढाओ पच्चोरुहइ पच्चोरुहित्ता पाउआओ ओमुअइ

एगसाडिअं उत्तरासंगं करेइ करेत्ता अंजलिमउलिअग्गहत्थे चक्करयणाभिमुहे सत्तट्ठ पयाइं अणुगच्छति अणुगच्छित्ता वामं जाणुं अंचेइ अंचेत्ता दाहिणं जाणुं धरणितलंसि णिहट्टु करयल जाव अंजलिं कट्टु चक्करयणस्स पणामं करेइ करेत्ता तस्स आउहघरिअस्स अहामालिअं मउडवज्जं ओमोअं दलइ दलइत्ता विउलं जीविआरिहं पीइदाणं दलयइ सक्कारेइ सम्माणेइ सक्कारेत्ता सम्माणेत्ता पडिविसज्जेइ पडिविसज्जेत्ता सीहासणवरगए पुरत्थाभिमुहे सण्णिसण्णे। तते णं से भरहे राया कोडुंबिअपुरिसे सद्दावेइ सद्दावित्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ! विणीअं रायहाणिं सब्भिंतरबाहिरिअं आसिअसंमज्जिअसित्तसुइगसम्मट्ठरत्थंतरावणवीहिअं मंचाइमंचकलिअं णाणाविहरागवसणऊसिअज्झयपडागातिपडागमंडिअं लाउल्लोइअमहिअं गोसीससरसरत्तचंदणदद्दरदिण्णपंचंगुलितलं उवचिअवंदणकलसं चंदणघडसुकय जाव गंधुद्धुआभिरामं सुगंधवरगंधिअं गंधवट्टिभूअं करेह कारवेह करित्ता कारवित्ता य एअमाणत्तिअं पच्चप्पिणह। तए णं ते कोडुंबिआ भरहेणं रण्णा एवं वुत्ता समाणा हट्ठा करयल जाव कट्टु एवं सामित्ति आणाए विणएणं भरह अंतिआओ पडिणिक्खमंति पडिणिक्खमित्ता विणीअं रायहाणिं जाव करेत्ता तमाणत्तिअं पच्चप्पिणंति। तए णं से भरहे राया जेणेव मज्जणघरे तेणेव उवागच्छति उवागच्छित्ता मज्जणघरं अणुपविसइ अणुपविसित्ता समुत्तजालाकुलाभिरामे विचित्तमणिरयणकुट्टिमतले रमणिज्जे ण्हाणमडवंसि णाणामणिरयणभत्तिचित्तंसि ण्हाणपीढंसि सुहणिसण्णे सुहोदएहिं गंधोदएहिं पुप्फोदएहिं सुद्धोदएहि अ पुणो कल्लाणगपवरमज्जणविहीए मज्जिए। तत्थ कोउअसएहिं बहुविहेहिं कल्लाणगपवरमज्जणावसाणे पम्हलसुकुमालगंधकासाइअलूहिअंगे सरससुरहिगोसीसचंदणाणुलित्तगत्ते अहयसुमहग्घदूसरयणसुसंवुडे सुइमालावण्णगविलेवणे आविद्धमणिसुवण्णे कप्पिअहारद्धहारतिसरयपालंबमाणकडिसुत्तसुकयसोहे पिणद्धगेविज्जे अंगुलिज्जगललिअकयाभरणे णाणामणिकडगतुडिअथंभिअभुए अहिअरूवसस्सिरीए कुंडलउज्जोइआणणे मउडदित्तसिरए हारुत्थयसुकयरइअवच्छे पालंबपलंबमाणसुकयपडउत्तरिज्जे मुद्दिआपिंगलंगुलीए णाणामणिकणगविमलमहरिहणिउणोअविअ मिसिमिसंतविरइअसुसिलिट्ठविसिट्ठलट्ठसंठिअपसत्थआविद्धवीरवलए किं बहुणा? कप्परुक्खए चेव अलंकिअविभूसिए नरिंदे सकोरेंट जाव चउ चामरवालवीइअंगे मंगलजयसद्दकयालोए अणेगगणनायगदंडनायग जाव दूतसंधिपालसद्धिं संपरिवुडे धवलमहामेहणिग्गए इव जाव ससिव्व पिअदंसणे णरवई धूवपुप्फगंधमल्लहत्थगए मज्जणघराओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव आउहघरसाला जेणेव चक्करयणे तेणामेव पहारेत्थ गमणाए। तए णं तस्स भरहस्स रण्णो बहवे ईसर जाव पभितओ अप्पेगइआ पउमहत्थगया अप्पेगइआ उप्पलहत्थगया जाव अप्पेगइआ सयसहस्सपत्तहत्थगया भरहं रायाणं पिट्ठओ पिट्ठओ अणुगच्छंति। तते णं तस्स भरहस्स रण्णो बहुइओ।

खुज्जा-चिलाति-वामणि-वडभीओ-बब्बरी बउसिआओ ।
जोणिअपल्हविआओ इसिगणिआ चारुगणिआओ ॥१॥
लासिअलउसिअदमिलीसीहलि तह आरवी पुलिंदी अ ।
पक्कणि वहलि मुरुंडी सबरीओ पारसीओ अ ॥२॥ अप्पेगइआ वंदणकलसहत्थगयाओ-भिंगार-आदंस-थाल-पाति सुपतिट्ठ-वायकरग-रयणकरंडग-पुप्फचंगेरी-मल्लवण्णचुण्णहत्थगया वण्णगंधहत्थगया वत्थआभरणलोमहत्थचंगेरीपुप्फपडलगहत्थगया जाव लोमहत्थगया अप्पेगइआओ सीहासणहत्थगयाओ छत्तचामरहत्थगयाओ तिल्लसमुग्गयहत्थगयाओ ।

तेल्ले कोट्ठसमुग्गे पत्ते चोए अ तगरमेला य । हरिआले हिंगुलए मणोसिला सासवसमुग्गे ॥१॥

अप्पे० तालिअंटहत्थगयाओ अप्पे० धूवकडुच्छहत्थगयाओ भरहं रायाणं पिट्ठओ पिट्ठओ अणुगच्छंति । तए णं से भरहे राया सव्विड्ढीए सव्वजुईए सव्वबलेणं सव्वसमुदएणं सव्वादरेणं सव्वविभूसाए सव्वविभूतीए सव्ववत्थपुप्फगंधमल्लालंकारविभूसाए सव्वतुडिअसद्दसण्णिनाएणं महया इड्ढीए जाव महया वरतुडिअजमगसमगप्पवाइएणं संखपणवपडहभेरिझल्लरिखरमुहिमुरज-मुइंगदुंदुहिनिग्घोसणाइतेणं जेणेव आउहघरसाला तेणेव उवागच्छति । आलोए चक्करयणस्स पणामं करेइ जेणेव चक्करयणे तेणेव उवागच्छति लोमहत्थयं परामुसति परामुसित्ता चक्करयणं पमज्जति पमज्जित्ता दिव्वाए दगधाराए अब्भुक्खेइ अब्भुक्खेत्ता सरसेणं गोसीसचंदणेणं अणुलिंपइ अणुलिंपेत्ता अग्गेहिं वरेहिं गंधेहिं मल्लेहिं अच्चिणति अच्चिणित्ता पुप्फारुहणं मल्लगंधवण्णचुण्ण-वत्थारुहणं आभरणारुहणं करेति करेत्ता अच्छेहिं सण्हेहिं सेएहिं रययामएहिं अच्छरसातंदुलेहिं चक्करयणस्स पुरओ अट्ठट्ठ मंगलए आलिहइ । तंजहा सोत्थिअ सिरिवच्छ-णंदिआवत्त वद्धमाण-भद्दासण-मच्छ-कलस-दप्पण अट्ठ मंगलए आलिहित्ता काऊणं करेइ उवयारं किंते पाडलमल्लिअ-चंपगअसोगपुण्णागचूअमंजरिणवमालिअबउलतिलयकणवीरकुंदकुज्जयकोरिंटयपत्तदमणयवरसुरहिसुगंधगंधिअस्स कयग्गहगहिअकरयलपब्भट्ठविप्पमुक्कस्स दसद्धवण्णस्स कुसुमणिगरस्स तत्थ चित्तं जाणुस्सेहप्पमाणमित्तं ओहिनिअरं करेइ करेत्ता चंदप्पभवेरुलिअविमलदंडं कंचणमणिरयण-भत्तिचित्तं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवगंधुत्तमाणुविद्धं धूमवट्टिं विणिम्मुअंतं वेरुलिअमयं कडुच्छुअं पग्गहित्तु पयए धूवं दहति दहेत्ता सत्तट्ठ पयाइं पच्चोसक्कइ पच्चोसक्कित्ता वामं जाणुं अंचेइ जाव पणामं करेति करेत्ता आउहघरसालाओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव सीहासणे तेणेव उवागच्छइ उवागच्छित्ता सीहासणवरगए पुरत्थाभिमुहे सण्णिसीअइ सण्णिसीइत्ता अट्ठारससेणिप्पसेणीओ सद्दावेइ सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! उस्सुक्कं उक्करं उक्किट्ठं अदिज्जं अमेज्जं अभडप्पवेसं अदंडिमकोदंडिमं अधरिमं गणिआवरणाडइज्जकलिअं अणेगतालायराणुचरिअं अणुद्धुअमुइंगं अमिलायमल्लदामं पमुइअपक्कि-

लिअमपुरजणजाणवयं विजयवेजइयं चक्करयणस्स अट्ठाहिअं महामहिमं करेह करेत्ता मम एअमाणत्तिअं पच्चप्पिणह। तए णं ताओ अट्ठारससेणिप्पसेणीओ भरहेणं रण्णा एवं वुत्ता समाणीओ हट्ठाओ जाव विणएणं पडिसुणेंति पडिसुणेत्ता भरहस्स रण्णो अंतिआओ पडिणिक्खमेंति पडिणिक्खमित्ता उस्सुक्कं जाव करेंति अ कारवेंति अ करेत्ता कारवेत्ता जेणेव भरहे राया तेणेव उवागच्छंति उवागच्छित्ता जाव तमाणत्तिअं पच्चप्पिणंति ॥

'तए णं तस्से'त्यादि। ततो माण्डलिकराज्यप्राप्तेरनन्तरं वर्षसहस्रातिक्रमे तस्य-भरतस्य राज्ञोऽन्यदा कदाचित्-एकदा प्रस्तावे-भगवतो वृषभस्वामिनः केवलज्ञानोत्पत्त्यवसरे इत्यर्थः। आयुधगृहशालाया दिव्यं चक्ररत्नं समुत्पन्नम्। 'तए णं से' इत्यादि। ततश्चक्ररत्नोत्पत्त्यनन्तरं स आयुधगृहिक'-आयुधशालाधिपतिः 'आउह'त्ति। आयुधगृहशालाया दिव्यं चक्ररत्नं समुत्पन्नं पश्यति, दृष्ट्वा च हट्ठ त्ति हृष्टतुष्टोऽत्यन्तं तुष्टः। यद्वा-हृष्टो-विस्मितोऽहो! चक्ररत्नं समुत्पन्नं, तुष्टस्तोषं गत' यथा भव्यं जातं यन्मया एतददृष्टपूर्वं चक्ररत्नं दृष्टम्। तच्च-'वयरामयतुंबे' इत्यादिना वक्ष्यमाणस्वरूपम्। अत एव चित्तेनानन्दितः आनन्दितं वा प्रमोदमेदुरं चित्तं यस्य स चित्तानन्दितः। मकारोऽलाक्षणिकः। ततः पदद्वयस्य कर्मधारयः। नन्दितः 'टुनदु समृद्धौ' इति समृद्धिं प्राप्तः। 'पीइ'ति। प्रीतिराप्यायनं मनसि यस्यासौ प्रीतिमनाः चक्ररत्नदर्शनोद्भूतप्रभूतप्रीतिभागिति। प्रीतिप्रकर्षतामाह- 'परमे'ति। परममुत्कृष्टं सौमनस्यं सुमनस्कत्वं जातमस्येति परमसौमनस्यितः। 'हरिस'त्ति। हर्षवशेन विसर्पद्विस्तारयायि हृदयं यस्य स तथा। अथ हर्षव्यञ्जकक्रियामाह- 'जेणामेव'त्ति। यत्रैव तद्दिव्यं चक्ररत्नं तत्रैवोपागच्छति उपागत्य च त्रिःकृत्वः- त्रीन् वारान् आदक्षिणप्रदक्षिणं करोति कृत्वा च 'करयल जाव कट्टु'त्ति पदेन 'करयलपरिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु' इति द्रष्टव्यम्। तत्र करतलाभ्यां परिगृहीतो-निष्पादितः करतलपरिगृहीतस्तं, दश नखा यस्मिन् स दशनखस्तमावर्त्तनमावर्त्तः शिरस्यावर्त्तो यस्य स शिरस्यावर्त्तः 'कण्ठे काले'त्यादिवदलुक्समासः। ततस्तमेवंविधमञ्जलिमिति द्वयोर्हस्तयोरन्योन्यान्तरिताङ्गुलिकयोः सम्पुटरूपतया यदेकत्र मीलनं सोऽञ्जलिः तं मस्तके कृत्वा 'चक्क'त्ति। चक्ररत्नस्य प्रणामं कुरुते कृत्वा चायुधगृहशालातः प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च यत्रैव बाह्योपस्थानशाला-आस्थानमण्डपः यत्रैव च भरतो राजा तत्रैवोपागच्छति उपागत्य च 'करतल जाव'त्ति प्राग्वत्। 'जए णमि'त्यादि। जयः-परैरभिभूयमानता प्रतापवृद्धिश्च, विजयः-परेषामसहमानानामभिभवः। यद्वा-जयः स्वदेशे, विजय' परदेशे। अथवा जयः सामान्यतः उपद्रवादिविषयः, विजय' स एव विशिष्टतरः प्रबलपरदलमर्द्दनसमुद्भवः तेन वर्द्धापयति जयेन विजयेन च त्वं वर्द्धस्वेत्याशिषं प्रयुङ्क्त इत्यर्थः। वर्द्धापयित्वा चैवमवादीत् किं तद्? इत्याह-'एवमि'त्यादि। एवं खल्विति। एवमेव नात्रार्थे सन्देहः कार्यः देवानुप्रियाणां भवतामायुधशालायां दिव्यं चक्ररत्नं समुत्पन्नं तदेतत्। णमि यलङ्कारे। देवानुप्रियाणां भवतां 'पिअट्ठयाए'त्ति। प्रीत्यर्थं प्रियं-चक्ररत्नसमुत्पत्तिलक्षणं निवेदयामः-प्रतिपादयामः प्रियमिष्टं मे इति युष्माकं भवतु-अस्तु। 'तए णमि'त्यादि। ततः स भरतो राजा तस्यायुधगृहिकस्यान्तिके एनमर्थं श्रुत्वा-आकर्ण्य निशम्य-हृदयेनावधार्य हृष्टो यावत्परमसौमनस्यितः यावत्करणात् 'तुट्ठचित्तमाणंदिए' इत्यादि प्रागुक्तं दृश्यं। 'विअसिए'त्ति। विकशितो-विकाशं प्राप्तो हर्षोत्कर्षात्। अथ हर्षोत्कर्षव्यञ्जकमाह 'विअसिअवरे'त्यादि।

विकसितानि–चक्रोत्पत्तिश्रवणोद्भूतप्रभूतप्रमोदादुत्फुल्लानि वरकमलवन्नयने वदनं च यस्य स तथा। 'पयलिअ'त्ति। प्रचलितानि–चक्रोत्पत्तिश्रवणजनितसम्भ्रमातिरेकात्कम्पितानि वराणि–प्रधानानि कटकानि–च कङ्कणानि त्रुटिताश्च-बाहुकाः केयूराणि–चाङ्गदानि बाहुमूलभूषणानि मुकुटं च–किरीटं कुण्डले च–कर्णाभरणे यस्य स तथा। हारो-मुक्ताफलकलापरचितो विराजमानो रचितो वक्षस्युरसि यस्य स तथा। तत पदद्वयस्य कर्म्मधारय। प्राकृतत्वाद्विशेषणानां परनिपातः। 'पालंबे'त्यादि। प्रालम्बो-झुम्बनकं मुक्तामयं प्रलम्बमानं–लम्बमानं घोलच्च–दोलायमानं यद् भूषणमाभरणं तद्धारयति यः स तथा। ससम्भ्रम सादरं त्वरित सौत्सुक्य चपलं वेगवच्च यथा स्यात्तथा नरेन्द्रो भरतः सिंहासनादभ्युत्तिष्ठति अभ्युत्थाय च पादपीठात्प्रत्यवरोहति–अवतरतीत्यर्थः। प्रत्यवतीर्य च पादुके अवमुञ्चति। 'एग त्ति। एकः शाटिको यस्मिन् स एकशाटिकः एवंविधमुत्तरासङ्गं करोति कृत्वा च 'अंजलि'त्ति। अञ्जलिना-अञ्जलिकरणतो मुकुलितौ–मुकुलाकृतीकृतौ अग्रहस्तौ येन स तथा। चक्ररत्नाभिमुखः सप्ताष्टपदान्यनुगच्छति अनुगम्य च वामं जानुं 'अंचेइ त्ति। आकुञ्चयति-उत्पाटयतीत्यर्थ। आकुञ्च्य च दक्षिणं जानुं धरणीतले 'निहट्टु'त्ति निवेश्य करतल जाव अंजलि कट्टु'त्ति पदेन करतलपरिगृहीतमित्यादि प्रागुक्तं ग्राह्यम्। ततश्चक्ररत्नस्य प्रणामं कुरुते कृत्वा च तस्यायुधगृहिकस्य 'जहामालिअं'ति। यथामालितं 'मलि मल्लि धारणे' इति वचनात् यथाधारितं-यथापरिहितमित्यर्थः। मुकुटवर्ज्जं मुकुटस्य राजचिह्नत्वात् मुकुट वर्ज्जयित्वेत्यर्थः। 'ओमोअ ति। अवमुच्यते-परिधीयते यः सोऽवमोचकः आभरणं तं मुकुटवर्ज्जं सर्व्वमप्याभरणं ददातीत्यर्थः। दत्त्वा च विपुल-विस्तीर्णं जीविकार्हं–जीविकोचितमाजन्मनिर्व्वाह्योग्यं प्रीतिदान-उत्पन्नप्रेमहेतुकं दानमित्यर्थः। 'दलयति त्ति। ददाति दत्त्वा च सत्कारयति–प्रवरवस्त्रादिना सन्मानयति–तथाविधवचनादिप्रतिपत्त्या सत्कारादि कृत्वा च प्रतिविसर्ज्जयति प्रतिविसर्ज्य च सिंहासनवरगतः पूर्व्वाभिमुखः सन्निषण्णः। अथ भरतः किं कृतवान्? इत्याह– 'तए णमि'त्यादि। ततः सिंहासनोपवेशनानन्तरं णमिति पूर्व्ववत्। स भरतो राजा कौटुम्बिकपुरुषान्–अधिकारिविशेषान् शब्दापयति शब्दापयित्वा च एवमवादीत। किम्? इत्याह–'खिप्पामेव'त्ति। क्षिप्रमेव भो देवानुप्रिया! विनीतानाम्नीं राजधानीं वक्ष्यमाणविशेषणविशिष्टां कुरुत स्वयं कारयत चान्यैरित्यनेन सम्बन्धः। 'सब्भिंतर'त्ति। सहाभ्यन्तरेण नगरमध्यभागेन बाहिरिका-नगरबहिर्भागो यत्र तत्तथा। क्रियाविशेषणमिदं किंलक्षणाम्? 'आसिअ'त्ति। आ-मर्यादया ईषद्वा सिक्तानि आसिक्तानि गन्धोदकच्छटकदानतः। सम्मार्जितानि कचवरशोधनतः। सिक्तानि सामान्यतो जलेन। अत एव शुचिकानि–पवित्राणि संमृष्टानि–समार्ज्जितेन कचवरापनयनेन नगर्या दूरं प्रक्षेपेणेत्यर्थः। यद्वा संमृष्टानि-विषमभूमिभञ्जनादिना। एवंविधानि रथ्यान्तराणि-रथ्यामध्यानि वीथयश्च-हट्टादिमार्गा यस्यां सा तथा ता 'मंचाइ'त्ति। मञ्चाः– प्रेक्षणकप्रेक्षकजनोपवेशननिमित्त मालकाः अतिमञ्चाश्च तेषामप्युपरि ये मालकास्तैः परिकलितां 'णाणाविह'त्ति। नानाविधा–अनेकप्रकाराः रागा–मङ्गलनिमित्तं कुङ्कुमादिरचनाविशेषाः मञ्जिष्ठादिद्रव्यरञ्जनानि वा येषामेवंविधानि यानि वसनानि तैर्विशिष्टाः तन्मय्यो वा। उच्छ्रिता–ऊर्ध्वीकृताः ध्वजा.–सिंहगरुडादिरूपोपलक्षितबृहत्पटरूपाः पताकाश्च तदितररूपा। अतिपताका-स्तदुपरिवर्त्तिन्यस्ताभिर्मण्डिता यास्ता तथा ता 'लाइअ'त्ति। लाइअं–छगणादिना भूमेर्लेपनं 'उल्लोइअ' सेटिकादिना भित्त्यादिषु धवलनं ताभ्यां महितेव-पुजितेव या ते एव वा महितं-पूजनं यस्यां सा तथा

तां'गोसीस'त्ति। गोशीर्षस्य चन्दनविशेषस्य सरसस्य-प्रत्यग्रस्य रक्तचन्दनस्य-चन्दनविशेषस्यैव दर्दरस्य-दर्दराभिधानाद्रिजातस्य श्रीखण्डस्य गोशीर्षादिभिर्वा दत्ता-न्यस्ता' पञ्चाङ्गुलयस्तला-हस्तकाः कुड्यादिषु यस्या सा तथा तां। गोशीर्षरक्तचन्दनै' कृत्वा दर्दरेण-दर्दरबहुलेन चपेटारूपेण दत्तपञ्चाङ्गुलितलामित्येके। 'उवचिअ'त्ति। उपचिता-उपनिहिता गृहान्तःकृतचतुष्केषु वन्दनकलशा-माङ्गल्यघटा यत्र सा तथा तां 'वदणघडे' त्यादि। यथालिखितसूत्रेण 'वंदणघडसुकयतोरणपडिदुवारदेसभाग आसत्तोसत्तवट्टवग्घारिअमल्लदामकलाव पंचवण्णसरससुरहिमुक्कपुप्फपुंजोवयारकलिअं कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झतधूवमघमघंतगंधुद्धुआभिराममि'ति यावत् सूचितं वाच्यम्। अस्यार्थः- वन्दनघटाः सुकृतास्तोरणानि च प्रतिद्वारं-द्वारस्य द्वारस्य देशभागेषु यस्यां सा ता 'आसत्तो'त्ति। आसक्तो-भूमिलग्नः उत्सक्तश्चोपरिलग्नो विपुलो-विस्तीर्णो वृत्तो-वर्तुलो 'वग्घारिअ'त्ति। प्रलम्बितः पुष्पगृहाकारो माल्यदाम्नां-पुष्पमालानां कलापः-समूहो यस्यां सा तां। 'पचवण्ण'त्ति। पञ्चवर्णाः सरसाः सुरभयो ये मुक्ताः- करप्रेरिताः पुष्पपुञ्जास्तैर्य उपचारः-पूजा भूमेस्तेन कलितां 'कालगुरु'त्ति। कालागुरुप्रभृतीनां सुगन्धद्रव्यविशेषाणां मघमघायमानो गन्ध उद्धूत-उद्भूतस्तेनाभिरामा या सा तामिति। पुनः किंलक्षणां ? 'सुगंध'त्ति। सुगन्धवरगन्धिकां सुगन्धा ये वरगन्धाः प्रवरवासास्तेषां गन्धो यस्यां सा तथा ता'गध'त्ति। गन्धवर्त्तिभूतां सौगन्ध्यातिशयात गन्धद्रव्यगुटिकाकल्पामित्यर्थः। 'करेह'त्ति। कुरुत कारयत कृत्वा कारयित्वा च एतामाज्ञप्तिकां प्रत्यर्प्पयत्त-कृतार्थीकृत्यागत्य च निवेदयतेत्यर्थः। अथैव भरताज्ञामवाप्य ते कौटुम्बिकपुरुषाः कीदशा जाता ? इत्याह- 'तए णमि'त्यादि। ततस्ते कौटुम्बिकाः भरतेन राज्ञा एवमुक्ताः सन्त' हृष्टा विस्मयं प्राप्ताः 'करयल त्ति। करतलपरिगृहीत दशनख शिरस्यावर्त्त मस्तकेऽञ्जलि कृत्वा 'एव सामि'त्ति। एवमिति यथादेश स्वामिन्नित्यामन्त्रणार्थः। इतिरुपदर्शने। 'आणाए विणएण'ति। आज्ञाया-आदेशस्य विनयेन वचनं शृण्वन्ति कर्तुमभ्युपगच्छन्ति प्रतिश्रुत्य च भरतस्य राज्ञोऽन्तिकात्-समीपात्प्रतिनिष्क्रामन्ति प्रतिनिष्क्रम्य च विनीतां राजधानीं यावत्पूर्वोक्तस्वरूपां कृत्वा तामाज्ञप्तिं प्रत्यर्पयन्ति आज्ञां कृत्वागत्य च निवेदयन्तीत्यर्थः। 'तए णमि'त्यादि। ततः स भरतो राजा यत्रैव मज्जनगृह तत्रैवोपागच्छति तत्रोपागत्य च मज्जनगृहमनुप्रविशति अनुप्रविश्य च 'समुत्ते'त्यादि। समुक्तन-मुक्ताफलयुक्तेन जालेन-गवाक्षेणाकुलो-व्याप्तोऽभिरामश्च यस्तस्मिन् 'विचित्त'त्ति। विचित्रैरनेकभेदभिन्नैर्मणिरत्नैर्हेतुभूतैः कुट्टिमतल-बद्धभूमिका यत्र स तथा। रमणीये स्नानमण्डपे तत्र स्नानपीठ कीदशम् ? इत्याह-'णाणामणी'त्यादि। नानामणिरत्नैर्भक्त्या यथौचित्येन विच्छित्त्या चित्राणि यत्र स तथा तस्मिन् एवंविध स्नानार्थं पीठ स्नानपीठ तस्मिन् सुखनिषण्णः- सुखेनोपविष्टः। ततः किमित्याह-'सुहोदएहिं'ति शुभोदकैः सुखोदकैर्वा नात्युष्णैर्नाप्यतिशीतैरित्यर्थः। गन्धोदकैः श्रीखण्डादिरसमिश्रैः पुष्पोदकैः पुष्परसमिश्रितैः शुद्धोदकैश्च स्वाभाविकैरुदकैरित्यर्थः। न केवल शरीरमलापनोदहेतुभिरेवं जलै किन्तु मङ्गलविधिनापि मज्जित इत्याह- 'पुणो कल्लाणगे' त्यादि। पुन' शरीरमलापनोदानन्तरं कल्याणानि-मङ्गलानि कायत्याह्वयतीति कल्याणक प्रवरं-प्रधानं च तन्मज्जनं च तस्य विधिस्तेन मज्जित'। 'तत्थ'त्ति। तत्र स्नानावसरे कौतुकादीना-रक्षादीना शतैर्बहुविधैः कृत्वा यत् कल्याणकप्रवरमज्जनं तस्यावसाने। 'पम्हल'त्ति। पक्ष्मला-पक्ष्मवती अत एव सुकुमाला गन्धप्रधाना काषायिकी-कषायरक्तशाटिका तया लूषितं-रूक्षितमङ्ग-शरीरं यस्य स तथा। 'सरसे'त्यादि। सरससुरभिगोशीर्षचन्दनेन अनुलिप्तं गात्र-शरीर यस्य स तथा। 'अहय'त्ति। अहतं--

मलाद्यनुपद्रुतं सुमहार्घं-बहुमूल्यं यत् दूष्यरत्नं-प्रधानवस्त्रं तेन सुसंवृतः- परिगतः। यद्वा-तादृशं दूष्य-रत्नं सुष्ठु सवृतं-परिहितं येन स तथा। 'सुइमाल'त्ति शुचिनी-पवित्रे माला च पुष्पमाला वर्ण्णकविलेपनं च मण्डनकारि कुङ्कुमादिभिर्विलेपनं यस्य स तथा। यद्यपि वर्ण्णकशब्देन चन्दनमप्युच्यते तथापि गोशीर्षेत्यादिना तस्योक्तत्वादत्रोक्तमेव विज्ञेयम्। 'आविद्ध'त्ति। आविद्धानि-परिहितानि मणिसुवर्णानि उपलक्षणान्मणिसुवर्ण्णमयभूषणानि न धात्वन्तरमयभूषणमस्तीति भावः। 'कप्पिअ'त्ति कल्पितानि-विन्यस्तानि हारोऽष्टादशसरिकः अर्द्धहारस्तु नवसरिकः त्रिसरिक प्रतीत येन स तथा। प्रालम्बो-मुक्तावली-ज्झुम्बनकं प्रलम्बमानो यस्य स तथा। कटिसूत्रेण-कटयाभरणविशेषेण सुष्ठु कृता शोभा यस्य स तथा। यद्वा प्रालम्बः प्रलम्बमानो यस्यैवविधेन कटिसूत्रेण सुकृता शोभा यस्य स तथा। ततः पदत्रयस्य पदद्वयस्य वा कर्म्मधारय'। 'पिणद्ध'त्ति। पिनद्धानि-परिहितानि ग्रीवायां ग्रैवेयकानि-ग्रीवाभरणानि येन स तथा। अंगुलिज्ज'त्ति। अङ्गुलीयकानि-अङ्गुल्याभरणानि ऊर्मिकाः ललितानि-शोभावन्ति कचाभरणानि च पुष्पादीनि यस्य स तथा। 'णाणामणि'त्ति। नानामणयो येषु एवंविधाः कटकत्रुटितबाह्वाभरणानि तैः स्तम्भिताविव भुजौ यस्य। अधिकरूपेण सश्रीकः। 'कुंडल'त्ति। कुण्डलाभ्यामुद्योतितं प्रकाशितमाननं यस्य स तथा। 'मउड'त्ति। मुकुटदीप्तशिरस्कः 'हारुत्थय'त्ति। हारेणावस्तृतमाच्छादित तेनैव सुकृतरतिकं च वक्षो यस्य स तथा। 'पालंब'त्ति। प्रलम्बेन-दीर्घेण प्रलम्बमानेन च सुकृतं पटेनोत्तरीयकमुत्तरासङ्गो येन स तथा। 'मुद्दिअ'त्ति। मुद्रिकाभिः सरत्नाङ्गुल्याभरणैः पिङ्गला अङ्गुल्यो यस्य स तथा। 'णाणामणि'त्ति। नानामणिकनकरत्नैर्विमलानि महार्हाणि-महार्घाणि निपुणेन शिल्पिना 'ओअविअ'त्ति। परिकर्म्मितानि 'मिसित'त्ति। देदीप्यमानानि यानि विरचितानि निर्म्मितानि सुश्लिष्टानि सुसन्धीनि विशिष्टान्यन्येभ्यो विशेषवन्ति लष्टानि-मनोहराणि संस्थितानि-सम्यग् सस्थानवन्ति प्रशस्तानि लक्षणोपेतानि आविद्धानि-परिहितानि वीरवलयानि येन 'यः कश्चिद्वीरः स मा विजित्य वलयान्येतानि मोचयत्वि'तिस्पर्द्धया परिहितानि वलयानि वीरवलयान्युच्यन्ते। 'किंबहुणा'त्ति। किं बहुना वर्ण्णितेनेतिशेषः। 'कप्परुक्खए चेव'त्ति। चैवशब्द इवार्थे अलङ्कृतविभूषितः कल्पवृक्षक इव। यथा किल कल्पवृक्षोऽलङ्कृतो दलादिभिर्विभूषितश्च फलादिभिः तथाऽसावपि भरतोऽलङ्कृतो मुकुटादिभिराभरणैर्विभूषितश्च वस्त्रचन्दनचर्चादिनेति। एवंविधो नरेन्द्रो-नरदेवः 'सकोरिंट जाव'त्ति। यावच्छब्दात् 'सकोरेंटमल्लदामेण छत्तेणं धरिज्जमाणेणं'ति। कोरिण्टकः पुष्पवृक्षजातिस्तत्पुष्पाणि मालां ते शोभार्थं दीयन्ते मालायै हितानि माल्यानि पुष्पाणि दामानि मालाः ततश्च सकोरिण्टानि कोरिण्टकाख्यकुसुमस्तबकवन्ति माल्यदामानि पुष्पस्रजो यत्र तत्तथा तेन 'धरिज्जमाणेणं'ति। ध्रियमाणेन छत्रेण विराजमान इतिगम्यं। 'चउचामर'त्ति। चतुर्ण्णां चामराणां वीज्यमानानां ये वालास्तैर्वीजितमङ्ग-शरीरं यस्य स तथा। यद्वा यावत्करणादौपपातिकवाचनान्तरगतः सविस्तरः छत्रचामरवर्ण्णको वाच्यः। स चैवं किं लक्षणेन छत्रेण? 'अब्भपडलपिंगलुज्जलेणं' अभ्रपटल-मिव-मेघवृन्दमिव बृहच्छायाहेतुत्वात् अभ्रपटलं पिङ्गल कपिशं सुवर्ण्णकम्बिकानिर्मितत्वात् उज्ज्वल च यत्तत्तथा तेन। तथा 'अविरलसमसंहयचंदमंडलसमप्पभेणं' अविरलं-घनं शिलाकावत्त्वेन समं-तुल्यं शलाकायोगेन 'सहय'त्ति। संहतमनिम्नोन्नतशलाकायोगात् चन्द्रमण्डलसमप्रभं च यद्दीप्त्या तत्तथा तेन। तथा पुनरपि किंभूतेन? 'मंगलसयभत्तिच्छेअचित्तिअखिंखिणिमणिहेमजालविरइअपरिगयपेरंतकणगघंटिअपयलिअकिंकिणितसुमहुरसद्दालसोहिएणं' मङ्गलाभिर्माङ्गल्याभिः शतभक्तिभिः-शतसङ्ख्यविच्छि-

त्तिभिः छेकेन-निपुणेन शिल्पिना चित्रितं यत्तत्तथा। किङ्किनीभिः-क्षुद्रघण्टिकाभिर्मणिहेमजालेन च-रत्नकनकजालकेन विरचितेन-कृतेन विशिष्टरतिदेन वा परिगतं-परिवेष्टितं यत्तत्तथा। पर्यन्तेषु प्रान्तेषु कनकघण्टिकाभिः प्रचलिताभिः किणिकिणायमानानि सुखसुमधुरशब्दवतीभिश्चात्रालप्रत्ययस्य मत्वर्थीयत्वात् शोभितं यत्तत्तथा। ततः पदत्रयस्य कर्मधारयः तेन। तथा सपयरवरमुत्तदामलंबंतभूसणेणं' सप्रतराणि-आभरणविशेषयुक्तानि यानि वरमुक्तादामानि प्रवरमुक्ताफलमालास्तानि 'लंबत'त्ति। प्रलम्बमानानि भूषणानि यस्य तत्तथा तेन। तथा 'नरिंदवामप्पमाणरुंदपरिमंडलेणं' नरेन्द्रस्य तस्यैव राज्ञो वामप्रमाणेन-प्रसारितभुजयुगलमानेन रुन्द-विस्तीर्ण्णं परिमण्डल-वृत्तभावो यस्य तत्तथा तेन। पुनः किंभूतेन? 'सीआतववायवरिसविसदोसनासणेण' शीतातपवातवर्षविषजन्यानां दोषाणां शीतादिलक्षणदोषाणां वा नाशनं-विनाशक यत्तत्तथा तेन। 'तमरयमलबहलपडलधाडणपभाकरेणं' तमोऽन्धकार रजो-रेणुर्मलः प्रतीतः। एषां बहलं घनं यत् पटल-वृन्दं तस्य धाडनीया नाशनीया प्रभा-कान्तिस्तत्करणशील यत्तत्तथा-तेन। अथवा रजोमलतमोबहलपटलस्य धाडने प्रभाकर इव-दिवाकर इव यत्तत्तथा तेन। तथा पुनरपि कीदृशेन? 'उउसुहसिवच्छायसमणुबद्धेण' ऋतौ-कालविशेषे सुखा-सुखहेतुः ऋतुसुखा शिवा-निरुपद्रवा छाया-आतपवारणलक्षणा तया समनुबद्धम्-अनवच्छिन्न यत्तत्तथा तेन। तथा वेरुलिअदंड-सज्जिएणं' वैडूर्यमयदण्डे सज्जित-वितानित यत्तत्तथा तेन। तथा 'वयरामयवत्थिनिउणजोइअअट्ठसहस्सवरकंचणसलागनिम्मिएणं' वज्रमय्यां वस्तौ शलाकानिवेशनस्थाने निपुणेन-शिल्पिना योजिता-सम्बन्धिताः अष्टोत्तरसहस्रसङ्ख्याः या वरकाञ्चनशालाकास्ताभिर्निर्म्मितं यत्तत्तथा तेन। तथा 'सुनिम्मलरययसुच्छएण' सुनिर्म्मलो रजतस्य सम्बन्धी सुच्छदः- प्रच्छादनपटो यत्तत्तथा तेन। तथा छत्रेण किं कुर्वता? निउणोविअमिसिमिसिंतमणिरयणसुरमंडलवितिमिरकरणिग्गयग्गपडिहय पुणरवि पच्चावडंतचंचलमरीइअकवयं विणिम्मुअंतेण त्ति'। निपुणेन शिल्पिना निपुण यथा भवति तथा ओअविअं' त्ति। परिकर्म्मितानि 'मिसिमिसित त्ति। देदीप्यमानानि यानि मणिरत्नानि तेषां चञ्चला मरीचयो यस्य स चञ्चलमरीचिकस्म चासौ कवचश्च त विनिमुञ्चता-निरसृजता। तत्र कवच विशिनष्टि 'सुरे' त्यादि। सूरमण्डलात् ये विनिर्गताः-प्रसृताः वितिमिरास्तमोनाशकाः कराः- किरणानि तेषां 'पुणरवि पच्चावडंत'त्ति। पुनरपि-पुनः पुनः प्रत्यापतन्ति-प्रत्यवसर्प्पन्ति अभिमुखमागच्छन्तीत्यर्थः यान्यग्राणि तानि प्रतिहतानि-निराकृतानि येन स सूरमण्डलविनिर्गतवितिमिरकरः पुनरपि प्रत्यापतदग्रप्रतिहतस्ततश्चञ्चलमरीचिककवचेन विशेष्यपदेन कर्म्मधारयः। अत्र विशेषणानामनियतरचना आर्षत्वादेवेति। 'पडिदंडेन' अतिभारिकतया एकदण्डेन दुर्व्वहत्वात् स प्रतिदण्डेन 'धरिज्जमाणेण' ध्रियमाणेन आतपत्रेण-छत्रेण विराजमान इति। एवं चामरवर्ण्णनमप्यौपपातिकादवसातव्यम्। अथ प्रकृतं सूत्रमुच्यते-'मगल'त्ति। मङ्गलभूतो जयशब्दः कृतो जनेन आलोके-दर्शने यस्य तत्तथा। 'अणेगगण'त्ति। अनेकगणनायकदण्डनायक यावद्दूतसन्धिपालैः सार्द्धं सम्परिवृतः। अनेके ये गणनायकाः प्रकृतिमहत्तराः दण्डनायकाः-तन्त्रपालाः यावच्छब्दादत्र 'राईसरतलवरकोडुंबिअमाडंबिअमंतिमहामंतिगणगदोवारिअअमच्चचेडपीढमद्दनगरनिगमसेट्ठिसेणावइसत्थवाह' इति द्रष्टव्यम्। तत्र राजानो-माण्डलिकाः ईश्वरा-युवराजानः अणिमाद्यैश्वर्ययुक्ता वा तलवराः-परितुष्टनरपतिप्रदत्तपट्टबन्धविभूषिता राजस्थानीयाः। माडम्बिकाश्छिन्नमडम्बाधिपाः कौटुम्बिकाः- कतिपयकुटुम्बस्वामिनोऽवलगकाः ग्राममहत्तरा वा मन्त्रिणः- सचिवाः।

महामन्त्रिणो-महामात्याः मन्त्रिमण्डलप्रधानाः हस्तिसाधनाध्यक्षा वा। गणका-ज्योतिषिकाः भाण्डागारिका वा दौवारिकाः प्रतिहारा राजद्वारिका वा अमात्याः- राज्याधिष्ठायकाः। चेटाः- पादमूलिका दासा वा पीठमर्दा-आस्थाने आसन्नासन्नसेवका वयस्या इत्यर्थः वेश्याचार्या वा नागरा-नगरवासिप्रकृतयोऽनधिकृतराजदेयविभागाः। निगमा-कारणिकाः- वणिजो वा श्रेष्ठिनः- श्रीदेवताध्यासितसौवर्णपट्टविभूषितोत्तमाङ्गाः। सेनापतयो नृपतिनिरूपितचतुरङ्गसैन्यनायकाः। सार्थवाहाः- सार्थनायकाः। दूता-अन्येषां राजादेशनिवेदकाः सन्धिपाला-राज्यसन्धिरक्षका। ततो द्वन्द्वस्तैरिह तृतीयाबहुवचनलोपो द्रष्टव्य'। 'सद्धिं'ति सार्द्धं सहेत्यर्थः। न केवल तत्सहितोऽपितु तैः 'समि ति। समन्तात्परिवृतः नरपतिर्मज्जनगृहात्प्रतिनिष्क्रामतीति योगः। किं भूतः? प्रियदर्शन'। क इव? धवलमहामेघनिर्गत इव यावच्छशी यावत्करणात् 'गहगणदिप्पमाणरिक्खतारागणाण मज्झे' इति द्रष्टव्यम्। तथा 'ससिव्व'त्ति। ततोऽन्यत्र सम्बन्धस्ततश्च ग्रहगणदीप्यमाननक्षत्रतारागणानां मध्ये इव वर्त्तमान इति नरपतिर्नराणां रक्षयिता। 'धूव'त्ति। धूपः प्रतीतः। पुष्पाणि शतपत्रप्रभृतीनि गन्धा-गन्धद्रव्याणि माल्यानि ग्रथितपुष्पाणि ततो द्वन्द्वस्तानि हस्तगतानि-हस्तगृहीतानि यस्य स धूपपुष्पगन्धमाल्यहस्तगतः। एवंविधः सन् मज्जनगृहात्प्रतिनिष्क्रामतीति प्राग् योजितम्। प्रतिनिष्क्रम्य च यत्रैवायुधशाला यत्रैव चक्ररत्नं तत्रैव 'पहारेत्थ'त्ति। -प्रधारितवान्-विकल्पितवान् गमनाय प्रावर्त्ततेतिभावः। 'तए णमि'त्यादि। ततस्तस्य राज्ञः सम्बन्धिनो बहव ईश्वर यावत्प्रभृतयः। यावत्करणात् तलवरादीना परिग्रह। ततश्चेश्वरप्रभृतयो जना 'अप्पेगइआ'त्ति। अप्येकका' पद्महस्तगता एवं उत्पलहस्तगता' यावत् शतसहस्रपत्रहस्तगता' यावत्करणात् कुमुदनलिनसौगन्धिकपुण्डरीकमहापुण्डरीकादिहस्तगता ग्राह्याः। एवंविधाः सन्तस्ते भरत राजानं पृष्ठतः पृष्ठतोऽनुगच्छन्ति। 'तए णमि त्यादि। ततस्तस्य भरतस्य राज्ञः सम्बन्धिन्यो बह्व्यः 'खुज्ज'त्यादि गाथायुग्मम्। तत्र कुब्जाः कुब्जिका' वक्रजङ्घा। चिलात्यश्चिलातदेशोत्पन्ना' वामनिका'- अत्यन्तह्रस्वदेहाः ह्रस्वोन्नतहृदयकोष्ठा वा। वटभिका मडहकोष्ठा वक्राधःकाया इत्यर्थः। ततो द्वन्द्वः। बर्बर्यो बर्बरामिधानाऽनार्यदेशोत्पन्नाः बकुसिकाश्च बकुशदेशोत्पन्नाः ततो द्वन्द्वः। एवं यवनिकाः पह्लविका' ईसिद्रणिकाः चारुगणिकाः लासिकाः लकुशिकाः दमिल्यः सिंहल्यः आरब्यः पुलिन्दिकाः पक्कण्यः बहलिकाः मुरुण्ड्यः शबर्यः पारिशिक्यश्चेति तत्तद्देशोत्पन्नत्वेन तत्तज्जातिविशेषोत्पन्नत्वेन वा वाच्याः। तासां मध्ये अप्येकका चन्दनकलशहस्तगताः चन्दनकलशा हस्ते गता यासां तास्तथा। एवमप्येकका भृङ्गारादर्शस्थालीपात्रीसुप्रतिष्ठवातकरकरत्नकरण्डकपुष्पचङ्गेरिकामाल्यवर्णचूर्णगन्धहस्तगता वर्णगन्धहस्तगताः। तत्र वातकरका-जलशून्यकरकाः। तथा वस्त्राभरणलोमहस्तचङ्गेरीपुष्पपटलकहस्तगता अप्येकका वाच्याः। अत्र लोमहस्ता-मयूरपिच्छपुञ्जनिका यावदप्येकका लोमहस्तगताः। पूर्वं लोमहस्तचङ्गेर्य' प्रतिप दिता। अत्र च केवललोमहस्ता इति न पौनरुक्त्यमिति। यावत्करणात् अप्येककाः पुष्पपटलकमाल्यपटलकचूर्णपटलकगन्धवस्त्राभरणसिद्धार्थकहस्तगता वाच्याः। पर पुष्पाणि-मुत्कलानि माल्यानि ग्रथितानीति विशेषो ज्ञेय इति। अप्येककाः सिंहासनहस्तगताः छत्रचामरहस्तगताः तैलसमुद्गकहस्तगताः एवं कोष्ठपत्रचोअकतगरैलाहरितालहिङ्गुलकमनःशिलाञ्जनसमुद्गकहस्तगता अपि वाच्या'। सर्वाण्यप्यमूनि तैलादीनि परमसुगन्धिगन्धोपेतानि वक्तव्यानि। अमुमेवार्थं प्रतिपादयितुकामः सङ्ग्रहणीगाथामाह- तेल्ले कोट्ठे' त्यादि। उक्तार्थैव। नवर तैलादीनां समुद्गका वक्तव्याः। तत्र स्वासवोऽञ्जनविशेषसुगन्धरमविशेषो वा सम्भाव्यते

'अप्पे तालिअंटे त्यादि । अप्येकका स्तालवृन्तहस्तगताः भरतं राजानं पृष्ठतः पृष्ठतोऽनुगच्छन्ति । 'तए णमि त्यादि । ततस्तदनन्तरं स भरतो राजा चक्ररत्नं प्रतिगच्छन् सर्व्वर्द्धया यत्रैवायुधगृहशाला तत्रैवोपागच्छतीति सम्बन्धः । तत्र सर्व्वर्द्धि' समस्ताभरणरूपा तया युक्त इति सर्व्वत्राध्याहार्यं, एवमग्रेतनपदेऽपि भाव्यम् । 'सव्वजुइए त्ति । युगमिश्रणे' इति वचनात् युतिः—सयोग' सा च परस्परोचितपदार्थानामिति गम्यम् । सव्वबलेन—सर्व्वसैन्येन सर्व्वसमुदयेन सर्व्वपरिवारसमुदायेन सर्व्वादरेण—सर्व्वप्रयत्नेन सर्व्वविभूपया—उचितनेपथ्यादिकरणेन सव्वविभूत्या—सर्व्वविच्छर्देन 'सव्ववत्थेत्यादि' । सर्व्वाणि वस्त्राणि प्रतीतानि पुष्पाणि—मुत्कलकुसुमानि गन्धा—गन्धवासा माल्यानि—पुष्पदामानि अलङ्कारा—आभरणानि ततो द्वन्द्वस्तैर्या विभूषा तयेत्यर्थ' । सव्वतुडिअ'त्ति । सर्व्वतूर्याणां यः शब्दस्तेन सङ्गतो यो निनादः प्रतिशब्दस्तेन । अथ पूर्वोक्तानां ऋद्ध्यादिपदार्थाना सर्व्वत्वे सत्यपि महत्त्वं न स्यादपीत्यत आह—महया इड्ढीए'त्ति । महद्ध्या युक्त इतिगम्य 'जाव'त्ति यावन्महता—बृहता वरतूर्याणां यमकसमकं युगपत्प्रवादित—ध्वनितं तेन महच्छब्दविशिष्टानि द्रष्टव्यानि । 'संखपणवे त्यादि । शङ्खः—कम्बुः पणवो—मृत्पटहः भेरी—ढक्का झल्लरी—चतुरङ्गुलनालिः करटिसदृशीवलयाकारा उभयतो नद्धेत्यन्ये खरमुही—काहलाहुडुक्कातिवलितुल्या मुरजो—मर्द्दल मृदंगो—मृन्मयः दुन्दुभिर्देववाद्यम् एषां निर्घोपो— ध्वनिर्नादितं च प्रतिशब्दस्तेन 'जेणेव'त्ति । यत्रैवायुधगृहशाला तत्रैवोपागच्छति उपागत्य च आलोकेऽर्थाच्चक्ररत्नस्य प्रणाम करोति कृत्वा च यत्रैव चक्ररत्न तत्रैवोपागच्छति उपागत्य च लोमहस्तकं—मयूरपिच्छपुञ्जनिकां परामृशति—हस्तेन गृह्णाति परामृश्य च चक्ररत्न प्रमार्ज्जयति प्रमार्ज्य दिव्यया उदकधारया 'अब्भुक्खेइ'त्ति अभ्युक्षति अभितः—सर्व्वत सिञ्चति अभ्युक्ष्य च सरसेन गोशीर्षचन्दनेनानुलिम्पति अनुलिम्प्य च 'अग्गेहिं' इत्यादि । अग्रैरपरिभुक्तैः वरैः— प्रधानैः गन्धैर्माल्यैश्चार्चयति । एतदेव व्यनक्ति 'पुप्फारुहणमि'त्यादि । पुष्पारोपणं 'मल्ले'त्यादि । माल्यारोपण गन्धारोपणं वर्णकारोपणं चूर्णारोपणं वस्त्रारोपणम् आभरणारोपणं करोति कृत्वा च चक्ररत्नस्य पुरत' अच्छैः— स्वच्छैः श्लक्ष्णैर्मसृणैः सितै—रजतमयैः अच्छो रसो येषां तेऽच्छरसाः प्रत्यासन्नवस्तुप्रतिबिम्बाधारभूता इवातिनिर्मला इतिभावः । ते च ते तन्दुलाश्च अच्छरसतन्दुलास्तैर्दिव्यतन्दुलैरित्यर्थः । द्वयोरपि पदयोः पूर्व्वपदस्य दीर्वान्तता प्राकृतत्वात् यथा वयरामया णेमा'इत्यादौ तश्च प्राष्टौ वीप्साया द्वित्वं । मङ्गलकानि मङ्गल्यवस्तूनि स्वस्तिकादीन्यालिखति । यद्वा—अष्टाविति सङ्ख्यावाचकः शब्दः अष्टमङ्गलकानी त्यखण्डसञ्ज्ञा अष्टानामपीति । अथाष्टानामपि नाम्नां व्यक्तिमाह— 'तजहे त्यादि । तद्यथा—स्वस्तिक इत्यादि व्यक्तम् प्राकृतत्वाद्विभक्तिलोपो द्रष्टव्यः । अष्टौ मङ्गलकान्यालिख्य कृत्वा 'उवयार'ति । उपचार चक्ररत्नयोग्यप्रतिपत्ति करोति । अथोक्तमेवार्थं किंते' इत्यादिना 'पणाम करेइ त्ति पर्यन्तेन सूत्रेण व्यक्तीकरोति । किं ते पाडले'त्यादि । 'किं ते' इति किं तदित्युपदर्शनार्थे । पाटलमल्लिकाचम्पकाशोकपुन्नागचूतमञ्जरीनवमालिकावकुलतिलककणवीरकुन्दकुब्जककोरिण्टकपत्रदमनकाना यथायोग वृक्षपुष्पपत्राणां ये वराः— प्रधानाः सुरभयः— सौरभ्यवन्तः सुगन्धाः—शोभनचूर्णास्तेषां गन्धो यस्मिन स तथा । कयग्गह'त्ति । मैथुनप्रथमसंरम्भे मुखचुम्बनाद्यर्थं युवत्याः पञ्चाङ्गुलिभि' केशेषु ग्रहणं कचग्रहस्तेन कचग्रहेण गृहीतः कचग्रहगृहीतः। तथा करतलाद्विमुक्ताः सन् प्रभ्रष्ट करतलप्रभ्रष्टविप्रमुक्ताः प्राकृतत्वादेवं पदव्यत्ययः । तत पूर्व्वपदेन कर्म्मधारयः तस्य । 'दसद्धवण्णस्स त्ति । दशार्द्धवर्णस्य—पञ्चवर्णस्य कुसुमनिकरस्य 'तत्थ'त्ति । तत्र चक्ररत्नपरितो भूप्रदेशे चित्र—

चित्रसंयुक्तं जानूत्सेधप्रमाणमात्रम् 'ओहिनिअरं'ति । अवधिना मर्यादया निकिरणं निकरो-विस्तारस्तं कृत्वा 'चंदप्पह'त्ति । चन्द्रप्रभवैडूर्यमयो विमलो दण्डो यस्य स तथा तं कनकमणिरत्नभक्त्या चित्रं यत्र स तथा त कालागुरुप्रवरकुन्दुरुष्कसत्केन धूपेनोत्तमगन्धेनानुविद्धा प्राकृतत्वात्पदव्यत्ययः । ता धूमवर्त्ति विनिर्मुञ्चन्तं वैडूर्यमय धूपकडुच्छकं प्रगृह्य प्रयतः सन् धूप दहति दग्ध्वा च सप्ताष्टपदानि प्रत्यवसर्प्पति-पश्चादवसर्प्पति पश्चादपसृत्य वामं जानु अञ्चति-उत्पाटयति यावत्प्रणाम करोति समीहितैहिकार्थसम्पादकत्वेन परमप्रीत्या नमस्करोति न पुनर्द्धर्म्मबुद्ध्येति । यावत्करणात् दक्षिणं जानु धरणीतले निवेशयति करतलपरिगृहीतं दशनखं शिरस्यावर्त्तं मस्तकेऽञ्जलिं कृत्वेति द्रष्टव्यम् । प्रणाम च कृत्वा आयुधशालातः प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च यत्र बाह्योपस्थानशाला आस्थानमण्डपो यत्रैव सिंहासनं तत्रोपागच्छति उपागत्य च सिंहासनवरगतः पूर्वाभिमुख' सन्निषीदतीति । तत्रोपविश्य किं करोतीत्याह 'अट्ठारसे'त्यादि । अष्टादशश्रेणिप्रश्रेणीः- अष्टादशसङ्ख्याकान् स्वदेशचिन्तानियुक्ततन्त्रपालाद्यधिकारिविशेषान् शब्दापयति-आह्वयति । यत्तु केचित्

सूआर पट्टइल्ला सुवण्णकारा य कुंभकारा य । गंधव्वा कासवगा मालाकारा य कच्छकरा ॥१॥

तंबोलिआ य एए नवप्पयारा य नारुआ भणिआ । अह णं णवप्पयारे कारुअवण्णे पवक्खामि ॥२॥

चम्मयर जंतपीलग गंधिअ छिंपग य कंसकाराई । सीवग गुआर भिल्ला धीवर वण्णा य अट्ठदस ॥३॥

इति गाथात्रयमालोक्य एत एवाष्टादश श्रेणिप्रश्रेणय इति विकल्पयन्ति । तन्न सम्भवति । यतो राज्याभिषेकावसरे देवादीनामिव श्रेणिप्रश्रेणीनामप्यभिषेकाधिकार वक्ष्यति । तत्र च कारुनारूणां प्रवेशस्याप्यसम्भव इति । शब्दापयित्वा चैवमवादीत् क्षिप्रमेव भो देवानुप्रिया ! अष्टाहिकां महामहिमां कुरुतेति सम्बन्ध । किंलक्षणामित्याह 'उस्सुक्कमि'त्यादि । उच्छुल्कां-उन्मुक्तशुल्कां तत्र शुल्क नाम विक्रेतव्यभाण्ड प्रति मण्डपिकायां राजदेयं द्रव्य तद्रहिता या ताम् । 'उक्कर'ति उत्करा-मुक्तगवादिकराम् उत्कृष्टांप्रधानां । यद्वा-कर्षणं कृष्टम् उन्मुक्तं कृष्टं यस्यां लभ्येऽप्याकर्षणनिषेधात् सा ता अदेया विक्रयनिषेधेन केनापि न कस्यापि न देयम् । अमेयां-क्रयविक्रयनिषेधात । 'अभड त्ति न विद्यते भटानां-राजाऽऽज्ञादायिनां भट्टपुत्रादिनृणा प्रवेशः कुटुम्बिगृहेषु यस्या साऽभटप्रवेशा ताम् । 'अदंडिम'ति दण्डेन निर्वृत्तं दण्डिम कुदण्डेन निर्वृत्तं कुदण्डिम -राजद्रव्य तन्नास्ति यस्या । तत्र दण्डोऽपराधानुसारेण राजग्राह्यं द्रव्य कुदण्डस्तु कारणिकानां प्रज्ञापराधान् महत्यपराधेऽल्प राजग्राह्यम् । अधरिमा-अविद्यमानं धरिम -धारणीय द्रव्य ऋणमुत्कलनात् यस्या सा तां गणिअ'त्ति । गणिकावरैर्विलासिनीप्रधानैर्नाटकीयैर्नाटकप्रतिबद्धैः पात्रैः कलिता या ताम् । अनेकतालाचरानुचरिता प्रेक्षाकारिविशेषसेविताम् । 'अणुद्धुअ'त्ति । अनूद्धुता आनुरूप्येण वादनार्थमुत्क्षिप्ता अनुद्धृता वा वादनार्थमेव वादकैरपरित्यक्ता मृदङ्गा-मर्दला यस्याम् । 'अमिलाए'त्ति । अम्लानानि माल्यदामानि पुष्पमाला यस्या सा ताम् । 'पमुइअ'त्ति । प्रमुदितो-हृष्ट' प्रक्रीडितश्च-क्रीडितुमारब्धः सह पुरजनेन जानपदो-जनपदवासिलोको यस्यां सा ताम् । 'विजय'त्ति । अतिशयेन विजयो विजयविजयः स प्रयोजन यस्या सा विजयवैजयिकी ताम् । चक्ररत्नस्याष्टाहिकाम्-अष्टदैवसिकां महामहिमां महान्त महिमानं कुरुत निष्पादयत कृत्वा च ममैतामाज्ञप्तिमाज्ञां प्रत्यर्प्पयत-कृतार्थीकृत्य निवेदयतेत्यर्थः । 'तए णमि'त्यादि । ततो णमिति प्राग्वत् । ताः प्रागुक्तस्वरूपाः अष्टादशश्रेणिप्रश्रेणयः भरतेन राज्ञा एवमुक्ताः सन्त्यः हृष्टा यावद्विनयेन प्रति-

श्रृण्वन्ति । यावच्छब्दात् 'करयल जाव एवं सामित्ति आणाए विणएणं वयणमि'त्यन्तं ग्राह्यम् । श्रुत्वा च भरतस्य राज्ञोऽन्तिकात् प्रतिनिष्क्रामन्ति प्रतिनिष्क्रम्य च 'उस्सुक्कमि'त्यादि विशेषणविशिष्टां यावदष्टाह्निकामहामहिमा कुर्व्वन्ति स्वय कारयन्ति चान्यैः चकारौ समुच्चयार्थौ कृत्वा कारयित्वा च यत्रैव भरतो राजा तत्रैव उपागच्छन्ति उपागत्य च पूर्व्वोक्तामाज्ञाम प्रत्यर्प्पयन्ति ।

अथ तदनन्तर किं जातम ? इत्याह

तए णं से दिव्वे चक्करयणे अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहवरसालाओ पडिणिक्खमति पडिनिक्खमित्ता अंतलिक्खपडिवण्णे जक्खसहस्ससंपरिवुडे दिव्वतुडिअसद्दसन्निनाएणं आपूरेंते चेव अंबरतलं विणीताए रायहाणीए मज्झंमज्झेणं णिग्गच्छति-णिग्गच्छित्ता गंगाए महाणईए दाहिणिल्लेण कूलेणं पुरत्थिमं दिसिं मागहतित्थाभिमुहे पयाए आविहोत्था । तए णं से भरहे राया तं दिव्वं चक्करयणं गंगाए महाणईए दाहिणिल्लेणं कूलेणं पुरत्थिमं दिसिं मागहतित्थाभिमुहं पयातं पासइ पासित्ता हट्ठतुट्ठ जाव हिअए कोडुंबिअपुरिसे सद्दावेइ सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! आभिसेक्कं हत्थिरयणं पडिकप्पेह हयगयरहपवरजोहकलिअं चाउरंगिणिं सेण्णं सण्णाहेह एअमाणत्तिअं पच्चप्पिणह । तए णं ते कोडुंबिअपुरिसा जाव पच्चप्पिणंति पच्चप्पिणित्ता तए णं से भरहे राया जेणेव मज्जणघरे तेणेव उवागच्छइ उवागच्छित्ता मज्जणघरं अणुपविसइ अणुपविसित्ता समुत्ताजालाकुलाभिरामे तहेव जाव धवलमहामेहनिग्गए इव जाव ससिव्व पिअदंसणे णरवई मज्जणघराओ पडिणिक्खमइ पडिणिक्खमित्ता हयगयरहपवरवाहणभडचडगरपहगरसंकुलाए सेणाए पहिअकित्ती जेणेव बाहिरिआ उवट्ठाणसाला जेणेव आभिसेक्के हत्थिरयणे तेणेव उवागच्छइ उवागच्छित्ता अंजणगिरिकडगसन्निभं गजपतिं णरवती दुरूढे । तए णं से भरहाहिवे नरिंदे हारोत्थयसुकयरइअवच्छे कुंडलउज्जोविआणणे मउडदित्तसिरए णरसीहे णरवती णरिंदे णरवसहे मणुअरायवसहकप्पे अब्भहिअरायतेअलच्छी दिप्पमाणे पसत्थमंगलसएहिं संथुव्वमाणे जयसद्दकयालोए हत्थिखंधवरगए सकोरिंटमल्लदामेणं छत्तेणं धरिज्जमाणेणं सेअवरचामराहिं उद्धुव्वमाणीहिं उद्धुव्वमाणीहिं जक्खसहस्ससंपरिवुडे वेसमणे चेव धणवई अमरवइसन्निभाए इड्ढीए पहिअकित्ती गंगाए महाणईए दाहिणिल्लेणं कूलेणं गामागरनगरखेडकव्वडदोणमुहपट्टणासमसंबाहसहस्सपरिमंडिअं थिमिअमेअणीअं वसुहं अभिजिणमाणे अभिजिणमाणे अग्गाइं वराइं रयणाइं पडिच्छमाणे पडिच्छमाणे तं दिव्वं चक्करयणं अणुगच्छमाणे अणुगच्छमाणे जोअणंतरिआहिं वसहीहिं वसमाणे वसमाणे जेणेव मागहे तित्थे तेणेव उवागच्छइ उवागच्छित्ता मागहतित्थस्स अदूरसामंते दुवालसजोअणमायामं नवजोअण विच्छिण्णं वरणगरसरिच्छं विजयखंधावारनिवेसं करेति करेत्ता वड्ढइरयणं सद्दावेइ सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! ममं आवासं पोसहसालं च करेहि करेत्ता मम आणत्तिअं पच्चप्पिणाहि ।

तए णं से वड्ढइरयणे भरहेणं रण्णा एवं वुत्ते समाणे हट्ठतुट्ठचित्तमाणंदिए पीतिमणे जाव अंजलिं कट्टु एवं सामी तहत्ति आणाए विणएणं वयणं पडिसुणेइ पडिसुणेत्ता भरहस्स रण्णो आवसहं पोसहसालं च करेइ करेत्ता एअमाणत्तिअं खिप्पामेव पच्चप्पिणाति। तए णं से भरहे राया आभिसेक्काओ हत्थिरयणाओ पच्चोरुहइ पच्चोरुहित्ता जेणेव पोसहसाला तेणेव उवागच्छति उवागच्छित्ता पोसहसालं अणुपविसइ अणुपविसित्ता पोसहसालं पमज्जति पमज्जित्ता दब्भसंथारगं संथरति संथरित्ता दब्भसंथारगं दुरूहति दुरूहित्ता मागहतित्थकुमारस्स देवस्स अट्ठमभत्तं पगिण्हति पगिण्हित्ता पोसहसालाए पोसहिए बंभयारी उम्मुक्कमणिसुवण्णे ववगयमालावण्णगविलेवणे णिक्खित्तसत्थमुसले दब्भसंथारोवगए एगे अबितीए अट्ठमभत्तं पडिजागरमाणे पडिजागरमाणे विहरति। तए णं से भरहे राया अट्ठमभत्तंसि परिणममाणंसि पोसहसालाओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव बाहिरिआ उवट्ठाणसाला तेणेव उवागच्छति उवागच्छित्ता कोडुंबिअपुरिसे सद्दावेइ सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ! हयगयरहपवरजोहकलिअं चाउरंगिणिं सेणं सन्नाहेह चाउग्घंटं आसरहं च पडिकप्पेहत्तिकट्टु मज्जणघरं अणुपविसति अणुपविसित्ता समुत्त तहेव जाव धवलमहामेहणिग्गए जाव मज्जणघराओ पडिणिक्खमइ पडिणिक्खमित्ता हयगयरहपवरहवाहण जाव सेणाए पहिअकित्ती जेणेव बाहिरिआ उवट्ठाणसाला जेणेव चाउग्घंटं आसरहं तेणेव उवागच्छति उवागच्छित्ता चाउग्घंटं आसरहं दुरूढे।

'तए णं से' इत्यादि। ततस्तद्दिव्यं चक्ररत्नम् अष्टाहिकायां महामहिमायां निर्वृत्तायां—जातायां सत्यामायुधशालातः प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च अन्तरिक्षप्रतिपन्नम्—आकाशस्थितमाकाशमार्गेणेत्यर्थः जक्खं'त्ति। यक्षसहस्रेण समन्तात्परिवृतं 'दिव्वतुडिअ'त्ति। दिव्यानां—प्रधानानां तूर्याणां यः शब्दस्तेन सङ्गतो यो निनादः— प्रतिरवः तेनापूरयदिव अम्बरतलमाकाशमण्डल विनीतायाः राजधान्यां मध्यंमध्येन निर्गच्छति निर्गत्य च 'गंगाए'त्ति। गङ्गाया महानद्याः 'दाहिणिल्ले'त्ति। दाक्षिणात्ये कूले—तटे णकारद्वयं वाक्यालङ्कारे पौरस्त्या दिशं प्रति मागधतीर्थाभिमुखं प्रयातं चाप्यभवत्। तत्र मागधनाम्नो यो देवस्तस्य तीर्थं चक्रवर्त्तिनः समुद्रावतरणमधिकृत्य स्थानं तस्याभिमुखं सन्मुखं यत्तत्तथा। 'तए णमि'त्यादि। ततः स भरतो राजा तद्दिव्यं चक्ररत्नं गङ्गाया महानद्याः दाक्षिणात्ये कूले पौरस्त्या दिशं प्रति मागधतीर्थाभिमुखं प्रयातं पश्यति दृष्ट्वा च हृष्टतुष्टो यावत् हर्षवशविसर्प्पत् हृदयः कौटुम्बिकपुरुषान् शब्दापयति शब्दापयित्वा च एवमवादीत्-क्षिप्रमेव भो देवानुप्रिया! 'आभिसेक'त्ति। आभिषेक्यम्—अभिषेकार्हं हस्तिरत्न प्रतिकल्पयत—सन्नद्धं कुरुत 'हयगय'त्ति। हयगजरथप्रवरयोधकलिताम्। अत एव चतुरङ्गिणीं—चत्वार्यङ्गानि सन्त्यस्या सा ता सेना 'सन्नाहेह'त्ति। सन्नह्यत—सन्नद्धबद्धां कुरुत सज्जीकुरुतेत्यर्थः एतामाज्ञप्तिकां प्रत्यर्प्पयत। ततस्ते कौटुम्बिकपुरुषा यावदाज्ञां प्रत्यर्प्पयन्ति। 'तए णमि'त्यादि। ततस्तदनन्तरं स भरतो राजा यत्रैव मज्जनगृह तत्रैवोपागच्छति उपागत्य च मज्जन-

गृहमनुप्रविशति अनुप्रविश्य च 'समुत्त'त्ति । समुक्ताजालाकुलाभिरामे इत्यादि 'तहेव'त्ति । तथैव यथा प्रागुक्तं कियद्दूरम् ? इत्याह-'जाव धवल'त्ति । यावद्धवलमहामेघनिर्गत इव यावच्छशिवत्प्रियदर्शनो नरपतिर्मज्जनगृहात्प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च 'हयगये'त्यादि । हयगजरथाः प्रतीताः प्रवरवाहनानि-प्रधानवेगसरादीनि । यद्वा हयगजरथा एव प्रवरवाहनानि तानि भटाश्च-योद्धारस्तेषां चटकराः-वृन्दानि तेषामपि 'पहकर'त्ति । समूहास्तैः समूहसमूहैरित्यर्थः सङ्कुला-व्याप्ता या सा तथा एवं विधया सेनया हेतुभूतया पहिअ'त्ति । प्रथिता-विस्तृता कीर्त्तिर्यस्य स तथा । केनापि पराजेतुमशक्याऽस्य सेनेत्येवंरूपेण विस्तृतकीर्त्तिभागित्यर्थः। 'जेणेव'त्ति । यत्रैव बाह्योपस्थानशाला यत्रैवाभिषेक्य हस्तिरत्नं तत्रैवोपागच्छति उपागत्य च 'अंजण'त्ति । अञ्जनगिरेः कटको-नितम्बो मेखलेतियावत्तत्सदृशं वर्ण्णेन उपवेशनोर्द्धपृष्ठेन च ञ्जनगिरिकटकसदृश गजपतिं-हस्तिरत्नं नरपतिः 'दुरूढ'त्ति । आरूढ इति । 'तए णमि त्यादि । ततः स भरताधिपो नरेन्द्रः 'हारोत्थये'त्यादि प्राग्वत् । 'मणुअरोय'त्ति । मनुजराजाना-द्वात्रिंशत्सहस्रनृपतीनां मध्ये वृषभकल्पो-वृषभसमानः श्रेष्ठतर इत्यर्थः । 'अब्भहिअ'त्ति । अभ्यधिकराजतेजोलक्ष्म्या दीप्यमानः पसत्थ'त्ति । प्रशस्तैः-श्रोतुः मनःप्रीतिकरैः 'जय जय नदे'त्यादिलक्षणैर्मङ्गलगर्तमङ्गलशतसूचकः शब्दैरिति गम्य संस्तूयमानो वन्दिजनैरित्यध्याहार्यं तथा । 'हत्थिखंध'त्ति । हस्तिस्कन्धवरगत सकोरिण्टमाल्यदाम्ना छत्रेण ध्रियमाणेन श्वेतवरचामरैरुद्धूयमानैः स्त्रीत्वं च प्राकृतत्वात् यक्षसहस्रपरिवृतः । अत एव वैश्रमण इव धनपति वैश्रमणनामा धनपतिरिवेत्यर्थः तस्यापि यक्षसहस्रपरिवृतत्वात् । 'अमरवइ'त्ति । अमरपतिरिन्द्रस्तस्य सन्निभा या ऋद्धिस्तया हेतुभूतया प्रथितकीर्त्तिः 'गंगाए'त्ति । गङ्गाया महानद्या दाक्षिणात्ये कूले 'गामागर'त्ति । ग्रामाः- ग्रसन्ति बुद्ध्यादीन् गुणान् शास्त्रोक्ताष्टादशकराणां गम्या वा आकरा-हिरण्याकरादयः नगराणि-न विद्यते करो येषु तानि नखादय इति निपातनात् नञोऽनादेशाभावः । खेटानि-पांसुप्राकारनिबद्धानि । कर्वटानि-क्षुल्लप्राकारवेष्टितानि । मडम्बानि-अर्द्धतृतीयगव्यूतान्तर्ग्रामरहितानि । द्रोणमुखानि बाहुल्येन जलनिर्गमप्रवेशानि । पट्टणानि नौभिरेव गम्यानि । आश्रमास्तापसस्थानानि । सम्बाधाः- यात्रासमागतप्रभूतजननिवेशास्तेषां सहस्रैः परिमण्डिता । 'थिमिअ'त्ति । स्तिमिता-निश्चला भयवर्जितेत्यर्थः । मेदिनी ग्रामनगरादीनामास्पदभूता भूर्यस्याः सा स्तिमितमेदिनीका तां । युद्धोद्यतं परानीक विहाय शेषजनानां मनागपि भयानुत्पादनेन तात्स्थ्यात्तद्व्यपदेश इति मेदिन्यपि भयवर्जितेत्युक्तम् । एवंविधां वसुधां-पृथिवीम् 'अभिजिण'त्ति । अभिजयन् अभिजयन् तत्तदधिपतीन्निर्जित्य स्वायत्तीकुर्वन्नित्यर्थः । 'अग्गाइ'ति । अग्र्याण्युत्कृष्टानि तान्यप्रधानान्यपि स्युरत आह- 'वराइ'ति । वराणि-प्रधानानि रत्नानि तत्तद्देशाधिपतिभिः प्राभृतीकृतानि प्रतीच्छन् प्रतीच्छन्-गृह्णन् गृह्णन् तद्दिव्य चक्ररत्नमनुगच्छन् अनुगच्छन्-तद्गतिसञ्ज्ञितमार्गेण गच्छन्निति भावः । 'जोअणतरि'त्ति । योजनान्तरिताभिर्वसतिभिर्वसन् वसन्-प्रतिदिनं योजनमेकमेव गतिविषयीकुर्वन् योजनं गत्वा तिष्ठन्नेवेत्यर्थः । 'जेणेवे'त्यादि । यत्रैव मागधतीर्थं तत्रैवोपागच्छति उपागत्य च मागधतीर्थस्य । 'अदूरसामते'त्ति । दूरं-विप्रकर्षः सामन्तं समीपं द्वयोरभावोऽदूरसामन्तं तत्र नातिदूरे नातिनिकटे इत्यर्थः । 'दुवालस'त्ति । द्वादश योजनायाम नव योजनविस्तीर्णं वरनगरसदृशं विजयस्कन्धावारनिवेशं तत्र विजयस्कन्धावारो नाम राजबिम्बसहितं स्वचक्रं परचक्रं वा भण्यते तदेव राजबिम्बरहितं सेनेत्युच्यते तस्य विजयसञ्ज्ञस्य स्कन्धावारस्य निवेशनमवस्थापनं करोति कृत्वा च वर्द्धकिरत्नं शब्दापयति शब्दापयित्वा च एवमवादीत्-

क्षिप्रमेव भो देवानुप्रिया ! ममावासं पौषधशालां च कुरु। अत्र पौषधो नाम देवताराधनाय तपोविशेषाभिग्रहो न पुनरेकादशव्रतरूपस्तदर्थं शाला-पौषधशाला यत्र स्थित्वाऽभिमते देवताराधनं क्रियते सा पौषधशालेहाभिमतेत्यर्थः। 'ममे'त्यादि 'पच्चप्पिणाती'ति पर्यन्त प्राग्वत्। 'तए णमि'त्यादि प्राग्वत्। ततः स भरतो राजा आभिषेक्यात् हस्तिरत्नात् प्रत्यवतरति प्रत्यवतीर्य च यत्रैव पौषधशाला तत्रैवोपागच्छति उपागत्य च पौषधशालामनुप्रविशति अनुप्रविश्य च तां प्रमार्जयति प्रमृज्य च दर्भसंस्तारक संस्तरति संस्तीर्य च दर्भसंस्तारकमारुहति आरुह्य च मागधतीर्थकुमारस्य देवस्य आराधनार्थमितिशेषः अष्टमभक्तमुपवासत्रयलक्षणं प्रगृह्णाति-करोतीत्यर्थः। प्रगृह्य च पौषधशालायां पौषधिकोऽभिग्रहविशेषवान् न पुन' 'करेमि भंते ! पोसहमि'त्याद्युच्चाररूपवान् तत्र तस्यानधिकारात्। ब्रह्मचारी उन्मुक्तमणिसुवर्णः-त्यक्तमणिसुवर्णमयभूषण इत्यर्थः। 'ववगय'त्ति। व्यपगतमालावर्णकविलेपनः। 'णिक्खित्त'त्ति। निक्षिप्तशस्त्रमुशलः दर्भसंस्तारकोपगतः एकः-कलत्राद्यभ्यन्तरपरिकररहितत्वात् अद्वितीयः-पदात्यादिबाह्यपरिकररहितत्वात् न च रागद्वेषादिरहितत्वादिति व्याख्येयम्। राज्यप्राप्तिनिमित्तमेव तदाराधनप्रवृत्तस्य प्रत्युत रागादिसद्भावात्। 'अट्ठम त्ति। अष्टमभक्त प्रतिजाग्रत्-पालयन् विहरत्यास्ते। 'तए णमि'त्यादि। तत स भरतो राजा अष्टमभक्ते परिणमति-परिपूर्णप्राये सति पौषधशालात प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च यत्रैवोपस्थानशाला तत्रैवोपागच्छति उपागत्य च कौटुम्बिकपुरुषान् शब्दापयति शब्दापयित्वा च एवमवादीत्-क्षिप्रमेव भो देवानुप्रियाः ! 'हयगये' त्यादि। हयगजरथप्रवरयोधकलितां चतुरङ्गिणीं सेनां सन्नद्धवद्धां कुरुत। 'चाउग्घंट'त्ति। चतस्रो घण्टा अवलम्बमानाश्चतसृषु दिक्षु यस्य स चतुर्घण्टस्तं आत्व चार्षत्वात् आसरहं'त्ति। अश्वप्रधानो रथोऽश्वरथस्तं चकारः समुच्चये। प्रतिकल्पयत-सज्जीकुरुतेति कृत्वा कौटुम्बिकपुरुषानित्यादिश्येत्यर्थः। मज्जनगृहमनुप्रविशति अनुप्रविश्य च 'समुत्ते'त्यादि यावत् 'चाउग्घंटं आसरहं दुरूढे'इति प्राग्वत् विज्ञेयम्।

तए णं से भरहे राया चाउग्घंटं आसरहं दुरूढे समाणे हयगयरहपवरजोहकलिआए सद्धिं संपरिवुडे महया भडचडगरपहकरवंदपरिक्खित्ते चक्करयणदेसिअमग्गे अणेगरायवरसहस्साणुजायमग्गे महता उक्किट्ठिसीहणायबोलकलकलरवेणं पक्खुभिअमहासमुद्दरवभूअंपिव करेमाणे करेमाणे पुरत्थिमदिसाभिमुहे मागहतित्थेण लवणसमुद्दं अवगाहति जाव से रहवरस्स कुप्परा उल्ला। तए णं से भरहे राया तुरगे णिगिण्हति णिगिण्हित्ता रहं ठावेइ ठावेत्ता धणुं परामुसइ तए णं तं अइरुग्गतबालचंदइंदधणुसन्निगासं वरमहिसदरितदप्पिअदढघणसिंगग्गरइअसारं उरगवरपवरगवलपवरपरहुअभमरकुलनीलिनिद्धधंतधोतपट्टं निउणोविअमिसिमिसितमणिरयणघंटिआजालपरिक्खित्तं तडितरुणकिरणतवणिज्जबद्धचिंधं दद्दरमलयगिरिसिहरकेसरचामरवालद्धचंदचिंधं कालहरितरत्तपीतसुक्किलबहुण्हारुणिसंपिणद्धजीवं चलजीवं जीविअंतकरणं धणू गहेऊणं से नरवती उसुं च वरवयरकोडिमं वयरसारतुंडं कंचणमणिकणगरयणधोइट्ठसुकयपुंखं अणेगमणिरयणविविहसुविरइअणामचित्तं वेसाहं ठाईऊण ठाणं आयतकण्णायतं च काऊण उसुमुदारं इमाइं वयणाइं तत्थ भणिअ से णरवती-

'हंदि सुणंतु भवंतो बाहिरओ खलु सरस्स जे देवा ।
णागासुरासुवण्णा तेसिं खु णमो पणिवयामि ॥१॥
हंदि सुणंतु भवंतो अब्भितरओ सरस्स जे देवा ।
णागासुरासुवण्णा सव्वेते मे विसयवासि ॥२॥ त्ति कट्टु उड्ढं निस्सिरति
परिकरनिगरितमज्झे वाउद्धुअ सोभमाणकोसिज्जो ।
चित्तेण सोभते धणुवरेण इंदुव्व पच्चक्खं ॥३॥
तं च चवलायमाणं पंचमिचंदोवमं महाचावं ।
छज्जति वामे हत्थे णरवतिणो तंमि विजयंमि ॥४॥

तए णं से सरे भरहेणं रण्णा निसट्ठे समाणे खिप्पामेव दुवालस जोअणाइं गंता मागहतित्थाहिवईस्स देवस्स भवणंसि निपतिते । तए णं से मागहतित्थाहिवई देवे भवणंसि सरं णिपतितं पासति पासित्ता आसुरुत्ते रुट्ठे चंडिक्किए कुविए मिसिमिसिमाणे तिवलिअं भिउडिं णिडाले साहरति साहरित्ता एवं वयासी—केस णं भो ! एस अपत्थिअपत्थए दुरंतपंतलक्खणधरे भिण्णपुण्णचाउद्दसे हिरिसिरिपरिवज्जिए जे णं ममं इमाए एआरूवाए दिव्वाए देविड्ढीए दिव्वाए देवजुतीए दिव्वेणं देवाणुभावेणं लद्धाए पत्ताए अभिसमन्नागयाए उप्पिं अप्पुस्सुए भवणंसि सरं निसिरतित्तिकट्टु सीहासणाओ अब्भुट्ठेति अब्भुट्ठेत्ता जेणेव से णामपहंके सरे तेणेव उवागच्छति उवागच्छित्ता णामपहंकं सरं गेण्हति गेण्हेत्ता णामकं अणुपवाएति णामकं अणुपवाएमाणस्स इमे एआरूवे अज्झत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था । उप्पण्णे खलु भो ! जंबुद्दीवे दीवे भारहे वासे भरहे णामं राया चाउरंतचक्कवट्टी तं जीअमेअं तीअपच्चुप्पण्णमणागयाणं मागहतित्थकुमाराणं देवाणं राईणं उवत्थाणीअं करेत्तए तं गच्छामि णं अहंपि भरहस्स रण्णो उवत्थाणीअं करेमित्तिकट्टु एवं संपेहेति संपेहेत्ता हारं मुकुटं कुंडलाणि अ कडगाणि अ तुडिआणि वत्थाणि अ आभरणाणि अ सरं च णामपहंकं मागधतित्थोदगं च गेण्हति गेण्हेत्ता ताए उक्किट्ठाए तुरिआए चवलाए जयणाए सीहाए सिग्घाए उद्धूआए दिव्वाए देवगईए वीतिवयमाणे वीतिवयमाणे जेणेव भरहे राया तेणेव उवागच्छति उवागच्छित्ता अंतलिक्खपडिवण्णे सखिंखिणीयाइं पंचवण्णाइं वत्थाइं पवरपरिहिए करयलपरिग्गहिअं दसणहं सिरं जाव अंजलिं कट्टु भरहं रायं जएणं विजएणं वद्धावेति वद्धावेत्ता एवं वयासी—अभिजिएणं देवाणुप्पिएहिं केवलकप्पे भारहे वासे पुरत्थिमेणं मागहतित्थमेराए तं अहण्णं देवाणुप्पिआणं विसयवासी अहण्णं देवाणुप्पिआणं आणत्तीकिंकरे अहण्णं देवाणुप्पिआणं पुरत्थिमिल्लेणं अंतपाले तं पडिच्छंतु णं देवाणुप्पिआ ! ममं इमेआरूवं पीतिदाणतिकट्टु हारं मउडं कुंडलाणि अ कडगाणि अ जाव मागहतित्थोदगं च उवणेति । तए णं से भरहे राया

मागहतित्थकुमारस्स इमेआरूवं पीतिदाणं पडिच्छति पडिच्छित्ता मागहतित्थकुमारं देवं सक्कारेति सम्माणेति सक्कारेत्ता सम्माणेत्ता पडिविसज्जेति । तए णं से भरहे राया रहं परावत्तेति परावत्तित्ता मागहतित्थेण लवणसमुद्दाओ पच्चुत्तरति पच्चुत्तरित्ता जेणेव बाहिरिआ उवट्ठाणसाला तेणेव उवागच्छति उवागच्छित्ता तुरगे निगिण्हाति निगिण्हेत्ता रहं ठवेति ठवेत्ता रहाओ पच्चोरुहति पच्चोरुहित्ता जेणेव मज्जणघरे तेणेव उवागच्छति उवागच्छित्ता मज्जणघरं अणुपविसति अणुपवेसित्ता जाव ससिव्व पिअदंसणे णरवती मज्जणघराओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव भोअणमंडवे तेणेव उवागच्छति उवागच्छित्ता भोअणमंडवंसि सीहासणवरगए अट्ठमभत्तं पारेति पारेत्ता भोअणमंडवाओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव सीहासणे तेणेव उवागच्छति उवागच्छित्ता जाव सीहासणवरगए पुरत्थाभिमुहे णिसीअति णिसीइत्ता अट्ठारस सेणिप्पसेणीओ सद्दावेत्ता एवं वयासी खिप्पामेव भो देवाणुप्पिआ ! उस्सुक्कं उक्करं जाव मागहतित्थकुमारस्स देवस्स अट्ठाहिअं महामहिमं करेह अट्ठाहिआओ महामहिमाओ करेत्ता मम एअमाणत्तिअं पच्चप्पिणह । तए णं ताओ अट्ठारस सेणिप्पसेणीओ भरहेणं रण्णा एवं वुत्ता समाणा हट्ठतुट्ठा जाव करेंति करेत्ता एअमाणत्तिअं पच्चप्पिणंति । तए णं से दिव्वे चक्करयणे वयरामयतुंबे लोहिअक्खामयारए जंबुणदणेमीए णाणामणिखुरप्पवालिपरिगए मणिमुत्ताजालभूसिए सणंदिघोसे सखिंखिणीए दिव्वे तरुणरविमंडलनिभे णाणामणिरयणघंटिआजालपरिक्खित्ते सव्वोउअसुरभिकुसुमआसत्तमल्लदामे अंतलिक्खपडिवण्णे जक्खसहस्ससंपरिवुडे दिव्वतुडिअसद्दसन्निनाएणं पूरेंते चेव अंबरतलं णामेण य सुदंसणे णरवतिस्स पढमे चक्करयणे मागहतित्थकुमारस्स देवस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहघरसालाओ पडिणिक्खमति पडिणिक्खमित्ता दक्खिणपच्चत्थिमं दिसिं वरदामतित्थाभिमुहे पयाए आवि होत्था ॥

'तए णमि'त्यादि । ततः स भरतो राजा चतुर्घण्टमश्वरथमारूढः सन् हयगजरथप्रवरयोधकलितयाऽर्थात् सेनया सार्द्धं सम्परिवृत । महता भटचटकरपहकरवृन्देन भटाना चटकरपहकराः—समूहसमूहास्तेषा वृन्द तेन परिक्षिप्तः— परि समन्ताद्वेष्टितः । 'चक्करयण'त्ति । चक्ररत्नेन देशितो मार्गो यस्य स तथा । 'अणेगराय'त्ति । अनेकानि राजवरसहस्राणि तेषामनुजातः—पृष्ठतो गमनेन मार्गो यस्मात् स तथा । 'महता उक्किट्ठि'त्ति । उत्कृष्टिरत्यन्तानन्दसमुद्भूतशब्दविशेषः । सिंहनादः प्रतीतः । बोलोऽव्यक्तध्वनिः भिन्नभिन्नप्रयोजनप्रवृत्तानां युगपद्वचनमित्यर्थः । कलकलस्तु बहुजनसमुद्भवो व्यक्तवर्णः । एककार्यप्रवृत्ताना युगपदेकार्थवाचका एकध्वनय इत्यर्थः । तत उत्कृष्ट्यादिरूपो रवः— शब्दस्तेन पक्खुभिअ'त्ति । प्रक्षुभितमहासमुद्ररवभूतामिव सेनामिति गम्यं कुर्वन् पूर्वदिगभिमुखः मागधतीर्थेन—मागधनाम्ना जलावतरणमार्गेण लवणसमुद्रमवगाहति । कियदवगाहति ? इत्याह— 'जाव से रहस्से'त्यादि । यावत् से तस्य रथवरस्य कूर्परौ—रथावयवविशेषावार्द्रौस्याता—चक्रनाभेरधोजलमवगाहतीत्यर्थः । यदुक्तं—

'आततज्यधनुःपाणिः सगरः सागर ततः । रथचक्रनाभिदघ्न जल यावदवगाहत ॥१॥ इतिश्री-

अजितनाथचरित्रे । 'तए णमि'त्यादि । ततस्तदनन्तरं स भरतो राजा तुरगानश्वान्, यद्यपि तुरगाविति द्वित्वेन व्याख्यानं युक्तं तथाऽप्यग्रे वरदामतीर्थसाधनावसरे चउहिं तिपदेन चतुःसङ्ख्यायाः भणिष्यमाणत्वादिहापि चत्वारोऽवसातव्याः । निगृह्णाति—गतिनिरोधेन रक्षति निगृह्य च रथं स्थापयति रथं स्थापयित्वा धनुः परामृशति-स्पृशतीत्यर्थः । अथ भरतः किं कृतवान् ? इत्याह—तए णं तमि'त्यादि । ततः परामर्शानन्तरं तद्वक्ष्यमाणविशेषणविशिष्टं धनुरिपुं च गृहीत्वा वैशाखस्थानं च स्थित्वा आयतकर्णायतं च इपु कृत्वा हृदि शृण्वन्तु भो ! इत्यादीनि वचनानि भणित्वा इपु निःसृजतीति सम्बन्धः । तत्र धनुषो वर्णकमाह—धनुः किं लक्षणम् ? इत्याह 'अइरुग्गते त्यादि । अचिरोद्गतबालचन्द्रश्च-तत्कालोदितशुक्लद्वितीयानिशाकरः । यत्त्वग्रे 'पचमि चंदोवममि'त्ति वक्ष्यते तत् बाणमोचनावसरेऽतिवक्रताज्ञापनार्थ इन्द्रधनुश्च प्रतीतं तयोः सन्निकाशं वक्रतया तत्तुल्यं तदचिरोद्गतबालचन्द्रेन्द्रधनुःसन्निकाशं 'वरमहिस त्ति । वरमहिषः-प्रधानसैरभेयो दप्त.— स्वयं दर्पाध्मातो दर्पितश्च तथाविधपरिपालनपोषणादिना विशेषतो दर्पं नीतः । प्राकृतत्वाद्विशेषणयोः परनिपातः ततश्च दप्तदर्पितवरमहिष इति सम्पन्न तस्य दढ—निविडपुद्गलनिष्पन्नं घनं-निश्छिद्रं यत् शृङ्गं-विषाणं तस्याप्यग्रं-कोटिविभागोऽतिशयेनोक्तलक्षणं भवति तेन रचितमिव यत्सारं-प्रधानम् । लोकेऽपि तथाविधमहिषशृङ्गखण्डनिष्पन्नं धनुः प्रबलबलवतापि नामयितुमशक्यमतस्तदुपमा । एवमग्रेऽप्युपमानिदानं परिभावनीयम् । तद्वरमहिषदप्तदर्पितदढघनशृङ्गाग्ररचितसारम् । 'उरग'त्ति । उरगवरश्च—प्रधानभुजग. प्रवरगवलं च प्रधानमहिषशृङ्गं प्रवरपरभृतश्च—प्रधानकोकिलः भ्रमरकुलं च-षट्पदवृन्दं नीली च प्रतीता तद्वत्स्निग्धं कृष्णच्छवियुक्तं ध्मातमिव ध्मातं च तेजसा ज्वलन् धौतं च जलेन प्रक्षालितमिव इदृशं पृष्ठं प्रत्यञ्चावर्ज्जं सकलमपि यस्य तत् उरगवरप्रवरगवलप्रवरपरभृतभ्रमरकुलनीलीस्निग्धध्मातधौतपृष्ठं । 'निउणोविअ'त्ति । निपुणेन शिल्पिना 'ओविअ'त्ति । ओपिता—परिकर्मिता उज्ज्वालिता 'मिसिमिसिंत'त्ति । मिसिमिसायमाना-चिकचिकायमाना या मणिरत्नघण्टिकास्तासां जालेन-समूहेन परिक्षिप्तं यत्तन्निपुणोपितमिसिमिसायमानमणिरत्नघण्टिकापरिक्षिप्तं 'तडितरुण'त्ति । तडिच्च-विद्युत् तरुणतरणिश्च—नवोदितसूर्यस्तयोरिव किरणा यस्यैवविधं यत्तपनीयं-रक्तसुवर्णं तत्सम्बन्धानि बद्धानि चिह्नानि-चक्रवर्तीसम्बन्धित्वसंसूचकानि लाञ्छनानि यस्मिन् तत्तडित्तरुणतरणिकिरणतपनीयबद्धचिह्नं 'दद्दर'त्ति । दर्दरश्च मलयश्च दर्दरमलयौ तावेव गिरी द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इतिवचनात् दर्दरगिरीर्मलयागिरिश्च तयोः शिखराणि - कूटानि तत्सम्बन्धिनो ये केसरचामरवाला -सिंहस्कन्धचमरपुच्छकेशा अर्द्धचन्द्राश्च तल्लक्षणानि चिह्नानि यत्र तत्तथा । यद्वा तत्सम्बन्धी केसरस्तत्र सञ्जातं सरोजसम्भूतं किञ्जल्कं तच्चातिपवित्रमतिसुरभि विशिष्टवर्णाढ्यं च स्थानकविशेषात्स्यादतो दर्दरादिसम्बन्धित्वप्रतिपादनं तथा च दर्दरमलयगिरि शिखरकेसरश्च चामराणि च प्रतीतानि व्यालश्च सर्पः अर्द्धचन्द्रश्चैतानि चत्वारि चिह्नानि यत्र तत् दर्दरमलयगिरिशिखरकेसरचामरव्यालार्द्धचन्द्रचिह्नं । तत्र केसरो धनुःपूजार्थं चामराणि सुभटस्याऽभङ्गत्वसूचकानि सद्भूतान्येवाद्यापि कुन्तग्राहिणां कुन्तेषु तथादृश्यमानत्वात् व्यालार्द्धचन्द्रौ त्वालिखितचित्ररूपाविति । 'कालहरित'त्ति । कृष्णनीलरक्तपीतशुक्लवर्णाः बह्व्यो-बहुप्रकारा 'ण्हारुणि'त्ति । स्नायवः शरीरान्तर्बद्धास्ताभिः सम्पिनद्धा सम्यक् प्रकारेण निबद्धा जीवा—प्रत्यञ्चा यस्य तत् कालहरितरक्तपीतशुक्लबहुस्नायुःसम्पिनद्धजीवं 'चल'त्ति । चलाचला जीवा यस्य तच्चलजीवं 'जीवितंत'त्ति । जीवितमर्यान्-छत्रूणामायुस्तस्यान्तो—

विनाशस्तत्करणमसाधारणकारणं यत्तज्जीवितान्तकरणम् । एवंविधेन धनुषा विमुक्तं शरोऽवश्यं शत्रून् विनाशयतीत्यर्थः । एवं विशेषणविशिष्टं धनुर्गृहीत्वा स भरतो नरपति 'उसुं च'त्ति । च-पुनरिषुं-बाणं बाणमन्तरेण धनुषो निष्फलत्वात् गृहीत्वेति प्रागुक्तमिहापि सम्बन्धनीयम् । अथ धनुरिव बाणमपि विशिनष्टि-'वर त्ति । वर-प्रधान यद्वज्रं तत्सम्बन्धिन्यौ कोटी-अग्रभागौ पुङ्खमल्लयास्पदभूते यस्य स वरवज्रकोटिमान् तं प्राकृतत्वाद्वरवयरकोडिमतिरूपसिद्धि । 'वयर'त्ति । वज्रवद्वज्रसम्बन्धि वा सारं-प्रधानं तुण्ड-मुखं भल्लीरूप यस्य स वज्रसारतुण्डः । 'कंचणे'त्यादि । काञ्चनसंयुक्ता मणयः काञ्चनमणयः कनकसंयुक्तानि रत्नानि कनकरत्नानि क्वचिद्देशे कनकनिबद्धा मणयः क्वचिच्च प्रदेशे कनकनिबद्धानि रत्नानि तैरर्थात्तद्गतप्रभाजलेन धौत इव धौतः पवित्रो अत एवेष्टो-वल्लभः सुकृतो निपुणशिल्पिना निष्पादितः पुङ्खः प्रत्यञ्चारोपणीयावयवविशेषः प्रतीतो यस्य स काञ्चनमणिकनकरत्नधौतेष्टसुकृतपुङ्खः 'अणेग'त्ति । अनेकमणिरत्नैर्विविधं विचित्रं सुविरचितं नामचित्रं निजनामवर्णपङ्क्तिरूपं चित्रं यत्र सोऽनेकमणिरत्नविविधसुविरचितनामचिह्नः तं 'वेसाहं ति । वैशाखं स्थान स्थित्वा तत्र वैशाखं-प्रसारित पादं स्थानं चावस्थानं तदाकारेण स्थित्वा आयतः-सामान्येनाकृष्ट' स एव कर्णायतः-आकर्णमाकृष्टः आयतकर्णायत त तादृश कृत्वा तमिषुमुदार प्रागुक्तलक्षणोपेतत्वात् न चैवं कायिकक्रियामात्र कृत्वा किन्तु वचनप्रयोग मपीत्याह- इमाइ वयणाइ ति । इमानि वक्ष्यमाणानि वचनानि 'भणिअ'त्ति । अभाणीत । 'से नरवई'त्ति । एवकारो गम्य. स एव नरपतिः भरत एवेत्यर्थः । अथ वचनोल्लेखमाह-'हंदी'त्यादिगाथा । हन्दीति सम्बोधने । नागादयो हि भवनपतिदेवविशेषाः ते च बाणस्याधिष्ठायकाः । यदुक्तम्-

अथोर्वीशो वह्निर्मध्ये मुखे पुंखे च सर्वदा । नागासुरसुपर्णादि-देवताभिरधिष्ठितम् ॥१॥

आज्ञाकरं दूतमिव शिक्षाकरं भयानकम् । अभिमागधतीर्थेशं विससर्ज शिलीमुखम् ॥२॥

इति । हे नागाऽसुरा ! हे सुपर्णाः ! भवन्तः शृण्वन्तु । किं तदित्याह्- बाहिरओ'त्ति । ये देवाः शरस्य बाह्यतो बाह्या -बाणप्रयोगागोचराः अनाज्ञेया इत्यर्थः खलुरलङ्कारे 'तेसिं'ति । प्रणिपतामि तेभ्यो नमः ते हि नमस्कारार्हा न पुनराज्ञेयाः । अत खुर्निश्चित तानितिगम्यं ततो बाणाधिष्ठायकैर्मंत्रद्भिर्बाणनयनमनाज्ञेयानां पुरतो न विधेयमिति भरतेन ज्ञापितम् । न च बाणाधिष्ठायका अपि देवाः कथं नीत्यतिक्रमणं कुर्वन्ति ? इति शङ्कनीय सगरजह्नुकुमारप्रेरितदण्डरत्नोधिष्ठायकदेवानां नीत्यतिक्रमणस्यागमे प्रतीतत्वात् । अत एव नागकुमारेण कुपितेन निजकोप' फलवानपि विहितः । पुनरप्याह्- 'हंदी'त्यादि । व्याख्या च प्राग्वत् । नवरं शरस्याभ्यन्तरतोऽभ्यन्तराः शरप्रयोगगोचरा आज्ञेया इत्यर्थः । तत्र हेतुमाह- 'सव्वे मे'त्ति । यतस्ते सर्वे मे-मम विषयवासिनः- निजाज्ञाविषयक्षेत्रनिवासिनः तेषां पुरतो बाणनयनं विधेयमिति तात्पर्यम् । 'इति कट्टु'त्ति । इतिकृत्वा प्रागुक्तप्रकारेण भणित्वा 'उसुं'ति । इषुं-बाणं निसृजति-मुञ्चति । अथ बाणमोचनावसरे भरतः कीदृशो भातीति दर्शयितुं गाथायुग्ममाह- 'परिकरे'त्यादि । परिकरशब्देन प्रकरणवशात् युद्धोचितकटिबन्धविशेषः स च लोकोक्त्या पलवदिरिति स निकरित.- सज्जितः 'मज्झे'त्ति । मध्यभागे-कटिप्रदेशे येन स परिकरनिकरितमध्यः 'वाउद्धूअ'त्ति । वातेन उद्धूतं कम्पितं शोभमानं कौशेयं-वस्त्रं यस्य स वातोद्धूतशोभमानकौशेयः । एवंविधो नरपतिश्चित्रेणानेकचित्रसंयुक्तेन धनुर्वरेणप्रधानधनुषा शोभते प्रत्यक्षं-साक्षादिन्द्रवत् न केवलं नरपतिरेव शोभते अपि तु धनुरपीत्याह- 'तं च

चवलं'त्ति तत् प्रागुक्तवर्णकोपेतं चकारो वर्णनान्तरद्योतकः चपलायमानं-चञ्चलतामाचरन् पञ्चमीचन्द्रोपमं वक्रतया पञ्चमीचन्द्रसमानं नरपतेर्भरतस्य वामे हस्ते महाचापं महाधनुः 'छज्जति'त्ति। राजते 'राजेरग्घ-छज्जसहरीहरेहा' इति (सिद्ध० ८।४।१००) प्राकृतसूत्रेण रूपसिद्धिः। कस्मिन् ? 'तम्मि'त्ति। तस्मिन विजये मागधतीर्थाधीशस्य देवस्य निजाज्ञावशवर्त्तिताकरणावसरे। यद्वा कारणे कार्योपचारात् विजयहेतौ बाणमोचनावसरे ॥४॥ इति गाथायुग्मार्थः। अथ स बाणः कियद् दूरं गत्वा क्व पतित ? इति दर्शयति- तए णं से' इत्यादि। ततः स शरो भरतेन राज्ञा निसृष्टो-मुक्तः सन् शीघ्रमेव द्वादशयोजनानि गत्वा मागधतीर्थाधिपतेर्देवस्य भवने निपतितः। अथ शरं दृष्ट्वा मागधतीर्थेशः कीदृशः सम्पन्न ? इत्याह-'तते णमि'त्यादि। ततः स मागधतीर्थाधिपतिर्देवः स्वभवने शर निपतित पश्यति दृष्ट्वा च 'आसुरुत्ते' इत्यादि। आशु-शीघ्र रुष्टः 'रुषरुषलुप च विमोहने' इति रुष्यति स्मेति रुष्ट. कोपोदयाद्विमूढः स्फुरितकोपलिङ्गो वा रुष्ट-उदितक्रोधः चाण्डिक्यितः- सञ्जातचाण्डिक्यः प्रकटितरौद्ररूप इत्यर्थः। कुपितः प्रवृद्धकोपाद्य. 'मिसिमिसेमाणे' इति। मिसिमिसायमानः क्रोधाग्निना दीप्यमान इव। एकार्थिका वा एते शब्दाः कोपप्रकर्षप्रतिपादनार्थमुक्ताः। त्रिवलीकां-वलित्रयोपेता भृकुटि नेत्रविकृतिरूपां ललाटे संहरति-विदधाति सहृत्य च एवं वक्ष्यमाणमवादीत् उक्तवान् किं तद् ? इत्याह-'के स णं भो ! एसे'त्यादि। क. स-एव णमित्यलङ्कारे भो ! इत्यामन्त्रणे अप्रार्थित प्रार्थयते इत्यप्रार्थितप्रार्थकः दुरन्तानि-दुष्टावसानानि अत एव प्रान्तान्यमनोज्ञानि लक्षणानि धरतीति दुरन्तप्रान्तलक्षणधरः 'भिण्णपुण्ण'त्ति। पूर्णा चासौ चतुर्दशी च पूर्णचतुर्दशी भिन्ना-पृथग्भूता पूर्णचतुर्दशी यस्यास्तिथे. सा भिन्नपूर्णचतुर्दशी तस्यां जातो यः स भिन्नपूर्णचतुर्दशो जन्माश्रित्यात्यन्तभाग्यवतामेव जन्मनि पूर्णा चतुर्दशी भवति अयं ततोऽन्यस्यामेव जात इत्यर्थः। ग्रन्थान्तरे तु- हीणं पुण्णचाउद्दसे'त्ति पाठ' तत्राप्ययमेवार्थः। 'हिरिसिरी' त्यादि। ह्रीश्रोपरिवर्जितो-लज्जालक्ष्मीभ्या परित्यक्तो यः स तथा। अथैव तिरस्कारनिमित्तमात्मन' सामर्थ्यमुद्भावयन्नाह- 'जेणं ममं'ति येन कारणेन ममास्या-अध्यक्षसिद्धाया 'एआरूवाए'त्ति। एतद्रूपाया-एतदेवं स्वरूप यस्याः न कालान्तरे रूपान्तरभाग् सा तस्या दिव्यायाः-स्वर्गसम्भवायाः प्रधाना या 'दिव्वाए देवड्ढीए त्ति। देवाना ऋद्धि देवर्द्धि- विमानरत्नादिसम्पद्देवर्द्धि तस्याः। एव सर्व्वत्र। नवरं युक्तिरिष्टपरिवारादिसयोगलक्षणा अनुभागोऽचिन्त्यवैक्रियकरणादिशक्तिरूपस्तेन लब्धा जन्मान्तरोपार्जिता तस्याः 'पत्त'त्ति। इदानीं प्राप्ता तस्या अभिसमन्वागताया -भोग्यता गतायाः 'उप्पिं'ति। उपरि 'अप्पुस्सुए त्ति। आत्मन्युत्सुक आत्मोत्सुकः मदीयां सम्पदमवगणय्यात्मीयसम्पदैवोत्कर्षवानित्यर्थः। भवनेऽर्थान्मदीये शर-बाण निसृजतीति कृत्वा सिंहासनादुत्तिष्ठति उत्थाय 'जेणेव'त्ति। यत्रैव 'स णाम'त्ति। स प्राग् निसृष्टः नामप्रथाङ्को नाम्नैव प्रथा-ख्यातिः सैवाङ्कश्चिह्न यस्य स तथा प्रत्युत्पन्नचक्रवर्त्तिनामाङ्कित इत्यर्थः। एवंविधः शरो-बाणः 'तेणेव'त्ति। तत्रैवोपागच्छति क्वचित 'णामाहए'त्ति पाठः तत्रापि नामप्रस्तुतचक्रवर्त्यभिधान तत्प्रति आ-मर्यादया हतो 'हनङ्क हिंसागत्यो'रिति वचनात गतः-प्राप्तो नामाहतो नामाङ्कित इत्यर्थः। उपागत्य च तं तादृश शर गृह्णाति गृहीत्वा च नामेव नामकमनुप्रवाचयति परिपाट्या वर्णानुक्रमेण प्रकर्षेण किमिदमदृष्टपूर्वमिति चकितहृदयो वाचयति नामकं चानुप्रवाचयतः सतः अयमेतद्रूप आध्यात्मिकोऽध्यात्मविषयः चिन्तितः- स्मरणरूपः प्रार्थितोऽभिलषितः मनोगतो-मनस्येव वर्त्तमानो न परस्मै प्रकाशितः सङ्कल्पो-विकल्पः समुत्पन्नः- प्रादुर्भूतः। अथ विकल्पस्वरूपमाह-'उप्पण्णे खलु भो !'

इत्यादि । उत्पन्नः खलुरवधारणे । उत्पन्न एव । भो ! इत्यामन्त्रणे । जम्बूद्वीपे भारते वर्षे भरतो नाम राजा चातुरन्तचक्रवर्त्ती तज्जीतमेतत् 'तीअपडुप्पण्ण'त्ति । अतीतवर्त्तमानाऽनागताना मागधतीर्थकुमाराणा देवाना 'राईण'ति । राज्ञामधिकारात् चक्रवर्त्तिवासुदेवानाम् । उपस्थानिकं–प्राभृत ढौकनिकमित्यर्थ । कर्त्तुं तस्मात् गच्छाम्यह भरतस्य राज्ञ उपस्थानिकं करोमीति कृत्वा–इति हेतोः 'एव'ति । एव वक्ष्यमाण 'सपेहेति'त्ति । सम्प्रेक्षते–पर्यालोचयति पर्यालोच्य च हारमष्टादशसरिकं, मुकुट-किरीट, कुण्डलानि–कर्णाऽऽभरणानि, कटकानि–बाह्वाभरणानि, त्रुटिताश्च-बाहुरक्षकाः, वस्त्राणि, आभरणानि चोक्तेभ्योऽन्यानि प्रतीतानि अर्द्धहारादीनि, शर च नामप्रथाङ्कं, मागधतीर्थोदक च गृह्णाति । चकाराः, सर्वत्र समुच्चये । गृहीत्वा 'ताए उक्किट्ठाए'इत्यादि प्राग्वत् । 'अतलिक्ख'त्ति । अन्तरिक्षप्रतिपन्न.–आकाशस्थित, सह किङ्किणीभि क्षुद्रघण्टिकाभिर्वर्त्तते यानि तानि सङ्किकिणीकानि, वस्त्राणि प्रवरेण विधिना प्रवर यथा स्यात्तथा परिहित प्रवरपरिहितः । 'करयले'त्यादि । व्याख्या च प्राग्वत् । भरत राजान जयेन विजयेन च वर्द्धापयति । जयो नाम परैरनभिभूयमानतेत्यादि प्राग्वत् । वर्द्धापयित्वा चैवमवादीत्–एव वक्ष्यमाणमुक्तवानित्यर्थ । किं तदित्याह–'अभिजिए ण'ति । अभिजित देवानुप्रियै केवलकल्प भारत वर्षं पूर्वस्यां दिशि मागधतीर्थमर्यादया–मागधतीर्थावसानमित्यर्थ । तदह मागधतीर्थाधिपतिर्देवानुप्रियाणा युष्माक विषयवासी-देशवासीत्यर्थ । अत एवाह–एव देवानुप्रियाणाम् आज्ञप्तिकिङ्कर.- आज्ञप्तो किं करोमीत्याज्ञप्तिकिङ्कर. आहूतः क्षणमात्रमपि स्थातुमशक्त. स्वामिप्रयोजनातिरिक्तप्रयोजन स्वल्पमपि कर्त्तुमसमर्थः । अह देवानुप्रियाणा 'पुरत्थिमिल्ले'त्ति । पौरस्त्य.–पूर्व्वदिग्वर्त्ती अन्तपालः अन्तं–त्वदीयदेशस्येतिगम्य पालयामीति अन्तपालः पूर्व्वदिग्वर्त्तिना लोकाना देवादिकृतमुपद्रवमह निवारयिष्यामि । अन्योऽपि सेवक. स्वस्वामिवस्तुपरिपालक. स्यात्तथाऽहमपीति भाव । 'त पडिच्छतु णमि'त्यादि । यस्मादन्तपालः सेवक. तत्तस्मात् कारणात् प्रतीच्छन्तु देवानुप्रिया ! ममेदमेतादृग्रूपं प्रीतिदानमिति कृत्वा 'हारमि'त्यादि प्राग्वत् । उपनयति–पुरतो ढौकयति । 'तए णमि'त्यादि । तत. स भरतो राजा मागधतीर्थकुमारस्य इदमेतादृग्रूपं प्रीतिदान प्रतीच्छति, प्रतीच्छ्य च सत्करोति तदुचितवस्त्रदानादिना, सन्मानयति यथोचितवचनप्रतिपत्त्यादिना सत्कारयित्वा सन्मानयित्वा च प्रतिविसर्ज्जयति । 'तए णमि'त्यादि । तत स भरतो राजा रथ परावर्त्तयति-पश्चाद्वालयति, परावर्त्य मागधतीर्थेन लवणसमुद्रात्प्रत्युत्तरति, प्रत्युत्तीर्य च 'जेणेव'त्ति । यत्रैव विजयस्कन्धावारनिवेशो यत्रैव बाह्योपस्थानशाला तत्रैवोपागच्छति, उपागत्य च तुरगान्निगृह्णाति, निगृह्य च रथ स्थापयति, स्थापयित्वा च रथात् प्रत्यवरोहति, अवरुह्य च यत्रैव मज्जनगृह तत्रैवोपागच्छति, उपागत्य च मज्जनगृहमनुप्रविशति, अनुप्रविश्य च यावच्छशीव प्रियदर्शनो नरपतिर्मज्जनगृहात्प्रतिनिष्क्रामति, प्रतिनिष्क्रम्य च यत्रैव भोजनमण्डपस्तत्रैवोपागच्छति, उपागत्य च भोजनमण्डपे सुखासनवरगत अष्टमभक्त पारयति–भुङ्क्ते इत्यर्थ । भुक्त्वा च भोजनमण्डपात् प्रतिनिष्क्रामति, प्रतिनिष्क्रम्य च यत्रैव बाह्योपस्थानशाला यत्रैव सिंहासन तत्रैवोपागच्छति, उपागत्य च यावत्सिंहासनवरगत पूर्व्वाभिमुखो निषीदति, निषद्य च अष्टादशश्रेणिप्रश्रेणी शब्दापयति, शब्दापयित्वा च एवमवादीत्–'खिप्प'त्ति ।

क्षिप्रमेव भो देवानुप्रिया:! । 'उस्सुक्कमि'त्यादितो यावत् 'पच्चप्पिणति'त्तिपर्यन्तं चक्ररत्नमहिमावद् मागधतीर्थकुमारनाम्नेति वक्तव्यम् । अथ चक्ररत्न कीदृश ? किं च कृतवद् ? इत्याह–'तए ण से' इत्यादि । ततस्तदनन्तरं चक्ररत्नं वरदामतीर्थाभिमुख प्रयातं चाप्यभवदिति सम्बन्ध: । कीदृशं चक्ररत्न ? 'वयर'त्ति । वज्रमयं तुम्बं यस्य तद्वज्रमयतुम्बं । तत्र तुम्बं नाम अरकाधारभूतं चक्रमध्यभागावयवरूपं नाभिरित्यर्थ: । 'लोहित'त्ति । लोहिताक्षो रत्नविशेषस्तन्मया अरका यत्र तल्लोहिताक्षमयारकं 'जवुणद'त्ति । जाम्बूनदं सुवर्णं तन्मयो नेमिश्चक्रधारा यस्य तज्जाम्बूनदनेमीकम् । तथा 'णाणामणि' त्ति । नानामणिमया क्षुरप्रवत्तीक्ष्णा पालि–धारा तया परिगतं-परिकरितं यत्तत् नानामणिक्षुरप्रपालिपरिगत 'मणिमुत्त'त्ति । मणयश्च मुक्ताजालानि च तैर्भूषितमलङ्कृत 'सणदिघोसे'त्ति । नन्दिर्द्वादश तूर्याणि तेषां घोष:–शब्दस्तेन सह सनन्दिघोषं सकिङ्किणीक–क्षुद्रघण्टिकाश्रेणीसहित दिव्यं–प्रशस्त न च दिव्यमिति प्रागुक्तेन पौनरुक्त्यं शङ्कनीयं । दिव्यशब्दस्य स्तुत्यर्थत्वेनाऽतिशयप्रशस्तताद्योतकत्वात् 'तरुणे'त्यादि । तरुणरविमण्डलेन सनिभ सदृश णाणामणि'त्ति । नानामणिरत्नमयघण्टिकाजालेनपरिक्षिप्त 'सव्वोउअ'त्ति । सर्वर्तुककुसुमानामासक्त माल्यदाम यत्र तत्तया अन्तरिक्षप्रतिपन्नं-गगनमार्गमाश्रित यक्षसहस्रेण सम्परिवृतं । 'दिव्वतुडिअ'त्ति । दिव्यत्रुटितशब्दा:–प्रधानतूर्यशब्दास्तेषां सन्निनादोऽन्योऽन्य सङ्गतिभाग् शब्दसमूहस्तेन पूरयदम्बरतल नाम्ना सुदर्शन नरपतेर्भरतस्य प्रथममादिमं यावन्ति रत्नानि तेषामिदमादिभूतमित्यर्थ । मागधतीर्थकुमारस्य देवस्य अष्टाहिकायां महामहिमायां निर्वृत्तायां–निष्ठां गतायां 'समाणीए'त्ति । सत्यां आयुधगृहशालात प्रतिनिष्क्रामति 'दक्खिण'त्ति । दक्षिणपश्चिमां दिश नैऋती विदिशमित्यर्थ: प्रतीति शेष. । वरदामतीर्थाभिमुख प्रयातं चाप्यभवत् ।

अथ भरत: किं कृतवान् ? इत्याह

**तए णं से भरहे राया तं दिव्वं चक्करयणं दाहिणपच्चत्थिमं दिसिं वरदामतित्थाभिमुहं पयातं पासति पासित्ता हट्ठतुट्ठ० कोडुंबिअपुरिसे सद्दावेति सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! हयगयरहपवरचाउरंगिणिं सेणं सण्णाहेह आभिसेक्कं च हत्थिरयणं पडिकप्पेहत्तिकट्टु मज्जणघरं अणुपविसति अणुपविसित्ता तेणेव कमेण जाव धवलमहामेहणिग्गए जाव सेअवरचामराहिं उद्धुव्वमाणिहिं मगइतवरफलगपवरपरिगरखेडयवरवम्मकवय माढीसहस्सकलिए उक्कडवरमउडतिरीडपडागझयवेजयंतीचामरचलंतछत्तंधयारकलिए असिक्खेवणीखग्गचावनाराचकणककप्पणीसूललउडभिंडिमालधणुहतूणसरपहरणेहि अ कालनील-रुहिर-पीत-सुक्किलअणेगचिंधसयसन्निविट्ठं अप्फोडिअसीहणायं छेलितहयहेसितहत्थिगुलगुलायित-अणेगरहसयसहस्सघणघणाघणेंतणीहस्समाणसद्दसहिएण जमगसमगं भंभाहोरंभा किणितखरमुहि मुगुंदसंखिअपिरिलिपव्वगपरिवाइणिवसवेणुवीणाविवचिमहतिकच्छभिरिगि-**

**मंगिगताळकरद्धाणुम्भिद्धेर्या महता सद्दसभिनाएणं सकेलमपि जीवलोकं पूरयंते बलवाहणसमुदएणं एवं जक्खसहस्स संपरिवुडे वेसमणो चेव धणवती अमरपतिसभिमाए इड्ढीए पहिअकित्ती गामागरनगरखेडकब्बड० तहेव सेसं जाव विजयखंधावारसंभिवेसं करेति, करेत्ता वड्ढतिरयणं सद्दावेति, सद्दावेत्ता एवं वयासी-खिप्पामेव भो ! देवाणुप्पिआ ! ममं आवसहं पोसहसालं च करेहि, मम एअमाणत्तिअं पच्चप्पिणाहि ॥**

'तए णं से'इत्यादि । ततस्तादृशं चक्ररत्न वरदामतीर्थाभिमुखं प्रयातं पश्यति दृष्ट्वा च हृष्टतुष्टेत्यादि प्राग्वत् । यावदिति, गम्यं। यावत्कौटुम्बिकपुरुषान् शब्दापयति, शब्दापयित्वा च एवमवादीत् 'खिप्पामेव'त्ति । क्षिप्रमेव भो देवानुप्रिया. ! हयगजरथचातुरङ्गिणि सेना ,'सन्नाहेह'त्ति । सन्नद्धबद्धा कुरुत, आभिषेक्य हस्तिरत्न च परिकल्पयतेति कृत्वा-इति भणित्वा मज्जनगृहमनुप्रविशति; अनुप्रविश्य च किं करोतीत्यत्रातिदेशमाह-'तेणेव'त्ति । यथा मागधतीर्थं प्रति गमनसमयेऽभिहित तेनैव क्रमेणात्रापि भणितव्यमिति शेष. । कियद्दूरम् ? इत्याह-'जाव धवले'त्यादि । यावद्धवलमहामेघनिर्गत इव शशीत्यादिकम् । ततोऽपि कियद्दूरम् ? इत्याह-'जाव सेअवरे'त्यादि । अत्रापि यावत्करणात् 'मज्जणघराओ पडिणिक्खमइ'इत्यादि सव्याख्यानं सूत्र प्रागभिहितमिहाभिधातव्यम् । अथ कीदृशो भरत ?, कथ च वरदामतीर्थाभिमुख प्रयात? इति दर्शयति-'मगइते'त्यादि । मृगयिता-यथौचित्येन कराङ्गादिषु पाशिता-कशादिबन्धेन नियोजिता इत्यर्थ । वरफलकानि च-प्रधानस्फरका., प्रवरपरिकरखेटानि च-शोभनपरिकरयुक्ता लघुस्फरका , वर्म्माणश्च कवचाश्च माढ्यश्च लोहचर्म्मादिमया: सन्नाहापरपर्यायास्तनुत्राणविशेषा येषा ते तथा तेषां सहस्रास्तै: कलित सयुक्तो यः स मृगयितवरफलकप्रवरपरिकरखेटकधर्म्मकवचमाढीसहस्रकलित: 'उक्कडे'त्यादि । उत्कटवराणि-वउन्नतप्रवराणि मुकुटानि मस्तकाऽऽभरणविशेषा: तिरीटानि च तान्येव शिखरत्रयोपेतानि येषा ते तथा बद्धमुकुटराजा इत्यर्थः तै । तथा पताका केतवः, ता एव गरुडादिचिह्नोपेता ध्वजा, विजयसूचिकाश्च वैजयन्त्य , ताश्च चामराणि च चलच्छत्राणि च पताकाध्वजवैजयन्तीचामरचलच्छत्राणि तैर्हेतुभूतैर्यदन्धकार-सूर्यातपतेज प्रसारनिरोधकच्छायारूपं तेन च कलितो य. स उत्कटवरमुकुटतिरीटपताकाध्वजवैजयन्तीचामरचलच्छत्रान्धकारकलित. । एवंविधो भरतनामा नरपति शब्दसन्निनादेन सकलमपि जीवलोक पूरयन्निव अमरपतिसन्निभया ऋद्ध्या स्कन्धावारनिवेश करोतीत्यग्रेतनसूत्रेण सह सम्बन्ध. । तत्र जीवलोक कीदृशम् ? इत्याह-'असिक्खेवणी'त्यादि । असीन्-खड्गान् क्षेप नयन्तीति असिक्षेपण्य प्रतीकारास्तै सयुक्ता खड्गा असिक्षेपणीखड्गा , ते च चापानि च धनूषि च नाराचाश्च-बाणा , काणककल्पनीशूलनामान शस्त्रभेदविशेषा रूढिगम्या । लकुट. प्रतीत , भिण्डिमाल चाऽऽयुधविशेष:, धनुर्भि सयुक्ता स्तूणशरा स्तूणीरबाणा धनु स्तूणशरा । अतो न पौनरुक्त्य ते च प्रहरणानि च गदामुशलप्रभृतीनि तैर्हेतुभूतै. 'कालनीले'त्यादि । कालनीलरुधिरपीतशुक्लैर्वर्णैर्यान्यनेकानि चिह्नशतानि सनिविष्टानि यस्मिन्

स तम् । अथ भावः असिक्षेपण्यादयो हि नीलादिविचित्रवर्णाः तत्सयुवतं पुरुषैर्गच्छद्भिर्लोकोऽपि तद्वर्णादिभिश्चित्रीकृत इत्यर्थ. 'अप्फोडिअ'त्ति । आस्फोटो हस्तादेस्तत्पूर्वः सिंहनाद.—सिंहस्येव शब्दकरणमनेकेषां जनाना यत्र स तम् । अथ शब्दसन्निनादेन सकलमपि जीवलोकं पूरयन्निवेत्यत्र शब्दसन्निनादेन किं लक्षणेन ? इत्याह-'छेलिते'त्यादि । सेटितं-पुरुषाणां हर्षोद्रेकात् शीत्कारकरणं, हयानां हेषितं, हस्तिना गुलगुलायितम्, अनेकरथशतसहस्राणां घणघणाघणायित चेतिरूपेणानुकरणमात्रशब्दा. लोकप्रतीताः 'णीहररमाणसद्द'त्ति । 'हृष अलीके' इति वचनात् निहृष्यमाणशब्दा —अलीकप्रवृत्तिनिवृत्त्यर्थं दण्डादिनाऽश्वादिशरीरसमुद्भवा. ततो द्वन्द्वः तैः सहितो य. स सेटितहयहेषितहस्तिगुलगुलायितानेकरथशतसहस्रघणघणाघणायितनिहृष्यमाणशब्दसहितस्तेन । तथा 'जमगे'त्यादि । यमक समक युगपद्ययास्यात्तथा भम्भा, ढक्का, होरम्भा-लघुढक्का-किणित-वाद्यविशेषः, खरमुखी-काहला,-मुकुन्दो-देववाद्यविशेष , 'सखिअ'त्ति । शङ्खिका-क्षुद्रशङ्ख. पिरिली वाद्यविशेष., पव्वगोऽष्टादश छिद्रयुक्तो वाद्यविशेष एव, परिवादिनी-सप्त तन्त्री वीणा, वशवेणुवीणाश्च लोकप्रतीता । विपञ्ची-त्रितन्त्री वीणा 'महति'त्ति । महती नाम्नी शततन्त्री वीणाविशेष , कच्छभिर्वाद्यविशेष , रिगिसङ्गिका वाद्यविशेष., ताल कास्यताल, करो-हस्तः ततो द्वन्द्वे भम्भादिकरान्ताना यो ध्वान शब्दस्तेनोद्विद्धो-मिश्रितो यः स तेन महता-बृहता शब्दसन्निनादेनसर्व्वतूर्याणा यः शब्दस्तेन, सङ्गतो यो निनाद.—प्रतिशब्दस्तेनेति । 'बल वाहण'त्ति । वलवाहनसमुदयेन सहेतिगम्यम् 'एवं'ति । एव यावदिति गम्यम् । यावत् यक्षसहस्रसम्परिवृतो वैश्रमण इव धनपति, अमरपतिसन्निभया ऋद्ध्या प्रथितकीर्त्ति 'गामागरे'त्यादि । तथैव शेष—यदत्र शेषं वक्तव्याहं तत्तथैव प्राग्व्यावर्ण्णितस्वरूपवदेव । कियद्दूरम् ? इत्याह–'जाव विजयखधावार'त्ति । यावद्विजयस्कन्धावारनिवेश करोति । यावत्करणात् 'मडम्बदोणमुहपट्टणासमसवाहे'त्यादिना । यावत् अग्र्याणिवराणि-रत्नानि प्रतीच्छन् प्रतीच्छन् तद्दिव्य चक्ररत्नमनुगच्छन्-अनुगच्छन् योजनान्तरिताभिर्वसतिभिर्वसन् वसन् यत्रैव वरदामतीर्थं तत्रैवोपागच्छति, उपागत्य च वरदामतीर्थस्यादूरप्रत्यासन्ने नव योजनविस्तीर्णमित्यादि प्रागुक्तमिहापि भणनीयम् । स्कन्धावारसन्निवेश कृत्वा भरतो वर्द्धकिरत्न शब्दापयति शब्दापयित्वा च एवमवादीत्—क्षिप्रमेव भो देवानुप्रिय ! मम आवसथ पौषधशाला च कुरु, कृत्वा च ममेतामाज्ञप्तिकां प्रत्यर्प्पयत ।

अथ भरतस्याज्ञामवाप्यवर्द्धकि कीदृश ? किं कृतवान् ? इत्याह

तए ण से आसमदोणमुहगामपट्टणपुरवरखंधावारगिहावणविभागकुसले एगासीतिपएसु सव्वेसु चेव वत्थुसु णेगगुणजाणए पंडिए विहिण्णु पणतालीसाए देवाणं वत्थुपरिच्छाए णेमिपासेसु भत्तसालासु कोट्टणिसु आवासघरेसु अ विभागकुसले छेज्जे वेज्झे अ दाणकम्मे पहाणबुद्धी जलयाणं भूमियाण य भायणं जलथलगुहासु जंतेसु परिहासु कालणाणे तहेव सद्दे वत्थुप्पएसे पहाणे गब्भिणिकण्णरुक्खवल्लिवेढिअगुणदोसविआणए गुणड्ढे सोलसपासाय-

**करणकुसले चउसट्ठि विगप्पवित्थियमई नंदावत्ते अ वद्धमाणे सोत्थिअ-रुअग तह सव्वओभद्द-सन्निवेसे अ बहुविसेसे उद्दंडिअदेवकोट्ठदारुगिरिखायवाहणविभागकुसले।**

**इअ तस्स बहुगुणड्ढे थवईरयणे नरिंदचंदस्स। तवसंजमनिविट्ठे किंकरवाणी उवट्ठाई ॥१॥**

**सो देवकम्मविहिणा खंधावारं नरिंदवयणेणं। आवसहभवणकलिअं करेति सव्वं मुहुत्तेणं ॥२॥**

**करेत्ता य अवरं पोसहसालं करेति, करेत्ता जेणेव भरहे राया जाव एअमाणत्तिअं पच्चप्पिणाति। सेसं तहेव जाव मज्जणघराओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव चाउग्घंटे आसरहे तेणेव उवागच्छति, उवागच्छित्ता—**

'तए णं से' इत्यादि। तत सं वर्द्धकि सव्वं मुहूर्त्तेन करोतीति गाथाद्वयपर्यन्तेन सम्बन्धः। स च वर्द्धकि कीदृश ? इत्याह-'आसमे'त्यादि। आश्रमस्तापसाश्रयः, द्रोणमुखं प्रायेण जलनिर्गमप्रवेश, ग्रामपत्तने प्राग्व्याख्याते। पुरवरं-विशिष्टनगर, स्कन्धावार स्कन्धावारनिवेशस्थान, गृहं-स्त्रीपुरुषनिवासस्थानम्, आपणानि-हट्टानि ततो द्वन्द्वस्तेषां यो विभागस्तत्र कुशलो-निपुणो यः स तथा 'एगासीतिपएसु' त्ति। एकाशीतिपदेषु—एकाशीतिद्वाररचनात्मकेषु सर्व्वेष्वेव वास्तुषु—वास्तुशास्त्रेषु एकाशीतिः पदानि स्थानानि येषु तान्येकाशीतिपदानि एवंविधानि यानि सर्व्वाण्येव वास्तूनि—वास्तुशास्त्राणि तेषु अनेकगुणज्ञायक—अनेकेऽनेकप्रकारा ये गुणाः—समृद्धिसम्पादकत्वादयस्तानुपलक्षणादुपद्रवसूचकवेधादिदोषांश्च जानातीति अनेकगुणज्ञायकः। अत एव पण्डितः सन् विधिज्ञ—विधिं भूमिशुद्ध्यादिकं जानातीति विधिज्ञ। तथा 'पणतालीसाए'त्ति पञ्चचत्वारिंशतो देवतानां-देवतासम्बन्धिनां 'वत्थु'त्ति। वास्तुभेदानां प्राकृतत्वात्षष्ठीलोपः 'परिच्छए'त्ति। परीक्षकः। 'परिच्छाए'ति पाठे तु तेषां परीक्षाया विभागकुशले इति वक्ष्यमाणं पदं सम्बन्धनीयम्। यद्वा-तेषां परिच्छादनस्तृणकाष्ठपाषाणादिभिश्छादनं तत्र तथा 'नेमिपासेसु'त्ति। नेमिपार्श्वेषु—कूपत्रिकापार्श्वेषु कूपस्यान्ते रज्ज्वादिधारणार्थं न्यस्तदारुपार्श्वेषु। तथा 'भत्तसालासु'त्ति भक्तशालासु-भोजननिष्पत्तिगृहेषु महानसेष्वित्यर्थः। तथा 'कोट्टणिसु अ'त्ति। कोट्टे-दुर्गे नीयन्ते-प्राप्यन्ते सुभटा आभिस्ता कोट्टन्य—कोट्टोपरिवर्त्तिभूमयः यासु स्थिताः सुभटा युद्ध्यन्ति। चकार सर्व्वत्र समुच्चये। तथा 'आवासघरेसु अ'त्ति। आवासगृहेषु शयनासनोपस्करादुपयोगिगृहेषु विभागकुशलः इदमित्थमेव शुभं नान्यथेति अन्वयव्यतिरेकाभ्यां विभागेषु कुशलः तल्लक्षणादिपरिज्ञाने निष्ठां प्राप्तः। च समुच्चये। तथा 'छेज्जे वेज्झे य'त्ति। छेद्ये -छेदार्हे काष्ठपाषाणादौ, वेद्यकं-सूत्रधारोपकरणविशेषः उपलक्षणादन्यदपि तदुचितोपकरणं ग्राह्यं तस्य यद्दानकर्म-तदुचितव्यापारक्रिया तत्र प्रदानबुद्धिः—सकृद्व्यापारितवेध्यकाद्युपकरणेन सद्यः समीहिताऽऽकृत्यादिमद्विवक्षितवस्तुविधानातिनिपुणमतिरित्यर्थः। 'जलयाण'त्ति। जलं जायते येभ्यस्तानि जलजानि—जलोत्पत्तिस्थानानि वापीकूपतटाकजलयन्त्रधारागृहादीनि उपलक्षणात्तेषु पद्यादिबन्धास्तेषां तथा 'भूमिआण य'त्ति। भूमिजानि-भूमिगृहसुरङ्गादीनि तदुपलक्षितानि नगरप्राकारादीन्यपि तेषां च भाजनमिव भाजनं तद्धेतुत्वेनोपचारात्तदाधारभूत-

इत्यर्थः । तथा 'जलथले'त्यादि । जलं-पानीयं स्थलं-तद्व्यतिरिक्तसर्व्वमपि स्थानं तत्र गुहा इव गुहाः गोप्यगृहाणि तासु । तथा 'जंतेसु'त्ति । यन्त्रेष्वनेकभेदभिन्नेषु लोकरूढिगम्येषु । तथा 'परिहासु'त्ति । परिखासु च खातिकासु । तथा 'काल'त्ति । कालज्ञाने-चिकीर्षितगृहादिकार्यकरणेऽयं दिवसः शुभोऽशुभो वेति परिज्ञाने । यद्वा-कालज्ञानं-ज्योतिःशास्त्रं तत्र 'तहेव'त्ति । तथैव शब्दे शकुन्यादि शब्दज्ञाने-शब्द-परिज्ञाननिमित्ते व्याकरणादौ वा 'वत्थु'त्ति । वास्तुप्रदेशे-वास्तुव्यवस्थापनाय भूप्रदेशे प्रधानोऽतिनिपुणः। तथा 'गब्भिणि'त्ति । गर्भिण्यश्च, कन्याश्च, वृक्षाश्च, वल्लिवेष्टितानि च तेषां ये गुणा दोषाश्च तेषां विज्ञायको-विशेषतो ज्ञाता । अयमभावः-गर्भिणीनां गर्भादिगोचरान्, कन्यानां च भाविपत्यपत्यादि-विषयान्, वृक्षाणां च पत्रपुष्पफलच्छायादिविषयान्, वल्लीवेष्टितानां चार्थाद्गृहाऽऽरामादीनां निवासकालादिगोचरान् गुणान् दोषाश्च जानातीति गर्भिणीकन्यावृक्षवल्लीवेष्टित [ गुणदोषवि ] ज्ञायक । अनेन केवलं न दृश्यमानवस्तुस्वरूपमेव जानाति किन्तु भावि गूढस्वरूपमपि तथाविधनिमित्त-वशेन जानातीति दर्शितं । यद्वा-गर्भिणीकन्योपमा यौवनबाल्यावस्थावत्य. कुसुमिता अकुसुमिताश्चे-त्यर्थः उपलक्षणात्फलिता अपि या वल्ल्यो-लताः ताभिर्वेष्टिता ये वृक्षास्तेषां तथाविधनिमित्तवशेन गुणान् दोषाश्च जानातीति गर्भिणीकन्यावल्लीवेष्टितवृक्षगुणदोषविज्ञायकः । प्राकृतत्वाद्विशेषणस्य परनिपातः । तथा 'गुणड्ढे'त्ति । गुणा-औदार्यादयस्तैराढ्यः प्रसमृद्धः तथा 'सोलस'त्ति । षोडशप्रासादाः-'प्रासादो देवभूपानामि'ति वचनात् षोडश सङ्ख्यानां-षोडश विकल्पपतितानां राजगृहाणां भान्तनस्व-स्तिकादीनां वास्तुशास्त्रप्रसिद्धानां यत्करणं-विधापनं तत्र कुशलो-विज्ञो यः स तथा । तथा 'चउसट्ठि'त्ति । चतु.षष्टिविकल्पाः गृहाणां तेऽपि वास्तुशास्त्रे प्रसिद्धाः तेषु विस्तृता मतिर्यस्य स तथा । चतुःषष्टि-विकल्पास्त्वेवं-प्रमोदविजयादीनि षोडश गृहाणि पूर्व्वद्वाराणि, स्वस्तनादीनि षोडश गृहाणि दक्षिण-द्वाराणि धनदादीनि षोडश गृहाणि उत्तरद्वाराणि, दुर्म्मगादीनि षोडश गृहाणि पश्चिमद्वाराणि सर्व्व-मीलने चतुषष्टिरिति । 'नंदावत्ते अ'त्ति । नन्द्यावर्त्ते च समुच्चये । एवं वर्द्धमाने स्वस्तिके रुचके तथा सर्व्वतोभद्रसन्निवेशे 'बहुविसेसे'त्ति । बहवो विशेषा यत्रेति नन्द्यावर्त्तादीना विशेषण यत एकैकस्मिन् नन्द्यावर्त्तादौ विशेषानधिकृत्याऽनेके भेदा भवन्तीति । एते च नन्द्यावर्त्तादयो धनाढ्यगृहेषु रचना-विशेषा । क्वचिद्विभक्तिलोप प्राकृतत्वात् । 'उद्दंडिअ'त्ति । उद्-ऊर्ध्वं दण्डो येषां ते उद्दण्डिका करगृहीतोर्ध्वदण्डकाः प्रासादादिद्वारस्थिताः साक्षात्पुरुषा इवाप्रवेश्यजनाना प्रवेशनिषेधकाः अवसा-तव्या । 'देव'त्ति । देवः-शक्रादिमूर्त्ति. 'कोट्ठ'त्ति । कोष्ठो-दुर्गविशेष' तदेकदेशो वा यत्र स्थितानां बहूना युद्धोद्यतानामवष्टम्भो भवति । 'दारु'त्ति । दारूणि चन्दनादिकाष्ठानि 'गिरी'त्ति । गिरयोऽष्टा-पदादय पर्व्वता 'खाय'त्ति । खात वापीकूपपरिखादि यावत् खनिकर्म्म 'वाहण'त्ति । वाहनं बोहि-त्थादि ततो द्वन्द्व । तेषा विभागे-विभक्तौ । विभागश्चैवम्-उद्दण्डिकोऽप्येवंविधो दुर्गादिद्वारोचितो ऽनुचितो वेत्येवंरूपेणान्वयव्यतिरेकाभ्यां निर्णयः । देवस्याऽपि शक्रमूर्त्यादिराकृत्यादिनिर्णय' । कोष्ठस्याऽपि पर्व्वतादिस्थानौचित्यादिना । चन्दनादिदारूणां प्रतिमाद्युपयोगितया । पर्व्वतस्याऽपि वृत्तं चतुरस्रादि दुर्गग्रामनगरादिनिवासोचितभूम्याश्रयत्वेन खातस्य शुभा-

असुमदकादिजन्मभूमिमार्गगोचरत्वेन । वाहनस्य बोहित्थादेः प्रत्यासन्नादूरदूरतरवर्तिद्वीपमन्दिरादि-मार्गनिस्तरणसामर्थ्याऽसामर्थ्यादिनिर्णयस्तत्र कुशलो-दक्षः । अथोक्तस्वरूपो वर्द्धकिः किं कृतवान् ? इति गाथाद्वयेनाह 'इअ तस्स०' 'सो देव०'इति । प्रागुक्तप्रकारेण तस्य भरतस्य नरेन्द्रचन्द्रस्य बहुगुणाढ्योऽनेकगुणभाजनं स्थपतिर्वर्द्धकिरत्नं । किं लक्षणः ? 'तव'त्ति । तपःसंयमाभ्यां-प्राग्जन्मा-चीर्णाभ्यां निर्विष्ट-उपभोगतया प्राप्तः 'किंकर'त्ति । किंकरोऽस्मीत्येवंरूपा मुखे वाणी यस्य स किङ्करवाणी. । यद्वा–किं करवाणी–किं कुर्वे इतिवदन्नितिशेषः । उपतिष्ठते स्वामिनः पुरस्तादुप-तिष्ठतीत्यर्थः । ततः 'सो देव'त्ति । स वर्द्धकि. देवकर्मविधिना देवस्येव कर्मणा समीहितकर्तव्यक्रियाणां विधिर्विधानं तेन यथादेवश्चिन्तितकार्यकरणसमर्थस्तथाऽयमपीतिभावः । स्कन्धावारं-नरेन्द्रकटक नरेन्द्र-वचनेन भरताऽऽज्ञया आवसथभवनकलितं करोति । बहुकालान्तरितं सम्यगुपभोगाऽभावेन न तुष्टिहेतु-रित्याह–'सव्वं'त्ति । सर्वं मुहूर्त्तेन मुहूर्तमात्रेण न पुन. किंचिन्न्यूनं न वा बहुकालेनाऽचिन्त्यमाहात्म्यो-पेतत्वात् ॥२॥ इति गाथायुग्मेन प्राक्तनान्वयार्थः समर्थितः । 'करेत्ता य'त्ति । कृत्वा च अपर पूर्वकृत भवनादन्यत् पौषधगृह करोति कृत्वा च यत्रैव भरतो राजा यावदेतामाज्ञप्तिकां प्रत्यर्पयति । शेषं तथैव प्रागुक्तमेव–आज्ञप्तिप्रत्यर्पणानन्तरं यावत्सूत्रं तावदिहापि भणनीयं यावन्मज्जनगृहात्प्रतिनिष्क्रा-मन्ति प्रतिनिष्क्रम्य च यावत्पौषधशालामनुप्रविशति यावत् यत्रैव चातुर्घण्टोऽश्वरथस्तत्रैवोपागच्छति, उपागत्य च

तए णं तं धरणितलगमणलहुं तयाविद्धलक्खणपसत्थं हिमवंतकंदरंतरनिवाससंवड्ढि-अचित्ततिणिसदलिअं जंबूणयसुकयकुव्वरं कणयदंडिआरं पुलगवरइंदनीलसासगपवालफलि-हरयणलेट्ठुमणिविद्दुमविभूसिअं अडयालीसाररइअतवणिज्जपट्टसंगहिअजुत्ततुंबं पघसितपसि-तणिम्मितनवपट्टपुट्ठपरिणिट्ठिअं विसिट्ठलट्ठनवलोहबद्धकम्मं हरिपहरणरयणसरिसचक्कं कक्के-अणइंदनीलसासगसुसमाहिअबद्धजालकडगपसत्थविच्छिण्णसमधुरं पुरवरं व गुत्तं सुकरणतवणि-ज्जजुत्तकलिअं कंकडगनिज्जुत्तकप्पणं पहरणाणुजातं खेडगकणगधणुमंडलग्गवरसत्तिकों-ततोमरसरसयबत्तीसतूणपरिमंडिअं कणगरयणचित्तं जुत्तं हलीमुहबलागगयदंतचंदमोत्तिअ-तणसोल्लिअकुंदकुडयवरसिंदुवारकंदलवरफेणणिगरहारकासप्पगासधवलेहिं अमरमणपवण-जइणचवलसिग्घगामीहिं चउहिं चामराकणगविभूसिअंगेहिं तुरगेहिं सच्छत्तं सज्झयं सघंटं सपडागं सुकयसंधिकम्मं सुसमाहिअसमरकणगगंभीरतुल्लघोसं वरकुव्वरं सचक्कं वरनेमी-मंडलं वरधुरातोंडं वरवयरबद्धतुंबं वरकंचणभूसिअं वरायरिअनिम्मियं वरतुरगसंपउत्तं वरसा-रहिसुसंपग्गहिअं वरपुरिसे वरमहारथं दुरूढे आरूढे । पवररयणपरिमंडिअं कणगकिंकिणीजाल-परिसोहिअं अउज्झं सोतामणिकणगतवितपंकयजासुअणजलणजलितसुकतोंडरागं गुंजद्धबंधु-

जीवगरत्तहिंगुलगणिकरसिंदुररुइलकुंकुमपारेवयचलणणयणकोइलदसणावरणरइतातिरेगरत्तासोग-कणगकिंसुअगयतालुसुरिंदगोपगसमप्पभप्पगासं बिंबाफलसिलप्पवालउट्ठितसूरसरिसं सव्वोउअसुरहिकुसुममल्लदामं उस्सिअसेअज्झयं महामेहरसितगंभीरणिद्धणिग्घोसं सत्तुहिअयकंपणं पभाते अ सस्सिरीअं णामेण य-पुहविविजयलंभंति विस्सुअं लोगविस्सुअजसो अहतं चाउग्घंटं-आसरहं पोसहिए णरवती दुरूढे। तए णं से भरहे राया चाउग्घंटं आसरहं दुरूढे समाणे सेसं तहेव जाव दाहिणाभिमुहे वरदामतित्थेण लवणसमुद्दमवगाहति जाव से रहवरस्स कुप्परा-उल्ला जाव पीतिदाणं से। णवरिं चूडामणिं च दिव्वं उरत्थगेविज्जगं सोणिसुत्तगं च कडगाणि अ तुडिअ जाव दाहिणिल्ले णं अंतवाले जाव अट्ठाहिअं महामहिमं करेंति, करेत्ता एअमाणत्तिअं पच्चप्पिणंति। तए णं से दिव्वे चक्करयणे वरदामतित्थकुमारदेवस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहघरसालाओ पडिणिक्खमति अंतलिक्खपडिवण्णे जाव पूरेंते चेव अंबरतलं उत्तरपच्चत्थिमं दिसिं पभासतित्थाभिमुहे पयाए आविहोत्था। तते णं से भरहे राया तं दिव्वं चक्करयणं जाव उत्तरपच्चत्थिमं दिसिं तहेव जाव पच्चत्थिमदिसाभिमुहे पभासतित्थेण लवणसमुद्दं ओगाहति ओगाहेत्ता जाव से रहवरस्स कुप्पराउल्ला जाव पीतिदाणं से। नवरं मालं मउडं मुत्ताजालं हेमजालं कडगाणि अ तुडिआणि अ आभरणाणि अ सरं च णामाहयं-कं पभासतित्थोदगं च गेण्हति, गेण्हेत्ता जाव पच्चत्थिमेणं पभासतित्थमेराए अहं णं देवाणु-प्पिआणं विसयवासी जाव पच्चत्थिमिल्ले णं अंतवाले। सेसं तहेव जाव अट्ठाहिआ निव्वत्ता।

'तए णं तमि'त्यादि-ततस्तदनन्तरं तं महारथमारूढ इत्यन्तः सम्बन्धः। किं लक्षणम्? इत्याह-धरणितले-भूतले लघु-शीघ्रं गमनं-गतिर्यस्य स तम्। प्राकृतत्वाद्व्यत्ययः। तयाविद्धे'ति। त्वचा वद्ध्रेण आविद्धो यथोचितस्थाने निवद्धः परिवेष्टित इत्यर्थः। एवंविधो यो लक्षणप्रशस्त-प्रशस्तलक्षणोपेतस्त ततोविद्धे'त्ति पाठे तु ततस्तदनन्तरं विद्धानिति भरतस्य व्यवहितं विशेषणम्। पुनः कीदृशं? 'हिमवंत' त्ति। हिमवतः पर्वतस्य या कन्दरा-गुहा तस्या अन्तरोऽन्तः प्रदेशस्तल्लक्षणो यो निवासः तत्र सवर्द्धितानि-चित्राणि-विविधानि यथौचित्येनानेकसस्थानवन्ति तिनिशानि-तिनसाऽभिधानतरुसम्बन्धीनि। तिनिसवृक्षो हि अतिदृढो भवतीति तद्ग्रहणं दलिकानि-अवयवविशेषा यस्य स तथा। 'जंबुणय'त्ति। जाम्बूनदेन-सुवर्णेन सुकृत-शोभाभाग्विहितं कूबर-युगन्धरं यस्य स तथा तं। 'कणय'त्ति। लघिष्ठो दण्डो दण्डिका, कनकनिष्पन्ना दण्डिका कनकदण्डिकास्ताभिर्युक्तो। अरा-अरको यत्र स तं पुलगे'त्यादि। पुलकादीनि प्रतीतानि। नवरं लेष्टु-पाषाणविशेषः, विद्रुमप्रवालयोरेकार्थत्वेऽपि वर्णादितारतम्यकृतो भेदोऽवसातव्य। ततो द्वन्द्वे कृते तैर्विभूषितोऽलङ्कृतो यथौचित्यस्थाननिवेशनेन यः स तथा तम्।

'अडयालीस'त्ति । अष्टचत्वारिंशता अरै रचितं यत्तापनीयपृष्ठ-चक्रोपरिवर्त्ति मण्डलाकारं तेन सङ्गृहीतं सद्युक्तं-सम्बद्ध तुम्बम्—अरकाऽऽधारभूतो मध्यावयवो यस्य स त 'पघसिअ'त्ति । प्रघर्षिता—प्रकर्षेण घर्षिताः प्रसिता—प्रकर्षेण बद्धाः । अत एव निर्म्मिता नवाश्च पट्टा यस्य तत्तायाभूतं यत्पृष्ठ तेन परिनिष्ठित'—परिणतः परिणाम प्राप्तो यः स तथा तं 'विसिट्ठ'त्ति । विशिष्ट-लष्टम्-अतिमनोज्ञम् एवविध यन्नवलोहम्—अग्निसम्पर्क्केण मलरहितमय' तेन-पट्टिकारूपेण बद्धकर्म्म-बन्धनकृत्य यस्य तत्तथा त 'हरिपहरण'त्ति । हरिप्रहरणरत्न-वासुदेवचक्र तत्सदृशे चक्रे रथपादौ यस्य स तथा । 'कक्केअण'त्ति । कर्क्केतनेन्द्रनीलसासके रत्नविशेषै प्रतीतै. सुष्ठु सम्यक् आहित-स्थापित कटकजालं-कटकानि प्रतीतानि तेषां जाल-समूहस्तेन । प्रशस्ता-विस्तीर्णा समा धुरा यत्र स तथा त 'पुरवर'त्ति । पुरवरमिव गुप्त—द्रष्टॄणा गुप्तपुरवरमिवाऽऽभाति य स त 'सुकरण'त्ति । सुकरण-सुपरिकर्म्मण । यद्वा-सुष्ठु करण-चिन्तित-कार्यकरणायाऽसाधारणं कारणमतिश्रेष्ठमित्यर्थ. । एवविधं यत्तपनीय सुवर्णं तस्य सम्बन्धीनि जालानि-छिद्रसयुक्तरचनाविशेषात्मकानि तै कलितः सयुक्तो यः स तथा तं 'कंकडग'त्ति । कङ्कटकेन—कवचेन नियुक्ता-नितरा योजिता कल्पना-रचना विशेषो यस्मिन् स तथा तं 'पहरण'त्ति । प्रहरणैरायुधैरनुयात - परिकरितो य स त 'खेडगे'त्यादि । खेटकानि च कनकधनूंषि च प्रतीतानि मण्डलाग्राणि च—खड्गा वरशक्तयश्च कुन्ताश्च प्रतीता ,तोमराणि च-बाणविशेषाः शराणां बाणाना प्रत्येक शत येषु ते शरशता एव विधा द्वात्रिंशत्तूणा —शराश्रया तै परिमण्डितो य. स त तथा 'कणग'त्ति । कनकेन सयुक्तानि रत्नानि तैश्चित्राणि-रचनाविशेषरूपाणि यस्मिन् स त । तथा 'जुत्तमि'त्यादि । युक्त तुरगैरित्यन्त सम्बन्ध । कि लक्षणैस्तुरगै. ? 'हलीमुहे'त्यादि । हलीमुखबलाहका. पक्षिविशेषाः, तृणसोल्लिको वनस्पतिविशेष । कुन्दकुडकसिन्दुवारा पुष्पभेदा शेष सुगमम् । पुनः कि लक्षणैस्तुरगै 'अमरे'त्यादि । अमराश्च ? देवाः मनांसि च पवनश्च अमरमन पवनास्तान् जयनशीलै. एवविधैश्चपल यथा स्यात्तथा शीघ्रगामिभिः 'चउहिं'ति । चतुः सङ्ख्याकै 'चामरे'त्यादि । चामराणि प्रतीतानि । स्त्रीत्व प्राकृतत्वात् । कनक-शब्देन कनकनिष्पन्नानि ग्रीवाशृङ्गाद्युचितान्याभरणानि तैर्विभूषितमङ्ग येषा ते तैस्तुरगैर्जात्याश्वै पुन. कथभूत रथ ? सच्छत्र, सध्वज, सघण्ट, सपताक 'सुकय'त्ति । सुकृत-शोभन कृत सन्धिषु कर्म्म काष्ठा-दीना परस्परनियोजनादिलक्षण यस्य स त 'सुसमाहिअ'त्ति । सुष्ठु समाहितः-स्वसाध्यकार्ये नियोजित' । प्रेरितोऽर्थाद्वादितो यः समरकनक सङ्ग्रामयोग्यवादित्रविशेष. तत्तुल्यो गम्भीरो घोषो यत्र स त । तत्रोपविष्टाना सङ्ग्रामे शौर्यादिसम्पादकघोषवानित्यर्थ । वरे कूवरे-चक्राऽऽधारभूतौ अवयवविशेषौ यस्य स त स चक्र वरनेमिमण्डल चेति सुगमम् । वर-प्रधान धुरातुण्ड धुर्मुख यस्य स त 'वरवयर'त्ति । वरेण वज्रेण बद्ध तुम्ब यस्य स त वरकाञ्चनेन-वरकाञ्चनपट्टिकादिना विभूषितस्त 'वरायरिअ'त्ति । वर —प्रधानो य आचार्य —शिल्पाऽऽचार्यस्तेन निर्म्मित 'वरतुरग'त्ति । वरतुरगा —प्रधानाश्वा. सम्प्रयुक्ता-योजिता यस्मिन् स त । वरसारथिना सुसम्प्रगृहीत सम्यक्प्रकारेण गृहीत । सर्व्वप्रकारेण सुसारथे-रायत्त इत्यर्थ । 'वरपुरिसे'त्ति । वरपुरुषो-भरतराजा दूरूढ आरूढ इत्येकार्थावपि आरोहणक्रियाया सादरतासूचकौ । अथ प्रकारान्तरेण वर्णनमाह—'पवररयणे'त्यादि । प्रवररत्नपरिमण्डितम् अश्व थं

पौषधिको नरपतिर्दूरूढ इत्यन्तमन्वयः। रथं च कीदृशं? 'पवर'त्ति प्रवररत्नैः परिमण्डितं 'कणग' त्ति। कनककिङ्किण्यः सुवर्णक्षुद्रघण्टिका तासां जालानि तैः शोभितो यः स तम्। 'अउज्झ'ति। अयोध्य-परैर्योद्धुमशक्यः। पुनः कीदृशं रथ? 'सोतामिणि'त्ति। सौदामिनी-विद्युत्, तप्तकनकं प्रतीतं; प्राकृतत्वात् विशेषणस्य परत्वं। पङ्कज-रक्तोत्पलं 'जासुअण'त्ति। जपाकुसुमं ज्वलितज्वलनो-दीप्यमानो ऽग्नि। अत्रापि व्यत्ययः प्राग्वत्। शुकतुण्ड-शुकमुखं ततो द्वन्द्वस्तैरुपमितो रागो-रक्तता यस्य स तं। पुनरपि रक्तत्वमुपमया वर्णयति 'गुंजद्धे'त्यादि। गुञ्जा प्रतीता तस्या अर्द्धम्-अर्द्धस्याऽतिकृष्णत्वात् मा ऽखण्डग्रहणं। बन्धुजीवक-पुष्पविशेष, रक्त-रुधिरं हिङ्गुलकनिकरः, सिन्दूरञ्च प्रतीतं रुचिरं कुङ्कुम-प्रवरकुङ्कुम, पारापतचलननयने सुप्रतीते, कोकिलाया दर्शने-लोचने 'आवरण'त्ति। आवृणोति स्वभाव-सिद्धं श्वेतं रूपमित्यावरणं माञ्जिष्ठादि द्रव्यं तेन रञ्जितमावरणरञ्जितं रक्तवस्त्रमित्यर्थः। अतिरेकेणा-धिक्येन रक्तो योऽशोकः प्रतीत, कनकमिह रक्तसुवर्णं, किंशुकः-पलाशपुष्पं गजतालु तच्च मनुजाद्यपेक्षया-ऽतिरक्ततोपेतं स्यात्। सुरेन्द्रगोपकः-कीटकविशेषः प्रतीतः। ततो द्वन्द्वस्तैः समस्तुल्यः प्रभाप्रकाशो यस्य स तथा तम्। पुनस्तथैवाह-'बिंबाफले'त्यादि। बिम्बाफलं पक्वमतिरक्तं स्यादिति लोकप्रतीतं तच्च शिलाप्रवालं च उत्थितः सूर्योऽचिरोद्गतसूर्यः एतैः सदृशं रक्तमित्यर्थः। पुनः 'सव्वोउअ'त्ति। सर्वर्तुकानि सुरभीणि कुसुमानि येषु तान्येवंभूतानि माल्यदामानि-ग्रथितपुष्पमाला यत्र स तथा तं। क्वचित् 'सव्वोउअसुरभिकुसुमआसत्तमल्लदामे'ति पाठः तत्राऽऽसक्तानि भूमौ-लग्नानि शेषं प्राग्वत्। 'ऊसिअ'त्ति। उच्छ्रितः श्वेतो ध्वजो यत्र स तं 'महामेह'त्ति। महामेघस्य यद्रसितं-शब्दितं तद्वद्गम्भीरः स्निग्धः-स्नेह-वान्निर्घोषो यस्य स तथा तं 'सत्तुहिअ'त्ति। शत्रूणां हृदयानि-मनांसि कम्पयति यः स शत्रुहृदयकम्पनः 'पभाए अ'त्ति। प्रभाते च-सूर्योदयसमये सश्रीकम्-अतिशयेन शोभमानं रक्तस्य शेषकालापेक्षया प्रभाते-ऽतिदीप्तिमत्त्वात्। यद्वा-प्रभाते भरतस्तादृशं रथमारूढः। अत एव रथः किं लक्षणं? सश्रीकं स्वामी-संयुक्तश्च रथोऽतिसश्रीक एव स्यादित्यर्थः। अथवा प्रभायास्तेजः-प्रकाशस्तेन सश्रीकमित्यखण्ड रथविशेषणं 'णामेण य'त्ति। नाम्ना च पृथिव्या विजयलाभहेतुत्वात् सान्वर्थनामकं पृथिवीविजयलाभ-मिति विश्रुतं सर्वत्र विख्यातम्। किं लक्षणो भरत? 'लोग'त्ति। लोके-मर्त्याऽमर्त्यरूपे विश्रुतं यशो यस्य स लोकविश्रुतयशाः। रथं किं भूतम्? अहत-क्वाऽपि विषमप्रदेशादौ सङ्ग्रामे वा अस्खलितप्रचारं-चतुर्घण्ट-चतसृषु दिक्षु चतस्रो घण्टा यस्य स तम्। एवंविधमश्वरथं पौषधिको नरपतिः दूरूढ आरूढः। ननु पौषधिकस्य रथाऽऽरोहणं कथम्? इति चेत्। उच्यते-न चायं पौषधो व्रतरूपः किन्तु देवताऽऽरा-धननिमित्तमभिग्रहस्वरूपेणोपवासत्रयरूपस्तस्मिंश्च सति रथारोहणं नाऽयुक्तम्। यद्यप्युपवासत्रयपूर्ती पौषधिकत्वाऽसम्भवस्तथापि उद्दिष्टकार्यसिद्धिं यावत्पारणकाऽभावेन तथाव्यपदेशोऽविरुद्धः। ऋषभ-चरित्रे तु

पौषधान्ते समारुह्य स्यन्दनं मेदिनीपतिः। प्रविवेश पयोराशिं पाशपाणिरिवाऽपरः ॥१॥ इति। अथ रथाऽऽरूढो भरतो यत्कृतवांस्तदाह-'तते णमि'त्यादि। ततस्तदनन्तरं भरतो राजा चतुर्घण्टमश्व-रथमारूढः सन् इत्यादि शेषमुक्तव्यतिरिक्तं वक्तव्यं सूत्रं तथैव यथा प्रागुक्तं। कियद्दूरम्? इत्याह-

'जाव दाहिणे'त्यादि। यावद्दक्षिणाभिमुखो वरदामतीर्थेन-वरदामनाम्नाऽवतरणमार्गेण लवणसमुद्रमवगाहते। यावत्करणात् 'हयगयरहपवरजोहकलिआए सेणाए सद्धिं संपरिवुडे' इत्यादि 'पक्खुभिअ महासमुद्दरवभूअं पिव करेमाणे करेमाणे' इत्यन्तं दृश्यम्। कियद्दूरमवगाहते ? इत्याह-'जाव से रहवरस्से'त्यादि। यावत्तस्य रथस्य कूर्परौ-चक्रनाभेरग्रभागौ आर्द्रीभवतः। यावत्प्रीतिदानं से-तस्य भरतस्य। एवं सामान्यतः शेषमस्मिन्नपि मागधतीर्थदेवकुमारस्थाने वरदामतीर्थकुमारदेवेत्यादि विशेषोऽनुक्तोऽपि वाच्यः। अथ प्रीतिदानमधिकृत्य विशेष सूत्रत एवाह-'णवरि'त्ति। नवरमितिपदमतिदेशे विशेषद्योतकं तेन हारमुकुटादि प्रीतिदानस्थाने चूडामणिमित्यादि वक्तव्यम्। तत्र चूडामणिर्नाम सर्वविषापहारि प्रभावयुक्तं शिरोऽलङ्कारभूतं रत्नविशेषस्तमपि दिव्य-सर्वोत्कृष्टम्। 'उरत्थ'त्ति। उरस्थं हारं, ग्रैवेयकं च-ग्रीवाभरणं, श्रोणिसूत्रं च-कटीसूत्रं, कटकानि प्रतीतानि, त्रुटितानि च-बाहुरक्षकाः 'जाव'त्ति। यावत् दाक्षिणात्योऽन्तपाल दक्षिणदिग् भरतान्तं यावत् भरतक्षेत्रपालक इत्यर्थः। यावत्करणात् 'वत्थाणि अ आभरणाणि अ सरं च नामाहतगं वरदामतित्थोदगं चे'त्यादि यावत् 'अहं णं देवाणुप्पिआणं विसयवासी, अहं णं आणत्ति किं करे'त्ति पर्यन्तं प्रागुक्तं सूत्रं वक्तव्यं ततोऽपि यावदष्टाहिका महामहिमा श्रेणिप्रश्रेणयः कुर्वन्ति कृत्वा च एतामाज्ञप्तिकां प्रत्यर्प्पयन्ति। अत्रापि यावत्करणात् भरतोऽपि प्रीतिदानं प्रतीच्छति प्रतीच्छ्य च वरदामतीर्थकुमारं वस्त्रादिना सत्कारयति सन्मानयति प्रतिविसर्ज्जयति च। अथ चक्ररत्नं किं कृतवद् ? इत्याह-'तए णमि'त्यादि। ततो वरदामतीर्थकुमारस्य सम्बन्धिन्यामष्टाहिकाया महामहिमाया निर्वृत्ताया सत्या तद्दिव्यं चक्ररत्नमायुधशालातः प्रतिनिष्क्रामति प्रतिनिष्क्रम्याऽन्तरिक्षप्रतिपन्नं यावत्पूरयदेवाम्बरतलमित्यादि। अत्र यावत्करणात् यक्षसहस्रसम्परिवृतमित्यादि 'उत्तरे'त्यादि। उत्तरपश्चिमां दिशं वायव्यकोणं प्रतीत्येत्यर्थः। प्रभासतीर्थाभिमुखं प्रयातं चाप्यभवत्। अथ भरतोऽपि तथैव पश्यन् किं करोति ? इत्याह-'तए णं से'इत्यादि सुगमम्। 'तहेव'त्ति। तथैव यथा स्कन्धावारादिनिवेशपौषधशालाकारणाष्टमभक्तविधानमज्जनगृहप्रवेशनिर्गमप्रभृतिकं प्रागुक्तं तथाऽत्रापि भणितव्यम्। कियद्दूरम् ? इत्याह-'जाव पच्चत्थिमदिसाभिमुहे' इत्यादि यावत्करणात् 'पभासतित्थाभिमुहं पयाय पासइ पासित्ता हट्ठ'त्यादि 'पक्खुभिअमहासमुद्दरवभूअं पिव करेमाणे करेमाणे' इत्यन्तं। 'पच्चत्थिम'त्ति। पश्चिमदिगभिमुखं प्रभासतीर्थेन प्रभासतीर्थनाम्नाऽवतरणमार्गेण लवणसमुद्रमवगाहते, अवगाह्य 'जाव से रह'त्ति। यावत् तस्य रथस्य कूर्परावार्द्रौ स्याताम् यावत्करणात् 'तए णं से भरहे राया तुरए णिगिण्हाति, रहं ठवेति, धणुं परामुसति'इत्यादि यावत् 'पीइदाणं से' इत्यन्तं प्राग्वद्वाच्यम्। प्रीतिदाने विशेषमाह-'नवरमि'त्यादि। नवरमयं विशेषः-माला, मुकुट, मुक्ताजाल, हेमजाल, कटकादीनि प्रतीतानि। शरं च नामाहतं, प्रभासतीर्थोदकं च गृह्णाति, गृहीत्वा च यावत् पश्चिमेन प्रभासतीर्थमर्यादया 'अहं देवाणुप्पिआणं विसयवासी'त्यादि सर्वं प्राग्वत्। 'पच्चत्थिमिल्लेण'त्ति पाश्चात्योऽन्तपाल -पश्चिमदिग्भरतक्षेत्रपालकः 'सेस'त्ति। शेषमुक्तविशेषव्यतिरिक्तं प्रीतिदानोपनयनस्वीकरणदायकसन्मानविसर्जनादि सर्वं तथैव यथा मागधतीर्थकुमारदेवाधिकारे भणितं यावदष्टाहिका महिमा निर्वृत्तेति।

अथ प्रभासतीर्थकुमारस्याष्टाहिकाया निर्वृत्ताया सत्या चक्ररत्नं किं कृतवद् ? इत्याह

तए णं से दिव्वे चक्करयणे पहासतित्थकुमारस्स देवस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहघरसालाओ पडिणिक्खमति, पडिणिक्खमित्ता जाव पूरेंते चेव अंबरतलं सिंधूए महाणईए दाहिणिल्लेणं कूलेणं पुरत्थिमं दिसिं सिंधुदेवीभवणाभिमुह पयाए आविहोत्था। तए णं से भरहे राया तं दिव्वं चक्करयणं सिंधूए महाणईए दाहिणिल्लेणं कूलेणं पुरत्थिमं दिसिं सिंधुदेवी भवणाभिमुहं पयातं पासति, पासित्ता हट्ठतुट्ठचित्त तहेव जाव जेणेव सिंधुदेवीए भवणं तेणेव उवागच्छति, उवागच्छित्ता सिंधुदेवीए भवणस्स अदूरसामंते दुवालस जोअणाइं आयामं नव जोअणाइं विच्छिण्णं वरनगरविजयखंधावारणिवेसं करेति जाव सिंधुदेवीए अट्ठमभत्तं पगिण्हति, पगिण्हित्ता पोसहसालाए पोसहिए जाव बंभयारी जाव दब्भसंथारोवगए अट्ठमभत्तीए सिंधुदेविं मणसी करेमाणे चिट्ठति।

तते ण तस्स भरहस्स रण्णो अट्ठमभत्तंसि परिणममाणंसि सिंधूए देवीए आसणं चलति। तए णं सा सिंधुदेवी आसणं चलितं पासति, पासित्ता ओहिं पउंजति, पउंजित्ता भरहं रायं ओहिणा आभोएति, आभोएत्ता अयमेआरूवे अज्झत्थिए चिंतिए पत्थिए मणोगए सकप्पे समुप्पज्जित्था। उप्पन्ने खलु भो! जंबुद्दीवे दीवे भारहे वासे भरहे णामं राया चाउरंतचक्कवट्टी। तं जीअमेअं तीअपच्चुप्पण्णमणागयाणं सिंधूणं देवीणं भरहाणं रायाणं उवट्ठाणिअं करेत्तए। तं गच्छामि णं अहंपि भरहस्स रण्णो उवट्ठाणिअं करेमि त्तिकट्टु कुंभट्ठसहस्सं रयणचित्तं नाणामणिकणगरयणभत्तिचित्ताणि अ दुवे कणगभद्दासणाणि अ कडगाणि अ तुडिआणि अ जाव आभरणाणि अ गेण्हति, गेण्हित्ता ताए उक्किट्ठाए जाव एवं वयासी—अभिजिए णं देवाणुप्पिएहिं केवलकप्पे भारहे वासे अहं णं देवाणुप्पिआणं विसयवासी देवाणुप्पिआणं आणत्ति किंकरी तं पडिच्छतु णं देवाणुप्पिआ! मम इमेतारूवं पीतिदाणंतिकट्टु कुंभट्ठसहस्सं रयणचित्तं नाणामणिकणगकडगाणि अ जाव सो चेव गमो जाव पडिविसज्जेति। तते णं से भरहे राया पोसहसालातो पडिणिक्खमति, पडिणिक्खमित्ता जेणेव मज्जणघरे तेणेव उवागच्छति, उवागच्छित्ता ण्हाए कयबलिकम्मे जाव जेणेव भोअणमंडवे तेणेव उवागच्छति, उवागच्छित्ता भोअणमंडवंसि सीहासणवरगए अट्ठमभत्तं पारेति, पारेत्ता जाव सीहासणवरगए पुरत्थाभिमुहे णिसीअति, णिसीइत्ता अट्ठारस सेणिप्पसेणीओ सद्दावेति, सद्दावेत्ता जाव अट्ठाहिआए महामहिमाए तमाणत्तिअं पच्चप्पिणति॥

'तए णमि'त्यादि । ततस्तदनन्तरं चक्ररत्नम् आयुधगृहशालात प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च यावदम्बरतलं पूरयदेव सिन्धोर्महानद्यां दाक्षिणात्ये कूले पौरस्त्या दिश सिंधुदेवीभवनाभिमुख प्रयात चाप्यभवत् । 'तते णमि'त्यादि । तत. स भरतो राजा तादृश चक्ररत्न पश्यति दृष्ट्वा च हृष्टः तुष्टेत्यादि प्राग्वत् । यावत् चक्ररत्नमनुव्रजन् भरतो यत्रैव सिन्धुदेव्या भवन तत्रैवोपागच्छति, सिन्धुदेवीभवनसमीपे उपागत्य तत्र विजयस्कन्धावारनिवेश करोति कृत्वा च यावत्सिन्धुदेव्या अष्टमभक्त प्रगृह्णाति । यावत्करणात्–'वड्ढइरयण सद्दावेइ सद्दावेत्ता एव वयासी–जाव मम आवसह पोसहसाल चे' त्यादि । अष्टमभक्त प्रगृह्य च पौषधशालाया पौषधिकोऽष्टमभक्तिक सिन्धुदेवी मनसि कुर्वंस्तिष्ठति । 'तते णमि'त्यादि । 'उवत्थाणिअ करेमित्तिकट्टु' पर्यन्त सुगमम् । अथोत्थानिकमाह–'कुम्भट्ठे'त्यादि । कुम्भाना घटानामष्टसहस्रम्–अष्टाधिकसहस्र कथ भूत ? 'रयण'त्ति । रत्नाना चित्राणि यस्मिन् तत्तथा चित्रसयुक्त सर्वात्मना रत्नमयमित्यर्थ । तथा 'नाणामणि'त्ति । नानामणि कनकरत्नैर्भक्त्याचित्राणि ययोस्ते तथा । चकार समुच्चये । 'दुवे'त्ति । द्वे कनकभद्रासने बहुवचन च प्राकृतत्वात्, कटकानि च, त्रुटिकाश्च–बाहुरक्षकास्तान् यावदाभरणानि गृह्णाति, गृहीत्वा च 'ताए उक्किट्ठाए'इत्यादि यावत् 'जएण विजएण वद्धावेति'त्ति प्राग्वत् । यावदागत्य एवमवादीत् 'अभिजिए णति'ति प्राग्वत् । 'अह ण' ति । अह णमित्यलङ्कारे देवाऽनुप्रियाणा विषयवासिनी सिन्धुदेवी तदह देवानुप्रियाणामाज्ञप्तिका किङ्करी तत्प्रतीच्छन्तु देवानुप्रिया ! ममेतद्रूप प्रीतिदानमिति कृत्वा–एव भणित्वा रत्नचित्रमष्टोत्तरकुम्भसहस्रं नानामणिकनकभक्तिचित्रे द्वे च भद्रासने, कटकानि च 'जाव सो चेव'त्ति । यावत् स एव गमो यो मागधतीर्थकुमाराधिकारे उक्त पर नामाङ्कितशरवर्ज्जं वक्तव्य स्त्रीत्वेन देवी प्रति तस्याऽनिक्षिप्तत्वात् । कियद्दूरम् ? इत्याह–'जाव'त्ति । यावत्प्रतिविसर्ज्जयति । यावत्करणात् तत स भरतो राजा सिन्धुदेव्याः सकाशात् इदमेतद्रूप प्रीतिदान प्रतीच्छति, प्रतीच्छ्य च सिन्धुदेवी सत्कारयतीत्यादि । अथ भरतो यत्कृतवांस्तदाह–'तते णमि'त्यादि । तत सिन्धुदेवीविसर्ज्जनानन्तर भरतो राजा पौषधशालात प्रतिनिष्क्रामति, प्रतिनिष्क्रम्य च यत्रैव मज्जनगृह तत्रैवोपागच्छति, उपागत्य स्नात इत्यादि सर्व्वं प्राग्वत् । यावदष्टमभक्त पारयति 'जाव सीहासणे'त्यादि । यावत्सिहासनवरगत यावत्करणात् 'भोअणमडवाओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव सीहासणे तेणेव उवागच्छति'त्ति । पौरस्त्याभिमुखो निषीदति निषद्य च 'अट्ठारसे'त्यादि 'तमाणत्तिअ पच्चप्पिणती'ति पर्यन्त प्राग्वत् ।

**तए णं से दिव्वे चक्करयणे सिंधूए देवीए अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहघरसालाओ तहेव जाव उत्तरपुरत्थिमं दिसिं वेअड्ढपव्वयाभिमुहे पयाए आवि होत्था । तए णं से भरहे राया जाव जेणेव वेअड्ढपव्वए जेणेव वेअड्ढस्स पव्वयस्स दाहिणिल्ले णितंबे तेणेव उवागच्छति, उवागच्छित्ता वेअड्ढस्स पव्वयस्स दाहिणिल्ले णितंबे दुवालस जोअणायामं नव जोअणविच्छिण्णं वरनगरसरिसं विजयखंधावारनिवेसं करेति, करेत्ता**

जाव वेअड्ढगिरिकुमारस्स देवस्स अट्ठमभत्तं पगिण्हति पगिण्हित्ता पोसहसालाए जाव अट्ठमभत्तीए वेअड्ढगिरिकुमारं देवं मणसि करेमाणे करेमाणे चिट्ठति । तए णं तस्स भरहस्स रण्णो अट्ठमभत्तंसि परिणममाणंसि वेअड्ढगिरिकुमारस्स देवस्स आसणं चलति एवं सिंधुगमो णेअव्वो । पीतिदाणं आभिसेक्कं भंडालंकारं कडगाणि अ तुडिआणि अ वत्थाणि अ आभरणाणि अ गेण्हति, गेण्हेत्ता ताए उक्किट्ठाए जाव अट्ठाहिअं महामहिमं जाव पच्चप्पिणंति ! तए णं से दिव्वे चक्करयणे अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए जाव पच्चत्थिमं दिसिं तमिसगुहाभिमुहे पयाए आवि होत्था । तए णं से भरहे राया दिव्वं चक्करयणं जाव पच्चत्थिमदिसिं तमिसगुहाभिमुखं पयातं चापि पासति, पासित्ता हट्ठतुट्ठचित्तमाणंदिए० जाव तमिसगुहाए अदूरसामंते दुवालस जोअणायामं नव जोअणविच्छिण्णं जाव कयमालस्स देवस्स अट्ठमभत्तं पगिण्हति, पगिण्हित्ता पोसहसालाए पोसहिए बंभचारी जाव कयमालकं देवं मणसि करेमाणे चिट्ठति । तए णं तस्स भरहस्स रण्णो अट्ठमभत्तंसि परिणममाणंसि कयमालस्स देवस्स आसणं चलति । तहेव जहा वेअड्ढगिरिकुमारस्स । नवरिं पीतिदाणं इत्थीरयणस्स तिलगचोद्दसं भंडालंकारं कडगाणि अ जाव आभरणाणि अ गेण्हति, गेण्हेत्ता ताए उक्किट्ठाए जाव सक्कारेति सम्माणेति सक्कारेत्ता सम्माणेत्ता पडिविसज्जेति जाव भोअणामंडवं तहेव महामहिमा कयमालस्स पच्चप्पिणंति ॥

'तए ण से दिव्वे' इत्यादि । 'पयाए आवि होत्थ'त्ति पर्यन्त प्राग्वत् । तत्र 'उत्तर'त्ति । उत्तरपौरस्त्या दिशमीशानकोण प्रतीति । 'तए ण से भरहे'इत्यादि 'चिट्ठती'ति पर्यन्त प्राग्वत् । 'तए ण तस्से' त्यादि । 'सिंधुगमो णेअव्वो'त्ति पर्यन्त प्राग्वत् । पर सिंधुदेवीस्थाने वैताढ्यगिरिकुमार इति वक्तव्य । 'पीतिदाण'ति । प्रीतिदानोपनयन, तत् स्वीकार, प्रीतिदानोद्यतस्य देवस्य सन्मानादिक सर्व्वं यावत् 'पच्चप्पिणती'ति पर्यन्त प्राग्वत् । तत्र 'आभिसेक्क'ति । अभिषेकयोग्य भाण्डालङ्कार–भाण्डेषु अलङ्कारभूत प्रधानभाण्डविशेषम् अलङ्कारभाण्ड वा प्राकृतत्वाद्व्यत्यय. । यद्वा–भाण्डानि च अलङ्काराश्चेति समाहारद्वन्द्व । कटकानि प्रतीतानि 'ताए उक्किट्ठाए'त्ति । तया उत्कृष्टया यावदष्टाह्निका महामहिमा यावत्करणात् 'तुरिआए'इत्यादि 'जेणेव भरहे राया तेणेव उवागच्छति, उवागच्छित्ता अतलिक्खपडिवण्णे जाव करयलपरिग्गहिअ सिरसा जाव अजलि कट्टु भरह राय जएण विजएण वद्धावेति, वद्धावेत्ता एव वयासी–अभिजिएण देवाणुप्पिएहिं केवलकप्पे भारहे वासे अह ण देवाणुप्पिआण विसयवासी अह ण देवाणुप्पिआण आणत्तिकिकरे पडिच्छतु ण देवाणुप्पिआ ! मम एआरूव पीतिदाणतिकट्टु' इत्यादि । यावत् 'वेअड्ढगिरिकुमार सक्कारेति'इत्यादि यावत् 'मज्जनगृहान् निष्क्रम्य भोजनमण्डपे

सिंहासनवरगतोऽष्टमभक्तं पारयति यावत् आस्थानसभागत. श्रेणिप्रश्रेणीः शब्दापयित्वा 'जाव'त्ति। यावत्प्रत्यर्प्पयन्ति। यावत्करणात् वैताढ्यगिरिकुमारस्य अष्टाह्निकामहोत्सव कृत्वा आज्ञप्तिकामिति। अथ चक्ररत्नं यत्कृतवत्तदाह—'तए ण से' इत्यादि। ततस्तद्दिव्य चक्ररत्नम् अष्टाहिकामहिमानन्तर पश्चिमां दिश तमिस्रागुहाभिमुखं प्रयात चाप्यभवत्। 'तए ण से भरहे राय'त्ति। ततस्तादृशं चक्ररत्न दृष्ट्वा भरतो राजा हृष्ट' तुष्ट इत्यादि प्राग्वत् सुगम च। तत्र कृतमालदेव मनसि ध्यायंस्तिष्ठति। 'तए णमि'त्यादि ततस्तस्य भरतस्य राज्ञोऽष्टमभक्ते परिणमति सति कृतमालस्य देवस्यासन चलति। अतिदेशमाह—'तहेव'त्ति यथा वैताढ्यगिरिकुमारस्य देवस्य तथैवाऽस्यापीत्यर्थ.। विशेषमाह—'नवरिमि' त्यादि। प्रीतिदाने स्त्रीरत्नस्य योग्यमिति शेष। तिलकं चतुर्द्दश यत्र तत्तिलकचतुर्द्दशम्। तच्चैव

हारद्धहार इग कणय दप्पण मुत्तावलीउ केकरे कडए। तुडिअ मुद्दा कुंडलओ उरसुत्त चूलमणि तिलयं ॥१॥ इति। एवविधं भाण्डालङ्कारम्—अलङ्कारजात 'कडगाणि अ'त्ति। कटकानि च यावदाभरणानि च यावत्करणात् त्रुटितादीनां सङ्ग्रह। तत्र कटकादीनि स्त्रीपुरुषसाधारणानीति न पौनरुक्त्यशङ्काऽपि। 'तहेव'त्ति। यथा वैताढ्यकुमारदेवादेस्तथैव महामहिमा कृतमालस्यापि 'पच्चप्पिणति' त्ति प्राग्वत् ॥

अथ भरत किं कृतवान्? इत्याह

**तए णं से भरहे राया कयमालस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए सुसेणं सेणावतिं सद्दावेति, सद्दावेत्ता एवं वयासी—गच्छाहि णं भो देवाणुप्पिआ! सिंधूए महाणईए पच्चत्थिमिल्लं णिक्खुडं ससिंधुसागरगिरिमेरागं समविसमणिक्खुडाणि अ ओयवेहि, ओयवेत्ता अग्गाइं वराइं रयणाइं पडिच्छाहि, पडिच्छित्ता मम एअमाणत्तिअं पच्चप्पिणाहि। तए णं से सेणाबलस्स णेता भरहवासंमि विस्सुअजसे, महाबलपरक्कमे, महप्पा, ओअंसी तेअलक्खणजुत्ते, मिलक्खुभासाविसारए, चित्तचारुभासी, भरहे वासंमि णिक्खुडाणं णिण्णाण य दुग्गमाण य दुक्खपवेसाण य विआणए, अत्थसत्थकुसले रयणं सेणावई सुसेणे भरहेणं रण्णा एवं वुत्ते समाणे हट्ठतुट्ठचित्तमाणदिए जाव करयलपरिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—एवं सामी तहत्ति आणाए विणएणं वयणं पडिसुणेति, पडिसुणेत्ता भरहस्स रण्णो अंतिआओ पडिणिक्खमति, पडिणिक्खमित्ता जेणेव सए आवासे तेणेव उवागच्छति, उवागच्छित्ता कोडुंबिअपुरिसे सद्दावेइ,सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ! आभिसेक्कं हत्थिरयणं पडिकप्पेह, हयगयरहपवर जाव चउरंगिणिं सेणं सन्नाहेहत्ति कट्टु जेणेव मज्जणघरे तेणेव उवागच्छति, उवागच्छित्ता मज्जणघरं अणुपविसति, अणुपविसित्ता**

ण्हाए कयबलिकम्मे कयकोउअमंगलपायच्छित्ते सन्नद्धबद्धवम्मिअकवए उप्पीलिअसरासणपट्टिए पिणद्धगेविज्जे बद्धआविद्धविमलवरचिंधपट्टे गहिआउहप्पहरणे अणेगगणनायग जाव सद्धिं संपरिवुडे सकोरेंटमल्लदामेणं छत्तेणं धरिज्जमाणेणं मंगलजयसद्दकयालोए मज्जणघराओ पडिणिक्खमति, पडिणिक्खमित्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव आभिसेक्के हत्थिरयणे तेणेव उवागच्छति, उवागच्छित्ता आभिसेक्कं हत्थिरयणं दुरूढे। तए णं से सुसेणे सेणावई हत्थिखंधवरगए सकोरेंटमल्लदामेणं छत्तेणं धरिज्जमाणेणं हयगयरहपवरजोहकलिआए चउरंगिणीए सेणाए सद्धिं संपरिवुडे महता भडचडगरपहकरवंदपरिक्खित्ते महया उक्किट्ठसीहणायबोल कलकलसद्देणं समुद्दरवभूअं पिव करेमाणे करेमाणे सव्विड्ढीए सव्वजुत्तीए सव्वबलेणं जाव णिग्घोसणाइअरवेण जेणेव सिंधू महाणदी तेणेव उवागच्छति, उवागच्छित्ता चम्मरयणं परामुसइ। तते णं तं सिरिवच्छसरिसरूवं मुत्तातारद्धचंदचित्तं अयलमकंप अभिज्जकवयं जंत सलिलासु सागरेसु अ उत्तरणं दिव्वं सणसत्तरसाइं सव्वधण्णाइं जत्थ रोहंति एगदिवसेण वाविआइं, वासं णाऊण य चक्कवट्टिणा परामुट्ठे दिव्वचम्मरयणे दुवालस जोअणाइं तिरिअं पवित्थरति तत्थ साहिआइं। तए णं से दिव्वे चम्मरयणे सुसेणेणं सेणावइणा परामुट्ठे समाणे खिप्पामेव णावाभूते जाते आवि होत्था। तते णं से सुसेण सेणावती सखंधावारबलवाहणे णावाभूअं चम्मरयणं दुरूहति दुरूहित्ता सिंधुमहाणइं विमलजलतुंगवीचिं नावाभूतेणं चम्मरयणेणं सबलवाहणे ससासणे समुत्तिण्णे। ततो महाणइमुत्तरित्तु सिंधुं अप्पडिहयसासणे अ सेणावती कहिंचि अ-गामागरणगरपव्वयाणि खेडमडंबाणि पट्टणाणि अ सिंहलए बब्बरे अ सव्वं च अंगलोगं च लावगं च परमरम्म जवणदीवं च पवरमणिकणगरयणकोसागारससिद्धं आरबके रोमके अ अलसंडविसयपिक्खुरे कालमुहे जोणए अ उत्तरवेअड्ढसंसिआओ मिच्छजाई बहुप्पगारा दाहिणअवरेण जाव सिंधुसागरंतोत्ति सव्वपवरकच्छं च ओयवेत्तूण पडिनिअत्तो बहुसमरणिज्जे भूमिभागे अ तस्स कच्छस्स सुहणिसन्ने। ताहे ते जणवया, नगराण, पट्टणाण य जे अ तहिं सामिआ पभूता आगरपती अ मंडलपती अ पट्टणपती अ सव्वे घेत्तूण पाहुडाइं आभरणाणि रयणाणि भूसणाणि अ वत्थाणि अ महारिहाणि अण्णं च जं वरिट्ठं रायारिहं जं च इच्छिअव्वं एअं सेणावइस्स उवणेंति मत्थयकयंजलिउडा, पुणरवि काऊणं अंजलिं मत्थयंमि पणया तुब्भे अम्हित्थ सामिआ देवयं व सरणागया मो तुब्भं विसयवासित्ति

**विजयं जंपमाणा सेणावतिणा जहारिहं ठविअपूइअविसज्जिआ निअत्ता सगाणि सगराणि पट्ट-णाणि अ अणुपविट्ठा । ताहे सेणावती सविणओ घेत्तुण पाहुडाणि आभरणाणि रयणाणि भूसणाणि अ पुणरवि तं सिंधुनामधेज्ज उत्तिण्णे अणहसासणबले । तहेव रण्णो भरहाहिवस्स निवेदेति, निवेदेत्ता य अप्पणित्ता य पाहुडाइं सक्कारिअ सम्माणिय सहरिसे विसज्जिए सगं पडिमंडवमतिगए । तते णं से सुसेणे सेणावती ण्हाए कयवलिकम्मे कयकोउअमंगलपाय-च्छित्ते जिमिअभुत्तुत्तरागए समाणे जाव सरसगोसीसचंदणाणुलित्तगत्तसरीरे उप्पिं पासाद-वरगए फुट्टमाणेहिं मुइंगमत्थएहिं बत्तीसतिबद्धेहिं नाडएहिं वरतरुणीसंपउत्तेहिं उवणच्चिज्जमाणे उवणच्चिज्जमाणे उवगिज्जमाणे उवगिज्जमाणे उवलालिज्जमाणे उवलालिज्जमाणे महयाहयणट्टगीअवाइअतंतीतलतालतुडिअघणमुइंगपडुप्पवाइअरवेणं इट्ठे सद्दफरिसरसरूवगंधे पचविहे माणुस्सए कामभोगे भुंजमाणे विहरति ।।**

'तए ण से' इत्यादि । तत स भरतो राजा कृतमालस्याष्टाह्निकाया महामहिमाया निर्वृत्ताया सत्या सुषेण सेनापतिं शब्दापयति शब्दापयित्वा च एवमवादीत्—'गच्छाहि ण'त्ति । गच्छ भो देवानुप्रिय ! सिन्धोर्महानद्या पश्चिमदिग्वर्त्तिन निष्कुटम्—अखण्डखण्डरूप भूप्रदेश । किं मर्यादमित्याह-'ससिंधु'त्ति । सिन्धुश्च सागरश्च गिरिश्च सिन्धुसागरगिरय तैर्हेतुभूतैर्या मर्यादा सा सिन्धुसागरगिरि-मर्यादा तया सह वर्त्तते य स ससिन्धुसागरगिरिमर्यादस्त । च समुच्चये । 'समविसम'त्ति । समाश्च विषमाश्चेत्येवंविधा ये निष्कुटा —अखण्डखण्डरूपस्य भूप्रदेशविशेषस्यावान्तराऽवयवविशेषा इत्यर्थ । यद्वा-समाश्च-समप्रदेशास्तद्वर्त्तिन सुखसाध्या दुर्गादयो वा, विषमास्तद्विलक्षणा , निष्कुटाश्च तेष्वेवान्त्य-वर्त्तिनो विषमप्रदेशा । ते च सर्व्वेऽपि पश्चिमदिग्वर्त्तिन. खण्डस्यावान्तराऽवयवविशेषास्तान् । अनेन भणनेन भो सुषेण ! पश्चिमखण्ड साधयता त्वया तदन्तर्वर्त्ती कश्चिदपि प्रदेश किमनेनाऽकिञ्चित्करे-णेत्येवरूपेण नोपेक्ष्य । परिहरणीय इति ज्ञापित । तावन्मात्रेऽप्यसाधिते षट्खण्डाधिपतित्वाऽसम्भव । 'ओयवेहि'त्ति । क्रियाशब्द साधनार्थे प्रवचने प्रतीत । ओयवय-साधय निजाऽऽज्ञाप्रवर्त्तनेनात्म-सात्कुर्वित्यर्थ । साधयित्वा चाग्र्याणि—मूल्यत प्रधानानि वराणि—कान्त्यादिगुणोत्कटानि रत्नानि-कर्क्केतनादीनि प्रतीच्छ-गृहाण, प्रतीच्छ्य च तत्तद्देशाधिपत्युपनीतानि गृहीत्वेत्यर्थ । 'ममे'त्यादि । ममेतामाज्ञप्तिका प्रत्यर्प्पयेति । अथैव भरताऽऽज्ञामवाप्य सेनापति किं कृतवान् ? इत्याह—तए ण से' इत्यादि । ततो—भरताऽऽज्ञानन्तरम्—'एव सामी तहत्ति आणाए विणएण वयण पडिसुणेति'त्ति पर्यन्त सम्बन्ध । किंलक्षण ? सेनापति ? सेनावलस्य-भरतसैन्यस्य नेता-स्वामी भरते वर्षे-भरतक्षेत्रे विश्रुतयशा - सर्व्वत्र प्रसृतकीर्त्ति । पुन कीदृश ? महाबलपराक्रम -वल-मनोवीर्यं, पराक्रम -कायसामर्थ्यं ततो द्वन्द्व । महान्तावनन्यसदृशौ वलपराक्रमौ यस्य स तथा । अत एव महात्मा-अतुच्छस्वभाव । ओजस्वी-वलवान् । 'तेअ'त्ति । तेज —शरीरकान्ति , लक्षणानि च द्वात्रिंशत्तैर्युक्त । 'मिलक्खु'त्ति । म्लेच्छविशेषास्तेषा

भाषा-वाक् तत्र विशारदो-निपुण 'चित्त'त्ति । चित्रमाश्चर्यं यथास्यात्तथा चारुभाषी-मनोज्ञवक्ता भारते वर्षे निष्कुटाना विज्ञक.-परिज्ञानवान् । निष्कुटविशेषणान्याह—'णिण्णाण य'त्ति । निम्नानामधोवनताना दुर्गमाना-दु खेन गमन पादाभ्या येषु ते तथा तेषां दुःप्रवेशानां—रज्ज्वाद्यवलम्बनेनापि प्रवेशानर्हाणां । यद्वा-सव्वाण्यपि विशेष्यवाचकानि चकारा समुच्चये । 'अत्थे'त्ति । अर्थो-हिरण्यादि शास्त्रनीतिधर्म्मप्रतिपादको ग्रन्थस्तयो कुशलो-दक्ष- तद्विषयकनिष्णातमतिरित्यर्थः । सुषेण सेनापतीरत्न भरतेन राज्ञा एवमुक्त सन् 'हट्ठे'त्यादि प्राग्वत् । 'जाव'त्ति । यावत्करतलेत्यादि 'एव सामी'त्ति । एवं स्वामिन् ! तथेति आज्ञया विनयेन-द्रव्यतो भावतश्च नम्रीभावेन वचन प्रतिशृणोति, प्रतिश्रुत्य च भरतस्य राज्ञोऽन्तिकात्-समीपात्प्रतिनिष्क्रामति, प्रतिनिष्क्रम्य च यत्रैव स्वक -स्वकीय आवास तत्रैवोपागच्छति, उपागत्य कौटुम्बिकपुरुषान् शब्दापयति, शब्दापयित्वा च एवमवादीत्—क्षिप्रमेव भो देवानुप्रिया ! आभिषेक्यं हस्तिरत्न प्रतिकल्पयत 'हयगयरथे'त्यादि । प्रागुक्तविशेषणविशिष्टां चतुरंगिणी सेना 'सन्नाहेह'त्ति । सन्नह्यत-सज्जीकुरुतेतिकृत्वा-भणित्वा यत्रैव मज्जनगृह तत्रैवोपागच्छति, उपागत्य च मज्जनगृहमनुप्रविशति, अनुप्रविश्य च स्नात --कृतस्नान 'कयवलि'त्ति । कृत वलिकर्म्म स्वगृहदेवाऽर्चनादिलक्षण येन स तथा 'कयकोउअ'त्ति । कृतानि कौतुकानि-दृष्टिपातसंरक्षणाय मषीतिलकादीनि, मङ्गलानि च सिद्धार्थकदध्यादीनि, तान्येव प्रायश्चित्तानि-दु स्वप्नादिविघातकानि येन स तथा । 'सन्नद्धे'त्यादि । सन्नद्ध -सन्नहनिकया तथा बद्धा-कसा वन्धनत , वर्म्मित'—वर्म्मतया कृतो ऽङ्गे निवेशनात् कवच.-कङ्कटो येन स तथा । तत. कर्म्मधारय । 'उप्पीलिअ'त्ति । उत्पीडिता-गुणसारेण कृता च पीडा शरासनपट्टिका-धनुर्दण्डो येन स तथा उत्पीडिता वा-बाहौ बद्धा शरासनपट्टिकावाहुपट्टको येन स तथा । 'पिणद्ध'त्ति । पिनद्ध-परिहित ग्रैवेयक-ग्रीवाऽऽभरण येन स तथा 'बद्ध'ति । बद्धो-वन्धनेनाऽऽविद्धः—परिहितो विम लवरचिह्नपट्टो-योधचिह्नपट्टो येन स तथा । तत. कर्म्मधारय. । 'गहिआउहे' त्यादि । गृहीतान्यायुधानि-शस्त्राणि प्रहरणानि-परेषां प्रहारकरणाय येन स तथा । अथवा आयुधान्यक्षेप्यशस्त्राणि खड्गादीनि, प्रहरणानि-प्रक्षेप्यशस्त्राणि नाराचादीनि तथा 'अणेगगणणायगे'त्यादि । यावत् सार्द्ध सम्परिवृत इत्यादि 'जेणेव सिंधुमहाणदी तेणेव उवागच्छती'ति । पर्यन्त प्राग्वद्व्याख्येयम् । अथ सुषेणनामा सेनापति सिन्धुसमीपमागत्य किं करोति ? इत्याह 'चम्मरयण'त्ति । चर्म्मरत्न परामृशति-पाणिना स्पृशति । अथ चर्म्मरत्नस्वरूपपरिज्ञानाय तद्वर्णकमाह—'तते ण तमि'त्यादि । तत शब्दोऽथार्थे स च वर्णकप्रारम्भे 'णमि'त्यलङ्कारे । तत् प्रागुक्त चर्म्मरत्न श्रीवत्ससदृशरूपम्—आकृत्या श्रीवत्ससदृश 'मुत्त'त्ति । मुक्ताश्च, ताराश्च अर्द्धचन्द्राश्च, चित्राणि यस्मिन् तत्तथा । 'अयल'ति । अचल—स्थिरस्वभाववत् नाग्निना दह्यते नापि जलेनार्द्रीस्यादित्यर्थ । अकम्प—मकलसैन्यभाराऽऽक्रान्तमपि न कम्पमात्रमाप्नुयात् । अभेद्य कवच इवाऽभेद्यकवच वाणादिनेति गम्य तथा 'जत'ति । यन्त्रमिव यन्त्रपोतकल्पमित्यर्थ । सलिलासु-नदीषु सागरेषु च—समुद्रेषु 'उत्तरण'ति । उत्तरणाय-पारगमनाय । चतुर्थ्यर्थे प्रथमा प्राकृतत्वात् । यद्वा—उत्तीर्यतेऽनेनेत्युत्तरणमुत्तरणहेतु । दिव्व'ति । दिव्य-प्रधान । पुन कीदृश ? 'सणसत्तरसाइ' इत्यादि । शणो-धान्यविशेषस्तेनोपलक्षितानि सप्तदश

सङ्ख्याकानि सर्व्वधान्यानि 'जत्थ'त्ति । यत्र चर्म्मरत्ने उप्तानि—निक्षिप्तबीजानि एकदिवसेन-दिवसमात्रकालेनैव रोहन्ति—जायन्ते निष्पद्यन्त इत्यर्थः । सप्तदश-धान्यानि त्विमानि

व्रीहिर्यवो मसूरो गोधूमो मुद्गमाषतिलचणका. । अणुकप्रियंगुकोद्रवमयूष्टकाः शालिमाढिक्य ॥१॥
किं च कलायकुलत्थौ शणश्च सप्तदश सर्व्वधान्यानि इति । यत्तु निशीथभाष्यादौ -

'धण्णाइ चउवीसं जवगोहुमसालिवीहिसट्ठिक्का । कोद्दव अणुआ कंगूरालग तिल मुग्ग मासा य ॥१॥
अयसि हरिमथ तिउडा निप्फाव-सिलिंद रायमासा य । इक्खू मसूर तुअरी कुलत्थ तह धण्णगकलाया ॥ २ ॥ इति चतुर्विंशति धान्यान्युक्तानि । तत्र शेषाणि सप्त धान्यानि कथञ्चिद्बहुसाधर्म्या-द्ययासम्भवमेतेष्वेवान्तर्भावनीयानि । तथा 'वास णाऊण य'त्ति । वर्ष-वृष्टिं ज्ञात्वा चक्रवर्तिना 'तत्थ'त्ति । तत्र तथाविध प्रयोजनविशेषे परामृष्टं चर्म्मरत्न द्वादश योजनानि साधिकानि तिर्यक् प्रविस्तरतीति प्रसङ्गतश्चर्म्मरत्नस्वरूपमुक्तम् । अथ प्रकृतमुच्यते 'तए ण से दिव्वे'इत्यादि । ततस्तद्दिव्य चर्म्मरत्न सुषेणेन सेनापतिना परामृष्टं सत् क्षिप्रमेव 'नावाभूअ'त्ति । नौभूत चाप्यभवत् । 'तते णमि' त्यादि । तत सुषेणो नाम्ना सेनापति 'सखंध'त्ति । स्कन्धावारस्य यानि वलवाहनानि बल-हस्त्यादि, वाहनानि च—राजवाहनादीनि तै सह वर्त्तते य स स्कन्धावारबलवाहन. नौभूत चर्म्मरत्नमारोहति, आरुह्य च सिन्धु महानदी 'विमल'त्ति । विमलजलसम्बन्धिन्यस्तुङ्गा—उच्चैस्तरा वीचयो यस्या सा ता । नौभूतेन चर्म्मरत्नेन सबलवाहन सशासन चक्रवर्त्याज्ञासयुक्तः समुत्तीर्ण । 'ततो महाणई'त्यादि । ततो महानदी सिन्धुमुत्तीर्य । क्वचिच्चेत्यत्र चकारोऽप्यर्थे । तेन क्वचिदपि अप्रतिहतशासनः—अनतिक्रमणीयाऽऽज्ञ सेनापति. 'गामागरे'त्यादि । ग्रामाकरनगरपर्व्वता प्रतीता । खेट-धूलिप्राकार, मडम्ब-सर्व्वतो द्वारर्वात्त सन्निवेशान्तर, तथा 'पट्टणाणि अ'त्ति । पत्तनानि-विविधदेशागतपण्यस्थानानि । पत्तन-रत्नभूमिरित्यन्ये । 'सिंहलए'त्ति । सिंहलदेशजान् एव बर्व्वरदेशजान् सर्व्वं च अङ्गलोक च लावलोक चेति अयोपि देशविशेपा । चकारा समुच्चयार्था । तथा 'परम'त्ति । परमरम्य यवनद्वीप च । रम्यत्वमेव विशेषणद्वारा व्यक्तीकरोति—'पवरे'त्यादि । प्रवराणा मणिकनकरत्नाना कोशागारैर्भाण्डागारै. समृद्ध तथा आरवकान् रोमकाश्चाऽनार्यदेशविशेपोद्भवमनुष्यान् 'अलसंड'त्ति । अलसश्च अण्डविपयश्च पिक्खु श्चेति देशविशेषा । तथा कालमुखान्—कालमुखदेशविशेषजन्मनो मनुष्यान् तथा यौनकान् तथा उत्तरवैताढ्यसश्रिता —सिन्धोरुत्तरदिग्वर्त्ति वैताढ्यसश्रिता म्लेच्छजातयो बहुप्रकारास्ता 'दाहिण'त्ति । दक्षिणापरेण-नैर्ऋतकोणेन यावत्सिन्धुसागरान्त-सिन्धुसागरपर्यन्तमित्यर्थ । इत्यमुना प्रकारेण सर्व्व-प्रवरकच्छ चकार सर्व्वत्राप्युक्तोऽनुक्तो वा समुच्चयार्थे द्रष्टव्य । 'ओयवेत्तूण'ति । साधयित्वा प्रतिनिवृत्त । तत परावृत्य तस्य कच्छस्य सिन्धुनदीसम्बन्धिन बहुसमरमणीये भूमिभागे 'सुहणिसन्ने'त्ति । सुखेनोपविष्ट । अथ सेनापतिना स्वात्मवशीकृता जनपदादयो यत्कुर्युस्तदाह-'ताहे ते' इत्यादि । ततस्ते जनपदा , नगराणा पत्तनाना च ये च स्वामिन , प्रभूता आकरपतय , मण्डलपतय पत्तनपत्तयश्च सर्व्वेऽपि गृहीत्वा प्राभृतानि, आभरणानि च रत्नानि च भूषणानि च वस्त्राणि च महार्घ्याणि—महामूल्यानि च

'अण्ण च'त्ति । उक्तेभ्योऽन्यत् यद्वस्तु वरिष्ठ-प्रधान राजार्हं-राजयोग्य यच्चेप्सितव्य—द्रष्टृणा श्रोतॄणां च प्राप्यतयाऽभीष्टम् । एतत्सेनापतेरुपनयन्तीत्यर्थं । कथं भूता. ? 'मत्थय'त्ति । मस्तके कृताऽञ्जलि-पुटा । पुनस्ते किं कुर्वन्त ? इत्याह 'पुणरवी'त्यादि पुनरपीति विसर्ज्जनावसरे मस्तकेऽञ्जलिं कृत्वा प्रणता—मस्तकादिना नम्रीभावमापन्ना । तथा 'तुब्भे'त्ति । यूयं 'अम्हि'त्ति । अस्माकम् 'इत्थ'त्ति । अत्र-भरतक्षेत्रे स्वामिनो-नायका । अत एव युष्मान् 'देवय व'त्ति । देवतामिव शरणागता' स्म. । युष्माक विषयवासिन इत्यमुना प्रकारेण मनोज्ञवचनैर्विजय—जयसूचकमर्थाद्वचनं जम्पन्तो-ब्रुवाणा: एव-विधा सेनापतिना सुषेणेन यथार्ह यथायोग स्थापितपूजितविसर्ज्जिता. । तत्र स्थापिता-स्वस्वसाध्य-कृत्येषु । पूजिता-पुष्पफलवस्त्रदानादिना । विसर्ज्जिता-पुनरागमसूचकैर्मनोहरवचनै. सन्तोष्य निजनिज-देशेषु प्रेषिता । तत कर्म्मधारय. । एवंविधा सन्तो निर्वृत्ता सेनापतिसमीपान्निर्गता. स्वकानि—स्व-कानि-निजानि निजानि नगराणि पत्तनानि चानुप्रविष्टा. । अथ सेनापति: किं कृतवान् ? इत्याह—'ताहे सेणावती'त्यादि । तत सेनापति सविनय यथौचित्येन तेषामपि वस्त्रादिदानसन्मानादिपरायण गृही-त्वा प्राभृतानि-प्राभृतीकृतवस्तूनि तानि च कानि ? इत्याह—'आभरणाणि'त्ति । आभरणानि—कनकरत्न-मयानि कुण्डलादीनि रत्नानि-कर्केतनादीनि, भूषणानि च आभरणविशेषरूपाणि मुक्ताफलादि-रचनाविशेषसमन्वितानि । पुनरपि प्रागुत्तीर्णाऽपेक्षया द्वितीयवारमित्यर्थ 'त सिंधुनामधेज्जति । ता पूर्व्वोत्तीर्णामिव सिन्धुनामधेया नदीमित्यध्याहार्यम् उत्तीर्ण । किं लक्षण सेनापति ? अनघशासन-अनघ-निरवद्य न्यायोपपन्न शासनमाज्ञा तत्र बल यस्य स तथा । कथमुत्तीर्ण्ण ? इत्याह—'तहेव'त्ति । तथैवं यथा नौभूतेन चर्म्मरत्नेन पूर्व्वमुत्तीर्णस्तथैवेत्यर्थ. । भरताय राज्ञे निवेदयति निवेद्य च 'अप्पणि त्ता य'त्ति । क्त्वान्तस्य क्तप्रत्ययान्तत्वेन व्याख्यानात् अर्प्पितानि च प्राभृतानि । सक्कारिअ'त्ति । 'तए ण भरहेण रण्णा' इतिशेष । ततो भरतेन राज्ञा सत्कारितो-भव्यवस्त्रादिना, सन्मानितो—यथोचितेपद्-भ्युत्थानादिना, 'महरिसे'त्ति । महर्ष —नृपतिसन्मानमभ्युत्थहर्षभाग् विसर्ज्जित —स्वस्थान प्रतिगमना-याज्ञापित सन् 'सग'ति । स्वक-स्वकीय प्रतिमण्डप—प्रत्यभिमुख मण्डपो यत्र स त प्रासादमित्यर्थ । अतिगत—प्राप्त । अथ सेनापति कथ तिष्ठति ? इत्याह— तते ण' ति । तत सुषेण सेनापति 'ण्हाए' त्ति । स्नात इत्यादि प्राग्वत् 'जिमिअ'त्ति । जेमितो भुक्त्युत्तर भुक्तेर्भोजनक्रियाया उत्तरमुत्तरकालम् आगत प्राप्त सन् यावत् सरसगोशीर्षचन्दनानुलिप्तगात्र , अत्र गात्रशब्देन गात्रे-शरीरे भवा गात्रा - शरीरावयवा ज्ञेया । तेन सरसेन गोशोर्षचन्दनेनानुलिप्तानि यथासम्भवक्रमेण लिप्तानि गात्राणि वक्ष - प्रभृत्यवयवा यत्र तादृश शरीर यस्य स तथा । 'उप्पि'त्ति । उपरिष्टात् पासादवरगत -प्रासादवरस्यो-परिगत 'फुट्टमाणेहिं'ति । स्फुटद्भिरिव हर्षोद्रेकेणौत्सुक्येन स्फालनाद् विदलद्भिरिव मृदङ्गाना-मर्द्दलाना मस्तकानीव मस्तकानि—उपरिभागा चर्म्मपुटानीत्यर्थ । तै 'बत्तीस'इत्यादि । द्वात्रिशता पात्रैर्बद्धानि द्वात्रिंशब्दद्धानि तैर्नाटकै । किं लक्षणं ? वरतरुणीसम्प्रयुक्तै 'उवणविज्जमाणे'त्ति । उपनूयमान — णून् स्तवने' इति वचनात् उपस्तूयमान तत्सम्बन्धिगोतैर्गायिनैस्तथाविधप्रवृत्या तुष्टि नीयमान इत्यर्थ । विप्सा च पुन पुनस्तथा प्रवर्त्तनेन । उपगीयमानस्तदीय सद्गुणगानात्, उपलाल्यमानोऽभि-

मतार्थविधानेन 'महताहते'त्यादि सुगमं व्याख्यातं च ।

अथैव प्रवर्त्तमाने यज्जातं तदाह

तए णं से भरहे राया अण्णया कयाइ सुसेणं सेणावतिं सद्दावेति, सद्दावेत्ता एवं वयासी-गच्छ णं खिप्पामेव भो देवाणुप्पिआ ! तमिसगुहाए दाहिणिल्लस्स दुवारस्स कवाडे विहाडेहि, विहाडेत्ता मम एअमाणत्तिअं पच्चप्पिणाहि । तए णं सुसेणे सेणावती भरहेणं रण्णा एवं वुत्ते समाणे हट्ठतुट्ठचित्त जाव करयलपरिग्गहिअं सिरसि अंजलिं कट्टु जाव पडिसुणेति, पडिसुणेत्ता भरहस्स रण्णो अंतिआओ पडिणिक्खमति, पडिणिक्खमित्ता जेणेव सए आवासे जेणेव पोसहसाला तेणेव उवागच्छति, उवागच्छित्ता दब्भसंथारगं संथरति जाव कयमालस्स देवस्स अट्ठमभत्तं पगेण्हति पोसहसालाए पोसहिए बंभचारी जाव अट्ठमभत्तंसि परिणममाणंसि पोसहसालातो पडिणिक्खमति, पडिणिक्खमित्ता जेणेव मज्जणघरे तेणेव उवागच्छति, उवागच्छित्ता ण्हाए कयबलिकम्मे कयकोउअमंगलपायच्छित्ते सुद्धप्पावेसाइं मंगल्लाइं वत्थाइं पवरपरिहिए अप्पमहग्घाभरणालंकिअसरीरे धूवपुप्फगंधमल्लहत्थगए मज्जणघराओ पडिणिक्खमति, पडिणिक्खमित्ता जेणेव तमिसगुहाए दाहिणिल्लस्स दुवारस्स कवाडा तेणेव पहारेत्थ गमणाए । तते णं तस्स सुसेणस्स सेणावइस्स बहवे राईसरतलवरमाडंबिअ जाव सत्थवाहप्पभितओ अप्पेगइआ उप्पलहत्थगया जाव सुसेणं सेणावतिं पिट्ठओ पिट्ठओ अणुगच्छंति । तते णं तस्स सुसेणस्स सेणावइस्स बहूइओ खुज्जाओ चिलातिआओ जाव इंगिअचिंतिअपत्थिअविआणिआओ निउणकुसलाओ विणीआओ अप्पेगइआओ कलसहत्थगयाओ जाव अणुगच्छति । तते णं से सुसेणे सेणापती सव्विड्ढीए सव्वजुतीए जाव निग्घोसनादितेण जेणेव तमिसगुहाए दाहिणिल्लस्स दुवारस्स कवाडा तेणेव उवागच्छति, उवागच्छित्ता आलोए कवाडाण पणामं करेति, करेत्ता लोमहत्थगं परामुसति, परामुसित्ता तमिसगुहाए दाहिणिल्लस्स दुवारस्स कवाडे लोमहत्थएण पमज्जति, पमज्जित्ता दिव्वाए उदगधाराए अब्भुक्खेति, अब्भुक्खेत्ता सरसेण गोसीसचंदणेणं पंचगुलितले चच्चएणं दलइ, दलइत्ता अग्गेहिं वरेहिं गंधेहि मल्लेहि अ अच्चिणेइ, अच्चिणेत्ता पुप्फारुहणं मल्लारुहणं जाव वत्थारुहणं करेति, करेत्ता आसत्तोसत्तविपुलवट्ट जाव करेति, करेत्ता अच्छेहिं सण्हेहिं रययामएहिं अच्छरसातंदुलेहिं तमिसगुहाए दाहिणिल्लस्स दुवारस्स कवाडाण पुरतो अट्ठट्ठमंगलए आलिहति । तं-सोत्थिअसिरि० । कयग्गाहगहिअकरयल-

प्प०भट्ठचंदप्पहवरवेरुलिअविमलदंडं जाव धूवं दलेति, दलेत्ता वामं जाणुं अंचेति, अंचेत्ता करयल जाव मत्थए अंजलिं कट्टु कवाडाणं पणामं करेति, करेत्ता दंडरयणं परामुसति। तए णं दंडरयणं रयणपंचलतिअं वयरसारमतिअं विणासणं सव्वसत्तुसेणाणं खंधावारे णरवतिस्स गड्डदरिविसमपब्भारगिरिवरपवातारणसमीकरणं संतिकरं हितसुहकरं रण्णो हिअइच्छिअमणोरहपूरगं दिव्वमप्पडिहयं दंडरयणं गहाय सत्तट्ठपयाइं पच्चोसक्कइ, पच्चोसक्कित्ता तमिसगुहाए दाहिणिल्लस्स दुवारस्स कवाडे दंडरयणेण महता महता सद्देण तिक्खुत्तो आउट्टेति। तते णं तमिसगुहाए दाहिणिल्लस्स दुवारस्स कवाडा सुसेणेणं सेणावइणा दंडरयणेणं महता महता सद्देणं तिक्खुत्तो आउड्डिआ समाणा महता महता सद्देणं कोंचारवं करेमाणा सरसरसरस्स सकाइं सकाइं ठाणाइं पच्चोसक्कित्था। तते णं से सुसेणे सेणावती तमिसगुहाए दाहिणिल्लस्स दुवारस्स कवाडे विहाडेति, विहाडेत्ता जेणेव भरहे राया तेणेव उवागच्छति, उवागच्छित्ता जाव भरहं रायं करतलपरिग्गहिअं जएणं विजएणं वद्धावेति, बद्धावेत्ता एवं वयासी—विहाडिआ ण देवाणुप्पिआ! तमिसगुहाए दाहिणिल्लस्स दुवारस्स कवाडा, एअं णं देवाणुप्पिआणं पिअं णिवेएमो पिअं भवउ। तए णं से भरहे राया सुसेणस्स सेणावइस्स अंतिए एअमट्ठं सोच्चा णिसम्म हट्ठतुट्ठचित्तमाणंदिए जाव हिअए सुसेणं सेणावतिं सक्कारेति सम्माणेति सक्कारेत्ता सम्माणेत्ता कोडुम्बिअपुरिसे सद्दावेति, सद्दावेत्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिआ! आभिसेक्कं हत्थिरयणं पडिकप्पेह, हयगयरहपवर तहेव जाव अंजणगिरिकूडसन्निभं गयवरं भरहवई दुरूढे॥

'तते ण से' इत्यादि। तत स भरतो राजा अन्यदा कदाचित् सुषेण सेनापतिं शब्दापयति, शब्दापयित्वा च एवमवादीत्-गच्छ भो देवानुप्रिय! क्षिप्र तमिस्रागुहाया दाक्षिणात्यस्य द्वारस्य कपाटे 'विहाडे'त्ति। विघटय—उद्घाटय, उद्घाट्य च ममैतामाज्ञप्तिका प्रत्यर्प्पयेति। 'तते णमि'त्यादि। तत सुषेण सेनापतिर्भरतेन एवमुक्त सन् 'हट्ठतुट्ठे'त्यादि प्राग्वत्। यावत्प्रतिशृणोति, यावत् करणात् 'एव सामितहत्ती'त्यादि सङ्ग्रह। प्रतिश्रुत्य च 'भरहस्से'त्यादि। भरतस्य राज्ञोऽन्तिकात्-समीपात् प्रतिनिष्क्रामति, प्रतिनिष्क्रम्य च यत्रैव स्वक स्वकीय आवास यत्रैव पौषधशाला तत्रैवोपागच्छति, उपागत्य च दर्भसंस्तारक संस्तरति, यावदष्टमभक्त प्रगृह्णाति, प्रगृह्य च पौषधशालाया पौषधिको ब्रह्मचारी यावदष्टमभक्ते परिणमति सति-पूर्णप्राये जाते सतीत्यर्थ। यावत्करणात् 'उम्मुक्कमणिसुवण्णे'इत्यादि प्राग्वत्। पौषधशालात' प्रतिनिष्क्रामति, प्रतिनिष्क्रम्य च यत्रैव मज्जनगृह तत्रैवोपागच्छति, उपागत्य च 'ण्हाते' इत्यादि प्राग्वत्। 'सुद्धप्पावेसाइ'ति। शुद्धानि च तानि प्रावेश्यानि च देवभवनादौ प्रवेशोचि-

तानि । यद्वा-शुद्ध आत्मा यस्य स्नानादिकरणेन स शुद्धात्मा 'वेसाइ'त्ति । वेष्याणि-शुभस्थानकगमनोचित-वेषयोग्यानि माङ्गल्यानि-मङ्गलकरणे साधूनि वस्त्राणि प्रवर यथा स्यात्तया परिहित. । अल्पैर्बहुमूल्यैरा-भरणैरलङ्कृत शरीर यस्य स तथा । 'धूवे'त्यादि 'कवाडे'त्यन्त सुगम । तेणेव पहारेत्थ'त्ति । तत्रैव प्रधा-रितवान् सङ्कल्पितवान् 'गमणाए'त्ति । गमनाय-गन्तु । 'तते णमि'त्यादि । ततस्तस्य सुषेणस्य सेनापते बहवो राजेश्वरादय 'अप्पेगइ आ' इति । अपि समुच्चये । एकका—एके केचन न तु सर्व्वे इत्यर्थ । उत्पलहस्तगता —उत्पलानि हस्ते गतानि येषा ते तया 'जाव सुसेण'त्ति । यावत्सुषेण सेनापति पृष्ठत पृष्ठतः अनुगच्छन्ति । यावत्करणात् अप्येकका नलिनहस्तगता इत्यादि प्रागुक्त ग्राह्य । 'तते णमि'त्यादि। ततस्तस्य सुषेणस्य सेनापते बह्व्यचव्यः कुब्जा.-ह्रस्वजङ्घाः, चिलातिका -चिलातदेशोद्भवा' 'जाव इंगि-अ'त्ति । यावत् इङ्गितेन नेत्रादिस्वरूपनिरीक्षणेनापि, चिन्तित—चेतस्यवधारित, प्रार्थितमभिलषितं जानन्ति यास्ता इङ्गितचिन्तितप्रार्थितविज्ञायका । यावत्करणात् वामना-ह्रस्वशरीरा, वडभिका मडह-कोष्ठाः वर्व्वर्यं कुशिका यौनका इसनिका. लासिका. लाकुशिका द्राविडच सिंहल्य आरव्य पक्कण्य वहल्यो मरुण्डचश्चानार्यदेशोद्भवा दास्यो ग्राह्या । कि स्वरूपा एता ? इत्याह—'निउण'त्ति । निपुणा-श्चातुर्योपेता सत्य , कुशलास्तीक्ष्णवुद्धय , विनीता —उचितप्रतिपत्तिकरणशीला: एवविधाः । प्रकृते किं क्रियोपेता ? इत्याह-'अप्पेगइआओ'त्ति । अप्येकका कलशहस्तगता इत्यादि । 'जाव'त्ति । यावत् अनु-गच्छन्ति-सुषेग सेनापति पृष्ठत पृष्ठतोऽनुगच्छन्ति । यावत्करणात् 'भिगारहत्थगयाओ'इत्यादि । अथ सेनापतिकृत्यमाह—'तए णमि'त्यादि । तत स सुषेणः सेनापतिः सर्व्वर्द्धर्या—राजचिन्हछत्रादिलक्षणया, सर्व्वद्युत्या-आभरणकान्त्यादिलक्षणया 'जाव'त्ति । यावन्निर्घोषनादितेन यावत्करणात् 'सव्ववलेणमि' त्यादि प्रागुक्त ग्राह्य । 'जेणेव'त्ति । यत्रैव तमिस्रागुहाया दाक्षिणात्यस्य द्वारस्य कपाटौ तत्रैवोपा-गच्छति, उपागत्याऽऽलोके-दृग्पयावतीर्णमात्रे कपाटयो प्रणाम करोति, कृत्वा च लोमहस्तक-पुञ्ज-निका परामृशति-हस्तेन गृह्णाति, गृहीत्वा च तमिस्रागुहाया. दाक्षिणात्यस्य द्वारस्य कपाटौ लोमहस्तकेन प्रमार्ष्टि, प्रमृज्य च दिव्यया उदकधारया अभ्युक्षति सरसेन गोशीर्षचन्दनेन पञ्चाङ्गुलितलान् चर्चकान्-हस्तकान् 'णमित्यलङ्कारे ददाति, कपाटयोरिति गम्य । ततश्चाग्र्यैर्वरैर्गन्धैश्च माल्यैश्च अर्च्चयति—पूजयति 'पुप्फारुहणमि'त्यादि प्राग्वत् । 'आसत्तो'त्ति प्राग्वत् । कृत्वा च 'अच्छेहिमि'त्यादि । अच्छै'-स्वच्छै श्लक्ष्णैर्मसृणै सितै रजतमयै. अच्छो रसो येषा ते अच्छरसा —प्रत्यासन्नवस्तुप्रतिबिम्बाधारभूता इवातिनिर्म्मला इतिभाव. । ते च ते तन्दुलाश्चाच्छरसतन्दुलास्तैर्दिव्यतन्दुलैरित्यर्थ । तमिस्रागुहाया। दाक्षिणात्यस्य द्वारस्य कपाटयो पुरतोऽग्रे अष्टावष्टौ मङ्गलकान्यालिखति । तद्यथा-'सोत्थिअसिरि'त्ति । एतावत्सूत्रलेशेन 'सोत्थिअ सिरिवत्थ नदिआवट्ट वद्धमाण भद्दासण मच्छ कलस दप्पण'त्तिग्राह्य । तथा 'कयग्गाहगहिअकरतलपब्भट्ठ'त्ति पदेन 'कयग्गाहगहिअकरतलपब्भट्ठविप्पमुक्कस्स दसद्धवण्णस्स कुसुमणिगरस्स तत्थ चित्त जाणुस्सेहपमाणमेत्त ओहिनिअर करेति करेत्ता' इत्यन्त प्रागुक्त सव्याख्यान ग्राह्य । तथा 'चदप्पह'त्ति । चन्द्रप्रभवज्रवैडूर्यमयो विमलो दण्डो यस्य स त यावद्धूप ददाति । यावत्क-रणात् 'कचनमणिभत्तिचित्त कालागुरुपवरकुदुरुक्कतुरुक्कधूवगधुत्तमाणविद्ध च धूमवट्टि विणिम्मुअत

वेरुलिअमय कडुच्छुअ पग्गहेतु पयए'त्ति पर्यन्त सूत्रव्याख्यान च प्राग्–च चक्ररत्नपूजावसरेऽभिहित-मिति । 'वामं जाणुमि'त्यादि सुगम प्राग् व्याख्यात च । 'दंडरयण'ति । दण्डरत्नं परामृशति । 'तते णमि' त्यादि । तत इति दण्डपरामर्शानन्तरं दण्डरत्नं गृहीत्वा सप्ताष्टपदानि प्रत्यवसर्प्पतीति पर्यन्तेन सम्बन्ध । कीदृश दण्डरत्न ? रत्नपञ्चलतिक-रत्नाना पञ्च पञ्च सङ्ख्यका लतिका-वल्ल्यो यत्र तत्तथा रत्नसम्बन्धि पञ्चवल्लीचित्रयुक्तमित्यर्थः । वज्रसार-वज्रवत्सारम् । अतएव अतिगम्–अतिशयेन गच्छतीति अतिग-विषमभूम्यादिविदारणाय प्रयुक्त सत् शीघ्रगतिकमित्यर्थः । विनाशन सर्वशत्रुसेनाना-वैरिसैन्यविनाश-समर्थमित्यर्थं । नरपतेश्चक्रवर्त्तिनः स्कन्धावारेऽर्थात् गमनादिक्रियापरायणे 'गड्ड'त्यादि । गड्डा-गर्त्ताः, दर्यो-गुहाः, विषम-निम्नोन्नतस्थान, प्राग्भार-एकस्मिन् पार्श्वे गिर्यादेरुच्चप्रदेशः, गिरिवरा-प्रधानपर्व्वताः तत्र प्रधानत्व लघुलघुतरपर्व्वतापेक्षया द्रष्टव्य । प्रपाताः-गच्छतां मनुजादीनां प्रस्खलनहेतव वृहत्पापा-णादयस्ततो द्वन्द्व । तेषा समीकरणम्-असमाः समाः क्रियन्तेऽनेनेति समीकरणम्, शान्तिकर, हितशुभकर 'रण्णो हिअ'त्ति । राज्ञश्चक्रवर्त्तिनो हृदयेप्सितमनोरथपूरक, दिव्य-देवाधिष्ठितं प्रधानं वा अप्रतिहत न केनापि प्रतिहन्यते स्मेत्यप्रतिहत, प्रतिपक्षाऽक्षोभ्यमाहात्म्यसयुक्तमितिभाव. । दण्डेषु रत्न सर्व्वोत्तम दण्डरत्नमिति विशेषण प्रागुक्त तु विशेष्यमिति न पौनरुक्त्य । सप्ताष्टपदानि प्रत्यवष्वष्कति, प्रत्यवष्व-ष्क्य च तमिस्रगुहाया. दाक्षिणात्यस्य द्वारस्य कपाटौ दण्डरत्नेन महता शब्देन-वलवता निजबलेन व्यापारविशेषे प्रयुक्तो दण्ड शब्दवान् भवत्यतो महान्त शब्द कुर्व्वतेत्यर्थः । यद्वा-दण्डसम्पर्कजन्यकपा-टसमुद्भवेन 'तिक्खुत्तो'त्ति । त्रिःकृत्वस्त्रीन् वारान् आकुट्टयति-यथोचितस्थाने आघातयति । 'तते णमि' त्यादि । ततस्तमिस्रगुहाया दाक्षिणात्यस्य द्वारस्य कपाटे सुषेणेन सेनापतिना दण्डरत्नेन महता महता शब्देन त्रि कृत्व आकुट्टिते सतो महता शब्देन क्रौञ्चस्येव-पक्षिविशेषस्येवाऽऽरावं शब्द कुर्व्वाणे 'सरसर-सरस्स'ति । अनुकरण तेन तादृश ध्वनिं कुर्व्वाणे 'सकाइ'ति । स्वकानि स्वकानि-स्वकीयानि स्वकीयानि स्थानानि प्रत्यवष्वष्केता-गाढतरदण्डरत्नप्रहारप्रेरिते निजसम्बन्धपरित्यागेन किञ्चिद्विकसिते इत्यर्थः । अथ किञ्चिद्विकाशे सति सेनापतिर्यत्करोति तदाह-'तते ण से'इत्यादि । तत. स सुषेण सेनापति. तमि-स्रगुहायाः दाक्षिणात्यस्य द्वारस्य कपाटे विघाटयति-उद्घाटयति, उद्घाट्य यत्रैव भरतो राजा तत्रैवो-पागच्छति, उपागत्य च यावद्भरत राजानमेवमवादीत्–उद्घाटितौ देवानुप्रिया ! तमिस्रगुहाया दाक्षिणात्यस्य द्वारस्य कपाटौ, एतद्देवानुप्रियाणां प्रियमिष्ट निवेदयामः एतत्प्रिय भवत्विति । अथैव सेनापतेर्वच श्रुत्वा भरत. कीदृश. ? किं कृतवान् ? इत्याह 'तते णमि'त्यादि । तत स भरत सुषेण-स्य सेनापते समीपे एतद्वच श्रुत्वा निशम्य-सम्यगवधार्य हृष्टतुष्टेत्यादि । यावत् सुषेण सेनापति सत्का-रयति सन्मानयति, सत्कार्य सन्मान्य च 'कोडुंबि अ'त्ति । कौटुम्बिकपुरुषान् शब्दापयति, शब्दापयित्वा च एवमवादीत्-क्षिप्रमेव भो देवानुप्रिया ! आभिषेक्य हस्तिरत्न प्रतिकल्पयत-सज्जीकृत्य समानयत 'हयगये'त्यादि । तथैव प्रागुक्तमिव यावदञ्जनगिरिकूटसन्निभ गजवर भरतपतिरारूढ । यावत्करणात्, 'पवरजोहकलिअ चउरंगिणिं सेण सन्नाहेह ? एअमाणत्तिअ पच्चप्पिणह । तए ण ते कोडुंबिअपुरिसा जाव पच्चप्पिणंति । तए ण से भरहे राया जेणेव मज्जणघरे' इत्यादि यावत् 'आभिसेक्क हत्थिरयण तेणेव उवागच्छति उवागच्छित्ता अंजणे'त्यादि ॥

# जंबुद्दीव पण्णत्ती

## ( द्वितीयो विभागः )

अथ हस्तिरत्नमारूढो भरतः पुन किं कृतवान् ? इत्याह—

तए णं से भरहे राया मणिरयणं परामुसइ । तो तं चउरंगुलप्पमाणमेत्तं च अणग्घियं तंसच्छलंसं अणोवमजुति दिव्वं मणिरयणपतिसमं वेरुलिअं सव्वभूअकंतं । जेणेव मुद्धागएणं दुक्खं न किंचि जायइ । भवति आरोग्गे अ सव्वकालं । तेरिच्छिअदिव्वमाणुसकया य उवसग्गा सव्वे न करेंति तस्स दुक्खं । संगामे वि असत्थवज्झो होइ णरो मणिवरं धरेंतो ठिअजोव्वण-केसवट्ठिअणहो भवति अ सव्वभयविप्पमुक्को । तं मणिरयणं गहाय से णरवइ हत्थिरयणस्स दाहिणिल्लाए कुंभीए णिक्खिवति । तए णं से भरहाहिवे णरिंदे हारोत्थयसुकयरइअवच्छे जाव अमरपतिसन्निभाए इड्ढीए पहिअकित्ती मणिरयणकउज्जोए चक्करयणदेसिअमग्गे अणेगरायवर-सहस्साणुजायमग्गे महया उक्किट्ठिसीहणायबोलकलकलरवेणं समुद्दरवभूअं पिव करेमाणे करेमाणे जेणेव तमिसगुहाए दाहिणिल्ले दुवारे तेणेव उवागच्छति उवागच्छित्ता तमिसगुहं दाहिणिल्लेणं दुवारेणं अईति ससिव्व मेहंधकारनिवहं । तए णं से भरहे राया छत्तलं दुवालसंसिअं अट्ठकण्णिअं अहिगरणिसंठिअं अट्ठसोवण्णिअं कागिणीरयणं संपरामुसइ । तते णं तं चउरंगुलप्पमा-णमेत्तं अट्ठसुवण्ण च विसहरणं अतुल चउरंससंठाणसंठिअ समतलं माणुम्माणपमाणजोगा जत्तो लोगे चरंति सव्वजणपण्णवगा ण वि चंदो ण किर तत्थ सूरो ण इव अग्गी ण इव मणिणो तिमिर णासेंति अंधयारे जत्थ तयं दिव्वभावजुत्तं दुवालस जोअणाइं तस्स लेसाओ विवड्ढंति तिमिरनिकरपडिसेहिआओ रत्तिं च सव्वकालं खंधावारे करेंति आलोकं दिवसभूअं

तस्स पहावेण चक्कवट्टी तमिसगुहमतीति सेणासहिते अभिजेतुं बीअद्धभरहं रायपवरे कागिणिं गहाय तमिसगुहाए पुरत्थिमपच्चत्थिमिल्लेसुं कडएसुं जोअणंतरिआइं पंच धणुसयायामविक्खंभाइं जोअणुज्जोअकराइं चक्कनेमीसंठिआइं चंदमंडलपडिणिकासाइं एगूणवण्णं मंडलाइं आलिहमाणे अणुपविसति। तए णं सा तमिसगुहा भरहेणं रण्णा तेहिं जोअणंतरिएहिं जाव जोअणुज्जोअकरेहिं एगूणपण्णाए मंडलेहिं आलिहिज्जमाणेहिं आलिहिज्जमाणेहिं खिप्पामेव आलोगभूआ उज्जोअभूआ दीवसयभूआ जाया यावि होत्था ॥

'तते णमि' त्यादि। ततः स भरतो राजा मणिरत्न परामृशति। कीदृश च तन्मणिरत्नम्? इति वक्तुकामो यत्तच्छब्दघटितान्वयाभ्यां तद्वर्णनमाह 'तो तमि'त्यादि। तो-तस्मात् तत् चक्रवर्तिना परामृष्टं मणिरत्न प्रमाणतश्चतुरङ्गुलप्रमाणमात्र चकारोऽप्यर्थे। तेन चतुरङ्गुलप्रमाणमात्रमपि 'अणग्घित'त्ति। अर्घो-मूल्य जातोऽस्येति अर्घितं न तथेत्यनर्घित क्रयविक्रयाऽविषय इत्यर्थः। 'तसछलस' त्ति। त्र्यस्रं सत् षडस्र मध्ये स्थूलत्वेनोभयतोऽप्यस्रत्रयोपेतत्वात्। अणोवम'त्ति। अनुपमा-उपमानरहिता द्युति-कान्तिर्यस्य तत्तथा। 'दिव्व' त्ति। दिव्य-देवताधिष्ठित प्रधान वा अत एवाह- 'मणिरयण' त्ति। मणिषु रत्नानि मणिरत्नानि प्रधानमणयस्तेषा पतिसम-स्वामिकल्प, यद्वाऽन्येषा मणिरत्नानां प्रतिसम-प्रतिमल्लभूतम् इतरेषामुत्कर्षापहारिगुणोपेतत्वात्। 'वेरुलिअ' त्ति। वैडूर्यं वैडूर्यरत्नजातीय। 'सव्वभूअ'त्ति। सर्व्वभूताना सर्व्वप्राणिना कान्त-कमनीय वल्लभमित्यर्थ।

अथ प्रागुक्त यच्छब्दान्वयमाह-' जेणेव' त्ति। तत्किं येनैव मणिना मूर्द्धगतेन मूर्द्धनि-मस्तके आगतेन स्थितेनेत्यर्थ.। सप्तम्यर्थे तृतीया वा। यस्मिन् मूर्द्धगते सति एवोऽवधारणे न किञ्चिद्दुःखं जायते। भवति चारोग्य-रोगराहित्य सर्व्वकाल यावन्मणिर्मस्तके ध्रियते तावत्काल रोगमात्र न स्यादित्यर्थ। तथा तिर्यक्देवमनुष्यकृता उपसर्गा सर्व्वे न पुनरायु.पर्यवसाने मारणान्तिका किन्तु तदितरे प्रतिकारसाध्यास्तस्य दुख न कुर्व्वन्ति। तथा 'सगामे विअ'त्ति। सङ्ग्रामे चापि 'असत्थे' त्यादि। अशस्त्रवध्य'-शस्त्रवध्यो न भवतीत्यर्थ। 'णरो'त्ति। नरो-मनुष्यो मणिवरम् उक्तलक्षण मणिरत्न धरन् 'ठिअजुव्वण'त्ति। स्थिता-अपरित्यक्तपूर्व्वस्वभावा यौवनकेशा यस्य स तथा। यौवन च वृद्धत्वाभिमुखमपि न जरा प्रापयति केशाश्च प्रवर्द्धमानाऽपि न पलितरूपाः स्युरिति भाव। अवस्थिता-अप्रवर्द्धमाना नखा यस्य स तथा ततो विशेषणसमास. एवंविधो भवति। भवति च सर्वभयविप्रमुक्त। भय चात्रैहिकमहिकण्टकाहितहेतिप्रभृतिप्रभवमवसातव्य, न पुन. पारत्रिकनरकपातादिसमुद्भवमपि। सत्यपि तस्मिन् सनत्कुमारादे पारत्रिकभयस्य प्रादुर्भावात्। अथैवंविध मणि भरत. किं कृतवान्? इत्याह- 'त मणिरयण' ति। तन्मणिरत्नमादाय-गृहीत्वा स नरपतिर्भरत. हस्तिरत्नस्य दक्षिणकुम्भस्थले निक्षिपति-स्थापयति। 'तते णमि' त्यादि। तत. स भरताधिपो नरेन्द्र इत्यादि प्राग्वत्। यावत् अमरपतिसन्निभया ऋद्ध्या प्रथितकीर्त्ति मणिरत्नकृतोद्योत. चक्ररत्नदर्शितमार्ग. 'अणेगराये' त्यादि प्राग्वत्।

'ऽणेव त्ति । यत्रैव तमिस्रागुहाया दाक्षिणात्य द्वार तत्रैवोपागच्छति तमिस्रा गुहा दाक्षिणात्येन द्वारेण 'अतीतोति'–अत्येति निश्शङ्कमविलम्बेन गच्छति–प्रविशति क इवेत्युपमामाह–'ससिव्व'त्ति । शशोव मेवान्धकारनिवह यथा मेघान्धकारमध्ये चन्द्र उद्योतयन् याति तथा गुहायामन्धकारेमणिकृतोद्योतो भरतो याति ।

अथ पृष्ठत आगच्छतो निजस्कन्धावारस्योद्योतनिमित्त भरतः किं करोति ? इत्याह–'तते ण से' इत्यादि । तत स भरतो राजा काकिणोरत्न परामृशतीति सम्बन्धः । तच्च काकिणीरत्न कीदृशम् ? इत्याह– छत्तल'ति । चत्वारि-चतसृषु दिक्षु द्वे चोर्ध्वाध इत्येवं षट् षट् सङ्ख्याकानि तलानि-समप्रदेश-रूपाणि यत्र तत्षट्तल । पुन कीदृश ? 'दुवालससिअ'ति । द्वादशास्रिक अध उपरि पार्श्वतश्च प्रत्येक चतसृणामस्रोणा सद्भावात् द्वादश अस्रय–कोट्यो यत्र तद्द्वादशास्रिक । 'अट्ठकण्णिगअ'ति । अष्टौ कर्णिका –कोणा यस्य तदष्टकर्णिक कोणाना चाध उपरि प्रत्येक चतुर्णां सद्भावात् । 'अहिगरणि'त्ति। अधिकरणी-सुवर्णकारोपकरण तत्सस्थानसस्थित तत्सदृशाकार समचतुरस्रमिति यावत् । 'अट्ठसो-वण्णिअ'त्ति । अष्टभि सौवर्णिकैर्निष्पन्नमष्टसौवर्णिक । तत्र सुवर्णमान त्वेवं–'चत्वारि मधुरफलान्येकः श्वेतसर्षप', षोडश सर्षपा. एक धान्यमाषफले, द्वे धान्यमाषफले एका गुञ्जा, पञ्च गुञ्जाः एक. कर्म्ममाषकः, षोडशकर्म्ममाषकाः एकः सुवर्ण्ण. । अत्र च मधुरतृणफलादीनि यानि सौवर्णिकपरिमाणानयनाय भणितानि तानि सर्व्वचक्रवर्त्तिना निजनिजकालोत्पत्तिमन्ति परिभावनीयानि । यतः प्रसारितोभयबाहु-लक्षणवामप्रमाणानि चक्रछत्रदण्डनामानि त्रीणि रत्नानि, द्विहस्तप्रमाण च चर्म्मरत्न, द्वात्रिंशदङ्गुल: खड्ग, सर्व्वतश्चतुरङ्गुलप्रमाणत्वेन समचतुरस्र काकिणीरत्नं, द्व्यङ्गुलपृथु चतुरङ्गुलदीर्घं च मणिरत्न चेति सप्तापीयेकेन्द्रियरत्नानि तथैव प्रमाणभाञ्जि भवन्ति । एव शेषाण्यपि सप्त पञ्चेन्द्रियरत्नानि सेनापति-प्रभृतीनि बोध्यानि अन्यथा वैषम्य दुरवगाह्य स्यात् । अत एवोक्तं

चक्कं छत्त दडं तिण्णि वि एआइ वाममित्ताइ । चम्म दुहत्थ दीह बत्तीस अंगुलाइ असी ॥१॥
चउरगुलो मणी पुण तस्सद्ध चेव होइ विच्छिण्णो । चउरगुलप्पमाणा सुवण्णवरकागिणी णेया ॥२॥

इति प्रवचनसारोद्धारे । एतद्व्याख्याया तु एतानि सप्तैकेन्द्रियरत्नानि सर्व्वचक्रवर्त्ति-नामात्माङ्गुलेन ज्ञेयानि । शेषाणि तु सप्तपञ्चेन्द्रियरत्नानि तत्कालीनपुरुषोचितमानानीति भणित । यत्तु-'एगमेगस्स ण रण्णो चाउरतचक्कवट्टिस्स अट्ठ सोवण्णिए कागिणीरयणे छत्तले दुवालससिए अट्ठ कण्णिए अहिगरणीसठाणसठिए पण्णत्ते । तस्स ण एगमेगा कोडी उस्सेहगुलविक्खभा' इति श्री अनुयोग-द्वारसूत्रे । तद्वृत्तौ च एतानि च मधुरतृणफलादीनि भरतचक्रवर्त्तिकालसम्भवीन्येव गृह्यन्ते अन्यथा कालभेदेन वैषम्यसम्भवे काकिणीरत्न सर्व्वचक्रिणा तुल्य न स्यात् तुल्य चेष्यते इति व्याख्यात । तन्न विचार्यमाण सम्यगभिप्रायविषयो न भवति । यत सूत्रे उत्सेधाङ्गुलप्रमाण कागिणीरत्न भणित । तद्वृत्तौ च प्रमाणाङ्गुलप्रमाण उभयमपि प्रवचनसारोद्धारादिना विसवादि युक्त्यक्षम च । यत्तु-'चउरगुलो मणी पुणे'ति गाथा व्याख्यानयता श्रीमलयगिरिणापि इहाङ्गुल प्रमाणाङ्गुलमवगन्तव्य

सर्व्वचक्रवर्त्तिनामपि काकिण्यादि रत्नाना तुल्यप्रमाणत्वादिति बृहत्सङ्ग्रहिणीवृत्तौ। एतदपि प्राग्वद्वि-चारणास्पदमेवेति बहुश्रुतैः सम्यक् पर्यालोच्य यथावत् श्रद्धेयमिति। एवविध काकिणीरत्न चक्रवर्ती 'सपरामुसइ'त्ति। सम्यक् समीहितकार्यमुद्दिश्य परामृशति-करेण स्पृशति। अथ काकिणीरत्न सम्परामृश्य भरत कि कृतवान्? इत्याह-'तते ण तमि'त्यादि। ततश्चक्रवर्त्ती भरतनामा काकिणीरत्न गृहीत्वा मण्डलान्यालिखन् तमिस्रागुहामनुप्रविशतीति सम्बन्ध। 'त'ति। तत् काकिणीरत्न कीदृश? 'चतुरगुल'ति। चतुरङ्गुलप्रमाणमात्र नाधिक न वा न्यूनमिति। यत्तु'-उस्सेहगुलविक्खभा' इत्यनुयोगद्वारवचनेन एकाङ्गुलप्रमाणत्वमुक्त तद्वाचनाभेदहेतुक सम्भाव्यतेऽत्र केवलिगम्यमिति। 'अट्ठसुवण्ण'ति। अष्टाना सौवर्णिकानामितिगम्य सुवर्णं यत्र तदष्टसुवर्ण सुवर्णात्मकमपि अष्ट सौवर्णिकोन्मानानिष्पन्नमित्यर्थ। चकारो विशेषणसमुच्चयार्थ. सर्व्वत्र सम्बन्धनीय। पुन कि लक्षण? 'विसहरण'ति। विषं-गरल दाष्ट्रिका-द्यनेकप्रकार हरतीति विषहरण कर्त्तर्यनट् अनेन विशेषमाहात्म्यमसूचि। तथा 'अउल'ति। अतुलम्-असदृशम् एतादृशमन्यद्रत्न नास्तीत्यर्थ। तथा 'चउरस'त्ति। चतुरस्रसस्थानसस्थित द्वादशस्वप्यस्त्रिषु समप्रमाणसस्थानवदित्यर्थ। अत एव 'समतल'ति। चतसृषु दिक्षु उपरि अधश्च सम तल यस्य तत्समतल यत्तदोर्नित्याभिसम्बन्धात् तत्कि 'जत्तो'ति। यस्मात्काकिणीरत्नात् लोके-मनुष्यलोके चरति-प्रवर्त्तन्ते तत्र मान पल्यादिना धान्यादिनियमनहेतु। उन्मान तुलारोपणादिना मापगद्याणकादिव्यवहारहेतु। प्रमाण च अङ्गुलहस्तधनुरादिना गव्यूतादिव्यवहारहेतु। ततो द्वन्द्वस्तेषा योगायोगिकभेदा यद्यप्यपरिमितास्तथापि लोकव्यवहारप्रवृत्तिहेतवोऽवसातव्या। ते च कीदृशा.? 'सव्वजणे'त्यादि। सर्वेषां जनाना प्रज्ञापका:-परिज्ञानहेतव इत्यर्थ। अयमाव. मानोन्मानप्रमाणपरिज्ञानमन्तरेण क्रयविक्रयादौ वस्तुव्यवहारो न भवतीत्यउस्तत्परिज्ञानहेतवो मात्रादियोगा काकिणीरत्नाङ्किता अतो महामाहात्म्यभागिद काकिणीरत्नमिति। अथोद्योतमधिकृत्य माहात्म्यमाह-'णवि चदो' इत्यादि। 'तत्थ'त्ति। तत्र गुहायामन्तर्वर्त्यन्धकारे नापि चन्द्रस्तिमिर नाशयति अपिरिहैव-कारार्थे द्रष्टव्य तेन नैवेत्यर्थ.। न किर सूर्य: अत्रापि किरशब्दोऽवधारणे नैव सूर्य शाश्वतावरणभूतस्य वैताढ्यस्यान्तरा सत्त्वेन चन्द्रसूर्ययो. प्रभाद्रव्याणा तत्र प्रचाराऽभावात् तन्नाशे तयोरसामर्थ्यमितिभाव। अथ मा भवतु तत्र चन्द्रसूर्ययो सामर्थ्यं पर भूमिगृहादाविवाग्ने. सामर्थ्यं त्वनिवार्यमिति पराकृतमपाकरोति 'ण इव अग्गी'ति इरलङ्कारे न वा अग्नि तत्र तिमिर नाशयति गुहाया. आयामविष्कम्भाभ्या क्रमेण पञ्चाशद्द्वादशयोजनात्मकत्वेनातिगरीयस्त्वात् तद्वर्तिनोन्धकारस्य प्रदीपादेरविषयत्वात्। अथ तत्राग्नेर-सामर्थ्येऽप्यकृत्रिमतेजोभाजा मणीना सामर्थ्यं भविष्यतीत्याशङ्कायामाह-'न इव मणिणो'त्ति। न वा मणयोऽपि निजप्रभाभिस्तत्रत्य तमो नाशयन्ति। तत्र कुत्र?-'जत्थ'त्ति। यत्रान्धकार तदेव तक-काकिणी-रत्नमेव नान्यत् कि लक्षण? दिव्यभावयुक्तम्-अचिन्त्यमाहात्म्यवत्। नाशयतीति लालाघण्टान्यायेनेहापि सम्बध्यते।

अथास्य प्रकाश्यक्षेत्र दर्शयति-'दुवालसे'त्यादि। द्वादशयोजनानि 'तस्स'त्ति। तस्य काकिणी-रत्नस्य सूर्यस्येवेति गम्य लेश्या.-प्रकाशप्रभा विवर्द्धन्ते। किं लक्षणा लेश्या? 'तिमिरे'त्यादि।

तिमिरनिकरप्रतिषेधिका –अन्धकारसमूहस्यापि प्रणाशकाः अथैवंविधा लेश्या. क्वोपयुज्यन्ते? इत्याह-'रत्ति चे'त्यादि। च पुनरर्थे द्वितीया च सप्तम्यर्थे। तेन रात्रौ पुनस्ता. सर्व्वकाल स्कन्धावारे–नरेन्द्रकटके आलोक-प्रकाश दिवसभूत दिवसालोकभूत कुर्व्वन्ति। 'जस्स'त्ति। यस्याऽऽलोकस्य प्रभावेन चक्रवर्ती तमिस्रा गुहामत्येति–अतिगच्छति। किं भूतः ? सैन्यसहित किं कर्त्तु मत्येति ? द्वितीयमर्द्धभरतमभिजेतुमाज्ञया स्वायत्तीकर्त्तु म्। अथैवमुक्तस्वरूपस्यास्य प्रकृतोपयोगमाह–'रायपवरे'त्यादि। राजप्रवरो–राज्ञामग्रेसरो-भरतचक्री काकिणीरत्नमादाय तमिस्रागुहाया पौरस्त्यपाश्चात्ययो कटकयोर्भित्त्योर्योजनान्तरितानि पञ्चधनु शतानि आयामविष्कम्भानि योजनोद्योतकराणि-दक्षिणत उत्तरतश्च प्रमाणाङ्गुलप्रमितयोजनमुद्योतकराणि ऊर्ध्वाधोऽष्टौ योजनानि तिर्यक् च द्वादशयोजनानि 'एतच्च सम्प्रदायादवसीयते' इति क्षेत्र-समासवृत्तौ। तथा वृत्ताकारतया चक्रनेमिसंस्थितानि 'चद'त्ति। चद्रमण्डलस्य प्रतिनिकाशानि-सदृशानि द्रष्टृणा नयनमनसोरत्यन्ताह्लादकारिप्रकाशयुक्तानीति भाव.। एकोनपञ्चाशत् मण्डलानि आलिखन् अनुप्रविशति-मण्डल कृत्वा कृत्वा अग्रतो यातीत्यक्षरार्थ। भावार्थस्त्वेव-वैताढ्यस्य पर्व्वतस्य तमिस्रा खण्ड-प्रपाता चेति नाम्ना द्वे गुहे स्त। ते च द्वे अपि पञ्चाशद्योजनानि दक्षिणोत्तरायते द्वादशयोजनानि पूर्व्वापरविस्तीर्णे अष्टौ योजनान्युच्चैस्त्वेन। ते च द्वे अप्युभयो पार्श्वयोस्सदा सम्मीलितवज्रमयकपाट-युगलसमन्विते अत एव चन्द्रसूर्यप्रभाप्रवेशाभावेन सततमन्धकारगुपिले केवल यदा चक्रवर्त्ती उत्तरभरता-र्द्धविजिगीषु सेनापतिना दण्डरत्नेन कपाटयुगलमुद्घाटयति तदा कपाटे पश्चाद्भागेन प्रत्यवष्वष्क्ते। तयोश्च गुहयोर्द्वाराणि चत्वारि योजनानि विस्तीर्णानि अष्टौ योजनान्युच्चानि। एकैकस्मिन् द्वारे द्वे द्वे कपाटे ते च प्रत्येक द्वे द्वे योजने विस्तीर्णे अष्टावष्टौ योजनान्युच्चैस्त्वेन एकैकस्य कपाटस्य पश्चाद्भा–गेन प्रत्यवष्वष्कमानस्य अवष्टम्भभूत चतुर्योजनायामविष्कम्भ स्तूपस्तोडुक इत्यर्थ। इह च यदा चक्रवर्त्ती उत्तरभरतार्द्धविजिगीषुस्तमिस्रागुहाया प्रवेश कर्त्तु मिच्छति, तदाहस्तिरत्नस्कन्धमारुह्य हस्तिनो दक्षिणकुम्भस्थले मणिरत्न निबध्नाति तद्धि द्वादशयोजनानि यावत्पूर्व्वापरपुरोरूपासु तिसृषु दिक्ष्वतिनि-विडतमोऽपहारिणा निरुपमप्रभासमुदयेन कलितमतो गुहामध्ये प्रविशतस्तत्प्रभावात्समन्तत प्रकाशो भवति। एतन्माहात्म्य च प्राग्व्यावर्णित। ततो मणिरत्नद्योतितमार्गो गुहामध्ये प्रविशन् सवलस्य पाश्चात्यस्य स्कन्धावारस्य प्रकाशकरणाय पूर्व्वदिक्कपाटे आदौ योजन मुक्त्वा काकिणीरत्नेनोत्सेधाङ्गुलप्रमित-पञ्चधनु.शतायामविष्कम्भ प्रथम मण्डलमादित्यमण्डलप्रतिममालिखति। तत. पश्चिमदिक्कपाटे तदभिमुख द्वितीय। तत प्रथमदिक्कपाटमण्डलात् प्रमाणाङ्गुलप्रमितेन योजनेनोत्तरतस्तृतीय। ततस्तत्सम्मुख पश्चिमदिग्भागे चतुर्थम् एव योजनान्तरितानि पूर्व्वभित्तौ पश्चिमभित्तौ च मण्डलान्यालिखन् तावद्गच्छति यावत्तमिस्रागुहाया उत्तरदिग्द्वारम्। एव च सत्येकस्यामेकस्या भित्तावेकोनपञ्चाशदेकोनपञ्चाशत् मण्डलानि भवन्ति। एव खण्डप्रपातगुहायामपि परमुत्तरत समागच्छन् पूर्व्वभित्तावुत्तरभित्तौ च प्रत्येकमेकोन-पञ्चाशत मण्डलान्यालिखति। तानि च मण्डलानि यावच्चक्रवर्त्ती निजपदवीं परिपालयति तावदवति-ष्ठन्ते। गुहापि तथैवोद्घाटिता तिष्ठति। उपरते च चक्रवर्त्तिनि सर्वमप्युपरमते इति। यत्तु हिरण्यरेखा-रूपाणि गोमूत्रिकाप्रकारेण एकस्या भित्तौ पञ्चविंशतिरपरस्या च चतुर्विंशतिरित्येकोनपञ्चाशत मण्डलान्या-

लिखन् व्रजतीत्यादि प्रवचनसारोद्धारवृत्त्यादौ बहु स्यात् दृश्यते तदपि युक्तिमदेव पश्याम । अन्यतरत्वेन निर्णयस्तु केवलिगम्य इति । अथ मण्डलालिखनानन्तर तमिस्रागुहा वीदृशी सम्पन्नेत्याह-तते ण से'त्यादि । ततः सा तमिस्रागुहा भरतेन राज्ञा 'तेहिं'ति । तैः प्रागुक्तैर्योजनान्तरितैर्यावद्योजनोद्योतकरैरेकोनपञ्चाशता मण्डलैरालिख्यमानैर्हेतुभूतैः क्षिप्रमेव-शीघ्रमेव आलोकभूता-आलोक इवालोकभूता तद्गतवस्तूनामच्छिन्नप्रकाशकत्वेन दिवा रात्रौ च तुल्यस्वभावा एवमुद्योतभूता-प्रकाशस्वभावा 'दीवसय'त्ति । दीपशतानीव दीपशतभूता जाता-अभवन् चकार समुच्चये । अपिः सम्भावने । नैव गुहा किन्तु दीपशतान्येव सम्भाव्यन्ते इति भाव. ।

अथ तस्या गुहाया किमस्ति ? इत्याह—

**तीसे णं तमिसगुहाए बहुमज्झदेसभागे एत्थ णं उम्मग्गनिमग्गजलाओ णामं दुवे महाणईओ जाओ णं तमिसगुहापुरत्थिमिल्लाओ कडगाओ पवूढाओ समाणीओ पच्चत्थिमिल्लेणं सिंधुं महाणइं समप्पेंति । से केणट्ठेणं भंते ! एवं वुच्चति उम्मग्गनिमग्गजलाओ महाणईओ ? गो. ! जण्णं उम्मग्गजलाए महाणईए तणं वा पत्तं वा कट्ठं वा सक्करा वा आसे वा हत्थी वा जोहे वा मणुस्से वा पक्खिप्पति तण्णं उम्मग्गजला महाणदी तिक्खुत्तो आहुणिअ आहुणिअ एगंते थलंसि एडेति । जण्णं णिम्मग्गजलाए महाणईए तणं वा जाव मणुस्से वा पक्खिप्पति तण्णं निमग्गजला महाणदी तिक्खुत्तो आहुणिअ आहुणिअ अंतो जलंसि निमज्जावेति । से तेणट्ठेणं गोअमा ! एवं वुच्चति उम्मग्गनिमग्गजलाओ महाणईओ । तते णं से भरहे राया चक्करयणदेसिअमग्गे अणेगराय० महता उक्किट्ठिसीहणायं जाव करेमाणे करेमाणे सिंधूए महाणइए पुरत्थिमिल्लेणं कूलेणं जेणेव उम्मग्गनिमग्गजलाओ महाणईओ तेणेव उवागच्छति उवागच्छित्ता वड्ढइरयणं सद्दावेति सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! उमग्गनिमग्गजलासु महाणईसु अणेगखंभसयसन्निविट्ठे अचलमकंपे अभेज्जकवए सालंबणबाहाए सव्वरयणामए सुहसंकमे करेहि करेत्ता मम एअमाणत्तिअं खिप्पामेव पच्चप्पिणाहि । तते णं से रण्णा एवं वुत्ते समाणे हट्ठतुट्ठचित्तमाणंदिए जाव विणएणं पडिसुणेति पडिसुणेत्ता खिप्पामेव उम्मग्गनिमग्गजलासु महाणईसु अणेगखंभसयसन्निविट्ठे जाव सुहसंकमे करेइ करेत्ता जेणेव भरहे राया तेणेव उवागच्छइ जाव एअमाणत्तिअं पच्चप्पिणाति । तते णं से भरहे राया सखंधावारबले उम्मग्गनिमग्गजलाओ महाणईओ तेहिं अणेगखंभसयसन्निविट्ठेहिं जाव सुहसंकमेहिं उत्तारेति । तते णं तीसे तमिसगुहाए उत्तरिल्लस्स दुवारस्स कवाडा सयमेव महता कोंचारवं करेमाणा सरस्सरस्स सगाइं सगाइं ठाणाइं पच्चोसक्कित्था ।**

'तोसे णमि'त्यादि । तस्यास्तमिस्रगुहाया बहुमध्यदेशभागे-सर्व्वमध्यप्रदेशे 'एत्थ'त्ति । अत्रान्तरे उन्मग्ननिमग्नजले तृणादेरुन्मज्जननिमज्जनहेतुर्जलं ययोस्ते उन्मग्ननिमग्नजले इति सान्वर्थनाम्न्यौ द्वे महानद्यौ स्त । यत्तदोर्नित्याभिसम्बन्धात्ते इत्याध्याहृत्य ते के? इत्याह- 'जाओ ण'त्ति । ये णमित्यलङ्कारे । तमिस्रागुहाया पौरस्त्यात्कटकात्-पूर्व्वभित्ते प्रव्यूढे-निर्गते सत्यौ 'पच्चत्थिमेणं'ति । पश्चिमे-पश्चिमदिशि सिन्धु महानदी 'समप्पेति'त्ति । प्रविशत इति । अत्र बहुमध्यदेशस्य भावना त्वेव-तमिस्रागुहायाः दक्षिणद्वारे कपाटस्य पृष्ठभाविनश्चतुर्योजनायामान् स्तूपान् परत. सप्तदशयोजनानि गत्वा अत्रान्तरे त्रियोजनविस्तारा द्वादशयोजनायामा पूर्व्वभित्तितो विनिर्गता पश्चिमभित्ति विभिद्य सिन्धु-महानदी प्रविष्टा उन्मग्नजला नाम नदी तिष्ठति । तत परतो योजनद्वयान्तरिता निमग्नजला नाम नदी सापि त्रियोजनविस्तारा द्वादशयोजनायामा पूर्व्वभित्तिविनिर्गता पश्चिमभित्ति विभिद्य सिन्धु महानदी प्रविष्टा । तत. परतः सप्तदशयोजनेभ्य उत्तरद्वारकपाटपृष्ठभावी चतुर्योजनायामविष्कम्भः स्तूप. । एव-मुभयोरपि पार्श्वयोः सप्तदश सप्तदश योजनातिक्रमे तुल्यप्रमाणे तुल्यान्तरिते च द्वे अपि नद्यौ बहुमध्य-भागवर्तिन्यौ समवसेये । योजनानि च सर्व्वाण्यपि सङ्कलितानि वैताढ्यस्य पृथुत्व पञ्चाशदेव भवन्ति ।

अथ केनार्थेनोन्मग्ननिमग्नजले महानद्याविति परिज्ञानाय गौतम प्रश्नयति-'से केणट्ठेण'ति । से इत्यथार्थे । अथ केनार्थेन भदन्त ! एवमुच्यते उन्मग्ननिमग्नजले महानद्यौ ? भगवानाह-गौतम ! जण्ण' त्ति । यद्वस्तुजात तृण पत्र वा काष्ठ वा शर्करा वा-उपलखण्डाः अश्वो वा हस्ती वा । सर्व्वत्र वाकारा. समुच्चये । योधो वा-सुभटो मनुष्यविशेष मनुष्यो वा सामान्यत उन्मग्नजलाया महानद्या प्रक्षिप्यते तत्तृणादिवस्तुजात उन्मग्नजला महानदी त्रि कृत्वस्त्रीन् वारान् 'आहुणिअ'त्ति । 'धूगट् कम्पने' इति वचनात् आधूय आधूय कम्पयित्वा कम्पयित्वा जलेन सह आस्फाल्य आस्फाल्य इत्यर्थ । एकान्ते स्थले-जलरहितप्रदेशे 'एडेति'त्ति । एडयति धातूनामनेकार्थत्वात्त्यजति उच्छाल्य तिर्यक्बहि: प्रक्षिपती-त्यर्थः । 'जण्ण'ति । यच्च निमग्नजलाया महानद्या तृण वा यावन्मनुष्यो वा प्रक्षिप्यते तत्सर्व्वं वस्तुजात निमग्नजलामहानदी त्रि कृत्वस्त्रीन् वारान् आधूय आधूय 'अतो जलसि'त्ति । जलस्यान्तर्मध्ये निमज्जयति अधस्तान्नयति जलेनाच्छाद्य गोपयतीत्यर्थ । निगमनमाह-'से तेणट्ठेण'ति सुगम । न त्वेवमनयोर्नद्योरेवं स्वभावो जलजन्यक्षेत्रःविशेषजन्यो वा ? इति चेत्, उच्यते-क्षेत्रविशेषजन्य एव सम्भाव्यते, अन्यथा सिन्धु-नदीमासाद्यापि जलस्वभावानपाये सिन्धोस्त्रिधा स्वभावापत्ते । यद्वा-सिन्धोर्बलीयस्त्वेन तयोर्जलस्वभाव-स्यानुदयात् न किञ्चिदनुपपन्न । दृश्यते च सूर्यकिरणान्त. प्रविष्टाः सोद्योताः शीतला अपि चन्द्रमस. कला निजस्वभावविकला इति । अथ तथाविध तयोर्नद्यो: स्वरूपमवगम्य भरतो यत्कृतवास्तदाह- 'तते णमि' त्यादि । ततः स भरतो राजा चक्ररत्नदर्शितमार्ग इत्यादि प्राग्वत् । 'सिंधूए'त्ति । सिन्धोर्महानद्या पौरस्त्ये-पूर्व्वदिग्वर्त्तिनि कूले यत्रैवोन्मग्ननिमग्नजले महानद्यौ तत्रैवोपागच्छति उपागत्य च वर्द्धकिरत्न शब्दापयति शब्दापयित्वा चैवमवादीत्-क्षिप्रमेव भो देवानुप्रिया: ! उन्मग्ननिमग्नजलयोर्महानद्योरनेकस्तम्भशतसन्नि-विष्टौ सङ्क्रमौ कुर्व्वित्यन्वयः । तत्र सङ्क्रमौ सेतूपद्यौ इति यावत् । किं लक्षणौ ? अनेकस्तम्भशतेषु सन्निविष्टौ-स्थितौ विन्यस्तावित्यर्थ. । किं लक्षणौ ? अचलौ पर्व्वतसन्निभभाराक्रातावपि स्वस्थानान्न

चलत इत्यचलौ। एवं सत्यपि भूकम्पादाविव किञ्चित्कम्पते तदुपरिगच्छतः सैन्यस्य अपरस्य वा पतनभयशङ्कया तौ शीघ्रगतिनिमित्तं न स्याताम् अतोऽचलावपि अप्रकम्पौ–अनेकमनुष्याश्च हस्तिकोटीनां यथेप्सितसञ्चारेऽपि मनागपि कम्पनाऽभावात्। एतेन पृथिवीस्वभावौ सेतू इति सूचितं। गमनादिक्रियाहेतुत्वेनोभयोरप्यविशेषात् ततोऽचलौ च तावप्रकम्पौ चेति विशेषणसमासः। मकारोऽलाक्षणिकः। एवंविधावपि यदि शस्त्रदृषदादिप्रहारेण भेद्यौ स्यातां तर्हि कथञ्चिद्भयावहावेवेत्यत आह–'अभेज्जकवए'त्ति। कवचाविवाभेद्यावभेद्यकवचौ। यथा कवचौ शस्त्रादिनाऽभेद्यौ तथा इमावपि पाषाणपातादिनेति एवमपि उभयो पार्श्वयोर्जले विद्यमाने कस्यापि कथञ्चित्स्खलनादिदुर्निवारमत आह–'सालंबणे'त्यादि। सहालम्बनेन–गच्छतां हस्ताद्यवलम्बनभूतेन फलकभित्तिभङ्गादिरूपेण वर्तेते ये ते सालम्बने बाहे–बाहु उभे अपि पार्श्वे ययोस्तौ सालम्बनबाहाकौ। उक्तविशेषणविशिष्टौ कुतः? इति विशेषणद्वारा हेतुमाह–'सव्वरयणे'त्यादि। यतः सर्वात्मना रत्नमयौ अत एवाचलत्वादिस्वरूपविशिष्टौ जले बहुप्रयत्नरक्षितोऽपि काष्ठादिपदार्थश्चलनादिस्वभावो भवति लघुत्वात् न पुनरतिगुरुत्वभाग् रत्नादिपदार्थोऽप्यत एव रत्नग्रहणं। ऋषभचरित्रे तु पाषाणादिसम्बन्धिन्यौ पद्ये प्रतिपादिते इति। अथाभिमतफलवत्त्वेन विशेषणमाह–'सुहरहसकमे'इति। सुखेन विस्तीर्णतया अनभिमतसम्पर्कसङ्घर्षणादिदोषराहित्येन–शुभो वा रथानामुपलक्षणादश्वादीनामपि सङ्क्रमो–गमनागमनादिरूपो ययोस्तौ सुखरथसङ्क्रमौ शुभरथसङ्क्रमौ वा क्वचित् 'सुहसकमे'त्ति पाठः। तत्र सुखेन शुभो वा सङ्क्रमो ययोस्तावेवविधौ सङ्क्रमौ कुरु कृत्वा च ममैतामाज्ञप्तिकां क्षिप्रमेव प्रत्यर्पयेति। 'तते णमि'त्यादि 'पच्चप्पिणाती'ति पर्यन्तं प्राग्वत्।

अथ भरतः किं कृतवानित्याह–'तते णं से'इत्यादि ततो वर्द्धकिरत्नाऽऽज्ञार्प्पणानन्तरं स भरतो राजा सस्कन्धावारबलः स्कन्धावारबलसहितः उन्मग्ननिमग्नजले महानद्यौ 'तेहिं'ति। ताभ्यां प्रागुक्तस्वरूपाभ्यां सङ्क्रमाभ्यामुत्तरति–समीहितं पारं गच्छति। 'तते णं तीसे'इत्यादि। द्वयोर्महानद्योरुत्तरणानन्तरं तस्यास्तमिस्रागुहाया उत्तरदिग्वर्तिनो द्वारस्य कपाटे स्वयमेव सेनापतिप्रयुक्तदण्डरत्नप्रहारमन्तरेणापि 'महते'त्यादि। महताऽर्थाच्छब्देन क्रौञ्चारवं कुर्वाणे 'सरस्सरस्स'त्ति। कपाटशब्दस्य अनुकरणशब्दोऽयं 'सकाइं'ति। स्वके स्वके स्वकीये स्वकीये स्थाने–'पच्चोसक्कित्था'त्ति। प्रत्यवष्वष्केतां स्वयमेव क्रौञ्चारवपूर्वकसरस्सरस्सदिति शब्दं कुर्वाणे, उद्घाट्य अवष्टम्भस्तूपमाश्रिते इत्यर्थः।

अथ यदा उत्तरदिग्वर्त्तिद्वारकपाटे उद्घटिते तदानीमुत्तरभरतार्द्धे किमासीद्? इत्याह

**ते णं काले णं ते णं समए णं उत्तरड्ढभरहे वासे बहवे आवाडा णाम चिलाता परिवसंति अड्ढा दित्ता वित्ता विच्छिण्णविपुलभवणसयणासणजाणवाहणाइण्णा बहुधणबहुजातरूवरयया आओगपओगसंपउत्ता विच्छड्डिअपउरभत्तपाणा बहुदासीदासगोमहिसगवेलगप्पभूआ बहुजणस्स अपरिभूआ सूरा वीरा विक्कंता विच्छिण्णविपुलबलवाहणा बहुसु समरसंपराएसु लद्धलक्खा यावि होत्था। तते णं तेसिं आवडचिलाताणं अण्णया कयाइ विसयंसि बहूणि उप्पाइअसयाइं पाउब्भवित्था। तं जहा–अकाले गज्जिअं अकाले विज्जुअं अकाले-**

पादपा पुप्फंति अभिक्खणं अभिक्खणं आगासे देवयाओ णच्चंति। तते णं ते आवडचिलाता विसयंसि बहुइं उप्पाइअसयाइं पाउब्भूआइं पासंति पासित्ता अण्णमण्णं सद्दावेंति सद्दावेत्ता एवं वयासी—एवं खलु देवाणुप्पिआ! अम्हं विसयंसि बहूइं उप्पाइअसयाइं पाउब्भूआइं तं०-अकाले गज्जिअं अकाले विज्जुअं अकाले पादपा पुप्फंति अभिक्खणं अभिक्खणं आगासे देवयाओ णच्चंति तेणं ण णज्जति णं देवाणुप्पिआ! अम्हं विसयस्स के मण्णे उवद्दवे भविस्सति त्तिकट्टु ओहयमणसंकप्पा चिंतासोगसागरे संपविट्ठा करयलपल्हत्थमुहा अट्टज्झाणो-वगया भूमिगयदिट्ठिआ झियायंति। तते णं भरहे राया चक्करयणदेसिअमग्गे जाव समुद्दरवभूअं पिव करेमाणे करेमाणे तमिसगुहाओ उत्तरिल्लेणं दारेणं णीति ससिव्व मेहंधकारनिवहा। तते णं ते आवडचिलाता भरहस्स रण्णो अग्गाणीअं एज्जमाणं पासंति पासित्ता आसुरुत्ता रुट्ठा चंडिक्किआ कुविआ मिसिमिसीमाणा अण्णमण्णं सद्दावेंति सद्दावेत्ता एवं वयासी—एस णं देवाणुप्पिआ! केवि अपत्थिअपत्थिए दुरंतपंतलक्खणे हीणपुण्णचउद्दसे हिरिसिरिपरिवज्जिए-जेणं अम्हविसयस्स अवरिवरिएणं हव्वमागच्छति। तं तहा धत्तामो णं देवाणुप्पिआ! जहा णं एस अम्हं विसयस्स अवरिवरिएणं णो हव्वमागच्छति त्तिकट्टु अण्णमण्णस्स अंतिए एअमट्ठं पडिसुणेंति पडिसुणेत्ता सण्णद्धबद्धवम्मिअकवया उप्पीलिअसरासणपट्टिआ पिणद्धगेविज्जा सिरआविद्धसुरहिपुप्फकलिअविमलवरचिंधपट्टा गहिआउहपहरणा जेणेव भरहस्स रण्णो अग्गाणीअं तेणेव उवागच्छंति उवागच्छित्ता भरहस्स रण्णो अग्गाणीएण सद्धिं संपलग्गा यावि होत्था। तते णं ते आवडचिलाता भरहस्स रण्णो अग्गाणीअं हयमथितपवरवीरघाइअविहडि-अचिंधज्झयपडागा किच्छप्पाणोवगयं दिसोदिसिं पडिसेहंति।

'ते णं काले णमि'त्यादि। तस्मिन् काले तस्मिन् समये उत्तरभरतार्द्धे आवड'त्ति। आपाता आपातजातीया नाम्ना 'चिलात'त्ति। किराता-किरातदेशोद्भवा किरातस्य चिलाता इति रूपसिद्धि प्राकृते प्रतीता। परिवसति। अथ ते कीदृशा इत्याह-'अड्ढे'त्यादि। आढ्या-समृद्धाः 'दित्त'त्ति। दृप्ता दर्पवन्तः वित्ता-प्रतीता विख्याता वक्ष्यमाणस्वरूपेणेत्यर्थः। तदेवाह-'विच्छिण्ण'त्ति। विस्तीर्णानि-विस्तारवन्ति विपुलानि-प्रभूतानि भवनशयनानि प्रतीतानि यानवाहनानि रथाश्वादीनि तैराकीर्णा-व्याप्ता। 'बहुधणे'त्यादि। बहु-प्रभूतं-धनं-गणिमादि तेन संयुक्तं जातरूपं च-सुवर्णं रजतं च-रूप्यं येषां ते तथा। 'आओगे'त्यादि। आयोगस्यार्थलाभस्य प्रयोगा-उपायाः सम्प्रयुक्ता व्यापारिता यैस्ते तथा। 'विच्छड्डिअ'त्ति। विच्छर्दिते-त्यक्ते बहुजनभोजनदानेन अवशिष्टोच्छिष्टसम्भवात्, सञ्जातविच्छर्दे वा प्रचुरे-नानाविधे प्रभूते वा भक्तं च पानं च भक्तपाने येषां ते तथा। 'बहुदासी'त्यादि। बहवो

दासीदासगोमहिषा प्रतीताः गवेलका-उरभ्राः प्रभूता येषा ते तथा । 'बहुजणस्स'त्ति । बहुजनस्य अपरिभूता-अपरिभवनीयाः बहुभिरपि बलवद्भिः पराभवितुमशक्या इत्यर्थः । 'सूर'त्ति । शूरा' दानतः प्रतिज्ञानिर्व्वाहतो वा वीराः रण सङ्ग्रामकरणतः विक्रान्ता भूमण्डलाक्रमणसमर्था. 'विच्छिण्णे'त्यादि । विस्तीर्ण्णादपि विपुल अतिविपुलमित्यर्थः । बल च-सैन्य च वाहनानि च तानि विद्यन्ते येषा ते तथा । 'बहुसु'त्ति । बहवो ये समराः-सामान्यतः सङ्ग्रामा. सम्परायास्तु सङ्ग्रामविशेषास्तेषा च बहुत्वम् अनेकरचनाप्रकारवशेन अनेकभेदभिन्नत्वादवसातव्य । तेषु किं लक्षणा.? लब्धलक्ष्याः लब्ध लक्ष्य-वेध्य वस्तु यैस्ते लब्धलक्ष्याः महासङ्ग्रामकरणेऽप्यनेकप्रकारेण कृताभ्यासाः। चापीत्यत्र चकारो विशेषणसमुच्चये अपिस्तूक्तविशेषणेषु वास्तवाधिक्येनाश्चर्यद्योतकः 'होत्थ'त्ति । अभवत् । अथाभिमुखमागच्छति भरते ह्युत्तरभरतार्द्धे यज्जात यच्च जायमान तदाह-'तते ण तेसिमि'त्यादि । ततस्तेषामापातकिरातानाम् अन्यदा कदाचित्एकदा प्रस्तावे विषये-देशे बहूनि पुनःपुनरुत्पत्तेरनेकविधानि उत्पातकानि प्रजापीडादिस-सूचकानि उल्कापातादिलक्षणानि तेषा शतानि तत्तद्देशनिवासिना मनुष्यादीना तथाविधाशुभभावसूचका अनेकशतसङ्ख्याकाः कालादिपरिणतिविशेषा इत्यर्थ । 'पाउब्भवित्थ'त्ति । प्रादुरभवत् सामान्येनोक्त विशेषत आह-'त जहे'त्यादि । तद्यथा 'अकाले'त्ति । अकाले गर्ज्जित-स्तनित मेघध्वनिरित्यर्थ. । एवम् 'अकाले विज्जुअ'ति । विद्युत्तडित् अकाले पादपाः वृक्षाः पुष्पन्ति-पुष्पानि प्रयच्छन्ति यद्यपि कालमन्तरेण किमपि कार्यं नोत्पद्यते कार्यमात्र प्रति कालादिपञ्चकस्य समुदायेनैव कारणत्वात् । यदुक्त—

'कालो सहाव नीई पुव्वकय पुरिसकार णेगता । समवाए सम्मत्त एगतिअ होइ मिच्छत्त'त्ति ॥१॥

परस्पर निरपेक्षा. पश्चाप्यकारणान्येवेतिभावः । तथापि नञ कुत्सार्थत्वात् कुत्सित. कालोऽकाल-इत्यर्थः । तत्रैव-गर्जितविद्युदादिकमधिकृत्य प्रावृट्काल काल. शेषस्तु कुत्सितत्वादकाल एव पादपानामपि जगत्स्थितया यो यस्य पुष्पोत्पत्त्यादिकाल स कालः शेषस्त्वकाल । यथा सहकारस्य कार्त्तिको मास । तथा 'अभिक्खण'त्ति । अभीक्ष्णमभीक्ष्णमिति वीप्साया पुन पुन आकाशे देवता-व्यन्तरविशेषाः नृत्यन्ति-नृत्य कुर्व्वाणान् व्यन्तरादीन् तत्रत्या जनाः पश्यन्तीत्यर्थ. । अथैव सति आपातकिराता. किं कुर्व्वन्ति ? इत्याह-'तते ण ते'इत्यादि । ततस्ते आपातकिराताः विषये-निजनिज-देशे बहून्यौत्पातिकशतानि प्रादुर्भूतानि पश्यन्ति दृष्ट्वा चान्योन्यं शब्दापयन्ति शब्दापयित्वा च एवमवादिषु. । 'एव खल्वि'ति । एव खलु देवानुप्रिया ! अस्माक विषये बहून्यौत्पातिकशतानि प्रादुर्भूतानि यावदाकाशे देवता नृत्यन्ति तेन कारणेन न ज्ञायते देवानुप्रिया ! अस्माक विषये कश्चिदुपद्रवो भविष्यतीति। मन्ये इति वितर्कार्थो निपातस्तेन सम्भावयाम इति कृत्वा 'ओहय'त्ति । उपहर्त किं कर्त्तव्यतया व्याप्तो मनःसङ्कल्पोऽनेकविकल्पात्मकमनश्चिन्तन येषा ते उपहतमन सङ्कल्पा. । कायिकादिव्यापाराणा मनोव्यापारानुयायित्वात् पूर्व्वप्रवाहपतितप्रवृत्तिनिवृत्यादिव्यापारशून्या अभूवन्नित्यर्थ । अत एव 'चिन्तासोग'त्ति । चिन्ता च शोकश्च चिन्ताशोकौ चिन्तापूर्व्वकः शोको वा तद्रूपो य' सागर.-समुद्रस्त प्रविष्टास्तत्र निमग्ना । अथ चिन्तासूचकचिह्नमाह-'करतले'त्यादि । करतले-पर्यस्त-विन्यस्त मुख यैस्ते तथा । अत एवार्तध्यानोपगताः निजसम्पद्रक्षणोपायविमर्शनलक्षणमार्त्तध्यान

प्राप्ता इत्यर्थ । तल्लिङ्गमाह 'भूमि'त्ति । भूमौ गता-प्राप्ता इतस्ततो विलोकव्यापारशून्या दृष्टिर्येषा ते तथा । एवविधचिन्ताचिह्नोपचिता. ध्यायन्ति-तदुपद्रवविद्रावणायानेकोपायविकल्पान् चिन्तयन्ति । अथैव व्यतिकरे सति भरत: कि कृतवानित्याह-'तते णमि'त्यादि । सुगम यावत्तमिस्रगुहाया उत्तरदिग्वर्तिना द्वारेण 'नीति त्ति । निर्गच्छति । कुत. ? क इव ? 'ससिव्वे'त्यादि । मेघान्धकारनिवहात् शशाव-चन्द्रवत् । अथ तदानी ते किराता कीदृशा जाता ? इत्याह-'तते ण ते'इत्यादि । ततस्ते आपातकिराता: भरतस्य राज्ञोऽग्रानीक सैन्याग्र आयन्-आगच्छन् । पश्यन्ति दृष्ट्वा च 'आसुरुत्ते'त्ति । आशुरुप्ता. कोपोदयाद्विमूढा। स्फुरितकोपलिङ्गा वा रुष्टा-उदितक्रोधा. चाण्डिक्किता: सञ्जातचाण्डिक्या: प्रकटितरौद्रकोपा इत्यर्थ: । कुपिता -प्रवृद्धकोपोदया. 'मिसिमिसीमाणा' इति । मिसिमिसायमाना: क्रोधाग्निना दीप्यमाना: एकार्थिका वा एते शब्दा: कोपप्रकर्षप्रतिपादनार्थमुपन्यस्ता: । 'अण्णमण्ण'ति । अन्योऽन्य शब्दापयन्ति शब्दापयित्वा चैवमवादिषु 'एस ण'ति । एषोऽध्यक्षसिद्ध: देवानुप्रिया ! कोऽप्यनिर्दिष्टनामा अप्रार्थितस्य मरणस्य प्रार्थका: 'दुरत'त्ति । दुरन्तानि-दुष्टावसानानि । अत एव प्रान्तानि-अमनोज्ञानि लक्षणानि यस्य स तथा । 'हीणपुण्ण'त्ति पूर्णा चासौ चतुर्दशी च पूर्णचतुर्दशी हीना-क्षीणा पूर्णचतुर्दशी यस्यास्तियं सा हीनपूर्णचतुर्दशी तस्या जातो य. स हीनपूर्णचतुर्दश: । जन्माश्रित्यात्यन्तभाग्यवतामेव जन्मनि पूर्णा चतुर्दशी भवति अय च ततोऽन्यस्यामेव जात इत्यर्थ । पुन: कीदृश? इत्याह-'हिरिसिरि'त्ति। ह्रीश्रीपरिवर्जित - लज्जालक्ष्मीभ्या परिवर्जित उक्तलक्षण. केन हेतुनेत्याह-'जेण अम्हे'इत्यादि । येन कारणेनाऽस्माक विषयस्य-देशस्य 'अवरवरिकेण'ति । वृणुहि वृणुहीत्येवरूपेण शब्दो यत्र सा वरवरिका समयभाषयोच्यते सा नास्ति यत्र तदऽवरवरिक तेनावरवरिकेण अनामन्त्रणेनोद्धत्येनेति यावत् । अय भाव. नास्माभि प्रथममुदीर्य कोप नीतो नाप्यन्येन केनाप्युदीर्य प्रहित: किन्तु स्वत एवानाहूतो विनाप्रयोजनमस्मद्विषये समागत्य योद्धमुद्यत इति । यद्वा-परेण वरित, परवरित न तथेत्यपरवरित: तेन भावनिर्देशादपरवरितत्वेन केनाप्यवरितोऽप्यय देशोऽस्माभिर्वरिष्यते इत्यात्मोत्कर्षेणेति भाव । 'हव्व'ति। शीघ्रमागच्छति 'त तह'त्ति। तत्तस्मात्कारणात् तथा 'धत्तामो'त्ति। प्राकृते क्षिपेर्धत्तादेशात् क्षिपाम -प्रेरयामो देवानुप्रिया. । यथा एषोऽस्माक विषयस्यावरवरिकेण न शीघ्रमायाति इति कृत्वा अन्योन्यस्यान्तिके एनमर्थ प्रतिशृण्वन्ति-कर्त्तव्यतया स्वीकुर्वन्ति स्वीकृत्य च 'सन्नद्धे'त्यादि । सन्नद्धा-सङ्ग्रामयितु सज्जीभूता. सन्तो बद्धवर्म्मितकवचा बद्ध-कसाबन्धनात् वर्म्मित-वर्म्मीकृत तनुत्राणहेतो: शरीरे नियोजनात् कवचमङ्गरक्षको यैस्ते तथा ततो विशेषणसमास 'उप्पीलिअ'त्ति । उत्पीडिता-आरोपित-प्रत्यञ्चा शरासनपट्टिका-धनुर्यष्टिर्यैस्ते तथा 'पिणद्ध'त्ति । पिनद्ध-परिहित सन् बद्ध ग्रैवेयक-ग्रीवाभरण यैस्ते तथा । शिरस्याविद्ध -आश्लिष्ट: सुरभिपुष्पकलितो विमलो वरचिह्नपट्टो वीरतासूचकचिह्नवद्वस्त्रपट्टो यैस्ते तथा । पुन. कीदृशा: ? 'गहिअ'त्ति । गृहीतायुधप्रहरणा आयुधप्रहरणयोरक्षेप्यक्षेप्यकृतो भेद: प्रागुक्तोऽवसातव्य: । यद्वा आयुधानि-खेटकादीनि प्रहरणानि-खड्गादीनि एवविधास्ते 'जेणेव'त्ति । यत्रैव भरतस्य राज्ञोऽग्रानीक तत्रैवोपागच्छन्ति उपागत्य च भरतस्य राज्ञोऽग्रानीकेन सार्द्धं सम्प्रलग्नाश्चाप्यभवन् योद्धमित्यध्याहार्यम् । अथापातकिराता भरतसैन्येन सह सम्प्रलग्ना

कि - कृतवन्त ? इत्याह–'तते ण ते'इत्यादि । ततस्ते आपातकिराता 'हतमथिते'त्यादि । हत–प्रहारदानत. मथित–महता मानस्य निर्म्मथनात् प्रवरा.–प्रधाना –वीरा सुभटा घातिता–विनाशिता यत्र तत्तथा । विघाटिताः पातिता विविधप्रहरणप्रहारैः प्रस्खलितच्छिन्नेभ्यो दण्डादिभ्यश्च्याविताश्चिह्न–ध्वजा –चिह्नभूतगरुडसिंहधराध्वजा पताकाश्च हस्तिनामुपरिवर्त्तिन्यो यत्र तत्तथा। 'किच्छ'त्ति कृच्छ्रेण प्राणा –श्वासोच्छ्वासादय उपगता –समीपवर्त्तिनो योधानामिति गम्य यत्र तत्तथा । यद्वा–कृच्छ्रप्राणान् प्रत्युपगता जीवन्तोऽपि मुक्तजीवितव्याशा इत्यर्थः । सुभटा इति गम्य यत्र तत्तथा । ततो हत च मथित चेत्यादि विशेषणसमासः । 'दिसो दिसिं'ति । दिशः सकाशात् दिशमपरदिश दिशोदिश–स्वाभिमतदिग्-परित्यागादपरदिगभिमुखमित्यर्थः । यद्वा–दिगेवान्यदिग् अनियतदिग् नाशभिप्रायेण यत्र तत्तथा भूय भूयः सम्भूय न समुदायी भवन्ति यथा तथेत्यर्थः। 'पडिसेहति'त्ति प्रतिषेधयन्ति सङ्ग्रामक्रियात पराङ्मुखी कुर्व्वन्तीत्यर्थ. । यद्वा–दिशश्च पूर्व्वादयः उपदिशश्च दिक् समीपवर्तिन्य आग्नेय्यादयो विदिशस्ता यत्रेति यथा स्यात्तथेतिक्रियाविशेषण प्रतिषेधयन्ति–नाशयन्ति भरतसैन्य भयत्रस्त स्वाभिमतदिग् भ्रष्ट यथाभवति तथा कुर्व्वन्तीति तात्पर्यम् ।

अथ दिगुपदिगाश्रित भरतसैन्यमवगम्य सुषेणो यथाजातस्तथा प्राह —

**तए ण से सेणावलस्स णेता वेढो जाव भरहस्स रण्णो अग्गाणीयं जाव आवडचिला-तेहिं हयमथितपवरवीर जाव दिसोदिसिं पडिसेहिअं पासति पासित्ता आसुरुत्ते रुट्ठे चंडिक्किए कुविए मिसिमिसीमाणे कमलामेलं आसरयणं दुरूइति । तते णं तं असीतिमंगुलमूसिअ णवणवतिअंगुलपरिणाहं अट्ठसयमंगुलमाततं बत्तीसंगुलमूसिअसिरं चउरंगुलकण्णाग वीसात-अंगुलबाहाकं चउरंगुलजण्णुकं सोलस अंगुलजंधाकं चउरंगुलमूसिअखुर मुत्तोलीसंवत्तवलि-अमज्झं ईसिं अंगुलपणयपट्ठं सगयपट्ठं पसत्थपट्ठं सण्णयपट्ठं सुजातपट्ठं विसिट्ठपट्ठं एणीजंतुण्णयवित्थयथद्धपट्ठं वेत्तलयकसनिवातअंकेल्लणपहारपरिवज्जिअंगं तवणिज्जथा-सकाभिलाण वरकणगमफुल्लथासगविचित्तरयणरज्जुपास कंचणमणिकणगपयरगनाणाविह-घंटिआजालं मुत्तिआजालगेहिं परिमंडिएण पट्टेण सोममाणेण सोभमाणं कक्केअणइंदनील-मरगयमसारगल्लमुहमंडणरइअआविद्धमाणिक्कसुत्तगविभूसिअ कणगामयपउमसुकयतिलग देवमइविगप्पिअं सुरिंदवाहणजोग्गं च त सुरूवं दूइज्जमाणपंचचारुचामरामेलग धरेंतं अण-ब्भवाह अभेलणयण कोकासिअबहलपत्तलच्छ सयावरणणवकणगतवियतवणिज्जतालुजीहासयं सिरिआभिसेअघोण पुक्खरपत्तमिवसलिलबिंदु अचचलं चंचलसरीरं चुक्खचरगपरिव्वायगो-विव हीलिज्जमाणं हीलिज्जमाणं खुरचरणचचुपुडेहिं धरणीअलं अभिहणमाणं अभिहणमाण**

दोविअ चलणे जमगसमगं मुहाओ विणिग्गमंतं सिग्घाए मुणालतंतुउदगमवि णिस्साए पक्कमंतं जातिकुलरूवपच्चयपसत्थबारसावत्तगविसुद्धलक्खणं सुकुलप्पसूअं मेहाविं भद्दयं विणीतं अणुगतणुगसुकुमाललोमणिद्धच्छविं सुजातं अमरमणपवणगरुडजइणचवलसिग्घगामिं इसिमिव खंतिखमाए सुसीसमिव पच्चक्खया विणीअं उदगहुतवहपासाणपंसुकद्दमससक्करसवालुइल्लतडा-गकडगविसमपब्भारगिरिदरीसु लंघणपिल्लणनित्थारणासमत्थं अचंडपाडिअ दंडपादि अणंसु-पातिं अकालतालुं च कालहेसिं जिअणिद्दं गवेसगं जिअपरीसहं जच्चजाइअमल्लहाणिं सुक-पत्तसुवण्णकोमलमणाभिरामं कमलामेलं णामेणं आसरयणं सेणावई कमेण समभिरूढे। कुवलयदलसामलं च रयणिकरमंडलनिभं सत्तुजणविणासणं कणगरयणदंडं नवमालिअपुप्फ-सुरभिगंधिं णाणामणिलयभत्तिचित्तं च पधोतमिसिमिसिंततिक्खधारं दिव्वं खग्गरयणं लोए अणोवमं तं च पुणो वंसरुक्खसिंगट्ठिदंतकालायसविउललोहदंडवरवयरभेदयं जाव सव्वत्थ अप्पडिहयं किं पुण देहेसु जंगमाण।

पण्णासंगुलदीहो सोलस से अंगुलाइं विच्छिण्णो। अद्धंगुलसोणीको जिट्ठप्पमाणो असी भणिओ ॥१॥ असिरयणं णरवइस्स हत्थाओ तं गहेऊण जेणेव आवाडचिलाता तेणेव उवागच्छति उवागच्छित्ता आवडचिलाएहिं सद्धिं संपलग्गयावि होत्था। तते णं से सुसेणे सेणावती ते आवडचिलाए हयमहितपवरवीरघाइअ जाव दिसोदिसिं पडिसेहेति ॥

'तते ण से सेणा' इत्यादि। ततः स सुषेण सेनाबलस्य नेता—स्वामी 'वेढो जाव' त्ति। वेष्टन-ग्रन्थन वेष्ट.। स च विवक्षितैकवस्तुस्वरूपनिरूपकपदपद्धतिरूप। स चैव—'भरहे वासंमि विस्सुअजसे महाबलपरक्कमे महप्पा ओअसी तेअलक्खणजुत्ते मिलक्खुभासाविसारए चित्तचारुभासी भरहे वासमि णिक्खुडाण णिण्णाण य दुग्गमाण य दुक्खप्पवेसाण य विआणए अत्थसत्थकुसले रयण सेणावई सुसेणे' इत्येव मात्र ग्राह्य, न पुनः 'भरहेणं रण्णा एव वुत्ते समाणे हट्ठतुट्ठे'त्यादि। समग्रमपि प्रागभिहितं सूत्रम्। एनेन वेष्टकवर्णकशब्दयो पर्यायताचिन्ता भविष्यतीति शङ्कापि व्युदस्ता। वर्णकशब्देनानेकवस्तुवर्ण्ण-कसूत्रस्यापि ग्राह्यत्वात्। यावत्करणात् 'आवाडचिलाएहिं'ति ग्राह्यम्। अथैव सुषेण सेनापति 'भरहस्स'त्ति भरतस्य राज्ञोऽन्यानीक आपातकिरातै हतमथितप्रवर यावद्दिशोदिश प्रतिषेधित पश्यति। यावत्करणात् घातितविघटितचिह्नध्वजपताकाकृच्छ्प्राणोपगतमिति दृष्ट्वा चे 'आसुरुत्ते' इत्यादि। आसुरुत्ते कोपोदया-द्विमूढ.। रुट्ठ-उदितक्रोध.—चाण्डिक्यित सञ्जातचाण्डिक्य। कुपित -प्रवृद्धकोपोदय। मिसमिसायमान -क्रोधाग्निना देदीप्यमान। एवंविध सेनापति. कमलामेलं कमलामेलाभिधानमश्वरत्नमारुहति। अथ कीदृश चाश्वरत्नमारूढ ? इति प्रथमस्तद्वर्णकमाह—'तते णमि'त्यादि। तत. शब्दोऽथार्थे। अथ तदश्व—

रत्नम् 'असोति'त्ति । अशीतिरङ्गुलानि उच्छ्रित-उच्चम्-उच्चत्वेनाशीत्यङ्गुलप्रमाणमित्यर्थ. । मकारोऽलाक्षणिक. । 'नवनवति'त्ति । नवनवतिरङ्गुलानि परिणाहो-मध्यप्रदेशपरिधेर्विशालता यस्य तत्तथा । 'अट्ठसय'त्ति । अष्टोत्तरशतमङ्गुलान्यायत-दीर्घं यत्तत्तथा । अथ यदुक्तमशीत्यङ्गुलान्युच्छ्रितं तत्कथमित्यवयवविभागेन व्यक्तिकुर्व्वन्नाह-'बत्तीस'त्ति । द्वात्रिंशदङ्गुलोच्छ्रितशिरस्क चरणाव्यपदेशविषयविभागादुपरितनोऽश्वरत्नस्य भाग सर्व्वोऽपि मस्तकमुच्यते चत्वार्यङ्गुलानि कर्णौ यस्य तत्तथा । विंशतिरङ्गुलानि बाहू यस्य तत्तथा । अत्र बाहा नाम जानुन उपरितनश्चरणप्रदेश चत्वार्यङ्गुलानि जानु यस्य तत्तथा । 'सोलस'त्ति । षोडशाङ्गुलानि जङ्घा यस्य तत्तथा । जङ्घा नाम खुराजानुनोरन्तरालवर्त्ती चरणप्रदेश' । चत्वार्यङ्गुलान्युच्छ्रिता खुरा यस्य तत्तथा । एव सर्व्वावयवानामुच्चत्वाङ्गुलसङ्ख्यामीलनेऽशीत्यङ्गुलान्युच्छ्रितमश्वरत्न सम्पन्नम् ।

एवमुच्चत्वेन लक्षणोपेतावयवसम्पन्नत्व सप्रदर्श्य शेषशुभ लक्षणोपेतत्वमाह-'मुत्तोली'त्यादि । मुत्तोली नाम कोष्ठिका सा चाधउपरिसङ्कीर्णा मध्ये तु उभयतोऽपि क्रमेणेषदीषद्विशाला स्यात् ते नतद्वत्सवृत्त-सम्यक् वृत्ताकार वलित च वलनस्वभाव न पुन. स्तब्धस्वभाव मध्य-मध्यभागो यस्य तत्तथा । 'ईसिं'ति । ईषत्किंचित्क्रमेण न पुनः सहसैव अङ्गुलाष्टप्रणतमुभयत उन्नतान्तप्रदेशापेक्षयाऽष्टाङ्गुलावनतपृष्ठमुपवेशनार्हः पृष्ठभागो यस्य तत्तथा । क्वचित् 'इसिं अंगुट्ठप्पणयपट्ठे'त्ति पाठ तत्रेषत्किञ्चित् अङ्गुष्ठप्रणत अधोमुखतिर्यक्ताडिताङ्गुष्ठवदवनत मध्ये निम्नमिति यावदेवविध पृष्ठ यस्येत्यर्थः । अत एव सङ्गतपृष्ठ स्वोचितगुणाकीर्णपृष्ठ 'पसत्थ'त्ति । प्रशस्तपृष्ठ-प्रशस्तलक्षणोपेतपृष्ठ 'सन्नत'त्ति । सम्यक् नत पृष्ठ यस्य तत्तथा । यद्यपि प्राग् प्रणतपृष्ठमित्युक्त तथा प तत्सम्यक् स्यान्न वा इद तु सम्यक् नतमिति सार्थकतासूचकं । तदपि कुत ? यत. सुजात-जन्मदोषरहित पृष्ठ यस्य तत्तथा । अथ यदुक्तमष्टाङ्गुलप्रणत तच्चोन्नतत्वसापेक्षमत उन्नतत्व प्रसङ्गतो विस्तृतत्वादि चोपमयाह-'एणोजतु'त्ति । एणोयन्त्र-यन्त्रविशेषस्तच्चाग्रत पृष्ठतश्च उन्नत मध्ये च किञ्चिन्निम्न तदपि विस्तृत दृढ च स्यादतस्तद्वत्तदुपमया उन्नत च विस्तृत च प्रतीत स्तब्ध स्थिरस्वभाव न पुन. शिथिलम् एवविध पृष्ठ यस्य तत्तथा । यद्वा एणीयन्त्रवदुन्नत तदपि न सङ्कीर्णं किन्तु विस्तृतं तदपि शिथिलमारोहत पतनशङ्कोत्पादक स्यादत आह-स्तब्ध दृढ ततो विशेषणकर्म्मधारय. । एवविध पृष्ठ यस्य तत्तथा । पुनः कीदृश? 'वेत्तलये'त्ति । वेत्रलता प्रतीता कसश्चर्म्ममययष्टिका तयोर्यो निपातः 'अकेल्लण' हयतर्ज्जन तत्प्रहारस्ताभ्या वर्ज्जितमङ्ग-शरीर यस्य तत्तथा । अनेन स्वामिनो मनोऽनुकूलतया प्रवर्त्तनेनातिविनीतत्व ज्ञापितम् अन्यथा कसादिनिपाताभावाऽसम्भवात् । तथा 'तवणिज्ज'त्ति । तपनीयमया स्थासका-पृष्ठिभागे भूषणविशेषाः 'अहिलाण' च मुखसयमन यस्य तत्तथा । 'वरकणग'त्ति । वरकनकमया सपुष्पा-पुष्पाकृत्या सयुक्ताः स्थासका-अनन्तरोक्तस्वरूपा ताभिश्चित्रा-विविधचित्रयुक्ता रज्जुः पार्श्वयोर्यस्य तत्तथा । 'कचनमणि'त्ति । काञ्चन च मणयश्च तं रचितानि यानि कनकप्रतरकाणि-अश्वाभरणविशेषा. तानि च नानाविध विचित्रप्रकार घण्टिकाजाल च-मुक्तिकाजालकानि च प्रतीतानि तैः परिमण्डितेन-शोभमानेन पट्टेन लोकप्रसिद्धेन शोभमानं । 'कक्केअण'त्ति । कर्क्केतनेन्द्रनीलमरकतमसारगल्लै.-रत्नविशेषै

मुखमण्डनार्थं रचितम् आविद्धं-नियोजित माणिक्य यत्रैवंविध सूत्रकं-सूत्रमयो रश्मि लोकप्रतीतस्तेन विभूषितमलङ्कृतमर्थान्मुखे यत्तत्तथा। 'कणकामय'त्ति। कनकमयेन-सुवर्णात्मकेन पद्मेन-कमलेन सुकृत-शोभन विहित तिलक यस्य तत्तथा 'देवमइ'त्ति। देवमतिर्दिव्यविज्ञान तेन निर्म्मितमिव सुरवरेन्द्र -शक्रस्तस्य वाहनयोग्य-शक्रोपवेशनोचित च समुच्चये 'त सुरूव'त्ति। प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादाना नापेक्षते इति वचनादत्र तत्पद प्रसिद्धचा वैशिष्ट्यद्योतक तेन तत् प्रसिद्ध सुरूप-शोभन रूप यस्य तत्तथा। 'दुइज्जे'त्यादि। द्रवन्ति इतस्ततश्चलन्ति 'पंच'त्ति। द्वे कर्ण्णयोर्मूले एक मस्तके एक च ग्रीवायामेक च ललाटपट्टे इति पञ्चसङ्ख्याकानि चारूणि-मनोहराणि यानि चामराणि तान्येव 'आमेलग'त्ति। आपोड-शेखर तद्धरतीति धरन् 'अणवब्भबाह'त्ति। 'अभ्रवभ्रमभ्रगतावि'तिवचनात् न वभ्रत इत्यवभ्रं-स्थिरे नाऽनभ्रे अनवभ्रे एवविधे वाहे-वाहू यस्य तदनवभ्रबाह। अत्र नञ्द्वयप्रयोगो हि प्रकृतमर्थ सूचयन्नपि अब्राह्मणो न भोजयितव्य इत्यादाविव स्थिरस्वभावव्यवच्छेदेनैवावधारणसूचक। तेनाकृत्रिम-चलनस्वभाववाहाकमिति सम्पन्न लक्षणोपेतस्य हि जात्याश्वस्य वाहू चलनस्वभावावेव भवत इति-प्रतीति. सार्व्वजनोनैव। क्वचित् 'अणब्भवाह'ति पाठः। तत्र अभ्रवदाकाशवन्निष्क्रिये वाहे न विद्येते यस्य तदनभ्रवाह सततचापल्ययुक्तवाहाकमित्यर्थः। क्वचित् 'अणदब्भबाह'त पाठ.। तत्र अनद-नि शब्द यथास्यात्तथाऽभ्र इव व्योम्नीव बाहोर्गमन यस्य तत्तथा भूमावलग्नपदतया ललितगतिकमित्यर्थं। 'अभेल'त्ति। अभेने-अभीरुणो भयानकवस्तुदर्शनेऽपि भयरहिते नयने लोचने यस्य तत्तथा। 'कोका-सिअ'त्ति। कोकासिते विकसिते स्मिते इव बहले-निविडे पत्रले-पक्ष्मवतो सस्नेहे वा अक्षिणो यस्य तत्तथा। 'सयावरण'त्ति। सदा निरन्तरं न पुन पर्व्वोत्सवादौ नवकनकमयान्नवसुवर्णतन्तुनिष्पन्नं वस्त्र तदेवावरणमाच्छादन रजोरक्षार्थं यस्येति प्राकृतत्वाद्विशेषणस्य परनिपात। 'तविअ'त्ति। तापित यत्तपनोयं रक्तसुवर्ण तत्सदृशे तालुजिह्वे यत्रैवंविधमास्यक-मुख यस्य तत्तथा। ततो विशेषणकर्म्मधारय। 'सिरिआभिसेअ'त्ति। श्रीकाभिषेको-लक्ष्म्यभिषेचनरूपो लक्षणविशेषो घोणेनासिकाया यस्य तत्तथा। क्वचित्पुन 'सिरिआभिसेअघोसणे'त्ति पाठ। तत्र श्रियो-राज्यलक्ष्म्या अभिषेकोऽभिषेकहेतु पञ्चदिव्यान्त-र्भूतत्वेन घोषण-हेषित यस्य तत्तथा। 'पुक्खरपत्तमिव त्ति। पुष्करपत्र नलिनदल तस्मिन् सलिलबिन्दु-मित्र अचञ्चल सदपि चञ्चलशरीर यथा पुष्करपत्रे स्थिरोऽपि सलिलबिन्दुस्तथाविधकान्तिविशेषेण चञ्चल इवाभाति तथेदमश्वरत्नमपि स्थैर्यावस्थायामपि देहदीप्त्या चञ्चलशरीरमिवाभासत इति। यद्वा-जलबिन्दु-रिव यत् तत्तथा निजावस्थानभूप्रदेशे कमलपत्रे जलबिन्दुवत् कान्त्यादिना विभ्राजते इत्यर्थं। यद्वा-गति-परिणतमश्वरत्न कोदृशमिति ज्ञानाय विशेषणान्याह-'अचचल'ति। अचञ्चल मनोविकारहेतुवस्तुसम्पर्केऽपि मनश्चापल्यरहित। न चैव शरीरेणापि भविष्यतोत्यत आह- 'चञ्चल'त्ति। चञ्चलस्वभावतश्चापल्यभाग् शरीर यस्य तत्तथा। एतच्च जात्याश्वस्य लक्षण 'चुक्ख'त्ति। चोक्ष.-पवित्रो द्रव्यतोजलकृतस्नान भावतो निजागमविहितानुष्ठानपरायणो यश्चरकपरिव्राजकस्तापसविशेष स इवाभिलीयमान अभि-परितः सामस्त्येन 'लीङ् विश्लेषणे' इति वचनात् लीयमानमपरवस्तु नाश्लिष्यन् स्पर्शादिकुर्व्वन्। अय भाव.- शुचीभूतस्तापसो मूत्रपुरीषाद्यशुचिसम्पर्कमनुचितप्रवृत्ति च परित्यजन्नेवान्यत्र

प्रवर्त्तते तथेदमपीति तापसेनोपमान । यद्वा–चोक्षपरिव्राजक इव 'हिलीयमाण'त्ति । जिहि यन्–लज्जमानम् । अयं भाव.–लोकपूज्यो हि तथाविधस्तापसोऽनुचित समाचरन् स्वत एव लज्जते न पुनराक्रोशादिवचसैव तथेदमपि अश्वरत्न स्वामिना निरीक्ष्यमाणमेव इङ्गिताकारादिनैव मनोलक्षक स्वत एवानुचितप्रवृत्तौ लज्जते न पुनः स्वामिवाक्प्रयोगादिनेति । 'खुरचरणे'त्ति । चरणयो. खुरे प्राकृतत्वाद्व्यत्ययः । ते एव चञ्चुपुटे ताभ्या क्वचित् 'पखुरचरणचञ्चुपुडेहिं' ति पाठः । तत्र प्रकृष्टौ खुरौ ययोरेवंविधयोश्चरणयोश्चञ्चुपुटैराघातविशेषैर्धरणीतलमभिघ्नन्-पृथिवीतलस्याभिघात कुर्वन् । पुन कीदृश ? 'दोत्री'त्यादि । द्वावपि चरणौ–अग्रपादौ यमकसमक युगपत् मुखाद्विनिर्गमयदिव तथैव मुखाभिमुखमूर्ध्वमग्रपादौ नयति यथा मुखान्निर्गच्छन्ताविव प्रतिभासेते एव स्वरूपेण 'सिग्घाए'त्ति । शीघ्रया गत्या मृणाल-कमलनाल तस्य तन्तुस्तन्त्वाकारावयवविशेष स चात्यन्त सूक्ष्मो मृदुश्च स त्र उदक च मृणालतन्तूदकम् एतच्च चरणाघातेन चलनस्वभाव गच्छता नावष्टम्भहेतु. तेनास्तामन्यत् तस्यापि निश्रया प्रक्रामत् विश्रामनिमित्त पादाभ्या स्पृशदेव याति–गच्छति प्राकृतत्वात् षष्ठयर्थे द्वितीया । अनेन शीघ्रगामित्वेपि तथाविधकर्म्मक्षयोपशमवशात् गमने शरीरस्यातिलाघवकरणशक्तिर्दर्शिता । न चैतदसम्भवि । केषा ? लब्धिमता साधूना जलोपरि गच्छता पादौ नार्द्रौस्याताम् अग्नावपि सञ्चरतो न दाहादिसम्भव । अत एवाष्टापदाद्रावारोहत श्रीगौतमस्य सूर्यकिरणा अप्यालम्बनहेतवो बभूवास कर्म्मणा क्षयोपशमस्य वैचित्र्यात् आस्तामन्यत् लब्ध्यादि उपकोशापि सर्षपपुञ्जोपरिस्थितसूचीशिखरे कुसुम विमुच्य भ्रमरी दत्तवतीत्यादिख्यातिरद्यापि प्रतीता । 'जाइकुलरूवे'त्यादि । जातिर्मातृपक्षः कुल च पितृपक्षो रूप च सुन्दरावयवादिलक्षण तेषा प्रत्यय.–प्रतीतिर्येभ्यस्ते जातिकुलरूपप्रत्ययाः एवविधा ये प्रशस्ता शोभमानाः 'द्वादशे'ति द्वादशसङ्ख्याकाः आवर्त्तका–दक्षिणावर्त्तलक्षणास्ते च उरसि द्वौ शिरसि द्वौ रन्ध्रोपरन्ध्रयोश्च तौ द्वौ द्वौ एक ललाटपट्टे विन्ध्यादेक प्रपाते चेति सामान्यत उत्तमाश्वाना दश भवति । अस्य तु द्वावधिकौ ज्ञातव्याविति तैर्विशुद्धानि पवित्रीकृतानि लक्षणानि यस्य तत्तथा । अतएव 'सुकुल'त्ति । शोभनकुलप्रसूतं 'मेहावि'त्ति । मेधावि–बहुकालधरणसमर्थं मतिमत् 'भद्दय'त्ति । भद्रक–कौटिल्यस्वभावरहित भद्रद वा निजपृष्ठमारूढस्य समाहितजयदायकमित्यर्थ । विनीत सुशिष्य इव स्वामिनो मनोऽनुकूलतया प्रवृत्तिमत् 'अणुगे'त्या द । अणुकानि–ह्रस्वानि तनुकानि–सूक्ष्माणि सुकुमाराणि–मृदूनि यानि लोमानि तैर्हेतुभूतैः स्निग्धा छ वर्यस्य तत्तथा । सुजात–जन्मदोषरहित सुयात वा शोभनगमन 'अमरमणे'त्यादि । अमरा-देवा मन–स्वान्त पवनो–मरुत् गरुड–पक्षिविशेष· ततो द्वन्द्वस्तेभ्य· सकाशात् 'जइण'त्ति । जवि–वेगवत् तेषा जयि वा जयनशील चपल यथा स्यात्तथा शीघ्रगामि ततः कर्म्मधारय. । 'इसिमिव'त्ति । ऋषिमिव कया क्षातिक्षमया क्षान्त्या न पुनरसामर्थ्येन क्षमा शास्त्रोक्ता सप्तकषायाभावस्ते चामी –

रोषणो भ्रान्तचित्तश्च द्वेषण. स्खलना वशः । अमार्गगमनो भीरुः कषायाः सप्तवाजिनाम् ॥१॥ इति । तथा 'सुसीसमिव'त्ति । सुशिष्यमिव प्रत्यक्षतया साक्षात् विनीत 'उदगे'त्यादि उदक प्रतीत हुतवहो-वह्नि पाषाणो-दृषद पासवो-रेणव· कर्दम प्रतीतः सशर्क्कर च शर्क्करासयुक्तस्थान 'सवालुइल्ल'त्ति । सवालुक–वालुकास्थल तटाक प्रतीत क्वचित्तटाकस्थाने तडत्ति पाठः तत्र तट-नद्यादिसमीपप्रदेश. ।

कटको–गिरिनितम्ब: । 'विसम'त्ति । विषम–निम्नोन्नतस्थल । 'पब्भार'त्ति । प्राग्भार.–एकत उन्नत: पर्वतवर्तीस्थानविशेष: गिरिरद्रि. दरी-गुहा तत इतरेतरद्वन्द्व: तासु । 'लंघणे'त्यादि । लङ्घन-तदतिक्रमण अर्वाचीनप्रदेशात् परप्रदेशे गमन तत्र 'पिल्लण'त्ति । प्रेरण आरूढस्य तदुल्लङ्घनाभिप्रायकरण निस्तारणा च विवक्षितस्थानप्रापण ततो द्वन्द्व । तत्र समर्थयत्तत्तथा । 'अचडपाडिअ'त्ति । चण्डे. सङ्ग्रामादौ कोपाकुलसुभटै: पाटित–खण्डित न तथेत्यचण्डपाटित चण्डैरप्यखण्डित तन्मुक्तप्रहाराणा वैफल्यादित्यर्थ । क्वचित् 'अचडपासिअ'ति पाठ । तत्र चण्ड–उग्र पाश–पादबन्धनादि न विद्यते चण्ड पाशो यस्य तत्तथा अदुष्टस्वभावात्तथा पाशासम्भवात् 'दडपाडि'त्ति दण्ड इवायत पतनशील–गमनशील दण्डपाति शीघ्रगामितयातिलाघवेन भूमौ चरणोपन्यास तथा करोति यथा निर्घाताद्यभावेन चरणा सहसा न दग्पथमवतरन्ति तेन गच्छन् दण्ड इव जनैर्लक्ष्यते इत्यर्थ । अत एव मृणालतन्तुजलादिनिश्रयापि न तस्य गमन प्रागभिहित 'अणसु'त्ति । अनश्रुपाति–अश्रुपातवर्जितम् अकालतालु–अश्यामतालुक-मित्यर्थ । चकारो विशेषणसमुच्चये । 'कालहेसि'ति काले–निजजात्युचितसमये हेषितु शीलमस्येति कालहेषि जिता निद्रा येन तज्जितनिद्र 'गवेसग'ति । गवेषक-गमनागमनाहारनीहारादौ उचितानुचित–स्थानाद्यन्वेषक समीक्ष्य पादन्यासादिकारकमित्यर्थ । स्वामिकार्यप्रतीच्छक वा जितपरीषह शीताद्युपद्रव–सहिष्णुशरीरमित्यर्थं । 'जच्चे'त्यादि । जात्या–प्रधाना सा चासौ जातिश्च जात्यजाति. प्रधानमातृपक्ष: उपलक्षणात्प्रधानपितृपक्षोपि तस्या भवो य. स जात्यजातीय: एवविधो यो मल्लो–बलवान् सुभट तस्य धान-धरणं निजपृष्ठस्योपरीति गम्य तद्विद्यते यस्येतीन् । यद्वा धान-धरण विद्यते यस्य तद्धानि धर्तृ तथाविधमल्लस्य धानि जात्यजातीयमल्लधानि एतेनास्याऽश्वरत्नस्य पृष्ठावारोहकश्चक्रवर्ती तत्सेना–पतिर्वा स्यात् नापरस्तस्य तदतिचपलवेगगमनजन्यकायकम्पन–नयनभ्रमर्यादिना तत्क्षणादेव भूमिनिपातादिप्रादुर्भूतप्राणवियोगसम्भवादिति ज्ञापित । क्वचित् मल्लिहाणि'त्ति पाठ तत्र मल्ला सन्त्यस्येति मल्ली–मल्लाधिपति: मल्लश्रेष्ठ इत्यर्थ:। तस्य धान शेष प्राग्वत् 'सुकपत्त'त्ति शुकपत्रवत्–शुकपिच्छवत् सुवर्ण-शोभन वर्ण कोमल गृद्र 'मणाभिराम'त्ति । मनोभिराम कमनीय तत: नाकर्मधारय । 'नामेण'त्ति नाम्ना कमलामेलम् 'आसरयण'त्ति । अश्वरत्न सेनापति क्रमेण तदारोहणर-चप्रकारेण समभिरूढ । अथाश्वरत्नमारूढ सेनापति. किं कृतवानित्याह–कुवलये'त्यादि । असिरयण णर-वइस्स हत्थाओ त गहेऊणामित्यत्र तच्छब्दस्य साक्षाद्भणितत्वेन यत्तदोर्नित्याभिसम्बन्धात् यदित्यध्याहार्यं यदसिरत्न कुवलयदल–नीलोत्पलपत्र तदिव श्यामल-कृष्ण च समुच्चये । पुन. कीदृश ? रजनीकरश्चन्द्र-स्तस्य मण्डलेन सन्निभ सदृश तद्वत्कान्तिभृत् यद्वा–करेण परिभ्राम्यमाण कान्त्याऽऽकारादिना चन्द्रमण्डल-सदृशमिवेत्यर्थ: । शत्रुजन विनाशयतीति शत्रुजनविनाशन कनकरत्नमयो दण्डो हस्तग्रहणयोग्यो पाल्या अधो यवत्रयात्मको मुष्टिलक्षणो यस्य तत्तथा । नवमालिका सपूलावल्लीविशेषस्तस्या पुष्पमतिसुरभि स्यात् तद्वत्सुरभिगन्धस्तद्विद्यते यस्य तत्तथा । 'नाणामणि'त्ति । नानामणीना लताभिर्लताकृतिभिर्भक्त्या चित्राणि यत्र तत्तथा च समुच्चये । 'पधोते'त्यादि । प्रधौता इव प्रधौता खरशानारोपणादिना उत्तेजिता इवेति वा अत एव 'मिसिमिस'त्ति । मिसिमिसायमाना-चिकचिकायमाना तीक्ष्णधारा यस्य तत्तथा । दिव्य

खड्गरत्न लोके अनुपमान-आत्मव्यतिरिक्तोपमानरहित किन्तु एतत्सदृशमेतदेवेत्यर्थ । 'त च पुणो'त्ति । तच्च पुन. कीदृश? 'वसरुक्खे'त्यादि । वशवृक्षश्च प्रतीत. शृङ्ग च-माहिपादिविषाण अस्थि च दन्ताश्च-प्रतीता कालायस च-लोह सामान्यत. विपुललोहदण्डोऽतिस्थूललोहदण्ड वरवज्र यदत्यन्ताग्निसम्पर्केऽप्य-भस्मभवनस्वभाव रत्नजातिविशेष: तेषा भेदक-द्विधाकरणसमर्थं यावत्सर्व्वत्राऽप्रतिहत अस्खलितप्रचार । अत्र यावच्छब्दो नोक्त वर्णकसूत्रसङ्ग्राहक: किंतु जगदुदरवर्तिसर्व्ववस्तुसङ्ग्राहक किं पुनर्देहेषु जङ्गमाना त्रसजीवशरीरभेदने किमाश्चर्यमितिभाव । अथ प्रमाणतस्तत्कीदृशमिति गाथयाह-'पण्णासगुले'त्यादि । सुगमा । नवर श्रोणी-मुष्टिग्राह्यावयवविशेष । सा च फलस्य शल्य यत्मुष्टिपालीयकान् भित्वा निर्यांति चारार्गमिति लोकरूढ ज्येष्ठप्रमाणोऽसिर्भणित. । ज्येष्ठपदोपादानात् लघुप्रमाणो द्वात्रिंशदङ्गुलोऽपि स्यादिति ज्ञापित । तेन 'बत्तीसगुलखग्गो'त्ति वचनेन सह विरोधाभाव । एव यदुक्तं तदसिरत्न नरपतेर्भरतनाम्नो राज्ञो हस्ताद् गृहीत्वा यत्रैव आपातकिराता तत्रैवोपागच्छति उपागत्य चापातकिरातै सार्द्धं सम्प्रलग्नश्चाप्यभवद् योद्धमितिगम्यम् । अथ योद्धु सम्प्रलग्न: किंकृतवानित्याह-तते णमि'त्यादि । ततस्तदनन्तर सुषेण सेनापति. आपातकिरातान् 'हयमथिते'त्यादि । हता प्रहारदानत: मथिता-माननिर्म्मथनात् प्रवरवीरा.-प्रधानसुभटा घातिताश्च येषा ते हतमथितप्रवरवीरघातिता. । 'जाव'त्ति । यावत्करणात् कृच्छ्रप्राणोपगता मुक्तजीविताशास्तान् 'दिसोदिसि'ति । दिगुपदिशं प्रतिषेधयति-नाशयति सङ्ग्रामक्रियात: पराङ्मुखीकृत्य स्वाभिमतदिग्भ्रष्टान् करोतीत्यर्थं ।

अथ ते आपातकिराता. कीदृशा जाता ? इत्याह—

**तते णं ते आवडचिलाता सुसेणेण सेणावइणा हयमहिआ जाव पडिसेहिआ समाणा भीआ तत्था वहिआ उव्विग्गा संजातभया अत्थामा अबेला अवीरिआ अपुरिसक्कारपरक्कमा अधा-रणिज्जमिति कट्टु अणेगाइ जोअणाइं अवक्कमंति अवक्कमित्ता एगओ अ मेलायंति मेलायित्ता जेणेव सिंधुमहाणदी तेणेव उवागच्छंति उवागच्छित्ता वालुआसंथारए संथरेंति संथरेत्ता वालुआ-संथारए दुरूहंति दुरूहित्ता अट्ठमभत्ताइं पगिण्हंति पगिण्हित्ता वालुआसंथारोवगया उत्ताणगा अवसणा अट्ठमभत्तीआ जे तेसिं कुलदेवया मेहमुहा णामं णागकुमारा देवा ते मणसी करेमाणा करेमाणा चिट्ठति । तते ण तेसिं आवडचिलाताणं अट्ठमभत्तंसि परिणममाणंसि मेहमुहाणं णागकुमाराणं देवाणं आसणाइं चलंति । तते णं ते मेहमुहा णागकुमारा देवा आसणाइं चलिआइं पासंति पासित्ता ओहिं पउंजंति पउंजित्ता आवडचिलाए ओहिणा आभोएंति आभोएत्ता अण्णमण्णं सद्दावेंति सद्दा-वित्ता एवं वयासी , एवं खलु देवाणुप्पिआ ! जंबुद्दीवे दीवे उत्तरड्ढभरहे वासे आवाड-चिलाया सिंधुमहाणईए वालुआसंथारोवगया उत्ताणगा अवसणा अट्ठमभत्तीआ अम्हे कुलदेवए मेहमुहे णागकुमारे देवे मणसी करेमाणा करेमाणा चिट्ठंति । तं सेअं खलु देवाणुप्पिआ !**

अम्हं आवाडचिलायाणं अंतिअं पाउब्भवित्तए त्तिकट्टु अण्णमण्णस्स अंतिअं एअमट्ठं पडिसुणेंति पडिसुणेत्ता ताए उक्किट्ठाए तुरिआए जाव वितीवयमाणा वितीवयमाणा जेणेव जंबुद्दीवे दीवे जेणेव उत्तरड्ढभरहे वासे जेणेव सिंधु महाणई जेणेव आवाडचिलाता तेणेव उवागच्छंति। अंतलिक्खपडिवण्णा सखिंखिणीआइं पंचवण्णाइं वत्थाइं पवरपरिहिआ ते आवाडचिलाते एवं वयासी-हं भो आवाडचिलाता! जं णं तुब्भे देवाणुप्पिआ! वालुआसंथारोवगया उत्ताणगा अवसणा अट्ठमभत्तीया अम्हे कुलदेवते मेहमुहे णाम णागकुमारे देवे मणसी करेमाणा करेमाणा चिट्ठह। तते णं अम्हे मेहमुहा णागकुमारा देवा तुब्भं कुलदेवता तुम्हं अंतिअं पाउब्भूआ। तं वदह णं देवाणुप्पिआ! किं करेमो किं आचिट्ठामो के वा भे मणसाइए? तते णं ते आवाडचिलाता मेहमुहाणं णागकुमाराणं देवाणं अंतिए एअमट्ठं सोच्चा निसम्म हट्ठतुट्ठचित्तमाणंदिआ जाव हिअया उट्ठाए उट्ठेंति उट्ठेत्ता जेणेव मेहमुहा णागकुमारा देवा तेणेव उवागच्छंति उवागच्छित्ता करतलपरिग्गहिअं जावमत्थए अंजलिं कट्टु मेहमुहे नागकुमारे देवे जएणं विजएणं वद्धावेंति वद्धावेत्ता एवं वयासी—एस णं देवाणुप्पिआ! केइ अपत्थिअपत्थिए दुरंतपंतलक्खणधरे जाव हिरिसिरिपरिवज्जिए जेणं अम्हं विसयस्स अवरवरिएणं हव्वमागच्छति। तं तहा णं घत्तेह देवाणुप्पिआ! जहा णं एस अम्हं विसयस्स अवरवरिएणं णो हव्वमागच्छति। तते णं ते मेहमुहा णागकुमारा देवा ते आवाडचिलाए एवं वयासी। एस णं देवाणुप्पिआ भरहे णामं राया चाउरंतचक्कवट्टी महिड्ढीए महज्जुतीए जाव महासोक्खे णो खलु एस सक्का केणइ देवेण वा दाणवेण वा किंनरेण वा किंपुरुसेण वा महोरगेण वा गंधव्वेण वा सत्थप्पओगेण वा अग्गिप्पओगेण वा मंतप्पओगेण वा उद्दवित्तए वा पडिसेहित्तए वा तहाविअ णं अम्हे तुम्हं पिअट्ठाए भरहस्स रण्णो उवसग्गं करेमो त्तिकट्टु तेसिं आवाडचिलायाणं अंतिआओ अवक्कमंति, अवक्कमित्ता वेउव्विअसमुग्घाएणं समोहणंति समोहणित्ता मेहाणीअं विउव्वंति विउव्वित्ता जेणेव भरहस्स रण्णो विजयक्खंधावारनिवेसे तेणेव उवागच्छंति उवागच्छित्ता उप्पिं विजयक्खंधावारनिवेसस्स खिप्पामेव पतणुतणायंति पतणुतणायित्ता खिप्पामेव विज्जुआयंति विज्जुआयित्ता खिप्पामेव जुगमुसलमुट्ठिप्पमाणमित्ताहिं धाराहिं ओहमेहं सत्तरत्तं वासं वासिउं पवत्तायावि होत्था।

'तते ण ते' इत्यादि। ततस्ते आपातकिराता. हतमथितप्रवरवीरघातिता. दिगुपदिश प्रतिषेधिताः सन्तो भीता-भयाकुलास्त्रस्ताः स्वस्थानात्पलायिता.। व्यथिताः-शस्त्रप्रहारोद्भूतवेदनाका.। उद्विग्नाः

समुत्पन्नोद्वेगा । सञ्जातभया.-सम्यग्भयमापन्नाः । अस्थामानः-शक्तिरहिता । अत एवाबला -शरीरादिबलशून्या । अवीर्या -मनोवीर्यरहिताः मुक्तसाहसा इत्यर्थ । अत एव 'अपुरिसक्कारे'त्ति पुरुषकार'-पुरुषाभिमान स एव निष्पादितस्वप्रयोजनः पराक्रम. ताभ्या वर्जिता इत्यर्थः । 'अधारणिज्ज'ति आत्मनो धर्त्तु मशक्यमिति कृत्वा-इति हेतो. 'अणेगाइ'ति । अनेकानि योजनान्यपक्रामन्ति अपक्रम्य च 'एगओ'त्ति । एकत्र-विजनप्रदेशे 'मेलायति'त्ति । मेलापक कुर्वन्ति सम्भूय सम्मतीभवन्तीत्यर्थ । मेलापयित्वा च यत्रैव सिंधुर्महानदी तत्रैवोपागच्छन्ति उपागत्य च वालुकासंस्तारक संस्तरन्ति संस्तीर्य च तत्र 'दुरूहति'त्ति । आरोहन्ति आरुह्य चाष्टमभक्तानि-उपवासत्रयरूपाणि । बहुवचन च कर्तृणामापातकिराताना बहुत्वात् । 'प्रगृह्णन्ति-अभ्युपगच्छन्ति । बालुकासस्तारोपगताश्च 'उत्ताणग'त्ति । उत्तानशायिन. । 'अवसण'त्ति । अवसना-वस्त्ररहिताः शोभाकारिनेपथ्यविकलाः लज्जाया मनुष्यधर्मत्वेन गुह्यप्रदेशाच्छादनहेतवेऽभ्युपगत-कोपीनमात्रा इत्यर्थ । अष्टमभक्तिका सन्तो येनैषा कुलदेवता. मेघमुखा नाम्ना नागकुमारा देवास्तान् मनसि कुर्वन्तस्तिष्ठन्ति । अथैवं सति यज्जात तदाह-'तते ण तेसिं'ति । ततस्तेषामापातकिराताना तथाविधध्यानानन्तरमष्टमभक्ते परिणमति सति मेघमुखाना नागकुमाराणा देवानाम् आसनानि चलन्ति । ततस्ते आसनानि चलितानि पश्यन्ति दृष्ट्वा च अवधिं प्रयुञ्जन्ति प्रयुज्य च आपातकिरातान् अवधिना आभोगयन्ति-विलोकयन्ति आभोग्य च अन्योन्यं शब्दापयन्ति शब्दापयित्वा च एवं वक्ष्यमाणप्रकारेण अवादिषुरुक्तवन्तः । अथ वक्ष्यमाणप्रकारमाह-'एवं खलु'त्यादि । एव खलु देवानुप्रियाः ! जबूद्वीपे द्वीपे उत्तरभरतार्द्धवर्षे आपातकिराता. सिन्धोर्महानद्या समीपे वालुकासस्तारकोपगताः उत्तानका इत्यादि प्राग्वत् । 'अम्हे'त्ति । अस्मान् कुलदेवतान् मेघमुखान् नागकुमारान् देवान् मनसि कुर्वन्त. कुर्वन्तस्तिष्ठन्ति । तं सेअ'ति । तत् श्रेय -शोभन खलु देवानुप्रिया ! अस्माक यदिति गम्य यत् आपातकिराताना अतिअ'ति । समीप प्रादुर्भवितु - प्रकटीभवितुमिति कृत्वा 'अण्णमण्णस्स'त्ति । अन्योन्यस्यान्तिके प्रतिशृण्वन्ति रहो विचारित सत् यैः कैश्चिन्न श्रुत तेऽप्यन्येषा पार्श्वे शृण्वन्तीति श्रुत्वा च 'ताए'त्ति । तया देवजनप्रतीतया उत्कृष्टया-प्रशस्तविहायोगतिनामकर्म्मणा यः स्वर्गत्युत्कर्षस्तद्वत्या त्वरितया-मान सौत्सुक्यात् यावत् 'वीतिवयमाणा' इति व्यतिव्रजन्तः व्यतिव्रजन्त. यावत्करणात् 'चवलाए जयणाए सिग्धाए दिव्वाए देवगईए'त्ति । यत्रैव जम्बूद्वीपो द्वीपो यत्रैवोत्तरभरतार्द्धवर्षः यत्रैव सिन्धुर्महानदी यत्रैवापातकिरातास्तत्रैवोपागच्छन्ति उपागत्य च 'अतलिक्ख'त्ति । अन्तरिक्षमाकाश प्रतिपन्ना ये ते तथा । 'सखिखिणीआइ'ति । सकिङ्खिणीकानि-क्षुद्रघण्टिकासयुक्तानि पञ्चवर्णानि वस्त्राणि प्रवरपरिहिता. प्रवर यथास्यात्तथा परिहितवन्त इत्यर्थ ।एवविधा मेघमुखा देवा 'ते'इति तान् पूर्वोक्तस्वरूपान् आपातकिरातान् एवमवादिषुः । तदेवाह-'ह भो आवाडे'त्यादि । ह भो इति कोमलामन्त्रणे । आपातकिराता यत् यूय देवानुप्रिया ! वालुकासस्तारोपगता उत्तानका अवसनाः अष्टमभक्तिका अस्मान् कुलदेवतान् मेघमुखान् नाम्ना नागकुमारान् देवान् मनसिकुर्वन्तो मनसिकुर्व्वन्तस्तिष्ठत । 'तते ण अम्हे'-त्ति । ततस्तेन कारणेन वय मेघमुखा नागकुमारा देवा युष्माक कुलदेवताः अन्तिक-समीप प्रादुर्भूता. तद्वदत णमित्यलकारे । देवानुप्रिया. ! कि कुर्म्म स्वय परप्रेरणया वा किं कार्यं कुर्म्म इति सामान्यतः

प्रयोजनवाक्य । किं आचेष्टामहे निजकायव्यापारेण प्रवर्त्तामहे । किं वा मे-भवता मन सात्विक-मन.सुखोत्पादक मनोभिप्रायेण विकल्पितमित्यर्थ । 'तते ण ते' इत्यादि । ततस्ते आपातकिराता मेघमुखाना नागकुमाराणा देवानामन्तिके एनमर्थंश्रुत्वा-श्रवणगोचरीकृत्य निशम्य च-मनसि अवधृत्य हृष्टतुष्टचित्तानन्दिता' यावत् हर्षवशविसर्प्पत्हृदया 'उट्ठाए'त्ति । उत्थान उत्था-ऊर्ध्ववर्त्तन तया उत्थया उत्तिष्ठन्ति यत्रैव मेघमुखा नागकुमारा देवा तत्रैवोपागच्छन्ति उपागत्य च करतलपरिगृहीत मस्तके अञ्जलि कृत्वा मेघमुखान् नागकुमारान् जयेन विजयेन वर्द्धापयन्ति वर्द्धापयित्वा एवमवादिषु । 'एस ण'ति । एषोऽध्यक्षसिद्धो देवानुप्रिया. । ण.मित्यलङ्कारे । कोपि अप्रार्थितप्रार्थक दुरन्तप्रान्तलक्षण यावत् । ह्रीश्रीपरिवर्ज्जित यावत्करणात् 'हीणपुण्णे'त्यादि । येनास्माक विषयस्य अवरवरिकेण हव्व-शीघ्रमागच्छति । तत्तस्मात् तथा 'घत्तेह'त्ति । क्षिपत-घातयत देवानुप्रिया' । यथा एषोऽस्माक विषयस्य अवरवरिकेण नो हव्यमागच्छति ततस्ते मेघमुखा नागकुमारा देवा तान् आपातकिरातान् एवमवादिषु । एष णमिति प्राग्वत् । भरतो नाम्ना राजा चातुरन्तचक्रवर्त्ती 'महिड्ढीए'त्ति । महती ऋद्धिर्भवनपरिवारादिका यस्य स तथा । महती द्युति -शरीरगता आभरणगता च यस्य स तथा । 'जाव महसोक्खे'ति यावन्महासौख्य । यावत्करणात् 'महव्बले महायसे महाणुभावे'इति तत्रमहद्बल-शरीरप्रभव यस्य स तथा महत् ख्यातिर्यस्य स तथा । महाननुभावो गाहात्म्य यस्य स तथेत्यादि 'णो खलु'इत्यादि । खलुरवधारणे नैव एष शक्य' केनापि देवेन वा दानवेन वा किन्नरेण वा महोरगेण वा किंपुरूषेण वा गन्धर्व्वेण वा 'सत्यपओगेणमि'त्यादि । शस्त्रप्रयोगेण खड्गादिजन्यव्यापारेण । एवमग्निप्रयोगेण वा मन्त्रप्रयोगेण वा' उद्दवित्तए व'त्ति । उपद्रवयितु-उपद्रव कर्त्तु प्रतिषेघयितु-तदभिलषितक्रियात पराङ्मुखीकर्त्तु वा । अय भाव'-यत् खड्गादिप्रयोगेणासाध्य तत् सर्व्वतोधारशस्त्रात्मकेनाग्निना साध्य तेनापि यदसाध्य तन्मन्त्रप्रयोगेण साध्य भवत्येव तस्याग्नेरपि शीतलीकरणसामर्थ्यात् अय च भरतो न मन्त्रप्रयोग साध्योऽपि । एवमात्मनोऽसामर्थ्ये सूचितेऽपि आपातकिरातानामेवाराधनविधिकष्ट तत्पूर्व्वकमस्माकमागमन च मा विफलीभवतु भरतसामर्थ्यं च दृष्ट्वा एतदाज्ञाविधायिनो भवन्तु चेत्यभिप्रायेण ते देवा यदाहुस्तदाह-'तहाविअ णमि'त्यादि । यद्यप्युपद्रोतुमशक्यस्तथापि च युष्माक प्रीत्यर्थ भरतस्य राज्ञ उपसर्गं कुर्म्म इति कृत्वा तेषा सुखहेतवे श्रावयित्वेत्यर्थ । 'तेसिं आवडे'त्यादि । तेषामापातकिरातानामन्तिकात्समीपात् अपक्रामन्ति अपक्रम्य च वैक्रियसमुद्घातेन उत्तरवैक्रियकरणाय शक्तिविशेषेण 'समोहणति'त्ति । समवघ्नन्ति-समुद्घ्नन्ति आत्मप्रदेशान् विक्षिपन्ति समुद्घत्य मेघानीक-मेघसैन्य विकुर्व्वन्ति विकुर्व्य यत्रैव भरतस्य विजयस्कन्धावारनिवेशस्तत्रैवोपागच्छन्ति त्रैवोपागत्य विजयस्कन्धावारनिवेशस्य 'उप्पिं'ति । उपरिक्षिप्रमेव 'पतणतणाय'ति । स्तनन स्तनोगर्ज्जनस्तनास्तन स्तनस्तन अविलम्बेन वारवारमित्यर्थ । प्रकर्षेण स्तनस्तन प्रस्तनस्तन कुर्व्वन्तीति प्रस्तनस्तनयन्ति । क्षिप्रमेव 'विज्जुआयति'त्ति । विद्युत कुर्व्वन्ति कृत्वा च क्षिप्रमेव 'जुगे'त्यादि । युग च मुशल च मुष्टिश्च युगमुशलमुष्टय प्रतीता । ताभि प्रमाण-मात्रा यासा तास्ताभिर्धाराभि ओघमेघसामान्येनाविशेषेण मेघो यत्र तदोघमेघम् एवविध वर्ष-वृष्टि वर्षितु प्रवृत्ताश्चाप्यभवन् कालत सप्तरात्रसप्ताहोरात्रमित्यर्थ ।

अथ तदानीं भरतो यत्कृतवांस्तदाह ।

तते णं से भरहे राया उप्पिं विजयखंधावारस्स जुगमुसलमुट्ठिप्पमाणमित्ताहिं धाराहिं ओघमेघं सत्तरत्त वासं वासमाणं पासइ पासित्ता चम्मरयणं परामुसइ । तते णं तं सिरिवच्छसरिसरूवं वेढो भाणिअव्वो जाव दुवालस जोअणाइं तिरिअं पवित्थरति तत्थ साहिआइं । तते णं से भरहे राया सखंधावारबले चम्मरयणं दुरूहति दुरूहित्ता दिव्वं छत्तरयणं परामुसति । तते णं तं णवणवइसहस्सकंचणसिलागपरिमंडिअं महरिहं अउज्झं णिव्वणसुपसत्थविसिट्ठलट्ठकंचणसुपुट्ठदंडं मिदुरायतवट्टलट्ठअरविंदकण्णिअसमाणरूवं वत्थिपएसे अ पंजरविराइअं विविहभत्तिचित्तं मणिमुत्तपवालतत्ततवणिज्जपंचवण्णिअधोतरयणरूवरइअं रयणमरीइसमप्पणाकप्पकारमणुरंजितेल्लिअं रायलच्छिचिंधं अज्जुणसुवण्णपंडुरपच्चत्थुअपट्ठदेसभागं तहेव तवणिज्जपट्टधम्मंतपरिगयं अहिअसस्सिरीअं सारयरयणीकरविमलपडिपुण्णचंदमंडलसमाणरूवं नरिंदवामप्पमाणपगइविच्छिण्णं कुमुदसंडधवलं रण्णो संचारिमं विमाणं सूरातववातवुट्ठिदोसाण खयकरं तवगुणेहिं लद्धं

अहयं बहुगुणदाणं उऊण विवरीय सुहकयच्छायं । छत्तरयणं पहाणं सुदुल्लहं अप्पपुण्णाणं ॥१॥ पमाणराईण तवगुणाणं फलेक्कदेसभागं विमाणवासेवि दुल्लहतरं वग्घारिअमल्लदामकलावं सारयधवलब्भचंदणिगरप्पगासं दिव्वं छत्तरयणं महिवइस्स धरणिअलपुण्णचंदो । तते णं से दिव्वे छत्तरयणे भरहेणं रण्णा परामुट्ठे समाणे खिप्पामेव दुवालस जोअणाइं पवित्थरति साहिआइं तिरिअं ॥

'तते ण से' इत्यादि । तत स भरतो राजा तथाविध वर्ष वर्षन्त पश्यति दृष्ट्वा च चर्मरत्न परामृशति 'तते णमि'त्यादि । ततो भरतस्पर्शनितर श्रीवत्ससदृशरूप 'वेढो'त्ति । वेष्टो-विवक्षितैकवस्तुस्वरूपनिरूपकपदपद्धतिलक्षणो भणितव्य. । स चैव-'मुत्तातारद्धचंदचित्तं अचलमकंपं अभिज्जकवय जंत सलिलासु सागरेसु अ उत्तरण दिव्व चम्मरयणमि'त्यादि प्रागुक्त कियद्दूरमित्याह-'जाव दुवालसे'त्यादि यावत् द्वादश योजनानि तिर्यक्प्रविस्तरति तत्र साधिकानि । 'ततेणं से' इत्यादि । तत स भरतो राजा सस्कन्धावारबल स्वसैन्यसहित चर्मरत्नमारुहति आरुह्य च दिव्य प्रधान देवताधिष्ठित वा छत्ररत्न परामृशति । अथ छत्ररत्नवर्णनमाह-'तते णमि'त्यादि । तत इत्यथार्थे णमित्यलङ्कारे । तत् छत्ररत्नं कीदृशं ? 'णवणउ'त्ति । नवनवतिसहस्राणि या काञ्चनशलाकास्ताभि परिमण्डितं यत्तत्तथा 'महारिह'ति । महतामुत्तमानामतुलपुण्यवतामर्हं-योग्य यद्वा-महे-महसि उत्सवे इति यावत् अर्हं-पूज्य महार्हं 'अउज्झं'ति अयोध्य-योद्धुमशक्य लक्षणया एतच्छत्रयुक्तेन पुरुषेण सह केनापि योद्धु न शक्यते इत्यर्थ. । 'निव्वणे'-

त्यादि । निर्व्रणः क्षतादिदोषरहितः सुप्रशस्तोऽतिशयेन विशिष्टः लष्टो-मनोज्ञ काञ्चनः-काञ्चननिष्पन्न सुपुष्ट -शोभन यथा स्यात्तथा पुष्टो नातिस्थूलो नातिकृशो यथोचितमानोपेतः ततो विशेषणकर्म्मधारयः एवंविधो दण्डो यस्य तत्तथा 'मिदुरायते'त्यादि । मेदुर-सान्द्रस्निग्ध ह्रस्वत्व प्राकृतत्वात् आयत-विस्तीर्ण्णं वृत्त-वर्त्तुल लष्ट-मनोज्ञ यदरविन्द-कमल तस्य कर्णिका-बीजकोशः तत्समानरूपमाकृत्यादि यस्य तत्तथा 'वत्थिपएसे'त्ति। वस्तिप्रदेशे-शलाकानिवेशस्थानलक्षणेऽधस्तनप्रदेश इत्यर्थ. पञ्जरवद्विराजित पञ्जर हि शुकाद्यवरोधसद्म तच्च शुकादिस्थितिहेतवे समश्रेण्या एककाष्ठप्रोतानावृतविरलशलाकासमूह-रचित स्यात् तथेदमपि सम श्रेण्या-एकदण्डनिविष्टाभिर्विरलाभि क्रमेण प्रवर्द्धमानान्तरालाभिर्नवनवति-सहस्रसुवर्णशलाकाभिर्निष्पन्नमप्यधोभागेऽनावृतत्वेन पञ्जरवद्दृश्यमानत्वात् पञ्जरोपमर्मिति 'विविह'त्ति। विविधानि नानाप्रकाराणि भक्त्या-विच्छित्त्या चित्राणि यस्मिन् तत्तथा 'मणिमुत्ते'त्यादि । मणयश्चन्द्र-कान्ताद्या मुक्ताप्रवाले प्रतीते तप्त यत्तपनीय-रक्तसुवर्णं ततो द्वन्द्व. तैर्हेतुभूतैः पञ्चवर्णास्ते जाता येषु तानि मणिमुक्ताप्रवालतप्ततपनीयपञ्चवर्णितानि धौतानीव धौतानि रज. स्पर्शकाकबिन्द्वादि बाह्याभ्यन्त-दोषरहितानि ततो विशेषणकर्म्मधारयः एवंविधानि यानि रत्नानि कर्क्केतनादीनि तै. रूप-स्वरूप रचितं यस्य तत्तथा। यद्वा-रचित रूप-स्वरूप यस्येति प्राकृतत्वाद्व्यत्ययः 'रयणमरीइ'त्ति । रत्नानां मरीचय -कान्तयस्तासा समर्प्पणा-दान कान्तिहेतुपरिकर्म्मणाविशेषः तस्या. कल्पस्तद्विधिप्रतिपादकग्रन्थविशेषस्तस्य कारः-कर्त्ता प्रणेता स च रत्नपरिकर्म्मणायामति-प्रवीण स्यात् तस्यापि मनसो-मानसस्य 'रंजितेल्लक'त्ति। रञ्जक रञ्जकस्य रञ्जितेल्लकत्व स्वार्थिके इल्ल-कप्रत्यये आर्षत्वादिकारे चावसातव्यम् । अनेन विशेषणेन रत्ननिष्पन्नमपि न सामान्यरत्ननिष्पन्न किन्तु परीक्षकाणामप्याश्चर्यभूतरत्ननिष्पन्नमिति ज्ञापित 'रायलच्छि'त्ति।राजलक्ष्मीचिह्न 'अज्जुण'त्ति। अर्जुन-सुवर्ण्ण-श्वेतसुवर्ण तत्सम्बन्धिपण्डुर-धवलमर्थात्तन्मयतन्तुनिष्पन्न वस्त्र तेनावस्तृत-आच्छादित. पृष्ठदेश-भाग.-उपरितनप्रदेशो यस्य तत्तथा 'तहेव'त्ति ।तथैवेतिसमुच्चये 'तवणिज्जपट्ट'त्ति । ध्मायमान यत् तप-नीयरक्तसुवर्ण्णं तस्य यः पट्टस्तेनपरिगत परितो वेष्टित प्राकृतत्वाद्विशेषणस्य परनिपात 'अहिअ'त्ति।अधिक यथास्यात्तथा सश्रीक 'सारय'त्ति।शारदरजनी करोतीति शारदरजनीकर एवंविधोऽपि विमलो-निर्म्मल. प्रतिपूर्ण -पूर्णिमा सम्बन्धी यश्चन्द्रस्तस्य मण्डल तेन समान प्रकाशकत्वादिगुणं. सदृश रूप यस्य तत्तथ । 'नरिंद'त्ति। नरेन्द्रस्य चक्रवर्त्तिनो यो वामः प्रसारितोभयबाहुस्तेन प्रमाणेन प्रकृत्या-स्वभावेन विस्तीर्ण्णं प्रकृत्या वामप्रमाणमिति भणनेन साधिकं द्वादशयोजनप्रमाण यद्भणित तत्प्रयोजनविशेषे ह्योपाधिकमिति-मन्तव्य 'कुमुद'त्ति । कुमुदखण्डवद्धवलमिति प्रतीत 'रण्णो'त्ति ।राज्ञो भरतस्य सञ्चारिम-सञ्चरणशील विमानमिव विमान 'सूरातव'त्ति । सूरातपवातवृष्टीना ये दोषास्तेषा क्षयकर-प्रणाशक 'तवगुणेहिं'ति । तपोगुणै पूर्व्वजन्मनि समाचरितैरिति गम्यं यत इह जन्मनि समाचरिततपोभिरिद छत्र नावाप्यते लब्ध-प्राप्तम् । 'अहत'ति। गाथा-तत्र अहतम्मलाद्यनुपहत 'बहु'त्ति । बहूनामनेकप्रकाराणाममितानां गुणानां दान-मुत्सर्ज्जन यस्य तत्तथा तच्छत्राधः स्थितानामुद्वेगाद्युपद्रवराहित्य सौन्दर्यशौर्यादिगुणसाहित्य च स्यादित्यर्थ. 'उऊण'त्ति। ऋतूनां विपरीता सुखकृता कृतसुखा प्राकृतत्वात् क्तान्तस्य परनिपातं छाया यस्य तत्तथा । अयभाव-एतच्छत्रस्य छाया उष्णकाले शीतला शीतकाले चोष्णा । अत एव ऋतुविपरीता इत्यादि

'छत्तरयण'ति । छत्ररत्नमिति विशेष्यपद । पुन. कीदृशं ? प्रधान राज्ञोंत्कृष्ट सुदुर्लभमल्पपुण्याना । 'पमाणराईण'त्ति । प्रमाणीभूता राजान प्रमाणराजानश्चक्रवर्त्तिन । तेषा च प्रमाणत्वं नरदेवत्वेन तत्पुरस्कारेणैव लौकिकप्रवृत्तिनिवृत्तिहेतुज्ञानविज्ञानादिप्रवृत्ते । तेषा प्राग्जन्मनि तपोगुणास्तेषा फलकदेशभाग:प्राकृतत्वान्नपुंसकता विमानवासेऽपि दुर्लभतर 'वग्घारिअ'त्ति । प्रलम्बितो दामकलापो यत्र तत्तथा । 'सारय'त्ति शारदधवलाऽभ्रचन्द्रनिकरवत्प्रकाशो यस्य तत्तथा । दिव्यं–प्रधानं देवताधिष्ठित वा छत्ररत्नमितिविशेष्यपद न च पौनरुक्त्यमाशङ्क्य पूर्वगाथानुलोम्यदुक्तावान् । यद्वा–महीपतेर्भरतस्य छत्ररत्नमर्थात्मस्तके ध्रियमाण धरणीतल पूर्णचन्द्र इव दृष्टॄणां चेतसि प्रतिभासते इति पृथगेवान्वय । यद्वा-छत्रेषु रत्नमिवेतिविशेषणमित्येव प्रसङ्गागत छत्रस्वरूप निरूपितम् । अथ प्रकृतमुच्यते–'तते ण से दिव्वे' इत्यादि । ततस्तत् णमित्यलङ्कारे प्रागुक्तस्वरूप दिव्य छत्ररत्न भरतेन राज्ञा स्पृष्ट सत्क्षिप्रमेव साधिकानि द्वादशयोजनानि तिर्यक् प्रविस्तरति ।

**तते णं से भरहे राया छत्तरयणं खंधावारस्सुवरिं ठवेइ ठवेत्ता मणिरयणं परामुसइ वेढो जाव छत्तरयणस्स वत्थिभागंमि ठवेइ तस्स य अणतिचरं चारुरूवं सिलनिहिअत्थमतसित्तसालिजवगोधूममुग्गमासतिलकुलत्थसट्ठिगनिप्फावचणगकोद्दवकोत्थुंभरिकगुवरालक अणेगधण्णावरणहारितकअल्लकमूलकहालिद्दालावुकतउसतुंबकालिंगकविट्ठअंबअंबिलिआसव्वनिप्फादकं सुकुसले गाहावइरयणेत्ति सव्वजणवीसुअगुणे भरहस्स रण्णो तद्दिवसपइण्णनिप्फाइअपूआणं सव्वधण्णाणं अणेगाइं कुंभसहस्साइं उवट्ठवेति । तते णं से भरहे राया चम्मरयणसमारूढे छत्तरयणसमोच्छण्णे मणिरयणकओज्जोए समुग्गतभूएणं सुहंसुहेणं सत्तरत्तं परिवसति**

**णवि से खुहा ण वलिअं णेव भयं णेव विज्जए दुक्खं। भरहाहिवस्स रण्णो खंधावारस्स वि तहेव ॥१॥**

'तते ण से' इत्यादि तत स भरतो राजा छत्ररत्न स्कन्धावारस्योपरि स्थापयति स्थापयित्वा च 'मणिरत्न परामृशति 'वेढो'त्ति । वेष्टो वक्तव्य सचैव-'तो त चउरंगुलप्पमाणमेत्त च अणग्घत तसछलस अणोवमजुत्ति दिव्व मणिरयणपतिसममि'त्यादि 'सव्वभयविप्पमुक्कोमणिरयण गहाये'त्यन्त पाठो वक्तव्य 'जाव छत्तरयणस्से'त्यादि । यावच्छत्ररत्नस्य बस्तिभागेऽधस्तनप्रदेशे शलाकाधारदण्डपार्श्वे स्थापयति तन्मणिरत्नम् । अथ तत्रोपयोगी गृहपतिरत्नवर्णनमाह– तस्स ये'त्यादि । तस्य च भरतस्य गृहपतिरत्नमस्तीति शेष कीदृशम् ? अनतिचर–निजप्रतिज्ञाया न चरतीत्यनतिचर चारुरूप-शोभनरूप प्राकृतत्वात्पुंस्त्व 'सिलनिहिअत्ये'त्यादि शिलाया-शिलातले निहितो निक्षिप्त–उप्त इति यावदर्थ शाल्यादीनां वीजभूत एवंविधोऽपि नजलेन सिक्त किन्तु 'मतसित्त'त्ति । मन्त्रसिक्त शाल्यादिस्वरूपजनक मन्त्रपदाभिषिक्तस्तेन हेतुभूतेन 'सालिजवे'त्यादि । शालिश्च यवश्च गोधूमश्च मुद्गश्च माषश्च तिलश्च कुलत्थश्च षष्टिकश्च निष्पावश्च चनकश्च कोद्रवश्च कुस्तुंबुरु च कगुश्च वरालकश्चेत्येवविधाना धान्यभेदानाम्

अवरण्य च हारितक च आर्द्रक च मूलक च हरिद्रा च अलाबु च त्रपुष च तुम्ब च कलिङ्गं च कपित्थ चाऽऽम्रश्चाम्लिका च सर्व्वं चोक्तादन्यदपि मनुष्यभोग्यवनस्पतिजात तेषा च निष्पादकं-जनक प्रत्त-तथा सुकुशलमतिनिपुण भरतस्य राज्ञो गृहपतिरत्नमित्येवरूपेण सर्व्वजनेषु विश्रुतगुण प्राय पुस्त्व प्राकृतत्वात् 'तद्दिवस'त्ति। तस्मिन्नेव दिवसे प्रकीर्णानि चोप्तानि निष्पादितानि च निष्ठां प्रापितानि पूतानि च पवित्राणि तद्दिवसप्रकीर्णनिष्पादितपूतानि तेषा सर्व्वधान्यानाम् अनेकानि कुम्भसहस्राणि मानविशेषरूपाणि उपस्था-पयति कुम्भप्रमाणं च-'दो असतीओ पसती दो पसतिओ सेतिआ चत्तारि सेतिआओ कुडओ चत्तारि कुडवा पत्थो चत्तारि पत्था आढय चत्तारि आढया दोणो सट्ठी आढयाइ जहण्णकुम्भो असीइ मज्झिमो सयमुक्कोसो'त्ति। 'तते ण'ति। तत स भरतो राजा चर्म्मरत्नसमारूढ छत्ररत्नसमवच्छन्न मणिरत्नकृतोद्योत. समुद्गकभूत रामुद्गकान्तर्वर्त्तीव णर्मितिप्राग्वत् सुखमुखेन शरीरखेदाद्यभावेन सप्तरात्र परिवसति। कथ सुखसुखेन ? इति गाथामाह-'णवि से खुहे'त्ति। नापि नैव से-तस्य क्षुधा न चलित चर्म्मरत्नस्य भूमेरिव स्थिरत्वात् नैव भय नैव विद्यते दुख भरताधिपस्य राज्ञः स्कन्धावारस्यापि तथैव क्षुधादि न प्रभवती-त्यर्थ.। राज्ञा स्कन्धावारस्यापि तथैव भरतवदेवेत्यर्थ ।

तते णं तस्स भरहस्स रण्णो सत्तरत्तंसि परिणममाणंसि इमेआरूवे अब्भत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था। केस णं भो! एस अपत्थिअपत्थिए दुरंतपंत-लक्खणे जाव परिवज्जिए जे णं मम इमाए एआरूवाए जाव अभिसमण्णागयाए उप्पिं विजय-खंधावारस्स जुगमुसलमुट्ठि जाव वासं वासति। तते णं तस्स भरहस्स रण्णो इमं एआरूवं अब्भत्थिअं चिंतितं पत्थितं मणोगयं संकप्पं समुप्पण्णं जाणित्ता सोलस देवसहस्सा सण्णज्झिउं पवत्ता यावि होत्था। तते णं ते देवा सण्णद्धबद्धवम्मिअकवया जाव गहिअआउहपहरणा जेणेव ते मेहमुहा णागकुमारा देवा तेणेव उवागच्छंति उवागच्छित्ता मेहमुहे णागकुमारे देवे एवं वयासी हं भो! मेहमुहा णागकुमारा देवा अपत्थिअपत्थगा जाव परिवज्जिआ किण्णं तुब्भे ण याणह भरहं राय चाउरंतचक्कवट्टिं महिड्ढीअं जाव उवद्दवित्तए वा पडिसेहित्तए वा तहावि अ णं तुब्भे भरहस्स रण्णो विजयक्खधावारस्स उप्पिं जुगमुसलमुट्ठिप्पमाणमित्ताहिं धाराहिं ओघमेघसत्तरत्तं वासं वासह तं एवमवि गए इतो खिप्पामेव अवक्कमह अहवा ण अज्ज पासह चित्तं जीवलोअं। तते णं ते मेहमुहा णागकुमारा देवा तेहिं देवेहिं एवं वुत्ता समाणा भीआ तत्था वहिआ उव्विग्गा संजायभया मेहाणीअं पडिसाहरंति पडिसाहरित्ता जेणेव आवाड-चिलाता तेणेव उवागच्छंति उवागच्छित्ता आवाडचिलाए एवं वयासी—एस णं देवाणुप्पिआ! भरहे राया महिड्ढीए जाव णो खलु एस सक्का केणइ देवेण वा जाव अग्गिपओगेण वा जाव

उवद्दवित्तए वा पडिसेहित्तए वा तहवि पुण अम्हेहिं देवाणुप्पिआ! तुब्भ पिअट्ठयाए भरहस्स रण्णो उवसग्गे कए। तं गच्छह णं तुब्भे देवाणुप्पिआ! ण्हाया कयबलिकम्मा कयकोउअमंगल-पायच्छित्ता उल्लपडसाडगा ओचूलगवत्थणियत्था अग्गाइं वराइं रयणाइं गहाय पंजलिउडा पायवडिआ भरहं रायाणं सरणं उवेह। पणिवइअवच्छला खलु उत्तमपुरिसा णत्थि भे भरहस्स रण्णो अंतिआओ भयमितिकट्टु एवं वदित्ता जामेव दिसिं पाउब्भूआ तामेव दिसिं पडिगया। ततेणं ते आवडचिलाता मेहमुहेहिं णागकुमारेहिं देवेहिं एव वुत्ता समाणा उट्ठाए उट्ठेति उट्ठेत्ता ण्हाया कयबलिकम्मा कयकोउअमंगलपायच्छित्ता उल्लपडसाडगा ओचूलगवत्थणियत्था अग्गाइं वराइं रयणाइं गहाय जेणेव भरहे राया तेणेव उवागच्छंति उवागच्छित्ता करयलपरिग्गहिअं जाव मत्थए अंजलिं कट्टु भरहं राय जएणं विजएणं वद्धावेंति वद्धावेत्ता अग्गाइं वराइं रयणाइं उवणेंति उवणेत्ता एवं वयासी—

वसुधर-गुणधर जयधर हिरिसिरिधितिकित्तिधारगनरिंद।
लक्खणसहस्सधारग-रज्जमिणं णो चिरं धारे ॥ १ ॥

हयवइ गयवइ णरवई णवणिहिवइ भरहवासपढमपई।
बत्तीसं जणवयसहस्सरायसामी चिरं जीव ॥ २ ॥

पढमनरीसर ईसर हिअईसर महिलिआसहस्साणं।
देवसयसहस्सीसर चउदस रयणीसर जसंसी ॥ ३ ॥

सागरगिरिपेरंतं उत्तरवातीणमभिजितं तुमए।
ता अम्हे देवाणुप्पिअस्स विसए परिवसामो ॥ ४ ॥

अहो णं देवाणुप्पिआणं इड्ढी जुत्ती जसे बले विरिए पुरिसक्कारपरक्कमे दिव्वा देवजुई दिव्वे देवाणुभागे लद्धे पत्ते अभिसमण्णागए तं दिट्ठा णं देवाणुप्पिआणं इड्ढी एवं चेव जाव अभिसमण्णागए तं खामेमो णं देवाणुप्पिआ! खमंतु णं देवाणुप्पिआ! खंतु मरहंतु णं देवाणुप्पिआ! णाइ भुज्जो भुज्जो या एवं करणाए त्ति कट्टु पंजलिउडापायवडिआ भरहं रायं सरणं उवेंति। ततेणं से भरहे राया तेसिं आवाडचिलायाणं अग्गाइं वराइं रयणाइं पडिच्छति पडिच्छित्ता ते आवाडचिलाए एवं वयासी—गच्छह णं तुब्भे मम बाहुच्छायापरिग्गहिआ

**निब्भया निरुव्विग्गा सुहंसुहेणं परिवसह णत्थि भो ! कत्तोवि भयमत्थित्तिकट्टु सक्कारेइ सम्माणेइ सक्कारित्ता सम्माणित्ता पडिविसज्जेति । तते णं से भरहे राया सुसेणं सेणावतिं सद्दावेति सद्दावेत्ता एवं वयासी - गच्छाहि णं भो देवाणुप्पिआ ! दोच्चंपि सिंधूए महाणदीए पच्चत्थिमं निक्खुडं ससिंधुसागरगिरिमेरागं समविसमणिक्खुडाणि अ ओयवेहि ओयवित्ता अग्गाइं वराइं रयणाइं पडिच्छाहि पडिच्छित्ता मम एअमाणत्तिअं पच्चप्पिणाहि जहा दाहिणिल्लस्स ओयवणं तहा सव्वं भाणिअव्वं जाव पच्चणुभवमाणे विहरति ।**

'तते णमि'त्यादि । तत सुखसुखेनावस्थानानन्तर तस्य-भरतस्य राज्ञ सप्तरात्रे परिणमति सति अयमेआरूवे 'अब्भत्थिए'इत्यादि । यावद्वर्षं वर्षतीति प्राग्वत् । 'तते णमि'त्यादि । ततस्तस्य भरतस्य राज्ञ एतादग्रूपम् आध्यात्मिक चिन्तित प्रार्थित मनोगत सङ्कल्प समुत्पन्नं ज्ञात्वा षोडश देवसहस्राणि 'सण्णज्झिउ'त्ति । सन्नद्धु ससन्नाहमात्मान कर्त्तुं पवृतानि चाप्यभवन् । 'तते णमि'त्यादि । ततस्ते देवा सन्नद्धा.- सङ्ग्रामयितु सज्जीभूता. सन्तो बद्धवर्म्मितकवचाः बद्ध कसाबन्धनात् वर्म्मित च वर्म्मीकृत सुत्राणहेतोः शरीरे नियोजनात् कवचमङ्गरक्षको यैस्ते तथा यावद् गृहीतायुधप्रहरणाः । 'जेणेव'त्ति । यत्रैव ते मेघमुखा नागकुमारा देवास्तत्रैवोपागत्य मेघमुखान् नागकुमारान् देवान् एवमवादिषु. 'ह भोः !'त्ति । आमत्रणे । मेघमुखा णागकुमारा देवा अप्रार्थितप्रार्थकाः यावत्परिवर्ज्जिता यावत्करणात् 'दुरतपते'त्यादि । 'किण्णमि'ति । किमिति प्रश्ने णं प्राग्वत् तुब्भे'त्ति । यूय न जानीथ भर राजान चातुरन्तचक्रवर्त्तिनं महर्द्धिक 'जाव'त्ति । यावदुपद्रावयितु प्रतिषेधयितु वा । यावत्करणात् 'महज्जुइए' यावत् 'णो खलु एस सक्का केणइ देवेण वे'त्यादि । 'तहविअ णमि'त्यादि । देवादिभिरप्येतस्य प्रतिषेद्धुमशक्यत्वे व्यवस्थितेऽपि यूय भरतस्य राज्ञो विजयस्कन्धावारस्योपरि युगमुशलप्रमाणमात्राभिर्धाराभिरोघमेघ सप्तरात्र वर्षं वर्षथ' त एवमवी'त्यादि तत्तस्मात्कारणात् एवमपि-इत्थमपि प्रागुक्तप्रकारेण ज्ञात्वाप्यकर्त्तव्यार्हे कर्त्तव्ये गते-सञ्जातेऽपि 'इओ'त्ति । इत उपसर्गकरणात् क्षिप्रमेवापक्रमत 'अहवा णमि'त्यादि । अथवा अपक्रमणाभावे णमिति प्राग्वत् 'अज्ज'त्ति अद्य सम्प्रत्येव पश्यत चित्रमाश्चर्यं मत्वर्थेऽव्विधानात् आश्चर्यवन्त जीवलोकम् अयभावः युष्माकमदृष्टम-श्रुत चोपद्रव तथैव करिष्यामो यथा जीवलोकस्याप्याश्चर्यं भविष्यति । अथैवमुक्ते ते देवाः कीदृशा जाता? इत्याह-'तते ण ते'इत्यादि । ततस्ते मेघमुखा नागकुमारा देवा 'तेहि'ति । तैश्चक्रवर्त्तिसम्बन्धिभिर्देवैरेव-मुक्तास्सन्त भीतास्त्रस्ता इत्यादि प्राग्वत् यावन्मेघानीक प्रतिसहरन्ति सहृत्य यत्रैवापातकिरातास्तत्रैवो-पागत्य तानेवमवादिषु 'एस णमि'त्यादि । एष देवानुप्रिया ! भरतो नाम्ना राजा महर्द्धिको यावत् नो खलु शक्यः केनापि देवेनेत्यादि यावदुपद्रोतु प्रतिषेधयितु वा 'तहवि'त्ति । तथापि पुन अस्माभिर्देवानुप्रियाः ! युष्माक प्रीत्यर्थं भरतस्य राज्ञ उपसर्ग कृत' । 'त'ति । तस्मात्कारणात् गच्छत यूय देवानुप्रियाः ! 'ण्हाया कयवलिकम्मे'त्यादि व्यक्त । 'उल्लपडे'त्यादि । सद्य स्नाने कृते आर्द्र शरीरसम्बन्धादार्द्रौ पटशाटकौ उत्तरीयपरिधाने येषा ते तथा अनेन स्नाने कृते क्षणमात्रमपि विलम्बो न विधेय इति सूचितम् । ओचूलगवत्थणियच्छ'त्ति । अवचूलमधोमुखचूल गुल्कालाञ्चल यथा स्यात्तथा वस्त्र 'णिअच्छ'त्ति ।

निवसित-परिहित यैस्ते तथा 'अग्गाइ'ति । अग्र्याणि-मूल्यत उत्कृष्टानि वराणि-प्रधानानि रत्नानि गृहीत्वा कृतप्राञ्जलयः 'पायवडिआ'इति पादपतिताश्चरणन्यस्तमस्तका इत्यर्थं । भरतं राजान 'उवेह'त्ति । उपयात शरण न चेव भयमित्याह-'पणिवतिअ'त्ति । प्रणिपतितवत्सला. खलु उत्तमपुरुषा. 'नत्थि'त्ति । तेन नास्ति भे-भवता भरतस्य राज्ञ सकाशाद्भयमिति कृत्वा एव प्रागुक्तस्वरूपेण 'वदित्त'त्ति । उक्त्वा भणित्वा यस्या दिश. प्रादुर्भूतास्तामेव दिश प्रतिगता। 'तते ण ते' इत्यादि । ततस्ते आपातकिराता. मेघमुखै नागकुमारैर्देवैरेवमुक्ता. सन्तः 'उत्थाए'त्ति । उत्थया-ऊर्ध्वंकायेनोत्तिष्ठन्ति 'ण्हाया कये'त्यादि सुगम । नवर 'उवणय'त्ति । उपनयन्ति-ढौकयन्ति । ढौकयित्वा च एवमवादिषुः । एव किमितिगाथाचतुष्टयेनाह-'वसुधर'त्ति। वसु-द्रव्य धरतीति वसुधरस्तस्य सम्बोधन हे वसुधर ! एवमग्रेऽपि सम्बोधनानि वाच्यानि गुणान्-औदार्यादीन् धरतीति गुणधरः । जयमनभिभवलक्षण धरतीति जयधरः । ह्रीश्रीकीर्तिर्द्धरतीति । ह्रीश्रीकीर्त्तिधारक. हे नरेन्द्र ! हेलक्षणसहस्रधारक ! राज्यमिद नश्चिर धारय त्वमेव चिरकालमस्मद्राज्ये राजा भवेत्यर्थ. । 'हयवइ'त्ति हे हयपते ! हे गजपते ! हे नरपते ! हे नवनिधिपते ! हे भरतवर्षप्रथमपते ! द्वात्रिंशज्जनपदसहस्राणां ये राजानस्तेषा स्वामी यः स तथा चिर-सर्व्वकाल जीव-प्राणान् धरेति 'पढमे'त्यादि । हे प्रथमनरेश्वर ! हे ईश्वर ! हे महिलिकासहस्राणा हृदयेश्वर ! हे देवशतसहस्रेश्वर ! हे चतुर्दशरत्नेश्वर ! हे यशस्विन् ! 'सागर'त्ति । सागरः-समुद्रो गिरिश्च वैताढ्यनामात्र ग्राह्य । हिमवद्वर्षधरपर्यन्त साधयिष्यमाणत्वात् । तेन समुद्रवैताढ्यपर्यन्तम् उत्तरापाचीनं-उत्तरदक्षिण अभिजितं भवता भरतवर्षमिति गम्य 'ता अम्हे'त्यादि । ता-तस्माद् वय देवानुप्रियस्य भवतो विषये परिवसाम इति गाथाचतुष्टयार्थ. । एव भरतविषयवासित्वमात्मना दर्शितम् । अथापातकिराता. स्वापराध स्वमुखेनोद्भाव्य क्षामयन्तो भरतस्य शरणमुपयान्तीति दर्शयति-'अहो णमि'त्यादि । अहो ! इत्याश्चर्य देवानुप्रियाणा भवता ऋद्धिरद्भूता एव द्युति.-शरीराऽऽभरणादिप्रभवा कान्तिः युतिर्वा युक्तिरिष्टपरिवारादि सयोगलक्षणा यशः-सर्व्वदिग्गामी वर्णवाद. बल-शरीरप्रभव वीर्यं-जीवप्रभव पुरुषकारस्तु इद मया विधेय मिति निजकर्त्तव्यताया प्रतिज्ञाभिमान स एव पराक्रमो निष्पादितप्रयोजन दिव्या प्रधाना दिव्या वाद्भूत भाग्यलभ्या देवद्युतिरिव देवद्युतिः देवयुतिरिव वा दिव्य प्रधान. देवानुभागोऽचिन्त्यशक्तिरूप. लब्ध-उपार्जित प्राग्जन्मनि तथाविधतप सयमानुष्ठानेन स्वसत्ताकीकृत. निजभोग्यदेशान्तरगतवस्तुवदिति प्राप्त इदानी हस्तोपगतधनवद् भोग्यतया प्रत्यासन्नीभूत. समन्वागतो भोग्यता गतः । अथ यत्प्रागुक्त तन्न परवचनेनावगत किन्तु साक्षाद्दृष्टमित्याह-'त दिट्ठा णमि'त्यादि । तदित्यव्ययत्वात् सा प्रागुक्तस्वरूपा दृष्टा-साक्षादस्माक दृग्गोचरीभूता देवानुप्रियाणा ऋद्धिः 'एवं चेव'त्ति । एवमेव यावदभिसमन्वागता यावत्करणात् 'जुई'इत्यादि । यत एव तत्तस्मात् 'खामेमो ण'ति । क्षमयामो वयं स्वकृतापराध देवानुप्रिया. ! क्षमन्ता देवानुप्रियाः ! अस्मदपराध यत. 'खतु मरहतु'त्ति । क्षन्तु मर्हन्तु-देवानुप्रिया. ! वर्त्तमानार्थे पञ्चमीति । अस्मदपराधक्षमणयोग्या भवन्तीत्यर्थः'नाइभुज्जो'त्ति । आइत्ति । निपातोऽवधारणार्थे । तेन नैव भूयः एव करणताया भावप्रत्ययोपि प्रकृत्यर्थेऽवसातव्य. । तेनेवविधे करणे युष्मदाशातनारूपे कर्त्तव्ये न प्रवर्त्तिष्यामहे इतिशेष इतिकृत्वा प्राञ्जलिपुटाः पादपतिताः चरणन्यस्तशिरस्का' न

पुनरूर्ध्वस्थिता वाङ्मात्रेणेत्यर्थ. भरतस्य राज्ञ शरणमुपयान्ति । अथ प्रतिपन्नशरणान् आपातकिरातान् भरतः किं कृतवानित्याह–'तते णमि'त्यादि । तत' स्वशरणप्रतिपत्त्यनन्तर स भरतो राजा तेषामापातकिरातानाम् अग्र्याणि वराणि रत्नानि प्रतीच्छति प्रतीच्छ्य च तान् आपातकिरातान् प्रत्येवमवादीत् 'गच्छह णमि'त्यादि । गच्छत यूयं मम बाहुच्छाया परिगृहीताः सन्तो निर्भया निरुद्वेगा सुखसुखेन परिवसत नास्ति भे-युष्माकं 'कत्तोवि'त्ति । कस्मादपि भयमस्तीति कृत्वा सत्करोति वस्त्रादिना, सन्मानयति–आसनदानादिप्रतिपत्त्या सत्कृत्य सन्मान्य च विसर्ज्जयति स्वस्वस्थानगमनाय आज्ञापयति । अथैवमापातकिरातान् निजाज्ञावर्त्तिनो विधाय भरतः किं कृतवानित्याह-'तते ण से'इत्यादि । ततस्तदनन्तर स भरतो राजा सुषेणं सेनापति शब्दापयति शब्दापयित्वा च एवमवादीत् कथमित्याह–'गच्छाहि णमि'त्यादि । गच्छ भो देवानुप्रिय ! 'दुच्चपि'त्ति । द्वितीयमपि सिंधोर्महानद्याः पश्चिम पश्चिमदिग्वर्तिन निष्कुटमखण्डखण्डरूप किं लक्षण 'ससिंधु'इत्यादि । सिंधुश्च सागरश्च गिरिश्चेति द्वंद्वस्तेषा मेरा-मर्यादा तया सह वर्त्तते यस्त ससिंधुसागरगिरिमर्याद च–पुन 'समे'त्यादि । समानि-समभूप्रदेशस्थानानि तात्स्थ्यात्तद्व्यपदेश इति न्यायात् समभूप्रदेशस्थितानि नगरदुर्गादीनि विषमानि–समविलक्षणानि गिरिगर्त्तादीनि दुर्ग्राह्यदुर्गादीनि च निष्कुटाश्च वक्रभूप्रदेशास्ततो द्वन्द्वः । तान् समविषमनिष्कुटान् प्राकृतत्वान्नपुंसकता एते च निष्कुटान्तर्वर्तिनोऽवान्तरावयवविशेषा एवावसातव्याः । 'ओअवेहि'त्ति । साधय ओयवित्ता साधयित्वा अग्र्याणि बहुमूल्यानि क्वचित् 'अणेगाइ'तिपाठः तत्रानेकानि बहूनि वराणि–प्रधानानि रत्नानि कर्क्केतनादीनि प्रतीच्छ–तत्तद्देशाधिपत्युपनीतानि समभिलष गृहीतुमितिगम्य प्रतीच्छ्य-गृहीत्वा, ममैतामाज्ञप्तिका प्रत्यर्प्पय । अथैवं भरताज्ञामवाप्य सेनापतिर्यत्कृतवांस्तदतिदेशेनाह– 'जहा दाहिणिल्लस्से'त्यादि । यथा दाक्षिणात्यस्य निष्कुटस्येति गम्यम् ओयवणं-साधन तथा सर्व्वं भणितव्य । तच्चैव–'तते ण से सेणावलस्स णेता भरहवासमि विस्सुअजसे महाबलपरक्कमे महप्पा ओअसो तेअलक्खणजुत्ते मिलक्खुभासाविसारए चित्तचारुभासो भरहे वासमि णिक्खुडाणं णिण्णाण य दुग्गमाण य दुक्खप्पवेसणाण य विआणए'इत्यादि सर्व्वं कियद्दूरमित्याह-'जाव पच्चणु'इत्यादि एतच्च प्राग् व्याख्यातम् ।

अथैवमवसरे किं जातम् ? इत्याह—

**तते णं से दिव्वे चक्करयणे अण्णया कयाइ आउहघरसालाओ पडिणिक्खमति पडिणिक्खमित्ता अंतलिक्खपडिवण्णे जाव उत्तरपुरत्थिम दिसिं चुल्लहिमवंतपव्वयाभिमुहे पयाए आवि होत्था । तते णं से भरहे राया त दिव्वं चक्करयणं जाव चुल्लहिमवंतवासहरपव्वयस्स अदूरसामंते दुवालसजोअणायामं जाव चुल्लहिमवंतगिरिकुमारस्स देवस्स अट्ठमभत्तं पगिण्हति तहेव जाव जहा मागहतित्थस्स जाव समुद्दरवभूअं पिव करेमाणे करेमाणे उत्तरदिसाभिमुहे जेणेव चुल्लहिमवंते वासहरपव्वए तेणेव उवागच्छइ उवागच्छित्ता चुल्लहिमवतं वासहरपव्वयं तिक्खुत्तो रहसिरेण फुसइ फुसित्ता तुरए णिगिण्हति णिगिण्हित्ता तहेव जाव आयतकण्णायतं च काऊण**

उसुमुदारं इमाणि अ वयणाणि तत्थ भाणिअ से णरवती जाव सव्वे मे ते विसयवासित्ति-कट्टु उड्ढं वेहायसं उसुं णिस्सरति परिगरनिगरितमज्झे जाव तए णं से सरे भरहेणं रण्णा उड्ढं वेहायसं निसिट्ठे समाणे । खिप्पामेव बावत्तरिं जोअणाइं गंता चुल्लहिमवंतगिरिकुमारस्स देवस्स मेराए णिपतति । तए ण से चुल्लहिमवंतगिरिकुमारे देवे मेराए सरं निवडिअं पासति पासित्ता आसुरुत्ते रुट्ठे जाव पीतिदाणं सव्वोसहिं च मालं सरसं गोसीसचंदणं कडगाणि अ जाव दहोदग गिण्हति गिण्हित्ता ताए उक्किट्ठाए जाव उत्तरेणं चुल्लहिमवंतगिरिमेराए अहं देवाणुप्पिआणं विसयवासी जाव अहण्णं देवाणुप्पिआणं उत्तरिल्ले अंतवाले जाव पडि-विसज्जेइ ।

'तते ण से' इत्यादि 'होत्थ'त्ति पर्यन्तं सुगमं । नवरम् उत्तरपौरस्त्या दिशमीशानकोण 'चुल्लहिमवत'त्ति । क्षुल्लहिमवत्पर्वताभिमुख यावत्करणात् 'जक्खसहस्सपरिवुडे दिव्वतुडिअसद्दसन्निनाएण पूरयत चेव अवरतलं नामेणं सुदसणे णरवइस्से'त्यादि । अथैवविधक्रियोपेतं चक्ररत्न दृष्ट्वा भरतो यत्कृतवांस्तदाह-'तते णं से' इत्यादि । ततश्चक्ररत्नस्य व्योमगमनक्रियाया अनन्तर स भरतो राजा तत् दिव्य चक्ररत्नं यावत् लघुहिमवत्कुमारस्य देवस्य अष्टमभक्तम् प्रगृह्णातीति सम्बन्धः । तत्र यावत्करणात् 'उत्तरपुरत्थिम दिसिं चुल्लहिमवतपव्वयाभिमुह पयायं पासइ पासित्ता हट्ठतुट्ठ जाव हिअए कोडु बिअपुरिसे सद्दावेइ सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! आभिसेक्क हत्थिरयण पडिकप्पेह हयगयरहपवरजोहकलिअ चउरंगिणिं सेण सण्णाहेह एअमाणत्तिअं पच्चप्पिणह' । 'तते णमि'त्यादितो यावत् 'अजणगिरिकडगसंन्निभ गयपतिं णरपती दुरूढे' त्ति । 'तते ण से' इत्यादितो यावत् 'त दिव्व चक्करयण अणुगच्छमाणे अणुगच्छमाणे जोअणतरिआहिं वसहीहिं वसमाणे वसमाणे जेणेव चुल्लहिमवतवासहरपव्वए तेणेव उवागच्छति उवागच्छित्ता चुल्लहिमवतपव्वयस्स अदूरसामते दुवालसजोअणायामं नव जोअणविच्छिण्ण वरणगरसरिच्छ विजयखधावारणिवेसं करेति करेत्ता वड्ढतिरयण सद्दावेति सद्दावेत्ता एव वयासी-खिप्पामेव भो देवाणुप्पिआ ! मम आवास पोसहसाल च करेहि करेत्ता मम एअमाण-'त्तिअ पच्चप्पिणाहि'त्ति । यावत् 'पोसहसाल अणुपविसति अणुपवेसित्ता जाव दब्भसथारग दुरूहति दुरूहित्ता चुल्लहिमवंतगिरिकुमारस्स देवस्स अट्ठमभत्त पगिण्हति' अष्टममधिकृत्यातिदेशमाह-तहेव जाव जहे'त्यादि यावत् यथामागधतीर्थकुमारस्याष्टमभक्त कृतवान् तथैवास्यापीत्यर्थ कियद्दूरमित्याह-'जाव समुद्द'त्ति व्याख्या प्राग्वत् यावच्छब्दात् 'अट्ठमभत्त पगिण्हति पगिण्हित्ता' इत्यादित 'पक्खुभियए'ति पर्यन्त सेना सज्जीकरणादिकः सर्वोऽपि प्रागुक्तसूत्रपाठः सव्याख्यान इहापि वक्तव्य । 'चुल्लहिमवत'त्ति । क्षुल्लहिमवद्वर्षधरपर्वत 'तिक्खुत्तो'त्ति । त्रि कृत्वस्त्रीन् वारान् 'रहसिरेण'त्ति । रथशिरसा-रथाग्रभागेन स्पृशति तुरगान्निगृह्णाति 'तहेव'त्ति । तथैव यथा प्राग् तुरगनिग्रहादिकमभिहित तद्वदत्रापि भणितव्य । 'जाव'त्ति । यावत्करणात् 'रथं ठवेति ठवेत्ता धणु परामुसइ परामुसित्ता' इत्यादि 'वेसाह ठाइऊणं ठाणमि'त्यन्त वक्तव्यम्

'आयते'त्यादि। आयतश्चासौ कर्णायतश्चेत्यत्र आयतोऽपि कर्णायत इति भणनेन आकर्णान्तमेवाकर्षणमस्य सम्भवति नाधिकमिति ज्ञापितम् एवंविधमुदार-प्रशस्तम् इषु-बाणं कृत्वा च इमानि वक्ष्यमाणानि वचनानि तत्राभाणीत् वक्ष्यमाणानि त्वेव-'जाव सव्वे मे ते'त्ति। यावत्सर्व्वे एते विषयवासिन इति कृत्वा यावत्करणात्-'हंदि सुणंतु भवंतो अब्भिंतरओ सरस्स जे देवा नागासुरासुवण्णा सव्वे मे ते विसयवासि तिकट्टु'त्ति। ऊर्ध्वं विहाय. लघुहिमवद्गिरिकुमारस्य स्थानमूर्ध्वमेवास्ति तेनाकाश प्रति इषु निस्सरति-मुञ्चति बाणमोचनावसरे भरत. कीदृश ? इत्याह-'परिकरे'त्यादि। परिकरनिकरितमध्य परिकरो युद्धोचितकच्छ. स एव निकरितो-निबद्धो मध्ये-कटिप्रदेशे यस्य स तथा। अथ बाणस्य गतिविषयमाह-'जाव तते णमि'त्यादि। यावत्ततो मोचनान्तर स शरो भरतेन राज्ञा ऊर्ध्वं वेहायसि निसृष्ट. सन् क्षिप्रमेव द्वासप्ततियोजनानि गत्वा लघुहिमवद्गिरिकुमारस्य मर्यादाया निपतति-दूत इवोचितप्रदेशे तिष्ठतीत्यर्थ.। 'तते णमि' त्यादि। ततो बाणपतनानन्तर स क्षुल्लहिमवद्गिरिकुमारो देवो मर्यादाया निपतित शर पश्यति दृष्ट्वा च-'आसुरूत्ते'त्ति। आशुरुप्त-शीघ्रम् विमोह गतः रुष्टो-रोष प्राप्त. 'जाव'त्ति यावत् प्रीतिदान तच्च किमिति नामग्राह विवृणोति 'सव्वोसहिं'त्ति। सर्व्वौषधीश्च माला-दिव्यदाम सरस च गोशीर्षचन्दनं कटकानि-बाह्वाभरणानि 'जाव दहोदग'ति। यावत् ह्रदोदक यावत्करणात् हारादिबाणपर्यन्त परिग्रहः। एवविध प्रीतिदान गृह्णाति-गृहीत्वा च 'ताए उक्किट्ठाए'त्ति। तया उत्कृष्टया यावत्करणात् 'तुरिआए' इत्यादि 'जाव'त्ति। 'उत्तरेण'ति। यावदुत्तरतो लघुहिमवद्गिरिमर्यादया अह देवानुप्रियाणा विषयवासी यावत्करणात् 'जेणेव भरहे राया तेणेव उवागच्छति उवागच्छित्ता' यावत् 'करतलपरिग्गहिअ जएण विजएण वद्धावेति वद्धावेत्ता एव वयासी-अभिजिएण देवाणुप्पिएहिं केवलकप्पे भारहेवासे'त्ति। 'जाव अहण्णमि'त्यादि। यावत् अह देवाणुप्रियाणाम् उत्तरदिग् सम्बन्धी अन्तपाल यावत्करणात् 'अहं ण देवाणुप्पिआण आणत्तिकिंकरे'। 'जाव'त्ति। यावत्प्रतिविसर्ज्जयति यावत्करणात् 'त पडिच्छतु णं देवाणुप्पिआ मम एआरूव पीतिदाणतिकट्टु हार मउड जाव दहोदग च उवणेति। तते ण से भरहे राया चुल्लहिमवतगिरिकुमारस्स देवस्स इमेआरूव पीतिदाण पडिच्छति पडिच्छित्ता चुल्लहिमवतगिरिकुमार देव सक्कारेइ सम्माणेति सक्कारेत्ता सम्माणेत्ता 'पडिविसज्जेति'त्ति।

अथ लघुहिमवद्गिरिकुमार देव स्वाज्ञावर्त्तिन कृत्वा भरत किं कृतवान्? इत्याह—

तते णं से भरहे राया तुरए णिगिण्हति णिगिण्हित्ता रहं परावत्तेइ परावत्तेत्ता जेणेव उसभकूडे तेणेव उवागच्छति उवागच्छित्ता उसभकूड पव्वयं तिक्खुत्तो रहसिरेणं फुसइ फुसित्ता रहं ठवेति ठवेत्ता छत्तलं दुवालसंसिअं अट्ठकण्णिअं अहिगरणिसंठिअं सोवण्णिअं कागिणीरयणं परामुसइ परामुसित्ता उसभकूडपव्वयस्स पुरत्थिमिल्लंसि कडगंसि णामगं आउडेति—

ओसप्पिणीए इमीसे तइआए समाए पच्छिमे भागे।
अहयंसि चक्कवट्टी भरहो इति नामधिज्जेणं ॥ १ ॥

अहयंसि पढमराया इहइं भरहाहिवो वरनरिंदो ।
णत्थिमहं पडिसत्तू जिअं मए भारहं वासं ॥ २ ॥

तिकट्टु णामगं आउडेति आउडेत्ता रहं परावत्तेइ परावत्तित्ता जेणेव विजयखंधावारणिवेसे तेणेव उवागच्छति उवागच्छित्ता जाव चुल्लहिमवंतगिरिकुमारस्स देवस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहघरसालातो पडिणिक्खमति जाव दाहिणं दिसिं वेअड्ढपव्वयाभिमुहे पयायावि होत्था ।

'तते ण से'इत्यादि । ततस्तदनन्तरं भरतो राजा तुरगान् निगृह्णाति निगृह्य च रथं परावर्त्तयति परावर्त्य च यत्रैव ऋषभकूटः पर्वत तत्रैवोपागच्छति उपागत्य ऋषभकूटपर्वत त्रीन् वारान् रथशिरसा स्पृशति स्पृष्ट्वा च रथ स्थापयति स्थापयित्वा च 'छतल'ति । षट्तलं द्वादशास्त्रिकम् अष्टकर्णिकम् अधिकरणीसंस्थित सौवर्णिक काकिणीरत्न प्रागुक्तप्रपञ्च परामृशति परामृश्य ऋषभकूटपर्व्वतस्य पौरस्त्ये-पूर्वदिग्सम्बन्धिनि कटके-नितम्बे नामक-नामैव नामक स्वार्थिकः का 'आउडे'ति। 'पुटलुटत् सश्लेषणे'इति वचनात् आ-मर्यादया पुटन्तं प्रयुक्ते इत्यापोटयति उचितप्रदेशे लिखतीत्यर्थ । यद्वा-'कुटन् वाल्ये'इति वचनात् आ-मर्यादया कोटयति-सद्यस्क करोति नवीनं लिखतीत्यर्थः काकिनीरत्नेनेति गम्य तच्च नाम कथ लिखतीति गाथाद्वयेनाह-'ओसप्पिणी इमीसे'इत्यादि । अस्या अवसर्प्पिण्याः तृतीयायाः समायाः-सुषमदुष्षमालक्षणस्य तृतीयारकस्य पश्चिमे भागे अन्त्ये इत्यर्थ 'अहयंसि'त्ति । अहं भरत इति नामधेयेन चक्रवर्त्यस्मि अत एवाह 'अहं'ति । इहास्मिन् जम्बूद्वीपवर्तिनि भरतक्षेत्रे भरताधिपो भरतक्षेत्रस्वामी नरवरेन्द्र. प्रथमराजास्मीति । एतेन 'उसमेण अरहा कोसलिए पढमराया इवे'ति वचनविरोधोऽपि निरुद्धः । श्री ऋषभस्य प्रथमराजत्वेऽपि भरताधिपतित्वाभावात् 'णत्थि महं ति' नास्ति मम प्रतिशत्रु राज्याभिलाषी मत्समानोऽपरो नरेन्द्रो नास्तीत्यर्थ -जित मया भारत वर्ष-भरतक्षेत्रमिति गाथाद्वयार्थ । 'इतिकट्टु'त्ति । इत्युल्लेखेन कृत्वा नामक स्वनाम 'आउडे'ति । आपोटयति ऋषभकूटपर्व्वतनितम्बे यथोचितप्रदेशे लिखति लिखित्वा च रथ परावर्त्तयति यत्रैव विजयस्कन्धावारनिवेशस्तत्रैवोपागच्छति उपागत्य च 'जाव चुल्ल'त्ति यावत् क्षुल्लहिमवद्गिरिकुमारस्य देवस्याष्टाह्निकायां महामहिमायां निवृत्ताया सत्याम् आयुधगृहशालात. प्रतिनिष्क्रामति यावत्करणात् 'तुरगे' णिगिण्हति णिगिण्हित्ता रहं ठवेति ठवेत्ता रहाओ पच्चोरुहति जेणेव मज्जणघरे' इत्यादि यावद्भोजनादिविधिपूर्व्वकाष्टादशश्रेण्यादिप्रस्थानादिक मागधतीर्थदेवताधिकारप्रतिबद्ध सूत्रमिहापि वाच्य पर मागधादिस्थाने क्षुल्लहिमवद्गिरिकुमारादि वक्तव्य 'जाव दाहिणमि'त्यादि । यावद्दक्षिणा दिश प्रति वैताढ्यपर्व्वताभिमुखं प्रयात चाप्यभवत् इह यावत्करणात् 'अतलिक्खपडिवण्णे जक्खसहस्से'त्यादिदृश्यम् ।

तते णं से भरहे राया तं दिव्वं चक्करयणं जाव वेअड्ढपव्वयस्स उत्तरिल्ले नितंबे तेणेव उवागच्छति उवागच्छित्ता वेअड्ढस्स पव्वयस्स उत्तरिल्ले नितंबे दुवालस जोअणायामं जाव

पोसहसालाए अणुपविसति जाव णमिविणमीणं विज्जाहरराईणं अट्ठमभत्तं पगिण्हति पोसह-सालाए जाव णमिविणमिविज्जाहररायाणो मणसी करेमाणे करेमाणे चिट्ठति। तते णं तस्स भरहस्स रण्णो अट्ठमभत्तंसि परिणममाणंसि णमिविणमिविज्जाहररायाणो दिव्वाए मईए चोइअमई अण्णमण्णस्स अंतिअं पाउब्भवंति पाउब्भवित्ता एवं वयासी—उप्पण्णे खलु देवाणुप्पिआ! जंबुद्दीवे दीवे भारहे वासे भरहे राया चाउरंतचक्कवट्टी तं जीअमेअं तीअपच्चुप्पण्णमणागयाणं विज्जाहरराईणं चक्कवट्टीणं उवत्थाणिअं करेत्तए तं गच्छामो णं देवाणुप्पिआ! अम्हेवि भरहस्स रण्णो उवत्थाणिअं करेमोत्तिकट्टु विणमी णाऊण चक्कवट्टी दिव्वाए मईए चोइअमई माणुम्माणपमाणजुत्तं तेअस्सिं रूवलक्खणजुत्तं ठिअजुव्वणकेसट्ठि-अनहं सव्वरोगणासणिं बलकरिं इच्छिअसीउण्हफासजुत्तं

तिसु तणुअं तिसु तंबं तिवलिगं तिउण्णयं तिगंभीरं।
तिसु कालं तिसु सेअं तिआयतं तिसु अ विच्छिण्णं ॥ १ ॥

समसरीरं भरहे वासंमि सव्वमहिलापहाणं सुंदरथणजहणवदणकरचरणणयणं सिरसिज-दसणजणहिअयरमणमणहरिं सिंगारागारचारु जाव जुत्तोवयारकुसलं अमरवहूणं सुरूवरूवेणं अणुहरंतिं सुभद्दं भद्दंमि जोव्वणे वट्टमाणिं विणमी इत्थीरयणं णमी रयणाणि कडगाणि तुडिआणि अ गेण्हति जाव ताए उक्किट्ठाए तुरिआए जाव उद्धूआए विज्जाहरगईए जेणेव भरहे राया तेणेव उवागच्छति उवागच्छित्ता अंतलिक्खपडिवण्णा सखिंखिणिआइं जाव जएणं विजएणं वद्धावेंति वद्धावेत्ता एवं वयासी—अभिजिते णं देवाणुप्पिआ! जाव अम्हे देवाणु० आणत्ति किंकरेत्तिकट्टु तं पडिच्छंतु णं देवाणुप्पिआ! अम्हं इमं जाव विणमी इत्थिरयणं णमी रयणाइं समप्पेति। तते णं से भरहे राया जाव पडिविसज्जेति पडिविसज्जित्ता पोसहसालाओ पडिणिक्खमति मज्जणघरं अणुपविसति अणुपविसित्ता भोअणमंडवे जाव णमिविणमीणं विज्जाहरराईणं अट्ठाहिअं महामहिमं। तते णं से दिव्वे चक्करयणे आउहघर-सालाओ पडिणिक्खमति जाव उत्तरपुरत्थिमं दिसिं गंगादेवीभवणाभिमुहे पयाए आविहोत्था। सा चेव सव्वा सिंधुवत्तव्वया जाव णवरि कुंभट्ठसहस्सं रयणचित्तं णाणामणिकणगरयणभ-त्तिचित्ताणि अ दुवे कणगसीहासणाइं सेसं त चेव जाव महिमा।

'तते ण से' इत्यादि। तत. स भरतो राजा तद्दिव्यं चक्ररत्न 'जाव'त्ति। यावद्वैताढ्यस्य पर्व-

तस्य 'उत्तरिल्ले'त्ति । उत्तरदिग्सम्बन्धी नितम्बस्तत्रैवोपागच्छति उपागत्य च तस्मिन् नितम्बे 'दुवालस'त्ति । द्वादशयोजनायाम यावत् शब्दात् 'पोषधशालायामनुप्रविशति यावत् शब्दात् 'नवजोअण विच्छिण्णमि'त्यादि ग्राह्य । 'जाव णमिविणमीणमि'त्यादि । यावन्नमिविनम्योर्विद्याधरराजयोरष्टम भक्त प्रगृह्णाति यावच्छब्दात् 'पोसहसाल पमज्जति दब्भसथारय दुरूहती'त्यादि द्रष्टव्य । 'पोसह'त्ति । पोषधशालायां यावन्नमिविनमिनामानौ विद्याधरराजानौ मनसि कुर्व्वाणस्तिष्ठति यावत्करणात् 'पोसहिए बभयारी'त्यादि सग्रह । 'तते ण तस्से'त्यादि । ततस्तस्य भरतस्य राज्ञोऽष्टमभक्ते परिणमति नमिविनमिविद्याधरराजौ दिव्यया मत्या-दिव्यानुभावेन अवधिज्ञानाभावेऽपि तथैव दिव्यानुभावः कश्चित्सम्पन्नो येन चोदिता-नोदिताशयावित्यर्थ । 'अण्णमण्णस्स'त्ति । अन्योन्यस्यान्तिक प्रादुर्भवत. । प्रादुर्भूय चैवमवादिषातामुक्तवन्तौ । ऋषभचरिते तु-अष्टमतपो नोक्तमुक्त च बाणमोचन । तथाहु:-

तती नमिविनम्याख्यौ विद्याधरपती प्रति । प्रजिघाय दिशामीशो मार्गण दण्डमार्गणम् ॥१॥
आलोक्य मार्गण त च विद्याधरमहीपती । कोपाटोपसमाविष्टा-वित्यमन्त्रयता मिथ, ॥२॥

इति । एतदपि युक्तिक्षम दृश्यते । तथाऽत्रानुक्तमपि नमिविनामभ्या द्वादशवार्षिक युद्धमप्यवसेय । यदागमः- ततो वेअड्ढपव्वए णमिविणमीहिं सम बारस सवच्छराणि जुद्धते पराजिआ समाणा विणमो इत्थीरयण णमि रयणाणि गहाय उवट्ठिआ'इति श्री आवश्यकनिर्युक्तिवृत्तौ । चूर्णौ तु 'अण्णे भणती-त्युक्त-'उप्पण्णे खलु' इत्यादितः 'उवत्थाणिअ करेत्तए'त्ति पर्यन्त सुगम । नवरमुपस्थानिक-प्राभृतक कर्तु-मिति गम्य 'त गच्छामो णमि'त्यादि । तत्तस्मात् गच्छावो णमिति प्राग्वत् । देवानुप्रिय! आवामपि भरतस्योपस्थानिक कुर्व्व इतिकृत्वा इत्यन्योन्य भणित्वा 'विणमी'त्ति । विनमिश्चक्रवर्त्तिन ज्ञात्वा दिव्यया मत्या नोदितमति. सुभद्रा स्त्रीरत्न नमिश्च रत्नानि गृह्णातीति सम्बन्ध. । तत्र सुभद्रा कीदृशीम् ? इत्याह-'माणुम्माणे'त्यादि । मानोन्मानप्रमाणयुक्ता तत्र मानादीनि प्रागुक्तस्वरूपाणि तेजो विद्यते यस्या. सा तेजस्विनी ता 'रूव'त्ति । रूपमद्भुतसौन्दर्यादिलक्षणानि च स्वस्तिकादीनि तैर्युक्ता 'ठिअजुव्वण'त्ति । स्थिता.-स्थिरस्वभावमापन्ना. क्रमेण जरापलितयोरभावात् यौवनकेशा यस्या.-सा तथा स्थिता.-अवस्थिता, परि-कम्मणा रहिता अपि सदा परिकर्म्मिता इव नखा यस्या. सा तथा ततो विशेषणकर्म्मधारय । सव्वरोग'त्ति । सर्व्वेषा रोगाणामामयाना नाशनी-सर्व्वरोगापहारिणी तस्या स्पर्श चक्रवर्त्तिन. सर्व्वरोगनाशक इत्यर्थ । न चैवमन्त्यसमये दाघज्वरोपगते ब्रह्मदत्तचक्रवर्त्तिनि व्यभिचार. । प्रत्यासन्नमृत्योस्तदानी तत्स्पर्शसहने तस्य सामार्थ्याभावात् अवश्यभाविवस्तुत्वाच्च । तथा बल करोतीति बलकरी चक्रवर्त्तिशरीरे बलवर्द्धिनीत्यर्थः ता बलकरी । 'इच्छिअ' त्ति । इप्सितौ यौ शीतोष्णस्पर्शौ ताभ्या युक्ता शीतकाले उष्णस्पर्शोपेतामुष्णकाले च शीतस्पर्शोपेतामित्यर्थ. । 'तिण्णि'त्ति । त्रीणि-कट्युदररोम-लक्षणानि तनूनि-कृशानि, यस्यास्ता, 'तितब'त्ति । त्रीणि-करचरणतलनखलक्षणानि ताम्राणि ...म्रवर्णानि यस्यास्ताम् उपलक्षणात् रसनाऽधरतालुलोचनान्तिप्रदेशप्रभृतीन्यपि प्रवालवद्रक्तानीति, 'तिवलिअ'ति । तिस्रो वलयो यस्यास्ता त्रीणि-स्तनजघनयोनिलक्षणानि उन्नतानि यस्यास्ता, त्रीणि-नाभिस्वरसत्वलक्षणानि गभीराणि यस्यास्ता, 'तिसु काल'त्ति । त्रिषु-भ्रूकेशकनीनिकालक्षणेषु काला-कालिमोपेता, 'तिसु-

सेअ'ति-। त्रिषु-दन्तस्मितकटाक्षलक्षणेषु श्वेता धवला तत्र स्मितं तावत् स्त्रीणां नेत्रविकारमात्रव्यञ्जितं ग्राह्यं न पुनरट्टहासादि तस्यातिकटुत्वेन कृष्णवर्णान्तःपातित्वात् कटाक्षचेष्टापि द्रष्टॄणां व्यामोहजनकत्वेन धवलेति कविसमये प्रतीतम्। उपलक्षणात् तथाविधाल्पमृदुवचनमपि ग्राह्यं, 'तिआयत'। त्रीणि-केशाङ्गुल्यधस्तनधरलक्षणानि आयतानि-दीर्घाणि यस्यास्ता। तत्राधस्तनाधरस्य यदाऽऽयतत्वं तदुपरितनौष्ठापेक्षया किञ्चिदाधिक्यं सूचितमवसातव्यं। जीवाभिगमादौ यौगलिकस्त्रीणां तथात्वेनैव व्याख्यानात्। 'तिण्णि विच्छिण्ण'त्ति। त्रीणि-कपोलाक्षिवक्षोलक्षणानि विस्तीर्णानि यस्यास्ता। तत्र कपोलस्य विस्तीर्णता मानोपेतमांसलतया बोध्या। 'समसरीर'त्ति। सममविषमं नासिकाद्यवयवेषु शरीरं यस्यास्ता। यद्वा-सम-पदैकदेशे पदसमुदायोपचारात् समचतुरस्रं शरीरं यस्यास्ता। 'भरहे'त्ति। भारते वर्षे सर्व्वमहेलाप्रधाना-भरतक्षेत्रवर्तिनीषु सर्व्वास्वपि स्त्रीषु रूपलावण्यादिना नाऽपरा स्त्रीरेतत्समाना नवाऽधिका काचिदस्तीत्यर्थः 'सुन्दरे' त्यादि। सुन्दराणि-मनोहराणि स्तनजघनवदनकरचरणनयनानि यस्यास्ता। 'सिरसिजे'त्यादि। शिरसिजाश्च केशा दशनाश्च दन्तास्तैर्हेतुभूतैर्जनानां द्रष्टॄणां हृदयानि रमणस्य-भर्त्तुर्मनश्च हरति या सा तथा-ता। 'सिंगारागारे' त्यादि। शृङ्गारस्यागारमिव शृङ्गारागारं एवंविधश्चारु-प्रधानं यावद्युक्तोपचारकुशला। तत्र यावच्छब्दात् 'वेस संगयगयहसिअभणिअचिट्ठिअविलाससंलावनिउण'त्ति ग्राह्यं। तथा च प्रागुक्तस्वरूपो वेषो यस्यास्ता। 'संगये'त्यादि। संगतं सुश्लिष्टं गतं-गमनं हंसीगमनवत् हसितं-हसनं कपोलविकासि प्रेमदर्शितं भणितं-भणनं गभीरं मन्मथोद्दीपिनं चेष्टितं-चेष्टनं सकाममङ्गप्रत्यङ्गोपमर्दनादि विलासो नेत्रजो विकारः संलापः पत्या सह सकामस्वहृदयप्रत्यर्प्पणक्षमं परस्परसम्भाषणं निपुणो युक्तश्च यः उपचारस्तत्र कुशलाम्। 'अमरे' त्यादि। अमरवध्वो देवाङ्गनास्ताः द्वितीयार्थे षष्ठीति अमरवधूः सुरूपरूपेण-शोभनरूपेष्वपि रूपं दीप्यमानमाकृत्यादिस्वरूपं तेन अनुहरन्तीम्-अनुकुर्व्वन्तीं तत्साम्यं बिभ्राणामित्यर्थः। 'सुभद्द'ति नाम्ना सुभद्रा 'भद्दमि'त्ति। भद्रे-भद्रकारिणि यौवने वर्त्तमाना चतुर्द्दशरत्नान्तर्भूतत्वेन रोगाद्युपद्रवरहितयौवने वर्त्तमानामित्यर्थः। 'विणमी'त्ति। विनमिः स्त्रीरत्नं नमिश्च रत्नानि-कर्क्केतनादीनि कटकानि-बाह्वाभरणानि त्रुटिताश्च-बाहुरक्षकाः तान्। नपुंसकता च प्राकृतत्वात् गृह्णीतो वर्त्तमानप्रयोगोऽप्यतीतार्थे सूत्रत्वात्तेन गृहीतवन्तौ। 'जाव ताए'त्ति। यावत्तया उत्कृष्टया यावत्करणात् गृहीत्वेति ग्राह्यं त्वरितया यावदुद्धूतया विद्याधरगत्या-विद्याप्रयोगप्रादुर्भूतशक्तिविशेषरूपया। यावत्करणात् 'सिग्घाए'इत्यादि 'जेणेव'त्ति। यत्रैव भरतो राजा तत्रैवोपागच्छतः अन्तरिक्षमाकाशं प्रतिपन्नौ 'सखिंखिणिआइं'ति। सकिङ्किणीकानि 'जाव'त्ति। यावज्जयेन-विजयेन वर्द्धापयतः यावत्करणात् 'पञ्चवण्णाइं वत्थाइं पवरपरिहिआ करयलपरिग्गहिअ-सिरे जाव अंजलिकट्टु भरहं रायं'ति परिग्रहः। वर्द्धापयित्वा च एवं वक्ष्यमाणमवादिषाताम्। 'अभिजिए णं'ति। अभिजितं भो! देवानुप्रियैर्यावदावां देवानुप्रियाणाम् आज्ञप्तिकिङ्कराविति कृत्वा यावत्करणात् 'केवलकप्पे भारहे वासे उत्तरिल्लेणं चुल्लहिमवंतगिरिमेराए तं अम्हे णं देवाणुप्पिआणं विसयवासिणो अम्हेण्णं देवाणुप्पिआणं'ति परिग्रहः। 'तं पडिच्छंतु णमि'त्यादि। तत्तस्मात्कारणात् प्रतीच्छन्तु भो देवानुप्रियाः! आवयोरिदं 'जाव विणमी'त्ति। यावत् विनमिः स्त्रीरत्नं प्रागुक्तस्वरूपं नमिश्च रत्नानि समर्प्पयति यावत्करणात् 'अम्हं एअं एआरूवं पीतिदाणं तिकट्टु'त्ति।

अथ नमिविनम्योः प्रीतिदानमादाय भरत किं कृतवान् ? इत्याह 'तते णमि'त्यादि। तत स भरतो राजा यावत्प्रतिविसर्ज्जयति यावत्करणात् 'नमिविनमीण विज्जाहरराईण इमेआरूवं पीतिदाणं पडिच्छति पडिच्छित्ता नमिं विनमिं च विज्जाहरराय सक्कारेति सम्माणेति सक्कारेत्ता सम्माणेत्ता'इति सङ्ग्रहः। 'पोसहे'त्यादि। पोषधशालात प्रतिनिष्क्रामति मज्जनगृहमनुप्रविशति 'भोअणमंडवे जाव'त्ति। भोजनमण्डपे यावत् नमिविनम्योर्विद्याधरराजयोरष्टाह्निका महामहिमा कुर्व्वन्ति कृत्वा चाऽऽज्ञा प्रत्यर्पयन्तीति गम्य यावत्करणात् 'सुहासणवरगए अट्ठमभत्त पारेति पारेत्ता भोअणमंडवाओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव सीहासणे तेणेव उवागच्छति उवागच्छित्ता जाव सिहासणवरगए पुरत्थाभिमुहे णिसीअइ णिसीइत्ता अट्ठारससेणिप्पसेणीओ सद्दावेति सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! उस्सुक्कं उक्कर'ति पर्यन्तम्। अथ चक्ररत्न कस्यां दिशि गमन कृतवद् ? इत्याह-' तते ण से'इत्यादि। ततोनमिविनम्योरष्टाह्निकामहोत्सवानन्तर तद्दिव्य चक्ररत्नम् आयुधशालात प्रतिनिष्क्रामति 'जाव उत्तर'त्ति। उत्तरपौरस्त्यामीशानकोण गङ्गादेवीभवनाभिमुख प्रयात चाप्यभवत्। यावच्छब्दात् 'पडिणिक्खमित्ते'ति। अथैतद्विषये वक्तव्यतासाम्यादतिदेशमाह-'सा चेव सव्वे'त्यादि। सिन्धुनदी प्रतिगमनावसरे या वक्तव्यतोक्ता सैव सर्व्वा कर्त्तव्येति शेष.। अथ विशेषमाह-'जाव नवरि'त्ति। यावन्नवर 'कुंभट्ठ'त्ति। कुम्भानामष्टाधिक सहस्र रत्नचित्र 'णाणे'त्यादि। नानामणिकनकभक्तिचित्रे च द्वे कनकसिंहासने सिन्धुदेवीवक्तव्यतावसरे च द्वे भद्रासने इति विशेषः। यावत्करणात् 'तए ण से भरहे राया त दिव्व चक्करयण गङ्गादेवीभवणाभिमुहमि'त्यादि। 'सेस त चेव'त्ति। शेषमुक्तविशेषादन्यत् तदेव यत् प्रागभिहित कियद्दूरमित्याह-'जाव'त्ति। यावन्महिमा तावत्पर्यंत सूत्रं वक्तव्य। अत्र प्रीतिदानानन्तर भरतरूपमालोक्य कामातुरा गङ्गादेवी स्वभवने भरत नीतवती। भरतश्च तया सह वर्षसहस्र यावद्भोगान् भुंजान आसीत्। यदागम -'भरहो गंगाए सद्धिं वाससहस्स भोगे भुंजति'त्ति श्रीआवश्यकनिर्युक्तिवृत्तौ। तथा श्रीऋषभचरित्रेऽपि-

भरत रूपलावण्यकिङ्करीकृतमन्मथ। तत्रावलोक्य गङ्गापि प्राप क्षोभमयी दशा ॥ १ ॥<br>
विराजमाना सर्वाङ्गं मुक्तामयविभूषणैः। वदनेन्दोरनुगतैस्तारैस्तारगणैरिव ॥ २ ॥<br>
वस्त्राणि कदलीगर्भ-त्वग्सगर्भाणि बिभ्रती। स्वप्रवाहपयासीव तद्रूपपरिमाणतः ॥३॥<br>
रोमाञ्चकञ्चुकोदञ्चत्कुचस्फुटितकञ्चुका। स्वयवर स्रजमिव क्षिपन्ती धवला दृश ॥ ४॥<br>
प्रेमगद्गदया वाचा गाढमभ्यर्थ्य पार्थिव। रिरसमाना सा नैषीत् देवी रतिनिकेतन॥ चतुर्भिः कलापकं<br>
भुञ्जानो विविधान् भोगान् तत्र राजा तया सह। एकाहमिव वर्षाणा सहस्र सोऽत्यवाहयत् ॥६॥<br>
कथञ्चिदपि सम्बोध्य सोऽनुज्ञाप्य जाह्नवी। खण्डप्रपाताभिमुख चचाल प्रबलैर्बलैः ॥७॥ इत्यादि।

अथ पुनरपि चक्ररत्न किं कृतवद् ? इत्याह-

**तए णं से दिव्वे चक्करयणं गंगाए देवीए अट्ठाहिआए महा० आउहघरसालाओ पडिणिक्खमति जाव गंगाए महाणईए पच्चत्थिमिल्लेणं कूलेणं दाहिणदिसिं खंडप्पवायगुहाभिमुहे पयाए आवि होत्था। तते णं से भरहे राया जाव जेणेव खंडप्पवायगुहा तेणेव उवागच्छति**

उवागच्छित्ता सव्वा कयमालवत्तव्वया णेअव्वा। णवरि णट्टमालगदेवे पीतिदाणं से आलंकारिअभंडं कडगाणि अ सेसं सव्वं तहेव जाव अट्ठाहिआ महामहिमा।

तते णं से भरहे राया णट्टमालस्स देवस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए सुसेण सेणावतिं सद्दावेइ सद्दावेत्ता जाव सिंधुगमो णेतव्वो जाव गंगाए महाणईए पुरत्थिमिल्लं णिक्खुडं सगंगसागरगिरिमेरागं समविसमणिक्खुडाणि अ ओयवेति ओयवित्ता अग्गाणि वराणि रयणाणि पडिच्छति पडिच्छित्ता जेणेव गंगा महाणदी तेणेव उवागच्छति उवागच्छित्ता दोच्चंपि सखंधावारबले गंगामहाणदिं विमलजलतुंगवीइं णावाभूएणं चम्मरयणेणं उत्तरति उत्तरित्ता जेणेव भरहस्स रण्णो विजयक्खंधावारनिवेसे जेणेव बाहिरिआ उवट्ठाणसाला तेणेव उवागच्छति उवागच्छित्ता आभिसेकाओ हत्थिरयणाओ पच्चोरुहति पच्चोरुहित्ता अग्गाइं वराइं रयणाइं गहाय जेणेव भरहे राया तेणेव उवागच्छति उवागच्छित्ता करयलपरिग्गहिअं जाव अंजलिं कट्टु भरहं रायं जएणं विजएणं वद्धावेति वद्धावेत्ता अग्गाइं वराइं रयणाइं उवणेति। तते णं से भरहे राया सुसेणस्स सेणावइस्स अग्गाइं वराइं रयणाइं पडिच्छति पडिच्छित्ता सुसेणं सेणावतिं सक्कारेति सम्माणेति सक्कारेत्ता सम्माणेत्ता पडिविसज्जेति।

तते णं से सुसेणे भरहस्स रण्णो सेसंपि तहेव जाव विहरति। तते णं से भरहे राया अण्णया कयाइ सुसेणं सेणावइरयणं सद्दावेइ सद्दावेत्ता एवं वयासी—गच्छाहि णं भो देवाणुप्पिआ! खंडप्पवायगुहाए उत्तरिल्लस्स दुवारस्स कवाडे विहाडेहि विहाडेत्ता जहा तमिसगुहाए तहा भाणिअव्वं जाव पिअं भे भवउ। सेसं तहेव जाव भरहो तमिसगुहाए उत्तरिल्लेणं दुवारेणं अतीति ससिव्व मेहंधकारनिवहं तहेव पविसंतो मंडलाइं आलिहइ। तीसे णं खंडप्पवायबहुमज्झदेसभागे जाव उम्मग्गनिम्मग्गजलाओ णाम दुवे महाणईओ तहेव णवरि पच्चत्थिमिल्लाओ कडगाओ पवूढाओ समाणीओ पुरत्थिमिल्लेणं गंगामहाणदिं समप्पेंति सेसं तहेव। णवरि पच्चत्थिमिल्लेणं कूलेणं गंगाए संकमवत्तव्वता तहेव। तते णं खंडप्पवायगुहाए दाहिणिल्लस्स दुवारस्स कवाडा सयमेव महया महया कोंचारवं करेमाणा सरसरसरस्स सगाइं सगाइं ठाणाइं पच्चोसक्कित्था। तते णं से भरहे राया चक्करयणदेसिअमग्गो जाव खंडप्पवायगुहाओ दाहिणिल्लेणं दारेणं णीति ससिव्व मेहंधकारनिवहाओ।

'तते णं से' इत्यादि। ततो वर्षसहस्रानन्तरं तद्दिव्यं चक्ररत्नं गङ्गादेव्या अष्टाहिकायां महा-

महिमायां निवृत्तायां सत्यां आयुधगृहशालातः प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च गङ्गाया महानद्याः पश्चिमदिग्वर्त्तिना कूलेन दक्षिणां दिशं खण्डप्रपातगुहाभिमुखं प्रयातं चाप्यभवत् । अथ खण्डप्रपाताभिमुखं चक्ररत्नं चलितं दृष्ट्वा भरतो यत्कृतवांस्तदाह–'तते णं से' इत्यादि । ततस्तदनन्तरं स भरतो राजा यावत् यत्रैव खण्डप्रपातगुहा तत्रैवापागच्छति । यावत् करणात् 'तं दिव्वं चक्करयणं पच्चत्थिमिल्लेणं कूलेणं दाहिणदिसिं खण्डप्पवायगुहाभिमुहं पयातं चावि पासइ पासित्ता तं दिव्वं चक्करयणं अणुगच्छमाणे अणुगच्छमाणे'इति संग्रहः । वक्तव्यतासाम्यादतिदेशमाह–'सव्वा कयमाले'त्यादि । सर्वा कृतमालवक्तव्यता ज्ञातव्या । अथ विशेषमाह 'णवरि'त्ति । नवरमयं विशेषः । नृत्तमालदेवः प्रीतिदानं से - तस्य भरतस्य आलङ्कारिकमलङ्कारसम्बन्धिभाण्डं कटकानि चेति । कृतमालस्तु देवः प्रीतिदानं स्त्रीरत्नस्य तिलकचतुर्दशं भाण्डालङ्कारमिति विशेषः । 'सेसं'ति । शेषमुक्तविशेषातिरिक्तं तथैव यावदष्टाहिकामहिमोत्सवः । अथ भरतः किं कृतवानित्याह– तते णं से' इत्यादि । ततः स भरतो राजा नृतमालस्य देवस्य अष्टाह्निकायां महामहिमायां निवृत्तायां सत्यां सुषेणं सेनापतिं शब्दापयति शब्दापयित्वा च यावत्सिन्धुगमो ज्ञातव्यः-सिन्धुनदीवक्तव्यतासम्बन्धी सूत्रपाठो वक्तव्यः । कियद्दूरमित्याह–'जाव गङ्गाए' इत्यादि । यावद्गङ्गाया इत्यादितः उपनयतीति पर्यन्तं प्राग्वत् । यावत्करणात् एवं वयासी–'गच्छाहि णं भो देवाणुप्पिआ ! दोच्चंपि गंगाए महाणदीए पुरत्थिमिल्लं णिक्खुडं सगंगसागरगिरिमेरागं समविसमणिक्खुडाणि अ ओयवेहि ओयवित्ता अग्गाइं वराइं रयणाइं पडिच्छाहि पडिच्छित्ता मम एअमाणत्तिअं खिप्पामेव पच्चप्पिणाहि । तते णं से सेणावई भरहेणं रण्णा एवं वुत्ते समाणे हट्ठ जाव चउरंगिणीए सेणाए सद्धिं संपरिवुडे जाव गंगामहाणई तेणेव उवागच्छति उवागच्छित्ता चम्मरयणं परामुसइ परामुट्ठे समाणे खिप्पामेव णावाभूए जाए आविहोत्था । तते णं सुसेणे सेणावती सखधावारबलवाहणे णावाभूअं चम्मरयणं दुरुहति दुरूहित्ता यावद्गङ्गामहानदीमुत्तरति ।

'तते णं से' इत्यादितः पडिविसज्जेति पर्यन्तं प्राग्वत् । 'तते णमि'त्यादि । ततो भरतविसर्ज्जनाऽऽज्ञामवाप्य सुषेणो भरतस्य राज्ञः 'सेसंपि तहेव'त्ति । शेषमपि तथैव यथा प्रागभिहितं यावद्विहरति । यावत्करणात् 'अतिआओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव सए आवासे तेणेव उवागच्छति उवागच्छित्ता मज्जणघरमणुपविसति अणुपविसित्ता ण्हाए कयबलिकम्मे कयकोऊअमंगलपायच्छित्ते जाव सरसगोसीसचंदणाणुलित्ते यावत् उप्पिं पासायवरगए फुट्टमाणेहिं मुइंगमत्थएहिं बत्तीसतिबद्धेहिं नाडएहिं वरतरुणीसंपउत्तेहिं जाव इट्ठे सद्दफरिसरसरूवगंधे पंचविहे माणुस्सए कामभोगे भुंजमाणे'त्ति । अथैवं व्यतिकरे जायमाने भरतो यत्कृतवांस्तदाह-'तते णमि'त्यादि । ततः स भरतो राजा अन्यदा कदाचित् कियत्कालानन्तरं सुषेणं सेनापतिरत्नं शब्दापयति शब्दापयित्वा च एवमवादीत्-गच्छ भो देवानुप्रिय ! खण्डप्रपातगुहाया उत्तरदिग्वर्तिनो द्वारस्य कपाटे विघाटय-उद्घाटय । अत्रातिदेशमाह 'जह तमिसं'त्ति । यथा तमिस्रगुहायाः उद्घाटनावसरे भणितमिति गम्यं । तथा भणितव्यमिहेति शेषः । कियद्दूरमित्याह–'जाव पिअं भे'इत्यादि यावत्प्रियं भे-भवतां भवत्विति यावत्करणात् 'मम एअमाणत्तिअं पच्चप्पिणाहि । तते णं से सेणावती भरहेणं रण्णा एवं वुत्ते समाणे हट्ठतुट्ठे'त्यादितो यावत् 'जेणेव सए आवासे जेणेव पोसहसाला

तेणेव उवागच्छति'। ततोऽपि यावत् 'णट्टमालस्स देवस्स अट्ठमभत्तं पगिण्हति पगिण्हित्ता' यावत् 'णिग्घोसणाइअरवेण जेणेव खंडप्पवायगुहाए उत्तरिल्लस्स दुवारस्स कवाडा तेणेव उवागच्छति उवागच्छित्ता आलोए कवाडाणं पणामं करेइ करेत्ता लोमहत्थयं परामुसइ परामुसित्ता खंडप्पवायगुहाए उत्तरिल्लस्स दुवारस्स कवाडे लोमहत्थएणं पमज्जति पमज्जित्ता दिव्वाए उदगधाराए अब्भुक्खेति अब्भुक्खेत्ता सरसेणं गोसीसचंदणेणं पंचंगुलितले चच्चए दलइ दलइत्ता अग्गेहिं वरेहिं गंधेहिं अ मल्लेहि अ अच्चिणेति अच्चिणेत्ता पुप्फारुहणं मल्लारुहणं जाव कवाडा पुरतो अट्ठट्ठमंगलए आलिहति जाव पणामं करेत्ता दंडरयणं परामुसइ जाव दंडरयणं गहाय सत्तट्ठपयाइं पच्चोसक्कइ पच्चोसक्कित्ता खण्डप्पवायगुहाए उत्तरिल्लस्स दुवारस्स कवाडे दण्डरयणेणं महया महया सद्देणं तिक्खुत्तो आउट्टेति तते णं खंडप्पवायगुहाए उत्तरिल्लस्स दुवारस्स कवाडा सुसेणेणं सेणावतिणा दंडरयणेणं महया महया सद्देणं तिक्खुत्तो आउट्टिआ समाणा महया महया सद्देणं कोंचारवं करेमाणा सरसरस्सरस्स सकाइं सकाइं ठाणाइं पच्चोसक्कित्था। तते णं सुसेणे सेणावई खंडप्पवायगुहाए उत्तरिल्लस्स दुवारस्स कवाडे विहाडेति विहाडेत्ता जेणेव भरहे राया तेणेव उवागच्छति जाव भरहं रायं करयलपरिग्गहिअं जएणं विजएणं वद्धावेति वद्धावेत्ता एवं वयासी-विहाडिआ णं देवाणुप्पिआ! खंडप्पवायगुहाए उत्तरिल्लस्स दुवारस्स कवाडा एअण्णं देवाणुप्पिआणं पिअं णिवेएमो'त्ति पर्यन्तम्। 'सेसं तहेव'त्ति। शेषं तथैव यथा तमिस्रगुहोद्घाटनानन्तरं प्रागभिहितं। तच्चैवं 'तते णं से भरहे राया सुसेणस्स सेणावइस्स अंतिए एअमट्ठं सोच्चा निसम्म हट्ठतुट्ठचित्तमाणंदिए जाव हिअए सुसेणं सेणावतिं सक्कारेति सम्माणेति सक्कारेत्ता सम्माणेत्ता कोडुंबिअपुरिसे सद्दावेति सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ! आभिसेक्कं हत्थिरयणं पडिकप्पेहे'त्यादि। कियद्दूरमित्याह 'जाव भरहो'त्ति। यावत् भरतस्तमिस्रागुहायाम्। अयं भावः—यथा तमिस्रागुहायां भरतः प्रवेशं कृतवांस्तथाऽत्रापि। अथ विशेषमाह—उत्तरदिग्सम्बन्धिना द्वारेण अत्येति—निश्शङ्कमविलम्बेन गच्छति—प्रविशति। क इवेत्याह—'ससिव्व'त्ति। शशीव मेघान्धकारनिवहं तमिस्रागुहायां तु दाक्षिणात्येन द्वारेणेति विशेषः। अथ खण्डप्रपातगुहायां मण्डलालिखने अतिदेशमाह—'तहेव'त्ति। यथा तमिस्रागुहायां मण्डलान्यालिखन् प्रविष्टस्तथैव खण्डप्रपातगुहायामपि प्रविशन् मण्डलान्यालिखतीति। अथ खण्डप्रपातगुहायामुन्मग्ननिमग्नजलयोर्महानद्यो. स्वरूपमाह—'तीसे णं खंडे'त्यादि। तस्याः खण्डप्रपातगुहायाः बहुमध्यदेशभागे सर्व्वमध्यप्रदेशे भावना तु प्राग्वत्। 'जाव'त्ति। यावत् उन्मग्ननिमग्नजले नाम्नी महानद्यौ 'तहेव'त्ति। यथा तमिस्रागुहायां तथैवेत्यर्थः। यावत्करणात् 'एत्थ णं'ति पदमात्रमेव अथ विशेषमाह—'णवरि'त्ति। नवरं पश्चिमदिवराम्बधिन कटकात् पश्चिमभित्तिमूलात् प्रव्यूढे सत्यौ 'पुरत्थिमिल्लेणं'ति। पूर्व्वदिशि गङ्गामहानदीं समाप्नुत—प्रविशत इति 'सेसं'ति। शेषं यथा 'से केणट्ठेणं भंते! एवं वुच्चति उम्मग्गनिमग्गजलाओ महाणईओ? गो०! उम्मग्गजलाए महाणईए तणं वा पत्तं वा कट्ठं वे'त्यादि। सर्व्वं तथैव-तत्समानमेव। विशेषमाह—पच्चत्थिमिल्लेणं'ति। गङ्गायाः पश्चिमदिग्वर्तिना कूलेन 'संकमं'त्ति। सङ्कमवक्तव्यता—सेतुबन्धनवक्तव्यता उपलक्षणात् भरतराजा स्कन्धावारोत्तरणाद्यपि 'तहेव'त्ति। प्रागुक्तवदित्यर्थः। अथ दक्षिणदिग्वर्तिकपाटोद्घाटनस्वरूपमाह—'तते णमि'त्यादि। ततो दक्षिणदिगभिमुखद्वार-

प्रत्यासन्निभवनानन्तरं खण्डप्रपातगुहाया दाक्षिणात्यस्य द्वारस्य कपाटौ स्वयमेव क्रोञ्चारवं कुर्वाणौ 'सरसरस्स'त्ति । क्रियाविशेषणं बलवता पुरुषेण भ्राम्यमाणदण्डजन्यशब्दस्येव शीघ्रगतिजन्यशब्दस्यानुकृतिमात्रवाचकः । 'सगाइं सगाइं'ति । स्वके स्थाने प्रत्यवष्वष्केताम् । अथ पुनरपि भरतकृत्यमाह— 'तते णमि'त्यादि । ततः स्वयमेवोद्घटनानन्तरं चक्ररत्नदेशितमार्गो यावत् खण्डप्रपातगुहायाः 'दाहिणिल्लेणं'ति । निर्गच्छति 'ससिव्व'त्ति । मेघान्धकारनिवहात् शशीव यावत्करणात् 'अणेगरायवरसहस्साणमि'त्यादि सङ्ग्रहः ।

अथ गुहायानिर्गत्य भरतः किं कृतवान् ? इत्याह—

**तते णं से भरहे राया गंगाए महाणदीए पच्चत्थिमिल्ले कूले दुवालसजोअणायामं नव जोअणविच्छिण्णं जाव विजयक्खंधावारनिवेसं करेति अवसिट्ठं तं चेव जाव णिहिरयणाणं अट्ठमभत्तं पगिण्हति । तते णं से भरहे राया पोसहसालाए जाव णिहिरयणे मणसि करेमाणे करेमाणे चिट्ठति तस्स य अपरिमिअरत्तरयणा धुवमक्खयमव्वया सदेवा लोगोपचयंकरा उवगया णवणिहितो लोगविस्सुअजसा । तंजहा**

णेसप्पे पंडुअए पिंगलए सव्वरयणे महपउमे ।
काले अ महाकाले माणवग महाणिही संखे ॥ १ ॥
णेसप्पंमि णिवेसा गामागरणगरपट्टणाणं च ।
दोणमुहमडंबाणं खंधाराणं गिहाणं च ॥२॥
गणिअस्स य गीयाणं माणुम्माणस्स जं पमाणं च ।
धण्णस्स य बीआणं उप्पत्ती पंडुए भणिआ ॥३॥
सव्वा आहरणविही पुरिसाणं जा य जा य महिलाणं ।
आसाणं इत्थीणं पिंगलगणिहिंमि सा भणिआ ॥४॥
रयणाइं सव्वरयणे चउदस पवराइं चक्कवट्टीणं ।
उप्पज्जंती एगिंदिआइं पंचिंदिआइं च ॥५॥
वत्थाण य उप्पत्ती णिप्फत्ती चेव सव्वभत्तीणं ।
रंगाण य धोव्वाण य सव्वा सा होइ महापउमे ॥६॥
काले कालण्णाणं भव्वपुराणं च तिसुवि वासेसु ।
सिप्पसयं कम्माणि य तिण्णि पयाए हिअकराइं ॥७॥

स्वरूपमाह-'अभिजिएणं'ति। अभिजितं सामस्त्येन स्वायत्तिकृतं णमिति प्राग्वत्। 'मए'त्ति। मया निजबलवीर्यपुरुषपराक्रमेण क्षुल्लहिमवद्गिरिसागरमर्यादाकं केवलकल्प-सम्पूर्णं भारतवर्षं-भरतक्षेत्र तत् श्रेय: खलु ममात्मान स्व राज्याभिषेकेणाभिषेचयितुमितिकृत्वा एव 'सपेहेइ'त्ति। एवमनन्तरोक्तं सम्प्रेक्षते-पर्यालोचयति सम्प्रेक्ष्य। श्री ऋषभदेवचरित्रे तु-'तते ण तस्स भरहस्स रण्णो अण्णयाइ ते देवाइआ महारायाभिसेअ काउकामा भरह रायाण विण्णवेंति। जिएणं देवाणुप्पिएहिं भारहे वासे वसमुवागया विज्जाहराई रायाणो तमणुजाणह महारायाभिसेअ करेमो। भरहोवि त देवाइआणं वयणमणुमण्णति। तेवि हट्ठतुट्ठ कयजलिणो आभिओगिआ देवा विणीआए णयरीए उत्तरपुरच्छिमे दिसिभाए एग मह आभिसेअमडव विउव्वति'त्ति। न चास्य प्रकृतसूत्रेण सह विरोधः शङ्कनीयः तीर्थंकृता निष्क्रमणकाले लोकान्तिकदेवानामिव पुण्योत्कर्षाद्भरताभिप्रायकाले एव तथाभिप्रायमवगम्य आभियोगिकदेवैर्विज्ञप्तो भरतस्तथैव प्रतिपन्नवानित्यदोषात् युक्तिक्षमत्वाच्च। 'कल्लं पाउ'त्ति। कल्यमिति श्व. प्रादुः-प्रकाशे ततश्च प्रकाशप्रभातायां 'जाव जलते'त्ति। यावत् ज्वलति यावत्करणात्-'रयणीए फुल्लुप्पलकोमलुम्मिलिअमि अहापण्डुरे पभाए रत्तासोगप्पगासकिंसुअसुअमुहगुञ्जद्धरागबधुजीवगपारावयचलणणयणपरहुअसुरत्तलोअणजासुअणकुसुमरासिहिं गुलयनिअराइरेगरेहतसरिसे कमलायरसडवोहए उट्ठिअमि सुरे सहस्सरस्सिमि दिणयरे तेअस'त्ति सङ्ग्रह'। व्याख्या च प्राग्वत्। 'जेणेव'त्ति। यत्रैव मज्जनगृहं यावत्प्रतिनिष्क्रामति यावत्करणात् तत्रैवोपागच्छतीत्यादि प्राग्वत्। प्रतिनिष्क्रम्य च यत्रैव बाह्योपस्थानशाला तत्रैवोपागत्य सिंहासने पौरस्त्याभिमुखो निषीदति। अथ सिंहासननिषण्णो यत्करोति तदाह-'सोलसे'त्यादि। षोडश देवसहस्राणि द्वात्रिंशद्राजवरसहस्राणि सेनापतिरत्न यावत्पुरोहितरत्नं यावत्करणात् गृहपतिरत्नाद्यः सार्थवाहपर्यन्ता। 'तिण्णि सट्ठे सूपसए'इत्यादि प्राग्वत्। नवर 'वितरह'त्ति वितरत-निष्पादयत परमिहापि श्रीऋषभचरित्राभिप्रायेण भरतवचन देवानुवादोऽवसातव्यः। एवमग्रेऽपि परिभावनीयम्। अथैतद्भरतोक्त निशम्य देवादयः किं कुर्वन्तीत्याह-'तते ण से'इत्यादि। ततस्ते षोडश देवसहस्रा यावदन्ये बहवो राजेश्वरसार्थवाहप्रभृतय. भरतेन राज्ञा एवमुक्ता. सन्त हृष्टतुष्टचित्तानन्दिताः करतलपरिगृहीत-दशनखशिरस्यावर्त्तं मस्तकेऽञ्जलिं कृत्वा भरतस्य राज्ञ एनमर्थं सम्यक् विनयेन प्रतिशृण्वन्ति-अभ्युपगच्छन्ति। अथ भरतः किं कृतवानित्याह-'तते णमि'त्यादि। तत स भरतो राजा यत्रैव पौषधशाला तत्रैवोपागच्छति उपागत्य च यावदष्टमभक्तिक प्रतिजागृद्विहरति। 'तते णमि'त्यादि। ततस्तदनन्तरम् अष्टमभक्ते परिपूर्णप्राये जाते सति आभियोगिकान् देवान् शब्दापयति शब्दापयित्वा च एवमवादीत् क्षिप्रमेव भो देवानुप्रिया! विनीताया राजधान्याः उत्तरपौरस्त्ये दिग्भागे--ईशानकोणे एकं महान्तमभिषेकमण्डप विकुर्व्वत ममेतामाज्ञप्तिकां प्रत्यर्प्पयत। ततस्ते आभियोगिका देवा भरतेन राज्ञा एवमुक्ता. सन्तो हृष्टतुष्टा यावदेव स्वामिन्निति आज्ञया विनयेन वचन प्रतिशृण्वन्ति प्रतिश्रुत्य च विनीताया राजधान्या उत्तरपौरस्त्य दिग्भाग अपक्रामन्ति-व्रजन्ति अपक्रम्य च वैक्रिय समुद्घातेन उत्तरवैक्रियरूपकरणाय प्रयत्नविशेषेण 'समोहणइ'त्ति। समुद्घ्नन्ति-समुद्घातवन्तो भवन्तीत्यर्थ। अथ समुद्घातस्वरूपमाह-'सखेज्जाइ'ति। सङ्ख्येयानि योजनानि 'दड'त्ति। दण्ड इव दण्ड ऊर्ध्वाध आयत शरीरबाहल्यो जीव-

प्रदेशकर्म्मपुद्गलराशिस्त निसृजन्ति-निष्काशयति । तत्कुर्व्वाणास्तु विविधविशिष्टपुद्गलानाददत इति दर्शयति 'त जह'त्ति । तद्यथा-'रयणाणमि'त्यादि । रत्नाना कर्क्केतनप्रभृतीना यद्यपि रत्नादिपुद्गला औदारिका एव भवन्ति समुद्घाते च वैक्रिया एव ग्राह्यास्तथापि तेषाँ रत्नादिपुद्गलानामिव सारता-ख्यापनाय रत्नानामिवेतिव्याख्येयम् । अन्ये वदन्ति औदारिका अपि गृहीता सन्तो वैक्रियपरिणामभाजो भवन्तीति । तेन दण्डेन रत्नादीना यथा बादरान् असारान् गृहीतान् पुद्गलान परिशाटच यथा सूक्ष्मान् सारान् पर्याददति पर्यादाय 'दोच्चपि'त्ति । द्वितीयमपि वार वैक्रियसमुद्घात 'जाव'त्ति । यावत् समुद्घ्नन्ति समुद्धत्य बहुसमरमणीयं भूमिभाग विकुर्व्वन्ति । 'से जहा णाम ए'इत्यादि । दृष्टातसूत्र सव्याख्यान प्राग् सुषमासुषमाकालवर्ण्णनाधिकारे भणितमिति । 'तस्स ण'ति । तस्य बहुसमरमणीयस्य भूमिभागस्य बहु-मध्यदेशभागे 'एत्य ण'ति । अत्र महान्तम् अभिषेकमण्डप विकुर्व्वन्ति । 'अणेग'त्ति।अनेकस्तम्भशतसन्निविष्ट 'जाव'त्ति । यावद्गन्धवर्त्तिभूत कस्तूरिकागुटिकाकल्पं 'पेच्छ'त्ति । पेक्षागृहमण्डपवर्ण्णको वक्तव्य इति शेष.। स चैवम्-अब्भुग्गयसुकयवरवेइआ तोरणवररइअसालभंजिआग सुसिलिट्ठविसिट्ठलट्ठसट्ठिअपसत्थ-वेरुलिअविमलखभ णाणामणिकणगरयणखचिअउज्जलबहुलसमसुविभत्तभूमिभाग ईहामिग-उसभ-तुरग-णर-मगर-विहग-वालग-किनर-रुरु-सरभ-चमर-कुंजर-वणलय-पउमलयभत्तिचित्तं कचणमणिथूभिआग णाणाविहपचवण्णघंटापडागपरिमंडिअग्गसिहर' 'चवल'चिकचिकायमानत्वात् 'मरीचिकवय' मरीचिक-वचमिति किरणजालपरिक्षेप 'विणिम्मुअत' लाउल्लोइअमहिअं गोसोससरसरत्तचदणदद्दरदिण्णपंचगुलितल उवचिअवदणकलस वंदणघडसुकयतोरणपडिदुवारदेसभागं आसत्तोसत्तवट्टवग्घारिअमल्लदामकलाव पच-वण्णसरससुरहिमुक्कपुप्फपुंजोवयारकलिअ कालागुरुपवरकुंदुरुक्कधूवमघमघतगंधुद्धुआभिराम सुगंधवर-गंधिअ'ति प्राग्वत् । 'तस्स णमि'त्यादि । तस्याभिषेकमण्डपस्य बहुमध्यदेशभागे अत्र महदेकम् अभिषेक-पीठ विकुर्व्वन्ति 'अच्छ सण्ह'ति प्राग्वत् । 'तस्स ण अभिसेअ'त्ति । तस्याभिषेकपीठस्य 'तिदिसिं'ति । तिस्रो दिश समाहृतास्त्रिदिग् तस्मिन् त्रिदिशि 'तओ'त्ति । त्रीणि 'तिसोवाण'त्ति । त्रयाणा सोपानाना समाहारस्त्रिसोपान त-एकैकस्यां दिश्येकैकमतस्त्रीणि भवन्ति । पुस्त्व च प्राकृतत्वात् । कि लक्षणानि ? प्रतिरूपकाणि-प्रति विशिष्ट रूप येषा तानि प्राकृतत्वात् विशेषणस्य परनिपाते सति प्रतिरूपकाणि च तानि त्रिसोपानानि चेतिसमास । 'तेसि णमि' त्यादि । तेषा त्रिसोपानप्रतिरूपकाणाम् अयमेतद्रूपो वर्ण्णावास. प्रज्ञप्त. 'जाव तोरणे'ति । यावत्तोरणानि विकुर्व्वन्ति । यावत्करणात् 'वयरामया णेमा रिट्ठा-मया पइट्ठाणा वेरुलिअमयखभा सुवण्णरूप्पमयफलया लोहिअक्खमयाओ सुतीतो वयरामया सधा णाणामणिमया अवलवणा अवलवणवाहाओ पासादीआ जाव पडिरूव'त्ति । 'तस्स णमि'त्यादि । तस्याभिषेकपीठस्य बहुसमरमणीयो भूमिभागः प्रज्ञप्तः । बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे 'एत्य ण'ति । अत्र महदेक सिंहासन विकुर्व्वन्ति । 'तस्स ण'ति । तस्य-सिंहासनस्य अयमेतद्रूपो वर्ण्णा-वासो-वर्णक प्रज्ञप्तः । 'जाव दामवण्णग'ति । यावद्दामवर्णक समाप्त यावत्करणात् 'त जहा तवणिज्ज-मया चक्कला रयणामया सीहा सोवण्णिआ पाया'इत्यादिओ 'मुत्तादामेहिं तदद्धुच्चप्पमाणेहिं सव्वओ समता सपरिक्खित्तो'इति पर्यन्त सिंहासनवर्ण्णन प्रागभिहितमवसातव्य । 'ते ण दामा तवणिज्जलवूसगा'

लम्बूसका नाम आभरणविशेषा अग्रभागे येषा तानि इत्यादितो 'अतीव उवसोभेमाणा चिट्ठती'ति पर्यन्त द्वामवर्ण्णन च प्राग्वत् । अथ निगमनसूत्रमाह-'एते णं देव'त्ति । एतेन प्रागुक्तप्रकारेण क्वचित् 'एवं ण'ति पाठ । स च प्रकटार्थ एव ते देवा अभिषेकमण्डप विकुर्व्वन्ति विकुर्व्य यत्रैव भरतो राज्ञः 'जाव'त्ति । यावत्प्रत्यर्प्पयन्ति यावत्करणात् तत्रैवोपागच्छन्तीत्यादि । अथाभिषेकमण्डपस्वरूपमवगम्य भरतः किं कृतवानित्याह-'तते ण से' इत्यादि । तत स भरतो राजा अभियोगाना देवानामन्तिके एनमर्थं श्रुत्वा-निशम्य हृष्टतुष्टयावत्पौषधशालात प्रतिनिष्क्रामति यावत्करणात् 'चित्तमाणदिए' इत्यादि । प्रतिनिष्क्रम्य यत्करोति तदाह-'कोडु बिअ'त्ति । 'पच्चप्पिणती'ति पर्यन्त सुगम 'तते ण से'इत्यादि । 'दुरूढे' इति पर्यन्त प्राग्वत् । अथाभिषेक्य हस्तिरत्नमारूढस्य भरतस्य किं गायमानमासीदित्याह-'तते ण तस्से'त्यादि। ततस्तस्य भरतस्य राज्ञः आभिषेक्य हस्तिरत्नमारूढस्य सतः इमान्यष्टावष्टौ मङ्गलकानि 'जो चेव'त्ति । य एव गम सूत्रपाठो विनीतां नगरी प्रविशतो भरतस्य भणित 'सो चेव'त्ति । स एव निष्क्रामतोऽपि अपिशब्दात् पौषधशालात इतिगम्य स चैव-'अट्ठट्ठमगलगा पुरतो अहाणुपुव्वीए संपट्ठिआ । तं जहा-सोवत्थिआ सिरिवच्छे' त्यादि । कियद् रमित्याह-'जाव अपडिवुज्झमाणे'इत्यादि । अप्रत्यूह्यमानोऽनपद्रूयमाणमानसो विनीता राजधानीमधिकृत्य मध्यमध्येन निर्गच्छति निर्गत्य च यत्रैव विनीताया नगर्याः उत्तरपौरस्त्ये दिग्भागे-ईशान्या यत्र चाभिषेकमण्डपः तत्रैवोपागच्छति उपागत्य त्राभिषेकमण्डपद्वारे आभिषेक्यहस्तिरत्न स्थापयति स्थापयित्वा च आभिषेक्याद्धस्तिरत्नात्प्रत्यवरोहति प्रत्यवरुह्य च स्त्रीरत्नेन द्वात्रिंशता ऋतुकल्याणिकासहस्रैः द्वात्रिंशता जनपदकल्याणिकासहस्रैः द्वात्रिंशता द्वात्रिंशद्बद्धैर्नाटकसहस्रैश्च सार्द्धं सम्परिवृतः । अभिषेकमण्डपमनुप्रविशति अनुप्रविश्य च यत्रैवाभिषेकपीठं तत्रैवोपागच्छति उपागत्याभिषेकपीठ अनुप्रदक्षिणी कुर्व्वन् कुर्वन् पौरस्त्येन-पूर्वदिग्वर्त्तिना त्रिसोपानप्रतिरूपकेणारोहति आरुह्य च यत्रैव सिंहासन तत्रैवोपागच्छति उपागत्य यावत्पूर्व्वाभिमुख सन्निषण्णः सम्यक् यथोचित्येन राजनीत्या निषण्णः-उपविष्टः । 'तते णमि'त्यादि । ततस्तदनन्तरं भरतस्य राज्ञो द्वात्रिंशद्राजसहस्राः यत्रैवाभिषेकमण्डपस्तत्रैवोपागत्याभिषेकमण्डपमनुप्रविशति अनुप्रविश्य अभिषेकपीठमनुप्रदक्षिणी कुर्व्वाण. कुर्वाण. 'उत्तरिल्ले ण'ति । औत्तराहेण त्रिसोपानप्रतिरूपकेण यत्रैव भरतो राजा तत्रैवोपागच्छन्ति उपागत्य 'करतल जाव'त्ति । करतल यावदञ्जलिं कृत्वा भरत राजान जयेन विजयेन वर्द्धापयन्ति भरतस्य राज्ञो नात्यासन्ने नातिदूरे देशे इति गम्य शुश्रूषन्तो यावत्पर्युपासते-सेवां कुर्व्वन्ति । 'तते णमि'त्यादि । ततस्तस्य भरतस्य राज्ञ सेनापतिरत्न यावत्सार्थवाहप्रभृतयो यावत्करणात् राजेश्वरादयो द्रष्टव्या । 'तेवि'त्ति । तेऽपि तथैव यथा द्वात्रिंशद्राजसहस्रा. नवर केवल दाक्षिणात्येन त्रिसोपानकप्रतिरूपकेणारुह्य यावत्पर्युपासते । अथ भरतकृत्यमाह-'तते ण से'इत्यादि । तत. स भरतो राजा आभियोगान् देवान् शब्दापयति शब्दापयित्वा च एवमवादीत्-क्षिप्रमेव भो देवानुप्रिया ! मम 'महत्थ'ति। महानर्थो-मणिरत्नकनकादिसमुदायात्मक उपयुज्यमानो यत्र स महार्थस्त तथा 'महग्घ'ति । महानर्घ-पूजा यत्र स महार्घस्त 'महरिह'ति । महमुत्सवमर्हन्तीति महार्हस्त तथा महाराज्याभिषेक उपस्थापयत तदुचितसामग्री सज्जीकृत्योपढौकयध्वम् । अथ भरतोक्त निशम्य आभियोगा देवा कीदृशा. सन्त. किं

कुर्व्वन्तीत्याह–'तते ण ते'इत्यादि प्राग्वत् । अथातिदेशमाह–'एव जह'त्ति । एवमिति प्रागुक्तदिग्दर्शन-प्रकारेण यथा विजयदेवस्य महाराज्याभिषेक. श्रीजीवाभिगमोक्तस्तथा 'एत्थ'त्ति । अत्रापि भरतराज्या-भिषेकेऽपि । नवरं विजयदेवनामस्थाने भरताभिधान सामान्यदेवोक्तिस्थाने भरतस्य स्वयमेवोक्ति । कियद्दूरं वक्तव्य इत्याह-'जाव पडग'त्ति । यावत्पण्डकवने एकत्र मिलन्ति-षोडशसहस्रा अप्याभियोगदेवाः समुद्रा-यीभवन्ति यावत्करणात् 'वेउव्विअसमुग्घाएण समोहणित्ता अट्ठसय सोवण्णिआण कलसाणमि'त्यादि-संग्रहः । एतत्सङ्क्षेपार्थो यथा षोडशसहस्रा अप्याभियोगा देवा मस्तकेऽञ्जलिं कृत्वा भरताऽऽज्ञामभ्युप-गम्यसमुद्घातेन समवहताः अष्टाधिकशतं सौवर्णिकाना कलशानाम् एवं रूप्यमयाना मणिमयाना सुवर्ण-रूप्यमयाना सुवर्णमणिमयाना रूप्यमणिमयानां सुवर्णरूप्यमणिमयाना पृथिवीमयानां च प्रत्येकमष्टशतं विकुर्व्वन्ति । अष्टशत भृङ्गाराणाम् एवम् आदर्शाना स्थालाना पात्रीणा सुप्रतिष्ठाना चित्राणा रत्न-करण्डकाना पुष्पचङ्गेरीणां यावल्लोमहस्तकचङ्गेरीणा पुष्पपटलकाना यावल्लोमहस्तपटलकानाम् एवं सिंहासनछत्रचामरसमुद्गकध्वजधूपकडुच्छकानामपि प्रत्येकमष्टशत विकुर्व्वन्ति । ततश्च ये भरतराज्ये स्वाभाविका. सौवर्णादिका. कलशा. तथा भृङ्गारादयश्च राज्याभिषेकोपयोगिनस्तान् विकुर्व्विताश्च यावद्धूपकडुच्छकान् गृहीत्वा विनीतानगर्या राजधान्याः प्रतिनिष्क्रम्य उत्कृष्टया देवगत्या तिर्यक्द्वीप-समुद्राणां मध्यमध्येन व्रजन्तो यत्रैव क्षीरोदसमुद्रः तत्र गत्वा क्षीरोदकं गृह्णन्ति यानि च तत्रोत्पलानि कुमुदानि नलिनानि सुभगानि सौगन्धिकानि पुण्डरीकाणि महापुण्डरीकाणि शतपत्राणि सहस्र पत्राणि शतसहस्रपत्राणि च तानि गृह्णन्ति गृहीत्वा च पुष्करोदे समुद्रे समागत्य तत्रत्यमुदकम् उत्पलादीनि च गृह्णन्ति तदनन्तर मनुष्यक्षेत्रे भरतैरावतवर्षेषु यानि मागधवरदामप्रभासनामानि तीर्थानि तत्रोपगत्य तीर्थोदकं तीर्थमृत्तिका च गृह्णन्ति । ततो गङ्गासिन्धुरक्तारक्तावतीमहानदीषु नद्युदकमु-भयतटमृत्तिकां च गृह्णन्ति । ततः क्षुल्लहिमवच्छिखरिषु समागत्य सर्व्वर्तुवरान् कषायान् सर्व्वाणि जातिभेदभिन्नानि पुष्पाणि सर्व्वान् गन्धान् गन्धवासादीन् सर्व्वाणि माल्यानि सर्व्वौषधीः सिद्धार्थकाश्च गृह्णन्ति तदनन्तर पद्मह्रदपुण्डरीकह्रदेषु उपागत्य तदुदकमुत्पलादीनि च गृह्णन्ति तता हैमवतहैरण्यव-तेषु वर्षेषु रोहितारोहितांशासुवर्णकूलारूप्यकूलासु महानदीषु नद्युदकमुभयतटमृत्तिका तदनन्तर शब्दा-पातिविकटापातिवृत्तवैताढ्येषु सर्व्वर्तुवरादीन् ततो महाहिमवद्रूपिवर्षधरपर्व्वतेषु सर्व्वर्तुवरादीन् ततो महापद्मह्रदमहापुण्डरीकह्रदेषु ह्रदोदकम् उत्पलादीनि च ततो हरिवर्षरम्यक्वर्षेषु हरि-कान्तानारीकान्तासु महानदीषु नद्युदकमुभयतटमृत्तिका च ततो गन्धापातिमाल्यवन्तपर्यायवृत्तवैताढ्येषु सर्व्वर्तुवरादीन् ततो निषधनीलवद्वर्षधरपर्व्वतेषु सर्व्वर्तुवरादीन् ततस्तद्गतेषु तिगिञ्छिकेसरिमहाह्रदेषु ह्रदोदकमुत्पलादीनि च गृह्णन्ति तत. पूर्व्वविदेहापरविदेहेषु शीताशीतोदामहानदीषुनद्युदकमुभयतटमृत्तिका च तदनन्तर सर्व्वेष्वपि चक्रवर्तिविजयेषु मागधवरदामप्रभासादिषु तीर्थेषु तीर्थोदकानि तीर्थमृत्तिकाश्च तत सर्व्वेषु वक्षस्कारपर्व्वतेषु सर्व्वर्तुवरादीन् तदनन्तर सर्व्वास्वन्तरनदीषु नद्युदकानि उभयतटमृत्ति-काश्च ततो मन्दरपर्व्वते भद्रशालवने सर्व्वर्तुवरादीन् ततो नन्दनवने सर्व्वर्तुवरादीन् सरसं च गोशीर्ष-चन्दनं तता सौमनसवने सर्व्वर्तुवरादीन् सरसं च गोशीर्षचन्दन दिव्य च सुमनोदाम गृह्णन्तीति । अथोक्त-

वस्तुजात गृहीत्वा ते आभियोगा देवा यत्कुर्व्वन्ति तदाह–'जेणेव दाहिणड्ढ'त्ति । यत्रैव दक्षिणार्द्धभरतवर्षं यत्रव विनीता राजधानी 'तेणेव'त्ति । तत्रैवोपागच्छन्ति उपागत्य विनीता राजधानीमनुप्रदक्षिणीकुर्व्वन्तः कुर्वन्त । यत्रैवाभिषेकमण्डपो यत्रैव भरतो राजा तत्रैवोपागच्छन्ति उपागत्य च 'त'ति । तत् यत्प्राग् भरतोपदिष्ट महार्थं महार्घं महार्हं महाराज्याभिषेकम् उपस्थापयन्ति तदुचितसामग्री प्रगुणीकुर्य्योपढौकन्ते । अथ भरतस्य राज्याभिषेक ये यथा कुर्व्वन्ति तान् तथैवाह–'तते ण भरहमि'त्यादि । ततोऽभिषेकसामग्री सज्जीकरणानन्तर भरत राजान द्वात्रिंशद्राजसहस्रा 'सोहणसि'त्ति । शोभने प्रशस्ते तिथिकरणनक्षत्रमुहूर्ते तत्र तिथीना प्रशस्तत्व रिक्तादि तिथि परित्यागात् । यदुक्तम्

रिक्तापष्ठचष्टमी द्वादश्यमावास्याः शुभे त्यजेत् । स्वीकुर्यान्नवमी क्वापि न प्रवेशप्रवासयो. ॥१॥ इत्यादि । करणाना प्रशस्तता विष्टिकरणवर्ज्जनेनैव । यदुक्तम्–'दशामूनि विविष्टीनि दिष्टान्यखिलकर्म्मसु' इत्यादि । नक्षत्राणा शोभनत्व ज्योति.शास्त्रप्रसिद्धाना त्रयोदश नक्षत्राणामन्यतरत्वेनैव यदुक्तम्

अभिषिक्तो महीपाल श्रुतिज्येष्ठालघुध्रुवै. । मृगानुराधापौष्णैश्च चिर शास्ति वसुन्धराम् ॥१॥ इत्यादि । मुहूर्त्ताना प्रशस्तता कुलिकादिपरित्यागेन ज्योतिर्विदां प्रतीतैव । अथ प्रकृते कि नक्षत्र किं च मुहूर्त्तमित्याह–'उत्तरे'त्यादि । उत्तरप्राष्ठपदा–'उत्तरभद्रपदा द्वय्यः प्रोष्ठपदाश्च ता' इति वचनात् प्रोष्ठपदाशब्देनोभयमप्युच्यते 'उत्तरे'ति विशेषणेन पूर्व्वभद्रपदाना निवृत्ते । एतच्च नक्षत्र राज्याभिषेकार्हं तामियुंक्त यद्विजय विजयनामक मुहूर्त्त उत्तरप्रोष्ठपदाविजय तस्मिन् 'तेहिति'त्ति । तैः स्वाभाविकैरुत्तरविकुर्व्वितैश्च । किं भूतै ? 'वरकमल'त्ति । वरकमलेषु प्रतिष्ठान येषा ते तथा तै' 'सुरभि'त्ति । सुरभिवरवारिणा सुगन्धप्रधानजलेन प्रतिपूर्ण्णैः कलशैरितिशेषः । यावन्महता राज्याभिषेकेणाभिषिञ्चन्ति यावत्करणात् 'चदणकयचच्चएहिं आविद्धकठेगुणेहिं' कण्ठारोपितरक्तसूत्रतन्तुभि 'पउमुप्पलमुप्पलपिहाणेहिं करतलसुकुमालकोमलपरिग्गहिएहिं अट्ठसएणं सोवण्णिआण कलसाण रूप्पमयाण मणिमयाणं जा ण जाव अट्ठसएण भोमाण कलसाण सव्वोदएहिं सव्वमट्टिआहिं सव्वतुवरेहिं जाव सव्वोसहिसिद्धत्थएहिं सव्विड्ढीए सव्वजुत्तीए सव्ववलेण सव्वसमुदएण सव्वायरेण सव्वविभूतीए सव्वविभूसाए सव्वसभमेणं सव्वोरोहेण सव्वणाडएहिं सव्वपुप्फगंधमल्लालकारविभूसाए सव्वसद्दसण्णिणाएण महया इड्ढीए महया जुत्तीए महया वलेण महता तुडिअजमगसमगपडुप्पवाइअरवेण सखपणवपडहभेरिझल्लरिमुरवमुइगदुदुहिहुडुक्कनिग्घोसणाइएण महता इदाभिसेएण'तिसग्रहः ।' अथाभिषेकेऽतिदेशमाह–'अभिसेउ'त्ति । अभिषेको यथा विजयस्य जीवाभिगमे भणितस्तथाऽत्रापि भणितव्य । सचैव–'तते ण तस्स भरहस्स रण्णो महया महया इंदाभिसेअंसि वट्टमाणसि अप्पेगइआ देवा णातिं उदग णातिं मट्टिअ पविरलफुसिअ दिव्वं सुरभिरेणुविणासणं गंधोदगवासं वासति'इत्यादि । अय भाव – भरतस्य राज्ञ इन्द्राभिषेके वर्त्तमाने सति केचिद्देवा विनीताया राजधान्यां नात्युदक नाति मृत्तिक यथा स्यात्तथा दिव्य सुरभिगन्धोदकवर्ष वर्षन्ति । केचिद्देवाः विनीतां राजधानी दूरप्रेणष्टरजसा कुर्व्वन्ति । केचित् देवा विनीता साभ्यन्तरबाह्याम् आसिक्तसम्मार्जितोपलिप्ता सिक्तशुचिसमृष्टरथ्यान्तरापणवीथिका कुर्व्वन्ति । केचिद्देवा मञ्चातिमञ्चकलिता

कुर्व्वन्ति । केचिद्देवा नानाविधरागरञ्जितोच्छ्रितध्वजविजयवैजयन्तीपताकातिपताकमण्डिता कुर्व्वन्ति । केचिद्देवाः सेटिकादिना धवलिता कुर्व्वन्ति । केचिद्देवाः गोशीर्षसरसरक्तचन्दनदत्तपञ्चाङ्गुलितला कुर्व्वन्ति । केचिद्देवा वन्दनकलशतोरणालङ्कृतप्रतिद्वारदेश भागा कुर्व्वन्ति । केचिद्देवाः भूमिभागोपरि-भागलग्नविपुलमाल्यदामकलापा कुर्व्वन्ति । केचिद्देवा. पञ्चवर्ण्णपुष्पोपचारकलिता कुर्व्वन्ति । केचिद्देवा. कृष्णागुरुप्रभृतिधूपेनगन्धाभिरामा गन्धवर्त्तिभूता कुर्व्वन्ति । केचिद्देवा. वहुकालीना वास्तवी प्रीतिमुत्पि-पादयिषवो हिरण्यवर्षं वर्षन्ति । केचित् सुवर्ण्णवर्षं । केचित् रत्नवर्षं । केचिद्वज्रवर्षं । केचित् पुष्पमाल्य-गन्धवासवर्षं वर्षन्ति । केचित् देवा हिरण्यादिकमन्येभ्यो देवेभ्यो दत्त्वा वर्षं कारयन्ति । अथ हर्षोद्रेकवशात् केचिद्देवा ततविततघनशुषिरभेदभिन्न चतुर्विध वाद्य वादयन्ति । केचित् उत्क्षिप्तप्रवृत्तमन्दरोचना-लक्षण चतुर्विध गेय गायन्ति । केचित् देवाः द्रुतादिनाट्यविधि दर्शयन्ति । केचित् देवा हर्षवशात् स्थूला भवन्ति । केचित् बुक्कारं कुर्व्वन्ति । केचित्ताण्डवरूप नृत्त कुर्व्वन्ति । केचित् पीनत्वादिकमपि कुर्व्वन्ति । केचिद्देवा उच्छलन्ति । केचिद्देवाः प्रोच्छलन्ति । केचिद्देवा भूम्यादिकमास्फोटयन्ति । केचिद्देवा वल्गन्ति । केचिद्देवाः सिंहनाद कुर्व्वन्ति । केचिद्देवास्त्रीण्यपि कुर्व्वन्ति । केचिद्देवा हयहेषितानि कुर्व्वन्ति । केचित् हस्तिगुडगडायित कुर्व्वन्ति । केचित् रथघणघणायित कुर्व्वन्ति । केचिद्देवा पाददर्द्दर कुर्व्वन्ति । केचिद्देवा भूमिचपेटा ददति । केचिद्देवा महता महता शब्देन शब्दयन्ति । केचित् प्रागुक्त त्रिक चतुष्क वा कुर्व्वन्ति । केचिन्मुखेन बुक्काशब्दं कुर्व्वन्ति । केचित् ज्वलन्ति । केचित् तपन्ति । केचित् तिर्यक् पतन्ति । केचिद्गर्ज्जन्ति । केचिद्विद्युत कुर्व्वन्ति । केचिद्वर्षं वर्षन्ति । केचित् देवोत्कलिका कुर्व्वन्ति । केचित् देवा कहकहक कुर्व्वन्ति । तत्र कहको नाम प्रभूताना देवानां प्रमोदभरवशात. स्वेच्छा-वचनैर्बोल कोलाहलो भण्यते । केचिद्वेलोत्क्षेप कुर्व्वन्ति । केचित् हस्तन्यस्तचन्दनकलशाः । केचित् भृङ्गारहस्तगताः । केचिदादर्शहस्तगता । केचित् स्थालहस्तगता । केचित्पात्रीहस्तगता. केचिदवातकर-कहस्तगताः । केचिच्चित्ररत्नकरण्डकहस्तगता । केचित्पुष्पचङ्गेरी यावल्लोमहस्तचङ्गेरीहस्तगताः । एवं पुष्पपटलक-सिंहासन-छत्र-चामर-तैलसमुद्गक यावदञ्जनसमुद्गक धूपकडुच्छकशब्दैः प्रत्येक हस्त-गतत्व वाच्यम् । एवमुत्पलशतपत्रसहस्रपत्रहस्तगताः सर्व्वेऽपि हृष्टतुष्ट यावद्धर्षवशविसर्प्पद्धृदया विनी-ताया राजधान्यामितस्ततः सर्व्वत समन्ताद् धावन्ति प्रधावन्ति चेति । अथाभिषेक कृत्वा यत्कुर्व्वन्ति तदाह–'अहिसिंचित्त'त्ति । प्रागुक्तप्रकारेणाभिषिच्य द्वात्रिंशद्राजसहस्राः प्रत्येक करतल यावदञ्जलि कृत्वा यावत्करणात् 'परिग्गहिअ दसनहमि'त्यादि 'ताहिं'ति ताभिरिष्टाभि कान्ताभि. यथा प्रविशतो-विनीता नगरी प्रति प्रवेश कुर्व्वतो भरतस्य भणिता-वक्तव्यतेति शेष. । साऽत्रापि भणितव्या । कियद्दूरमित्याह-'जाव विहराहि'त्ति । यावत् विहर विचर प्रवर्त्तस्वेत्यर्थ. । इति कट्टु–इति कृत्वा जय जय शब्द प्रयुञ्जते। अथ सेनापतिप्रभृतीनामभिषेकक्रममाह–'तते ण तमि'त्यादि । ततो द्वात्रिंशद्राजसहस्रकृताभिषेकानन्तर त भरतं राजान सेनापतिरत्नं यावत्पुरोहितरत्नं यावत्करणात् गृहपतिवार्द्धकिरत्ने सग्राह्ये । एतानि चत्वारि रत्नानि निजनिजपरिवारसंयुक्तानि क्रमेणाभिषिञ्चन्ति । ततश्च त्रीणि च षष्ट्यधिकसूपकारशतानि अष्टादशश्रेणिप्रश्रेणयः 'अण्णे अ वहवे'त्ति । अन्ये च वहवो यावत्सार्थवाहप्रभृतयः यावत्करणात् राजेश्वर-

तलवरादयो दृश्या'। क्रमेणाभिषिञ्चन्ति कैं कृत्वेत्याह–'तेहिमि'त्यादि। यैः स्वाभाविकैर्विकुर्व्वितैश्च सौवर्णिकादिकलशैर्द्वात्रिंशद्राजसहस्रैरभिषिक्तस्तैरेव कलशैः वरकमलप्रतिष्ठितैः 'तह चेव'त्ति। तथैव–तेनैव प्रकारेण यावदभिष्टुवन्ति–'जय जय नंदा जय जय भद्दे'त्यादि वाक्यैः स्तुतिं कुर्व्वन्ति। 'सोलस'त्ति। षोडश देवसहस्रा. 'एव चेव'त्ति। एवमेव यथा सेनापतिप्रभृतिभिरभिषेकः कृतस्तथैव षोडशसहस्रा देवा अप्यभिषिञ्चन्ति। अथ विशेषमाह–'णवर'ति। नवरं पक्ष्मला–पक्ष्मवती अत एव सुकुमाला तया 'जाव मउड'त्ति। यावन्मुकुटं 'पिणद्ध'ति। 'नही बधने' इति वचनात् पिनह्यन्ति–निबध्नन्ति यावत्करणात् 'तते णं तस्स भरहस्स रण्णो चाउरंतचक्कवट्टिस्स तप्पढमयाए पम्हलसुकुमालाए दिव्वाए गंधकासाइए गायाइं लूहेंति लूहेत्ता सरसेणं गोसीसचंदणेणं गायाइं अणुलिंपेंति अणुलिंपेत्ता णासाणीसासवातवज्झं' 'चक्खुहरं' चक्षुर्हरं तनु सुनिचयनिचितत्वेन चक्षूरोधकत्वात् 'वण्णफरिसजुत्तं हयलालापेलवाइरेगधवलं' अश्वलालाया अप्यतिरेकेण पेलवं एवंविधं स धवलं 'कणगखचिअंतकम्मं' कनकेन खचितानि अन्तकर्म्माण्यञ्चलयोर्वानलक्षणानि यस्य तत् 'आगासफलिहसमप्पभं देवदूसजुअलं णिअंसावेंति निवासयन्ति परिधापयन्तीत्यर्थः। 'णिअंसावित्ता हारं पिणद्धंति एगावलिं पिणद्धंति कणगावलिं पिणद्धंति रयणावलिं पिणद्धंति मुत्तावलिं पिणद्धंति एवं अंगयाइं कडगाइं तुडिआइं कडिसुत्तगं' 'दसमुद्दाणंतगं'–दशमुद्रानन्तकं नाम हस्ताङ्गुलिसम्बन्धिमुद्रिकादशकं 'विअत्थिसुत्तक्खं' वितस्तिसूत्राक्षमाभरणविशेषः 'मुरविं कंठमुरविं' 'पालंबं' प्रालम्बोनाम तपनीयमयो विचित्रमणिरत्नभक्तिचित्रः आत्मप्रमाणेन सुप्रमाणं आभरणविशेषं 'कुंडलाइं' 'चूडामणिं' चूडामणिर्नाम सकलपार्थिवरत्नं सर्व्वसारो देवेन्द्रमनुष्येन्द्रमूर्द्धकृतनिवासः निश्शेषापमङ्गलाशान्तिरोगप्रमुखदोषापहारी प्रवरलक्षणोपेतः परममङ्गलभूतः आभरणविशेषः। 'चित्तरयणसंकडं' प्रभूतरत्ननिचयोपेतमिति चूडामणेर्विशेषणं तं पिनह्यन्ति। अथ पुनरपि देवाः किं कुर्व्वन्तीत्याह–'तयाणंतरं'ति। तदनन्तरं 'दद्दरे'ति। दर्दरो नाम चीवरावनद्धकुण्डिकादिभाजनमुखं तेन गालिता पक्वा वा मलयस्य मलयोद्भवत्वेन श्रीखण्डस्य सम्बन्धिनः सुगन्धिभ्यो द्रव्येभ्योऽतिशायि गन्धो येषां ते तथा तादृशैर्गन्धैर्वासैर्गात्राणि शरीरावयवान् 'भुकुंडंति'। उद्धूलयन्ति। क्वचित् 'अब्भुक्खंती' ति पाठः। तत्रापि अभ्युक्षन्ति चन्दनरसच्छटाभिश्चित्रितानि कुर्व्वन्तीत्यर्थः। 'दिव्वं'ति। दिव्यं देवजननिर्म्मापितं देवजनोचितं वा सुमनोदामपुष्पमालां पिनह्यन्ति किं बहुना वर्णितेनेति शेषः। 'गंथिमे'त्यादि ग्रन्थनं ग्रन्थस्तेन निर्वृत्तं ग्रन्थिमं भावादिमप्रत्ययः। यत् सूत्रादिना ग्रथ्यते तद्ग्रन्थिममित्यर्थः। वेष्टिमं यत् ग्रथितं सत् वेष्ट्यते यथा पुष्पलम्बूसको गेन्दुक इत्यर्थः। 'जाव विभूसिअं'ति। यावद्विभूषितं कुर्व्वन्ति। यावत्करणात्पूरिमादि सङ्ग्रहः। तत्र पूरिमं येन वंशशलाकादिमयपञ्जरादि पूर्यते सङ्घातिमं यत्परस्परतो नालसङ्घातेन सङ्घात्यते। एवंविधेन चतुर्विधेन माल्येनेत्यादिना यावद् कल्पवृक्षमिवालङ्कृतविभूषितं कुर्व्वन्ति आभियोगा देवा इत्यनुवर्त्तते। अथ राज्याभिषेकानन्तरं भरतो यत्कृतवांस्तदाह–'तते णं से' इत्यादि। ततः स भरतो राजा महता राज्याभिषेकेणाभिषिक्तः सन् कौटुम्बिकपुरुषान् शब्दापयति शब्दापयित्वा च एवमवादीत् क्षिप्रमेव भो देवानुप्रियाः! हस्तिस्कन्धगताः विनीताया राजधान्याः शृङ्गाटकत्रिकचतुष्कचत्वर यावन्महापथपथेषु यावत्करणात् चतुर्मुखादि परिग्रहः। 'महया' इति। महता महता

शब्देन उद्घोषयन्तः उद्घोषयन्ति. 'उस्सुक्कमि'त्यादि प्राग्वत् । यावत् 'दुवालसे'त्यादि । द्वादश सावत्सरिकं द्वादश संवत्सराणि कालो हेतुभूतो यत्र स तथा त प्रमोद प्रमोदहेतुत्वात् महोत्सव घोषयत-गाढस्वरेण जनेभ्यो ज्ञापयत घोषयित्वा च ममैतामाज्ञप्तिका प्रत्यर्पयत । 'तते णमि'त्यादि । ततस्ते कौटुम्बिकपुरुषा भरतेन राज्ञा एवमुक्ता सन्तः हृष्टेत्यादि प्राग्वत् । विनयेन च वचन प्रतिशृण्वन्ति प्रतिश्रुत्य च यावत्प्रत्यर्प्पयन्ति । 'तते ण से' इत्यादि । तत. स भरतो राजा महता महता अभिषेकेणाभिषिक्त सन् सिंहासनादभ्युत्तिष्ठति अभ्युत्थाय च स्त्रीवररत्नेन यावन्नाटकसहस्रैः सार्द्धं सम्परिवृत' यावत्करणात् 'बत्तीसाए उडुकल्लाणिआ सहस्सेहिमि'त्यादि । 'अभिसेय'त्ति । अभिषेकपीठान् पौरस्त्येन त्रिसोपानप्रतिरूपकेण प्रत्यवरोहति प्रत्यवरुह्य च अभिषेकमण्डपात्प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च यत्रैवाभिषेक्य हस्तिरत्न तत्रैवोपागच्छति उपागत्य च अञ्जनगिरिकूटसन्निभ गजपतिमारूढः । 'तते णमि'त्यादि । ततस्तस्य भरतस्य राज्ञो द्वात्रिंशद्राजसहस्राः अभिषेकपीठान् उत्तराहेण त्रिसोपानप्रतिरूपकेण प्रत्यवरोहन्ति' । 'तते णमि'त्यादि । ततस्तस्य भरतस्य राज्ञः सेनापतिरत्न यावत्सार्थवाहप्रभृतय यावत्करणात् पुरोहितरत्नादि दृश्यम् । अभिषेकपीठान् दाक्षिणात्येन त्रिसोपानप्रतिरूपकेण प्रत्यवरोहन्ति । 'तते णमि'त्यादि । ततस्तस्य भरतस्य राज्ञो हस्तिरत्नमारूढस्य सतः अष्टावष्टौ मङ्गलकानि पुरतो यावत् सम्प्रस्थितानि । 'चिअ'त्ति शब्दोऽवधारणे य एव अतिगच्छतो विनीता नगरी प्रविशत प्रथम क्रम. सकलभरतप्रसाधनानन्तर कुबेरावसानः 'जहा कुबेरुव्व देवराया केलाससिहरिसिंगभूतमि'ति पर्यन्त 'सो चेव'त्ति । स एव क्रमः । 'इहपि'त्ति । अत्रापि 'सक्कारजढो उ'त्ति । सत्कारवर्ज तुरेवार्थे सत्कारवर्ज एव प्रवेशावसरे विसर्ज्जनीयाना विसर्ज्जननिमित्तं सत्कारादि यत्प्रागभिहित तदिह नास्ति द्वादशवर्षाणि यावद्भावी यो महोत्सवस्तदनन्तरं तस्य करिष्यमाणत्वात् अतस्तद्रहितो वक्तव्य इत्यर्थः । कियद्दूरमित्याह- 'जाव कुबेरुव्वे'त्यादि । 'तते णं से' इत्यादि । 'भुंजमाणे विहरतो'ति पर्यन्त सुगमम् । अथ द्वादश वार्षिकमहोत्सवानन्तर भरतो यत्कृतवांस्तदाह-'तते ण से'इत्यादि । तत स भरतो राजा द्वादश सांवत्सरिके प्रमोदे महोत्सवे निवृत्ते सति यावन्मज्जनगृहात् प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च यत्रैव बाह्योपस्थानशाला यावत्सिंहासनवरगत. पूर्वाभिमुखो निषीदति निषद्य च षोडश देवसहस्रान् सत्कारयति सन्मानयति यावत् प्रतिविसर्ज्जयति । एव द्वात्रिंशद्राजवरसहस्राणां सार्थवाहप्रभृतीपर्यन्ताना विसर्ज्जन वाच्यं विसर्ज्य च 'उप्पिपासाये'त्यादि । उपरि प्रासादवरगतो यावद्विहरति यावत् करणात् 'फुट्टमाणेहिं मुइगमत्थएहिमि'त्यादि दृश्यम् ।

अथ भरतस्य राज्ञो यानि रत्नानि यत्रोत्पन्नानि तद्दर्शयितुमाह

**भरहस्स रण्णो चक्करयणे १ छत्तरयणे २ दंडरयणे ३ असिरयणे ४ एए चत्तारि एगिंदियरयणा आउहघरसालाए समुप्पण्णा । चम्मरयणे १ मणिरयणे २ कागिणीरयणे ३ एते णं सिरिघरंसि समुप्पण्णा । सेणावतीरयणे १ गाहावतिरयणे २ वड्ढतिरयणे ३ पुरोहितरयणे ४ एए चत्तारि मणुअरयणा विणीआए रायहाणीए समुप्पण्णा । आसरयणे १**

हत्थिरयणे २ एते दुवे पंचिंदिअरयणा वेअड्ढगिरिपायमूले समुप्पण्णा । सुभद्दा इत्थीरयणे उत्तरिल्लाए विज्जाहरसेढीए समुप्पण्णे ॥

'भरहस्से'ति । भरतस्य राज्ञः चक्ररत्न, छत्ररत्नं, दण्डरत्नम्, असिरत्नम् एतानि चत्वार्येकेन्द्रियरत्नानि आयुधगृहशालायां समुत्पन्नानि । चर्मरत्न मणिरत्न काकिणीरत्न नवमहानिधयश्च एतानि सर्व्वाणि श्रीगृहे—भाण्डागारे समुत्पन्नानि । 'सेणावई'त्यादि । सेनापतिरत्न गृहपतिरत्न वर्द्धकिरत्नं पुरोहितरत्न चैतानि चत्वारि मनुजरत्नानि विनीताया राजधान्या समुत्पन्नानि । 'आसरयणे'त्ति । अश्वरत्नं हस्तिरत्न च एते द्वे पञ्चेन्द्रियरत्ने वैताढ्यगिरिपादमूले—वैताढ्यपर्व्वतसमीपे समुत्पन्ने । 'सुभद्द'त्ति । सुभद्रा नाम्ना स्त्रीरत्न उत्तराहाया विद्याधरपङ्क्तौ समुत्पन्नम् ।

अथ भरत. कथ केषामाधिपत्य भुक्तवान् ? इत्याह

तते णं से भरहे राया चोद्दसण्हं रयणाणं नवण्हं महाणिहीणं सोलसण्हं देवसहस्साणं बत्तीसाए रायसहस्साणं बत्तीसाए उडुकल्लाणिआसहस्साणं बत्तीसाए जणवयकल्लाणिआसहस्साणं बत्तीसाए बत्तीसतिबद्धनाडगसहस्साणं तिण्हं सट्ठीणं सूवसयाणं अट्ठारसण्हं सेणिप्पसेणीणं चउरासीए आससयसहस्साणं चउरासीए दंतिसयसहस्साणं चउरासीए रहसयसहस्साणं छण्णउईए मणुस्सकोडीण बावत्तरीए पुरवरसहस्साणं बत्तीसाए जणवयसहस्साणं छण्णउईए गामकोडीणं णवणउए दोणमुहसहस्साणं अडयालीसाए पट्टणसहस्साणं चउवीसाए कब्बडसहस्साणं चउवीसाए मडबसहस्साणं वीसाए आगरसहस्साणं सोलसण्हं खेडगसहस्साणं चउदसण्ह संवाहणसहस्साणं छप्पण्णाए अंतरोअगाणं एगूणवण्णाए कुरज्जाणं विणीआए रायहाणीए चुल्लहिमवंतगिरिसागरमेरागस्स केवलकप्पस्स भरहवासस्स अण्णेसिं च बहूणं राईसर जाव सत्थवाहप्पभितीणं आहेवच्चं पुरेवच्चं भट्टित्तं सामित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे ओहतणिहतेसु कंटएसु उद्धिअमलितेसु सव्वसत्तुसु णिज्जितेसु भरहाहि णरिंदो वरचदणचच्चिअंगे वरहाररइअवच्छे वरमउडविसिट्ठवरवत्थभूसणधरे सव्वोउअसुरभिकुसुमवरमल्लसोभिअसिरे वरणाडगणाडइज्जवरइत्थिगुम्म सद्धिं संपरिवुडे सव्वोसहिसव्वरयणसव्व समितिसमग्गे सपुण्णमणोरहे हतामित्तमाणमहणे पुव्वकयतवप्पभावणिविट्ठसंचिअफले भुंजइ माणुस्सए सुहे भरहे णामधिज्जए ॥

'तते ण से' इत्यादि । इत आरभ्य भरहे 'णामधेज्जएण'ति पर्यन्त सम्बन्ध. । तत्र तत. स भरतो

राजा चतुर्दशानां रत्नानां नवानां महानिधीनां षोडशानां देवसहस्राणां द्वात्रिंशतो राजसहस्राणां द्वात्रिंशत् ऋतुकल्याणिकासहस्राणां द्वात्रिंशतो जनपदकल्याणिकासहस्राणां द्वात्रिंशतो द्वात्रिंशत्पात्रनिबद्धानां नाटकसहस्राणां त्रयाणां षष्ट्यधिकानां सूपशतानां सूपकारशतानां सूपकारा हि पाकादिक्रियाप्रवृत्तानां यथोचित्येन सम्यक् नियोजयितारोऽधिकारविशेषमापन्नाश्चक्रवर्त्तिभोजनोचितवस्तुचिन्ताकारिणो महर्द्धिका अवसातव्या न पुनः स्वयं रन्धनादिक्रियोपयुक्तास्तथात्वे च राज्याभिषेकादावनुपयोगापत्तेः । तथा 'अट्ठारस'त्ति । अष्टादशानां श्रेणिप्रश्रेणीनां-श्रेणयः प्रश्रेणयश्च प्रागुक्तस्वरूपा महर्द्धिकाः पुरुषविशेषा एव । चतुरशीतेरश्वशतसहस्राणां एवं हस्तिरथानामपि षण्णवत्या मनुष्यकोटीनां-पदातिमनुष्यकोटीनां द्वासप्ततेः पुरवरसहस्राणां-पुरवराणि नगराणि द्वात्रिंशतो जनपदसहस्राणां-जनपदा मागधादयो देशाः षण्णवतेर्ग्रामकोटीनां नवनवतेर्द्रोणमुखसहस्राणां द्रोणमुखानि-येषु जलस्थलमार्गाभ्यां भाण्डान्यागच्छन्ति । अष्टचत्वारिंशतः पत्तनसहस्राणां-पत्तनं द्वेधा जलपत्तनं स्थलपत्तनं च । तत्र जलमार्गेण भाण्डाऽऽगमनं यत्र तज्जलपत्तनं स्थलमार्गेण भाण्डाऽऽगमनं यत्र तत्स्थलपत्तनं चतुर्विंशतेः कर्पटसहस्राणां-कर्पटानि-कुनगराणि चतुर्विंशतेर्मडम्बसहस्राणां-मडम्बानि-यत्र योजनाभ्यन्तरे ग्रामादीनामभावः विंशतेराकरसहस्राणाम् आकरा-लवणाद्युत्पत्तिभूमयः षोडशानां खेटकसहस्राणां-खेटकानि-धूलीप्राकाराणि चतुर्दशानां संवाहनसहस्राणां संवाहनानि-येषु पर्व्वतादिदुर्गेषु लोका धान्यादिवाहकाः षट्पञ्चाशतोऽन्तरोदकानाम् अन्तरोदकाः-उदकान्तर्वर्त्तिनो द्वीपाः एकोनपञ्चाशतः कुराज्यानां-भिल्लपल्लीनां भिल्लराज्यानामित्यर्थः । तथा विनीतायां राजधान्याः क्षुल्लहिमवद्गिरिसागरमर्यादाकस्य केवलकल्पस्य-परिपूर्णस्य भरतवर्षस्य 'अण्णेसिं'च त्ति । अन्येषां चोक्तव्यतिरिक्तानां बहूनां राजेश्वर यावत् सार्थवाहप्रभृतीनां यावत्करणात्तलवरादीनामुपादानम् आधिपत्यम्-अधिपतेः कर्म्म रक्षेत्यर्थः पुरोवर्त्तित्वमग्रेसरत्वं भर्त्तृत्वं-पोषकत्वं स्वामित्वं-नायकत्वं महत्तरकत्वमुत्तमत्वम् आज्ञेश्वरस्याज्ञाप्रधानस्य सतः सेनापतेर्भावः आज्ञेश्वरसेनापत्यं कारयन्-अन्यैर्नियुक्तैः पालयन्-स्वयं तथा-'ओहय'त्ति । उपहता-विनाशेन निहताश्च समृद्धयपहारेण ये ते तथा तेषु एवंविधेषु कण्टकेषु 'उद्धिअ'त्ति । उद्धृता देशनिर्व्वासनेन मलिताश्च मानभङ्गेन म्लानिमापादिता ये ते तथा तेषु सर्व्वशत्रुषु निर्ज्जितेषु सत्सु भरताधिपो नरेन्द्रः 'वरचदण'त्ति । वरचन्दनेन चर्च्चितं मङ्गं यस्य स तथा वरहाररचितवक्षाः 'वरमउड'त्ति । वरमुकुटं च । विशिष्टानि-मलादिरहितानि प्रवराणि-प्रधानानि वस्त्रभूषणानि च धरति यः स तथा 'सव्वोउअ'त्ति । सर्व्वर्त्तुषु सुरभिकुसुमवरमाल्यं तेन शोभितं शिरो यस्य स तथा 'वरणाडगे'त्यादि । वर-प्रधानं यन्नाटकं तत्र नियुक्तानि यानि नाटकीयानि-नाटकोचितपात्राणि एवंविधं यत् वरस्त्रीगुल्म-प्रधानस्त्रीवृन्दं तेनसार्द्धं प्राकृतत्वात्तृतीयाविलोपः सम्परिवृतः 'सव्वोसहि'त्ति । सर्व्वौषधीनां सर्व्वरत्नानां च याः समितयो-मेलापकास्ताभिः समग्रः-परिपूर्णो यः स तथा सम्पूर्णमनोरथ -उत्पन्नमात्रपूर्णमनोरथ इत्यर्थः 'हतामित्त'त्ति । हतानि-हतप्रायाणि अमित्राणि-शत्रवो मानमथनेन-मानत्याजनेन यस्य स तथा 'पुव्वकय'त्ति । पूर्व्वकृततपःप्रभावेन निविष्टं निधौ रत्नमिव स्वात्मनि स्थापितं अत एव सञ्चितं-स्वोपभोग्यतया स्वसत्ताकीकृतं फलं यस्मिन् स तथा एवंविधोऽयं 'माणुस्सए'त्ति । मानुष्यकानि-मनुष्यसम्बन्धीनि सुखानि पुंस्त्वम् प्राकृतत्वात् भरतनामधेयः

भरतनामा भुङ्क्ते । न चात्रैकस्मिन्नेवान्वये भरतनाम्न: पुनर्भणने पौनरुक्त्यमाशङ्कनीय दूरत्वेन प्रागुक्तस्य स्मारणात् तथाविधपुण्यप्रकृतिमाहात्म्यो सौभाग्यातिशयात् गणधराणामपि हर्षोद्रेकाद्वा पुनर्भणनेऽपि पौनरुक्त्यभावात् ।

तते णं से भरहे राया अण्णया कयाइ जेणेव मज्जणघरे तेणेव उवागच्छति उवागच्छित्ता जाव ससिव्व पिअदंसणे णरवती मज्जणघराओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव आदंसघरे जेणेव सीहासणे तेणेव उवागच्छति उवागच्छित्ता सीहासणवरगए पुरत्थाभिमुहे णिसीअइ णिसीइत्ता आयंसघरंसि अत्ताणं देहमाणे देहमाणे चिट्ठति । तते णं तस्स भरहस्स रण्णो सुभेणं परिणामेणं पसत्थेहिं अज्झवसाणेहिं लेसाहिं विसुज्झमाणीहिं ईहापोहमग्गणगवेसणं करेमाणस्स तदावरणिज्जाणं कम्माणं खएणं कम्मरयविकिरणकरं अपुव्वकरणं पविट्ठस्स अणंते अणुत्तरे कसिणे पडिपुण्णे णिव्वाघाए णिरावरणे केवलवरणाणदंसणे समुप्पण्णे । तते णं से भरहे केवली सयमेव आभरणालंकारं ओमुअइ सयमेव पंचमुट्ठिअं लोअं करेति करेत्ता आयंसघरातो पडिणिक्खमति पडिणिक्खमित्ता अंतेउरमज्झं मज्झेणं णिग्गच्छति णिग्गच्छित्ता दसहिं रायवरसहस्सेहिं सद्धिं संपरिवुडे विणीअं रायहाणिं मज्झं मज्झेणं णिग्गच्छति णिग्गच्छित्ता मज्झदेसभागे सुहं सुहेणं विहरति विहरित्ता जेणेव अट्ठावए पव्वए तेणेव उवागच्छति उवागच्छित्ता अठावयं पव्वयं सणिअं सणिअं दुरूहति दुरूहित्ता मेघघणसन्निगासं देवसन्निवायं पुढविसिलापट्टगं पडिलेहेति पडिलेहित्ता संलेहणाभूसणाए झूसिए भत्तपाणपडिआइक्खिए पाओवगए कालं अणवकंखमाणे विहरति । तते णं से भरहे केवली सत्तसत्तरि पुव्वसयसहस्साइं कुमारवासमज्झेवसित्ता एगं वास सहस्सं मंडलिअरायमज्झे वसित्ता छप्पुव्वसयसहस्साइं वाससहस्सूणगाइं महारायमज्झेव सित्ता तेसीइं पुव्वसयसहस्साइं अगार वासमज्झेवसित्ता एगं पुव्वसयसहस्सं देसूणगं केवलि परिआगं पाउणित्ता तमेव बहुपडिपुण्णं सामण्णपरिआगं पाउणित्ता चउरासीतिं पुव्वसयसहस्साइं सव्वाउअं पालइत्ता मासिएणं भत्तेणं अपाणएणं सवणेणं णक्खत्तेणं जोगमुवागएणं खीणे वेअणिज्जे आउए णामे गोत्ते कालगए विइक्कंते समुज्जाए छिन्नजातिजरामरणबंधणे सिद्धे बुद्धे मुत्ते परिनिव्वुडे अंतगडे सव्वदुक्खप्पहीणे इति ॥

'तते णमि'त्यादि । तत स भरतो राजा अन्यदा—एकदा प्रस्तावे यत्रैव मज्जनगृहं तत्रैवोपागच्छति । उपागत्य च शशीवप्रियदर्शन: नरपतिर्मज्जनगृहात्प्रतिनिष्क्रामति यावत्करणात् 'मज्जणघर अणुपविसइ'इत्यादि दृश्य । प्रतिनिष्क्रम्य च यत्रैवादर्शगृहम् । आदर्शो—यत्राङ्गप्रत्यङ्गपरिहितालङ्कारा-

द्यवलोक्यते । तस्य गृह यत्तत्राप्यन्तराले यत्रैव सिंहासन तत्रैवोपागच्छति उपागत्य सिंहासनवरगत. पूर्व्वाभिमुखो निषीदति निषद्य च 'आयस'त्ति । आदर्शगृहे आत्मान 'देहमाणे देहमाणे'त्ति । पश्यन् पश्यन् तत्र प्रतिबिम्बितमात्मानं पश्यंन् पश्यस्तिष्ठत्यास्ते । अथैवं तिष्ठतो भरतस्य यज्जात तदाह-'तते ण तस्से' त्यादि । ततस्तस्य भरतस्य राज्ञ. शुभेन तेजःप्रभृतिशुभलेश्याहेतुभूतेन परिणामेन जीवपरिणतिविशेषेण तथा प्रशस्तैरुत्तमैरध्यवसायै. करणसव्यपेक्ष्यविज्ञानविशेषै' 'लेसाहिं'ति । लेश्याभिः लेश्या हि कृष्णादि-द्रव्यसम्बन्धजनितात्मपरिणामरूपा । यदुक्तम्

कृष्णादिद्रव्यसाविव्यात् परिणामो य आत्मन । स्फटिकस्येव तत्रायं लेश्याशव्द प्रयुज्यते ॥१॥ इति । किं लक्षणाभिः ? प्रशस्ताभिस्तारतम्यकृतनैकभेदभिन्नाभि. तेज पद्मशुक्लसञ्ज्ञाभि । तत्र शुभपरिणा-मादिनिमित्त तावदङ्गुलीयकपतनात् विरूपस्वरूपावलोकनमेव । तच्चैव-श्रीऋषभस्वामिनि निव्वाण प्राप्ते तस्यायतन कारयित्वा अयोध्यामागतो जातवहुशोकोऽपि कालेनाल्पशोक. पुनरपि भोगान् भोक्तुं प्रवृत्त. । एवं तस्य प्रवर्त्तमानस्य पञ्च पूर्व्वलक्षाणि समतिक्रान्तानि तस्मिन्नवसरे अन्यदा कदाचित् स्नातः कृतवलिकर्म्मा गोशीर्षचन्दनानुलिप्तगात्र वरकुसुमविरचितशिर.शेखरकः परिहितप्रवरवस्त्र सर्व्वालङ्कारविभूषित। आदर्शगृहमागत. । तत्रात्मप्रमाणादर्शे सर्व्वाङ्गीण पुरुषो दृश्यते तत्रात्मान पश्यतो भरतस्य अज्ञातमेवाङ्गुलीयक पतित क्रमेण शरीर पश्यता भरतेन अङ्गुलीयक विना अङ्गुलिर्विरूपा दृष्टा तत' क्रमेण मुकुटाद्येकैक भूषणमपनयता सर्व्वाण्यप्याभरणानि मुक्तानि तत आत्मानमुज्झितपद्मं पद्मसर इव विच्छाय सम्प्रेक्ष्य अहो आगन्तुकद्रव्यैर्विभूषित मे शरीरक सुशोभन न पुन. स्वभावसुन्दर कोऽत्र प्रतिवन्ध इति परमसवेगमापन्न.। एवम् चिन्तयितुमारव्ध अहो मे परलोकपराङ्मुखता अहो मे ससारा-भिनन्दिता इत्येवं चिन्तयतस्तस्य शुभपरिणामादि प्रादुर्भाव । उक्त च -

आयसघरप्पवेसो भरहेपडण च अगुलीयस्स । सेसाण ओमुअण सवेगे णाणदिक्खा यत्ति ॥१॥

अथैव चिन्तयतो भरतस्य कीदृशस्य किं जातमित्याह-'ईहापोहे'त्यादि । ईहा चापोहश्च मार्गणा च गवेषणा चेति समाहारः । तत्र ईहि चेष्टायामितीहा अवगृहीतार्थविशेषाकाङ्क्षण निश्चयहेतुरधिकैक-कोटचवगाहिविज्ञानविशेष इत्यर्थः । सा च प्रकृते कमनीयकनकादिमयमुद्रिकाद्यलङ्कारैरेव शरीरशोभा उत स्वत एव ? इत्याद्रिपर्यालोचना । एतच्च वस्तुगत्या ईहाविशेषस्याऽऽभोगनस्य स्वरूपम् । यदुक्तं नन्दि-वृत्तौ-'आभोगनमर्थावग्रहसमयसमनन्तरमेव सद्भूतार्थविशेषाभिमुखमालोचनमिति । 'अपोह'त्ति । अपोह-नमपोहो-निश्चयः ईहितविशेषनिर्णय इत्यर्थः । स च प्रकृते कनकाद्यलङ्कृतमेव शरीर शोभाभाग्नान्य-थेतिरूपेणावसातव्या । 'मग्गण'त्ति । मार्गणा-अन्वयधर्म्मान्वेषणा । यद्यच्छरीरादिशोभन तत्तत्स्वस्वोचित-क्रियानियोजिताऽपरवस्तुसम्पर्कादिवेतिरूपा । सा च प्रकृते मादृशस्यापि शरीरशोभा औचित्येन स्वस्व-स्थानविन्यस्तप्रशस्तकनकादिमयमुद्रिकादिवस्तुहेतुकवेतिस्वरूपा । 'गवेसण'त्ति । गवेषणा-व्यतिरेकधर्म्म-पर्यालोचना । यद्यद्यथौचित्येनापरवस्तुसम्वन्धि न स्यात्तन्न शोभनमिति । प्रकृते मुद्रिकाद्यलङ्कृत मादृश-स्यापि शरीर मुद्रिकादयोऽपि प्रशस्तवर्णाकारादिशून्या न शोभाभाज इत्यादिरूपा इत्येवमीहादिक

कुर्व्वतो भरतस्य 'तदावरणिज्जाण'त्ति । तदाऽऽवरणीयानाम्-इहाऽऽोहादिज्ञानावरणभूताना कर्म्मणां क्षये-णात्मप्रदेशेभ्य सर्व्वथा पृथक्करणेन 'कम्मरय'त्ति । कर्म्मरजासि-कार्मणशरीरतया परिणताः कर्म्मवर्गणा ज्ञानावरणीयादिकर्म्मपुद्गला इत्यर्थ । तेषा विकरण-विक्षेपणं जीव प्रदेशेभ्य' परिशाटनं तत्करोतीति कर्म्मरजोविकरणकरम्। एवंविधम् अपूर्व्वकरण समयप्रसिद्ध तत्र प्रविष्टस्य तदात्मकतामापन्नस्य 'अणते'त्ति। अनन्तमनन्तार्थविषयत्वात् अनुत्तर सर्व्वोत्तमत्वात् कृत्स्नम्-अनन्तपर्यायोपेतभूतभवद्भविष्यदशेषविशेषसा--मान्यात्मकवस्तूना सर्व्वतः सर्व्वथा प्रकाशकत्वेन कृत्स्नार्थग्राहकत्वात् प्रतिपूर्ण-सकलस्वांशसमन्वितत्वात् पूर्णिमाचन्द्रमण्डलवत् निर्व्याघात-कटकुड्यादिव्याघातरहितत्वात् निरावरण-क्षायिकभावोत्पन्नत्वेन सर्व्वथा ऽऽवरणापगमात् 'केवले'त्यादि । केवलमसहाय स्वविषयप्रकाशने नान्यत्सजातीयमपेक्षते इत्यर्थ । अत एव वरप्रधान न पुन श्रुतज्ञानवदुपकारकत्वेन ज्ञानं च दर्शन चेति समाहार' । पु स्त्व सर्व्वत्रापि प्राकृतत्वात् । 'समुप्पण्णे'त्ति । समुत्पन्न सर्व्वथा तदावरणापगमात् गगनमिवाभ्रापगमात् दिवाकरोदयवत् सर्व्वत' सर्व्वांशै प्रादुर्भूतमित्यर्थ । न पुनर्मत्यादिवदभ्यासवशात्प्रवर्द्धमान न वा असदेवोत्पन्न 'नासतो जायते भाव' इति वचनात् अनादिसत्ताकत्वात् । 'तते णमि'त्यादि '। ततः स भरतो-भरतनामा केवली। ननु भो भरत ! द्रव्यलिङ्ग प्रतिपद्यस्व । अह निष्क्रमणमहिमा वन्दन च करोमीत्यादि शक्रोक्ति-मुपलभ्य स्वयमेव आभरणालङ्कारमुन्मुञ्चति स्वयमेव पञ्चमौष्टिक लोच करोति कृत्वा च उपलक्षणात् शासनदेवतार्प्पितरजोहरणादिलिङ्ग पतद्ग्रहाद्युपकरण चादाय शक्रेण प्रदक्षिणीकृत्य वन्दित. सन्निति 'आदस'त्ति । आदर्शगृहादन्त पुरस्य मध्यमध्येन निर्गच्छति । अथान्त'पुरादेकाकी निर्गतोऽपि नगर-मध्याद्यथा निर्गच्छति तथा चाह-' दसहिमि'त्यादि । दशभी राजवरसहस्रै रर्थाद्भरतवदुन्मुक्ताभरणा-लङ्कारै कृत पञ्चमौष्टिकलोचै शासनदेवतार्प्पितलिङ्गोपकरणैश्चेति गम्य । तै सार्द्धं सम्परिवृतो विनीता-राजधानीमधिकृत्य मध्यमध्येन-विनीताया राजधान्या मध्यमध्येन निर्गच्छतीत्यर्थ । निर्गत्य 'मज्झदेसे' त्ति। मध्यदेशे अयोध्यासमीपवर्त्तिनि मिथिलानगर्यादौ सुखसुखेन विहरति । विहृत्य च यत्रैवाष्टापदः पर्व्व-तस्तत्रैवोपागच्छति । उपागत्य च 'सणिअ सणिअ'ति । शनै' शनैरारोहति । आरुह्य च 'मेघघणे'त्यादि । घनमेघसदृश सान्द्रजलदसमानकालकमित्यर्थ । प्राकृतत्वाद्व्यत्यय । 'देवसन्निवाय'ति । देवाना सन्निपात -समागमो रमणीयत्वाद्यत्र स तथा त 'पुढवी'ति । पृथिवीशिलारूप. पट्टक.-आसनविशेषः पृथिवीशिला--पट्टकस्त प्रतिलेखयति । केवलज्ञाने सत्यपि व्यवहारसरक्षणार्थं दृष्ट्वा निरीक्ष्य प्रमार्ष्टि प्रतिलिख्य च तत्रारोहतीतिशेष आरुह्य च 'सलेहण'त्ति । सलिख्यते-कृशीक्रियते शरीरकषायादिकमनयेति सलेखना-तपोविशेषस्तस्या झोषणा-सेवा तया जुष्ट -सेवितो झूषितो वा क्षिपितो यः स तथा । 'भत्तपाणे'त्ति । भक्त-पाने प्रत्याख्याते येन स तथा । 'पाओवगए'त्ति । पादपस्यैवोपगमनमस्पन्दतयावस्थान यस्य स तथा । 'काल'त्ति । काल-मरणमनवकाङ्क्षन्ननिच्छन् विहरत्यास्ते । अथ भरतस्य केवलिन आयुर्भोगे विभाग-भणनपूर्व्वक मुक्तिगमनमाह-' तते ण से'इत्यादि । ततः स भरत. केवली सप्तसप्ततिपूर्व्वशतसहस्राणि कुमारवासमध्ये 'वसित्त'त्ति । उषित्वा एकं वर्षसहस्र' माण्डलिकराजमध्ये उषित्वा षट् पूर्व्वशतसहस्राणि वर्षसहस्रोनकानि महाराजमध्ये चक्रवर्त्तितावस्थायामुषित्वा त्र्यशीतिं पूर्व्वशतसहस्राणि अगारवासमध्ये-

गृहस्थावस्थायामुषित्वा एकं पूर्वशतसहस्रं देशोनमन्तर्मुहूर्त्तोनं केवलिपर्यायं पालयित्वा-पूर्णमित्यर्थः। 'तमेव'त्ति। तदेवानन्तरोक्तमेव एकं पूर्वशतसहस्रं बहुप्रतिपूर्ण-सम्पूर्णं श्रामण्यपर्यायं पालयित्वा श्रामण्यं च प्रमत्तगुणस्थानवर्त्यध्यवसायादारभ्यैहावसानव्यम्। तेन छाद्मस्थ्य श्रामण्य भरतस्यान्तर्मुहूर्त्तमिति वेत्यर्थ। 'चउरासीति'त्ति। चतुरशीतिं पूर्वशतसहस्राणि सर्वायु पालयित्वा मासिकेन भक्तेन-मासोपवासेन अपानकेन-पानकाहारवर्जितेन चतुर्विधाहारप्रत्याख्यानरूपेणेत्यर्थ.। श्रवणेन नक्षत्रेण योगमुपागतेनार्थाच्चान्द्रेण सहेतिगम्य। चन्द्रचारसंयुक्तश्रवणनक्षत्रहेतुभूतेनेत्यर्थ.। 'खीणे'ति। क्षीणेऽति.सत्ताकीभूते वेदनीये-सातासातलक्षणे आयुषि नाम्नि गोत्रे चत्वारो गम्य.। 'कालगए'त्ति। कायस्थितिभवस्थितेः. कालाद्गत'। 'विइक्कते'त्ति। व्यतिक्रान्त' संसारात्। 'समुज्जाए'त्ति। सम्यगूर्ध्वं यात. न पुन. सुगतादिवत्पुनर्भवावतारी यतस्तद्वच -

'ज्ञानिनो धर्मतीर्थस्य कर्त्तारः परमं पदम्। गत्वाऽऽगच्छन्ति भूयोऽपि भवं तीर्थनिकारत ॥१॥

इति 'छिण्णे'त्यादि। छिन्न-जात्यादीना बन्धनं-बन्धनहेतुभूत कर्म येन स तथा सिद्ध-साधितार्थ बुद्ध-ज्ञ मुक्तो-भवोपग्राहिकर्मांशेभ्य परिनिर्वृत -कर्मकृतसकलसन्तापविरहात् अन्तकृत्-समस्तदु.खानाम्। अत एव 'सव्वदुक्ख'त्ति। सर्वाणि दु खानि-शारीरमानसानि प्रहीणानि-प्रकर्षेण पुनर्भवाभावेन हानि गतानि यस्य स तथा 'इति'त्ति। इतिशब्दोऽधिकारपरिसमाप्तौ अधिकारश्चैवं केन हेतुना भदन्त ! एव भरतक्षेत्र भरतक्षेत्रमिति भण्यते ? इति। गौतमप्रश्नानन्तर हे गौतम ! 'तत्थ अवसेणाकालावासंतरेण उप्पज्जए'त्ति। सूत्रेण असङ्ख्येयकालातिक्रमेण इह क्षेत्रे भरत नामा चक्रवर्ती नियमात्समुत्पद्यते तेन कारणेनेदं भरतमुच्यते इति यत्प्रागभिहितं तदधिकारप्राप्त श्रीऋषभपुत्रभरतचक्रवर्त्तिनश्चरित्र भगवानुपदिष्टवानिति।

अथ प्रकारान्तरेणपि भरतक्षेत्रस्य नाम्न. प्रवृत्तिनिमित्त भगवानाह

**भरहे अ इत्थ देवे महिड्ढीए महज्जुत्तीए जाव पलिओवमट्ठितीए परिवसति से तेणट्ठेणं गोअमा एवं वुच्चइ भरहे वासे भरहे वासे अदुत्तर च णं गो० ! भरहस्स वासस्स सासए णामधिज्जे पण्णत्ते। जण्ण कयाइ ण आसी ण कयाइ णत्थि ण कयाइ ण भविस्सति भुविं च भवति अभविस्सति अ धुवे णिअए सासए अक्खए अव्वए अवट्ठिए णिच्चे भरहे वासे ॥**

'भरहे अ इत्थे'त्यादि। भरतश्चात्र क्षेत्रे देवो महर्द्धिको महाद्युतिक 'जाव'त्ति। यावत्पल्योपमस्थितिक परिवसति यावत्करणात् 'महब्बले'इत्यादि। 'से तेणट्ठेणं'ति। निगमनवाक्यं सुगम। नवर से इत्ययार्थे वक्तव्य.। अथ भरतनाम्नो नित्यत्वमप्याह-'अदुत्तर च णं'ति। अथाऽपर च णमित्यलङ्कारे हे गौतम ! भरतस्य वर्षस्य भरतमिति नाम शाश्वत निर्निमित्तकमेवेदमनादिसिद्ध प्रज्ञप्तमाख्यात मयाऽन्यैश्च तीर्थकृद्भि.। अथ नित्यत्वे हेतुमाह 'जण्ण कय'त्ति। यद्यस्मात् न कदाचिन्नासीत् न कदाचिन्नास्ति न कदाचिन्न भविष्यति अभवत् भवति भविष्यति चेति। अर्थकार्थिकान्यपि विशेषणानि हेतुहेतुमद्भावेनाह-'धुवे'इत्यादि। यतो ध्रुव नियतमतः शाश्वत यत. शाश्वतमतोऽक्षयमव्ययमवस्थित नित्य भरत वर्षमिति नामेतिगम्य।

इति श्री जम्बूद्वीपप्रज्ञप्तिवृत्तौ भरतक्षेत्रवक्तव्यतानिबद्ध प्रथमाधिकार।

# द्वितीयोऽधिकारः

अथावधृतभरतस्वरूपो भगवान् गौतमो यतो भरतक्षेत्र दक्षिणस्यामुक्त तस्य भरतवर्षधरत्वेन-प्रतीतस्य क्षुल्लहिमवत स्वरूप जिज्ञासु पृच्छति

कहि णं भंते ! जंबुद्दीवे दीवे चुल्लहिमवंते णामं वासहरपव्वए पण्णत्ते ? गो० ! हिमवंतस्स वासस्स दाहिणेणं भरहस्स वासस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिम-लवणसमुद्दस्स पुरत्थिमेणं । एत्थ णं जंबुद्दीवे दीवे चुल्लहिमवंते णामं वासहरपव्वए पण्णत्ते । पाईणपडीणायते उदीणदाहिणविच्छिण्णे दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठे पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे । एगं जोअणसयं उड्ढं उच्चत्तेणं, पणवीसं जोअणाइं उव्वेहेणं, एक्कं जोअणसहस्सं बावण्णं च जोअ-णाइं दुवालस य एगूणवीसतिभागे जोअणस्स विक्खंभेणं । तस्स य बाहापुरत्थिमपच्चत्थिमेणं पंच पंच जोअणसहस्साइं तिण्णि अ पण्णासे जोअणसए पण्णरस य एगूणवीसति भागे जोअण-स्स अद्धभागं च आयामेणं । तस्स जीवा उत्तरेणं पाईणपडीणायता जाव पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठा चउवीसं जोअणसहस्साइं णव य बत्तीसे जोअणसए अद्धभागं च विसेसूणा आयामेणं पण्णत्ता । तीसे णं धणुपट्ठे दाहिणेणं पणवीसं जोअणसहस्साइं दोण्णि अ तीसे जोअणसए चत्तारि अ एगूणवीसतिभागे जोअणस्स परिक्खेवेणं रुअगसंठाण-संठिए सव्वकणगामए अच्छे सण्हे जाव पडिरूवे उभओ पासिं दोहिं पउमवरवेइआहिं दोहिअ वणसंडेहि संपरिक्खित्ते दोण्ह वि पमाणं वण्णगो अ । चुल्लहिमवंतस्स वासहरपव्व-यस्स उवरि बहुसमरमणिज्जे भूमिभागे पण्णत्ते । से जहा णाम ए आलिंगपुक्खरेति वा जाव बहवे वाणमंतरा देवा देवीओ अ आसयंति जाव विहरति ॥

'कहि ण भते !' इत्यादि । क्व भदन्त ! जम्बूद्वीपे द्वीपे क्षुल्लहिमवान् नाम्ना वर्षधर वर्ष-भरतादि-क्षेत्र धरति-मर्यादावर्ति करोतीति वर्षधर वर्षविभागकारीत्यर्थ. । क्षुल्लत्व च वक्ष्यमाणमहाहिमवदपेक्षया ऽवगन्तव्यः । स चासौ पर्वतः प्रज्ञप्त ? भगवानाह—गौतम ! 'हिमवतस्से'त्यादि । हैमवतस्य वर्षस्य दक्षिणेन भरतस्य वर्षस्योत्तरेण पौरस्त्यलवणसमुद्रस्य पश्चिमेन पश्चिमलवणसमुद्रस्य पूर्वेण । 'एत्थ ण'ति । अत्र प्रदेशे जम्बूद्वीपे द्वीपे नाम्ना क्षुल्लहिमवान् वर्षधर प्रज्ञप्त । 'पाईण'त्ति । प्राचीनप्रतीचीनयोरायतो-दीर्घ उदीचीनदक्षिणयोर्विस्तीर्ण -पृथु, द्विधा लवणसमुद्र स्पृष्ट । द्वैविध्यमाह—'पुरत्थिमिल्लाए'त्ति । पौरस्त्यया

कोट्या पौरस्त्यं लवणसमुद्रं स्पृष्ट पश्चिमया कोट्या पश्चिम लवणसमुद्र स्पृष्टः। अथोच्चत्वाद्याह–'एग जोअण'त्ति। एक योजनशतमूर्ध्वमुच्चैस्त्वेन, पञ्चविंशतियोजनान्युद्वेधेन, एकं योजनसहस्रं द्विपञ्चाशद्योजनानि द्वादश चैकोनविंशतिभागान् योजनस्य विष्कम्भेन। तत्करण तु

•

एगादुचउअडसोलस-दुतीसचउसट्ठिताडिओ दीवो। नउअसएण १९० भईओ भरहेरवयाइविक्खभो ॥१॥ इति करणगाथानुसारेण कर्त्तव्य। तच्चैव भरतक्षेत्रापेक्षया लघुहिमवान् द्वितीयस्तेन जम्बूद्वीपविष्कम्भे द्विगुणीकृते नवत्यधिकशतेन विभक्ते च यथोक्त पृथुत्वमुपलभ्यते। एव हैमवतादीन्यपि परिभावनीयानि। ५२ जम्बूद्वीपविष्कम्भश्चतुर्गुणाधिकोऽभिधातव्यः। अथास्य वक्रबाहामानमाह–'तस्स बाहा'इत्यादि। तस्य-क्षुल्लहिमवतो बाहा 'पुरत्थिम'त्ति। पूर्व्वपश्चिमेन एका पूर्व्वस्यामपरा च पश्चिमायामित्यर्थः। ते च प्रत्येक 'पच पच जोअण'त्ति। पञ्च पञ्च योजनसहस्राणि पञ्चाशदधिकानि च त्रीणियोजनसतानि पञ्चदश चैकोनविंशतिभागान् योजनस्य अर्धभाग च ५३५० क० १५½ आयामेन-दक्षिणोत्तरयोर्दैर्घ्येणेति। तदानयनप्रकारस्त्वेव -गुरुधणुपट्ठ लहुधणुपट्ठूण अद्धिअ बाहा'इति वचनात् महतो धनु पृष्ठात् क्षुल्लहिमवत सम्बन्धिनः 'जोअणसहस्स पणवीस दुसय तीसा कला चउक्क २५,२३० क० ४ चे'तिलक्षणात्। लघुधनु पृष्ठमुत्तरभरतार्द्धसम्बन्धि 'चउदससहस्स अडवीस पचसय इगारसकला य'१४५२८ क० ११ त्ति लक्षण शोध्यते शोधिते च सति जात शेषमिद दश सहस्राणि सप्त शतानि एकोत्तराणि योजनाना कलाश्च द्वादश १०७०१ कला १२ एतेषामर्द्धं लब्धानि त्रिपञ्चाशच्छतानि पञ्चाशदधिकानि योजनाना कलाश्च सार्द्धं पञ्चदश ५३५० क० १५½। अथ तस्य जीवामाह–'तस्स जीवा' इत्यादि। तस्य-क्षुल्लहिमवतो जीवा उत्तरेण–उत्तरत. प्राचीनप्रतीचीनायता यावत्पश्चिमया कोटचा पश्चिम लवणसमुद्र स्पृष्टा यावत् करणात् पौरस्त्यया कोट्या पूर्व्वलवणसमुद्र स्पृष्टेत्यथ। सा चायामेन-दैर्घ्येण चतुर्विंशति योजनसहस्राणि नव च द्वात्रिंशानि-द्वात्रिंशदधिकानि योजनशतानि अर्द्धभाग च योजनैकोनविंशतितमभागस्यार्द्धमित्यर्थः किञ्चिद्विशेषोना आयामत. प्रज्ञप्ता। अथ क्षुल्लहिमवतो धनु पृष्ठ क किंप्रमाणम्? इत्याह–'तीसे ण धणु'इत्यादि। तस्य क्षुल्लहिमवतो धनु पृष्ठ दक्षिणेन-दक्षिणदिग्वर्त्ति पञ्चविंशतियोजनसहस्राणि द्वे च त्रिशे-त्रिंशदधिके योजनशते कलाश्चतस्रो योजनस्य २५२३० क०४ परिक्षेपेण-परिचितः इत्येतावत्प्रमाण क्षुल्लहिमवतो धनु पृष्ठ। तत्करण तु–'उसुवग्गे छग्गुणिए जिअवग्गजुए अ करणिधणुपट्ठ'ति गाथा शकलोत्तमवसातव्य। तद्यथा–क्षुल्लहिमवत इषुपरिमाण कलाना त्रिंशत्सहस्राणि अस्य वर्गो विधीयते जातं नवकोऽष्टौ शून्यानि ९००००००००। एष राशिर्भूयः। षड्भिर्गुण्यते जात पचकश्चतुष्कोऽष्टौ च शून्यानि ५४००००००००। एष राशि 'पचेग दु चउ सुण्णट्ठग चे'ति—वचनात् ५१२४००००००००। इत्येवाङ्करूपे हैमवतक्षेत्रजीवावर्गं प्रक्षिप्यते जात पञ्चकश्चतुष्क एककोष्टकोऽष्टौ शून्यानि ५४१८००००००००० चेति। अस्य वर्गमूलानयने लब्ध सप्तकस्त्रिकः षट्क. शून्य सप्तक शून्य ७३६०७० चेति शेषमुद्धरित नवकः पञ्चकद्वयमेकक. शून्यद्वयं ९५५१०० छेदराशिरेककश्चतुष्क. सप्तको द्विक एककश्चतुष्क शून्य १४७२१४० चेति। वर्गमूललब्धः कलाराशिर्योजनकरणाय एकोनविंशत्या

भज्यते । लम्बानि योजनानां पञ्चविंशतिसहस्राणीत्यादि प्रागुक्तमवसातव्य । संस्थानेन हिमवान् वर्षधरो रुचकसंस्थानसंस्थितः । तत्र रुचको नाम वक्षोभूषणविशेष 'सव्वकणग'त्ति । सर्व्वात्मना कनकमया 'अच्छे सण्हे' इत्यादि । विहरन्तीति पर्यन्त जगतीवद्बोध्यम् ।

तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे एत्थ णं एक्के महं पउमद्दहे णामं दहे प०। पाईणपडिणायते उदीणदाहिणविच्छिण्णे एगं जोअणसहस्सं आयामेणं पंच जोअणसयाइं विक्खंभेणं दस जोअणाइं उव्वेहेणं अच्छे सण्हे रययामए कूले जाव पासाईए जाव पडिरूवे। से ण एगाए पउमवरवेइआए एगेण य वणसंडेण सव्वओ समंता संपरिक्खित्ते वेइआवणसंडवण्णओ भाणिअव्वो। तस्स णं पउमद्दहस्स चउद्दिसिं चत्तारि तिसोपानपडिरूवगा पण्णत्ता। वण्णावासो भाणिअव्वो। तेसि णं तिसोवाणपडिरुवगाणं पुरतो पत्तेअं पत्तेअं तोरणा प०। ते ण तोरणा णाणामणिमया। तस्स णं पउमद्दहस्स बहुमज्झदेसभागे इत्थ णं महं एगे पउमे प०। जोअणं आयामविक्खंभेण अद्धजोअण बाहल्लेण दस जोअणाइं उव्वेहेणं दो कोसे ऊसिए जलंताओ साइरेगाइं दस जोअणाइं सव्वग्गेण पण्णत्ते। से णं एगाए जगतीए सव्वओ समता संपरिक्खित्ते। जंबूद्दीवे जगतिप्पमाणा गवक्खकडएवि तह चेव पमाणेण। तस्स णं पउमस्स अयमे आरूवे वण्णावासे पण्णत्ते तं जहा-वयरामया मूला रिट्ठामए कंदे वेरुलिआमए णाले वेरुलिआमया वाहिरपत्ता जंबूणयामया अब्भिंतरपत्ता तवणिज्जमया केसरा णाणामणिमया पोक्खरत्थिरुया कणगामई कण्णिगा अद्धं जोअणं आयामविक्खंभेण कोसं बाहल्लेणं सव्वकणगामई अच्छा। तीसे णं कण्णिआए उप्पिं वहुसमरमणिज्जे भूमिभागे पण्णत्ते। से जहा णाम ए आलिंग०। तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे एत्थ णं महं एगे भवणे पण्णत्ते। कोसं आयामेणं अद्धकोसं विक्खंभेण देसूणगं कोसं उड्ढं उच्चत्तेणं अणेगखंभसयसण्णिविठे पासादिए दरिसणिज्जे। तस्स णं भवणस्स तिदिसिं तओ दारा पण्णत्ता। ते णं दारा पंच धणुसयाइं उड्ढं उच्चत्तेणं अड्ढाइज्जाइं धणुसयाइं विक्खंभेणं तावइअं चेव पवेसेणं सेआवरकणगथूभिआगा जाव वण मालाओ णेअव्वाओ। तस्स णं भवणस्स अंतो बहुसमरमणिज्जे भूमिभागे पण्णत्ते। से जहा णाम ए आलिंग०। तस्स ण बहुमज्झदेसभागे एत्थ णं महं एगा मणिपेढिआ पण्णत्ता। सा णं मणिपेढिआ पंच धणुसयाइं आयामविक्खंभेणं अड्ढाइज्जाइं धणुसयाइं बाहल्लेणं सव्वमणिमई अच्छा। तीसे णं मणिपेढिआए उप्पिं एत्थ णं महं एगे सयणिज्जे पण्णत्ते। सयणिज्ज वण्णओ भाणिअव्वो। से णं पउमे अण्णेण अट्ठ सएणं पउमाणं तदद्धुच्चप्पमाणमित्तेणं

सव्वओ समंता संपरिक्खित्ते। ते णं पउमा अद्धजोअणाइं आयामविक्खंभेणं कोसं बाहल्लेणं दस जोअणाइं उव्वेहेणं कोसं ऊसिआ जलंताओ साइरेगाइं दस जोअणाइं उच्चत्तेणं। तेसि णं पउमाणं अयमेआरूवे वण्णावासे पण्णत्ते। तं जहा—वयरामया मूला जाव कणगमई कण्णिआ-सा णं कण्णिआ कोसं आयामेणं अद्धकोसं बाहल्लेणं सव्वकणगमई अच्छा। तीसे णं उप्पिं बहु-समरमणिज्जे जाव मणीहिं उवसोभिए। तस्स णं पउमस्स अवरुत्तरेणं उत्तरेणं उत्तरपुरत्थिमेणं सिरीए देवीए चउण्हं सामाणिअसाहस्सीणं चत्तारि अ पउमसाहस्सीओ पण्णत्ताओ। तस्स णं पउमस्स पुरत्थिमेणं इत्थणं सिरीए देवीए चउण्हं महत्तरिआणं चत्तारि पउमा पण्णत्ता। तस्स णं पउमस्स दाहिणपुरत्थिमेणं सिरीए देवीए अब्भिंतरिआए परिसाए अट्ठण्हं देवसाहस्सीणं अट्ठ पउमसाहस्सीओ। दाहिणेणं मज्झिमपरिसाए दसण्हं देवसाहस्सीणं दस पउमसाहस्सीओ दाहिणपच्चत्थिमेणं बाहिरिआए परिसाए बारसण्हं देवसाहस्सीणं बारसपउमसाहस्सीओ पण्णत्ताओ। पच्चत्थिमेणं सत्तण्हं अणिआहिवईणं सत्त पउमा पण्णत्ता।

तस्स णं पउमस्स चउद्दिसिं सव्वओ समंता इत्थ णं सिरीए देवीए सोलसण्हं आयरक्खदेवसाहस्सीणं सोलस पउमसाहस्सीओ पण्णत्ताओ। से णं पउमे तिहिं पउमपरिक्खे-वेहिं सव्वओ समंता संपरिक्खित्ते। तं जहा-अब्भिंतरएणं मज्झिमएणं बाहिरिएणं अब्भिंतरपउम-परिक्खेवे बत्तीसं पउमसयसाहस्सीओ पण्णत्ताओ। मज्झिमाए पउमपरिक्खेवे चत्तालीसं पउम-सयसाहस्सीओ पण्णत्ताओ। बाहिरिआए पउमपरिक्खेवे अडयालीसं पउमसयसाहस्सीओ पण्णत्ताओ। एवामेव पुव्वावरेणं तिहिं पउमपरिक्खेवेहिं एगा पउमकोडी वीसं च पउमसय साहस्सीओ भवंतीति अक्खायाओ। से केणट्ठेणं भंते! एवं वुच्चति पउमद्दहे पउमद्दहे? गो०। पउमद्दहे णं तत्थ तत्थ देसे तहिं तहिं बहवे उप्पलाइं जाव सयसहस्सपत्ताइं पउमद्दहप्पभाइं पउमद्दहवण्णाभाइं सिरी अ इत्थ देवी महिड्ढीआ जाव पलिओवमट्ठितिआ परिवसति। से एएण-ट्ठेणं। अदुत्तरं च णं गोअमा! पउमद्दहस्स सासए णामधिज्जे पण्णत्ते। ण कया इणासी३।

'तस्स णमि'त्यादि। तस्य क्षुल्लहिमवतो बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे 'एत्थ-ण'ति। अत्रान्तरे एक पद्मह्रदनाम्ना ह्रद प्रज्ञप्त। प्राचीनप्रतीचीनायत उदीचीनदक्षिणविस्तीर्ण 'एग जोअणे'त्यादि। एक योजनसहस्रमायामेन-दैर्घ्येण पञ्च योजनशतानि विष्कम्भेन पृथुतया दश योजना-न्युद्वेधेनाधोऽवगाहेन 'अच्छे सण्हे'इत्यादि। रजतमयकूल शेष प्राग्वत्। 'से ण एगाए'त्ति। स-पद्मह्रदः

एकया पद्मवरवेदिकया एकेन च वनखण्डेन सर्व्वत' समन्तात् सम्परिक्षिप्त'। 'वेइअ'त्ति। वेदिकावनखण्ड-वर्णको भणितव्य –जगतीवदिहापि वक्तव्य इत्यर्थ । 'तस्स णमि'त्यादि। तस्य पद्मह्रदस्य चतुर्दिशि-चतस्रो दिश. समाहृता अत्रेति चतुर्दिग् तस्मिन् चत्वारि त्रिसोपानप्रतिरूपकाणि प्रज्ञप्तानि। तेषा वर्णकव्या-सोवर्णकविस्तरो वर्णकनिवेशो वा भणितव्य प्राग्वदिति । 'तेसि णमि'त्यादि। तेषा त्रिसोपानप्रतिरूपकाणा पुरत प्रत्येक प्रत्येक तोरणानि प्रज्ञप्तानि । तानि तोरणानि नानामणिमयानि । 'तस्स णमि'त्यादि । तस्य पद्मह्रदस्य बहुमध्यदेसभागे अत्रान्तरे महदेक पद्म प्रज्ञप्त योजनमायामविष्कम्भेन अर्द्धयोजन बाहल्येन दश योजनान्युद्वेधेन द्वे क्रोशे उत्सृत जलान्तात् जलोपरीत्यर्थ । सातिरेकानि दश योजनानि सर्व्वाग्रेण सर्व्वात्मना प्रज्ञप्त । 'से णमि'त्यादि। तत् पद्ममेकया जगत्या सर्व्वत समन्तात् सम्परिक्षिप्तम्। अथेय जगती किं-प्रमाणेत्यतिदेशमाह–'जबूद्दीव'त्ति। जम्बूद्वीपजगतीप्रमाणा। अय भाव –यथा मूले द्वादश योजनानि मध्ये-ऽष्टौ उपरि चत्वारि विस्तीर्णा जम्बूद्वीपजगती तथेयमपि। गवाक्षकटकमपि-गवाक्षसमूहोपि तथैव जम्बूद्वीप-जगतीगतगवाक्षकटकसदृशमेव । केनेत्याह-'पमाणेण'ति । प्रमाणेन-उच्चत्वादिप्रमाणेनेत्यर्थ । तच्चैव–द्वि क्रोशोच्च पञ्च धनुःशतविस्तृत यथा जगती गवाक्षकटक तथाऽस्या अपि जगत्या इत्यर्थ। 'तस्स णमि'त्यादि। तस्य पद्मस्यायमेतद्रूपो वर्ण्णव्यास प्रज्ञप्त । तद्यथा-'वयरामय त्ति । वज्रमयानि मूलानि कन्दाद-धस्तिर्यक्निर्ग्गतो जटाकलाप. 'रिट्ठामए'त्ति। अरिष्टरत्नमयः कन्द । स च मूलनिर्ग्गमहेतुर्गोलका-काराक्यवविशेष.। 'वेरुलिअ'त्ति। वैडूर्यमय नाल तच्च कन्दोपरिवर्त्ती कमलभाग. वैडूर्यमयानि बाह्य-पत्राणि जाम्बूनदमीषद्रक्त काञ्चन तन्मयान्यभ्यन्तरपत्राणि तपनीय रक्तसुवर्ण तन्मयानि केसराणि रक्तवर्ण्णानीत्यर्थ । नानामणिमयी 'पोक्खरत्थिरुअ'त्ति। पुक्खरत्थिरुका बाह्यतो बिंटोपरिवर्त्तिनी पुष्क-राधारभूता कर्णिका सम्भाव्यते। 'कणग'त्ति। कनकमयि कर्णिका। 'अद्ध'ति। अर्द्ध योजनमायामविष्क-म्भाभ्यां 'कोस'ति। क्रोशमेक बाहल्येन 'सव्व'त्ति। सर्व्वात्मना कनकमया 'अच्छे'त्यादि। प्राग्वत्। 'तीसे णमि'त्यादि। तस्या' कर्णिकायाः 'उप्पि'ति उपरि बहुसमरमणीयो भूमिभाग प्रज्ञप्त' । 'से जहा णाम ए'इत्यादि। दृष्टान्तपुरस्सरभूमिभागवर्णकसूत्र सव्याख्यान जगतीवद्बोध्यम्। 'तस्स णमि'त्यादि। तस्य प्रागुक्तस्य भूमिभागस्य बहुमध्यदेशभागे 'एत्थ ण'ति । अत्रान्तरे महदेक भवन प्रज्ञप्त। तच्च कीदृशमित्याह–'कोस आयामेण' क्रोशमेकमायामेन-दैर्घ्येण अर्द्धक्रोश विष्कम्भेन देशोनक्रोशमूर्ध्वमुच्च-त्वेन अनेकस्तम्भशतसन्निविष्ट प्रासादीय मन प्रसत्तिहेतु' दर्शनीय–द्रष्टु योग्य 'तस्स'त्ति। तस्य भवनस्य तिसृषु दिक्षु पूर्वोत्तरदक्षिणलक्षणासु एकैकद्वारसद्भावेन त्रीणि द्वाराणि प्रज्ञप्तानि । तानि च द्वाराणि पञ्च धनु शतान्यूर्ध्वमुच्चैस्त्वेन 'अड्डाइज्जाइ'ति। अर्द्ध तृतीय येषु तान्यर्द्धतृतीयानि सार्द्धद्विकानि धनु–शतानि विष्कम्भेन पृथुतया 'तावइअ'ति। तावदेव अर्द्धतृतीयधनु शतान्येव प्रवेशेन–प्रवेशत 'सेआवरणे' त्यादि प्राग्वत् । 'तस्स णमि'त्यादि । तस्य भवनस्यान्तर्मध्ये बहुसमरमणीयो भूमिभाग. प्रज्ञप्त । से जहा णाम ए आलिंगपु०। 'तस्स णमि'त्यादि। 'सव्वमणिमई अच्छे'ति पर्यन्त सुगम। 'तीसे णमि'त्यादि। तस्याः मणिपीठिकाया 'उप्पि'ति। उपरि महदेक शयनीय प्रज्ञप्त श्रीदेवीयोग्यमितिगम्य। शयनीयवर्णको वक्तव्य.। स च विजयदेवताधिकारे भणित इति। अथोक्तस्वरूप कमल न केवल किन्तु कमलसमूहात्म-

केन वलयषट्केन परिकरितमित्याह 'से ण पउमे' इत्यादि । तदनन्तरोक्तस्वरूप पद्म 'अण्णेण'ति । अन्येन-आत्मव्यतिरिक्तेनाष्टशतेन पद्माना कि लक्षणेन ? 'तदद्धुच्च'त्ति । तस्य मूलपद्मप्रमाणस्यार्द्ध तदर्द्धम् एवविध यदुच्चत्वप्रमाण तन्मात्रा यस्यैवविधेन सर्व्वतो दिक्षु विदिक्षु च समन्तात्सामस्त्येन नैकामपि दिशविदिश च परित्यज्येत्यर्थ । सम्परिक्षिप्तसम्यक् परिवेष्ठितम् । अथ तेषा पद्मानामायामाद्याह–' ते ण पउमा' इत्यादि । तानि पद्मानि अर्द्धयोजनानि आयामविष्कम्भाभ्या वहुत्व च कमलाना वहुत्वात् क्रोशमेक वाहल्येन दश योजनान्युद्वेधेनावगाहेन क्रोशमुत्सृतानि जलान्तात्–जलादुपरिक्रोशमुच्चानीत्यर्थ. । साइरेगाइ'ति । सातिरेकाणि क्रोशाधिकानि दश योजनानि उच्चैस्त्वेन सर्व्वात्मनेतिगम्यम् । अथ तानि पद्मानि कीदृशानीत्याह–'तेसि पउमाणमि'त्यादि । तेषा पद्मानामयमेतद्रूपो वर्णव्यास. प्रज्ञप्त । 'त जहे'त्यादि प्राग्वत् । 'तीसे णमि'त्यादि । मणिभिरुपशोभित: शेष प्राग्वत् । एतानि च प्रथमवलयकमलानि श्रीदेवीयोग्याभरणस्थानानि । अथ द्वितीय–वलयकमलरचनामाह–'तस्स ण पउमस्से'त्यादि । तस्य–मूलपद्मस्य 'अवरुत्तरे ण'ति । अपरोत्तरस्या–पश्चिमोत्तरदिशोरन्तरालरूपाया वायव्यामित्यर्थ । 'उत्तरेण'ति । उत्तरस्या दिशि 'उत्तरपुरच्छिमेण' उत्तरपूर्व्वस्या उत्तरपूर्व्वयोरन्तराललक्षणायामीशान्यामित्यर्थ । अत्र श्रीदेव्याश्चतुर्णा सामानिकदेवसहस्राणा चत्वारि पद्मसहस्राणि प्रज्ञप्तानि । क्लीवत्व च प्राकृतत्वात् । तस्स णमि'त्यादि । तस्य–मूलपद्मस्य 'पुरत्थिमेण'ति । पूर्व्वस्या 'एत्थ ण' अत्र चतसृणा महत्तरिकाणा पूज्यस्थानीयदेवीना चत्वारि पद्मानि प्रज्ञप्तानि । 'तस्स ण पउमस्से'त्यादि । तस्य-मूलपद्मस्य दक्षिणपूर्व्वस्यामाग्नेय्या 'एत्थ ण'ति । अत्र श्रीदेव्या अभ्यन्तरपर्षदोऽष्टाना देवसहस्राणा अष्टौ पद्मसहस्राणि । 'दाहिणेण'ति । दक्षिणस्या मध्यमपर्षदो दशाना देवासहस्राणा दश पद्मसहस्राणि । 'दाहिण-पच्चत्थिमेण'ति । दक्षिणपश्चिमाया नैऋत्या बाह्यपर्षदो द्वादशानाँ देवसहस्राणा द्वादशपद्मसहस्राणि प्रज्ञप्तानि। 'पच्चत्थिमेण'ति । पश्चिमाया दिशि सप्तानासप्तसङ्ख्याकाना 'अणिआहिवईण'ति । अनीकानि हस्त्यश्वरथपदातिमहिषगन्धर्व्वनाटचरूपाणि सप्त कटकानि तेषा पतय स्वामिनोऽनीकाधिपतयस्तेषा सप्त पद्मानि । पर शेषपद्मापेक्षया विकसितसहस्रपत्राणीति विशेषणमनुक्तमपि श्रीमलयगिरियोक्तमवसातव्यम् । एव महत्तरिकाणामपि चत्वारि कमलानि वक्तव्यानि । यत्तु 'सत्त पउमसाहस्सीओ पण्णत्ताओ'त्ति । पाठो बहुष्वादर्शेषु दृश्यते सोऽशुद्धोऽवसातव्यो जीर्णादर्शेषु व्याख्यातपाठस्यैवोपलम्भात् ग्रन्थान्तरसम्मतत्वाच्च । अथ तृतीयवलयमाह–'तस्स ण पउमस्से'त्यादि । तस्य-मूलपद्मस्य चतसृषु दिक्षु सर्व्वत समन्तात् 'एत्थ ण'ति । अत्रान्तरे श्रियो देव्या. सम्बन्धिना षोडशानामात्मरक्षकदेवाना षोडश सहस्राणि पद्मानि प्रज्ञप्तानीति । अथ समुदायेन वलयत्रिकमाह–'से ण पउमे'इत्यादि । तन्मूलभूत पद्म त्रिभि पद्मपरिक्षेपै: सर्वत. समन्तात्सम्परिक्षिप्तम् । अथ तद्व्यक्तिमाह–'त जहे'त्यादि । अभ्यन्तरकेणाभ्यन्तरपरिक्षेपेणैक वलय चतुर्थ वलयमित्यर्थ । अभ्यन्तरत्व चाभ्यन्तराभियोगदेवनिवाससम्बन्धेनावसातव्यम् । एव मध्यमपरिक्षेपेण द्वितीय पचममिति । बाह्यपरिक्षेपेण तृतीय वलय षष्ठमित्यर्थ. । अथ त्रिष्वपि वलयेषु कमलसङ्ख्यामाह–'अब्भितरे'त्यादि । अभ्यन्तरपद्मपरिक्षेपे द्वात्रिंशत् पद्मशतसहस्राणि द्वात्रिंशल्लक्षाणीत्यर्थ. । एव चत्वारिंशत् सहस्राणि मध्यमपद्मपरिक्षेपे बाह्यपरिक्षेपे च अष्टचत्वारिंशत् शतसहस्राणि पद्मानि

प्रज्ञप्तानि । अथ त्रयाणामपि वलयानां समुदायेन कमलसङ्ख्यामाह-'एवामेवे'त्यादि । एवमेवपूर्व्वापरेण-पूर्व्वापरमीलनेन आभियोगिकदेवानां त्रिभिः पद्मपरिक्षेपैः पद्मानामेका पद्मकोटिर्विंशतिश्च लक्षा भवन्तीत्याख्याता. षण्णामपि वलयानां पद्मसङ्ख्या तावदेका कोटिर्विंशतिर्लक्षाः पञ्चाशत् सहस्राणि शत च विंशत्यधिकमिति द्रष्टव्या । तानि च कमलानि न वनस्पतिपरिणामरूपाणि किन्तु पृथिवीपरिणामरूपाण्यनादिसिद्धानि । अथ पद्मह्रद इति नाम्नः प्रसिद्धि जिज्ञासु पृच्छति-'से केणट्ठेणं'ति । 'से'इत्यथार्थे अथ केनार्थेन भदन्त ! पद्मह्रदः पद्मह्रद उच्यते ? भगवानाह-' गोतम !-पद्मह्रदे णमित्यलङ्कारे तत्र तत्र देशे तस्मिन् तस्मिन् प्रदेशे बहून्युत्पलानि यावत् शतसहस्रपत्राणि यावत् करणात् पद्मानि शतपत्राणि सौगन्धिकानीत्यादि सङ्ग्रह । किं लक्षणानि ? पद्मह्रदप्रभाणि-पद्मह्रदसदृशानि पद्मह्रदवर्णभानि-पद्मह्रदसदृशवर्णानि । 'सिरीअ इत्थ देवी'ति । अत्र श्री देवीमहर्द्धिका यावत् पल्योपमस्थितिका परिवसति । 'से तेणट्ठेण'ति तदेतेनार्थेन पद्मह्रदो भण्यते । अथ प्रकारान्तरेण नामप्रसिद्धिमाह-'अदुत्तर च णमि' त्यादि । अथापर च गौतम ! पद्मह्रदस्य शाश्वत नामधेय प्रज्ञप्तं न कदाचिन्नासीदित्यादि प्राग्वद्व्याख्येयम् ।

अथ पद्मह्रदाद्गङ्गानिर्गमस्वरूपमाह—

तस्स णं पउमद्दहस्स पुरत्थिमिल्लेणं तोरणेणं गंगा महाणदी पवूढा समाणी पुरत्थाभिमुही पंच जोअणसयाइं पव्वतेणं गंता गंगावत्तणकूडे आवत्ता समाणी पंच तेवीसे जोअणसए तिण्णि अ एगूणवीसतीभागे जोअणस्स दाहिणाभिमुही पव्वएणं गंता महाघडमुहपवत्तिएणं मुत्तावलिहारसंठिएणं सातिरेग जोअणसतिकेणं पवाएणं पवडति । गंगा महाणती जतो पवडति । एत्थ णं महं एगा जिब्भिआ पण्णत्ता । सा णं जिब्भिआ अद्धजोअणं आयामेणं छस्सकोसाइं जोअणाइं विक्खंभेणं अद्धकोसं बाहल्लेणं मगरमुहविउट्टसंठाणसंठिआ सव्ववइरामई । गंगाणाम महाणदी जत्थ पवडति तत्थ णं महं एगे गंगप्पवायकुंडे पण्णत्ते । सट्ठिं जोअणाइं आयामविक्खंभेणं णाउअं जोअणसयं किंचिविसेसाहिअं परिक्खेवेणं । दस जोअणाइं उव्वेहेणं अच्छे सण्हे रययामयकूले वयरामयपासाणे सुहोत्तारे सुउत्तारे णाणामणितित्थबद्धे वयरतले सुवण्णसुज्झरययमणिवालुआए वेरुलिअमणिफालिअपडलपच्चोअडे व पट्ठे समतीरे अणुपुव्वसुजायवप्पगंभीरसीअलजले संछण्णपत्तभिसमुणाले बहु उप्पलकुमुअणलिणसुभगसोगंधिअपोंडरीकमहापोंडरिकसयवत्तसहस्सवत्तपफुल्लकेसरोवचिते अच्छविमलपत्थसलिलपुण्णे पडिहत्थभमंतमच्छकच्छभअणेगसउणगणमिहुणपविचरिते सद्दुण्णइतमहुर सरणातिते पासाइए ॥ से णं एगाए पउमवरवेइआए एगेण वणसंडेण य सव्वओ समंता संपरिक्खित्ते वेइआवण संडपमाणं वण्णगो अ भाणिअव्वो । तस्स णं गंगापवायकुंडस्स तिदिसिं तओ तिसोवाणपडिरूवगा

पण्णत्ता । तं०-पुरत्थिमेणं दाहिणेणं पच्चत्थिमेणं । तेसि णं तिसोवाणपडिरूवगाणं अयमेआरूवे वण्णावासे पण्णत्ते । तं जहा-वयरामया णेमा रिट्ठामया पइट्ठाणा वेरुलिअमया खंभा सुवण्ण-रुप्पमया फलया लोहिअक्खमईओ सूईओ वयरामया संधीणाणा मणिमया आलंबणा-बाहाओ । तेसि णं तिसोवाणपडिरूवगाणं पुरओ पत्तेअं पत्तेअं तोरणा पण्णत्ता । ते णं तोरण-णाणामणिमया णाणामणिमएसु खंभेसु उवणिविट्ठसंणिविट्ठा विविहतारा रूवोवइआ विविहमुत्तंतरोवचिता ईहामिगउसभतुरगणरमगरविहगवालगकिंनररुरुसरभचरकुंजरवण-लयपउमलयभत्तिचित्ता खंभुग्गयवइरवेइआपरिगयाभिरामा विज्जाहरजमलजंतजुत्ताविव अच्चि-सहस्समालिणी आ रूवगसहस्सकलिआ भिसमाणा भिब्भिसमाणा चक्खुल्लोअणलेसा सुहफासा सस्सिरीअरूवा पासादीआ । तेसिं तोरणाणं उवरिं बहवे अट्ठमंगलगा पण्णत्ता । तं जहा-सोत्थिअ सिरीवच्छ जाव पडिरूवा । तेसिं तोरणाणं उवरिं किण्हचामरज्झया जाव सुक्किल चामरज्झया अच्छा सण्हा रुप्पपट्टा वयरामयदंडा जलजामलगंधिआ सुरूवा बहवे उप्पल-हत्थया जाव सयसहस्सपत्तहत्थया सव्वरयणामया पासादीया । तस्स णं गंगापवायकुंडस्स बहुमज्झदेसभागे एत्थणं महं एगे गंगादीवे णामं दीवे पण्णत्ते । अट्ठ जोअणाइं आयामवि-क्खंभेणं साइरेगाइं पणवीसं जोअणाइं परिक्खेवेणं दो कोसे ऊसिअं जलंताओ सव्ववयरामए अच्छे । से णं एगाए पउमवरवेइआए एगेण य वणसंडेणं सव्वओ समंता संपरिक्खित्ते वण्णओ भाणिअव्वो । गंगादीवस्स णं उप्पिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते । तस्स णं बहुमज्झ देस भागे एत्थ णं महं गंगाए देवीए एगे भवणे पण्णत्ते । कोसं आयामेणं अद्धकोसं विक्खंभेण देसूणं कोसं उड्ढं उच्चत्तेणं अणेगखंभसयसण्णिविट्ठं जाव बहुमज्झदेसभागे मणिपेढिआसयणिज्जे । से केणट्ठेणं जाव सासएणामधिज्जे पण्णत्ते । तस्स णं गंगापवायकुंडस्स दक्खिणिल्लेणं तोरणेणं गंगा महाणदी पवूढा समाणी उत्तरड्ढभरहवासं पज्जेमाणी पज्जेमाणी सत्तहिं सलिलासहस्सेहिं आपूरेमाणी आपूरेमाणी अहे खंडप्पवायगुहाए वेअड्ढपव्वयं दालइत्ता दाहिणड्ढभरहं वासं पज्जेमाणी पज्जेमाणी दाहिणड्ढभरहवासस्स बहुमज्झदेसभागे गंता पुरत्थाभिमुही आवत्ता समाणी चउदसहिं सलिलासहस्सेहिं समग्गा अहे जगइं दालइत्ता पुरत्थिमेणं लवणसमुद्दं समप्पेति । गंगा णं महाणई पवहे छस्सकोसाइं जोअणाइं विक्खंभेणं अद्धकोसं उव्वेहेण तयणंतरं च णं मायाए मायाए पवड्ढमाणी पवड्ढमाणी मुहे बावट्ठिं जोअणाइं अद्धजोअणं च विक्खंभेणं

सक्कोसं जोअणं उव्वेहेणं उभओ पासिं दोहि अ पउमवरवेइआहिं दोहि अ वणसंडेहि अ संपरिक्खित्ता वेइआवणसंड वण्णओ भाणिअव्वो । एवं सिंधूएवि णेअव्वं जाव तस्स णं पउमद्दहस्स पच्चत्थिमिल्लेणं तोरणेणं सिंधुआवत्तणकूडे दाहिणाभिमुही सिंधुप्पवायकुंडं सिंधुद्दीवो अट्ठो सो चेव जाव अहे तिमिसगुहाए वेयड्ढपव्वयं दालइत्ता पच्चत्थिमाभिमुही आवत्ता समाणी चउद्दससलिला अहे जगइं पच्चत्थिमिल्लेणं लवणं जाव समप्पेति । सेसं तं चेव । तस्स णं पउमद्दहस्स उत्तरिल्लेणं तोरणेणं रोहिअंसा महाणदी पवूढा समाणी दोण्णि छावत्तरे जोअणसए छच्च एगूणवीसतिभागे जोअणस्स उत्तराभिमुहं पव्वएणं गंता महया घडमुहपवित्तएणं मुत्तावलिहारसंठिएणं साइरेगजोअणसइएणं पवाएणं पवडति । रोहिअंसा णाम महाणदी जाओ । पवडति इत्थ णं महं एगा जिब्भिआ पण्णत्ता । सा णं जिब्भिआ जोअणं आयामेणं अद्धतेरस जोअणाइं विक्खंभेणं कोसं बाहल्लेणं मगरमुहविउट्टसंठाणसंठिआ सव्ववयरामई अच्छा । रोहिअंसा णं महाणई जहिं पवडति एत्थणं महं एगे रोहिअंसापवायकुंडे णामं कुंडे पण्णत्ते । सवीसं जोअणसयं आयामविक्खंभेणं तिण्णि असीए जोअणसए किंचिविसेसूणे परिक्खेवेणं । दस जोअणाइं उव्वेहेणं अच्छे कुंडवण्णओ जाव तोरणा । तस्स णं रोहिअंसपवायकुंडस्स बहुमज्झदेसभागे एत्थ णं महं एगे रोहिअंस दीवे पण्णत्ते । सोलस जोअणाइं आयामविक्खंभेणं सातिरेगाइं पण्णासं जोअणाइं परिक्खेवेणं दो कोसे ऊसिए जलंताओ सव्वरयणामए अच्छे सेसं तं चेव जाव भवणं अट्ठो अ भाणिअव्वो । तस्स णं रोहिअंसपवायकुंडस्स उत्तरिल्लेणं तोरणेणं रोहिअंसा णामं महाणदी पवूढा समाणी हेमवंतं वासं एज्जेमाणी एज्जेमाणी चउद्दसहिं सलिलासहस्सेहिं आपूरेमाणी आपूरेमाणी सद्दावइवट्टवेअड्ढपव्वयं अद्धजोअणेणं असंपत्ता समाणी पच्चत्थाभिमुही आवत्ता समाणी हेमवंतं वासं दुहा विभयमाणी विभयमाणी अट्ठावीसाए सलिलासहस्सेहिं समग्गा अहे जगइं दालइत्ता पच्चत्थिमेणं लवणसमुद्दं समप्पेति । रोहितंसा णं पवहे अद्धतेरस जोअणाइं विक्खंभेणं कोसं उव्वेहेण तयाणंतरं च णं मायाए मायाए परिवड्ढमाणी परिवड्ढमाणी मुहमूले पणवीसं जोअणं सयं विक्खंभेणं अड्ढाइज्जाइं जोअणाइं उव्वेहेणं उभओ पासिं पउमवरवेइआहिं दोहि अ वणसंडेहिं संपरिक्खित्ता ॥

'तस्स णमि'त्यादि । तस्य-पद्महृदस्य पूर्व्वदिग्वर्त्तिना तोरणेन गङ्गा महानदी प्रव्यूढा-निर्गता सती पूर्व्वाभिमुखी पञ्च योजनशतानि पर्व्वतेन-पर्व्वतनिमित्तेन पर्व्वतोपरीत्यर्थः । गत्वा गङ्गावर्त्तनकूटे आवृत्ता गङ्गावर्त्तनकूटास्याधस्तात्तन्मूले इत्यर्थः । आवर्त्तीभूता सती त्रयोविंशत्यधिकानि पञ्च योजन-

शतानि त्रयश्चैकोनविंशतिभागा योजनस्य दक्षिणाभिमुखो पर्वतेन गत्वा 'महाघड'त्ति । महान् यो घटः तस्य यन्मुखं तस्मात्प्रवर्त्तितेनैव 'मुत्तावलि'त्ति । मुक्ताफलहारसंस्थितेन-मुक्ताफलहारानुकारिणा सातिरेक किञ्चिदधिकं योजनशतं तत्प्रमाणं यस्य तत्सातिरेकयोजनशतिकं तेन प्रपातेन-गगनप्रवाहेण प्रपतति । 'जतो'त्ति । यतः स्थानात् गङ्गा महानदी प्रपतति 'इत्थ णं'ति । अत्र महती एका जिह्विका प्रज्ञप्ता । सा जिह्विका अर्द्धयोजनमायामेन-दैर्घ्येण 'छस्सकोसाइं'ति । षट् सक्रोशानि योजनानि विष्कम्भेन-पृथुतया अर्द्ध क्रोशं बाहल्येनोण्डत्वेन 'मगरमुह'त्ति । मकरस्य-जलचरजीवविशेषस्य विवृत-विरलीभूतं विकाशित-मित्यर्थः । यन्मुखं तस्य यत्संस्थानं तेन संस्थिता: । प्राकृतत्वाद्विशेषणस्य परनिपातः । 'सव्व'त्ति । सर्वात्मना न पुनर्देशेन वज्रमयी-वज्रात्मिका । 'गंगा णामे'त्यादि । गङ्गा नाम्ना महानदी यत्र प्रपततीति। अत्रैकं महत् गङ्गाप्रपातकुण्ड-गङ्गाया. प्रकर्षेण पतनं यत्र तद्गङ्गाप्रपातम् एवंविधं यत्कुण्डं तद्-गङ्गाप्रपातकुण्डं प्रज्ञप्तं । तस्य प्रमाणमाह-'सट्ठिं'ति । षष्टिं योजनान्यायामविष्कम्भेन नवत्यधिकं योजनशतं किञ्चिद्विशेषाधिकं परिक्षेपेण दश योजनान्युद्वेधेन 'अच्छे'त्यादि प्राग्वत् । तस्यावयवेषु स्वरूपमाह-'रययामय'त्ति । तत्कुण्डं किं भूतं ? रजतमयकूलं 'वयर'त्ति । वज्रमया. पाषाणा यत्र तद्व-ज्रमयपाषाणं । क्षेत्रसमासवृत्तौ तु वज्रमयपार्श्वमित्युक्तं तदनुसारेण सूत्रपाठस्तु 'वयरमयपासे'त्ति द्रष्टव्यः । 'सुहोत्तारे'त्ति । सुखेनोत्तारो यत्र तत्तथा तत्र जलाद्बहिर्निर्गमनं सुखेनैव भवेदित्यर्थः । अत एव 'सूत्तारं' । शोभन उत्तारो यत्र तत्तथा 'णाणामणि'त्ति । नानामणिभिरनेकजातीयैर्मणिभिस्तीर्थंबद्धं यत्र तन्नानामणितीर्थंबद्धं । यद्वा-बद्धं तीर्थं यत्रेति प्राकृतत्वाद्व्यत्ययः । 'वयर'त्ति । वज्रमयं तलं मध्यो भागो यत्र तत्तथा । 'सुवण्ण'त्ति । पीतकान्तिहेम सज्ज-रूप्यविशेषः रजत-रूप्यं मणयश्चन्द्रकान्तादयस्ततो द्वन्द्वस्तन्मया वालुका यत्र तत्तथा 'वेरुलिअ'त्ति । वैडूर्यमणिमयानि स्फटिकपटलमयानि च प्रत्यवतटानि तट-समीपवर्त्तिनोऽत्युन्नतप्रदेशो यत्र तत्तथा । वृत्त-वृत्ताकारं समं तीरं यत्र तत्समतीरं 'अणुपुव्व'त्ति । आनुपूर्व्वेण नीचैर्नीचैस्तरभागरूपेण सुष्ठु-अतिशयेन जातो वप्रस्तटं यत्र तत् गम्भीरमलब्ध-स्तीर्थं शीतलं जलं यत्र तत कर्म्मधारयः । 'सछन्ने'त्यादि । सञ्छन्नानि-जलान्तरितानि पत्राणि-पद्मिनीपत्राणि विसानि-कन्दाः मृणालानि-पद्मनालाः यत्र ततया । यद्यपि पद्मिनीपत्राणि जलोपरिवर्तीनि भवन्ति तथापि जलनिपातोच्छलितच्छटाभिराच्छादनमवसातव्य 'बहुउप्पले'त्यादि । वहुभिरुत्पलकुमुदनलिनसुभगसौगन्धिकपुण्डरीकमहापुण्डरीकशतपत्रसहस्रपत्रै प्रफुल्लैर्विकसितैः केसरैः-केसरप्रधानैरुपचितं-व्याप्तं । यद्वा-वहूनि उत्पलादीनि प्रफुल्लानि केसरोपचितानि यत्र तत्तथेति । 'अच्छ-विमल'त्ति । अच्छेन स्वरूपतः स्फटिकवच्छुद्धेन विमलेनागन्तुकमलरहितेन 'पत्थ'त्ति । प्रस्थेन निर्गमा-भिमुखतया चलनस्वभावेन सलिलेन पूर्णं तथा 'पडिहत्थ'त्ति । पडिहत्था -प्रभूता भ्रमन्तो मत्स्यकच्छपाः अनेकानि शकुनिगणमिथुनानि ततो द्वन्द्वस्तैः प्रविचरितमितस्ततो गमनेन सर्व्वतो व्याप्तं 'सद्दुण्णइअ'त्ति । शब्देन-मत्स्यकच्छपादीनां क्रेङ्कारादिरूपेण उन्नतिकमुन्नतिं प्रापितं मधुरस्वरेण-हंसादिशकुनिगणमिथुना-नां निनादेन नादितं-शब्दायितं ततो विशेषणसमासः । 'पासाइए'त्ति प्राग्वत् । 'से णं एगाए'इत्यादि । तद-नन्तरोक्तं गङ्गाप्रपातकुण्डम् एकया पद्मवरवेदिकया एकेन च वनखण्डेन सर्व्वतः समन्तात्सम्परिक्षिप्तं

वेदिकावनखण्डयो. प्रमाण वर्णकश्च भणितव्यो-जगतीवदिहापि वक्तव्यः । 'तस्स णमि'त्यादि । तस्य-प्रागुक्तस्य गङ्गाप्रपातकुण्डस्य 'तिदिसिं'ति । तिसृषु दिक्षु त्रीणि त्रिसोपानप्रतिरूपकाणि प्रज्ञप्तानि । तद्यथा-पूर्व्वेण दक्षिणेन पश्चिमेन च । 'तेसि णमि'त्यादि । तेषा त्रिसोपानकानामयमेतद्रूपो वर्णव्यासः प्रज्ञप्तः । तद्यथा-'वेरुलिअ'त्ति । वैडूर्यमया नेमा इत्यादि । व्याख्यान प्राग्वत् । 'तेसिं ण तिसोवाण'त्ति । तेषां त्रिसोपानप्रतिरूपकाणा पुरत प्रत्येक प्रत्येक तोरणानि प्रज्ञप्तानि । 'ते ण तोरणा'इत्यादि । तानि च तोरणानि नानामणिमयानि नानामणिमयेषु स्तम्भेषु 'उवणिविट्ठ त्ति । उप-सामीप्येन निविष्टानि-स्थितानि एवविधान्यपि सन्निविष्टानि-सम्यग् निश्चलतया निविष्टानि ततो विशेषणसमासः । तथा 'विविह'त्ति । विविधैस्तारारूपैरुपचितानि 'विविहमुत्त'त्ति । विविधाः-विविधविच्छित्तियुक्ता या मुक्ता-मौक्तिकानि ताभि. 'अ तरे'ति । अतराशब्दो वीप्सानुद्दितोऽपि सामर्थ्याद्वीप्सोदितोऽवसातव्य । तेनान्तरा उपचितानि 'ईहामिगे'त्यादि प्राग्वत् । 'खभुग्गय'त्ति । स्तम्भोद्गतया-स्तम्भोपरिवर्त्तिन्या वज्रंरत्न-मय्या वेदिकया परिगतानि 'विज्जाहर'त्ति । विद्याधरयोर्यद्यमलयुगल समश्रेणीक द्वन्द्वं विद्याधरयमल-युगल तच्च तत् यन्त्र च सञ्चरिष्णुपुरुषप्रतिमाद्वयरूप तेन युक्तानीव 'अच्चिसहस्स'त्ति । अर्च्चिषां-किरणाना सहस्रैर्मालिनीयानि-परिवारणीयानि एव रूपकसहस्रकलितानि 'भिसमाण'त्ति । दीप्यमानानि 'भिब्भिसमाणा'इति । अतिशयेन दीप्यमानानि 'चक्खुल्लोअणे'त्यादि । चक्षुर्लोकने दर्शने-दर्शनीयातिशयान् श्लिष्यतीव येषु तानि । तथा सुखस्पर्शानि शुभस्पर्शानि वा कोमलस्पर्शानीत्यर्थ. । सश्रीकानि-सशोभानि रूपाणि-रूपकाणि येषु-तानि तथा प्रासादीयानि-मन.प्रसत्तिनिमित्तानि । 'तेसिं तोरणाणमि'त्यादि । तेषां तोरणनामुपरि बहूनि अष्टावष्टौ मङ्गलकानि प्रज्ञप्तानि । 'त जहे'त्यादि प्राग्वत् । 'तेसिं तोरणाण उवरिं' ति । तेषां तोरणानामुपरि बहव्य कृष्णचामरध्वजा यावत् शुक्लचामरध्वजः यावत्करणान्नीलचामर-ध्वजा इत्यादि । 'अच्छा सण्हे'त्यादि प्राग्वत् । रूप्पपट्टो'त्ति रूप्यो-रूप्यमयो वज्रमयस्य दण्डस्योपरि पट्टो यासां तास्तथा । 'वयरामय'त्ति । वज्रमयो दण्डो यासा तास्तथा । 'जलजामल'त्ति । जलजानामिव-जल-जकुसुमानामिव पद्मादीनामिवेत्यर्थ । अमल कुद्रव्यगन्धसम्बन्धशून्यो गन्धो विद्यते यासा ता जलजामलग-न्धिकाः । सुरूपा -शोभनरूपवत्यः । वहवं उत्पलहस्तका-उत्पलोख्यजलजकुसुमसमूहविशेषाः 'जाव सये' त्यादि । यावच्छतसहस्रपत्रहस्तका यावत्करणात् 'पउमहत्थगा'इत्यादि द्रष्टव्य । 'सव्व'त्ति । सर्व्वात्मना रत्नमया प्रासादीयाः । अथापरमपि किमस्तीत्याह-'तस्स णमि'त्यादि । तस्य गङ्गाप्रपातकुण्डस्य बहुमध्यदेशभागे । 'एत्थणत्ति । अत्र महानेको गङ्गाद्वीपो नाम्ना द्वीपःप्रज्ञप्तः । अथ महत्त्वमेवायामादिना व्यक्ति करोति 'अट्ठ जोअणाइ'ति । अष्टौ योजनान्यायामविष्कम्भाभ्या सातिरेकाणि पञ्चविंशतियोज-नानि परिक्षेपेण द्वौ क्रोशौ क्रोशद्विकमुच्छ्रितो जलान्तात्-जलपर्यन्तात् 'सव्ववयरामए'त्ति । सर्व्वा-त्मना वज्रमय अच्छः-स्फटिकवत्स्वच्छः । 'से ण एगाए'त्ति । स गङ्गाद्वीपः एकया पद्मवरवेदिकया एकेन च वनखण्डेन सर्व्वतः समन्तात् सम्परिक्षिप्तः वर्णको जगतीवेदिकादेरिव भणितव्यः । 'गगादीवस्स णमि'त्यादि । गङ्गाद्वीपस्योपरि बहुसमरमणीयो भूमिभाग प्रज्ञप्त । 'तस्स ण'ति । तस्य गङ्गाद्वीपस्य बहुमध्यदेशभागे । 'इत्थ ण'ति । अत्रान्तरे गङ्गाया देव्या महदेक भवन प्रज्ञप्त । महत्त्वमेवायामादिना विवे-

चयति-'कोसं आयामेणमि'त्यादि सुगमं। नवरं स्तम्भा नानामणिमया अवसातव्याः। 'जाव मज्झे'त्यादि। यावन्मध्यदेशभागे भवनस्येति गम्य मणिपीठिकाशयनीय-मणिपीठिकाया शयनीयमस्तीत्यर्थः । तच्च गङ्गादेवीयोग्यमितिज्ञेयं। अथ गङ्गाद्वीपनाम्नो निमित्त पिपृच्छिषुराह-'से केणट्ठेण'ति। अथ केनार्थेन यावत् शाश्वत नामधेय प्रज्ञप्त ? यावत्करणात् 'भंते ! एवं वुच्चइ गंगादीवे णाम गंगादीवे ?। गो० ! गंगादीवे बहुइं उप्पलाइं गंगादीवप्पभाइं गंगा इत्थ देवी परिवसति। से तेणट्ठेण गो० ! गंगादीवे गंगादीवे'। 'अदुत्तर च णमि'त्यादि। प्रागुक्तं द्रष्टव्य। 'तस्स णमि'त्यादि। तस्यानन्तरोक्तस्य गङ्गाप्रपातस्य कुण्डस्य दाक्षिणात्येन तोरणेन गङ्गा महानदी प्रव्यूढा सती उत्तरभरतार्द्धं वर्षं 'पज्जेमाणी पज्जेमाणी'त्ति। पाययन्ती पाययन्ती-जलेनार्द्रां कुर्व्वन्ती सप्तभिः सलिलासहस्रैरापूर्यमाणा आपूर्यमाणा अधःखण्डप्रपात-गुहायाः पूर्व्वदिग्भागेनेति गम्य। वैताढ्यपर्व्वतं दारयित्वा-विदार्य दक्षिणपूर्व्वस्या दिशोतिगम्य दक्षिणार्द्धं भरतं 'पज्जेमाणी पज्जेमाणी' पाययन्ती पाययन्ती दक्षिणभरतार्द्धस्य बहुमध्यदेशभागे गत्वा 'पुरत्थि'त्ति। पूर्व्वाभिमुखी आवृत्ता-समुद्र प्रतिगमनायवक्री भूता सती दक्षिणोत्तरभरतार्द्धयोः प्रत्येक सप्त सप्त नदी-सहस्राणा सद्भावादुभयमीलने चतुर्द्दशभि. सलिलासहस्रैः समग्राः-सहिताः अधो जगती दारयित्वा पौरस्त्यं-पूर्व्वदिग्वर्तिन लवणसमुद्र 'समप्पेति'। समाप्नोति-सम्यग् मर्यादया आप्नोति-प्राप्नोति समुद्रान्तः प्रविशतीत्यर्थः। अथ गङ्गाया महानद्याः प्रवहे मुखे च पृथुत्वमुद्वेध च दर्शयति-'गंगा णमि'त्यादि। णमि-त्यलङ्कारे। गङ्गा महानदी प्रवाहे-मकरमुखजिह्विकाप्रदेशे षट् सक्रोशानि योजनानि विष्कम्भेन। 'यत्तु 'छज्जोअण सक्कोसमि'ति। क्षेत्रसमासगाथा व्याख्यानयता श्रीमलयगिरिणा प्रवाहे-पद्मह्रदाद्विनिर्गमे षट् योजनानि सक्रोशानि गङ्गानद्या विस्तार इति भणित, तन्मकरमुखजिह्विकायाविनिर्गम यावदविशेषेण विवक्षणात्। अन्यथा 'गंगासिंधूओ ण महाणईओ पणवीसं गाउआइं पुहुत्ताणं दुहओ घडमुहपवत्तिएण मुत्तावलिहारसंठिएण पवाहेण पवडंति' तथा 'गंगासिंधूओ णं महाणईण पवहे साइरेगं चउवीसं कोसे वित्थारेण पण्णत्ताओ'त्ति। समवायाङ्गेन सह विरोध. स्यात्। 'अद्धकोस'ति। अर्द्धक्रोश क्रोशार्द्धमुद्वेधेनो-ण्डत्वेन 'तयणतर'ति तदनन्तर निर्गमस्थानादनन्तरं मात्रया--क्रमेण यथानुक्रमक्षेत्रातिक्रमणेनेत्यर्थ प्रव-र्द्धमाना प्रवर्द्धमाना मुखे च समुद्रप्रवेशे 'बावट्ठिं'ति । द्वाषष्टि योजनानि अर्द्धयोजन च विष्कम्भेन सक्रोशं योजनमुद्वेधेन 'उभओ पासिं'ति। उभयो' पार्श्वयो. द्वाभ्यां पद्मवरवेदिकाभ्या द्वाभ्यां वनखण्डाभ्यां च सम्परिक्षिप्ता वेदिकावनखण्डवर्णको वक्तव्यः। स चोक्त एव। अथ सिन्धुनदीमधिकृत्यातिदेशमाह-'एवं सिंधुए'त्ति। एवम मुना प्रकारेण सिन्धोरपि प्रवाहादेर्विष्कम्भादि ज्ञातव्यम् । अथ विशेषमाह-'जाव तस्स णमि'त्यादि। यावत्तस्य पद्मदह्रस्य गङ्गानदी पूर्व्वतोरणेन इय च 'पच्चत्थिमिल्लेण'ति। पश्चिमेन तोरणेन गङ्गानदी पूर्व्वाभिमुखा गङ्गावर्त्तनकूटे आवृत्ता सती दक्षिणाभिमुखी, इय च पश्चिमाभिमुखी, सिन्ध्वावर्त्तनकूटे आवृत्ता दक्षिणाभिमुखी, गङ्गानदी गङ्गाप्रपातकुण्डे निपतति, इय च सिन्धुप्रपातकुण्डे तेनात्र सिन्धुप्रपातकुण्ड। तथा गङ्गाप्रपातकुण्डे गङ्गाद्वीपोऽत्र तु सिन्धुद्वीप इति विशेष.। 'अट्ठो सो चेव' त्ति। अर्थः स एव 'सेकेणट्ठेण भंते ! एवं वुच्चइ सिंधुदीवे सिंधुदीवे?'इत्यादि। प्रश्ननिर्वचनलक्षण. यथाप्राग-भिहितस्तथैवेत्यर्थ.। कियद्दूरमित्याह-'जाव अहे'इत्यादि। यावत्तमिस्रागुहाया अध. यावत्करणात् 'तस्स

सिंधुप्पवायकुण्डस्स दाहिणिल्लेणं तोरणेण सिंधू महाणदी पवूढा समाणी उत्तरड्ढभरहं वास पज्जेमाणी पज्जेमाणा सत्तहिं सलिलासहस्सेहिमि'त्यादि। यावद्वैताढ्यपर्व्वत दारयित्वा पश्चिमाभिमुखी आवृत्ता सती चतुर्दशभि सलिलासहस्रैः समग्रा जगत्या अर्व पश्चिमेन लवणसमुद्र समाप्नोति। 'सेस त चेव'ति। शेषमुक्तशेपातिरिक्तं तदेव प्रागुक्तमेव जिह्विकासिन्धुद्वीपसिन्धुदेवीभवनादिवर्णन गङ्गानदीव्यतिकरोक्तमवसातव्यमत्यर्थ। अथ पद्मह्रदादुत्तराभिमुखी एकैव रोहितांशानदी निर्गता। अतस्तद्वक्तव्यतामाह-'तस्स णमि'त्यादि। तस्य पद्मह्रदस्योत्तरदिग्वर्त्तिना तोरणेन रोहितांशा महानदी प्रव्यूढा सती षट्सप्तत्यधिके द्वे योजनानां शते षट् चैकोनविंशतिभागान् योजनस्य उत्तराभिमुख पर्व्वतेन गत्वा महाघटमुखप्रवर्त्तितेन मुक्तावलिहारसस्थितेन सातिरेकयोजनशतिकेन प्रवाहेण रोहितांशा महानदी प्रपतति। यत. प्रपतति तत्रैका जिह्विका प्रज्ञप्ता। 'सा णमि'ति प्राग्वत्। जिह्विका योजनमायामेन 'अद्धतेरस'त्ति। अर्द्धं त्रयोदश यत्र तानि अर्द्धत्रयोदशानि सार्द्धद्वादशानीत्यर्थ। योजनानि विष्कम्भेन क्रोशमेक वाहल्येन उद्वेधेन मकरमुखविवृतमस्यानसस्थिता सर्व्वात्मना वज्रमयी अच्छा रोहितांशा नाम महानदी यत्र प्रपतति। 'एत्थ ण'ति। अत्रान्तरे महदेक रोहितांशप्रपातकुण्डनाम्ना कुण्ड प्रज्ञप्त। 'सवीस'ति। सविंश-विंशत्युत्तर योजनशतमायामविष्कम्भेन अशीत्यधिकानि त्रीणि योजनशतानि किञ्चिद्विशेषोनानि परिक्षेपत दश योजनान्यूद्वेधेन 'अच्छे कुण्डवण्णओ'त्ति। अच्छ कुण्डवर्णको यावत्तोरणानि तोरणवक्तव्यतापर्यन्तमित्यर्थ। अथ रोहितांशाकुण्डे किमस्तीत्याह-'तस्स णमि'त्यादि। तस्य रोहितांशप्रपातकुण्डस्य बहुमध्यदेशभागे। 'एत्थ ण'ति। अत्र महानेको रोहितांशद्वीपः प्रज्ञप्त। 'सोलस'त्ति। षोडश योजनान्यायामविष्कम्भाभ्या सातिरेकाणि पञ्चाशद्योजनानि परिक्षेपेण द्वौ क्रोशौ जलान्तादुच्छ्रित. सर्व्वरत्नमयः अच्छः। 'सेस'ति। शेष तदेव यावद्भवन भवनादिवर्णन 'अट्ठो'त्ति। अर्थश्च 'से केणट्ठेणमि'त्यादि। प्रश्ननिर्व्वचनलक्षणो भणितव्य.। 'तस्स णमि'त्यादि। तस्य रोहितांशप्रपातकुण्डस्योत्तरेण तोरणेन रोहितांशा नाम्ना महानदी प्रव्यूढा सती हैमवत वर्षं 'पज्जेमाणी'ति। पाययती-जलेनार्द्रीकुर्व्वन्ती चतुर्दशभि सलिलासहस्रैरापूर्यमाणा आपूर्यमाणा शब्दापातिवृत्त वैताढ्यं पर्व्वतम् अर्द्धयोजनमसम्प्राप्ता सती पश्चिमाभिमुखी आवृत्ता सती हैमवत वर्षं द्विधा विभजयन्ती विभजयन्ती अष्टाविंशत्या सलिलासहस्रैः सहिता अधो जगती दारयित्वा-पश्चिम लवणसमुद्र समाप्नोति। अथ रोहितांशाया नद्याः प्रवहे मुखे च विष्कम्भाद्याह-'रोहितसा णमि'त्यादि। णमिति प्राग्वत्। रोहितांशा महानदी तिशेष। पद्मह्रदान्निर्गमे सार्द्धद्वादशयोजनानि विष्कम्भेन क्रोशमुद्वेधेन 'तयणतर'ति। तदनन्तर-प्रवाहानन्तर मात्रया-क्रमेण परिवर्द्धमाना परिवर्द्धमाना मुखमूले-समुद्रप्रवेशे पञ्चविंशत्यधिक योजनशत विष्कम्भतः अर्द्धतृतीयानि योजनान्युद्वेधेन 'उभओ पासिमि'त्यादि प्राग्वत्।

अथ क्षुल्लहिमवति कूटसङ्ख्या ज्ञातु प्रश्नमाह

**चुल्लहिमवतेणं भंते! वासहरपव्वए कइ कूडा पण्णत्ता? गो०! एक्कारस कूडा पण्णत्ता। तं जहा–सिद्धायतणकूडे चुल्लहिमवंतकूडे भरहकूडे इलादेवीकूडे गंगाकूडे सिरिकूडे**

रोहिअंसकूडे सिंधुकूडे सुरादेवीकूडे हेमवंतकूडे वेसमणकूडे । कहि णं भंते ! चुल्लहिमवंतवासहरपव्वए सिद्धाययणकुडे णामं कूडे पण्णत्ते ? ! गो० ! पुरत्थिमलवण समुद्दस्सपच्चत्थिमेणं चुल्लहिमवंतकूडस्स पुरत्थिमेणं । एत्थ णं सिद्धाययणकूडे णामं कूडे पण्णत्ते । पंच जोअणसयाइं उड्ढं उच्चत्तेणं मूले पंच जोअणसयाइं विक्खभेणं मज्झे तिण्णि अ पण्णत्तरे जोअणसए विक्खंभेणं उप्पिं अड्ढाइज्जे जोअणसए विक्खंभेणं मूले एगं जोअण-सहस्सं पंच य एक्कासीए जोअणसए किंचिविसेसाहिए परिक्खेणं मज्झे एगं जोअणसहस्सं एगं च छलसीअं जोअणसय किंचिविसेसूणं परिक्खेवेणं उप्पिं सत्त एक्काणउए जोअणसए किंचिवि-सेसूणे परिक्खेवेणं मूले विच्छिण्णे मज्झे संक्खित्ते उप्पिं तणुए गोपुच्छसंठाणसंठिए सव्वरय-णामए अच्छे। से णं एगाए पउमवरवेइआए एगेण य वणसंडेणं सव्वओ समंता संपरिक्खित्ते । सिद्धायतणकूडस्स णं उप्पिं बहुसमरमणिज्जे भूमिभागे जाव बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे । एत्थ णं महं एगे सिद्धायतणे पण्णत्ते । पण्णासं जोअणाइं आयामेणं पणवीसं जोअणाइं विक्खंभेणं छत्तीसं जोअणाइं उड्ढं उच्चत्तेणं जाव जिणपडिमावण्णओ णेतव्वो । कहि णं भंते ! चुल्लहिमवंतवासहरपव्वए चुल्लहिमवंतकूडे णामं कूडे पण्णत्ते ? गो०! भरहस्स कूडस्स पुरत्थिमेणं सिद्धायतणकूडस्स पच्चत्थिमेणं । एत्थ णं चुल्लहिमवंते वासहरपव्वए चुल्ल-हिमवंते णामं कूडे पण्णत्ते । एवं जो चेव सिद्धायतणकूडस्स उच्चत्तविक्खंभपरिक्खेवो जाव बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे । एत्थ णं महं एगे पासायवडिंसए पण्णत्ते । बावट्ठिं जोअणाइं अद्धजोअणं च विक्खंभेणं एक्कतीसं जोअणाइं कोसं च उड्ढं उच्चत्तेणं अब्भुग्गयमूसिअं पहसिए विव विविहमणिरयणभत्तिचित्ते वाउद्धूअविजयवेजयंतीपडाग-छत्तातिच्छत्तकलिए तुंगे गगणतलमभिलंघमाणसिहरे जालंतररयणपंजरुम्मिलितेव्व मणिरयणथू-भिआए विकसितसतवत्तपुंडरीअतिलयरयणद्धचंदचित्ते णाणामणिमयदामलंकिए अंतो बाहिं च सण्हवइरतवणिज्जरुइलवालुआपत्थडे सुहफासे सस्सिरीअरूवे पासातिए जाव पडिरूवे । तस्स णं पासायवडिंसगस्स अंतो बहुसमरमणिज्जे भूमिभागे जाव सीहासणं सपरिवारं । से केणट्ठेणं भंते ! एवं वुच्चति चुल्लहिमवंतकूडे चुल्लहिमवंतकूडे ? गो०! चुल्लहिमवंते णामं देवे महिड्ढीए जाव परिवसति । कहि णं भंते ! चुल्लहिमवंतगिरिकुमारस्स देवस्स चुल्लहिमवंत नाम रायहाणी पण्णत्ता ? गो०! चुल्लहिमवंतकूडस्स दक्खिणेणं तिरिअमसंखिज्जेदीवसमुद्दे वीतिवइत्ता अण्णं

जंबूदीवं दक्खिणेणं बारस जोअणसहस्साइं ओगाहेत्ता । एत्थ णं चुल्लहिमवंतकूडस्स चुल्लहिमवंताणाम रायहाणी पण्णत्ता। बारस जोअणसहस्साइं आयामविक्खंभेणं। एवं विजय-रायहाणी सरिसा भाणिअव्वा । एव अवसेसाणवि कूडाणं णेअव्वा वत्तव्वया। आयामविक्खंभ-परिक्खेवपासाय देवयाउ सीहासणपरिवारो अट्ठो देवाण य देवीण य रायहाणीओ णेअव्वाओ । चउसु देवा चुल्लहिमवंतभरहहेमवयवेसमणकूडेसु । सेसेसु देवयाओ । से केणट्ठेणं भंते ! एवं वुच्चइ चुल्लहिमवते वासहरपव्वए वासहरपव्वए ? । गो० ! महाहिमवंतवासहर-पव्वय पणिहाय आयाम उच्चत्त उव्वेह-विक्खंभ-परिक्खेवं पडुच्च ईसिं खुड्डतरा चेव णीअ-तरा चेव हस्सतरा चेव चुल्लहिमवते इत्थ देवे महिड्ढीए जाव पलिवमट्ठितीए परिवसंति। से तेण ट्ठेणं गोअमा ! एवंवुच्चति-चुल्लहिमवंते वासहरपव्वए वासहरपव्वए। अदुत्तरं च णं गोअमा०।

'चुल्लहिमवते णमि'त्यादि। क्षुल्लहिमवति वर्षधरपर्वते भदन्त ! कति कूटानि प्रज्ञप्तानि ?। भगवानाह-गौतम ! एकादश कूटानि प्रज्ञप्तानि । अथ नामभिर्विवेकमाह-' तं जह'त्ति । तद्यथा-'सिद्धा-यतण'त्ति । सिद्धायतनकूट क्षुल्लहिमवत्कूट भरतकूट इलादेवीकूट गङ्गाकूट श्रीकूट रोहितांशाकूट सिंधुकूट सुरादेवीकूट हिमवत्कूट वैश्रमणकूट चेति । अथ सिद्धायतनकूट क्वास्तीति प्रश्नयति-'कहि णमि'त्यादि। क्व भदन्त ! क्षुल्लहिमवति वर्षधरपर्वते सिद्धायतनकूटं नाम्ना कूट प्रज्ञप्तं ?। भगवानाह-गौतम ! पूर्व्वलवणसमुद्रस्य पश्चिमेन क्षुल्लहिमवत्कूटस्य पूर्व्वेण । 'एत्थ ण'ति । अत्रान्तरे सिद्धायतनकूटं। नाम्ना कूट प्रज्ञप्तम् । अथ तस्योच्चत्वाद्याह-'पच जोअणे'त्यादि। पञ्च योजनशतान्यूर्ध्वमुच्चैस्त्वेन मूले-पञ्च-योजनशतानि विष्कम्भेन । मध्ये-त्रीणि पञ्चोत्तराणि योजनशतानि विष्कम्भेन । 'उप्पि'ति । उपरि-अर्द्धतृतीयानि योजनशतानि विष्कम्भेन । मूले-एक योजनसहस्र पञ्च चैकाशीत्यधिकानि योजन-शतानि । पुस्त्वमेकत्व च प्राकृतत्वात् किञ्चिद्विशेषाधिकानि परिक्षेपेण ।'मध्ये'-एकं योजनसहस्रम् एक च षडशीतियोजनशत-षडशीत्यधिकयोजनशतमित्यर्थ. किञ्चिद्विशेषोनपरिक्षेपेण । 'उप्पि'ति । उपरि-सप्त एकनवत्यधिकानि योजनशतानि किञ्चिद्विशेषोनानि परिरयेण । अत एव मूले विस्तीर्णं मध्ये सङ्क्षि-प्तम् । उपरि तनुक गोपुच्छसस्थानसस्थितम्-ऊर्ध्वीकृतगोपुच्छाकारमित्यर्थः । ' सव्वरयणामए'इत्यादि प्राग्वत् । 'सिद्धायतणस्स णमि'त्यादि । सिद्धायतनकूटस्य उपरि बहुसमरमणीयो भूमिभाग. । 'जाव'त्ति । यावत् बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे । 'एत्थ ण'ति । अत्रान्तरे महदेकं । सिद्धायतनं प्रज्ञप्त । तस्यायामाद्याह-'पण्णास'ति । पञ्चाशद्योजनान्यायामेन पञ्चविंशतियोजनानि विष्कम्भेन 'छत्तीस'ति। षट्त्रिंशद्योजनानि ऊर्ध्वमुच्चैस्त्वेन यावज्जिनप्रतिमावर्णको ज्ञातव्य. । स चैव-'तासि णं जिणपडिमाण इमेआरूवे वण्णावासे पण्णत्ते । तंजहा-तवणिज्जमया हत्थतलपाया'इत्यादि। वर्णन वैताढ्य-पर्व्वतसम्बन्धिसिद्धायतनकूटवक्तव्यताधिकारे भणित तदिहापि सङ्ग्राह्यम् । अथ हिमवत्कूट क्वास्तीति

जिज्ञासु पृच्छति-'कहि ण भते !' इत्यादि । क भदन्त ! क्षुल्लहिमवद्वर्षधरपर्व्वते क्षुल्लहिमवत्कूट नाम्ना कूट प्रज्ञप्तं ?। भगवानाह-गौतम! भरतस्य कूटस्य पूर्व्वस्याम् । अनन्तरमभिहितस्य सिद्ध यतनकूटस्य पश्चिमेन। अत्रान्तरे क्षुल्लहिमवति वर्षधरपर्व्वते क्षुल्लहिमवत्कूट नाम्ना कूट प्रज्ञप्तम् । अथ सिद्धायतनकूटेनातिदेश-माह-'एव जो चेवे'त्यादि । एव प्रागुक्तप्रकारेण नाममात्रपरावृत्तिलक्षणेन सिद्धायतनकूटस्थाने हिमवत्कू-टमित्यादिरूपेणेत्यर्थ. । यदेव सिद्धायतनकूटस्योच्चत्वविष्कम्भपरिक्षेप प्राकृतत्वात्पु स्त्वं तदेव ज्ञातव्यमि-तिशेष. । 'जाव बहुसम'त्ति । यावद्बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे । 'एत्थण'ति । अत्रान्त-रेमहानेक: प्रासादावतसक प्रज्ञप्त । अस्य विष्कम्भाद्याह 'बावट्ठि'ति । द्वाषष्टि योजनानि अर्द्धं योजन च विष्कम्भेन एकत्रिंशद्योजनानि क्रोश चोर्ध्वमुच्चैस्त्वेन । 'अब्भुग्गय'त्ति । अभ्युद्गतोच्छ्रितोऽत्युच्च. सन् प्रहसित-इतस्तत. श्वेतप्रभापटलतया हसन्निवेत्यर्थ. । तथा विविधमणिरत्नाना भक्तिभिर्विच्छित्तिभिश्चित्रो य स तथा 'वाउद्धूअ'त्ति । वातेन-वायुना उद्धूता-कम्पिता: । इतस्ततश्चालिता विजयसूचिका वैजयन्त्य-भिधाना: या पताका छत्रातिछत्राणि च तै कलितो य स तथा । तुङ्ग उच्च सक्रोशैकत्रिंशद्योजनप्रमा-णत्वात् । अत एव गगनतलमभिलङ्घयन्-अनुलिखन् शिखर यस्य स तथा यस्य शिखरमाकाशतलमभि-लङ्घयदिवास्तीत्यर्थ. । 'जालतरे'त्यादि । जालानि-जालकानि तानि च भवनभित्तिषु प्रतीतानि तदन्तरेषु विशिष्टशोभानिमित्त रत्नानि यत्र स तथा । तथा 'पजर'त्ति । पञ्जरान्-वंशादिमयाच्छादनविशेषान् उन्मीलितो-बहिष्कृत. स इव पञ्जरात्सद्यो बहिष्कृत वस्तु अविनष्टच्छायित्वादत्यन्त शोभते तथाऽयमपो-त्यर्थ' । तथा च जालान्तररत्न: सन् पञ्जरोन्मीलित इवेतिसमास: तथा 'मणिरयण'त्ति । मणिरत्नमय्य: स्तूपिका:-शिखराणि यस्य स तथा 'विकसिअ'त्ति । विकसितानि शतपत्राणि पुण्डरीकाणि च द्वारादौ प्रतिकृतित्वेन स्थितानि तिलकरत्नानि भित्त्यादिषु पुंड्रविशेषा' अर्द्धचन्द्राश्च द्वारादिषु तैश्चित्राण्यालेख्य-रूपाणि यस्य चित्र आश्चर्यभूतो वा य: स तथा 'नानामणि'त्ति । नानामणिमयानि दामानि तैरलङ्कृतो य:स तथा । 'अतो बाहिं'ति । अन्तर्बहिश्च श्लक्ष्णोमसृण वज्रतपनोययोस्तन्मय्यो रुचिरा-मनोज्ञा या वालु-कास्तासां प्रस्तट: प्रतरो यस्य स तथा । सुखस्पर्श.-सुखहेतु: स्पर्शो यस्य स तथा । सश्रीकं-सशोभन रूप यस्य स तथा 'पासाइए'त्ति । प्रासादोयश्चित्ताह्लादकर: 'जाव'त्ति । यावत्प्रतिरूप.-द्रष्टार द्रष्टारं प्रति रूप यस्य स तथा । यावत्करणाद्दर्शनीयोऽभिरूपश्चेति सङ्ग्रह' । तत्र दर्शनीय.-पश्यता चक्षुष: श्रमा-भावहेतु । अभिरूपो-मनोज्ञ. सर्व्वत.प्रतिबिम्बहेतुर्वा । 'तस्स णमि'त्यादि । तस्य प्रासादावतसकस्यान्तर्मध्ये बहुसमरमणीयो भूमिभाग. यावत्सिहासन सपरिवार सामानिकसुरादि भद्रासनादिपरिकरितमित्यर्थ. । यावत्करणात् 'पण्णत्ते । तं जहा-आलिगपुक्खरेति वा'इत्यादि दृश्यम् । अथ नाम्न. सान्वर्थता पिपृच्छि-षुराह-'से केणट्ठे णमि'त्यादि प्राग्वत् । 'एएणट्ठेण एव वुच्चई चुल्लहिमव तकूडे चुल्लहिमव तकूडे ।' इति शेष । अथाऽस्यकूटस्याधिपते राजधानी क्वास्तीऽस्ति ? इति पृच्छति-'कहि ण भते !' इत्यादि । क भदन्त ! क्षुल्लहिमवद्गिरिकुमारस्य देवस्य क्षुल्लहिमवती नाम्ना राजधानी प्रज्ञप्ता ?। भगवानाह-गौतम ! क्षुल्ल-हिमवत्कूटस्य दक्षिणेन तिर्यगसङ्ख्येयान् द्वीपसमुद्रान् व्यतिक्रम्य अन्यस्मिन् प्रज्ञापकाधारभूतात् जम्बू-द्वीपादपर जम्बूद्वीप द्वीपं दक्षिणेन-दक्षिणस्या दिशि द्वादश योजनसहस्राण्यवगाह्य तन्मध्ये प्रविश्य । 'एत्थ

ण'त्ति । अत्रान्तरे क्षुल्लहिमवत्कूटस्य देवस्य क्षुल्लहिमवतो नाम्ना राजधानी प्रज्ञप्ता । अथास्या आयामाद्याह-'बारसे'त्यादि । द्वादशयोजनसहस्राण्यायामविष्कम्भाभ्याम् । अतिदिशति-'एवमि'ति । एवमनेनैव प्रकारेण विजयदेवराजधानीसदृशी भणितव्या । अथ वक्ष्यमाणानामपि शेषकूटाना साधारणमतिदेशमाह-'एव अवसेसाणवि'त्ति । एवमवशेषाणामपि-उक्तशेषाणा भरतादिकूटाना वक्तव्यता ज्ञातव्या । अथातिदेशवक्तव्यताया विषयमाह-'आयामे'त्यादि । आयामविष्कम्भपरिक्षेपप्रासाददेवतायु सिंहासनपरिवार समाहारद्वन्द्वेऽपि प्राकृतत्वान्पु स्त्वम् । अयभाव:-यथा-क्षुल्लहिमवत्कूटस्यायामादय पञ्च योजनशताद्यात्मका: तथा भरतादीनामपि कूटाना वक्तव्या: । यथा क्षुल्लहिमवत्कूटे प्रासादावतसकस्तथा भरतादिकूटेष्वपि । उपलक्षणात् प्रासादावतसकस्योच्चत्वाद्यपि तद्वदेव यथाक्षुल्लहिमवत्कूटाधिपते. पल्योपमायुस्तथाऽन्येषामपि कूटाधिपतीना । यथाऽस्य सिंहासनपरिवारस्तथाऽन्येषामपीति। 'अट्ठो'त्ति । अर्थ' ।'से केणट्ठेणं भते !' इत्यादि । नामनिमित्तप्रश्ननिर्वचनादि। यथाऽस्य तथाऽन्यत्रापि तथा 'देवाण य'त्ति । देवाना-क्षुल्लहिमवद्गिरिकुमारदेवप्रभृतीना। देवीनां-चेलादेवीप्रभृतीनां राजधान्योऽपि तद्वदेव ज्ञातव्या इत्यर्थ: । सर्व्वेषामपि कूटाना सूत्ररचना सिद्धायतनकूटवदेव । पर नामपरावृत्याऽवसातव्या । तञ्चैव-'कहि णं भते ! चुल्लहिमवते वासहरपव्वए भरहकूडे णाम कूडे पण्णत्ते ?। गो० ! इलादेवीकूडस्स पुरत्थिमेण चुल्लहिमवत्तकूडस्स पच्चत्थिमेण । एत्थ ण चुल्लहिमवते वासहरपव्वए भरहकुडे णाम कुडेपण्णत्ते । पच जोअणसयाइं उद्ध उच्चत्तेण मूले पच जोअणसयाइं विक्खभेण मज्झे तिण्णि अ पण्णत्तरि जोअणसए विक्खभेण उप्पि अड्ढाइज्जे जोअणसए विक्खभेणमि'त्यादिरूपेण सर्व्वत्रावसातव्यम् । अथ कूटाधिपतीनधिकृत्य विशेष सूत्रकार एवाह-'चउसु देवा' इत्यादि । चतुर्षु कूटेषु देवा अधिपतयस्तन्नामान्याह-'चुल्लेत्या'दि । क्षुल्लहिमवद्भरतहैमवतवैश्रमणलक्षणेषु देवानामपि नामानि कूटसदृशान्यवसातव्यानि । 'सेसेसु'त्ति । शेषेषु इलादेवीकूटप्रभृतिषु कूटेषु देवता -देव्य. स्वामिन्य इत्यर्थ । अथाऽय वर्षधर: क्षुल्लहिमवान् कथमभिधीयते इति प्रश्नाद्याह-'से केणट्ठेणमि'त्यादि । अथ केनार्थेन भदन्त ! एवमुच्यते क्षुल्लहिमवान् वर्षधर: क्षुल्लहिमवानित्यभिधीयते ? । भगवानाह-गौतम ! महाहिमवन्तं वर्षधरपर्व्वतं 'पणिहाय'त्ति । प्रणिधाय-अवधार्य आश्रित्येत्यर्थ । 'आयाम'त्ति । आयामोच्चत्वोद्वेधविष्कम्भपरिक्षेप प्रतीत्यापेक्ष्य विवक्षितो वर्षधर.। 'ईसि'त्ति । ईषत् क्षुल्लतर एव-लघुतर एव कुतो ? यतो नीचतर एव महाहिमवदुच्चत्वापेक्षयाऽल्पप्रमाणत्वात् । तथा ह्रस्वतर एव आयामविष्कम्भादिना महाहिमवदपेक्षयाऽल्पप्रमाणत्वात् । चकारा सर्व्वत्र विशेषणसमुच्चयार्था: । 'चुल्लहिमवत्त'त्ति । क्षुल्लहिमवा नत्र देवो महर्द्धिको यावत् पल्योपमस्थितिक परिवसति । यावत्करणात् 'महज्जुइए'इत्यादि। तेनार्थेन गौतम ! एवमुच्यते क्षुल्लहिमवान् वर्षधरोऽयमिति । तथाऽस्य नाम्नो नित्यत्वमप्याह-'अदुत्तर च णमि'त्यादि । अयाऽपरमपीत्यादि प्रागुक्त । तञ्चैव-'चुल्लहिमवंतस्स वासहरपव्वयस्स सासए णामधेज्जे पण्णत्ते । ज ण कयाइ णासी ण कयाइ णत्थि ण कयाइ ण भविस्सति अ धुवे णिअए सासए अक्खए अव्वए अवट्ठिए णिच्चे चुल्लहिमवते वासहरपव्वए'त्ति ।

अथ क्रमप्राप्त हैमवतवर्षं क्वाऽस्ति ? इति प्रश्नयति—

कहि णं भंते ! जंबुद्दीवे हेमवते णामं वासे पण्णत्ते ? । गो० ! महाहिमवंतस्स वासहर पव्वयस्स दक्खिणेणं चुल्लहिमवंतस्स वासहरपव्वयस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेण । एत्थ णं जंबुद्दीवे हेमवते णामं वासे पण्णत्ते पाईण पडीणायतेउदीणदाहिणविच्छिण्णे पलिअंकसंठाणसंठिए दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठे पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे । दोण्णि अ जोअणसहस्साइं एगं च पंचुत्तरं जोअणसयं पंच य एगूणवीसतिभागे जोअणस्स विक्खंभेणं । तस्स बाहा पुरत्थिमपच्चत्थिमेणं छज्जोअणसहस्साइं सत्त य पणपण्णजोअणसए तिण्णि अ एगूणवीसतिभागे जोअणस्स आयामेणं । तस्स जीवा उत्तरेणं पातीणपडीणायता दुहओ लवणसमुद्दं पुट्ठा पच्चत्थिमिल्लं जाव पुट्ठा सत्ततीसं जोअण सहस्साइं छच्च चोवुत्तरे जोअणसए सोलस य एगूणवीसतिभागे जोअणस्स ३७६७४ क० १६ किंचिविसेसूणे आयामेणं । तस्स धणुं दाहिणेणं अट्ठतीसं जोअणसहस्साइं सत्त य चत्ताले जोअणसए दस य एगूणवीसतिभागे जोअणस्स परिक्खेवेणं । हेमवयस्स णं भंते ! वासस्स केरिसए आगारभावपडोआरे पण्णत्ते ? । गो० ! बहुसमरमणिज्जे भूमिभागे पण्णत्ते । तहअसमाणुभावो णेअव्वो ।

'कहि णमि'त्यादि । क्व भदन्त ! जम्बूद्वीपे द्वीपे हैमवतवर्षं प्रज्ञप्तं ? । भगवानाह–गौतम ! महाहिमवद्वर्षधरपर्वतस्य दक्षिणेन क्षुल्लहिमवद्वर्षधरपर्वतस्योत्तरेण पौरस्त्यलवणसमुद्रस्य पश्चिमेन पश्चिम-लवणसमुद्रस्य पूर्वेण। 'एत्थ ण'ति । अत्रान्तरे हेमवतं नाम्ना वर्षं प्रज्ञप्त । प्राचीनप्रतीचीनायत उदीचीन-दक्षिणविस्तीर्णं पर्यङ्कसंस्थानसंस्थितं 'दुहा लवणे'त्यादि सुगमम् । अथ हैमवतवर्षस्य विष्कम्भादिवि-भणिषुः प्रथमं विष्कम्भमाह–'दोण्णिअ'त्ति । द्वे योजनसहस्रे एकं च पञ्चोत्तरं योजनशतं पञ्च चैकोन-विंशति भागान् योजनस्य विष्कम्भेन पृथुतया । हैमवतक्षेत्रम् । अथास्य बाहाप्रमाणमाह–तस्य 'बाहे'त्यादि तस्य हैमवतवर्षस्य 'बाहे'त्ति । पूर्वतः पश्चिमतश्च प्रत्येकमेकैकसद्भावेन द्वे स्तः ते च क्षुल्लहिमवद्वर्षधर-जीवातो हैमवतवर्षस्य जीवा यावत् प्रवर्द्धमानैः क्षेत्रप्रदेशपङ्क्तयात्मकत्वेन वक्राकारे पूर्वापरदिग्वर्तिन्यौ प्रत्येकं षट् योजनसहस्राणि सप्त च पञ्चपञ्चाशदधिकानि योजनशतानि त्रींश्चैकोनविंशतिभागान् योजनस्य आयामेन–दैर्घ्येण । एवं प्रमाणानयनप्रकारस्तु 'गुरुधणुपट्ठं लहुधणुपट्ठूण अद्धिअ बाहे'त्ति । वचनात् 'तस्स णं धणु दाहिणेणं अट्ठत्तीसं जोअणसहस्साइं'ति । सूत्रेणानन्तरं वक्ष्यमाणान्महतो धनुःपृष्ठात् प्रस्तुतहैमवतसत्कान् अष्टात्रिं [illegible]सहस्राणि [illegible]नानि चत्वारिंशदधिकानि योजनानां कला च दश ३८७४० क. १० इत्येवं [illegible] 'तीसे [illegible] दाहिणेण पणवीसं जोअणसहस्साइं'ति प्रागुक्तसूत्रोक्तं

लघुधनु पृष्ठ क्षुल्लहिमवत सम्बन्धि पञ्चविंशतिसहस्राणि द्वे शते त्रिंशदधिके कलाश्च चतस्रः २५२३० क० ४ इत्येव प्रमाण शोध्यते । शोधिते च शेषम् एककत्रिकः पञ्चक एककः शून्य च कला: षट् १३५१०६।१६ अस्यार्द्धे लब्ध योजनानां सप्तषष्टि शतानि पञ्चपञ्चाशदधिकानि तिस्रश्च कला: ६७५५ क० ३ इति । अथाऽस्य जीवामाह–'तस्स जीवे'त्यादि । तस्य हैमवतवर्षस्य जीवा उत्तरेण-उत्तरदिग्वर्त्तिनो प्राचीन-प्रतीचीनायता द्विधात -उभयतो लवणसमुद्र स्पृष्टा 'पच्चत्थिमिल्ल'ति । पश्चिमदिग्वर्त्तिनं यावत् स्पृष्टा । यावत्करणात् 'पुरत्थिमिल्लाए कोडोए पुरत्थिमिल्ल लवणसमुद्दमि'त्यादि दृश्यम् । अथ जीवाया: योजन-सङ्ख्यामाह–'सत्तत्तीसमि'त्यादि । सप्तत्रिंशद्योजनसहस्राणि षट् शतानि चतु:सप्तत्यधिकानि षोडश चैकोनविंशतिभागान् योजनस्य किञ्चिदूनान् ३७६७४ क. १६ आयामेन–दैर्घ्येण । अथ तस्य धनु: पृष्ठ-माह–'तस्स धणु'त्ति । तस्य धनुर्द्धनु पृष्ठ दक्षिणेन 'अट्ठतीसति । अष्टत्रिंशद्योजनसहस्राणि चत्वारिंशद-धिकानि सप्त योजनशतानि दश चैकोनविंशतिभागान् योजनस्य । तदपि-परिक्षेपेण परिधिना जीवा विमुच्य परिधिरेतावानेवेत्यर्थ: । अथास्यैव क्षेत्रस्य स्वरूप पृच्छति–'हेमवयस्स णमि'त्यादि । हैमवतस्य भदन्त ! वर्षस्य कीदृशक: आकारभावप्रत्यवतार:–आकारस्याकृतेर्भावा:–पर्यायास्तेषां प्रत्यवतार:–प्रत्यवतरण-माविर्भाव इत्यर्थ प्रज्ञप्त: ? । भगवानाह–गौतम ! बहुसमरमणीयोभूमिभाग: प्रज्ञप्त: । किंवदित्यतिदेश-माह–'तईअ समाणु'त्ति । तृतीया समा तृतीयारक: सुषमदुष्षमालक्षणा तदनुभावस्तत्सदृशपरिणति विशेषो ज्ञातव्य: ।

अथ तत्र वृत्तवैताढ्यविषय प्रश्नमाह—

कहि णं भंते ! हेमवए वासे सद्दावाई णामंवट्टवेअड्डपव्वए पण्णत्ते ?। गो० ! रोहिआए महा-णईए ! पच्चत्थिमेणं रोहिअंसाए महाणईए पुरत्थिमेणं हेमवयवासस्स बहुमज्झदेशभागे । एत्थ णं सद्दावाई णामं वट्टवेअड्डे पव्वए पण्णत्ते । एगं जोअणसहस्सं उड्ढं उच्चत्तेणं अड्ढाइज्जाइं जोअण-सयाइं उव्वेहेणं सव्वत्थ समे पल्लगसंठाणसंठिए एगं जोअणसहस्सं आयामविक्खंभेणं तिण्णि जोअणसहस्साइं एगं च बावट्ठिं जोअणसयं किंचिविसेसाहिए परिक्खेवेणं । सव्वरयणामए अच्छे। से णं एगाए पउमवरवेइआए एगेणं वणसंडेणं सव्वओ समंता संपरिक्खित्ते वेइआवणसंडवण्ण-ओ भाणिअव्वो । सद्दावइस्स णं वट्टवेअड्डस्स पव्वयस्स उवरिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते । तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स एत्थ णं एगे महं पासायवडिंसए पण्णत्ते । बावट्ठिं जोअणाइं अद्धजोअणं च उड्ढं उच्चत्तेणं एक्कतीसं जोअणाइं कोसं च आयामविक्खंभेणं जाव सीहासणं सपरिवारं । से केणट्ठेणं भंते ! एवं वुच्चइ सद्दावाई वट्ट-वेअड्डपव्वए वट्टवेअड्ड पव्वए ?। गो० सद्दावाइ वट्टवेअड्डे णं खुड्डाखुड्डिआसु वावीसु जाव बिलपंतिसु बहवेउप्पलाइं पउमाइं सद्दाविइप्पभाइं सद्दावइवण्णाइं सद्दावइवण्णाभाइं सद्दावई इत्थ देवे महिड्ढीए

**जाव महाणुभागे। से णं तत्थ चउण्हं सामाणिअ साहस्सीणं पलिओवमट्ठितीए जाव परिवसति रायहाणी अ णेअव्वा मंदरस्स पव्वयस्स दाहिणेणं अण्णंमि जंबुद्दीवे दीवे ॥**

'कहि णमि'त्यादि । क्व भदन्त ! हैमवते वर्षे शब्दापाती नाम्ना वृत्तवैताढ्यः प्रज्ञप्तः ? । भगवानाह–गौतम ! रोहिताया महानद्याः पश्चिमेन रोहितांशाया महानद्याः पूर्व्वेण हैमवतवर्षस्य बहुमध्यदेशभागे । 'एत्थ ण'ति । अत्रान्तरे शब्दापाती नाम्ना वृत्तवैताढ्यः । वृत्तविशेषणं भरतक्षेत्रवर्त्त्यायतवैताढ्यविनिवृत्त्यर्थं । पर्व्वतः प्रज्ञप्तः । स चैकं योजनसहस्रमूर्ध्वमुच्चैस्त्वेन अर्द्धतृतीयानि योजनशतानि उद्वेधेन सर्व्वत्र समः पल्यङ्कसंस्थानसंस्थितः मूलादारभ्योपरितलं यावत्सर्व्वत्र पल्याकृतिर्न तु विषम इत्यर्थः । एकं योजनसहस्रम् आयामविष्कम्भाभ्यां त्रीणि योजनसहस्राणि एकं च द्वाषष्टयधिकं योजनशतं किञ्चिद्विशेषाधिकं परिक्षेपेण–परिधिना । सर्व्वात्मना रत्नमयः अच्छः । 'से णमि'त्यादि प्राग्वत् । अथ तस्योपरिभूमौ किमस्तीति दर्शयति–'सद्दावइस्स णमि'त्यादि । प्राग्वत् । नवरं क्षुल्लहिमवत्कुमार देवस्थाने शब्दापाती देवो वक्तव्यः । अथ नाम्नो निमित्तं पृच्छति–'से केणट्ठेणमि'त्यादि । प्रश्नसूत्रं प्राग्वत् । भगवानाह–गौतम ! शब्दापातिवृत्तवैताढ्ये क्षुद्राक्षुद्रिकासु वापीषु यावद्विलपङ्क्तिषु बहून्युत्पलानि पद्मानि शब्दापातिप्रभाणि–शब्दापात्याकाराणि शब्दापातिवर्णानि शब्दापातिवर्णाभानि–शब्दापातिवर्णस्य वा भा प्रतिभासो येषां तानि । न चैवमितरेतराश्रयः । अनादिकालप्रवृत्तव्यवहारे तदभावात् । शब्दापातिदेवोऽत्र महर्द्धिको यावन्महानुभावः । 'से णमि'त्यादि । स शब्दापाती णमित्यलङ्कारे 'तत्थ'त्ति । तत्र शब्दापाती वृत्तवैताढ्ये चतुर्णां सामानिकसहस्राणामेतेन पदेन यावदाधिपत्यमित्यादि सूचितं ज्ञेयं । 'पलिओवम'त्ति । पल्योपमस्थितिको यावत्परिवसति । यावत्करणात्–'महोड्डीए' इत्यादि दृश्यं । राजधानी चास्य ज्ञातव्या । क्वेत्याह–'मंदरस्से' त्यादि । मन्दरस्य–मेरोर्दक्षिणतोऽन्यस्मिन्नितोऽपरस्मिन् जम्बूद्वीपेद्वीपे ।

अथ हैमवतस्य वर्षस्य नाम्नो निमित्तं पृच्छति

**से केणट्ठेणं भंते ! एवं वुच्चति हिमवते वासे ! हिमवते वासे ? गोअमा ! चुल्लहिमवंत महाहिमवंतेहिं ! वासहरपव्वएहिं दुहओ समवगूढे णिच्चं हेमं दलइ णिच्चं हेमं मुंचति णिच्चं । हेमं पगासइ हेमवए एत्थ देवे जाव पलिओवमठिईए परिवसइ । से तेणट्ठेणं गोअमा ! एवं वुच्चइ हेमवए वासे हेमवए वासे ॥**

'से केणट्ठेणमि'त्यादि प्रश्नः प्राग्वत् । गौतम ! क्षुल्लहिमवन्महाहिमवद्भ्यां वर्षधरपर्व्वताभ्यां द्विधातः–उभयतः समवगूढमन्तः प्रक्षिप्तमित्यर्थः । यथाक्रमं दक्षिणोत्तरयोः पार्श्वयोः कृतसीमापर्यन्तमित्यर्थः । ततश्च हिमवतोरिदं हैमवतं । यद्वा हेम–सुवर्णं प्रभूतं प्रशस्यं नित्ययोगि वाऽस्यास्तीति हिमवत् हिमवदेव हैमवतं प्रजादेराकृतिगणत्वात् प्रजादिभ्य इति स्वार्थिकेऽणिप्रत्यये सान्वर्थतैव नामनिमित्तम् । अथ नामनिमित्तभूतां क्रियामाह–'णिच्च'ति । नित्यं सततं हैमं ददाति तत्रत्यजनेभ्य आसनदानाभिर्ना प्रयच्छतीव तथा 'हेमं मुंच'ति'–उभयोः पार्श्वयोः कनकमयवर्षधरसद्भावात् हेमं मुञ्चतीव तथा नित्यं

हैम जनेभ्यः प्रकाशयतीव। अयंभावः तत्र युगलधर्म्मिकाणां मनुष्याणामुपवेशनशयनादिरूपोपभोगयोग्या। कनकमया बहवः शिलापट्टका. सन्ति । पश्यन्ति च ते यौगलिकमनुष्या तत्र तत्र प्रदेशे मनोहारिणो हेमः मयान् निवेशान् । अतस्तत्क्षेत्रमेव तथा विधासनादीननुज्ञापयतीवेत्यर्थः । तथाऽत्र हैमवतो नाम्ना देवो यावत्पल्यो पमस्थितिकः परिवसति । 'से तेणट्ठे ण'ति निगमनसूत्र प्राग्वत् ।

अथ यतो हैमवत वर्षं दक्षिणस्यां स महाहिमवान् क्वास्ति ? इति प्रश्नयति—

कहि णं भते ! जंबुद्दीवे दीवे महाहिमवंते णाम वासहरपव्वए पण्णत्ते ?। गो०! हरिवासस्स दाहिणेणं हेमवयस्स वासस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पचत्थिमेणं पचत्थिमलवणसमुद्दस्स पुरत्थिमेणं। एत्थ णं जंबुद्दीवे दीवे महाहिमवंते णामं वासहरपव्वए पण्णत्ते। पाईणपडीणायते उदीणदाहिणविच्छिण्णे पलिअंकसंठाणसंठिए दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठे पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे । दो जोअणसयाइं उड्ढं उच्चत्तेणं पण्णासं जोअणाइं उव्वेहेणं चत्तारि अ जोअणसहस्साइं दोण्णि अ दसुत्तरे जोअणसए दस य एगूणवीसतिभागे जोअणस्स विक्खंभेणं। तस्स बाहा पुरत्थिमपच्चत्थिमेणं नव जोअणसहस्साइं दोण्णि अ छावत्तरे जोअणसए नव य एगूणवीसतिभागे जोअणस्स अद्धभागं आयामेणं। तस्स जीवा उत्तरेणं पाईणपडीणायता दुहा लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठा पच्चत्थि० जाव पुट्ठा तेवण्णं जोअणसहस्साइं नव य एकतीसे जोअणसए छच्चएगूणवीसतिभागे जोअणस्स किंचिविसेसाहिए आयामेणं। तस्स धणू दाहिणेणं सत्तावण्णं जोअणसहस्साइं दोण्णि अ तेणउए जोअणसए दसयएगूणवीसतिभागे जोअणस्स परिक्खेवेणं रुअग संठाण संठिए सव्वरयणामए अच्छे उभओ पासिं दोहिं पउमवरवेइआहिं दोहिं वणसंडेहि अ परिक्खित्ते। महाहिमवंतस्स णं वासहरपव्वयस्स उप्पिं बहुसमरमणिज्जे भूमिभागे पं०। जाव णाणाविह पचवण्णेहिं मणिहि अ तणेहि अ उवसोहिए जाव आसयंति सयंति अ ।।

'कहि णं भते !'इत्यादि प्रश्ननिर्व्वचनसूत्रं प्राग्वत् । अथाऽस्योच्चत्वाद्याह-'दो जोअण'त्ति । द्वे योजनशते ऊर्ध्वमुच्चैस्त्वेन पञ्चाशत योजनान्युद्वेधेन चत्वारि योजनसहस्राणि द्वे दशोत्तरे योजनशते दश चैकोनविंशतिभागान् ४२१० क० १० योजनस्य विष्कम्भेन । 'तस्स वाह'त्ति । तस्य बाहे पूर्व्वपश्चिमाभ्यां द्वे स्त.। तयो. परिमाण तावत् 'नव जोअणे'त्यादि। नव योजनसहस्राणि द्वे च षट्सप्तत्यधिके योजनशते नव चैकोनविंशतिभागान् योजनस्य अर्द्धभाग च ६२७६ क० ६½ आयामेन ।'तस्स'त्ति। तस्य महाहिमवतो जीवा उत्तरेण-उत्तरदिग्वर्त्तिनी प्राचीनप्रतीचीनायता द्विधा लवणसमुद्र स्पृष्टा 'पुरत्थिमिल्लाए'त्ति।

प्राग्वत् । अथ तस्याः प्रमाणमाह–'तेवण्ण'त्ति । त्रिपञ्चाशत् योजनसहस्राणि नव चैकत्रिंशदधिकानि योजनशतानि षट् च एकोनविंशतिभागान् ५३९३१ क० ६ योजनस्य किञ्चिद्विशेषाधिकान् आयामत । 'तस्स धणू'त्ति । तस्य महाहिमवतो धनु पृष्ठ दक्षिणतः सप्तपञ्चाशत योजनसहस्राणि द्वे च त्रिनवत्यधिके योजनशतेदश चैकोनविंशतिभागान् ५७२९३ क. १० योजनस्य परिक्षेपेण । 'रुअग'त्ति । रुचकसस्थानेन सस्थितः 'सव्वे'त्यादि प्राग्वत् । अथाऽस्योपरि यदस्ति तदाह–'महाहिमवंतस्से'त्यादि । महाहिमवतो वर्षधरस्य पर्वतस्य 'उप्पि'त्ति । उपरि बहुसमरमणीयो भूमिभागः प्रज्ञप्तः । 'णाणाविह'त्ति । नानाविधैः पञ्चवर्णैर्मणिभिस्तृणैश्चोपशोभितः । 'जावआसयति'त्ति । याव दासते शेरते च यावत्करणात्तत्र क्रीडानिमित्तमागतानां देवादीनां वर्णकः प्रागुक्तोऽवसातव्य ।

तस्स णं बहुमज्झदेसभागे एत्थ णं महं एगे महापउमद्दहे णामं दहे पण्णत्ते । दो जोअणसहस्साइं आयामेणं एगं जोअणसहस्सं विक्खंभेणं दस जोअणाइं उव्वेहेणं अच्छे रययामए कूले एवं आयामविक्खंभविहूणा जा चेव पउमद्दहस्स वत्तव्वया सा चेव णेअव्वा । पउमप्पमाणं दो जोअणाइं अट्ठो जाव महापउमद्दहस्स वण्णाभाइं हिरी इत्थ देवी जाव पलिओवमट्ठिती या परिवसति । से तेणट्ठेणं गो०! एवं वुच्चति । अदुत्तरं च णं गो०! महापउमद्दहस्स सासए णामधिज्जेपण्णत्ते । जं ण कयाइं ण आसि ३ । तस्स णं महापउमद्दहस्स दक्खिणिल्लेणं तोरणेणं रोहिआ महाणदी पव्वूढा समाणी सोलस पंचुत्तरे जोअणसए पंच एगूणवीसतिभागे जोअणस्स दाहिणाभिमुही पव्वएणं गंता महया घडमुहपवत्तिएणं मुत्तावलिहारसंठिएणं साइरेगदुजोअणसइ पण पवाएणं पवडति । रोहिआ णं महाणई जओ पवडति इत्थणं महएगा जिब्भिआ प०। सा णं जिब्भिआ जोअणं आयामेणं अद्धतेरस जोअणाइं विक्खंभेणं कोसं बाहल्लेणं मगरमुहविउट्ट संठाणसंठिया सव्ववइरामई अच्छा । रोहिआ णं महाणई जहिं पवडइ तत्थ णं महं एगे रोहिअप्पवायकुंडे णामं कुंडे पण्णत्ते । सवीसं जोअणसयं आयामविक्खंभेणं पण्णत्ते । तिण्णि असीए जोअणसए किंचिविसेसूणे परिक्खेवेणं । दस जोअणाइं उव्वेहेणं अच्छे सण्हे । सो चेव वण्णओ वयरतले वट्टे समतीरे जाव तोरणा । तस्स णं रोहिअप्पवायकुंडस्स बहुमज्झदेसभागे इत्थ णं महं एगे रोहिअदीवे णामं दीवे पण्णत्ते । सोलस जोअणाइं आयाम विक्खंभेणं सातिरेगाइं पण्णासं जोअणाइं परिक्खेवेणं दो कोसेऊसिअं जलंताओ सव्ववयरामए अच्छे । से णं एगाए पउमवरवेइआए एगेण य वणसडेण य रोहिअदीवस्स णं उप्पिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते । तस्स णं बहुसमरमणिज्जस्स बहुमज्झदेसभागे एत्थ णं महं एगे भवणे पण्णत्ते । कोसं आयामेणं

सेसं तं चेव पमाणं च अट्ठो अ भाणिअव्वो। तस्स णं रोहिअप्पवायकुंडस्स दक्खिणिल्लेणं तोरणेणं रोहिता महाणदी पवूढा समाणी हेमवयं वासं एज्जेमाणी एज्जेमाणी सद्दावति वट्टवेअड्ढपव्वयं अद्धजोअणेणं असंपत्ता पुरत्थाभिमुही आवत्ता समाणी हेमवयं वासं दुहा विभयमाणी विभयमाणी अट्ठावीसाए सलिलासहस्सेहिं समग्गा अहे जगई दालइत्ता पुरत्थिमेणं लवणसमुद्दं समप्पेति। रोहिआ णं जहा रोहिअंसा पवहे अ मुहे अ भाणिअव्वा जाव संपरिक्खित्ता। तस्स महापउमद्दहस्स उत्तरिल्लेणं तोरणेणं हरिकंता महाणदी पवूढा समाणी सोलस पंचुत्तरे जोअणसए पंच य एगूणवीसतिभागे जोअणस्स उत्तराभिमुही पव्वएणं गंता महया घडमुहपवत्तिएणं मुत्तावलिहारसंठिएणं सातिरेगदुजोअणसइएणं पवाएणं पवडति। हरिकंता महाणदी जतो पवडति एत्थ णं महं एगा जिब्भिआ पण्णत्ता। दो जोअणाइं आयामेणं पणवीसं जोअणाइं विक्खंभेणं अद्धजोअणं बाहल्लेणं मगरमुहविउट्टसंठाणसंठिआ सव्वरयणामया अच्छा। हरिकंता णं महाणदी जहिं पवडति इत्थ णं एगे हरिकंतप्पवायकुंडे णामं कुंडे पण्णत्ते। दोण्णि अ चत्ताले जोअणसए आयामविक्खंभेणं सत्त य अउणट्ठे जोअणसए परिक्खेवेणं अच्छे एवं कुंडवत्तव्वया सव्वा णेअव्वा जाव तोरणा। तस्स णं हरिकंतप्पवायकुंडस्स बहुमज्झदेसभागे एत्थ णं महं एगे हरिकंतदीवे णामं दीवे पण्णत्ते। बत्तीसं जोअणाइं आयामविक्खंभेणं एगुत्तरं जोअणसयं परिक्खेवेणं दो कोसे ऊसिए जलंताओ सव्वरयणामए अच्छे। से णं एगाए पउमवरवेइआए एगेण य वणसंडेण य जाव संपरिक्खित्तो वण्णओ भाणिअव्वो। पमाणं सयणिज्जं च अट्ठो अ भाणिअव्वो। तस्स णं हरिकंतप्पवायकुंडस्स उत्तरिल्लेणं तोरणेणं जाव पवूढा समाणी हरिवासं वासं एज्जेमाणी एज्जेमाणी विअडावइं वट्टवेअड्ढं जोअणेणं असंपत्ता पच्चत्थिमाभिमुही आवत्ता समाणी हरिवासं दुहा विभयमाणी विभयमाणी छप्पण्णाए सलिलासहस्सेहिं समग्गा अहे जगतिं दालइत्ता पच्चत्थिमिल्लं लवणसमुद्दं समप्पेति। हरिकंता णं महाणदी पवहे पणवीसं जोअणाइं विक्खंभेणं अद्धजोअणं उव्वेहेणं। तयाणंतरं च णं मायाए मायाए परिवड्ढमाणी परिवड्ढमाणी मुहमूले अड्ढाइज्जाइं जोअणसयाइं विक्खंभेणं पंच जोअणाइं उव्वेहेणं उभए पासिं दोहिं पउमवरवेइआहिं दोहिं अ वणसंडेहिं संपरिक्खित्ता ॥

'तस्स णमि'त्यादि। तस्य—महाहिमवतो बहुमध्यदेशभागे अत्रान्तरे एको महापद्मह्रदो नाम्ना ह्रदः प्रज्ञप्तः। तस्यायामाद्याह—'दो जोअणे'त्यादि। द्वे योजनसहस्रे आयामतः एकं योजनसहस्रं

परिक्षिप्ता । दिशा क्रमस्तु 'पुरत्थिमेण असोगवणे'इत्यादि राजप्रश्नीयादितोऽवमातव्य. । किंलक्षणा वनखण्डा: ? 'किण्हा'इत्यादि । कृष्णा: 'वण्णओ'त्ति । वनखण्डवर्णक । स चैव-'किण्होभासा नीला नीलोभासा जाव पुरम्मा' इत्यादि । तथा 'भूमिओ'त्ति । भूमयो बहुसमा मनोज्ञा इत्यादिरूपा भणितव्या: 'पासाय'त्ति प्रासादावतमकाश्च भणितव्या. । यावत् 'तत्थ ण बहवे वाणमन्तरा देवा देवीओ अ आसयति सयति चिट्ठति णिसीअति तुअट्टति हसति ललति कीडति मोहति पोरापोराणाण सुचिण्णाणं सुपडिक्कताण सुभाण कडाणं कम्माण कल्लाणाण कल्लाणफलविवाग पच्चणुभवमाणा विहरता'ति पर्यन्त वक्तव्यम् । अथ यमिकयो राजधान्योर्मध्ये यदस्ति तदाह-'जमिआणमि'त्यादि । यमिकयो राजधान्योरन्तर्मध्ये प्रत्येक बहुसमरमणीयो भूमिभाग. प्रज्ञप्त । वण्णओ'त्ति । वर्णकश्चात्र-'से जहा णाम ए'इत्यादि यावत् नानामणिपञ्चवर्णमणिभिरुपशोभितस्तृणशब्दविहीनो यावद्देवा देव्यश्च आसते शेरते इत्यादि प्राग्वत् । अथ 'तस्स ण बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे एत्थ ण एगे महं उवा रआलयणे पण्णत्ते। बारस जोअण इ आयामविक्खभेणमि'त्यादिसूत्र श्रीजीवाभिगमतोऽध्याहृत्याऽध्येतव्यम् । तत्र उपकारिकालयनम्-उपकरोत्युपष्टम्नातीति उपकारिका-राजधानीस्वामिसत्कप्रासादावतमकादीना पीठिका । उपकारिका लयनमिवोपकारिकालयन यत् । अन्यथा 'तिण्णि जोअणसहस्साइमि'त्यादि परिक्षेपप्रतिपादकसूत्रानुपपत्ते. विष्कम्भाद्युपेतपदार्थपरिज्ञानाभावे कस्य परिक्षेप उपवर्ण्यते ? ग्रामो नास्ति कुत सीमे'ति वचनात् । अथाध्याहृतसूत्रस्याभिधेय यदुपकारिकालयन तस्य परिधिमाह-'तिण्णि जोअणे'त्यादि । त्रीणि योजनसहस्राणि सप्त च पञ्चनवत्यधिकानि योजनशतानि परिक्षेपेण अर्द्धयोजन बाहल्येन । 'सव्वजबु'त्ति। सर्वात्मना जाम्बूनदमये द्विवचन च द्वयो राजधान्यो: प्रत्येकमेकैकसद्भावेनोपकारिकालयनद्वयसद्भावात् 'अच्छा'इत्यादि प्राग्वत् । ते चोपकारिकालयने न स्वरूपमतो किन्तु पद्मवरवेदिकापरिक्षिप्ते इत्यत आह-'पत्तेअ पत्तेअ'ति । ते चोपकारिकालयने प्रत्येक पद्मवरवेदिकया परिक्षिप्ते-परिवेष्टिते । प्रत्येक प्रत्येकं 'वणसंडे'त्ति। वन खण्डेन परिक्षिप्ते । 'वण्णओ'त्ति । पद्मवरवेदिकावनखण्डयोर्वर्णको जगत्या इवेहापि भणितव्य. । तिसोवाण'त्ति । त्रिसोपानप्रतिरूपकाणि तोरणानि चतुर्दिशि भूमिभागाश्च चत्वारो गम्या: भणितव्या. । अथोपकारिकालयनगतप्रासादावतंसकस्वरूपमाह-'तस्स णमि'त्यादि । तस्योपकारिकालयनस्य बहुमध्यदेशभागे अत्रान्तरे प्रासादावतंसक प्रज्ञप्त. । द्वाषष्टि योजनानि अर्द्ध योजन चोर्ध्वमुच्चैस्त्वेन एकत्रिंशत योजनानि क्रोश चायामविष्कम्भाभ्या 'वण्णओ'त्ति । विजयराजधानीप्रासादावतसकवर्णकवदस्य वर्णकोऽपि वक्तव्य: । स चैवम्-'अब्भुग्गयमूसिअपहसिए इवे'त्यादिरूप: । तत्र उल्लोचा भूमिभागा: सिंहासनानि सपरिवाराणि च तथैव वक्तव्यानि । एव 'पासायपतीओ'त्ति । एव प्रासादावतसकवत् प्रासादपङ्क्तयोऽपि । नवरं प्रथमपङ्क्तिगताश्चत्वारोऽपि प्रासादा मूलप्रासादावतसकापेक्षया तदर्द्धोच्चत्वादिका । यत एवमत आह-'पढमा तीस'त्ति । एकत्रिंशत योजनानि क्रोश चोर्ध्वमुच्चैस्त्वेन 'साइरेगाइं' [illegible] सातिरेकाणि अर्द्धक्रोशाधिकानि अर्द्ध षोडशयोजनानि-सार्द्ध पञ्चदशयोजनानि आयामविष्कम्भाभ्या [illegible] वर्णेन मूलप्रासादावतसकवर्णकमपि राजप्रश्नीयोक्त वक्तव्य यावद्देवा देव्यश्च आसते इत्यादि पर्यन्त । नवरं मूलप्रासादावतंसके पल्योपमस्थितिका देवा परिवसन्ति । अत्र तु पल्योपमार्द्ध-

स्थ वा । पङ्क्तावपि चतसृषु दिक्षु परिविरूपाऽवसातव्या । न पुन. श्रेणिगतविमानवदेकदिग् समश्रेणि । यतो जीवाभिगमे विजयदेवस्य प्रासादावतसकाधिकारे-'से ण पासायवडिसए अण्णेहि चउहिं तदद्धुच्चत्पमाणमित्तेहिं पासायवडिसएहिं सव्वओ समता सपरिक्खित्ते' इति यद्भणित तदिहापि द्रष्टव्य तुल्यवक्तव्यत्वात् । अथ द्वितीयपङ्क्तिमाह-'.वतीअ'त्ति । द्वितीयाऽनन्तरोक्तपङ्क्त्यपेक्षयाऽपरेत्यर्थ. । वक्तव्येति गम्य । 'तत्थ'त्ति शेप । तत्र पोडश प्रासादावतसकसङ्ख्याकाया द्वितीयपङ्क्तौ 'ते ण'ति । ण प्राग्वत् ते प्रासादावतसका अर्द्धपोडशयोजनान्यूर्ध्वमुच्चैस्त्वेन सातिरेकाणि क्रोशचतुर्थांशसहितानि 'अद्धट्ठ'त्ति । अर्द्धाष्टयोजनानि-सार्द्धसप्तयोजनानीत्यर्थ । आयामविष्कम्भाभ्या । अत्रापि 'वण्णओ' इत्याद्यनुक्तमपि प्राग्वदवसातव्य । नवर पल्यचतुर्थांशस्थितिका देवा परिवसन्तीति वक्तव्यम् । अथ तृतीयपङ्क्तिमाह- त'तअपासाये'त्यादि । तृतीयप्रासादपङ्क्तिर्वक्तव्येति गम्य । 'तत्थ'त्ति । शेषोऽत्रापि द्रष्टव्य । तत्र चतुष्पष्टिप्रासादसङ्ख्याकाया तृतीयपङ्क्तौ 'ते ण'ति । ते प्रासादावतसका ण प्राग्वत् 'अद्धट्ठमाइ'ति । अर्द्धाष्टमानि-सार्द्धसप्तयोजनानि साधिकानीत्यनुक्तमपि द्रष्टव्य । पूर्व्वप्रासादापेक्षयाऽर्द्धोच्चत्वाद्युपेतत्वात् तेन पादोनान्यष्टयोजनानीत्यर्थ ऊर्ध्वमुच्चैस्त्वेन 'सातिरेगाइ'ति । सातिरेकाणि सार्द्धत्रियोजनानि सार्द्धमप्तचनुशतोनानि चत्वारि योजनानीत्यर्थ आयामविष्कम्भाभ्या । 'वण्णओ'त्ति । वर्णक: प्राग्वदशेपो वक्तव्य. । 'सीहासणे'त्यादि । सिंहासनानि सपरिवाराणि वक्तव्यानि । यद्यपि जीवाभिगमे विजयदेवप्रासादावतसकानि प्रथमतृतीयपङ्क्त्योर्भद्रासनानि द्वितीयपङ्क्तौ च पद्मासनानि भणितानि तथापीह सर्व्वत्रापि सिंहासनान्येव तृतीयपङ्क्तौ सूत्रे सिंहासनानामेव भणितत्वात् । अत्र च देवानां स्थिति. पल्योपमाष्टमभागरूपाऽवसातव्या । अथ सर्व्वास्वपि देवराजधानीषु सुधर्म्मा सभा समस्त्येव । सा च कस्या दिशि ? इत्याह-'तेसि णमि'त्यादि । तयो. प्रागुक्तस्वरूपयोर्मूलप्रासादावतसकयोरुत्तरपौरस्त्ये दिग्भागे ईशान्यामित्यर्थ । 'एत्थ ण'ति । अत्रान्तरे यमकयोर्देवयो सुधर्मे सभे प्रज्ञप्ते । तत्र सुशोभना धर्म्मा -छन्दकरूपा यस्या सा सुधर्म्मा-विशिष्टच्छन्दकोपेतेत्यर्थ । यद्वा सम्यक्त्वनैर्मल्यहेतुत्वेन प्रधानतरो धर्म्म कारणे कार्योपचारात् धर्म्महेतवो यमकदेवयोरन्येषा च बहूना सम्यग्दृशा देवाना देवीना चार्च्चनीया यावत्पर्युपासनीया वज्रमयेषु गोलकवृत्तेषु समुद्गकेषु जिनदंष्ट्रा विद्यन्ते यस्या सा सुधर्म्मा । अथवा तत्रागताना सम्यग्दृशा देवदेवीना जिनदंष्ट्रार्च्चनाद्यभिप्राय समुपजायते तेन सम्यक्त्वनैर्मल्यहेतुजिनदंष्ट्रार्च्चनादिलक्षणो धर्म्मो यस्या सा सुधर्म्मा एवविधा च सभा द्वयो राजधान्योरस्त्यैवातो द्वे वक्तव्ये । अथ तयोरायामाद्याह-'अद्धतेरसे'त्यादि । अर्द्धत्रयोदशयोजनान्यायामेन पट् सक्रोशानि योजनानि विष्कम्भेन नवयोजनान्यूर्ध्वमुच्चैस्त्वेन । अथ कीदृशे ते सभे ? इत्याह-'अणेग'त्ति । अनेकस्तम्भशतसन्निविष्टे । अतिदिशति-'सभा वण्णओ'त्ति । सभावर्णकः इह जीवाभिगमोक्तो वक्तव्य: । स चैवम्-'अब्भुग्गयसुकयरइअवेइआओ तोरणरइअसालिभजिआओ' इत्यादि यावत् 'अच्छाओ पडिरूवाओ'त्ति । अथ तयोर्द्वारवक्तव्यतामाह 'तासि णमि'त्यादि । तयो:-सुधर्म्मयो. सभयोस्तिसृषु दिक्षु त्रीणि द्वाराणि प्रज्ञप्तानि पश्चिमाया द्वाराभावात् तानि द्वाराणि द्वे योजने ऊर्ध्वमुच्चैस्त्वेन योजनं विष्कम्भेन 'तावतिअ'त्ति । तावदेव योजनमेव प्रवेशेन । 'सेअ'त्ति । श्वेतानि । 'वण्णउ'त्ति । वर्णको

वक्तव्यः । स चेव-'कणगथूभिआगा' इत्यादि । द्वारवर्णन तावद्वक्तव्यं यावद् 'वनमाला'त्ति । वनमाला वर्णन । अथ तेषां द्वाराणा पुरतो यदस्ति तदाह-'तेसि ण दाराणमि'त्यादि । तेषां द्वाराणां पुरतः प्रत्येकं प्रत्येकं त्रयो मुखमण्डपा प्रज्ञप्ताः । 'ते ण'ति । ते च मुखमण्डपा. अर्द्धत्रयोदशयोजनान्यायामेन षट् सक्रोशानि योजनानि विष्कम्भेन सातिरेके द्वे योजने ऊर्ध्वमुच्चैस्त्वेन 'जाव दारा'इत्यादि । यावद् द्वाराणि भूमिभागाश्च वर्णनीया यावत्करणात् 'अणेगखंभसयसन्निविट्ठा' इत्यादि सभावर्णन निरवशेषमिहा-प्यवतारणीय यावन्मणीना स्पर्श इत्यादि । अथ मुखमण्डपानामपि पुरतो यदस्ति तदाह-'पेच्छाघरे'त्यादि । प्रेक्षागृहमण्डपानां 'त चेव'त्ति । तदेव प्रमाण यदेवमुखमण्डपानामित्यर्थ । एतावदक्षरसूचित सूत्र-रचनात्वेव-'तेसि ण मुहमंडवाण पुरतो पत्तेअ पत्तेअ तओ पेच्छाघरमंडवा पण्णत्ता । ते ण पेच्छाघर-मंडवा अद्धतेरस जोअणाइ आयामेण'इत्यादि 'भूमिभागा'त्ति । प्रेक्षागृहमण्डपानां भूमिभागो वर्णनीय. यावन्मणोना स्पर्श 'मणिपेढिअ'त्ति । तत्र भूमिभागे मणिपीठिका भणनीया । तासा स्थितिरित्थमेव-'तेसि ण बहुसमरमणिज्जाण भूमिभागाण बहुमज्झदेसभागेसु पत्तेअ पत्तेअ वयरामया अक्खाडगा पण्णत्ता । तेसि ण वयरामयाण अक्खाडगाण बहुमज्झदेसभागे पत्तेअ पत्तेअ मणिपेढिआ पण्णत्ता'इति । इत्याद्य-पाटकाश्चतुरस्राकारा 'ताओ ण ति । ताश्च मणिपीठिका योजनमेकमायामविष्कम्भाभ्याम अर्द्धयोजन बाहल्येन सर्वात्मना मणिमय्य 'अच्छा' इत्यादि प्राग्वदवसातव्य । 'सीहासणा'त्ति । सिंहासनानि भणितव्यानि । तद्भणितिरेव-'तासि ण मणिपेढिआण उप्पि पत्तेअ पत्तेअ सीहासणे पण्णत्ते' इत्यादि । 'तेसि णमि' त्यादि । तेषां प्रेक्षागृहमण्डपकाना पुरतो मणिपीठिकाः । जीवाभिगमे तु-'तेसि पेच्छाघरमंड-वाण उप्पि अट्टट्टमगलज्झया छत्तातिच्छत्ता'त्ति पाठ । स चेहापि वक्तव्यस्तुल्यवक्तव्यत्वात् । तदनन्तर मणिपीठिकासूत्र । 'ताओ ण ति । ताश्च मणिपीठिका योजनमेकमायामविष्कम्भाभ्याम् अर्द्धयोजन बाहल्येन सर्वात्मना मणिमय्यः । 'तेसि णमि त्यादि । तासा मणिपीठिकानामुपरि प्रत्येक त्रय. स्तूपा । जीवाभिगमे तु 'तओ चेइअथूभा'इतिपाठस्तेनात्रापि स्तूपाश्चैत्यस्तूपा ज्ञातव्या । 'ते ण'ति । ते चैत्यस्तूपा द्वे योजने ऊर्ध्वमुच्चैस्त्वेन योजनमायामविष्कम्भाभ्या ते च स्तूपा श्वेता. । श्वेतत्वमेवोपमयाह-'सख-तले'ति यावत् करणात् 'सखतलविमलनिम्मलदधिघणगोखीरफेणरययनिअरप्पगासा सव्वा रयणामया अच्छा जाव पडिरूवा'त्ति । तत्र विमल मलरहित यच्छङ्खतलमुपरि-नो भागः प्राकृतत्वात् विशेषणस्य परनिपातः निर्मलो दधिघनो-घनीभूत दधि क्षीर-गोदुग्ध तस्य फेनो रजतनिकरश्च एते सम प्रकाशो येषा ते तथा शेष प्राग्वत् । 'अट्ठट्ठ'त्ति । तेषा स्तूपानामुपरि अष्टावष्टौ मङ्गलकानि । 'तेसि थूभाण-मि'त्यादि । तेषा स्तूपाना चतुर्दिशि-चतसृषु दिक्षु एकैकस्या दिशि एकैकमणिपीठिकासद्भावेन चतस्रो मणिपीठिकाः प्रमाणतो योजनमायामविष्कम्भाभ्याम् अर्द्धयोजन बाहल्येन । 'सव्वमणिमईओ' इत्यादि सग्राह्य । 'जिणपडिमाओ त्ति । जिनप्रतिमा वक्तव्या । तच्चेव- तासि ण मणिपेढिआण उप्पि पत्तेअ पत्ते-अ चत्तारि जिणपडिमाओ जिणुस्सेहप्पमाणमेत्ताओ पलिअकणिसण्णाओ थूभाभिमुहीओ सन्निक्खित्ताओ चिट्ठति । त०-उसभा वद्धमाणा चदाणणा वारिसेणा'इत्यादि । तत्र जिणुस्सेह'त्ति । जिनोत्सेधप्रमाण-मात्रा । जिनोत्सेधस्तूत्कर्षत. पञ्च धनु शतानि जघन्यतः सप्त हस्ताः परमिह जीवाभिगमवृत्तौ पञ्च धनु'-

शतान्युक्तानि । 'चेइअरुक्खाणमि'त्यादि । चैत्यवृक्षाणा मणिपीठिका द्वे योजने आयामविष्कम्भाभ्यां योजन बाहल्येन । अथ चैत्यवृक्षमणिपीठिकाप्रमाणनिरूपण चैत्यवृक्षस्वरूपे निरूपिते सति शोभनमत आह—'चेइअरुक्खवण्णओ'त्ति । चैत्यवृक्षवर्णको वक्तव्य । स चैव—'तासि ण मणिपेढिआण उप्पि पत्तेअ पत्तेअ चेइअरुक्खे पण्णत्ते । ते ण चेइअरुक्खा अट्ठ जोअणाइ उड्ढ उच्चत्तेण अद्धजोअण उव्वेहेण दो जोअणाइ खधो अद्धजोअण विक्खभेण छज्जोअणाइ विडिमा बहुमज्झदेसभागे अट्ठ जोअणाइ आयाम-विक्खभेण साइरेगाइ अट्ठ जोअणाइ सव्वग्गेण पण्णत्ताइ'ति । 'तेसि ण चेइअरुक्खाण अयमेआरूवे वण्णावासे पण्णत्ते । त०— वइरामयमूलरइअसुपइट्ठिअविडिमा रिट्ठमयविउलकदवेरुलिअरुइलखधा सुजायवरजायरूवपढमयविसालसाला' सुजात-मूलद्रव्यशुद्ध वर-प्रधान यज्जातरूप-सुवर्ण तदात्मका प्रथमका —मूलभूता विशाला शाला —शाखा येषा ते तथेति । णाणामणिरयणविविहसाहप्पसाहवेरु-लिअपत्ततवणिज्जपत्तवेटा जबूणयरत्तमउअपवालपल्लववरकुरधरा - विचित्तमणिरयणसुरभिकुसुमफल-भरिअणमिअसाला सच्छाया सप्पभा सस्सिरीआ सउज्जोआ पासादीया०'इति । एते च चैत्यवृक्षा, अन्यै-र्बहुभिस्तिलकलवकछत्रोपगशिरीषसप्तपर्णदधिपर्णलुध्रकधवचदननीपकुटजकदम्बपनसतालतमालप्रिया-लप्रियडगुपारापतराजवृक्षनन्दिवृक्षै सर्व्वत समन्तात् सम्परिक्षिप्ता । ते च तिलकादयो मूलवन्त कन्दवन्त इत्यादि राजप्रश्नीयोक्तमशोकवृक्षवर्णनमवसातव्य । तथा तेषा चैत्यवृक्षाणामुपरि प्रत्येक प्रत्येकम् अष्टावष्टौ मङ्गलकानि ध्वजा छत्रातिछत्रादीनि च जीवाभिगमतोऽवसातव्यानि । अथोक्तस्व-रूपाणा चैत्यवृक्षाणा पुरत प्रत्येक प्रत्येक तिसृषु दिक्षु तिस्रो मणिपीठिका प्रज्ञप्ता । ताश्च मणिपीठिका योजनमायामविष्कम्भेन अर्द्धयोजन बाहल्येन सर्व्वात्मना मणिमय्य इत्यादिवर्णन प्राग्वत् । 'तासि णमि'त्यादि । तासा मणिपीठिकानामुपरि प्रत्येक प्रत्येक महेन्द्रध्वजा प्रज्ञप्ता । 'ते ण'त्ति । ते च महेन्द्र-ध्वजा अर्द्धाष्टमानि-सार्द्धानि सप्त योजनानि ऊर्ध्वमुच्चैस्त्वेन अर्द्धक्रोशमुद्वेधेन अर्द्धक्रोश बाहल्येन विष्कम्भेन-विस्तारेणेत्यर्थ । 'वयरामयवट्टवण्णओ'त्ति । वज्रमयवृत्तोपलक्षित वर्णकसूत्र राजप्रश्नी-योक्त वक्तव्य । तच्चैत्र—'वयरामयवट्टलट्ठसठिअसुसिलिट्ठपरिघट्ठमट्ठसुपइट्ठिआ' वज्ररत्नमया वृत्त-वर्त्तुल लष्ट मनोज्ञ सस्थित-सस्थान येषा ते वृत्तलष्टसस्थिता । तथा सुश्लिष्टा यथा भवन्ति एव परिघृष्टा इव खरशानया पाषाणप्रतिमेव सुश्लिष्टपरिघृष्टा मृष्टा —सुकुमारशानया पाषाणप्रतिमावत् सुप्रतिष्ठिता मनागपि चलनाऽसम्भवात् 'विसिट्ठा अणेगवरपचवण्णकुडभीसहसपरिमडिआभिरामा' कुडभीसहस्रैर्लघुपताकासहस्रै 'वाउद्धुअ विजयवेजयती पडागछत्तातिच्छत्तकलिआ तुगा गगणतलम-भिलघमाणसिहरा पासादीया जाव पडिरूवा' इत्यादि । अथ महेन्द्रध्वजाना, पुरतो यदस्तितत्वेन वर्णनीय तदाह—'वेइगावणसडे'त्यादि । वेदिकादयो हि नन्दापुष्करिणीना परितोऽतस्तद्वर्णनपूर्व्वक वेदिकादयो वक्तव्या । तच्चैव—महेन्द्रध्वजाना पुरतस्तिसृष्वपि दिक्षु तिस्रो नन्दापुष्करिण्य । ताश्च सार्द्धद्वादश-योजनायामा सक्रोशषट्योजनविष्कम्भा दश योजनोद्वेधा अच्छा श्लक्ष्णा रजतमयकूला प्रत्येक पद्मवरवेदिकावनखण्डाभ्या परिक्षिप्ता । तासा च त्रिदिशि त्रिसोपानप्रतिरूपकाणि तेषा च वर्णन प्राग्वत् । एव तोरणानामपि वर्णनमवसातव्यम् । अथ सुधर्म्मायो सभयोरन्तर्यदस्ति तदाह-'तासि णमि'

त्यादि। तयो सुधर्म्मसभयो षट् षट् मनोगुलिकासहस्राणि प्रज्ञप्तानि। तत्र मनोगुलिका नाम पीठिका ऽवसातव्या। अथ तासामेव दिग्विभागेन विशेषमाह—'पुरत्थिमेण'ति। पूर्व्वस्या दिशि द्वे मनोगुलिकाना सहस्रे प्रज्ञप्ते। पश्चिमाया द्वे सहस्रे। दक्षिणस्यामेकमेक चोत्तरस्यामपीति 'जाव'त्ति। यावद्दामानि तिष्ठन्ति। यावत्करणात् एतासु फलकनागदन्तकमाल्यदामवर्णन प्राग्वत् द्रष्टव्यम्। अथ सङ्ख्याम-धिकृत्य गोमानसिकाविषयेऽतिदेशमाह—'एवमि'ति। एव मनोगुलिकावत् गोमानसिका अपि वक्तव्या। तत्र गोमानसिका नाम शय्यारूपा स्थानविशेषा। ता अपि षट् सहस्राणि। तत्सूत्र त्वेव—'सभाए सोहम्माए छग्गोमाणसिआसाहस्सीओ पण्णत्ताओ। त जहा-पुरत्थिमेण दो साहस्सीओ' इत्यादि। अथ विशेषमाह-'णवर'ति। नवरमत्र धूपघटिका। ताश्च मनोगुलिकासु न सन्तीत्यर्थ। तत्सूत्र त्वेव-'तासु ण गोमाणसीसु वहवे सुवण्णरूप्पमया फलगा पण्णत्ता। जाव तेसु ण वयरामएसु णागदतएसु वहवे रययामया सिक्कगा प०। तेसु ण वयरामएसु सिक्कएसु वहवे वेरुलिअमईओ धूवघडीओ कालागुरुपवरकुदुरु-क्कतुरुक्क जाव घाणमणणिव्वुइकरेण गधेण सव्वओ समता आपूरेमाणीओ चिट्ठ ति'त्ति। अथापरमपि तत्र यदस्ति तदाह—'तासि णमि'त्यादि। तयो सुधर्म्मसभयो 'पत्तेअ'ति गम्य। प्रत्येव मध्यमध्ये वहुसमर-मणीये भूमिभागे मणिपीठिके 'दो जोअणाइ'ति। द्वे योजने आयामविष्कम्भेन योजन वाहल्येन प्रज्ञप्ते इति गम्य। 'तासि ण'ति तयोर्मणिपीठिकयोर्यावदुपरि माणवकनाम्नि चैत्यस्तम्भे महेन्द्रध्वजप्रमाणे सार्द्धसप्तयोजनोच्चेऽर्द्धक्रोशोद्वेधे क्रोशविष्कम्भे इत्यर्थ। 'उवरि'ति। उपरि षट् क्रोशानवगाह्य उपरित-नभागान् षट् क्रोशानधोऽवतीर्येत्यर्थ। 'हेट्ठ'त्ति। अधस्तात् अपिर्गम्य अधस्तादपि षट् क्रोशान् वर्ज्ज-यित्वा मध्ये सार्द्धचतुर्योजनेषु 'जिणसकहाउ'त्ति। जिनदष्ट्रा प्रज्ञप्ता। अय भाव -माणवकनाम्नश्चैत्य-स्तम्भस्यार्द्धपञ्चमयोजनप्रमाणरूपे मध्यभागे सुवर्णरूप्यमयानि फलकानि तेषु वज्रमया नागदन्तास्तेषु च रजतमयानि सिक्ककानि तेषु च वज्रमया गोलवृत्ता समुद्गका तेषु समुद्गकेषु यमकदेवयोरन्येषा च वहूनां सम्यग्दृशा वानमन्तराणा देवाना देवीना च अर्च्चनीया वन्दनीया पूजनीया सत्कारणीया सन्माननीया यावत्कल्याण मगल दैवत चैत्यमिति वुध्या पर्युपासनीया जिनदष्ट्रा सन्निक्षिप्तास्तिष्ठन्तीति जिनै प्रज्ञप्ता। अत्र माणवकचैत्यस्तम्भयोरुपरि अष्टावष्टौ मङ्गलकानि छत्रातिछत्राणीत्यादि प्राग्वत् द्रष्टव्यानि। अथ माणवकचैत्यस्तम्भस्य कस्यां दिशि किमस्ति ? इत्याह—'माणवगस्से'त्यादि। माण-वकस्य पूर्व्वस्या दिशि सिंहासनानि सपरिवाराणि भणितव्यानि। तत्रैक सिंहासन शेषाणि भद्रासनानि सम्भाव्यन्ते। विजयदेवस्य तथैवोक्तत्वात्। सिंहासनवर्णन तु प्राग्वत्। 'पच्चत्थिमेण'ति। पश्चिमेन शयनीय 'वण्णओ'त्ति। वर्णकस्तस्य जीवाभिगमतोऽवसेय। स चैव-'तस्स ण देवसयणिज्जस्स अयमेआरूवे वण्णावासे पण्णत्ते। त जहा—'णाणामणिमया' 'पडिपाया' मूलपादाना प्रति विशिष्टोपष्टम्भकरणाय पादा प्रतिपादा 'सोवण्णिआ पाया णाणामणिमया पायसीसगा जवूणयमयाइं गत्ताइ वइरामया सधी णाणामणिमए विच्चे अणे रययामई तूली लोहिअक्खमया विव्वोअणा तवणिज्जमया गडोवहाणिआ से ण देवसयणिज्जे सालिंगणवट्टिए दुहा विव्वोअणे दुहा उण्णए मज्झे णयगभीरे गगापुलिणवालुउद्दाल-सालिसए उवचिअखोमदुगुल्लपट्टपडिच्छायणे सुविरइअरयत्ताणे रत्तसुअ सवुए सुरम्मे आईणगरूतवूरण-

वणीअतूलफासे मउए पासाइए० इत्यादि । 'सयणिज्जाणमि' त्यादि । शयनीययोर्देवशयनीययो द्विवचन च द्वयोर्यनकदेवयो शयनीयद्वयविवक्षणात् । उत्तरत क्षुल्लकमहेन्द्रध्वजौ प्रतिशयनीयमेकैक-सद्भावात् 'मणिपेढिआविहूण'त्ति । मणिपीठिकाविहीनौ महेन्द्रध्वजप्रमाणौ प्रज्ञप्ताविति गम्यम् । अथ क्षुल्लकमहेन्द्रध्वजयो कस्या दिशि किमस्ति ? इत्याह–'तेसि ण अवरेणमि'त्यादि । तयो-क्षुल्लक-महेन्द्रध्वजयो अपरेण-पश्चिमेन चोप्पालौ-चोप्पालनामानौ प्रहरणकोशौ–प्रहरणभाण्डागारौ प्रज्ञप्तौ । 'तत्थ णमि'त्यादि । तत्र चोप्पालाभिधानप्रहरणकोशयो वहूनि परिघरत्नप्रमुखाणि 'जाव चिट्ठ ती'ति । यावत्तिष्ठन्ति । यावत्करणात् 'प्रहरणरयणसपरिक्खित्ता उज्जलसुनिम्मिअसुतिक्खधारा पासाईआ' इत्यादि । तत्र उज्ज्वलानि–निर्म्मलानि सुनिशितानि-अतितेजितानि । अत एव तीक्ष्णधाराणीति । 'सुह-म्माणमि'त्यादि । सुधर्म्मयो सभयोरुपरि अष्टावष्टौ मङ्गलकानीत्यादि तावद्वक्तव्य यावत् सहस्रपत्र-हस्तका सर्व्वरत्नमया अच्छा इत्यादि । 'तासि ण'ति । तयो-सुधर्म्मयो 'उत्तरपुरत्थिमेण'ति । उत्तर-पूर्व्वस्यामीशान्या सिद्धायतने प्रज्ञप्ते । प्रतिसममेकैकसद्भावात् सिद्धाना-तीर्थकृतामायतने-गृहे सिद्धाय-तने 'एसेव'त्ति । एप एव सुधर्म्मसभासम्बन्ध्येव जिनगृहयोरपि गम'-सूत्रपाठो ज्ञातव्य । स चैव–'तासि ण सुहम्माण सभाण उत्तरपुरत्थिमे दिसिभागे एत्थ ण दुवे सिद्धायतणा पण्णत्ता । अद्धतेरस जोअणाइ आयामेण छ सकोसाइ जोअणाइ विक्खभेण नव जोअणाइ उड्ढ उच्चत्तेण अणेगखभसय-सन्निविट्ठा अब्भुग्गयमुकयवरवेइआ तोरणवररइअसालिभजिआ'इत्यादि । यावत् पूर्व्वोत्तरदक्षिणवर्तीनि त्रीणि द्वाराणि तेषा द्वाराणा पुरतो मुखमण्डपास्तेषामपि पुरत प्रेक्षागृहमण्डपा तेषा पुरतश्चैत्यस्तूपा सप्रतिमास्तेपा च चैत्यस्तूपाना पुरतश्चैत्यवृक्षास्तेषा च पुरतो महेन्द्रध्वजा तेषा च पुरतो नन्दापुष्करिण्य इत्यादि यावदुल्लोचवर्णन भूमिभागवर्णन मणीना स्पर्शादिवर्णन चेत्यादि । अथ विशेषमाह– 'णवरिमि'त्यादि । नवरमिद वक्ष्यमाण नानात्व भेद । तदेवाह–'एतेसि ण'ति । एतयो सिद्धायतनयोर्वहुमध्यदेशभागे प्रत्येक प्रत्येक प्रतिसिद्धायतनमेकैकसद्भावात् द्वे मणिपीठिके प्रज्ञप्ते । ते च द्वे योजने आयामविष्कम्भाभ्या योजन वाहल्येन 'तासि 'उप्पि'ति । तयोरुपरि देवच्छन्दकौ प्रज्ञप्तौ द्वे योजने आयामविष्कम्भाभ्या सातिरेके द्वे योजने ऊर्ध्वमुच्चैस्त्वेन 'सव्वे'त्यादि प्राग्वत् । अथ तत्र यदस्ति तदतिदेशेनाह–'जिणपडिमावण्णओ'त्ति । जिनप्रतिमावर्णको राजप्रश्नी-योक्ता जिनप्रतिमा तत्स्वरूपवर्णन चेत्यर्थ वक्तव्य इति शेष । कियद्दूरम् ? इत्याह–'जाव धूवकडु-च्छुआ'त्ति । यावद्धूपकडुच्छकास्तत्पर्यन्तमित्यर्थ । तच्चैव-'तत्थ ण अट्ठसय जिणपडिमाण जिणुस्सेहप्प-माणमेत्ताण सन्निक्खित्त चिट्ठ ति । तासि ण जिणपडिमाण अयमेआरूवे वण्णावासे पण्णत्ते । 'त जहे' त्यादि । एतच्च वैताढ्यसिद्धायतनवक्तव्यतायामुक्तमिति । अथ शेषसभाविषयेऽतिदेशमाह-'एव चेवे'त्या-दि । एवमेव सुधर्म्मा सभावदेव अवशेषाणामप्युपपातसभादीनामपि वक्तव्य यावदुपपातसभाया शयनीयम् अभिषेकसभायां वहु आभिषेक्य भाण्ड ह्रदश्च क्रीडाभिषेकजलनिमित्तमिति गम्य । आलङ्कारिकसभाया सुबहु-अतिप्रभूतमालङ्कारिकभाण्ड तिष्ठतीति वक्तव्य । तथा 'ववसायसभासु'त्ति । व्यवसायसभयो पुस्त-करत्ने-निजनीतिव्यवसायपुस्तक धार्म्मिकव्यवसायपुस्तक चेति पुस्तकरत्नद्वयविवक्षयैव व्यवसायसभाया

अप्यौपाधिक द्वैविध्य सम्भाव्यते द्विवचनस्य प्रकारान्तरेण गतेरसम्भवात्। तथा 'नदापुक्खरिणीओ'त्ति। व्यवसायसमयोरुत्तरपूर्व्वस्या प्रतिसममेकैकसद्भावेन द्वे नन्दापुष्करिण्यौ प्रज्ञप्ते। 'वलिपीढे'त्ति। नदापुष्करिण्योरीशान्या द्वे वलिपीठे प्रज्ञप्ते। ते च सर्व्वात्मना रत्नमये सक्रोश योजन वाहल्येनोपलक्षणात् द्वे योजने आयामविष्कम्भाभ्याम्। अथैव व्यावर्णितस्वरूपयमिकाराजधान्यो स्वामिनौ यौ यमकदेवौ तयोर्यद्वक्तव्य तदाह—'जाव उववाउ'त्ति गाथा यावत्। उपपातो यमकयोर्देवयोरुत्पत्तिर्वक्तव्या। 'सकप्पो'त्ति। सङ्कल्पोऽध्यवसायविशेष। सोऽप्युत्पत्तेरनन्तर जायमानत्वाद्वक्तव्य। तदनन्तरम् 'अभिसेओ'त्ति। अभिषेको विभूषणा च क्रमेण जायमानत्वात् ते अपि वक्तव्ये। 'ववसाओ'त्ति। व्यवसायो—व्यवसायसभाया निजनीतिधर्म्मस्थितिप्रतिपादकपुस्तकरत्न तद्विलोकन च वक्तव्य तदनन्तर च 'अच्चणिअ'त्ति। अर्च्चनिका—यथौचित्येन जिनप्रतिमाना सभादीना चार्चना वक्तव्या 'सुहम्म'त्ति। सुधम्मगिम सुधर्म्मासभागमन वक्तव्य। तदनन्तर च 'जहा ये'त्यादि। यथा चेति यथासम्भव परिवारणा-परिवारस्तदुपलक्षिता ऋद्धि परिवारर्द्धि सापि वक्तव्या। यावत्करणात् उपपातस्याश्रय सङ्कल्पस्य च विषय इत्याद्यपि वक्तव्यमिति गाथासङ्क्षेपार्थ। विस्तरस्तु जीवाभिगमोक्तविजयदेववदनयोरपि वक्तव्य। अथ यमकपर्व्वतनीलवद्ह्रदयो पञ्चाना च नीलवद्ह्रदादीना ह्रदाना परस्परमप्यन्तरपरिज्ञानाय गाथयातिदेशमाह—'जावइअमि'त्ति। यावति प्रमाणे—यावत्प्रमाण क्षेत्रमन्तर कृत्वा नीलवद्वर्षधरात् यमकनामानौ पर्व्वतौ 'हुंति'त्ति। भवत 'तावतिअ'ति। तावत्प्रमाण खलुरवधारणे तावत्प्रमाणमेव जमगदहाण'ति। यमकह्रदयो यमकपर्व्वतनीलवद्ह्रदयोरवसातव्य। च पुनरर्थे पुन 'दहाण'ति। ह्रदाना नीलवदुत्तरकुरुचन्द्रैरावतमाल्यवन्नाम्ना पञ्चानामपि परस्परमन्तरमवसातव्य न पुनर्न्यूनाधिकमिति। अथ भाव —यथा नीलवतो वर्षधरपर्व्वतात् अष्टौ योजनानि चतुस्त्रिंशदधिकानि चतुरश्च सप्त भागान् योजनस्याबाधयाऽन्तर भवति यमकस्य तथा यमकपर्व्वतनीलवद्ह्रदयोर्नीलवदादीना ह्रदाना च परस्परमन्तरमिति।

अथ पञ्चानामपि ह्रदाना स्थानकजिज्ञासया प्रथम तावन्नीलवद्ह्रद क्वास्ति? इति प्रश्नयति—

**कहि ण भंते! उत्तरकुराए कुराए णीलवंतद्दहे णामं दहे पण्णत्ते? गो०! जमगाणं दक्खिणिल्लाओ चरमंताओ अट्ठ सए चोत्तीसे चत्तारि अ सत्त भागे अबाहाए जोअणस्स सीआए महाणदीए बहुमज्झदेसभागे। एत्थ णं दाहिणउत्तरआयते पाईणपडीणविच्छिण्णे जहेव पउमद्दहे वण्णओ तहेव णेतव्वा। णाणत्तं दोहिं पउमवरवेइआहिं दोहिं वणसंडेहिं सपरिक्खित्तो। णागकुमारे देवे सेसं तं चेव णेअव्वं। णीलवंतद्दहस्स पुव्वावरपासे दस दस जोअणाइं अबाहाए। एत्थ णं वीसं कंचणगपव्वया प०। एगं जोअणसयं उड्ढं उच्चत्तेणं।**

**मूलंमि जोअणसयं पण्णत्तरि जोअणाइं मज्झंमि। उवरितले कचणगा पण्णासं जोअणा हुंति। १।**
**मूलंमि तिण्णि सोले सत्तत्तीसाइं दोण्णि मज्झंमि। अट्ठावण्णं च सयं उवरितले परिरओ होइ। २**

**पढमित्थ नीलवंतो बितिओ उत्तरकुरू मुणेअव्वो। चदद्दहोत्थ तइओ एरावत मालवंतो अ॥३॥**
**एवं वण्णओ अट्ठो पमाणं पलिओवमट्ठितिआ देवा॥**

'कहि ण भते!' इत्यादि क्व भदन्त! उत्तरकुरुषु नीलवद्ह्रदो नाम ह्रद प्रज्ञप्तः? । भगवानाह-गौतम! यमकपर्वतयोर्दाक्षिणात्याच्चरमान्तादर्वाक् दक्षिणाभिमुखमष्टौ चतुस्त्रिंशानि-चतुस्त्रिंशदधिकानि योजनानि चतुरश्च सप्त भागान् योजनस्याऽबाधयाऽपान्तरालं मुक्त्वा शीताया महानद्या बहुमध्यदेशभागे 'एत्थ ण'ति । एतस्मिन्नवकाशे उत्तरकुरुषु 'उत्तरे'त्यादि । उत्तरदक्षिणायत-उत्तरदक्षिणाभ्यामवयवाभ्या दीर्घ प्राचीनप्रतीचीनाभ्यामवयवाभ्या विस्तीर्णो विष्कम्भत । वर्णकोऽस्य कि वद्? इत्याह-'जहेव' त्ति । यथैव पद्मह्रदे वर्णकस्तथैवास्यापि ज्ञातव्य । अथ विशेषमाह-'णाणत्त'ति । नानात्व-भेदस्तावदेव पद्मह्रदो ह्येकया पद्मवरवेदिकया एकेन च वनखण्डेन परिक्षिप्त । अय तु 'दोहि' ति । द्वाभ्या पद्मवरवेदिकाभ्या वनखण्डाभ्या च परिक्षिप्त । ननु वेदिकाद्वैयी कथमिति चेत् । उच्यते-ह्रदमध्यभागवाहिन्या शीताया नद्या द्विभागीकृतत्वेन एकस्मिन् पार्श्व एकाऽपरा वाऽपरस्मिन्निति द्वयी एव वनखण्डद्वय्यपि । तथा 'णाग'त्ति । नागकुमारो देवो नाम्ना नीलवानित्यर्थात् ज्ञातव्यः परिवसति । पद्मह्रदे तु श्रीदेवीति विशेष । 'सेस त चेव'त्ति । शेषमुक्तविशेषातिरिक्त तदेव-पद्मह्रदोक्तमेव ज्ञातव्यम् । अय भाव-यथा पद्मह्रदस्याऽऽयामविष्कम्भोद्वेधपद्मवरवेदिकावनखण्डत्रिसोपानप्रतिरूपक-तोरणमूलभूतमहापद्माष्टशतापरपद्मपरिवारपद्मादि वक्तव्यतोक्ता तथैवेहाप्यन्यूनाऽनतिरिक्ता वक्तव्या । तच्चैवम्-' एगं जोअणसहस्स आयामेण, पच जोअणसयाइ विक्खंभेण, दस जोअणाइ उव्वेहेण, अच्छे रययामयकूले चउक्कोणे समतीरे जाव पडिरूवे'इत्यादि यावत् । से केणट्ठेण भते! एव वुच्चति नीलवंतदहे नीलवंतदहे?' । इत्यादि यावत् 'गोअमा! सासए णामधेज्जे'त्ति । अथ नीलवद्ह्रदस्य प्रत्यासन्नवर्त्तिना काञ्चनगिरीणा वक्तव्यतामाह-'नीलवद्दहस्से'त्यादि । नीलवद्ह्रदस्य पूर्वापरपार्श्वयो प्रत्येक दश योजनान्यबाधया 'एत्थ ण'ति । अत्रान्तरे एकैकस्मिन् पार्श्वे दश दश सद्भावात् विंशति काञ्चनकपर्वता दक्षिणोत्तरायतश्रेण्या प्रज्ञप्ता । वीप्सावचन चे वक्ष्यमाणेषु उत्तरकुरुह्रदादिष्वपि प्रतिह्रद विंशतिर्विंशतिर्भवन्तीति ज्ञापनार्थम् । अत एव जीवाभिगमे-'नीलवंतस्स णं दहस्स पुरत्थिमेण पच्चत्थिमेण दस दस जोअणाइ अबाहाए एत्थ ण दस दस कचणगपव्वया पण्णत्ता'इति । अथ तेषामुच्चत्वाद्याह-'एग जोअणसय'ति । एक योजनशतमूर्ध्वमुच्चैस्त्वेन पञ्चविंशतियोजनान्युद्वेधेनेतीहानुक्तमपि ग्रन्थान्तरादवसातव्यम् । अथैतेषा मूलादिषु विष्कम्भपरिज्ञानाय गाथामाह-'मूलमि'त्ति । मूले एक योजनशत विष्कम्भेन मध्ये पञ्चसप्ततिम् उपरितले च पञ्चाशत योजनानि विष्कम्भेन काञ्चनका भवन्ति । अथ मूलादिषु परिरय गाथयाह-'मूलमि तिण्णि'त्ति । मूले त्रीणि शतानि षोडशाधिकानि ३१६ योजनानि 'सत्तत्तीसाइ'ति । सप्तत्रिंशदधिके द्वे योजनशते २३७ 'मज्झमि'त्ति । मध्ये 'अट्ठावण्ण'ति । अष्टपञ्चाशदधिक शत १५८ 'उवरि'त्ति । उपरितले परिरयो भवति । यत्विह मूले षोडश योजनानि किञ्चिद्विशेषाधिकानि मध्ये सप्तत्रिंशत् उपरि चाष्टपञ्चाशत् योजनानि किञ्चि-

न्यूनानि भवन्ति । तदिह गाथानुलोम्यादनुक्तमपि जीवाभिगमतो द्रष्टव्यम् । अथ सङ्ख्यानुक्रमेण तेषा नामान्याह—'पढमित्थ'त्ति । प्रथमोऽत्रोत्तरकुरुषु नीलवान् नीलवद्ध्रद पञ्चानामपि ह्रदाना मध्येऽस्यैव नीलवद्वर्षधरप्रत्यासन्नत्वात् । तत क्रमेण 'वितीओ'त्ति । द्वितीय उत्तरकुरुह्रद । एव तृतीयश्चन्द्रह्रद ऐरावतो माल्यवांश्चेति चतुर्थपञ्चमाविति गम्य च समुच्चये । एव सङ्ख्याक्रमेणोक्तनामान पञ्चापि ह्रदा ज्ञातव्या । अथ सामान्यतोऽतिदेशमाह—' एव वण्णओ'त्ति । एव प्रागुक्तप्रकारेण वर्णक पद्मह्रदस्येवामीषामपि वक्तव्य । 'अट्ठो'त्ति । अर्थ —'से केणट्ठेण भते !' इत्यादि नामनिमित्तप्रश्ननिर्व्वचने अपि प्राग्वत् । 'पमाण'ति । प्रमाण 'एग जोअणसहस्समि'त्यादि प्राग्वत् । 'पलिओवम'त्ति । पल्योपमस्थितिकाश्च देवा 'परिवसंती'त्यादि सर्व्वं पद्मह्रदस्येव । पर तत्र श्रीदेवी अत्र ह्रदसमाननामानो देवा इति । उपलक्षणात् निज निजनाम्ना राजधान्या सुधर्म्मादिसभासामानिक देवादिपरिवारादिक सर्व्वमपि विजयदेववदवसातव्यम् ।

अथ जम्बूवृक्षवक्तव्यतामाह

**कहि ण भंते ! उत्तरकुराए कुराए जंबूपेढे णाम पेढे पण्णत्ते ? । गो० ! नीलवंतस्स वासहरपव्वयस्स दक्खिणेण मंदरस्स उत्तरेणं मालवंतस्स वक्खारपव्वयस्स पच्चत्थिमेणं सीआए महाणदीए पुरत्थिमिल्ले कूले । एत्थ णं उत्तरकुराए कुराए जंबूपेढे णामं पेढे पण्णत्ते । पंच जोअणसयाइं आयामविक्खंभेणं । पण्णरसेक्कासीआइं जोअणसयाइं किंचिविसेसाहिए परिक्खेवेणं । बहुमज्झदेसभागे बारस जोअणाइं बाहल्लेणं तयणंतरं च णं मायाए मायाए पएसपरिहाणीए परिहीयमाणे परिहीयमाणे सव्वेसु णं चरमपेरंतेसु दो दो गाउआइं बाहल्लेण सव्वजंबूणयामए अच्छे । से णं एगाए पउमवरवेइआए एगेण य वणसंडेणं सव्वओ समंता दुण्हंपि वण्णओ । तस्स णं जंबूपेढस्स चउद्दिसिं चत्तारि तिसोवाणपडिरूवगा पण्णत्ता । वण्णओ जाव तोरणाइं । तस्स णं जंबूपेढस्स बहुमज्झदेसभागे एत्थ णं मणिपेढिआ पण्णत्ता । अट्ठ जोअणाइं आयामविक्खंभेणं, चत्तारि जोअणाइं बाहल्लेणं । तीसे णं मणिपेढिआए उप्पि एत्थ णं जंबू सुदमणा पण्णत्ता । अट्ठ जोअणाइं उड्ढं उच्चत्तेणं अद्धजोअणं उव्वेहेणं । तीसे णं खंधो दो जोअणाइं उड्ढ उच्चत्तेणं अद्धजोअणं बाहल्लेणं । तीसे णं साला छ जोअणाइं उड्ढं उच्चत्तेणं बहुमज्झदेसभागे अट्ठ जोअणाइ आयामविक्खंभेणं सातिरेगाइं अट्ठ जोअणाइं सव्वग्गेणं । तीसे णं अयमेआरूवे वण्णावासे पण्णत्ते । वयरामयमूला रययामया विडिमा सुदिसि जाव अहिगमणनिव्वुइकरी पासाईआ दरिसणिज्जा । जंबूए णं सुदंसणाए चउद्दिसिं चत्तारि साला प० । तेसि णं सालाणं बहुमज्झदेसभागे एत्थ णं सिद्धायतणे प० । कोसं आयामेणं अद्धकोसं विक्खंभेणं देसूणं कोसं उड्ढं उच्चत्तेणं अणेग-**

खंभसयसन्निविट्ठे जाव दारा पंच धणुसयाइं उड्ढं उच्चत्तेणं जाव वणमालाओ मणिपेढिआ पंच धणुसयाइं आयामविक्खंभेणं अड्ढाइज्जाइं धणुसयाइं बाहल्लेणं। तीसे णं मणिपेढिआए उप्पि देवच्छंदए पंच धणुसयाइं आयामविक्खंभेणं साइरेगाइं पंच धणुसयाइं उड्ढं उच्चत्तेणं। जिणपडिमावण्णओ सव्वो णेअव्वो। तत्थ णं जे से पुरत्थिमिल्ले साले एत्थ णं भवणे प०। एवमेव। णवरमित्थ सयणिज्जं सेसेसु पासायवडिंसया सीहासणा य सपरिवारा। जंबू णं बारसहिं पउमवरवेइआहिं सव्वओ समंता संपरिक्खित्ता। वेइआणं वण्णओ। जंबू णं अण्णेणं अट्ठसएणं जंबूणं तदद्धुच्चत्ताणं सव्वओ समंता संपरिक्खित्ता। तासि णं वण्णओ। ताओ णं जंबू छहिं पउमवरवेइआहिं संपरिक्खित्ता। जंबूए णं सुदंसणाए उत्तरेणं उत्तरपुरत्थिमेणं उत्तरपच्चत्थिमेणं एत्थ णं अणाढिअस्स देवस्स चउण्हं सामाणिअदेवसाहस्सीणं चत्तारि जंबूसाहस्सीओ पण्णत्ताओ। तीसे णं पुरत्थिमेणं चउण्हं अग्गमहिसीणं चत्तारि जंबूओ पण्णत्ताओ।

दक्खिणपुरत्थिमदक्खिणेणं तह अवरदक्खिणेणं च। अट्ठ दस बारसेव य हवंति जंबूसहस्साइं ।१

अणिआहिवईणं पच्चत्थिमेण मत्तेव हुंति जंबूओ। सोलस साहस्सीओ चउद्दिसिं आयरक्खाणं ।२।

जंबू णं तिहिं सइएहिं वणसंडेहिं सव्वओ समंता संपरिक्खित्ता। जंबूए णं पुरत्थिमेणं पण्णासं जोअणाइं पढमं वणसंडं ओगाहेत्ता एत्थ णं भवणे पण्णत्ते। कोसं आयामेणं सो चेव वण्णओ सयणिज्जं च। एवं सेसासु वि दिसासु भवणा। जंबूए णं उत्तरपुरत्थिमेणं पढमं वणसंडं पण्णासं जोअणाइं ओगाहेत्ता एत्थ णं चत्तारि पुक्खरिणीओ पण्णत्ताओ। तं जहा—पउमा पउमप्पहा कुमुदा कुमुदप्पहा। ताओ णं कोसं आयामेणं अद्धकोसं विक्खंभेणं पंच धणुसयाइं उव्वेहेणं। वण्णओ। तासि णं मज्झे पासायवडिंसगा कोसं आयामेणं अद्धकोसं विक्खंभेणं देसूणं कोसं उड्ढं उच्चत्तेणं। वण्णओ सीहासणा सपरिवारा। एवं सेसासु विदिसासु। गाहा—पउमा पउमप्पहा चेव कुमुदा कुमुदप्पभा। उप्पलगुम्मा नलिणा उप्पला उप्पलुज्जला ॥१॥ भिंगा भिंगप्पभा चेव अंजणा कज्जलप्पभा। सिरिकंता सिरिमहिता सिरिचंदा चेव सिरिनिलया ।२। जंबूए णं सुदंसणाए पुरत्थिमिल्लस्स भवणस्स उत्तरेणं उत्तरपुरत्थिमिल्लस्स पासायवडिंसयस्स दाहिणेणं एत्थ णं एगे महं कूडे पण्णत्ते। अट्ठ जोअणाइं उड्ढं उच्चत्तेणं दो जोअणाइं उव्वेहेणं मूले अट्ठ जोअणाइं आयामविक्खंभेणं बहुमज्झदेसभागे छ जोअणाइं आयामवि-

क्खंभेण उवरि चत्तारि जोअणाइं आयामविक्खंभेणं

पणवीसट्ठारस बारसेव मूले अ मज्झि उवरिं च । सविसेसाइं परिरओ कूडस्स इमस्स बोद्धव्वो ।१। मूले विच्छिण्णे, मज्झे संक्खित्ते, उवरिं तणुए, सव्वकणगामए अच्छे । वेइआवण-संडवण्णओ । एवं सेसावि कूडा । जंबूए णं सुदंसणाए दुवालस णामधेज्जा प० । तं०—

सुदंसणा अमोहा य सुप्पबुद्धा जसोहरा । विदेहजंबू सोमणसा णिअया णिच्चमंडिआ ।१।

सुभद्दा य विसाला य सुजाया सुमणावि अ । सुदंसणाए जंबूए णामधेज्जा दुवालस ।२।

जंबू ण अट्ठट्ठमंगलया० । से केणट्ठेणं भंते ! एवं वुच्चइ जंबू सुदंसणा जंबू सुदंसणा ? । गो० ! जंबूए णं सुदंसणाए अणाढिए णामं देवे जंबूदीवाहिवई परिवसति महिड्ढीए । से णं तत्थ चउण्हं सामाणिअसाहस्सीणं जाव आयरक्खाणं । जंबूदीवस्स णं दीवस्स जंबूए सुदंसणाए अणाढिआए रायहाणीए अण्णेसिं च बहूणं देवाणं देवीण य जाव विहरति । कहि णं भंते ! अणाढिअस्स देवस्स अणाढिआणामं रायहाणी पण्णत्ता ? । गो० । जंबुद्दीवे दीवे मंदरस्स पव्वयस्स उत्तरेणं जं चेव पुव्ववण्णिअं जमिगप्पमाणं तं चेव णेअव्वं । जाव उववाओ अभिसेओ अ निरवसेसो । से तेणट्ठेणं गोअमा ! एवं वुच्चइ जंबू सुदंसणा जंबू सुदंसणा जाव भुविं च धुवा णिअया सासया अक्खया० । अदुत्तर च णं गोअमा ! जाव पच्चुच्च ॥

'कहि ण भंते !' इत्यादि । क्व भदन्त ! उत्तरकुरुषु कुरुषु जम्बूपीठं नाम पीठ प्रज्ञप्त ? । भगवानाह—गौतम ! नीलवतो वर्षधरपर्व्वतस्य दक्षिणेन मन्दरस्योत्तरत माल्यवतो वक्षस्कारपर्व्वतस्य पश्चिमेन शीताया महानद्या पूर्व्वदिग् सम्बन्धिनि कूले 'एत्थ ण'ति । अत्रान्तरे उत्तरकुरुषु कुरुषु जम्ब्वा सुदर्शनाऽपरनाम्न्या जम्बूपीठ नाम पीठं प्रज्ञप्त । तच्च पञ्च योजनशतान्यायामविष्कम्भाभ्या एकाशीत्यधिकानि पञ्चदश योजनशतानि किञ्चिद्विशेषाधिकानि १५८१ परिक्षेपेण बहुमध्यदेशभागे द्वादश योजनानि बाहल्येन तदनन्तर च मात्रया मात्रया प्रदेशपरिहान्या परिहीयमान परिहीयमान सर्व्वेषु चरमपर्यन्तेषु द्वौ द्वौ क्रोशौ बाहल्येन सर्व्वात्मना जाम्बूनदमय 'अच्छे' इत्यादि प्राग्वत् । 'से ण एगाए' त्ति । तत्र जम्बूपीठमेकया पद्मवरवेदिकया एकेन च वनखण्डेन सर्व्वत सर्व्वासु दिक्षु समन्तत साम-स्त्येन सम्परिक्षिप्तमिति गम्य । 'दोण्हवि वण्णओ'त्ति । द्वयोरपि वेदिकावनखण्डयोर्वर्णक प्राग्वत् । 'तस्स ण जम्बू' इत्यादि । तस्य जम्बूपीठस्य चतुर्दिशि एकैकत्रिसोपानप्रतिरूपकभावेन चत्वारि त्रिसो-पानप्रतिरूपकाणि—प्रतिविशिष्टरूपाणि प्रज्ञप्तानि । 'वण्णओ'त्ति । वर्णक — वज्रमया नेमा' इत्यादि प्राग्वत् । कियद्दूरम् ? इत्याह—'जाव तोरणाइ'ति । यावत्तोरणानि प्राग्वद्वाच्यानि । 'तस्स णमि'

त्यादि । तस्य जम्बूपीठस्य बहुमध्यदेशभागे 'एत्थ ण'ति । अत्रान्तरे मणिपीठिका प्रज्ञप्ता । सा चाष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्येन । तस्या मणिपीठिकाया उपरि बहुमध्य-देशभागे इति गम्यम् । अत्रान्तरे जम्बूसुदर्शना नाम्ना जम्बू प्रज्ञप्ता । अष्टौ योजनान्यूर्ध्वमुच्चैस्त्वेन अर्द्धयोजनमुद्वेधेन तस्या स्कन्ध द्वे योजने ऊर्ध्वमुच्चैस्त्वेन अर्द्धयोजन बाहल्येन । तस्या शाला—सा चेह दिग्प्रसृतशाखा मध्यभागवर्त्तिनी ऊर्ध्वगता विडिमाऽपरपर्याया शाखा । षट् योजनान्यूर्ध्वमुच्चैस्त्वेन बहुमध्यदेशभागेऽष्टौ योजनान्यायामविष्कम्भाभ्या । तच्चैव—जम्ब्वा स्कन्धगतस्योपरितनभागस्य द्वौ क्रोशौ तत एकस्या शाखाया दीर्घत्वं क्रोशोनानि चत्वारि योजनानि एव शाखाद्वयस्कन्धयो परिमा-णमीलनेऽष्टौ योजनानि स्यु । 'साइरेगाइ'ति । सातिरेकाणि मूलस्कन्धद्वर्द्धयोजनाधिकानि सार्द्धाष्ट-योजनानीत्यर्थं सर्व्वाग्रेण । 'तीसे णमि'त्यादि । तस्या —जम्ब्वा अयमेतद्रूपो वर्णव्यासो-वर्णनिवेश प्रज्ञप्त । तद्यथा—तस्या मूलानि वज्रमयानि रजतमया विडिमा 'सुदिसी'ति । सु-शोभना शाखाचतुष्ट-यसम्बन्धिदिगपेक्षया उत्तमा दिग् सुदिग् तस्या दशानामपि दिशामूर्ध्वदिग् प्रशस्ता । अत एवमेव तत्र जिनभवन 'जाव अहिगे'त्यादि । यावत् अधिकमतिशयेन मनसो द्रष्टृणा मानसस्य निर्व्वृतिकरी परम-तुष्टिकरी 'पासाईआ'इत्यादि प्राग्वत् । यावत्करणात् 'रिट्ठामयविपुलकदा'इत्यादि । प्राग्चैत्यवृक्षवर्ण-नाधिकारे भणित ततोऽवसातव्य यावत् सोद्योतेति । अथ जम्बूवृक्षो क्व ? किमस्ति ? इति दर्शयति—'जबूए णमि'त्यादि । जम्ब्वा सुदर्शनाया 'चउद्दिसि'ति । चतुर्दिशि-चतसृषु दिक्षु चतस्र शाखा प्रज्ञप्ता । 'तेसि ण'ति । प्राकृतत्वात्पु स्त्वमतस्तासा शाखाना बहुमध्यदेशभागे—'एगा विडिमा पण्णत्ता । तीसे ण बहुमज्झदेसभागे उप्पि'ति शेष । तथा च एका विडिमा प्रागुक्तस्वरूपा । तस्या उपरि बहुमध्यदेशभागे 'एत्थ ण'ति । अत्रान्तरे सिद्धायतन प्रज्ञप्त । क्रोशमायामेन अर्द्धक्रोश विष्कम्भेन देशोनक्रोशमूर्ध्वमुच्चैस्त्वेन । 'अणेगखभ'त्ति । अनेकस्तम्भशतसन्निविष्ट 'जाव दार'त्ति । यावत् द्वाराणि पञ्च धनु शतान्यूर्ध्वमुच्चैस्त्वेन । यावत्करणात् प्रासादावतसक-वर्णनाधिकारे यो वर्णकस्तद्ग्रहण । वर्णकोऽपि । कियद्दूरम् ? इत्याह—'जाव वणमाल'त्ति । यावद्व-नमालावक्तव्यता तावद्वक्तव्यमित्यर्थ । अथ तत्र सिद्धायतने मणिपीठिका कीदृशी ? इत्याह—'मणि पीढिअ'त्ति । सिद्धायतने मणिपीठिका पञ्च धनु शतान्यायामविष्कम्भेन अर्द्धतृतीयानि धनु शतानि बाह-ल्येन 'तीसे णमि'त्यादि । तस्या मणिपीटिकाया उपरि देवच्छन्दक प्रज्ञप्त । स च पञ्च धनु शतान्या-यामविष्कम्भेन सातिरेकाणि पञ्च धनु शतानि ऊर्ध्वमुच्चैस्त्वेन 'जिणपडिमा वण्णओ'त्ति । देवच्छन्दके जिनप्रतिमावर्णक सर्व्वो ज्ञातव्य । स च जिनप्रतिमानामष्टोत्तरशतमित्यादि प्रागुक्त । 'तत्थ ण'ति । तत्र णमिति प्राग्वत् । या सा पूर्व्वदिग् सम्बन्धिनी शाखा पुरस्त्व प्राकृतत्वात् । अत्र भवनं प्रज्ञप्तम् । तच्च महापद्मभवनसमान । विशेषमाह—'णवर'त्ति । नवरमिह शयनीयं वाच्यम् । 'सेसेसु'त्ति । शेषासु-तिसृषु शाखासु प्रासादावतंसका एकैकस्या शाखायामेकैक प्रासादावतसक इत्यर्थ । ते च क्रोशमूर्ध्व-मुच्चैस्त्वेन अर्द्धक्रोश विष्कम्भेन प्रासादावतसकानामपि वर्णन प्राग्वत् । 'सीहासणा य'त्ति । सिंहासनानि चापरिवाराणि-परिवाररहितानि वाच्यानि । क्वचित् सपरिवारा इत्यपि पाठ । सिंहासनवर्णन च

प्राग्वत् । 'जंबू णमि'त्यादि । जम्बू सुदर्शना द्वादशभि पद्मवरवेदिकाभि 'सव्वओ'इत्यादि प्राग्वत् । अन्येन तदर्द्धोच्चत्वाना जम्बूनामष्टशतेन सम्परिक्षिप्ता । अत्र तदर्द्धोच्चत्व तदर्द्धपृथुत्वाद्युपलक्षक तेन पृथुत्वोद्वेधावपि तदर्द्धप्रमाणाववसातव्यौ । तच्चैवम्—अमूरष्टोत्तरशत जम्ब्व प्रत्येक प्रत्येक चत्वारि योजनान्यूर्ध्वमुच्चैस्त्वेन क्रोशमेकमुद्वेधेन योजनमेक स्कन्ध क्रोश वाहल्येन स्कन्ध त्रीणि योजनानि चतसृषु दिक्षु चतस्र शाखा तासा मध्ये भागे त्रीणि योजनानि विडिमा चत्वारि योजनानि बहुमध्यदेश-भागे आयामविष्कम्भेन सातिरेकाणि उद्वेधसम्बन्धि क्रोशमात्राधिकानि चत्वारि योजनानि सर्वाग्रेण । 'तासि ण वण्णओ'त्ति । तासा चाष्टोत्तरशतसङ्ख्याकाना जम्बूना वर्णक 'वयरामया मूला'इत्यादि प्राग्वत् । यावत्प्रासादीया । 'ताओ णमि'ति । ता सर्वाऽपि जम्ब्व षड्भि पद्मवरवेदिकाभि प्रत्येक सर्वत समन्तादिति गम्य सम्परिक्षिप्ता । अथाऽनादृतस्य देवस्य परिवारसम्बन्धिनामपर जम्बूवृक्षाणा दिग्विभागेन व्यक्तिमाह—'जंबूए णमि'त्यादि । जम्ब्वा सुदर्शनाया उत्तरेण उत्तरपूर्वस्यामीशान्याम् । उत्तरपश्चिमाया—वायव्याम् । अत्रान्तरे अनादृतस्य देवस्य जम्बूद्वीपाधिपते चतुर्णा सामानिकसहस्राणा योग्यानि चत्वारि जम्बूसहस्राणि प्रज्ञप्तानि 'तीसे णमि'त्यादि । तस्या जम्ब्वा पूर्वस्या चतसृणामग्र-महिषीणा योग्याश्चतस्रो जम्ब्व । अथ त्रिसभा-सप्तानिकाधिपति—षोडशात्मरक्षक देवसहस्रसम्बन्धि-जम्बूवृक्षपरिज्ञानाय गाथाद्वयमाह-'दक्खिणे'त्यादि । दक्षिणपूर्वस्यामाग्नेय्या दक्षिणस्या 'तह अवर'त्ति । तथा अपरदक्षिणेन दक्षिणापरस्या नैऋत्यामित्यर्थ । अभ्यन्तरमध्यवाह्याना पर्षदामिति गम्य । क्रमेण अष्टौ दश द्वादश जम्बूसहस्राणि भवन्ति । एवकारोऽवधारणे च समुच्चये । 'अणिआहिवईण'ति । अनीकाधिपतीना सप्तानामिति शेष योग्या सप्त जम्ब्व 'पच्चत्थिमेण'ति । पश्चिमाया षोडशसहस्राणि जम्बूनामितिशेष । चतुर्दिशि—चतसृषु दिक्षु आत्मरक्षकाणा षोडशसहस्राणामिति गम्य । भवन्तीति क्रिया सर्वत्रापि सम्बन्धनीयेति गाथाद्वयार्थ । अथ मूलभूतो जम्बूवृक्षस्त्रिभिर्वनखण्डै परिक्षिप्त इति दर्शयति—'जंबू ण'ति जम्बू सुदर्शना त्रिभि शतिकै—शतयोजनप्रमाणैर्वनखण्डै परिक्षिप्ता । अथ जम्बू-तश्चतसृषु दिक्षु चत्वारि भवनानि । कियद्दूरम् ? कीदृशानि ? इति दर्शयति—'जंबूए णमि'त्यादि । जम्ब्वा सुदर्शनाया पूर्वस्या दिशि प्रथमवनखण्ड पञ्चाशत योजनान्यवगाह्य । अत्रान्तरे एक भवन प्रज्ञप्त । तच्च क्रोशमेकमायामत । 'सो चेव'त्ति । स एव य पूर्वदिग्शाखावर्त्तिभवनसम्बन्धी वर्णक । 'सयणिज्ज'त्ति । शयनीय चात्र वक्तव्यम् । 'एव सेसासु वि'त्ति । एव प्रागुक्तप्रकारेण शेषास्वपि दिक्षु तिसृषु भवनानि सशयनीयानि वक्तव्यानि । तच्चैव—जम्ब्वा दक्षिणस्या प्रथम वनखण्ड पञ्चाशत योजनान्यवगाह्य । भवन प्रज्ञप्त यावत् शयनीयम् । एव पश्चिमोत्तरयोरपि । अथैशान्यादिषु विदिक्षु प्रत्येक चतस्र चतस्र पुष्करिण्य सन्ति । ताश्च क्व ? कीदृश्यश्च ? इति दर्शयति—'जम्बू णमि' त्यादि । जम्ब्वा सुदर्शनाया उत्तरपूर्वस्यामीशान्या प्रथम वनखण्ड पञ्चाशत योजनान्यवगाह्य अत्रा-न्तरे चतस्र पुष्करिण्यः प्रज्ञप्ता. । तद्यथा-पद्मा पद्मप्रभा कुमुदा कुमुदप्रभा एताश्चतस्र । तत्रापि चतसृषु पूर्वादिदिक्षु क्रमेणावसातव्या । एव वक्ष्यमाणानामुत्पलगुल्मादीनामपि द्रष्टव्य । जीवाभिगमादिषु तथैव—व्याख्यातत्वात् । 'तओ णमि'त्यादि । ताश्च पुष्करिण्य क्रोशमायामेनार्द्धक्रोश विष्कम्भेन पञ्च

धनु शतान्युद्वेधेन । 'वण्णओ'त्ति । वर्णक प्राग्वत् । तावद्वक्तव्य यावत् प्रत्येक पद्मवरवेदिकावनखण्डा-भ्या परिक्षिप्ता । तयोरपि वर्णन प्राग्वत् । अथ चतसृणा पुष्करिणीना मध्यभागे एकैक प्रासादाव-तसको भवतीति दर्शयति-'तासि ण मज्झे' इत्यादि । तासा पुष्करिणीना मध्ये प्रासादावतसका प्रज्ञप्ता इति गम्य । वहुवचन च सर्व्वासा पुष्करिणीना प्रासादावतसकापेक्षया द्रष्टव्य । चतसृणा पुष्करिणीना मध्ये एकैक प्रासादावतसक इत्यर्थ । ते च क्रोशमायामेनार्द्धक्रोश विष्कम्भेन देशोनक्रोशमूर्ध्वमुच्चै-स्त्वेन । 'वण्णओ'त्ति । वर्णकश्चात्र जम्बूशाखागतप्रासादावतसकस्येवावसातव्य । 'सीहासण'त्ति । सिहासनान्यत्र सपरिवाराणि वक्तव्यानि । जीवाभिगमे तु अपरिवारा इति पाठस्तथैवव्याख्यातश्च । 'एव सेसासु'त्ति । एव शेपास्वपि विदिक्षु चतस्र पुष्करिण्यो वेदितव्या । पर नामनानात्व पद्यवन्धेनाह-'गाहे'त्यादि । पद्मा पद्मप्रभा कुमुदा कुमुदप्रभा चेशान्याम् । उत्पलगुल्मा नलिना उत्पला उत्पलोज्ज्वला चाग्नेय्या । भृङ्गा भृङ्गप्रभा अञ्जना कज्जलप्रभा च नैर्ऋत्या । श्रीकान्ता श्रीमहिता श्रीचन्द्रा श्री-निलया चेति वायव्या । चकारैवकारा इह समुच्चयावधारणार्था अवसातव्या इति पद्यद्वयार्थ । अथ चतुर्णां भवनाना चतुर्णा च प्रासादावतसकानामित्यष्टानामष्टस्वप्यन्तरेषु अष्टौ कूटा सिद्धायतनाल-ङ्कृता सन्ति । तेषा स्वरूप ववतुकाम आह-' जवूए णमि'त्यादि । जम्ब्वा सुदर्शनाया पूर्व्वदिग्भा-विनो भवनस्योत्तरत 'उत्तरे'त्यादि । उत्तरपूर्व्वा-ईशानी । तत्र स्थितस्य प्रासादावतसकस्य दक्षिणेन । 'एत्थ ण'ति । अत्रान्तरे एको महान् कूट ऋषभकूटवत् कूटनाम्ना गिरि प्रज्ञप्त । अष्टौ योजनान्यूर्ध्व-मुच्चैस्त्वेन द्वे योजने उद्वेधेन मूलेऽष्टौ योजनानि विष्कम्भेन मध्ये षट् योजनानि उपरि च चत्वारि योजनानि आयामविष्कम्भेन । अथ मूलादौ परिरयपरिज्ञानाय गाथामाह-पणवीसे'त्यादि । पञ्च-विंशतिमष्टादश द्वादश च एवकारोऽवधारणे गाथानुलोम्याद्व्यवहितोऽपि च समुच्चये । मूले मध्ये उपरि च सविशेषाणि सातिरेकाणि योजनानीति गम्य । परिरय -परिधि अस्य कूटस्य वोद्धव्यो ज्ञातव्य । अत एव मूले'इत्यादि । मूले विस्तीर्ण मध्ये सक्षिप्त उपरि तनुकश्चेति । 'सव्वे'त्यादि प्राग्वत् । 'वेइअ' त्ति । वेदिकावनखण्डयोर्वर्णको वक्तव्य । अनेन वेदिकावनखण्डपरिक्षेपोऽप्युक्त एवान्यथा तद्वर्णकस्यानुपप त्ते । अथ शेषकूटविषयेऽतिदेशमाह-'एव सेसावि'त्ति । एव शेषा अपि सप्तापि कूटा वक्तव्या । तच्चैव-'जवूए ण सुदसणाए पुरत्थिमिल्लस्स भवणस्स दाहिणेण दाहिणपुरत्थिमिल्लस्स पासायवडिसगस्स उत्त-रेणं एत्थ ण एगे मह कूडे प । त चेव पमाण सिद्धाययण चे'त्यादि । अथ जम्बूवृक्षस्य द्वादशनामान्याह-'जवूए णमि'त्यादि । जम्ब्वा सुदर्शनाया द्वादश नामधेयानि प्रज्ञप्तानि । तद्यथा-'सुदसणे'त्यादि श्लोक-द्वयी । सु-शोभन दर्शन-दृश्यमानतया यस्या नयनमनसोराह्लादकत्वात् सा सुदर्शना । 'अमोह'त्ति । मोघा-निष्फला न मोघा अमोघा सफलेत्यर्थ । यत -स्वस्वामिभावेन प्रतिपन्ना सती जम्बूद्वीपस्याधिपत्यमुप-जनयति । तदन्तरेण तद्विषयस्य स्वामिभावस्यैवाप्ययोगात् । 'सुप्पवुद्ध'त्ति । अतिशयेन प्रवुद्धेव प्रवुद्धा मण्यादीना निरन्तर सर्व्वतश्चाकचिक्यादिना सर्व्वकालमुन्निद्रेति भाव । 'जसोहर'त्ति । यशो धरतीति यशोधरा-सकलभुवनविख्यातख्यातिरित्यर्थ । सकललोकख्यातिरप्पनयोपलक्षितस्यैवास्य द्वीपस्य ख्याते सद्भावात् । 'विदेहजवू'इति । विदेहेपु जम्बूर्विदेहजम्बू. विदेहान्तर्गतोत्तरकुरुकृतनिवासत्वात् । 'सोम-

णस'त्ति । सौमनस्या मन प्रसत्तिहेतुत्वात् । 'णिअय'त्ति । नियता सर्व्वकालावस्थायित्वात् शाश्वता । णिच्चमडिअ'त्ति । नित्य मण्डिता सदा भूषितत्वात् । 'सुभद्द'त्ति । सु-शोभन भद्र-कल्याण यस्या सा सुभद्रा तस्या स्वामिनो महर्द्धिकत्वात् केनाप्युपद्रोतुमशक्यत्वात् 'विसाला'इति । विशाला-आयामादिना विस्तीर्णा। 'सुजाया'सु-शोभन जात-जन्म यस्या सा तथा कनकादिद्रव्यनिष्पन्नत्वेन जन्मदोपरहितेत्यर्थ । 'सुमण'त्ति । शोभन मनोऽस्या सकाशाद्भवति सा सुमना महर्द्धिकानामपि ता पश्यता मन शोभन भवत्यतिरमणीयत्वात् । 'सुदसणाए'इत्यादि । सुदर्शनाया जम्ब्वा द्वादश नामधेयानि प्रज्ञप्तानि । जवू णमि'ति । जम्बू णमित्यलङ्कारे । अष्टावष्टौ मङ्गलकानि यस्या उपरि साऽष्टाष्टमङ्गलका एतदुपलक्षणात्पताकादिसयुक्तापि वाच्या । अथ जम्बूनाम्न प्रवृत्तिनिमित्त प्रश्नयति-' से केणट्ठेणमि'त्यादि प्रश्न प्राग्वत् । भगवानाह-गौतम ! जम्ब्वा सुदर्शनायाम् अनादृतो नाम्ना देवो महर्द्धिको जम्बूद्वीपाधिपति परिवसति । तत्र न आदृता -आदरविषयीकृता शेपा -जम्बूद्वीपगता देवा येन आत्मनोऽत्यद्भुत महर्द्धिकत्वमीक्षमाणेनासावनादृत । भावार्थश्चायं-यस्मादेव महर्द्धिकोऽनादृतनामा देवस्तत्र वसति ततस्तस्य समस्तापि स्फीतिस्तत्रैवोदितेति कृत्वा सुदर्शनेत्याभिधान । 'से ण तत्थ'त्ति । सोऽनादृतो देव तत्र जम्बूवृक्षे चतुर्णा सामानिकसहस्राणा यावदात्मरक्षकाणा यावत्-करणात् 'चउण्ह अग्गमहिसीणमि'त्यादि सङ्ग्रह । तथा जम्बूद्वीपस्य द्वीपस्य जम्ब्वा सुदर्शनाया अनादृताया राजधान्या अन्येषा च तत्र निवासिना देवाना देवीना च 'जाव'त्ति । यावद्विहरति । यावत्करणात् 'आहेवच्च पोरेवच्च सामित्तमि'त्यादि दृश्यम् । अथानादृतस्य देवस्यानादृता नाम राजधानी क्वास्ति ? इति प्रश्नयति-' कहि णमि'त्यादि । क्व भदन्त ! अनादृतस्य देवस्यानादृता नाम्नी राजधानी प्रज्ञप्ता ? । भगवानाह-गौतम ! 'जवूद्दीवे'त्ति । जम्बूद्वीपे द्वीपे मन्दरस्य पर्व्वतस्योत्तरत 'ज चेव'त्ति । यदेव पूर्व्वं वर्णित 'जमिगापमाण'ति । यमिकाराजधानीप्रमाण तदेव प्रमाण ज्ञातव्य । यावदुपपातोऽभिषेकश्च निरवशेप सम्पूर्ण । उपलक्षणादलङ्कारादि सर्व्वमपि ग्राह्यम् । अनादृतस्यापि यमकदेवतुल्यर्द्धिकत्वात् । से तेणट्ठेण'ति । निगमनवाक्य प्रतीतार्थम् । अथ निमित्तान्तरमाह-'अदुत्तर च णमि'त्यादि । अथापर च गौतम ! 'जाव पडुच्च'त्ति । यावत्प्रतीत्य । यावत्करणात् 'जवूए ण सुदसणाए सासए णामधेज्जे ण कयाइ णासी'त्यादि ।

अथोत्तरकुरूणा नामनिमित्त प्रश्नयति

**से केणट्ठेण भंते ! एवं वुच्चति । उत्तरकुरा उत्तरकुरा ?। गो० ! उत्तरकुराए उत्तरकुरु णामं देवे परिवसति महिड्ढीए जाव पलिउवमट्ठितीए । से तेणट्ठेण गोअमा ! एवं वुच्चति उत्तरकुरा उत्तरकुरा । अदुत्तरं च णं० । कहि णं भंते ! महाविदेहे वासे मालवंते णामं वक्खारपव्वए प० ? । गो० ! मंदरस्स पव्वयस्स उत्तरपुरत्थिमेणं णीलवंतस्स दाहिणेणं उत्तरकुराए पुरत्थिमेणं कच्छस्स चक्कवट्टिविजयस्स पच्चत्थिमेण । एत्थ णं महाविदेहे वासे मालवंते णामं उत्तरदाहिणायते पाईणपडीणविच्छिण्णे । जं चेव गंधमायणस्स पमाणं विक्खभो अ । णवरिं इमं**

णाणत्तं सव्ववेरुलिआमए अवसिट्ठं तं चेव जाव गोअमा ! नव कूडा पण्णत्ता । तं जहा-सिद्धायतणकूडे० गाहा ।

सिद्धे अ मालवते उत्तरकुरु कच्छ सागरे रयए । सीआ य पुण्णभद्दे हरिकूडे चेव बोद्धव्वे ॥१॥

कहि णं भंते ! मालवते वक्खारपव्वए सिद्धायतणकूडे णामं कूडे पण्णत्ते ? । गो० ! मंदरस्स पव्वयस्स उत्तरपुरत्थिमेणं मालवंतस्स कूडस्स दाहिणपच्चत्थिमेणं । एत्थ णं सिद्धायतणे० । पंच जोअणसयाइं उड्ढं उच्चत्तेणं अवसिट्ठं तं चेव जाव रायहाणी । एवं मालवंतकूडस्स उत्तरकुरुकूडस्स कच्छकूडस्स । एए चत्तारि कूडा दिसाहिं पमाणेहि अ णेअव्वा । कूडसरिसणामया देवा । कहि णं भते ! मालवंते सागरकूडे णामं कूडे पण्णत्ते ? । गो०! कच्छस्स कूडस्स उत्तरपुरत्थिमेणं रयतकूडस्स दक्खिणेणं । एत्थ णं सागरकूडे णामं० । पंच जोअणसयाइं उड्ढं उच्चत्तेणं० । सुभोगा देवी रायहाणी उत्तरपुरत्थिमेणं । रयतकूडे भोगमालिनी देवी रायहाणी उत्तरपुरत्थिमेणं । अवसिट्ठा कूडा उत्तरदाहिणेणं णेअव्वा एक्केण पमाणेणं ॥

'से केणट्ठेणमि'त्यादि । अत्र प्रश्ननिर्व्वचने प्राग्वत् । अथ माल्यवान् वक्षस्कारपर्व्वत. क्वास्ति ? इति प्रश्नयति-'कहि ण भते !'इत्या द प्रश्न प्राग्वत् । भगवानाह-गौतम ! मन्दरस्य पर्व्वतस्योत्तरपूर्व्वस्यामीशान्या नीलवतो वषधरस्य दक्षिणेन उत्तरकुरूणां पूर्व्वस्या 'कच्छस्स'त्ति । कच्छस्य-कच्छनाम्नश्चक्रवर्त्तिविजयस्य पश्चिमायाम् । अत्रान्तरे महाविदेहे माल्यवन्नाम्ना वक्षस्कारपर्व्वतः इति शेष . अथ स कीदृश ? इत्याह-'उत्तरे'त्यादि । उत्तरदक्षिणायत. प्राचोनप्रतीचोन वस्तीर्णः । अतिदेशमाह 'ज चेव'त्ति । यदेव गन्धमादनस्य प्रमाण 'तीस जोअणसहस्साइमि'त्यादिना दीर्घतादिलक्षण विष्कम्भश्च । 'पच जोअणसयाइ विक्खभेणमि'त्यादिना पृथुता । च समुच्चये 'णवरि'ति । नवरमिद नानात्व भेद. 'सव्व'त्ति । सर्व्वात्मना वैडूर्यमय गन्धमादनेस्तु सर्व्वात्मना रत्नमय इति भेदः । 'अवसिट्ठ त चेव'त्ति । अवशिष्टमुक्तविशेषातिरिक्त 'त चेव'त्ति । तदेव-तत् समानमेवेत्यर्थ । कियद् दूरम् ? इत्याह-'जाव गोअमे'त्यादि । यावद् गौतम ! नव कूटाः कूटशब्दः पुनपुंसक इति । अथ नव कूटानामत आह-'त जहे'त्यादि । सिद्धायतनकू मेतदनुसारेणान्यान्यपि वाच्यानि । नव कूटनामससूचिका गाथामाह-'सद्धे अ' इत्यादि । सिद्धायतनकूट माल्यवत्कूटमि त्यादि । तत्र हरिकूटमित्यत्र पदैकदेशे पदसमुदायोपचारात् हरिस्सहकूट पूर्णभद्रस्थाने क्वचित्पूर्णनामेति पाठः । तत्र भीमेति भीमसेनवत् पूर्णभद्रनामेति व्याख्येय । रजतस्थाने रुचककूटमिति क्षेत्रसमासादौ । अथ नवस्वपि कूटेषु सिद्धायतनकूट क्वास्ति ? इति प्रश्नयति-'कहि ण भते !'इत्यादि प्रश्न. सुगमः । निर्व्वचनमाह-'गौतम ! मन्दरस्य पर्व्वतस्य उत्तरपूर्व्वस्यामीशान्या माल्यवतः कूटस्य दक्षिणपश्चिमेन-नैर्ऋत्याम् । अत्रान्तरे मेरो प्रत्यासन्नं सिद्धायतन-सिद्धायतनोपलक्षित कूटमित्यर्थ । तच्च कीदृशम् ? इत्याह-'पचे'त्यादि । पञ्च योजनशतान्यूर्ध्वमुच्चैस्त्वेन

'अवसिट्ठं'ति । अवशिष्ट-शेष यावद्वक्तव्याहँ 'त चेव'त्ति । तदेव गन्धमादनसिद्धायतनकूटोक्तमेव ज्ञेयमिति-गम्य । कियद्दूरम् ? इत्याह-'जाव रायहाणी'त्ति । यावद्राजधानी-राजधानीवर्णन यावद्वक्तव्यम् । अथ त्रीणि कूटान्यतिदेशेनाह-'एवमि'ति । एव सिद्धायतनकूटवत् माल्यवत कूटस्य उत्तरकुरुकूटस्य कच्छकूटस्य च । चकारो गम्य । राजधानी पर्यन्तवर्णन समानमेव । अथ सागरकूटादीनामुक्तकूटैः सह वैसदृश्य सूचयन्नेव चतुर्णां समतासूचक चिह्नमाह-'एए चत्तारी'ति । एतेऽनन्तरोक्ता' सिद्धायतनादि कच्छान्ताश्चत्वार: कूटा: 'दिसाहिं'ति । दिग्भिरोशानीलक्षणविदिग्रूपाभि प्रमाणैश्चोच्चत्वादिविषयैः ज्ञातव्यास्तुल्या इति शेष' । अयं भाव.-मेरोरुत्तरपूर्व्वस्या विदिशि उत्तरकुरूणां पूर्व्वस्या दिशि कच्छ-विजयस्य पश्चिमायां दिशि यो माल्यवानद्रि: । तत्र प्रथम सिद्धायतन कूटं । तच्च मेरोरुत्तरपूर्व्वस्या मेरो प्रत्यासन्न तस्योत्तरपूर्व्वस्या क्रमेण द्वितीय तृतीय चतुर्थं च । एतानि चत्वार्यपि विदिग्भावीनि 'कूडसरिस'त्ति । कूटसदृशनामका देवाश्चतुर्णामपि कूटानामधिपतय: । ननु वैताढ्यादिसिद्धायतनकूटेषु सिद्धायतनान्युक्तानि न पुनस्तद्वन्नादधिपतयो देवा । इह तु सिद्धायतन नोक्तमुक्त च तन्नाम्ना तदधिपति-स्तद्राजधानी चेति । तत्कथं सङ्गच्छते ? इति चेत् । उच्यते-सिद्धायतनकूटनामवशादेव सर्वेष्वपि सिद्धायतनकूटेषु सिद्धायतनानि सन्त्येव परमेतत्सूत्रानुसारेण सर्व्वत्रापि सिद्धायतन सिद्धायतनकूटयो-श्चिन्ताकारिणस्तदधिपतयो देवा: परिवसतीत्यत्र न किञ्चिदयुक्त पश्यामस्तत्त्व तु केवलिगम्य । अथ पञ्चम सागरकूट क्वास्ति ? इति प्रश्नयति-'कहि णमि'त्यादि । क्व भदन्त ! माल्यवति वक्षस्कार-पर्व्वते सागरकूट नाम्ना कूट प्रज्ञप्तं ?। भगवानाह-गौतम ! कच्छस्य कूटस्योत्तरपूर्व्वस्यामीशान्या रजत-कूटस्य दक्षिणेन 'एत्थ ण' ति । अत्रान्तरे सागरकूट प्रज्ञप्तमिति गम्य । तच्च पञ्च योजनशतान्यूर्ध्वमुच्चै-स्त्वेन 'अवसिट्ठ त चेव'त्ति । इहाप्यध्याहार्यम् । एवमग्रेऽपि समानवक्तव्यतायामवसातव्यं । सागरकूटस्य च स्वामिनी सुभोगा देवी राजधानी चोत्तरपूर्व्वस्यामसङ्ख्येयतमे जम्बूद्वीपनाम्नीति सर्व्वं प्राग्वदिहा-नुक्तमपि द्रष्टव्य । 'रयय'त्ति । रजतकूटे रुचककूटाऽपरनाम्नि भोगमालिनी देवी स्वामिनीत्यादि प्राग्वत् । राजधानी चास्या. पूर्व्वस्या दिशि असङ्ख्येयतमे इत्यादि प्राग्वत् । अथ शीताकूटादीनि त्रीण्यपि उत्तर-दिग्व्यवस्थितानि समुदायेन दर्शयति-'अवसिट्ठा'इति । अवशिष्टा: शीताकूटपूर्णभद्रकूटहरिस्सहकूटा: 'उत्तरदक्खिणेण'त्ति । परस्परमुत्तरदक्षिणेन स्थितानि ज्ञातव्यानि । तच्चैव-रजतकूटात् शीताकूटमुत्तर-स्या, शीताकूटात् रजतकूट दक्षिणस्यां तथा शीताकूटात् पूर्णभद्रकूटमुत्तरस्यां, पूणभद्रात् शीताकूट दक्षिण-स्या, पूर्णभद्राद्हरिस्सहकूटमुत्तरस्यां हरिस्सहकूटात् पूर्णभद्रकूट दक्षिणस्यामिति । तत्र शीताकूटस्य स्वामिनी शीता देवी पूर्णभद्रस्य तु पूर्णभद्रनामा देव: हरिस्सहकूटस्यापि हरिस्सहदेवोऽधिपति: । अथ सामान्यत. प्रमाणमधिकृत्य साम्यमाह-'एक्केण'त्ति । एकेन प्रमाणेन सर्व्वाण्यपि कूटान्येकप्रमाणोपेतानि वक्ष्यमाणविशेषा हरिस्सहकूटाद्व्यतिरिक्तानामष्टानामपि कूटाना हिमवत्कूटसमानप्रमाणत्वात् ।

अथ हरिस्सहकूटमधिकृत्य विशेषजिज्ञासया गौतम: प्रश्नयति

**कहि णं भंते ! मालवते हरिस्सहकूडे णामं कूडे पण्णत्ते ? । गो० ! पुण्णभद्दस्स उत्तरेणं**

णीलवंतस्स कूडस्स दक्खिणेणं । एत्थ णं हरिस्सहकूडे णामं कूडे पण्णत्ते । एगं जोअणसहस्सं उड्ढं उच्चत्तेणं जमगप्पमाणेणं णेअव्वं । रायहाणी उत्तरेणं असंखेज्जे दीवे अण्णंमि जंबुद्दीवे दीवे उत्तरेण बारस जोअणसहस्साइं ओगाहेत्ता । एत्थ णं हरिस्सहस्स देवस्स हरिकंता हरिस्सहा) नाम रायहाणी पण्णत्ता । चउरासीइं जोअणसहस्साइं आयामविक्खम्भेणं वे जोअणसयसहस्साइं पण्णट्ठिं च सहस्साइं छच्च बत्तीसे जोअणसए परिक्खेवेणं । सेसं जहा चमरचंचाए रायहाणीए तहा पमाणं भाणिअव्वं महिड्ढीए महज्जुईए । से केणट्ठेणं भंते ! एवं वुच्चति मालवंतवक्खारपव्वए मालवंतवक्खारपव्वए ? । गो० ! मालवंते वक्खारपव्वए तत्थ तत्थ देसे तहिं तहिं बहवे सरिआगुम्मा णवमालिआगुम्मा जाव मगदंतिआगुम्मा । ते णं गुम्मा दसद्धवण्णं कुसुमेंति । जे णं तं मालवंतस्स वक्खारपव्वयस्स बहुसमरमणिज्जं भूमिभागं वातविधूयग्गसाला-मुक्कपुप्फपुंजोवयारकलिअं करेंति । मालवंते अ एत्थ देवे महिड्ढीए जाव पलिओवमट्ठितीए परिवसति । से तेणट्ठेणं गो० ! अदुत्तरं च णं जाव णिच्चे ॥

'कहि णं भंते !' इत्यादि प्रश्नः सुगमः । भगवानाह-गौतम ! पूर्णभद्रस्य कूटस्योत्तरस्यां नीलवद्वर्षधरवर्त्तिनो नीलकूटस्य दक्षिणस्याम् । अत्रान्तरे हरिस्सहकूटं नाम्ना कूटं प्रज्ञप्तम् । एकं योजनसहस्रमूर्ध्वमुच्चैस्त्वेन 'जमग'त्ति । यमकपर्व्वतप्रमाणेन ज्ञातव्यं । समप्रमाणमिति गम्यं । 'रायहाणी'त्ति । राजधानी चास्योत्तरस्यां 'असंखेज्ज'त्ति । असङ्ख्येयान् द्वीपसमुद्रानतिक्रम्य अन्यस्मिन् जम्बूद्वीपे द्वीपे उत्तरेण द्वादश योजनसहस्राण्यवगाह्य अत्रान्तरे हरिस्सहस्य देवस्य हरिकान्ता(हरिस्सहा)नाम्नी राजधानी प्रज्ञप्ता । सा च चतुरशीतियोजनसहस्राण्यायामविष्कम्भाभ्यां, द्वे योजनलक्षे पञ्चषष्टियोजनसहस्राणि षट् च द्वात्रिंशदधिकानि योजनशतानि परिक्षेपेण । 'सेस जहे'त्यादि । शेषं यथा चमरचञ्चायां राजधान्यां प्रमाणं भणितं भगवत्यामिति गम्यं । तथा प्रमाणं भणितव्यमस्या अपीत्यर्थः । 'महिड्ढीए'इत्यादि । वचोमात्रेणापि हरिस्सहकूटस्य नामनिमित्तविषयके प्रश्ननिर्व्वचनेऽपि सूचिते द्रष्टव्ये । तच्चैवं-'से केणट्ठेणं भंते ! एवं वुच्चइ हरिस्सहकूडे हरिस्सहकूडे ? । गो० ! हरिस्सहकूडे बहवे उप्पलाइं पउमाइं हरिस्सहकूडसमवण्णाइं जाव हरिस्सहकूडे णामं देवे एत्थ महिड्ढीए जाव विहरंति । से तेणट्ठेणं जाव अदुत्तरं च णं गो० ! जाव सासए णामधेज्जे' । अथ माल्यवतो नामनिमित्तं प्रश्नयति-'से केणट्ठेणमि'त्यादि प्रश्नः सुगमः । भगवानाह-गौतम ! माल्यवति वक्षस्कारपर्व्वते 'तत्थ तत्थ'त्ति । तत्र तत्र देशे 'तहिं तहिं'ति । तत्र तत्र प्रदेशे बहवः सरिकागुल्मा नवमालिकागुल्माः यावन्मगदन्तिकागुल्माः । यावत्करणात् कोरिण्टगुल्मादीनां सङ्ग्रहः । 'ते णं'ति । णं प्राग्वत् । ते-गुल्माः दशार्द्धवर्णं-पञ्च वर्णं कुसुमयन्ति-कुसुमं कुर्व्वन्ति जातावेकवचनमतः कुसुमसमूहं जनयन्ति 'जेणं ति । येन कुसुमसमूहेन तं माल्यवतो वक्षस्कारपर्व्वतस्य बहुसमरमणीयं भूमिभागं 'वायविधूअ'त्ति । वात-विधूता अग्रशालाः-शाखाग्राणि ततो मुक्तो यः पुष्प-

पुञ्जस्तस्योपचारेण कलितं-युक्त कुर्वन्ति । शेष प्राग्वत् ।

अथ विजयस्वरूपजिज्ञासया माल्यवतः प्रत्यासन्न कच्छविजयं प्रश्नयति—

कहि णं भंते ! जंबूदीवे दीवे महाविदेहे वासे कच्छे णामं विजए पण्णत्ते ? गो० ! सीआए महाणईए उत्तरेणं नीलवंतस्स वासहरपव्वयस्स दाहिणेणं चित्तकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं मालवंतस्स वक्खारपव्वयस्स पुरत्थिमेणं । एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे कच्छे णामं विजए पण्णत्ते । उत्तरदाहिणायते पाईणपडीणविच्छिण्णे पलिअंकसंठाणसंठिए गंगासिंधूहिं महाणदीहिं वेअड्ढेण पव्वएणं छब्भागपविभत्ते सोलस जोअणसहस्साइं पंच य बाणउए जोअणसए दोण्णि अ एगूणवीसति भागे जोअणस्स आयामेणं दो जोअणसहस्साइं दोण्णि अ तेरसुत्तरे जोअणसए किंचिविसेसूणे विक्खंभेणं । कच्छस्स णं विजयस्स बहुमज्झदेसभाए एत्थ णं वेअड्ढणामं पव्वए पण्णत्ते । जे णं कच्छं विजयं दुहा विभयमाणे विभयमाणे चिट्ठंति । तं जहा-दाहिणड्ढं कच्छं च उत्तरड्ढं कच्छं च । कहि णं भंते ! जंबूद्दीवे दीवे महाविदेहे वासे दाहिणड्ढकच्छे णामं विजए पण्णत्ते ? गो० । वेअड्ढस्स पव्वयस्स दाहिणेणं सीआए महाणईए उत्तरेणं चित्तकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं मालवंतस्स वक्खारपव्वयस्स पुरत्थिमेणं । एत्थ णं जंबूद्दीवे दीवे महाविदेहे वासे दाहिणड्ढकच्छे णामं विजए पण्णत्ते । उत्तरदाहिणायते पाईणपडीणविच्छिण्णे अट्ठ जोअणसहस्साइं दोण्णि अ एगसत्तरे जोअणसए एक्कं च एगूणवीसतिभागं जोअणस्स आयामेण दो जोअणसहस्साइं दुण्णि अ तेरसुत्तरे जोअणसए किंचिविसेसूणे विक्खंभेणं पलिअंकसंठाणसंठिए। दाहिणड्ढकच्छस्स णं भंते ! विजयस्स केरिसए आगारभावपडोआरे पण्णत्ते ? । गो० ! बहुसमरमणिज्जे भूमिभागे प० । जाव कित्तिमेहिं चेव अकित्तिमेहिं चेव । दाहिणड्ढकच्छे णं भंते ! विजये मणुआणं केरिसए आगारभाव० ? । गोअमा ! तेसि णं मणुआणं छव्विहे संघयणे जाव सिज्झंति जाव सव्वदुक्खाणमंतं करेंति । कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे कच्छे विजए वेयड्ढे णामं पव्वए पण्णत्ते ? । गो० ! दाहिणड्ढकच्छविजयस्स उत्तरेण उत्तरड्ढकच्छस्स दाहिणेणं चित्तकूडस्स पच्चत्थिमेणं मालवंतस्स पुरत्थिमेणं । एत्थ णं कच्छे विजए वेअड्ढे णामं पव्वए पण्णत्ते । पाईणपडीणायते उदीणदाहिणविच्छिण्णे दुहा वक्खारपव्वयं पुट्ठे—पुरत्थिमिल्लाए कोडीए जाव दोहिवि पुट्ठे भरहवेअड्ढसरिसगे णवरिं। दो बाहाओ जीवा धणुपुट्ठं च ण कायव्वं । विजयविक्खंभसरिसे

आयामेण। विक्खंभो उच्चत्तं उव्वेहो अ तह चेव। विज्जाहरसेढीओ तहेव। णवरिं पणपण्णं पणपण्णं विज्जाहरणगरावासा पण्णत्ता। आभिओगसेढीओ उत्तरिल्लाओ सेढीओ सीआए ईसाणस्स सेसाओ सक्कस्स। कूडा

सिद्धे कच्छे खंडग माणी वेअड्ढ पुण्ण तमिसगुहा। कच्छे वेसमणे वा वेअड्ढे हुंति कूडाइं ॥१॥

कहि णं भंते! जंबुद्दीवे दीवे महाविदेहे वासे उत्तरड्ढकच्छे णामं विजये प०?। गो०! वेअड्ढस्स उत्तरेण णीलवंतस्स वासहरपव्वयस्स दाहिणेणं मालवंतस्स वक्खारपव्वयस्स पुरत्थिमेणं चित्तकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं। एत्थ णं जंबुद्दीवे दीवे जाव सिज्झंति तहेव णेअव्वं। कहि णं भंते! जंबुद्दीवे दीवे कच्छे विजये सिंधुकुंडे णामं कुंडे प०?। गो०! मालवंतस्स वक्खारपव्वयस्स पुरत्थिमेणं उसभकूडस्स पच्चत्थिमेणं णीलवंतस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे। एत्थ णं जंबुद्दीवे दीवे उत्तरड्ढकच्छविजए सिंधुकुंडे णाम कुंडे पण्णत्ते। सट्ठिं जोअणाइं आयामविक्खंभेणं जाव भवणं अट्ठो अ रायहाणी अ णेअव्वा। भरतसिंधुकुंडसरिसं सव्वं णेअव्वं। जाव तस्स णं सिंधुकुंडस्स दाहिणिल्लेणं तोरणेणं सिंधूमहाणदी पवूढा समाणी उत्तरड्ढकच्छविजयं पज्जेमाणी पज्जेमाणी सत्तहिं सलिलासहस्सेहिं आपूरेमाणी आपूरेमाणी अहे तमिसगुहाए वेअड्ढपव्वयं दालइत्ता दाहिणड्ढकच्छं विजयं पज्जेमाणी पज्जेमाणी चउदसहिं सलिलासहस्सेहिं समग्गा दाहिणेणं सीअं महाणइं समप्पेति। सिंधू णं महाणदी पवहे मूले अ भरहसिंधुसरिसा पमाणेणं जाव दोहिं वणसंडेहिं संपरिक्खित्ता। कहि णं भंते! उत्तरड्ढकच्छे उसभकूडे णामं पव्वए पण्णत्ते?। गो०! सिंधुकुंडस्स पुरत्थिमेणं गंगाकुंडस्स पच्चत्थिमेणं नीलवंतस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे। एत्थ णं उत्तरड्ढकच्छे उसभकूडे णामं कूडे पण्णत्ते। अट्ठ जोअणाइं उड्ढं उच्चत्तेणं तं चेव पमाणं जाव रायहाणी से णवरिं उत्तरेण भाणिअव्वा। कहि णं भंते! उत्तरड्ढकच्छे विजए गंगाकुंडे णामं कुंडे प०?। गो०! चित्तस्स कूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं उसभकूडस्स पव्वयस्स पुरत्थिमेणं णीलवंतस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे। एत्थ णं उत्तरड्ढकच्छे गंगाकुंडे णामं कुंडे पण्णत्ते। सट्ठिं जोअणाइं आयामविक्खंभेणं तं चेव जहा सिंधू जाव वणसंडपरिक्खित्ता। से केणट्ठेणं भंते! एवं वुच्चइ कच्छे विजए कच्छे विजए?। गो०! कच्छे णं विजए वेअड्ढस्स पव्वयस्स दाहिणेणं सीआए महाणईए उत्तरेणं गंगाए महाणईए पच्चत्थि-

मेणं सिंधूए महाणइए पुरत्थिमेणं दाहिणड्ढकच्छविजयस्स बहुमज्झदेसभागे । एत्थ णं खेमा णाम रायहाणी पण्णत्ता । विणीआरायहाणीसरिमा भाणिअव्वा । तत्थ णं खेमाए रायहाणीए कच्छे णाम राया समुप्पज्जति । महाहिमवंत जाव सव्वं भरहोपवरणं भाणिअव्वं णिक्खम-मणवज्जं सेसं भाणिअव्वं । जाव भुंजए माणुस्सए सुहे । कच्छणामधेज्जे कच्छे इत्थ देवे महिड्ढीए जाव पलिओवमट्ठितीए परिवसति । से तेणट्ठेणं गो० ! एवं वुच्चइ कच्छे विजये जाव णिच्चे ॥

'कहि णमि' त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! शीताया महानद्या उत्तरस्या नीलवतो वर्षधरपर्व्वतस्य दक्षिणस्या चित्रकूटस्य वक्षस्कारपर्व्वतस्य पश्चिमाया माल्यवतो वर्षधरपर्व्वतस्य पूर्व्वस्याम् । अत्रान्तरे जम्बूद्वीपे द्वीपे महाविदेहे वर्षे कच्छ इति नाम्ना विजय प्रज्ञप्त । किं विशिष्ट ? इत्याह—'उत्तरे'त्यादि । उत्तरदक्षिणायत प्राचीनप्रतीचीनविस्तीर्णपर्यङ्कसस्थानसस्थित गङ्गासिन्धुभ्या वैताढ्येन च पर्व्वतेन षड्भिर्भागै प्रविभक्त । तथा षोडश योजनसहस्राणि द्विनवत्यधिकानि पञ्च योजनशतानि द्वौ चैकोनविंशतिभागौ १६५९२ क०२ आयामेन । 'दो जोअण'त्ति । द्वे योजनसहस्रे त्रयोदशोत्तरे द्वे च योजनशते किञ्चिद्विशेषोने विष्कम्भेन । 'कच्छस्स णमि'त्यादि । कच्छस्य विजयस्य बहुमध्यदेशभागे 'एत्थ ण'ति । अत्रान्तरे वैताढ्यो नाम्ना पर्व्वत प्रज्ञप्त । यो वैताढ्य कच्छ विजय द्विधा विभजमानो विभजमानस्तिष्ठति । तद्यथा-दक्षिणार्द्धं कच्छ चोत्तरार्द्धं कच्छ च । अथ दक्षिणकच्छ प्रश्नयति—'कहि ण भते !' इत्यादि प्रश्न सुगम । भगवानाह—गौतम ! वैताढ्यस्य पर्व्वतस्य दक्षिणेन शीताया महानद्या उत्तरेण चित्रकूटस्य वक्षस्कारपर्व्वतस्य पश्चिमेन माल्यवतो वक्षस्कारपर्व्वतस्य पूर्व्वेण । 'एत्थ ण'ति । अत्रान्तरे जम्बूद्वीपे द्वीपे महाविदेहे वर्षे दक्षिणार्द्धकच्छो नाम्ना विजय प्रज्ञप्त । स च कीदृश ? इत्याह—'उत्तर'त्ति । उत्तरदक्षिणायत पूर्व्वपश्चिमविस्तीर्ण अष्टौ योजनसहस्राणि द्वे चैकसप्तत्युत्तरे योजनशते एक चैकोनविंशतिभाग योजनस्य ८२७१ क० १ आयामेन । द्वे योजनसहस्रे द्वे च योजनशते त्रयोदशाधिके किञ्चिद्विशेषोने विष्कम्भत पर्यङ्कसस्थानसस्थित । 'दाहिणड्ढ'त्ति । दक्षिणार्द्धकच्छस्य भदन्त ! विजयस्य कीदृश आकारभावप्रत्यवतार प्रज्ञप्त ? भगवानाह—गौतम ! 'बहुसमे'त्यादि । प्रागुक्तवर्णनमवसातव्यम् । अथ तन्निवासिना मनुजाना कीदृश स्वरूपम् ? इति पृच्छति—'दाहिण कच्छेणमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! तेषा मनुजाना षड्विध सहनन यावत्सिध्यन्तीति प्राग्वत् । अथ कच्छे विजये वैताढ्य क्वास्ति ? इति पृच्छति—'कहि ण भते !'इत्यादि प्रश्न सुगम । भगवानाह—गौतम ! दक्षिणार्द्धकच्छविजयस्योत्तरेण उत्तरार्द्धकच्छविजयस्य दक्षिणेन चित्रकूटस्य पश्चिमेन माल्यवत पूर्व्वेण । अत्रान्तरे कच्छविजये वैताढ्यो नाम्ना पर्व्वत प्रज्ञप्त । 'पाईणे'त्यादि प्राग्वत् । 'दुहा'त्ति । द्विधा वक्षस्कारपर्व्वतौ स्पृष्ट । द्विधा स्पर्शनमाह—'पुरत्थिमिल्ले'त्यादि । पौरस्त्यया कोट्या 'जाव'त्ति । यावद् द्वाभ्या स्पृष्ट । यावत्करणात् 'पुरत्थि-

मिल्लमि'त्यादि । तत्र पौरस्त्य चित्रकूटनामान वक्षस्कारपर्वतं स्पृष्ट' पाश्चात्यया कोटया पाश्चात्य माल्यवन्त वक्षस्कारपर्वतं स्पृष्ट । अतिदेशमाह—'भरहे'त्यादि । भरतवैताढ्यसदृश । विशेषमाह—'णवरिमि'त्यादि । नवरमयं विशेष -द्वे वाहे जीवा धनु पृष्ठ च न कर्त्तव्य । विजयविष्कम्भसदृश आयामेन 'विक्खभो'त्ति । विष्कम्भ उच्चत्वमुद्वेधश्च 'तह चेव'त्ति । तथैव भरतवैताढ्यवदेव विद्याधरश्रेण्यावपि तथैव । 'नवरि'ति । तत्रोऽय विशेष —पञ्चपञ्चाशत् पञ्चपञ्चाशत् विद्याधरनगरावासा प्रज्ञप्ता । उभयोरपि श्रेण्योरिति गम्य । भरतवैताढ्ये च दक्षिणत पञ्चाशत् उत्तरतस्तु षष्टिरित्यनयोर्भेद । अथ प्रसङ्गत. सर्वानपि वैताढ्यानधिकृत्य भेदमाह—'आभिओग'त्ति । आभियोगाना देवाना श्रेणयोऽत्र 'उत्तरिल्लाओ'त्ति । शीताया उत्तरदिग्सम्बन्धिन्य ईशानस्य—द्वितीयकल्पेन्द्रस्य शेषाश्च दक्षिणदिग्सम्बन्धिन्य शक्रस्याद्यकल्पेन्द्रस्य । तासु श्रेणिषु शक्रेशानेन्द्रयोराभियोगा देवास्तिष्ठन्तीत्यर्थ । बहुवचनं च सर्ववैताढ्यापेक्षयेति द्रष्टव्यम् । अथ वैताढ्ये कूटानुद्दिश्य गाथया नामान्याह—'कूडा'इति । तत्र कूटा सन्तीत्युद्देश । 'सिद्धे'इति । गाथा व्यक्ता । पर सर्वविजयेषु द्वितीयाष्टमे कूटे दक्षिणोत्तरार्द्ध विजयनामनी शेषाणि भरतवैताढ्यकूटनामकान्येव । अतो द्वितीय कच्छकूट हि दक्षिणार्द्धकच्छकूटमिति वक्तव्यम् । एवमष्टममपि उत्तरकच्छार्द्धकूटमिति । अथोत्तरार्द्धकच्छविषय प्रश्नमाह—'कहि णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! वैताढ्यस्योत्तरेण नीलवतो वर्षधरपर्वतस्य दक्षिणेन माल्यवतो वक्षस्कारपर्वतस्य पूर्वेण चित्रकूटस्य वक्षस्कारपर्वतस्य पश्चिमेन । अत्रान्तरे जम्बूद्वीपे द्वीपे यावत्सिध्यन्ति । यावत्करणात् महाविदेहे वर्षे उत्तरार्द्धकच्छो नाम्ना विजय प्रज्ञप्त । 'उत्तरदक्षिणायत' इत्यादि प्रागुक्त ग्राह्य । 'तहेव'त्ति । तथैव दक्षिणकच्छार्द्धवदेव मनुजाकारादि ज्ञातव्यम् । अथ कच्छविजये सिन्धुकुण्ड क्वास्ति ? इति पृच्छति—'कहि णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—माल्यवतो वक्षस्कारपर्वतस्य पूर्वेण ऋषभकूटस्य पश्चिमेन नीलवतो वर्षधरपर्वतस्य दाक्षिणात्ये नितम्बे । अत्र जम्बूद्वीपे द्वीपे उत्तरार्द्धकच्छविजये सिन्धुकुण्ड नाम्ना कुण्ड प्रज्ञप्त । तच्च षष्टि योजनान्यायामविष्कम्भेन यावद्वनम् अर्थश्च । 'से केणट्ठे णमि'त्यादि राजधानी च ज्ञातव्या । यावत्करणात्सिन्धुद्वीपादि ग्राह्य । भरतसिन्धुकुण्डसदृश सर्वमप्यत्र वक्तव्य । कियद्दूरम् ? इत्याह—'जाव तस्स णमि'त्यादि । यावत्तस्य कुण्डस्य दाक्षिणात्येन तोरणेन सिन्धुर्महानदी प्रव्यूढा सती उत्तरार्द्ध कच्छ विजय 'पज्जेमाणी'त्ति । पाययन्ती सप्तभि सलिलासहस्रै रापूर्यमाणा अधस्तमिस्रागुहाया वैताढ्यनामान पर्वत भित्त्वा दक्षिणार्द्ध कच्छ विजय पाययन्ती चतुर्दशभि सलिलासहस्रै समग्रा—सहिता दक्षिणेन-दक्षिणदिशा शीता महानदी सम्प्राप्नोति । 'सिंधू ण'त्ति । सिन्धुर्महानदी प्रवहे मूले च भरतसिन्धुसदृशी प्रमाणेन यावत् द्वाभ्या वनखण्डाभ्या परिक्षिप्ता । अथ तत्र ऋषभकूटविषये प्रश्नमाह—'कहि णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! सिन्धुकुण्डस्य पूर्वेण गङ्गाकुण्डस्य पश्चिमेन नीलवतो वर्षधरपर्वतस्य दाक्षिणात्ये नितम्बे । अत्रान्तरे उत्तरार्द्धकच्छे ऋषभकूटनाम्ना पर्वत प्रज्ञप्त । अष्टौ योजनान्यूर्ध्वमुच्चैस्त्वेन 'त चेव'त्ति । तदेवप्रमाण यद्भरतक्षेत्रे ऋषभकूटवक्तव्यताया भणित यावद्राजधानी । 'से णवरि'ति । नवरं सोत्तरस्या दिशि वक्तव्या । भरतऋषभकूटस्य तु दक्षिणस्या-

मति विशेष । अयोत्तरार्द्धकच्छे गङ्गाकुण्ड क्वास्ति ? इति प्रश्नयति-'कहि णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! चित्रकूटस्य वक्षस्कारपर्व्वतस्य पश्चिमायाम् ऋषभकूटस्य पूर्व्वस्या नीलवतो वर्षधरपर्व्वतस्य दाक्षिणात्ये नितम्बे । अत्रान्तरे उत्तरार्द्धकच्छविजये गङ्गाकुण्ड नाम्ना कुण्ड प्रज्ञप्त । 'सट्ठि'त्ति । षष्टि योजनायान्यामविष्कम्भाम्या 'तहेव'त्ति । तथैवात्र वर्ण्णको भणितव्य । यथा सिन्धुकुण्डे भणित जाव 'वणे'ति प्राग्वत् । अथ कच्छविजयस्य नामनिमित्त प्रश्नयति—'से केणट्ठे णमि'त्यादि । प्रश्न प्राग्वत् । भगवानाह—गौतम ! कच्छनाम्नि विजये वैताढचस्य पर्व्वतस्य दक्षिणेन शीताया महानद्या उत्तरेण गङ्गाया पश्चिमेन सिन्धो पूर्व्वेण दक्षिणार्द्धकच्छविजयस्य बहुमध्यदेशभागे । अत्रान्तरे क्षेमा नाम्नी राजधानी प्रज्ञप्ता । सा च विनीताराजधानीसदृशी भणितव्या । 'तत्थ ण'ति । तत्र क्षेमाया राजधान्या कच्छो नाम्ना राजा समुत्पद्यते । 'महाहिमवते'त्यादि । यावत्सर्व्वं यावत्करणात् 'महया हिमवतमलयमदरमहिंदसारे अच्चतविसुद्धदीहरायकुलवसप्पभूए णिरतररायलक्खणविराइअ अगमगे बहुजणबहुमाणपूइए सव्वगुणसमिद्धे खत्तिए मुद्धाभिसित्ते माउपिउसुजाए दयपत्ते सीमकरे सीमधरे खेमकरे खेमधरे मणुस्सिदे जणवयपिआ जणवयपालए'इत्यादि राजवर्णन । 'भरहोववण्ण'ति । भरतोपवर्ण्य एवकारो गम्य । भरतस्य राज्ञो दिग्विजयमहाराज्याभिषेकादिक यदुपवर्ण्यं राजवर्णनसमीपवर्णनार्हंसामान्यत्वे राजवर्णनादधिकमित्यर्थ । तच्च 'बिइओ गमो रायवण्णगस्स इमो तत्थ असखेज्जकालवासतरे उप्पज्जइ । जससी उत्तमे'इत्यादिना सूत्रेण प्रागभिहित । तदपि भणितव्यमिहेति शेष । समानवक्तव्यत्वात् पर कच्छनाम्नेति । न पुन सर्व्वमेवेत्याह—'णिक्खमण'त्ति । निष्क्रमणवर्ज्जं शेष सर्व्वं भणितव्य । कियद्दूर वक्तव्यम् ? इत्याह-'जाव भुजए'त्ति । यावद् भुङ्क्ते मानुष्यकाणि सुखानि यावत्करणात् 'अहिअजायसत्तवीरिअ'इत्यादि सङ्ग्रह । अथापरमपि नामनिमित्तमाह—'कच्छणामधेज्जे'त्यादि अथवेतिगम्य । कच्छनामधेय कच्छोऽत्र देवो महर्द्धिको यावत्पल्योपमस्थितिक परिवसति । निगमनवाक्य प्राग्वत् । 'जाव णिच्च'ति । यावन्नित्य नाम यावत्करणात् 'सासए'इत्यादि सङ्ग्रह । इति प्रथमविजयवक्तव्यता ।

अथ यत पश्चिमाया कच्छ स चित्रकूटो वक्षस्कारपर्व्वत क्वास्ति ? इति प्रश्नयति

**कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे चित्तकूडे णामं वक्खारपव्वए पण्णत्ते ? गो० ! सीआए महाणईए उत्तरेणं णीलवतस्स वासहरपव्वयस्स दाहिणेणं कच्छस्स विजयस्स पुरत्थिमेणं सुकच्छस्स विजयस्स पच्चत्थिमेणं । एत्थ णं जबुद्दीवे दीवे महाविदेहे वासे चित्तकूडे णामं वक्खारपव्वए पण्णत्ते । उत्तरदाहिणायते पाईणपडीणविच्छिण्णे । सोलस जोअणसहस्साइं पंच य बाणउए जोअणसए दुण्णि एगूणवीसतिभागे जोअणस्स १६५९२ क० २ आयामेणं । पंच जोअणसयाइं विक्खंभेणं । णीलवंतवासहरपव्वयंतेणं चत्तारि जोअणसयाइं उद्धं उच्चतेणं । चत्तारि अ गाउअसयाइं उव्वेहेणं । तयाणंतरं चेव मायाए मायाए उस्सेहोव्वेह-**

परिवुड्ढीए परिवड्ढमाणे सीआ महाणईअंतेणं पंच जोअणसयाइं उड्ढं उच्चत्तेणं पंच गाउअसयाइं उव्वेहेणं आसखंधसंठाणसंठिए सव्वरयणामए अच्छे सण्हे जाव पडिरूवे। उभओ पासिं दोहिं पउमवरवेइआहिं दोहि अ वणसंडेहिं संपरिक्खित्ते। वण्णओ दुण्हवि। चित्तकूडस्स णं वक्खारपव्वयस्स उप्पिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते। जाव आसयंति। चित्तकूडे णं भंते! वक्खारपव्वए कइ कूडा प०? । गो०! चत्तारि कूडा प०। तं जहा-सिद्धाययणकूडे चित्तकूडे कच्छकूडे सुकच्छकूडे। समं उत्तरदाहिणेणं परुप्परंति। पढमए णं सोआए उत्तरेणं चउत्थए णीलवंतस्स वासहरपव्वयस्स दाहिणेणं। इत्थ वि चित्तकूडे णाम देवे महिड्ढीए जाव रायहाणी से॥

'कहि णमि'त्यादि प्रश्न सुगमः। भगवानाह-गौतम! शीताया महानद्या उत्तरेण नीलवतो वर्षधरस्य पर्व्वतस्य दक्षिणेन कच्छविजयस्य पूर्व्वेण सुकच्छविजयस्य पश्चिमेन। अत्रान्तरे जम्बूद्वीपे द्वीपे महाविदेहे वर्षे चित्रकूटो नाम्ना वक्षस्कारपर्व्वत प्रज्ञप्त। स चोत्तर-दक्षिणायतः पूर्व्व-पश्चिम-विस्तीर्ण. 'सोलस जोअणसहस्साइमि'त्यादि सुगम। 'पंच जोअण'त्ति। पञ्च योजनशतानि विष्कम्भेन नीलवर्षधरपर्व्वतान्ते चत्वारि योजनशतान्यूर्व्वमुच्चैस्त्वेन चत्वारि गव्यूतिशतान्युद्वेधेन 'तयाणतरं चेव' त्ति। तदनन्तरं च मात्रया मात्रया प्रमाणेन उत्सेधोद्वेधे परिवृद्धया प्रवर्धमान शीतानद्यन्ते-शीतानदी-समीपे पञ्च योजनशतान्यूर्व्वमुच्चैस्त्वेन पञ्च गव्यूतिशतान्युद्वेधेन। 'आसखंध'त्ति। अश्वस्कन्धसस्थान-संस्थितः सर्व्वात्मना रत्नमय 'अच्छे सण्हे'इत्यादि। 'जाव पडिरूवे'त्ति प्राग्वत्। 'उभओ पासिं'ति। उभयोः पार्श्वयोर्द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां वनखण्डाभ्यां सम्परिक्षिप्तः। 'वण्णओ'त्ति। वर्णको द्वयोरपि जगतीगतपद्मवरवेदिकादिसम्बन्धी द्रष्टव्य। अथ चित्रकूटवक्षस्कारस्योपरितनविभागवर्णन-माह-चित्तकूडस्स णमि'त्यादि। 'जाव आसयंति' पर्यन्त प्राग्वत्। यावत्करणात् 'से जहा णाम ए आलिंगे'त्यादि। यावत् 'बहवे वाणमंतरा देवा' इत्यादि सङ्ग्रह। अथ तत्र कूटसङ्ख्या प्रश्नयन्नि-'चित्तकूडे णमि'त्यादि प्रश्न। सुगम। भगवानाह-गौतम! चत्वारि कूटानि प्रज्ञप्तानि। तद्यथा-सिद्धायतनकूट चित्रकूट कच्छकूट सुकच्छकूट चेति। अथैतेषां दिग्व्यवस्थामविकृत्य साम्यमाह-'सम उत्तरे'त्यादि। सम-समान कूटचतुष्कमिति शेष एतत्कूटचतुष्कं उत्तरदक्षिणेन परस्पर समानम्। अय भावः-सिद्धायतनकूटस्य चित्रकूटमुत्तरेण, चित्रकूटस्य सिद्धायतनकूट दक्षिणेन कच्छकूट चोत्तरेण, कच्छकूटस्य चित्रकूट दक्षिणेन, सुकच्छकूट चोत्तरेण, सुकच्छकूटस्य कच्छकूट दक्षिणेन इतिशब्दो वाक्यसमाप्तौ। अत्र चतुर्णां कूटानां परस्परमुत्तरदक्षिणपस्थितत्वे साम्येऽपि प्रथमचरमयो कटयोरर्वाक् परत्र च कूटाभावात् किं कुत्र कस्यां दिशि? इति गौतमाभिप्रायं सफलयन्नाह-'पढमए'त्ति। प्रथमक-प्रथमकूट सिद्धायतनसंज्ञ शीताया उत्तरेण 'चउत्थए'त्ति। चतुर्थक-सुकच्छनाम्ना कूट नीलवतो दक्षिणेन। एतानि कूटानि उच्चत्वादिप्रमाणेन हिमवत्कूट-

सदृशानि । एवमन्येष्वपि वक्षस्कारपर्व्वतेषु द्रष्टव्यम् । अथ नामनिमित्त प्रश्ननिर्व्वचनादिसूचक वाक्य-माह'इत्थ वि'त्ति । अत्रापि चित्रकूटनाम्ना देवो महर्द्धिकः परिवसति यावत् राजधानी से-तस्य चित्रकूट-देवस्य अनेन 'से केणट्ठेण भंते'इत्यादि प्रागुक्तप्रकारेण सर्वमपि सूचित यावच्चित्रकूटस्य राजधानी-वक्तव्या । इति प्रथमवक्षस्कारस्य वक्तव्यतोक्ता ।

अथ सुकच्छनामा द्वितीयो विजय. क्वास्ति ? इति प्रश्नयति

कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे सुकच्छे णामं विजए प० ? । गो० ! सीआए महाणईए उत्तरेणं णीलवंतस्स वासहरपव्वयस्स दाहिणेणं गाहावईए महाणईए पच्चत्थिमेणं चित्त-कूडस्स वक्खारपव्वयस्स पुरत्थिमेणं । एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे सुकच्छे णाम विजए पण्णत्ते । उत्तरदाहिणायते जहेव कच्छे विजए तहेव सुकच्छे विजये णवरिं खेमपुरा रायहाणी सुकच्छो राया समुप्पज्जति तहेव सव्व । कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे गाहावती कुडे णामं कुडे पण्णत्ते ? । गो० ! सुकच्छविजयस्स पुरत्थिमेणं महाकच्छस्स विजयस्स पच्चत्थि-मेणं णीलवंतस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे । एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे गाहावती कुंडे णामं कुंडे पण्णत्ते । जहेव रोहितंसाकुंडे तहेव जाव गाहावतीदीवे भवणे । तस्स णं गाहावतीकुंडस्स दाहिणिल्लेणं तोरणेणं गाहावती णाम महाणदी पवूढा समाणा सुकच्छ-महाकच्छे (विजए) दुहा विभयमाणी विभयमाणी अट्ठावीसाए सलिलासहस्सेहिं समग्गा दाहिणेण सीअं महाणइं समप्पेति । गाहावई णं महाणई पवहे अ मुहे अ सव्वत्थ समा पणवीसं जोअण-सय विक्खंभेणं अड्ढाइज्जाइं जोअणाइं उव्वेहेण उभओ पासिं दोहिं पउमवरवेइआहिं दोहिं वणसंडेहिं संपरिक्खित्ता दुण्ह वि वण्णओ । कहि णं भंते ! महाविदेहे वासे महाकच्छे णामं विजए पण्णत्ते ? । गो० ! णीलवंतस्स वासहरपव्वयस्स दाहिणेणं सीआए महाणईए उत्तरेणं वम्ह-कूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं गाहावतीए महाणदीए पुरत्थिमेणं । एत्थ णं महाविदेहे वासे महाकच्छे णामं विजए प० । सेसं जहा कच्छविजयस्स जाव महाकच्छे इत्थ देवे महिड्ढीए अट्ठो भाणिअव्वो । कहि णं भंते ! महाविदेहे वासे वम्हकूडे णामं वक्खारपव्वए पण्णत्ते ? । गो० ! णीलवंतस्स दक्खिणेणं सीआए महाणईए उत्तरेणं महाकच्छस्स पुरत्थिमेणं कच्छगा-वईस्स पच्चत्थिमेणं । एत्थ णं महाविदेहे वासे वम्हकूडे णामं वक्खारपव्वए पण्णत्ते । उत्तर-दाहिणायते पाईणपडीणविच्छिण्णे । सेसं जहा चित्तकूडस्स जाव आसयति । वम्हकूडे चत्तारि-कूडा पण्णत्ता । तं०-सिद्धायतणकूडे वम्हकूडे महाकच्छकूडे कच्छगावतीकूडे । एवं जाव अट्ठो ।

बम्हकूडे पलिओवमट्ठितीए देवे परिवसति। से तेणट्ठेणं०। कहि णं भंते! महाविदेहे वासे कच्छगावती णामं विजए प०?। गो०! णीलवंतस्स दाहिणेणं सीआए महाणईए उत्तरेणं दहवतीए महाणईए पच्चत्थिमेणं बम्हकूडस्स पुरत्थिमेणं। एत्थ णं महाविदेहे वासे कच्छगावती णामं विजए प०। उत्तरदाहिणायते पाईणपडीणविच्छिण्णे। सेसं जहा कच्छस्स विजयस्स जाव कच्छगावती इत्थ देवे। कहि णं भंते! महाविदेहे वासे दहवतीकुंडे णामं कुंडे पण्णत्ते?। गो०! आवत्तस्स विजयस्स पच्चत्थिमेणं कच्छगावइस्स विजयस्स पुरत्थिमेणं नीलवंतस्स दाहिणिल्ले णितंबे। एत्थ णं महाविदेहे वासे दहवतीकुंडे णाम कुंडे पण्णत्ते। सेसं जहा गाहावतीकुंडस्स जाव अट्ठो। तस्स णं दहवतीकुंडस्स दाहिणिल्लेणं तोरणेणं दहवती णामं महानदी पवूढा समाणी कच्छगावती आवत्तविजए दुहा विभयमाणो विभयमाणी दाहिणेण सीअं महाणइं समप्पेति। सेसं जहा गाहावईए। कहि णं भंते! महाविदेहे वासे आवत्ते णामं विजए प०? गो०! णीलवंतस्स वासहरपव्वयस्स दाहिणेणं सीआए महाणदीए उत्तरेणं णलिणकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं दहवतीए महाणदीए पुरत्थिमेणं। एत्थ णं महाविदेहे वासे आवत्ते णामं विजए पण्णत्ते। सेसं जहा कच्छविजयस्स इति। कहि णं भंते! महाविदेहे वासे णलिणकूडे णामं वक्खारपव्वए प०?। गो०! णीलवंतस्स दाहिणेणं सीआए उत्तरेणं मंगलावत्तस्स विजयस्स पच्चत्थिमेणं आवत्तस्स विजयस्स पुरत्थिमेणं। एत्थ णं महाविदेहे वासे णलिणकूडे णामं वक्खारपव्वए पण्णत्ते। उत्तरदाहिणायते पाईणपडीणविच्छिण्णे। सेसं जहा चित्तकूडस्स जाव आसयंति। णलिणकूडे णं भंते! कूडे कति कूडा प०?। गो०! चत्तारि कूडा प०। तं०-सिद्धायतणकूडे णलिणकूडे आवत्तकूडे मंगलावत्तकूडे। एए कूडा पंचसइआ रायहाणीओ उत्तरेणं। कहि णं भंते! महाविदेहे वासे मंगलावत्ते णामं विजए पण्णत्ते?। गो०! णीलवंतस्स दक्खिणेणं सीआए उत्तरेण णलिणकूडस्स पुरत्थिमेणं पंकावतीए पच्चत्थिमेणं। एत्थ णं मंगलावत्ते णामं विजए पण्णत्ते। जहा कच्छविजए तहा एसो वि भाणिअव्वो। जाव मंगलावत्ते इत्थ देवे परिवसति। से एएणट्ठेणं। कहि णं भंते! महाविदेहे वासे पंकावतीकुंडे णामं कुंडे पण्णत्ते?। गो! मंगलावत्तस्स विजयस्स पुरत्थिमेणं पुक्खलावत्तस्स विजयस्स पच्चत्थिमेणं णीलवंतस्स दाहिणे णितंबे। एत्थ णं पंकावतीकुंडे पण्णत्ते। तं चेव गाहावतीकुंडप्पमाणं जाव मंगलावत्तपुक्खलावत्ते विजए दुहा विभजमाणी

विभजमाणी अवसेसं तं चेव गाहावईए। कहि णं भंते! महाविदेहे वासे पुक्खले (लावत्त णामं विजए पण्णत्ते? । गो०! णीलवंतस्स दाहिणेणं सीआए उत्तरेणं पकावतीए पुरत्थिमेणं एगसेलस्स वक्खारपव्वयस्स पच्चत्थिमेणं। एत्थ णं पोक्खले(लावत्त णामं विजए पण्णत्ते। जहा कच्छविजए तहा भाणिअव्वं जाव पुक्खले इत्थ देवे पलिओवमट्ठितीए परिवसति । से तेणट्ठेणं०। कहि णं भंते! महाविदेहे वासे एगसेले णामं वक्खारपव्वए पण्णत्ते?। गो०! पोक्खलावत्तचक्कवट्टिविजयस्स पुरत्थिमेणं पोक्खलावतीचक्कवट्टिविजयस्स पच्चत्थिमेण णील-वंतस्स दक्खिणेणं सीआए उत्तरेणं। एत्थ णं एक्कसेले णामं वक्खारपव्वए पण्णत्ते। चित्त-कूडगमेणं णेअव्वो जाव देवा आसयंति सयंति। चत्तारि कूडा। तं० सिद्धायतणकूडे एगसेल-कूडे पुक्खलावत्तकूडे पोक्खलावतीकूडे। कूडाणं तं चेव पचसइअं पमाणं जाव एगसेले देवे महिड्ढीए। कहि णं भंते! महाविदेहे वासे पुक्खलावती णामं चक्कवट्टिविजए पण्णत्ते?। गो०! णीलवंतस्स दक्खिणेणं सीआए उत्तरेणं उत्तरिल्लस्स सीआमुहवणस्स पच्चत्थिमेण एगसेलस्स पुरत्थिमेणं। एत्थ णं महाविदेहे वासे पुक्खलावई णामं विजए पण्णत्ते। उत्तरदाहिणायते एवं जहा कच्छविजयस्स जाव पुक्खलावती इत्थ देवे परिवसति । से तेणट्ठेणं०। कहि णं भंते। महाविदेहे वासे सीआए महाणईए उत्तरिल्ले सीआमुहवणे णामं वणे पण्णत्ते?। गो०! णीलवंतस्स दक्खिणेणं सीआए उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पुक्खलावती-चक्कवट्टिविजयस्स पुरत्थिमेणं। एत्थ णं सीआमुहवणे णाम वणे पण्णत्ते। उत्तरदाहिणायते पाईणपडीणविच्छिण्णे सोलसजोअणसहस्साइं पंच य बाणउए जोअणसए दोण्णि अ एगूण-वीसतिभागे जोअणस्स आयामेणं सीआए महाणईए अंतेणं दो जोअणसहस्साइं नव य तेवीसे जोअणसए विक्खंभेणं तयाणंतरं मायाए मायाए परिहायमाणे परिहायमाणे णीलवतवासहर-पव्वयंतेणं एगं एगूणवीसति भागं जोअणस्स विक्खंभेण। से णं एगाए पउमवरवेइआए एगेणं वणसंडेण संपरिक्खित्ते। वण्णओ। सीआमुहवणस्स जाव देवा आसयंति। एवं उत्तरिल्ल पासं समत्तं। विजया भणिआ। रायहाणीओ इमाओ

खेमा खेमपुरा चेव रिट्ठा रिट्ठपुरा तहा। खग्गी मंजूसा वि अ ओसही पुंडरीगिणी। १॥

सोलस विज्जाहरसेढीओ तावईआओ आभिओगसेढीओ सव्वओ इमाओ ईसाणस्स । सव्वेसु विजएसु कच्छवत्तव्वयं। जाव अट्ठो रायाणो सरिसणामगा विजएसु सोलस वक्खारपव्वयाण

चित्तकूडवत्तव्वया जाव चत्तारि चत्तारि बारसण्हं णईणं गाहावतिवत्तव्वया जाव उभओ पासिं दोहिं पउमवरवेइआहिं वणसंडेण य वण्णओ ॥

'कहि णमि'त्यादि प्रश्न सुगम । 'गोअमे'त्यादि निर्व्वचनमपि सुगममेव । 'णवरि'ति । नवर क्षेमपुरा नाम्नी राजधानी । 'सुकच्छे'त्ति । सुकच्छनामाऽत्र राजा समुत्पद्यते । 'तहेव'त्ति । तथैव सर्व्वं यथा कच्छस्य राज्ञ महता हिमवतेत्यादिना सामान्यतो राजवर्णमुपवर्णन च दिग्विजय—महाराज्याभिषेकादिक भरतातिदेशेनोक्त, तथा सुकच्छस्यापि राज्ञ इत्यर्थ । तेन सुकच्छो विजय सुकच्छो विजय । अथ यत सुकच्छनामा विजय पश्चिमाया तस्या ग्राहावत्या अन्तर्नद्या निर्गमकुण्ड क्वास्ति? इति प्रश्नयति—'कहि णमि'त्यादि प्रश्न सुगम । भगवानाह—गौतम ! सुकच्छविजयस्य पूर्व्वेण महाकच्छविजयस्य पश्चिमेन नीलवतो दक्षिणे नितवे । अत्रान्तरे जम्बूद्वीपे द्वीपे महाविदेहे वर्षे ग्राहावती कुण्ड प्रज्ञप्तम् । अतिदिशति 'जहेव'त्ति । यथैव रोहिताशाप्रपातकुण्ड तथैवेदमपि यावत् ग्राहावती—द्वीपे भवनं ग्राहावत्या देव्या इति गम्य । 'तस्स णमि'त्यादि । तस्य ग्राहावतीकुण्डस्य दाक्षिणात्येन तोरणेन ग्राहावती नाम्ना महानदी प्रव्यूढा सती सुकच्छमहाकच्छौ द्विधा विभजमाना विभजमाना अष्टाविंशत्या सलिलासहस्रै समग्रा दक्षिणेन शीता महानदी सम्प्राप्नोति । ग्राहावती महानदी प्रवहे मुखे च सर्व्वत्र समा—पदशप्रमाणा । तत्र प्रमाणमाह—'पणवीस'ति । पञ्चविंशत्यधिक योजनशतं विष्कम्भेन अर्द्धतृतीयानि योजनानि उद्वेधेन 'उभओ पासिं'ति । उभयत पार्श्वयो 'दोहिं'ति । द्वाभ्या पद्मवरवेदिकाभ्या द्वाभ्या वनखण्डाभ्या सम्परिक्षिप्ता । 'दुण्ह य'त्ति । द्वयोर्वेदिकावनखण्डयोर्वर्णन प्राग्वत् । अथ महाकच्छनामा तृतीयो विजय क्वास्ति ? इति प्रश्नयति-'कहि णमि'त्यादि प्रश्न सुगम । भगवानाह—गौतम ! नीलवतो दक्षिणेन शीताया उत्तरेण ब्रह्मकूटपर्व्वतस्य पश्चिमेन ग्राहावत्या पूर्व्वेण । महाविदेहे वर्षे महाकच्छो नाम्ना विजय प्रज्ञप्त । 'सेस'ति । शेष यथा कच्छविजयस्य भणित तथाऽत्रापि । कियद्दूरम् ? इत्याह—'जाव'त्ति । यावन्महाकच्छोऽत्र देवो महर्द्धिक 'अट्ठो'त्ति । अर्थो नामनिमित्त 'से केणट्ठेणमि'त्यादिरूपेण प्रश्ननिर्व्वचनरूपो भणितव्य । यावत्करणात् अरिष्टाया राजधान्या महाकच्छ नामा राजा समुत्पद्यते । तस्य दिग्विजयादि ग्राह्यम् । अथ द्वितीयो ब्रह्मकूटनामा वक्षस्कारपर्व्वत क्वास्ति ? इति प्रश्नयति—'कहि णमि'त्यादि । कच्छकावत्या विजयस्य शेष प्राग्वत् । यावत् 'आसते'इति । अथ 'बम्भकूडे ण भते ! वक्खारपव्वए कति कूडा पण्णत्ता ?'इत्यादिप्रश्नसूत्रमाशङ्क्य निर्व्वचनमाह—'बम्हकूडे चत्तारि'त्ति । ब्रम्हकूटे वक्षस्कारपर्व्वते चत्वारि कूटानि प्रज्ञप्तानि । तद्यथा—सिद्धायतनकूट ब्रह्मकूट महाकच्छकूट कच्छावतीकूट चेति । 'एव जाव अट्ठो'त्ति । एवमर्थो नामनिमित्त ब्रह्मकूटनामाऽत्र देव परिवसति । तेनाय ब्रह्मकूट इत्युच्यते इत्यादि प्राग्वत् । अथ चतुर्थ कच्छकावती विजय क्वास्ति ? इति प्रश्नयति—'कहि णमि'त्यादि प्रश्न प्राग्वत् । यावत्कच्छकावती देवोऽत्र परिवसति । यावत्करणात् अरिष्टावत्या राजधान्या कच्छकावती राजा तस्य दिग्विजयादि वर्णन प्राग्वत् । अथ द्वितीयाया द्रहवत्या अन्तर्नद्या निर्गमनकुण्ड क्वास्ति ? इति प्रश्नयति—'कहि णमि'त्यादि प्रश्न-

निर्वचने सुगमे। तत्राऽऽवर्त्तस्याऽऽवर्त्तनाम्नो विजयस्येति । 'तस्स णमि'ति। तस्य द्रहवती कुण्डस्य दाक्षिणात्येन तोरणेन द्रहवती महानदी प्रव्यूढा सती कच्छकावत्याऽऽवर्त्तौ विजयौ द्विधा विभजमाना विभजमाना दक्षिणेन शीता महानदी समाप्नोति 'सेस'ति। शेषं यथा गाहावत्या नद्यास्तथा अस्या अपि। अथ पञ्चम आवर्त्तनामा विजयः क्वास्ति ? इति पृच्छति । 'कहि णमि'त्यादि प्रश्ननिर्व्वचने सुगमे। अथ तृतीयो नलिनकूटनामा वक्षस्कारः क्वास्ति ? इति प्रश्नयति—'कहि णमि'त्यादि प्रश्ननिर्व्वचने सुगमे। अथ नलिनकूटे कूटसङ्ख्यां प्रश्नयति—'णलिणकूडे णमि'त्यादि प्रश्नं प्राग्वत्। भगवानाह—गौतम ! चत्वारि कूटानि प्रज्ञप्तानि । तद्यथा—सिद्धायतनकूटं नलिनकूटं आवर्त्तकूटं मङ्गलावर्त्तकूटं चेति। 'एए'त्ति। एतान्यनन्तरोक्तानि चत्वार्यपि कूटानि पञ्च शतिकानि—पञ्च योजनशतप्रमाणानि एतेषां च कूटसदृशनाम्ना देवाना राजधान्य उत्तरस्यामिति। अथ षष्ठो मङ्गलावर्त्तविजयः क्वास्ति ? इति प्रश्नयति—'कहि णमि'त्यादि प्रश्ननिर्व्वचने सुगमे। 'जह'त्ति। यथा कच्छविजयस्तथा एषोऽपि मङ्गलावर्त्तनामापि विजयो भणितव्यः। यावन्मङ्गलावर्त्तनामा देवोऽत्र परिवसति। 'से एएणट्ठेण'ति। तदेतेनार्थेन मङ्गलावर्त्तविजयः। यावत्करणात् मञ्जूषाराजधान्या मङ्गलावर्त्तो राजा तस्य कच्छराजवत् दिग्विजयादि वाच्यम्। अथ तृतीया पङ्कावती नाम्ना अन्तर्नदी यत कुण्डान्निर्गच्छति तत्कुण्ड क्वास्ति ? इति पृच्छति—'कहि णमि'त्यादि-प्रश्नं सुगमं। भगवानाह—गौतम ! मङ्गलावर्त्तस्य विजयस्य पूर्व्वेण पुष्कलावर्त्तस्य विजयस्य पश्चिमेन नीलवतो दाक्षिणात्ये नितम्बे । अत्रान्तरे पङ्कावतीकुण्डं प्रज्ञप्तं। 'तं चेव'त्ति। तदेव यत् गाहावत्याः कुण्डस्य प्रमाणाद्युक्तं तदस्यापि वक्तव्यमित्यर्थः। कियद्दूरम् ? इत्याह—'जाव मंगलावत्तो'त्यादि । यावन्मङ्गलावर्त्तपुष्कलावर्त्तौ विजयौ द्विधा विभजमाना विभजमाना यावत्करणात् 'तस्स णं पंकावई कुंडस्स दाहिणिल्लेणं तोरणेणं पंकावती महाणदी पवूढा समाणी'ति सङ्ग्रहः। 'अवसेस'ति। अवशेषं यावत् शीता महानदी समाप्नोतीत्यादि । 'तं चेव'त्ति। तदेव यद्गाहावत्या वर्णनं भणितम्। अथ सप्तमः पुष्कलावर्त्तविजयः क्वास्ति ? इति पृच्छति—'कहि णमि'त्यादि प्रश्नादि सुगमं। 'जहा कच्छे'त्ति। यथा कच्छविजयस्तथा भणितव्यं यावत्पुष्कलोऽत्र देवः पल्योपमस्थितिकः परिवसति। से तेणट्ठेण'ति। तदेतेनार्थेन पुष्कलो विजयः। यावत् करणात् ओषध्यां राजधान्यां पुष्कलो नाम राजा तस्य दिग्विजयादि कच्छराजवद्वक्तव्यम्। अथैकशैलनामा चतुर्थो वक्षस्कारः क्वास्ति ? इति पृच्छति—'कहि णमि'त्यादि प्रश्नं प्राग्वत्। भगवानाह—गौतम ! पुष्कलावर्त्तचक्रवर्त्तिविजयस्य पूर्व्वेण पुष्कलावतीचक्रवर्तिविजयस्य पश्चिमेन नीलवतो दक्षिणेन शीताया उत्तरेण। अत्रान्तरे एकशैलनामा वक्षस्कारपर्व्वतः प्रज्ञप्तः । 'चित्तकूडगमेण'ति। चित्रकूटगमस्तावदेवम्— 'उत्तरदाहिणायते पाईणपडीणविच्छिण्णे सोलस जोअणसहस्साइं पंच य बाणउए जोअणसए दोण्णि एगूणवीसतिभागे जोअणस्स आयामेणं पंच जोअणसयाइं विक्खंभेणमि'त्यादिरूपः तेन ज्ञातव्यः समानवक्तव्यत्वात्। कियद्दूरम् ? इत्याह—'जाव देव'त्ति । यावद्देवा आसते शेरते इत्यादि। 'कूड'त्ति। कूटानीतिपदेन प्रश्नसूत्रं गम्यं यावत् 'चत्तारि'त्ति। चत्वारि कूटानि तद्यथा—'सिद्धायतणे'इत्यादि व्यक्तं। यावदेकशैलो देवोऽत्र महर्द्धिकः परिवसति। तेनैकशैलो नाम्ना पर्व्वतोऽयमिति । यावत्करणात् राज-

धान्यादि सङ्ग्रह । अथाष्टम पुष्कलावतीविजय क्वास्ति ? इति पृच्छति—'कहि णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! नीलवतो दक्षिणेन शाताया उत्तरेण 'उत्तरिल्लस'त्ति । उत्तरदिग्वर्त्तिन शीतामुखवनस्य पश्चिमेन एकशैलस्य पूर्व्वेण । अत्रान्तरे महाविदेहे वर्षे पुष्कलावती नाम्ना विजय प्रज्ञप्त उत्तरदक्षिणायत । एव प्रागुक्तप्रकारेण यथा कच्छविजयस्य भणित तथाऽत्रापि भणनीयं । कियद्दूरम् ? इत्याह-'जाव'त्ति । यावत्पुष्कलावती नाम्नाऽत्र देव परिवसति । से 'तेणट्ठेण'ति प्राग्वत् । यावत्करणात् पुण्डरिकिण्या राजधान्या पुष्कलावती नाम। राजा समुत्पद्यते । तस्य दिग्विजयमहाराज्याभिषेकादि कच्छवद्वक्तव्यम् । अथ शीतामुखवन क्वास्ति ? इति पृच्छति—'कहि णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! नीलवतो दक्षिणेन शीताया उत्तरेण पूर्व्वलवणसमुद्रस्य पश्चिमेन पुष्कलावतीचक्रवर्त्तिविजयस्य पूर्व्वेण । अत्रान्तरे शीतामुखवन नाम वन प्रज्ञप्त । तच्चोत्तरदक्षिणायत पूर्व्वपश्चिमविस्तीर्णं षोडश योजनसहस्राणि पञ्च च द्विनवत्यधिकानि योजनशतानि द्वौ चैकोनविंशतिभागौ योजनस्य १६५९२ क० २ आयामेन, शीता महानद्यन्ते शीतासमीपे द्वे योजनसहस्रे नव च योजनशतानि त्रयोविंशत्यधिकानि २९२३ विष्कम्भेन, तदनन्तर च मात्रया मात्रया परिहीयमान परिहीयमान नीलवद्वर्षधरपर्व्वतान्ते एक चैकोनविंशतितम भाग योजनस्य क० १ विष्कम्भेन' से ण'त्ति । तद्वनमेकया पद्मवरवेदिकया एकेन च वनखण्डेन परिक्षिप्त । वर्णक शीतामुखवनस्य यावद्देवा आसते इत्यादि प्राग्वत् । यावत्करणात्—'तस्स ण' सीआमुहवणस्स बहुसमरमणिज्जे भूमिभागे' इत्यादि सङ्ग्रह । अथोपसंहारमाह-एवम्-'उत्तरिल्लमि'त्यादि । एव प्रागुक्तप्रकारेण उत्तरदिग् सम्बन्धिपार्श्वं समाप्त—विजयवक्षस्कारान्तर्नदीना वक्तव्यतया सम्पूर्णं सञ्जातमित्यर्थ । अथ यद्भणित यच्च तदन्तर्गतमपि न भणित तद्दर्शयति—'विजया'इत्यादि । विजया भणिता तदन्तर्गता राजधान्यस्तु न भणितास्ता इमा —'खेमा खेमे'त्यादि-गाथा । क्षेमा, क्षेमपुरा, चकारेवकारो समुच्चयावधारणार्थौ अरिष्टा, अरिष्टपुरी, तथा खड्गी मञ्जूषा, अपि चेति समुच्चये औषधी, पुण्डरीकिणीति । अथ पुनरपि यन्नोक्त तदाह—'तावईओ'त्ति । तावत्यो वैताढ्यप्रमाणा भरतवैताढ्यवत्प्रतिवैताढ्य द्वयो द्वयो सद्भावेन साष्टसु वैताढ्येषु षोडश इत्यर्थ । आभियोगश्रेणय सर्व्वाश्चेमा-ईशानस्येशानेन्द्रस्य लक्ष्यमाणेषु शीतोदाया अप्युत्तरदिग्वर्त्ति वैताढ्येष्वपि द्रष्टव्य मेरोरुत्तरत ईशानस्यैवाधिपत्यात् । अथोक्तानां प्रसङ्गतो वक्ष्यमाणाना च साधारणस्वरूपोपदर्शनपुरस्कारेणातिदेशेनाह—'सव्वेसु विजएसु'त्ति । सर्व्वेष्वपि विजयेषु द्वात्रिंशत्यपि विजयेषु कच्छवक्तव्यता कच्छसदृशीभणितिरित्यर्थ । अय भाव —यत्र यद्वक्तव्यता सस्थानादिक न भणित तत्सर्व्वं कच्छवदवसातव्य । तच्चैव—'पलिअकसठाणसठिए गंगासिंधूमहाणदीहिं वेअड्ढेण य पव्वएण छब्भागपविभत्ते सोलस जोअणसहस्साइ पंच य वाणउए जोअणसए दोण्णि अ एगूणवीसति भागे जोअणस्स आयामेणमि'त्यादि सर्व्वमपि सूत्रमिहावतारणीय । कियद्दूरम् ? इत्याह—'जाव अट्ठो'त्ति । यावदर्थ । 'से केणट्ठेण भते !' इत्यादिना नाम्नोऽर्थो वक्तव्य । 'रायाणो'त्ति । राजान सदृग्नामका —विजयसदृशनामान कच्छसुकच्छ इत्यादिरूपेण विजयेषु कच्छादिषु वक्तव्या । 'सोलसे'त्यादि । षोडशानामपि वक्षस्कारपर्व्वताना चित्रकूटवक्तव्यता यावच्चत्वारि कूटानि प्रति वक्षस्कार वक्तव्यानि । 'बारसण्ह'त्ति । द्वाद-

शाना नदीना ग्राहावतीवक्तव्यता—द्वादशाप्यन्तर्नद्यो ग्राहावतीसदृश्य इत्यर्थ । यावदुभयो पार्श्वयो पद्मवरवेदिकाभ्या वनखण्डेन च। अत्रैकवचनमपि द्विवचनपर तेन द्वाभ्यां वनखण्डाभ्या सम्परिक्षिप्तेति। 'वण्णओ'त्ति। वर्णक सर्वोऽपि जगतीवेदिकावद्वक्तव्य ।

अथ कच्छविजयमादिं कृत्वा प्रादक्षिण्येन विजयादि प्ररूपणायामुत्तरमुखवनान्तरं दक्षिणमुखवनमेवेति कृत्वा क्रमप्राप्त दक्षिणमुखविषय प्रश्नमाह

**कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे सीआए महाणईए दाहिणिल्ले सीआमुहवणे णामं वणे पण्णत्ते ?। एव जह चेव उत्तरिल्ल सीआमुहवणं तह चेव दाहिणंपि भाणिअव्वं। णवरिं निसहवासहरपव्वयस्स उत्तरेण सीआए महाणईए दाहिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं वच्छस्स विजयस्स पुरत्थिमेणं। एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे सीआए महाणईए दाहिणिल्ले सीआमुहवणे णामं वणे पण्णत्ते। उत्तरदाहिणायते तहेव सव्वं। णवरं णिसहवासहरपव्वयंतेणं एगूणवीसतिभागं जोअणस्स विक्खंभेणं। किण्हे किण्होभासे जाव महया गंधद्धुणिं मुअंते जाव आसयंति उभओ पासिं दोहिं पउमवरवेइआहिं वण्णओ। कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे वच्छे णामं विजए प० ?। गो० ! णिसहस्स वासहरपव्वयस्स उत्तरेणं सीआए महाणईए दक्खिणेणं दाहिणस्स सीआमुहवणस्स पच्चत्थिमेणं तिकूडस्स वक्खारपव्वयस्स पुरत्थिमेणं। एत्थ णं (जंबुद्दीवे दीवे) महाविदेहे वासे वच्छे णामं विजए पण्णत्ते। तं चेव पमाणं सुसीमा रायहाणी। तिऊडवक्खारपव्वए सुवच्छे विजए कुंडला रायहाणी। तत्तजला णदी महावच्छे विजए अपराजिआ रायहाणी। वेसमणकूडे वक्खारपव्वए वच्छावती विजए पभंकरा रायहाणी। मत्तजला णदी (जंबुद्दीवे दीवे) रम्मे विजए अंकावई रायहाणी। अंजणे वक्खारपव्वए रम्मगे विजए पम्हावती रायहाणी। उम्मत्तजला महाणदी रमणिज्जे विजए सुभा रायहाणी। मायजणे वक्खारपव्वए मंगलावती विजए रयणसंचया रायहाणी। एवं जह चेव सीआए महाणईए उत्तरपासं तह चेव दक्खिणं भाणिअव्वं। दाहिणिल्ले सीआमुहवणाइं। इमे वक्खारकूडा प०। तं०—तिऊडे वेसमणकूडे अंजणे मायंजणे। [णईउ—तत्तजला, मत्तजला, उम्मत्तजला।] विजया—**

**वच्छे सुवच्छे महावच्छे चउत्थे वच्छगावती। रम्मे रम्मए चेव रमणिज्जे मंगलावती। १॥**
**रायहाणीओ तं०**

**सुसीमा कुंडला चेव अवराइअ पहंकरा। अंकावती पम्हावती सुभा रयणसंचया ॥२॥**

**वच्छस्स विजयस्स णिसहे दाहिणेणं सीआ उत्तरेणं दाहिणिल्लसीआमुहवणे पुरत्थिमेणं तिऊडे पच्चत्थिमेणं सुसीमा रायहाणी पमाणं तं चेव। वच्छाणंतरं तिऊडे। तओ सुवच्छे विजए। एतेणं कमेणं तत्तजला णदी। महावच्छे विजए। वेसमणकूडे वक्खारपव्वए। वच्छावतीविजए। मत्तजला णदी। रम्मे विजए। अंजणे वक्खारपव्वए। रम्मए विजए। उम्मत्तजला णदी। रमणिज्जे विजए। मायंजणे वक्खारपव्वए। मंगलावती विजए॥**

'कहि णमि'त्यादि प्रश्ननिर्वचने प्राग्वत्। विशेषमाह-'णवरि'ति। नवरं निषधवर्षधरपर्वतस्योत्तरेण, सीताया महानद्या दक्षिणेन, पूर्वलवणसमुद्रस्य पश्चिमेन वच्छस्य विजयस्य पूर्वेण। अनान्तरे शीताया महानद्या दाक्षिणात्यं शीतामुखवनं नाम वनं प्रज्ञप्तं। तच्चोत्तरदक्षिणायत तथैव सर्वमेववर्णन यथोत्तरदिग्वर्ति शीतामुखवनं भणितं। नेवरं निषधवर्षधरपर्वतान्ते एकमेकोनविंशतितम भाग योजनस्य विष्कम्भेन। तच्च कीदृशम्? इत्याह-'किण्हे'इत्यादि। वनखण्डवर्णन प्राग्वत्। जाव महागन्धद्धणि'ति। यावन्महागन्धघ्राणि मुञ्चत् यावद्भिर्गन्धपुद्गलैर्गन्धविषये घ्राणिरुपजायते तावतो गन्धपुद्गलसहतिघ्राणिरित्युच्यते। ततोऽपि यावदासते। 'उभओ पासिमि'त्यादि। प्राग्वत् पद्मवरवेदिकावर्णको वक्तव्य। अथ यत वच्छनामा विजय क्वास्ति? इति पृच्छति-'कहि णमि'त्यादि प्रश्न. सुगम। भगवानाह-गौतम! निषधस्य वर्षधरपर्वतस्योत्तरेण, शीताया दक्षिणेन, दाक्षिणात्यस्य शीतामुखवनस्य पश्चिमेन, त्रिकूटस्य वक्षस्कारपर्वतस्य पूर्वेण। अत्रान्तरे जम्बूद्वीपे द्वीपे महाविदेहे वर्षे वत्सो नाम्ना विजयः प्रज्ञप्तः। 'त चेव'ति। तदेव प्रमाणं यत्कच्छविजये भणितं। सुसीमा चात्र राजधानी। उपलक्षणाद्राजा चात्र विजय नाम्ना वत्सो द्रष्टव्य.। एव शेषेष्वपि विजयेषु विजयसदृशनामानो राजान.। अथोक्तविजयैः साम्यात् ग्रन्थगौरवभयाच्च शेषविजयवक्षस्कारान् नदीना क्रममात्रमेवोपदिशन्नाह- 'तिऊडे'इत्यादि। वत्सविजयानन्तर त्रिकूटनामा वक्षस्कारपर्वत। तत सुवत्सो विजयः। तत्र कुण्डला राजधानी। ततस्तप्तजला नदी ततो महावत्सो विजयस्तत्रापराजिता राजधानी। ततो वैश्रमणकूटो वक्षस्कारपर्वतः ततो वत्सावतीविजयस्तत्र प्रभङ्करा राजधानी। ततो मत्तजला नदी ततो जम्बूद्वीपे द्वीपे रम्यो विजय तत्राऽङ्कावती राजधानी। अत्र यज्जम्बूद्वीपग्रहणं तद्देहलीप्रदीपन्यायेन प्रतिविजयमवसातव्य। ततोऽञ्जनो वक्षस्कारपर्वतस्ततो रम्यको विजयः तत्र पक्ष्मावती राजधानी। तत उन्मत्तजला नदी रमणीयो विजय तत्र शुभा राजधानी। ततो मातञ्जनो वक्षस्कारपर्वतो मङ्गलावतीविजयः तत्र रत्नसञ्चया राजधानी। विजयवक्षस्कारान्तर्नदीना दिग्व्यवस्था तु परस्परं पूर्वपश्चिमाभ्यामवसातव्या। अथ सामान्येन शीताया दाक्षिणात्य पार्श्वमुत्तरपार्श्वेनातिदिशति। एव 'जह चेव'त्ति। एवमुक्तप्रकारेण यथैव शीताया महानद्याः उत्तरपार्श्वं कच्छविजयमादि कृत्वा शीताया उत्तरमुखवन यावत्सर्वं 'तह चेव त्ति। तथैव दक्षिण-दाक्षिणात्य पार्श्वमिति गम्य भणितव्यम्। अयानन्तरमेव विजयवक्षस्कारादिक्रम निरूपणे दर्शितानां विजयवक्षस्कारादीनामसांकर्येण संग्रहायाह-'दाहिणिल्ले'त्ति। दाक्षिणात्ये पार्श्वे सीता-

मुखवनमेवादिका क्रमेणेति शेष । कूटवा 'इमे'त्ति । इमे वक्ष्यमाणनामका वक्षस्कारकूटा कूटशब्देनेह कूटानि सन्त्येष्विति मत्वर्थीयप्रत्ययविधानात्पर्वताः । तद्यथा–'तिऊडे'त्ति । त्रिकूटो वैश्रमणकूटो अञ्जनो मात्राञ्जनश्चेति । विजया –वत्सा सुवत्सो महावत्सो वत्सकावती रम्यो रम्यको रमणीयो मङ्गलावती चेति ।।१।। 'रायहाणीओ'त्ति । सुगमम् । एवमुत्तरदक्षिणवर्त्तिन्यः षोडशापि राजधान्य. शीतासमीपवर्त्तिषु मध्यखण्डेषु ज्ञातव्या । अथ वच्छविजयपुरस्कारेण निषधादीना दिग्व्यवस्थितिनियम माह–'वच्छस्से'ति । वत्सस्य विजयस्य निषधो दक्षिणेन, शीता उत्तरेण, दाक्षिणात्यशीतामुखवन पौरस्त्येन, त्रिकूट पश्चिमेन । सुसीमा राजधान्या. प्रमाणमाह –'सुसीमाराजधानीप्रमाणम् आयामविष्कम्भादिना 'त चेव'त्ति । तदेव यद्भरतस्य विनीताया राजधान्या भणितम् । अथ वत्सादीना स्थितिमधिकृत्य क्रम- माह–'वच्छाणतरमि'त्यादि । वत्सानन्तर त्रिकूटस्ततः सुवत्सो विजय एतेन क्रमेण तदनन्तर तप्तजला नदा ततो महावत्सो विजया ततो वैश्रमणकूटो वक्षस्कारपव्वत. ततो वत्सकावती विजय –तदनन्तर मत्तजला नदी ततो रम्यो विजयः ततोऽञ्जनको वक्षस्कारपर्व्वतः प्रज्ञप्त इति सव्वत्रापि योज्य ततो रम्यको विजय तत उन्मत्तजला नदी रमणीयो विजयः ततो मात्राञ्जनवक्षस्कार. ततो मङ्गलावती विजय. ।

अथ मङ्गलावतीविजयप्रत्यासन्नं सौमनसवक्षस्कारपर्व्वत प्ररूपयति

**कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे सोमणसे णामं वक्खारपव्वए पण्णत्ते ? । गो० ! णिसहस्स वासहरपव्वयस्स उत्तरेणं मंदरस्स पव्वयस्स दाहिणपुरत्थिमेणं, मंगलावईस्स विजयस्स पच्चत्थिमेणं, देवकुराए पुरत्थिमेणं । एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे सोमणसे णामं वक्खारपव्वए पण्णत्ते । उत्तरदाहिणायते पाईणपडीणविच्छिण्णे जहा मालवंते वक्खार- पव्वए तहा । णवरिं सव्वरयणामए अच्छे जाव पडिरूवे । णिसहं वासहरपव्वयंते णं चत्तारि जोअणसयाइं उड्ढं उच्चत्तेणं चत्तारि अ गाऊअसयाइं उव्वेहेणं । सेसं तहेव सव्वं । णवरि अट्ठो से भाणिअव्वो । गो० ! सोमणसे णं वक्खारपव्वए बहवे देवा देवीओ अ सोम्मा सुमणसा सोमणस्सिआ सोमणसे एत्थ देवे महिड्ढीए जाव परिवसति । से तेणट्ठेणं गो० ! जाव णिच्चे । सोमणसवक्खारपव्वए कति कूडा प० ? । गो० ! सत्त कूडा प० । तं०**

**सिद्धे सोमणसे वि अ बोद्धव्वे मंगलावती कूडे । देवकुरु-विमल-कंचण-वसिट्ठकूडे अ बोद्धव्वे।१। एवं सव्वे पंचसइआ कूडा । एतेसिं पुच्छा दिसि विदिसाए च भाणिअव्वा । जहा गंधमाय- णस्स । विमलकंचणकूडे नवरि देवयाओ सुवच्छा वच्छमित्ता य । अवसिट्ठेसु कूडेसु सरिस- णामया देवा रायहाणीओ दक्खिणेणं । कहि णं भंते ! महाविदेहे वासे देवकुरा णामं कुरा प० ? । गो० ! मंदरस्स पव्वयस्स दाहिणेणं, णिसहस्स वासहरपव्वयस्स उत्तरेणं, विज्जुप्पह-**

वक्खारपव्वयस्स पुरत्थिमेणं, सोमणसवक्खारपव्वयस्स पच्चत्थिमेणं । एत्थ णं देवकुरा णाम कुरा पण्णत्ता । पाईणपडीणायता उदीणदाहिणविच्छिण्णा एक्कारस जोअणसहस्साइं अट्ठ य बायाले जोअणसए दोण्णि अ एगूणवीसतिभागे जोअणस्स विक्खंभेणं जहा उत्तरकुराए वत्तव्वया जाव अणुसज्जमाणा पम्हगंधा मिअमयगंधा अममा सही तेअतली सणिचारी ॥ कहि णं भंते ! देवकुराए चित्तविचित्तकूडा णामं दुवे पव्वया पण्णत्ता ? । गो० ! णिसहस्स वासहरपव्वयस्स उत्तरिल्लाओ चरमंताओ अट्ठ चोत्तीसे जोअणसए चत्तारि अ सत्तभागे जोअणस्स अबाहाए सीआए महाणईए पुरच्छिमपच्चत्थिमेण उभयकूले । एत्थ णं चित्तविचित्तकूडा णाम दुवे पव्वया पण्णत्ता । एवं जच्चेव जमगपव्वयाणं सच्चेव । एएसिं रायहाणीओ दक्खिणेणं । कहि णं भंते ! देवकुराए कुराए णिसहद्दहेणामं दहे प० ? । गो० ! तेसिं चित्तविचित्तकूडाणं पव्वयाणं उत्तरिल्लाओ चरमंताओ अट्ठ चोत्तीसे जोअणसए चत्तारि अ सत्त भागे जोअणस्स अबाहाए सीओआए महाणईए बहुमज्झदेसभाए । एत्थ णं णिसहद्दहे णामं दहे पण्णत्ते । एवं जच्चेव णीलवंत-उत्तरकुरु-चंदे-रावय-मालवंताणं वत्तव्वया सच्चेव णिसह देवकुरु-सूर-सुलस-विज्जुप्पभाणं-णेअव्वा । रायहाणीओ दक्खिणेणं ॥

'कहि णमि'त्यादि प्रश्नः सुगम. । भगवानाह-'गौतम ! निषधस्योत्तरेण, मन्दरस्य दक्षिणपूर्व्वस्यामाग्नेय्यामित्यर्थः । मङ्गलावती विजयस्य पश्चिमेन, देवकुरूणा पूर्व्वेण । अत्रान्तरे जम्बूद्वीपे द्वीपे महाविदेहे वर्षे सौमनसो नाम्ना वक्षस्कारपर्व्वत प्रज्ञप्त' । स चोत्तरदक्षिणायत पूर्व्वपश्चिमविस्तीर्णः यथा माल्यवान् वक्षस्कारपर्व्वतः-उत्तरकुरूणा पूर्व्वदिशि वर्त्तमान. प्रागभिहित । 'तह'त्ति । तथाऽयमपि । अथ विशेषमाह-'णवरि'ति । नवर-केवल सर्व्वात्मना रत्नमय. माल्यवास्तु वैडूर्यमय इति विशेषा । 'अच्छे'इत्यादि प्राग्वत् । 'णिसह'त्ति । निषधपर्व्वतान्ते चत्वारि योजनशतान्यूर्ध्वमुच्चैस्त्वेन चत्वारि गव्यूतिशतान्युद्वेधेन 'सेस तहेव त्ति । शेष-विष्कम्भमानादि सर्व्वं तथैव यथा गन्धमादनवक्तव्यताया भणित । तच्चैव-तीस जोअणसहस्साइमि'त्यादि । यावद्वनखण्डाभ्या परिक्षिप्त इति । अथ नामनिमित्ते विशेषमाह-णवरि'ति । नवर से-तस्यार्थो नामनिमित्त गौतम ! सौमणसे वक्षस्कारपर्व्वते बहवो देवा देव्यश्च सौम्या बहिर्वृत्त्या, सुमनसोऽन्तर्वृत्त्या प्रशान्ता, सौमनस्यिता -प्रसन्नचित्ताः परिवसन्ति । तेनार्थेनाय सौमनस इ त भण्यते । तथा सौमनसनामा अत्र देवो महर्द्धिको यावत्परिवसति । 'से तेणट्ठे ण'त्ति । प्राग्वत् । यावन्नित्य नाम सौमनस सौमनसः इति । अथ सौमनसे कूटसङ्ख्यां पृच्छति-'सोमणसे'इत्यादि । सोमनसे कति कूटानि प्रज्ञप्तानि ? इति प्रश्नसूत्र । भगवानाह-गौतम ! सत्त कूड'त्ति । सप्त कूटानि प्रज्ञातानि। तद्यथेत्यादि सुगमम् । एव 'सव्वे'इत्यादि । एवमुक्तनामक्रमेण सर्व्वाण्यपि कूटानि पञ्चशतिकानि पञ्च योजनशतप्रमाणानि 'एतेसिं'ति । एतेषा कूटाना पृच्छा-एतानि कूटानि क्व सन्ति ? इत्यादिरूपा ।

तत्र निगमने 'दिसि'त्ति । दिशि विदिशि च यथासम्भवं भणितव्यानि । कूटानीति शेषः । अतिदिशति–'जह'त्ति । यथा गन्धमादनस्य भणितानि । परं यथासम्भवं । तत्रैव गन्धमादने सिद्धायतनकूटं वायव्यां मेरोः प्रत्यासन्नं । सौमनसे तु सिद्धायतनकूटम् आग्नेय्याम् । एवं द्वितीय-तृतीये अपि कूटे । एवं त्रीण्यपि कूटानि क्रमेणाग्नेय्यामेव विदिशि स्थितानि । गन्धमादने तु वायव्यां, चतुर्थं तु तृतीयस्याग्नेय्यां, पञ्चमस्य तु उत्तरस्यां दिश्येव । गन्धमादने तु दक्षिणेन । शेषाणि तु विमलादीनि त्रीण्यपि कूटानि परस्परमुत्तर-दक्षिणेन । अयं भावः–चतुर्थात्पञ्चमं दक्षिणेन षष्ठादुत्तरेण, पञ्चमात्षष्ठं दक्षिणेन सप्तमादुत्तरेण, षष्ठात्सप्तमं दक्षिणेन । गन्धमादने तु चतुर्थात्पञ्चममुत्तरेणेत्यादि विपरीतक्रमः । परं सप्तस्व प कूटेषु आद्यानि त्रीणि कूटानि विदिग्वर्त्तीनि अन्त्यानि तु दिग्वर्त्तीनि चतुर्थं तूभयस्वभावमापेक्षकमिति । अथ विशेषमाह–'विमलकचणकूडे'त्ति । विमलकाञ्चनकूटयोर्नवरं देव्यौ–तत्स्वामिन्यौ सुवत्सा वत्समित्रा चेति नाम्न्यौ । 'अवसिट्ठे सु'त्ति । अवशिष्टेषु सिद्धायतन-सौमनस-मङ्गलावती-देवकुरु-वसिष्ठसंज्ञेषु कू--सदृशनामका देवाः स्वामिनः राजधान्यश्च सर्व्वेषामपि दक्षिणेन ज्ञेयाः । अथ देवकुरवः क्व सन्ति ? इति गौतमः पृच्छति–'कहि णमि'त्यादि प्रश्नः सुगमः । भगवानाह–'गौतम ! मन्दरस्य दक्षिणेन, निषधस्योत्तरेण, विद्युत्प्रभवक्षस्कारपर्व्वतस्य पूर्व्वेण, सौमनसस्य वक्षस्कारपर्व्वतस्य पश्चिमेन । अत्रान्तरे देवकुरवो नाम्ना कुरवः प्रज्ञप्ताः । प्राचीनेत्यादि प्राग्वत् । 'एक्कारसे'त्यादि । एकादश योजनसहस्राणि अष्टौ च चत्वारिंशदधिकानि योजनशतानि द्वौ चैकोनविंशतिभागौ योजनस्य विष्कम्भेन उक्तप्रकारेण शेषवक्तव्यतामधिकृत्यातिदेशमाह–'जहा उत्तरे'त्ति । यथा उत्तरकुरुवक्तव्यता तथा देवकुरूणामपि किय-त्पर्यन्तम् ? इत्याह–'जाव'त्ति । यावदनुसृजन्तः–सन्तानेनानुवर्त्तमाना । तद्यथा–'पम्हगंधे'त्ति । पद्मगन्धा मृगमदगन्धाः अममा सहा. तेजस्तलिनः शनैश्चारिणः । एते शब्दाः मनुष्यजातिभेदवाचकतयाऽवगन्तव्याः एवं षड्विधनामानः तत्रत्या मनुजा इत्यर्थः । अथ देवकुरुगतवस्तुपरिज्ञानाय प्रथमं यमकपर्व्वतवत् प्रसिद्धौ चित्रविचित्रकूटनामानौ पर्व्वतौ क्व स्तः ? इति प्रश्नयति–'कहि णमि'त्यादि प्रश्नः सुगमः । भगवानाह–गौतम ! इत्यादि निर्व्वचनं सुगमम् । अतिदिशति–एवं 'जच्चेव'त्ति । एवमनन्तरोक्तप्रकारेण यैव वक्तव्येति शेषः यमकपर्व्वतयोः सैवानयोरपि वक्तव्या । तेन विष्कम्भादि सर्व्वमपि यमकयोरिव वाच्यम् । अथ विशेषमाह–'रायहाणीओ'त्ति । अनयो राजधान्यौ मेरोर्दक्षिणेन यमकयोस्तूत्तरेणोक्ते इति अथ चित्रविचित्रपर्व्वतयोः प्रत्यासन्नत्वात् निषधकूटस्य स्थित्यादिस्वरूपं पृच्छति–कहि णमि'त्यादि प्रश्नः प्राग्वत् । भगवानाह–गौतम ! तयोश्चित्रविचित्रकूटयोः पर्व्वतयोः 'उत्तरिल्लाओ'त्ति । उत्तरदिग्-सम्वन्धिनश्चरमान्तात् 'अट्ठ'त्ति । अष्टौ चतुस्त्रिंशदधिकानि योजनशतानि चतुरश्च योजनस्य सप्त भागान् अबाधया कृत्वाऽन्तराले विमुच्य शीतोदाया महानद्याः बहुमध्यदेशभागे । अत्रान्तरे निषधह्रदो नाम ह्रदः प्रज्ञप्तः । एवं 'जं चेव'त्ति । एवं प्रागुक्तप्रकारेण यैव नीलवदुत्तरकुरु-चन्द्र-ऐरावत-माल्यवतां उत्तरकुरुवर्त्तिनां वक्तव्यता सैव निषध-देवकुरु-सूर-सुलस-विद्युत्प्रभाणां ज्ञातव्याः । यावत्पद्मवरवेदिकादि परिक्षेपादि सर्व्वमपि समानवक्तव्यत्वात् राजधान्यश्च तत्स्वामिदेवानां दक्षिणेनेति विशेषः ।

अथ कूटशाल्मलीवृक्षस्वरूपं विपृच्छिषुः प्रथमं तत्पीठं क्वास्ति ? इति प्रश्नयति —

कहि णं भंते ! देवकुराए कुराए कूडसामलीए कूडसामलिपेढे णामं पेढे पण्णत्ते ? । गो० ! मंदरस्स पव्वयस्स दाहिणपच्चत्थिमेणं, णिसहस्स वासहरपव्वयस्स उत्तरेणं, विज्जुप्पभस्स वक्खारपव्वयस्स पुरत्थिमेणं (सोमणसस्स वक्खारपव्वयस्स पच्चत्थिमेणं) सीओआए महाणईए पच्चत्थिमेणं, देवकुरुपच्चत्थिमद्धस्स बहुमज्झदेसभागे । एत्थ णं देवकुराए कुराए कूडसामलीए कूडसामली पेढे णामं पेढे पण्णत्ते । एवं जच्चेव जंबूए सुदंसणाए वत्तव्वया सच्चेव सामलीए वि भाणिअव्वा । णामविहूणा, गरुलदेवे रायहाणी दक्खिणेणं । अवसिट्ठं तं चेव जाव देवकुरू इत्थ देवे पलिओवमट्ठिईए परिवसति । से तेणट्ठेणं गो० ! एवं वुच्चति देवकुराए देवकुराए । अदुत्तरं च णं देवकुराए० । कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे विज्जुप्पभे णामं वक्खारपव्वए पण्णत्ते ? । गो० ! णिसहस्स वासहरपव्वयस्स उत्तरेणं मंदरस्स पव्वयस्स दाहिणपच्चत्थिमेणं, देवकुराए पच्चत्थिमेणं, पम्हविजयस्स पुरत्थिमेणं । एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे विज्जुप्पभे वक्खारप० प० पण्णत्ते । उत्तरदाहिणायते एवं जहा मालवंते । णवरिं सव्वतवणिज्जमए अच्छे जाव देवा आसयंति । विज्जुप्पहे णं भंते ! वक्खारपव्वए कति कूडा पण्णत्ता ? गो० ! णव कूडा पण्णत्ता । सिद्धायतणकूडे विज्जुप्पहकूडे देवकुरुकूडे पम्हकूडे कणगकूडे सोवत्थिकूडे सीतोदाकूडे सयंजलकूडे हरिकूडे ।

सिद्धे अ विज्जुणामेदे वकुरू पम्ह-कणग-सोवत्थी । सीतोदा य सयंजल हरिकूडे चेव बोद्धव्वे ।१।

एए हरिकूडवज्जा पचसइआ णेअव्वा । एएसि णं कूडाणं पुच्छा । दिसिविदिसाओ णेअव्वाओ । जहा मालवंतस्स हरिस्सहकूडे तह चेव हरिकूडे रायहाणी जह चेव दाहिणेणं चमरचंचारायहाणीप्पमाणेणं तह णेअव्वा । कणग-सोवत्थिअकूडेसु वारिसेणा बलाहयाओ दो देवयाओ अवसिट्ठेसु कूडसरिसनामया देवा रायहाणीओ दाहिणेण । से केणट्ठेणं भंते ! एवं वुच्चति विज्जुप्पभे णं वक्खारपव्वए वक्खारपव्वए ? । गो० ! विज्जुप्पभे णं वक्खारपव्वए विज्जुमिव सव्वओ समंता ओभासति उज्जोतति पभासति । विज्जुप्पभे इत्थ देवे पलिओवमट्ठिईए महिड्ढीए जाव परिवसति । से तेणट्ठेणं गो० ! एवं वुच्चति विज्जुप्पभे विज्जुप्पभे । अदुत्तरं च णं जाव णिच्चे ॥

'कहि णमि'त्यादि । कूटशाल्मल्या वृक्षस्य कूटशाल्मली पीठ नाम्ना पीठं प्रज्ञप्त' ? । शेषं सुगमम्। अतिदिशति—एवं 'जच्चेव'त्ति । एव प्रागुक्तप्रकारेण यैव 'जंबूए'त्ति। जम्ब्वा' सुदर्शनाया

वक्तव्यता सैव शाल्मल्या अपि भणितव्या । 'णाम विहूण'त्ति । नामविहीना यथा जम्ब्वा द्वादश नामान्युक्तानि तथाऽस्या न सन्तीत्यर्थः । शेषमुच्चत्वोद्वेधवेदिकादिसमानमेव । 'गरुल'त्ति । गरुडनामाऽत्र देवः परिवसति । राजधानी चाऽस्य दक्षिणेन 'अवसिट्ठ'त्ति । अवशिष्टमुक्तातिरिक्तं तदेव यदुत्तरकुरुषु भणितं । कियद्दूरम् ? इत्याह—'जाव देवकुरु'त्ति । यावदत्र देवकुरुनामा पल्योपमस्थितिकः परिवसति । तदेतेनार्थेन देवकुरवः देवकुरवः इति । यावत्करणात् उत्तरेऽष्टावष्टौ मङ्गलकानीत्यादि सङ्ग्रहः । 'अदुत्तरं च णं'ति । अथापरं चेत्यादि नाम्नो निमित्तं प्राग्वद्व्याख्येयम् । अथ यतः पूर्व्वस्या देवकुरवः स विद्युत्प्रभनामा वक्षस्कारः क्वास्ति ? इति पृच्छति । 'कहि णमि'त्यादि । तत्र एव प्रागुक्तप्रकारेण यथा माल्यवान् वक्षस्कारपर्व्वतः तथाऽयमपि भणनीयः । विशेषमाह—'णवरिं'ति । नवरं सर्व्वात्मना तपनीयमयः 'अच्छे' इत्यादि प्राग्वत् । अथ तत्र कति कूटानि ? इति पृच्छति । 'विज्जुप्पभे णमि'त्यादि प्रश्नः प्राग्वत् । भगवानाह—गौतम ! 'नव कूड'त्ति । नव कूटानि प्रज्ञप्तानि । तद्यथा—सिद्धायतनकूटं विद्युत्प्रभकूटं देवकुरुकूटं पक्ष्मकूटं कनककूटं सौवस्तिककूटं शीतोदाकूटं स्वयंजलकूटं हरिकूटं चेति । एतेषां सङ्ग्राहिका गाथामाह—'सिद्धे'त्यादि गतार्था । एतानि अनन्तरोक्तानि कूटानि हरिकूटवर्ज्जानि पञ्चशतिकानि—पञ्चशतयोजनप्रमाणानि । 'एएसिं णं'ति । एतेषां कूटानां पृच्छायां दिशो विदिशश्च ज्ञातव्याः । माल्यवद्वक्षस्कारकूटानामिवामीषामपीत्यर्थः । यथासम्भवमित्यध्याहार्यं । तच्चैवं मेरोः प्रत्यासन्नं नैऋत्यां सिद्धायतनकूटं ततो विद्युत्प्रभादीनि त्रीण्यपि कूटानि क्रमेण नैऋत्यामेवेति । चत्वारि कूटानि विदिग्व्यवस्थितानि पक्ष्मकूटस्य दक्षिणपश्चिमायां सौवस्तिककूटस्योत्तरेण पञ्चमं कनककूटं । शेषाणि तु चत्वारि कूटानि परस्परं दक्षिणोत्तरक्रमेण दिग्व्यवस्थितानि । अथ हरिकूटमतिदिशति 'जहा मालवंतस्स'त्ति । यथा माल्यवतो हरिस्सहकूटम् एकं योजनसहस्रमूर्ध्वमुच्चैस्त्वेनोक्तं तथैव हरिकूटमपि योजनसहस्रमुच्चमिति । राजधानी चास्य यथैव दक्षिणस्यां चमरचञ्चाराजधानीप्रमाणेन तथा ज्ञातव्या । 'कणग'त्ति । कनकसौवस्तिककूटयोः वारिषेणावलाहिके द्वे देव्यौ तत्स्वामिन्यौ । अवशिष्टेषु कूटेषु सदृग्नामकाः कूटसदृशनामानो देवा राजधान्यश्च दक्षिणेन सर्व्वेषामपीति । अथ विद्युत्प्रभनामनिमित्तं पृच्छति—'से केणट्ठेणमि'त्यादि प्रश्नः प्राग्वत् । भगवानाह—गौतम ! विद्युत्प्रभो वक्षस्कारपर्व्वतः 'णमि'ति प्राग्वत् । विद्युदिव सर्व्वतो—दिक्षु विदिक्षु च समन्ततः सामस्त्येनावभासते, उद्योतते, प्रभासते-प्रकर्षेण दीप्तिमान् भवति विद्युत्प्रभश्चात्र देवः पल्योपमस्थितिको महर्द्धिको यावत्परिवसति । तत्सम्बन्धेनाऽय विद्युत्प्रभ इति भण्यते । 'अदुत्तरं च णं'ति प्राग्वत् ॥

अथ पश्चिममहाविदेहे षोडश विजयान् तद्गतषोडशराजधानीः अष्टौ वक्षस्कारान् षट् चान्तर्नदीरतिदिशन् क्रमेण नामान्याह

**एवं पम्हे विजए अस्सपुरा रायहाणी अंकावती वक्खारपव्वए । सुपम्हे विजए सीहपुरा रायहाणी खीरोदा महाणदी । महापम्हे विजए महापुरा रायहाणी पम्हावई वक्खारपव्वए ।**

पम्हावती विजए विजयपुरा रायहाणी। सीअसोआ महाणदी। संखे विजए अवराइआ रायहाणी आसीविसे वक्खारपव्वए। कुमुदे विजए अरया रायहाणी अंतोवाहिणी महाणदी। णलिणे विजए असोगा रायहाणी सुहावहे वक्खारपव्वए। सलिलावती विजए वीतसोया रायहाणी। दाहिणिल्ले सीओआमुहवणसडे उत्तरिल्ले वि एमेव भाणिअव्वे जहा सीआए। वप्पे विजए विजया रायहाणी चंदे वक्खारपव्वए। सुवप्पे विजए वेजयंती रायहाणी उम्मिमालिणी णदी। महावप्पे विजए जयंती रायहाणी सूरे वक्खारपव्वए। वप्पावती विजए अवराइआ रायहाणी फेणमालिणी णदी। वग्गू विजए चक्कपुरा रायहाणी णागे वक्खारपव्वए। सुवग्गू विजए खग्गपुरा रायहाणी गंभीरमालिणी अंतरणदी। गंधिले विजए अवंज्झा रायहाणी देवे वक्खारपव्वए। गंधिलावती विजए अओज्झा रायहाणी। एवं मंदरस्स पव्वयस्स पच्चत्थिमिल्लं पासं भाणिअव्वं। तत्थ ताव सीओआए महाणईए दाक्खिणिल्ले कूले इमे विजया। तं जहा–

पम्हे सुपम्हे महापम्हे चउत्थे पम्हगावती। संखे कुमुदे णलिणे अट्ठमे णलिणावती ॥१॥

इमाओ रायहाणीओ। तं जहा-

आसपुरा सीहपुरा महापुरा चेव हवइ विजयपुरा। अपराजिआ य अरया असोअ तह वीअसोगा य ॥२॥ इमे वक्खारा तं जहा–अंके पम्हे आसीविसे सुहावहे। एवं इत्थ परिवाडीए दो दो विजया कूडसरिसणामगा भाणिअव्वा। दिसाविदिसाओ भाणिअव्वाओ। सीओआमुहवणं च भाणिअव्वं। सीओआए दक्खिणिल्लं च उत्तरिल्लं च। सीओआए उत्तरिल्ले पासे इमे विजया। तं जहा

वप्पे सुवप्पे महावप्पे चउत्थे वप्पगावती। वग्गू अ सुवग्गू अ गंधिला गंधिलावती ॥१॥

रायहाणीओ इमाओ। तं० -

विजया वेजयंती जयंती अपराजिआ। चक्कपुरा खग्गपुरा हवंति अवंज्झा अओज्झा य ॥२॥ इमे वक्खारा तं०–चंदपव्वए सूरपव्वए णागपव्वए देवपव्वए। इमाओ णईओ–सीओआए महाणईए दाहिणिल्ले कूले–खीरोदा सीहसोआ अंतोवाहिणीओ णईओ। उम्मिमालिणी फेणमालिणी गंभीरमालिणीओ उत्तरिल्लविजयाणंतराओ। इत्थ परिवाडीए दो दो कूडा विजयसरिसणामगा भाणिअव्वा। इमे दो दो कूडा अवट्ठिआ। तं जहा–सिद्धाययणकूडे पव्वयसरिसणामकूडे अ ॥

'एव पम्हे विजए' इत्यादि। एत्र प्रागुक्तपूर्वमहाविदेहवक्तव्यतानुसारेण पक्ष्मविजय विद्युत्प्रभस्य पश्चिमत प्रथमो विजय, अश्वपुरा तत्र राजधानी। ततोऽङ्कावतीवक्षस्कारपर्व्वत । तत. सुपक्ष्म-विजय तत्र सिंहपुरा राजधानी क्षीरोदा महानदी । ततो महापक्ष्मविजयस्तत्र महापुरा राजधानी पक्ष्मवतीवक्षस्कारपर्व्वत । तत पक्ष्मकान्ती विजय तत्र विजयपुरा राजधानी शीतस्रोता महानदी । तत शङ्खो विजय, तत्रापराजिता राजधानी आशीविषो वक्षस्कारपर्व्वत । तत कुमुदो विजय, तत्र चाऽरजा राजधानी अन्तर्वाहिनी नदी। ततो नलिनो विजय तत्र चाशोका राजधानी सुखावहो वक्ष-स्कारपर्व्वत । तत सलिलावती विजय तत्र वीतशोका राजधानी। तत दाक्षिणात्य शीतोदानद्य-पेक्षया दक्षिणदिग्वर्त्ती शीतोदामुखवनखण्ड । उत्तरिल्ले वि'त्ति । उत्तरदिग्वर्त्त्यपि शीतोदामुख-वनखण्ड इति एवमेव भणितव्य । कथम् ? इत्याह—'जहा सीआए'त्ति । यथा शीताया उत्तरदिग्वर्ति मुखवन भणित तथाऽयमपीत्यर्थ । अथ शीतोदाया उत्तरदिग्वर्तित्वेपि प्राद-क्षिण्येन पूर्व्वाभिमुखे वक्तव्ये उत्तरदिग्वर्त्तिन शीतोदामुखवनात् पूर्व्वेण प्रथमो वप्रो विजय, तत्र विजया राजधानी चन्द्रो वक्षस्कारपर्व्वत । तत सुवप्रो विजय, तत्र विजयती राजधानी उर्म्मि-मालिनी नदी। ततो महावप्रो विजय तत्र जयती राजधानी सूरो वक्षस्कारपर्व्वत । ततो वप्रावती विजय:, तत्रापराजिता राजधानी फेनमालिनी नदी। वल्गुविजय, तत्र चक्रपुरा राजधानी नागो वक्ष-स्कारपर्व्वत । तत सुवल्गुविजय, तत्र खड्गपुरा राजधानी गभीरमालिनी अन्तर्णदी। ततो गन्धिलो विजय, तत्रावन्ध्या राजधानी देवो वक्षस्कारपर्व्वत । ततो गन्धिलावती विजय तत्राऽयोध्या राज-धानी। उपसहारमाह—'एव'ति। एव प्रागुक्तक्रमेण षोडशभिर्विजयैरष्टाभिर्वक्षस्कारै षड्भिश्चान्तर्नदी-भिर्मन्दरस्य पाश्चात्य-पश्चिमदिग्वर्त्तिपार्श्व भणितम्। अथ विजयादीना सङ्ग्रहेण व्यक्तिमाह—तत्थ तावत्ति। तत्र तावत् शीतोदाया दाक्षिणात्ये कूले इमे वक्ष्यमाणा विजया भवन्तीति शेष. । तद्यथा—'पम्हे सपम्हे'त्ति। श्लोका। व्यञ्जनाधिक्य चार्षत्वाददोष । 'इमाओ रायहाणीओ'त्ति। इमा वक्ष्यमाणा राजधान्य क्रमेणेति गम्य। तद्यथा—'आसपुरा' इति । गाथा व्याख्यातार्था । इमे वक्ष्यमाणा वक्ष-स्कारा । तद्यथा—'अके'ति। अङ्कावती वक्षस्कारपर्व्वत इत्यादि प्रतीतम् । अथैव विजयाना येषा नामभि साम्य तदाह—एव 'इत्थ'त्ति। एवमुक्तप्रकारेणात्र परिपाट्या द्वौ द्वौ विजयौ कूटसदृशनामानौ भणितव्यौ। अय भाव -सर्व्वेष्वपि विजयसम्बन्धिषु वक्षस्कारपर्व्वतेषु चत्वारि चत्वारि कूटानि सन्ति। तेषु च प्रथम मेरो प्रत्यासन्न सिद्धायतनकूट तत्समीपवर्त्ति द्वितीय वक्षस्कारनामक शेष च कूटद्वय तदुभयपार्श्ववर्तिनौ यौ विजयौ तत्सदृशनामक स्यात् तेन तौ विजयावपि कूटद्वयसदृशनामकावेव। तत्रापि प्रादक्षिण्येन य प्रथमो विजयस्तस्य तृतीयकूटसदृश नाम द्वितीयस्य तु चतुर्थकूटसदृशमिति । तथाहि—पक्ष्मनामा विजयस्तदनन्तर सुपक्ष्मनामा विजय तत्र कान्तावती वक्षस्कारे प्रथम सिद्धायतन-कूट। द्वितीयमङ्कावतीकूट। तृतीय पक्ष्मकूट। चतुर्थं सुपक्ष्मकूट चेत्यादि क्रमेण सर्व्वत्रापि परिभाव-नीयम्। अथ विजयादीना कस्या दिशि ? इति जिज्ञासायामाह—'दिसाविदिसाओ'त्ति। दिशो विदिशश्च यथासम्भवमिति गम्य भणितव्या । यथा मेरो पश्चिमेन, शीतोदाया दक्षिणेन, निषधस्योत्तरेण,

र्व्वत्वादिना समानत्वात् । 'अट्ठो'त्ति । से 'केणट्ठेणमि'त्यादि प्राग्वत् । पद्मोऽत्र देवो महर्द्धिक परिवसति । तस्य राजधानी उत्तरेण । अथ रम्यकवर्षस्य नामनिमित्त पृच्छति—'से केणट्ठेणमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! रम्यकवर्षं रम्य रम्यक रमणीय एते शब्दा एकार्थिका अपि कथञ्चि-त्काश्चित् धर्मानधिकृत्योत्कर्षप्रतिपादका अवसातव्या । तथा रम्यकोऽत्र देवो यावत्परिवसति । यावत्करणात् महर्द्धिक पल्योपमस्थितिक इत्यादि दृश्य शेष प्राग्वत् । अथ रुक्मी नाम्ना वर्षधर क्वास्ति ? इति पृच्छति—'कहि णमि'त्यादि प्रश्ननिर्वचने सुगमे । अथ सामान्यत स्वरूपमतिदेशेनाह—'एव जा चेवे'त्यादि । एवं यैव महाहिमवतो वक्तव्यता सैव रुक्मिणोऽपि । विशेषमाह—'णवर'ति । दक्षिणेन जीवा उत्तरेण धनु । महाहिमवतस्तु उत्तरेण जीवा दक्षिणेन धनुरिति विशेष । 'अवसेस'ति । अवशेषम्—उक्तविशेषादन्यदाकारभावादि—सव्वं 'त चेव'त्ति । तदेव यन्महाहिमवत्युक्त । तच्चैव-यथा महाहिमवान् पर्यन्तसस्थानसस्थित इत्यादि । तथा रुक्म्यपि 'महापुण्डरीयद्दहो'त्ति । ह्रदस्तावदत्र महापुण्डरीकनामा वक्तव्य । नरकान्ता महानदी दक्षिणेन ज्ञातव्या । यथा रोहिता । रोहिता हि महानदी हिमवतो वर्षधरात् दक्षिणाभिमुखी निर्गच्छति तथेयमपीति भाव । 'पुरत्थिमेण'त्ति । सा च पूर्वेण गच्छति—दक्षिणाभिमुखी निर्गत्य वृत्तवैताढ्यप्रत्यासन्ना वक्रीभूय पूर्वदिग्समुद्र प्रविशति । रोहिताऽपीत्थमेव लालाघण्टान्यायेन 'जहा रोहिते'ति अत्रापि सम्बन्धनीयम् । अथ ततोऽपरापि नदी रुप्यकूला नाम्नी निर्गच्छति सा चोत्तरेण ज्ञातव्या । यथा हरिकान्ता पश्चिमेन निर्गच्छति-वृत्तवैताढ्य-प्रत्यासन्ना वक्रीभूय पश्चिमसमुद्र प्रविशति । अत्रापि हरिकान्ता दृष्टान्ततया प्राग्वद्योजनीया । तस्या अपीत्थमेव प्रवृत्ते । 'अवसेस'ति । अवशेष पर्वतोपरिगमनजिह्विकाप्रवेशकुण्डप्रपातवेदिकावनखण्डादि-सर्वमपि रोहिताहरिकान्तयोरिव नरकान्तारुप्यकूलयोरपीत्यर्थ । पर वर्षधरप्रपातकुण्डादीना नाम-भिर्भेदो वक्तव्य । अथ रुक्मिणि कूटसङ्ख्या पृच्छति—'रुप्पिम्मि णमि'त्यादि प्रश्ननिर्वचने सुगमे । यावद्राजधान्य उत्तरेण सर्वेषा कूटस्वामिनामिति गम्यम् । अथ रुक्मिणो नामनिमित्त पृच्छति—'से केणट्ठेणमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! रुक्मी वर्षधरपर्वत रुक्म-रुप्य शब्दानामनेकार्थ-त्वात् तद्यस्यास्तीति रुक्मी रुप्पी वा अत्र नित्ययोगादिन्प्रत्यय । तेनायं सर्वत सर्वदा शाश्वतभावेन रुप्यमय इत्यर्थ । रुप्पपट्टे—रुप्यमयपट्ट इवे यर्थ । एव रुप्यावभास रुप्यस्यावभास—प्रकाशो यस्य तन्मयत्वात् स तथा 'सव्व'त्ति । सर्वात्मना रुप्यमय । रुक्मी वा अत्र देव परिवसति । शेष प्राग्वत् । अथ यतो रुक्मी दक्षिणेन तद्धैरण्यवत वर्ष क्वास्ति ? इति पृच्छति—'कहि णमि'त्यादि प्रश्ननिर्वचने प्राग्वत् । अतिदिशति—'एव जहे'त्यादि । एव यथा—हैमवत तथैव हिरण्यवतमपि भणितव्य । विशेषमाह-'णवरि'ति । नवर केवल जीवा दक्षिणेनोत्तरेण धनु । 'अवसिट्ठ'ति । अवशिष्टम्—आकारभावप्रत्य-वतारादिक तदेव यद्धैमवताधिकारे भणितम् । अथात्र वृत्तवैताढ्य क्वास्ति ? इति पृच्छति—'कहि ण भते !'इत्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! सुवर्णकूलाया पश्चिमेन रुप्पकूलाया पूर्वेण । अत्रान्तरे माल्यवत्पर्यायो नाम्ना वृत्तवैताढ्य. प्रज्ञप्त । अतिदेशमाह—'जह चेव'त्ति । यथा शब्दापाती वृत्तवैताढ्य तथैव माल्यवत्पर्यायोऽपि उभयोरप्यभिधानादिव्यतिरेकेण तुल्यवक्तव्यत्वात् । 'अट्ठो'त्ति ।

से केणट्ठेणमि'त्यादिना नामनिमित्त प्रश्नादि प्राग्वत् । प्रभासोऽत्र देवस्तस्य च राजधानी उत्तरेणेति अथ हैरण्यवतस्य वर्षस्य नामनिमित्तजिज्ञासया पृच्छति—'से केणट्ठेणमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गोतम ! हैरण्यवत वर्षं रुक्मिशिखरिभ्या वर्षधरपर्व्वताभ्यामुभयत समवगूढमालिङ्गित नित्यं हिरण्य मुञ्चतीत्यादि यावत् धनुरुत्तरेणेति पर्यन्त प्रागुक्तानुसारेण सुगमम् । अवसिट्ठ 'ति । अवशिष्ट-प्राचीनप्रतीचीनायतत्वादि तदेव यत्क्षुल्लहिमवत्युक्त । 'पुडरीअद्दह'त्ति । शिखरिणो बहुमध्यदेशभागे पुण्डरीकह्रद । स च पद्मह्रदसदृश । तस्मात् सुवर्णकूला महानदी । सा च दक्षिणेन—दक्षिणाभिमुखी ज्ञातव्या । यथा रोहिता 'पुरत्थिमेण'ति । पूर्व्वेण गच्छति रोहितापि महाहिमवतो दक्षिणाभिमुखी निर्गता पूर्व्वेण गच्छति-पूर्व्वसमुद्र प्राप्नोतीत्यर्थ । यत्तु बहुष्वादर्शेषु—'जहा रोहिअस'त्ति पाठः । स चायुक्तो लेखकदोष सभाव्यते । यतो रोहितांशा नदी उत्तरेण निर्गत्य पश्चिमाभिमुखी पश्चिमसमुद्रं प्राप्नोति तथा चोक्तसूत्ररचनाया असङ्गतिर्भवेत् । अथ पुण्डरीकह्रदादेवोत्तरतो रक्तारक्तावत्यौ महानद्यौ निर्गच्छतस्ते अप्यतिदेशेनाह—'एव जह चेव'त्ति । एव यथैव पद्मह्रदाद् गङ्गासिन्धू तथैव पुण्डरीकह्रदाद् रक्तारक्तवत्यावपि ज्ञातव्ये इत्यतिदेश । तदेव व्यक्तीकरोति 'पुरत्थिमेण'ति । पूर्व्वेण रक्ता पश्चिमेन रक्तवती अवसिट्ठ ति । अवशिष्ट—पर्व्वतोपरिगमनादिक तदेवाऽपरिशेष सम्पूर्ण ज्ञातव्य यत् गङ्गासिन्ध्वोरुक्तम् । अथ शिखरिण कूटसङ्ख्या पृच्छति—'सिहरिम्मि णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गोतम ! एकादश कूटानि प्रज्ञप्तानि । तद्यथेत्यादि 'सुरादेवि'त्ति । सुरादेवीकूटम् । एवं रक्ताकूट लक्ष्मीकूट रक्तावतीकूटम् इलादेवीकूट शेष सुगम । राजधान्यश्चोत्तरेणामीषा कूटस्वामिनामिति गम्यम् । अथ शिखरिणो नामनिमित्त पृच्छति—'से केणट्ठेणमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गोतम ! शिखरिणि वर्षधरपर्व्वते बहूनि कूटानि शिखरिसस्थानसस्थितानि सर्व्वात्मना रत्नमयानि शिखरी चात्र देवो यावत्परिवसति । तदेतेनार्थेनेति निगमन प्राग्वत् । अथ ऐरवत क्षेत्र क्वास्ति ? इति पृच्छति—'कहि ण भते !'इत्यादि प्रश्न प्राग्वत् । भगवानाह—गोतम ! शिखरिण उत्तरेण लवणसमुद्रस्य दक्षिणेन 'पुरत्थिमे'त्यादि व्यक्त 'खाणुबहुले'इत्यादि । स्थाणुबहुल कण्टकबहुलम् 'एव ज चेव'त्ति । एवमनन्तरोक्तप्रकारेण यैव भरतस्य वक्तव्यता नपुंसकता च सूत्रे प्राकृतत्वात् । सर्व्वा निरवशेषा वक्तव्या सेतिगम्यं । न च केवल क्षेत्रमात्रमधिकृत्य भरतैरावतयो साम्य किन्तु नामनिमित्ताऽसङ्ख्येयकालोत्पन्नप्रथमचक्रवर्त्तिनमधिकृत्यापि साम्यमेवेति दर्शयति—सओयवणे'त्यादि । किं लक्षणा वक्तव्यता ? । सओयवणा ओयवण नाम साधन भण्यते सह ओयवणेन साधनेन या सा सोयवणा—दिग्विजयवक्तव्यतासहिता भरतक्षेत्रवक्तव्यताऽत्रापि ज्ञेयेत्यर्थ. । तथा 'सणिक्खमण'त्ति । निष्क्रमण चक्रवर्त्तिप्रव्रज्या तया—तद्व्यतिकरेण सहिता तथा सपरिनिव्र्वाणा परिनिर्व्वाण—मोक्षोऽर्थाच्चक्रवर्त्तिनस्तेन सहिता ऐरावतेऽपि भरत इव प्रथमचक्रवर्ती निर्व्वाणभाग् भवतीत्यर्थ । 'णवरि'ति । नवरमय विशेष ऐरावतश्चक्रवर्ती भरतक्षेत्रे तु भरत इति । देवोऽत्र ऐरावतोऽधिपतितया परिवसति । से तेणट्ठेण'ति निगमन प्राग्वत् ।

इतिश्री जम्बूद्वीपप्रज्ञप्तिवृत्तौ जम्बूद्वीपवर्त्तिनां वर्ष-वर्षधरादीनां वक्तव्यतानिबद्धो द्वितीयोऽधिकार ।

×

## तृतीयोऽधिकारः

अथ जम्बूद्वीपे भरतादिक्षेत्रवक्तव्यताया महाविदेहवर्त्तिनि सुमेरौ यस्तीर्थकृतां जन्माभिषेको ऽभिहित तमेवसिंहावलोकनन्यायेन भगवानेव शिष्यव्युत्पत्त्यर्थं सविस्तरं वक्तुकाम प्रथमं षट्पञ्चाशद्दिक्कुमारीकृत्यं दर्शयति

जया णं एक्कमेक्के चक्कवट्टिविजए भगवंतो तित्थगरा समुप्पज्जंति। ते णं काले णं ते णं समए णं अहेलोगवत्थव्वयाओ अट्ठ दिसाकुमारीओ महत्तरिआओ सएहिं सएहिं कूडेहिं सएहिं सएहिं भवणेहिं सएहिं सएहिं पासायवडिंसएहिं पत्तेअं पत्तेअं चउहिं सामाणिअसाहस्सीहिं चउहिं महत्तरिआहिं सपरिवाराहिं सत्तहिं अणिएहिं सत्तहिं अणिआहिवईहिं सोलसहिं आयरक्खदेवसाहस्सीहिं अण्णेहिं अ बहूहिं वाणमंतरेहिं देवेहिं देवीहि अ सद्धिं संपरिवुडाओ महया हयणट्टगीअवाइअ जाव भोगभोगाइं भुंजमाणीओ विहरंति तं जहा

भोगंकरा भोगवती सुभोगा भोगमालिणी। तोअधारा विचित्ता य पुप्फमाला अणिंदिआ ॥१॥

तए णं तासिं अहेलोगवत्थव्वाणं अट्ठण्हं दिसाकुमारी महत्तरिआणं पत्तेअं पत्तेअ आसणाइं चलंति। तते णं ताओ अहेलोगवत्थव्वयाओ अट्ठ दिसाकुमारीओ महत्तरिआओ पत्तेअ पत्तेअं आसणाइं चलिआइं पासंति पासित्ता ओहिं पउंजति पउंजित्ता भगवं तित्थगरं ओहिणा आभोएंति आभोएत्ता अण्णमण्णं सद्दावेंति सद्दावेत्ता एवं वयासी उप्पण्णे खलु भो! जंबुद्दीवे दीवे भगवं तित्थगरे। तं जीअमेअं तीअपच्चुप्पण्णमणागयाणं अहेलोगवत्थव्वाण य अट्ठण्हं दिसाकुमारीमहत्तरिआणं भगवओ तित्थगरस्स जम्मणमहिमं करेत्तए। तं गच्छामो ण अम्हे वि भगवओ जम्मणमहिमं करेमोत्तिकट्टु। एवं वदंति वदित्ता पत्तेअं पत्तेअं आभिओगे देवे सद्दावेंति सद्दावेत्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिआ! अणेगखंभसयसन्निविट्ठे लीलट्ठिअ०। एव विमाणवण्णओ भाणिअव्वो। जाव जोअणविच्छिण्णे दिव्वे जाणविमाणे विउव्वह विउव्वित्ता एअमाणत्तिअं पच्चप्पिणह। तए णं ते आभिओगा देवा अणेगखंभ० जाव पच्चप्पिणंति। तए णं ताओ अहेलोगवत्थव्वयाओ अट्ठ दिसाकुमारी महत्तरिआओ हट्ठ तुट्ठ० पत्तेअं पत्तेअं खिप्पामेव चउहिं सामाणिअसाहस्सीहिं चउहिं महत्तरिआहिं जाव अण्णेहिं देवेहिं देवीहि अ सद्धिं संपरिवुडाओ ते दिव्वे जाणविमाणे दुरूहंति दुरूहित्ता सव्विड्ढीए सव्वजुईए घणमुइंगपणवपवाइअरवेणं ताए उक्किट्ठाए जाव देवगईए जेणेव

भगवओ तित्थगरस्स जम्मणनयरे जेणेव तित्थगरस्स जम्मणभवणे तेणेव उवागच्छंति उवागच्छित्ता भगवओ तित्थगरस्स जम्मणभवणं तेहिं दिव्वेहिं जाणविमाणेहिं तिक्खुत्तो आयाहिणं पयाहिणं करेंति करेत्ता उत्तरपुरत्थिमे दिसीभागे ईसिं चउरंगुलमसंपत्ते धरणितल दिव्वे जाणविमाणे ठवेंति ठवेत्ता पत्तेअं पत्तेअं चउहिं सामाणिअसाहस्सीहिं जाव सद्धिं संपरिवुडाओ दिव्वेहिंतो जाणविमाणेहिंतो पच्चोरुहंति सव्विड्ढीए जाव णाइएणं जेणेव भगवं तित्थगरे तित्थगरमाया य तेणेव उवागच्छंति उवागच्छित्ता भगवं तित्थगरं तित्थगरमायरं च तिक्खुत्तो आयाहिणं पयाहिणं करेंति करेत्ता पत्तेअं पत्तेअं करयलपरिग्गहिअं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—णमोत्थु ते रयणकुच्छिधारिए जगप्पईवदाइए सव्वजगमंगलस्स चक्खुणो अ मुत्तस्स सव्वजगजीववच्छलस्स हिअकारगमग्गदेसिअवागिड्ढिविभुप्पभुस्स जिणस्स णाणिस्स णायगस्स बुद्धस्स बोहगस्स सव्वलोगणाहस्स सव्वजगमंगलस्स णिम्ममस्स पवरकुलसमुब्भवस्स जाईए खत्तिअस्स जंसि लोगुत्तमस्स जणणी धण्णासि पुण्णासि तं कयत्थासि अम्हे णं देवाणुप्पिए ! अहेलोगवत्थव्वयाओ अट्ठ दिसाकुमारीओ महत्तरिआओ भगवतो तित्थगरस्स जम्मणमहिमं करिस्सामो । तण्णं तुब्भेहिं ण भाइअव्वं तिकट्टु उत्तरपुरत्थिमं दिसीभागं अवक्कमंति अवक्कमित्ता वेउव्विअसमुग्घाएणं समोहणंति समोहणित्ता संखिज्जाइं जोअणाइं दंडं निस्सरंति । तं जहा—रयणाणं जाव संवट्टगवाए विउव्वंति संवट्टगवाए विउव्वित्ता तेणं सिवेणं मउएणं मारुएणं अणुद्धुएणं भूमितलविमलकरणेणं मणहरेणं सव्वोउअसुरभिकुसुमगंधाणुवासिएणं पिंडिमनीहारिमेणं गंधुद्धुएणं तिरिअं पवाइएणं भगवओ तित्थगरस्स जम्मणभवणस्स सव्वओ समंता जोअणपरिमण्डलं से जहा णाम ए कम्मगारदारए सिआ जाव तहेव जं एत्थ तणं वा पत्तं वा कट्ठं वा कयवरं वा असुइमचोक्खं पूइअं दुब्भिगंधं तं सव्वं आहुणिअ आहुणिअ एगते एडेंति एडित्ता जेणेव भगवं तित्थगरे तित्थगरमाया य तेणेव उवागच्छंति उवागच्छित्ता भगवओ तित्थगरस्स तित्थगरमायाए अ अदूरसामंते आगायमाणीओ परिगायमाणीओ चिट्ठंति ।

'जया णं एक्कमेक्के' इत्यादि । णमित्यलङ्कारे । यदा एकैकस्मिन्—चक्रवर्तिविजये भगवन्तस्तीर्थंकरा समुत्पद्यन्ते—जायन्ते जन्मना योनिनिष्क्रान्ता भवन्तीत्यर्थः । 'ते णं काले णं' ति तस्मिन् काले—तीर्थकृज्जन्मविशिष्टेऽनेहसि तस्मिन् समये—अवसरविशेषे । 'अहेलोग' त्ति अधोलोकवास्तव्या अष्टौ दिक्कुमार्योऽधोलोकवासित्वं चाऽऽसां गजदन्तगिरीणामधस्ताद्भवनेषु निवासादवसातव्य न पुन. पाताल-

वासित्वेन । किं भूतास्ता ? इत्याह—महत्तरिआओ'त्ति । अतिशयेन महत्यो महत्तरिका 'सएहिं सएहिं' स्वकीयेषु स्वकीयेषु कूटेषु, स्वकीयेषु स्वकीयेषु भवनेषु स्वकीयेषु, स्वकीयेषु प्रासादावतंसकेषु सर्वत्र प्राकृतत्वात्सप्तम्यर्थे तृतीया । पत्तेअ पत्तेअ'त्ति । प्रत्येकं प्रत्येकम् अष्टावपि चतुर्भिः सामानिकसहस्रैश्चतसृभिर्महत्तरिकाभिः सपरिवाराभिः सप्तभिरनीकैः—कटकैः सप्तभिरनीकाधिपतिभिः षोडशभिरात्मरक्षकदेवसहस्रैः 'अण्णेहिं'ति । अन्यैश्च बहुभिर्भवनपतिभिर्व्यन्तरैर्देवैर्देवीभिश्च सार्द्धं सम्परिवृता—समन्तात्परिवेष्टिता इति भावः । 'महयाहये'त्यादि । महता अहतं नृत्यगीतवादित० । यावद्भोगभोगान्-अतिशयवद्भोगान् भुञ्जाना विहरन्त्यासते । यावत्करणात् 'ततीतलताले'त्यादि प्रागुक्तं वक्तव्यम् । अथाष्टानामपि नामान्याह—'तं जहे'त्यादि व्यक्तम् । अथैवं सति यज्जायते तदाह—'तए णं तासिमि'त्यादि । ततस्तीर्थकृज्जन्मानन्तरं तासां भोगङ्करादीनाम् अधोलोकवास्तव्यानामष्टानां दिक्कुमारी महत्तरिकाणां प्रत्येकं प्रत्येकमासनानि चलन्ति । 'तते णं ताओ'त्ति । ततश्च ता अष्टौ दिक्कुमार्यो महत्तरिका प्रत्येकं प्रत्येकमासनानि चलितानि पश्यन्ति दृष्ट्वा चावधिमवधिज्ञानं प्रयुञ्जते प्रयुज्य च भगवन्तं तीर्थकरमवधिना आभोगयन्ति-पश्यन्ति जातमितिशेषः । अथाभोग्य यत्कुर्वन्ति तदाह—'अण्णमण्ण'ति । अन्योऽन्यं शब्दापयन्ति शब्दापयित्वा चैवमवादिषु—कथम् ? इत्याह—'उप्पण्णे खलु'त्ति । उत्पन्नो-जातः खलुरवधारणे । भो ! इत्यामन्त्रणे जम्बूद्वीपे द्वीपे भगवान् तीर्थंकरः । तज्जीतमेतत् जीतशब्दः स्वस्वधर्म्मानुगतनियतसत्प्रवृत्तिवाचकस्तेन सत्प्रवृत्तिविशेषे प्रयुज्यते नान्यत्र । अत एवाऽशुभानुष्ठानपरायणा अपि स्तेनादयोऽस्माकं स्तैन्यादिकं कर्म्म जीतमिति-न वदन्ति । नह्यनाचारोऽप्याचारतया गीयते । तथा जगद्व्यवहाराऽभावात् । एतेन तीर्थकृज्जन्मोत्सवादिकं देवादीनां जीतं न धर्म्मं इति वदन्तोऽपि प्रतिक्षिप्ता द्रष्टव्याः । यतो मिथ्यादृशोऽपि जैनजीताऽधिकारिणो भवन्तीति क्वाऽप्यागमेऽनुपलम्भात् युक्त्याप्यक्षमत्वाच्च । व्यवहारतः सम्यग्दृश एवाऽभ्युपगन्तव्याः । तेषां जैनजीताधिकारित्वेन जीतकृत्यं धर्म्मं एव । अन्यथा सर्वास्वपि राजधानीषु सभायां सुधर्म्मेति नाम्नो निरन्वयिता स्यात् । तत्रापि जिनदंष्ट्राणां जीतत्वेन पूजनीयत्वात् । एतेन श्रावककुलोत्पन्नानामिव स्थानकमाहात्म्यात् मिथ्यादृशोऽपि तथाकृत्यं कुर्वन्त्यतस्तत्कृतं मिथ्यादृशामपि जीतं भविष्यतीति शङ्कापि परास्ता । जैनानुष्ठानमात्रस्य ऽप्यभव्यजीतत्वापत्तेः । अभव्येनाप्यङ्गारमर्दकाऽऽचार्येदृष्टा तेनाऽस्माकं जीतमिति धिया प्रतिक्रमणादिसकलसंयमानुष्ठानस्यानन्तशः करणात् । तज्जीतं केषामित्याह—'तीअपच्चुप्पण्णे'त्यादि । अतीताऽनागतवर्त्तमानानामधोलोकवास्तव्यानामष्टानां दिक्कुमारीमहत्तरिकाणां किं कर्तुं जीतम् ? इत्याह—'जम्मण'त्ति । जन्मनो महिमा—जन्मोत्सवं कर्तुं 'तं गच्छामो णं'ति । तत्तस्माद् गच्छामो णमिति प्राग्वत् । वयमपि भगवतो जन्ममहिमा कुर्म्म इति कृत्वा-इति हेतो । एवमग्रे कर्त्तव्यतया वक्ष्यमाणं वदन्ति । धातूनामनेकार्थत्वान्निश्चिन्वन्ति । एवं निश्चित्य प्रत्येकं प्रत्येकमष्टावपि आभियोगान् देवान् शब्दापयन्ति शब्दापयित्वा चैवमवादिषु । क्षिप्रमेव भो देवानुप्रिया ! अनेकेषु स्तम्भशतेषु सन्निविष्टानि—अनेकस्तम्भशतसन्निविष्टानि 'लीलट्ठिअ'त्ति । 'लीलट्ठिअसालिभंजिआगे'इति द्रष्टव्यं । लीलया स्थिता लीलास्थिता अनेन तासां पुत्तलिकानां सौभाग्यमा-

वेदित । लीलास्थिता शालिभञ्जिका—पुत्तलिका येषु तानि तथा । एवमनया दिशा विमानवर्णको राजप्रश्नीयोक्त इहापि भणितव्य । कियद्दूरम् ? इत्याह—'जाव जोअण'त्ति । यावद्योजनविस्तीर्णानि दिव्यानि-प्रधानानि यानविमानानि वाहनरूपाणि विमानानि विकुर्व्वत-वैक्रियाणि कुरुत विकुर्व्य च एतामाज्ञप्तिका प्रत्यर्पयत-सफलीकृत्य निवेदयतेत्यर्थ । 'तते ण'ति । ततस्तेन तथैव कृत्वा प्रत्यर्प्पयन्तीति सुगम । 'तते ण ताओ' इत्यादि । ततस्ता अधोलोकवास्तव्या अष्टौ दिक्कुमारीमहत्तरिका' 'हट्ठतुट्ठ'त्ति । हट्ठतुट्ठचित्तमाणदिआ इत्यादि सङ्ग्राह्य । प्रत्येक प्रत्येक चतुर्भि सामानिकसहस्रैरित्यादि प्राग्वत् । 'ते दिव्वे'त्ति । तानि दिव्यानि यानविमानानि आरुहन्ति आरुह्य च सर्व्वर्द्ध्या-सर्व्वविमानादिसम्पदा सर्व्वद्युत्या—उचितवस्तुघटनारूपया सर्व्वद्युत्या वा शरीराऽऽभरणसम्बन्धिन्या कान्त्या 'घणे'त्यादि । घनमृदङ्गप्रणवप्रवादितरवेण 'ताए उक्किट्ठाए'त्ति । तया उत्कृष्टया यावद्देवगत्या यावत्करणात् 'सिग्घाए'इत्यादि दृश्य । 'जेणेव'त्ति । यत्रैव भगवतस्तीर्थंकरस्य नगर यत्रैव भगवतो जन्मभवन तत्रैवोपागच्छति उपागत्य भगवतस्तीर्थंकरस्य जन्मभवन तैर्दिव्यैर्यानविमानै सह त्रि कृत्व' आदक्षिणप्रदक्षिणीकुर्व्वन्ति कृत्वा च तीर्थंकरापेक्षया उत्तरपौरस्त्ये दिग्भागे ईशान्या 'ईसि'ति । ईषत् एतदेव प्रकटयति चतुर्भिरङ्गुलैरसम्प्राप्तानि-असलग्नानि धरणीतले दिव्यानि यानविमानानि स्थापयन्ति स्थापयित्वा च प्रत्येक चतुर्भि सामानिकसहस्रैर्यावत्साद्धं सम्परिवृता यावत्करणात् चतसृभिर्महत्तरिकाभिरित्यादि ग्राह्य । 'दिव्वेहितो'त्ति । दिव्येभ्यो यानविमानेभ्य प्रत्यवतरन्ति सर्व्वर्द्ध्या यावन्नादितेन—शब्दितेन यावत्करणात् सर्व्वद्युत्येत्यादि सङ्ग्रह । 'जेणेव'त्ति । यत्रैव भगवास्तीर्थंकर. तीर्थंकरमाता च तत्रैवोपागच्छन्ति उपागत्य च भगवन्त तीर्थंकर तीर्थंकरमातर च त्रि कृत्वस्त्रीन् वारान् आदक्षिणप्रदक्षिण कुर्व्वन्ति प्रत्येक प्रत्येक करतलपरिगृहीत शिरस्यावर्त्त मस्तकेऽञ्जलि कृत्वा एव वक्ष्यमाणमवादिषु. । अथ वक्ष्यमाणमाह—'णमोत्थु ते'इत्यादि । हे रत्नकुक्षिधारिके ! रत्न-भगवल्लक्षण कुक्षौ धरतीत्येवशीला रत्नकुक्षिधारिणी सैव रत्नकुक्षिधारिका तस्या सम्बोधन हे रत्नकुक्षिधारिके ! हे जगत्प्रदीपदातृके ! जगत. समस्तवस्तुप्रकाशकत्वेन प्रदीप इव प्रदीपो—भगवान् त ददातीति जगत्प्रदीपदात्री सैव जगत्प्रदीपदातृका तस्या सम्बोधन हे जगत्प्रदीपदातृके ! तुभ्य भवत्यै नमोऽस्तु-अस्मदीयो नमस्कारो भवत्विति । अथ नमस्कृत्यस्य स्तुतिरेव युक्तेति कृत्वा तीर्थकृत्सम्बन्धेन ता स्तोतुमाह—'सव्वजगे'त्यादि । यद्यस्मात् त्व लोकोत्तमस्य पुत्रस्य जननी तस्मात्त्व धन्याऽसीत्यनेन सह सम्बन्ध । कथभूतस्य पुत्रस्य सर्व्वजगन्मङ्गलस्य-सर्व्वस्य जगतो मङ्गलहेतुत्वात् मङ्गल तस्य तथा 'चक्खुणोअ'त्ति । जनाना चक्षुरिव प्रवृत्तिनिवृत्त्यादि हेतुत्वात् चक्षुस्तस्य चक्षुष चकारो विशेषणसमुच्चये तथा 'सुत्तस्स' त्ति । मूत्रमिव सूत्र ज्ञानादिरत्नावलिनिबन्धहेतुत्वात् तस्य । यद्वा 'असुत्तस्स'त्ति । अखण्डमेव विशेषणं । तत्र न सुप्तोऽसुप्त सर्व्वत्रापि सदनुष्ठानेषु निद्रारहितो जागरूकोऽप्रमत्त इत्यर्थ । तस्याऽसुप्तस्य तथा सर्व्वजगज्जीवाना वत्सल-उत्सवहेतुस्तस्य । तथा 'हिअकरे'त्यादि । हित करोतीति हितकर. स एव हितकरक एवविधो मार्गो-ज्ञानादिलक्षणो मोक्षमार्गस्तस्य देशित देशनमुपदेश इत्यर्थ । तत्र 'पागड्ढि' त्ति । भावप्रधाननिर्द्देशात् प्रवर्त्तकत्व तत्र विभु केवलज्ञानेन व्यापक सन् प्रभु समर्थ । यद्वा-हित-

करकमार्गो देशितो-दर्शितो येन स हितकरकमार्गदेशित । एवंविध सन् प्रवर्त्तको मोक्षमार्गस्यादिप्रणेता विभु-व्यापक केवलज्ञान तस्य प्रभु स्वामी तत कर्मधारयः । अनेन हितार्थकृत. समुत्पन्नकेवलज्ञाना एव स्वतन्त्रधर्म्मोपदेष्टारो न पुनश्छद्मस्थावस्थाया न वा परोपदेशपरतन्त्रा इति सूचित । जिनस्य रागादिजेतृत्वात् 'णाणिस्स'मत्यादिज्ञानत्रयोपेतत्वात् ज्ञानिन भाविनि भूतवदुपचार इति न्यायात् केवलज्ञानिनो वा 'नायगस्स'त्ति। नायकस्य-स्वामिनोऽर्थात्त्रिजगत बुद्धस्य-विज्ञाततत्त्वस्य बोधकस्य-परेषा तत्त्वज्ञापकस्य सर्व्वलोकस्य नाथो-योगक्षेमकारित्वात्, तत्राऽलब्धस्य सम्यक्दर्शनादेर्लम्भकत्वात् योगकारित्व तस्यैव लब्धस्य तत्तदुपद्रवाऽभावजनकत्वेन पालकत्वात्क्षेमकारित्व । तस्य सर्व्वलोकनाथस्य सर्व्वजगन्मङ्गलस्येति प्राग्वत् । न चात्र पौनरुक्त्य शङ्कनीय स्तुतौ तदभावात् । यदुक्त

'सज्झायज्झाणतवओसहेसु उवएसथुइपयाणेसु । सतगुणकित्तणेसु न हुंति पुणरुत्तदोसाओ' ॥१॥ त्ति।

निर्म्ममस्य-ममकाररहितस्य सर्व्वत्र निःस्पृहत्वात् 'पवर'त्ति । प्रवर-प्रधान कुल-पितृपक्षरूपमिक्ष्वादि तत्र समुद्भव सम्यगुत्पत्तिर्यस्य स तथा 'जातीए'त्ति । जात्या-मातृपक्षरूपया क्षत्रियस्योत्तमस्य एवंविधस्य लोकोत्तमस्य तीर्थकृतो यस्मात् कारणात् 'त' त्ति । त्व जननी-माता असि-भवसि यत्तदोर्नित्याभिसम्बन्धात् ततस्त्वं धन्यासि-धनादिहेतुत्वेन सकललोकाभिष्टाऽसि पुण्याऽसि-केवलपुण्यप्रकृतिसमुदायाऽऽत्मकत्वेन पवित्राऽसि । तथा कृतार्थाऽसि-कृत पुत्रजन्ममात्रेण प्रसाधितोऽर्थ सर्व्वेष्वपि श्रेष्ठतमो मोक्षलक्षणो यया सा कृतार्था तीर्थकृता हि मातरस्तद्भवसिद्धिका एक भवान्तरसिद्धिका वा स्युरिति परमसन्तुष्टिजनकवचनेन तीर्थकृन्माता स्तुता ततश्च यतस्त्वमुक्तलक्षणस्य तीर्थकृतो जनन्यसि ततस्त्व धन्यासि पुण्यासि कृतार्थासीति स्तुतिगोचर समुदायार्थं । अथोक्तप्रकारेण मातर स्तुत्वा तत्पुरस्तान्निजकृत्यकृते स्वकीय स्वरूपमाविष्कुर्व्वन्ति । 'अम्हे णमि'त्यादि । हे देवानुप्रिये ! वय णमित्यलङ्कारे अधोलोकवास्तव्या अष्टौ दिक्कुमार्यो महत्तरिका भगवतस्तीर्थकृतो जन्ममहिमा करिष्याम । 'तण्ण'ति । तत्तस्मात् णमित्यलङ्कारे । 'तुब्भेहिं'ति । युष्माभिर्न भेतव्यमिति कृत्वा-इति भणित्वा उत्तरपौरस्त्य दिग्भागमीशानीमपक्रामन्ति अपक्रम्य च वैक्रियसमुद्घातेन-वैक्रियकरणाय प्रयत्नविशेषेण समवहन्यन्ते-समवहता भवन्तीत्यर्थ । समवहताश्चात्मप्रदेशान् दूरतो विक्षिपन्ति । तथा चाह-'सखिज्जाइ'ति । सङ्ख्येयानि योजनानि दण्ड इव दण्ड ऊर्ध्वाध आयत शरीरबाहल्यो जीवप्रदेशसमूहस्त निसृजन्ति-निःकाशयन्ति निःसृज्य तथाविधान् पुद्गलानाऽऽददते । एतदेव दर्शयति-'त जहे' त्यादि । रत्नाना यावत्सवर्त्तकवातान् विकुर्व्वन्ति बहुवचन यथोपयोग सवर्त्तकवातेऽप्यनेकभेदससूचक यावत्करणात् 'वयराणमि'त्यादि राजप्रश्नीयोक्त ग्राह्य । 'सवट्टगे'त्यादि । सवर्त्तकवातान् विकुर्व्वित्वा 'तेण'ति शेष । तेन सवर्त्ताभिधानेन शिवेन-निरुपद्रवेण मृदुकेन-कोमलेन मारुतेन-वातेन अनुद्धूतेन-अनुरूपाऽपरवस्तुकम्पजनकेन 'भूमितल'त्ति । भूमितल विमल करोतीति भूमितलविमलकरणस्तेन मनोहरेण-मनोऽनुकूलेन 'सव्वोउअ'त्ति । सर्व्वर्त्तुकानि सर्व्वर्त्तुनिष्पन्नानि यानि सुरभिकुसुमानि तेषा यो गन्धस्तेनाऽनुवासितेन-तन्मयता प्रापितेन 'पिंडिम'त्ति । पिण्डिमेन सता निर्हारिमेण-दूरगामिना गन्धोद्धुरेण-गन्धोत्कटेन तिर्यक् प्रकर्षेण वाति स्मेति तिर्यक्प्रवातस्तेन एवंविधस्वरूपेण सवर्त्तकवातेन भगवत-

स्तीर्थकरस्य जन्मभवनस्य सर्व्वत –सर्व्वासु दिक्षु समन्तत –सर्व्वासु दिक्षु 'जोअण'त्ति । योजनपरिमण्डल-पारिमाण्डल्येन योजनप्रमाण यत्प्रैव 'से जहे'त्यादि । दार्ष्टान्तिकयोजनाया तथैवेति वक्ष्यमाणत्वान् यथेत्यध्याहार्यम् । तथा च यथा स वक्ष्यमाणतरुणत्वादिगुणोपेतो यथानामकोऽनिर्दिष्टनामक कर्म्मकर-दारक स्यात् 'जाव तहेव'त्ति । यावत्तथैव यावत्करणात्–'तरुणे वलव जुगवं जुवाणो अप्पायके थिरग्ग-हत्थे पडिपुण्णपाणिपादपिट्ठ तरोरुसघायपरिणए घणणिचिअवट्टवलिअखवे लघणपवणजवणमद्दणसमत्थे चम्मेट्ठगदुघणमुट्ठिअसमाहयणिचियगत्ते उरस्सवलसमण्णागए तलजमलजुअलणिभवाहू छेए दक्खे (पट्ठे) कुसले मेहावी णिउणसिप्पोवगए एग मह सलागहत्थग वा दडसपुंछणि वा वेणुसिला सिलागिअ वा गहाय राय अतेउर वा देउल वा सभ वा पव वा आरामं वा उज्जाण वा अतुरिअमचवलमसभंतणिरतर सुणिउण सव्वओ समता समज्जेज्ज'त्ति द्रष्टव्यम् । अस्यार्थ –स कर्म्मकरदारक किं लक्षण ? तरुण– प्रवर्द्धमानवया । स च वलरहितोऽपि स्यादतआह–'वलव'त्ति । वल-पराक्रमो यस्य स वलवान् । अथ वलवानपि कालापेक्षया तारतम्येनानेकप्रकारस्तत्र किं कालीनो वलवानिह विवक्षितकार्यकरणायोद्दिष्ट ? इत्याशङ्कायामाह–जुगव'ति । युग–सुषमदुष्षमालक्षण काल. स एव स्वेन स्वरूपेण यस्यास्ति न पुनर्दोषदुष्ट स युगवान् । अयं भाव –कालोपद्रवोऽपि सामर्थ्यविघ्नहेतु स चास्य नास्तीति दर्शितम् । अथैवविध कश्चित्कथञ्चित् कुमारावस्थोऽपि स्यादत आह–'जुवाणो'त्ति । युवा–यौवनावस्थायां हि कुमारावस्थापेक्षया वलातिशायित्व स्यादत एतद्विशेषणोपादान पर युवापि तरुण प्रवर्द्धमानवया इत्यनन्तरोक्तत्वेन यौवनस्य वयस. पूर्व्वार्द्धे वर्त्तमानोऽवसातव्य । कौमार्याभिमुखमेव यौवन प्रवर्द्धमान-वय स्यात् तत्र वर्त्तमान पुमान् चिकीर्षित कार्यं कुर्व्वन् न ग्लानिमासादयति दूरमृत्युत्वेन विशिष्ट-सामर्थ्यापितत्वात् । न चैवमुत्तरार्द्धेऽपि वर्त्तमान तस्य प्रत्यासन्नमृत्युत्वेन तथाविधवीर्योल्लासाऽसम्भवात्। न चैव कुमारावस्था एव युक्तस्तस्य प्रवर्द्धमानवयस्कत्वेऽपि दूरतरमृत्युत्वादिति वाच्य । तस्य कायम-नसोरुपकरणयोरपरिपक्वतया तथाविधसामर्थ्याऽभावात् सहकारादिषु तथैव दृष्टत्वात् । नहि प्रवर्द्धमा-नवया अप्राप्तयौवन सहकार फलोत्सर्ज्जनसामर्थ्यभाग् केनापि दृष्ट श्रुतो वेत्यल प्रसङ्गेन । अथैव-विधोऽपि ज्वरादिरुजाग्रस्तोऽस्तमितसामर्थ्य स्यादत आह–' अप्पायके'त्ति । अल्पशब्दोऽभाववाची अल्प-सर्व्वथा अविद्यमान आतङ्को ज्वरादिर्यस्य सोऽल्पातङ्क । अथैवविधोऽपि शरीरेण शरीरावयवैश्च परिपूर्णो दृढश्च शीघ्रमेव चिकीर्षितकार्यकरणसमर्थ. स्यादतो विशेषणसप्तकेन तदेवाह–'थिरग्गहत्थि' त्ति । स्थिराग्रहस्तो यस्य स स्थिराग्रहस्तः । 'पडिपुण्णे'त्यादि । प्रतिपूर्णानि निजनिजावयवैरन्यू-नानि क्वचित् दढेति पाठ । तत्र दृढानि–अतिनिविड वयापन्नानि । पाणिपादपृष्ठान्तरोरूणि परिणतानि यस्य स प्रतिपूर्णपाणिपादपृष्ठान्तरोरुपरिणत. । तथा 'घण'त्ति । घनमतिशयेन निचितौ-निविडतरचया-पन्नौ वृत्तौ वलिताविव वलितौ स्कन्धौ यस्य स घननिविडवृत्तवलितस्कन्ध. । तथा 'चम्मेट्ठ'त्ति । चर्मेष्टिकेन–वर्घ्रारूपचर्म्मवेष्टितेन द्रुघणेन-घनेन मुष्टिकया च समाहत्य ये निचितीकृतगात्रास्तेषामिव गात्र यस्य स चर्मेष्टकद्रुघणमुष्टिकसमाहतनिचितगात्र । तथा 'उरस्स'त्ति । उरसि भवमुरस्यं तच्च तद्वल च उरस्यवल तत्समन्वागत –समनुप्राप्त उरस्यवलसमन्वागत -आन्तरोत्साहवीर्ययुक्त इतिभाव. ।

तथा 'तलजमल'त्ति । तलौ-तालवृक्षौ तयोर्यमलयुगल तलयमलयुगल तन्निभौ—तत्सदृशौ तद्वदतिसरला-वित्यर्थ । वाहू यस्य स तलयमलयुगलनिभवाहु. । तथा 'लंघण'त्ति । लङ्घणेऽतिक्रमणे, प्लवने मनाक् पृथुतरविक्रमवति गमने, जवनेऽतिशीघ्रगतौ, प्रमर्द्दने कठिनस्याऽपि वस्तुनश्चूर्णनकरणे समर्थः । लङ्घन-प्लवनजवनप्रमर्द्दनसमर्थ. । एवमुक्तस्वरूपोऽपि । (छेक.) दक्षत्वादिगुणोपेत एव सम्यगनुष्ठायी स्यादत आह—'छेए'त्ति । छेको—द्वासप्ततिकलापण्डित । दक्ष.—कार्याणामविलम्बितकारी, प्रष्ठो—वाग्मी, कुशल.-सम्यक्क्रियापरिज्ञानवान्, मेधावी-परस्पराऽव्याहतपूर्व्वापरानुसन्धानदक्षः । अत एव निपुणशिल्पो-पागत —निपुण यथा स्यात्तथा शिल्पक्रियासु कौशल तदुपागत –प्राप्त एवंविध कर्म्मकरदारक एक महान्त शलाकाहस्तक खरित्पर्णादिशलाकामयी सम्मार्जनीमित्यर्थ । वाशब्दा विकल्पार्था । 'दडसं-पुंछणिं'ति । दण्डयुक्ता सम्पुञ्छनी दण्डसपुञ्छनी ता वा गृहीत्वा राजाङ्गण वा राजान्त पुर वा देवकुलं वा सभा वा—मन्तो भान्त्यस्यामिति सभा—ग्रामप्रधानाना वा नगरप्रधानाना वा यथासुखमवस्थानहेतु-र्मण्डपिका ता । प्रपा वा पानीयशाला । आराम वा आगत्य आगत्य भोगपुरुषा वरतरुणीभि' सह यत्र रमन्ते क्रीडन्ति स आरामो नगरान्नातिदूरवर्त्तीक्रीडाश्रयस्तरुखण्डस्त । 'उज्जाण व'त्ति । ऊर्ध्वमवल-म्बितानि प्रयोजनाभावाद्यानानि यत्र तदुद्यान नगरात्प्रत्यासन्नवर्त्ती यानवाहनक्रीडागृहाद्याश्रयस्तरु-खण्डस्तद् अत्वरितमचपलमसम्भ्रान्त वाऽत्वरया चापल्ये सम्भ्रमे वा सम्यक्कचवराद्यपनयनाऽसम्भवात् निरन्तर न त्वपान्तरालमोचनेन सुनिपुण श्लक्ष्णस्याप्यचोक्षस्यापसारणेन सर्व्वत सर्व्वासु दिक्षु समन्ततः सामस्त्येन सम्प्रमार्ज्जयेदिति दृष्टान्त । अथ दार्ष्टान्तिकयोजनामाह—'तहेव'त्ति । यथोक्तलक्षण कर्म्म-करदारक तथैवामूरपि । भोगङ्करााद्या अष्टौ दिक्कुमर्योऽधोलोकवास्तव्या. । 'ज एत्थ तणमि'त्यादि । यदत्र योजनपरिमण्डले तृण वा पत्र वा काष्ठ वेति प्रतीत कचवर वा कचवरो नाम श्लक्ष्णतृणधूल्यादि-पुञ्जरूपस्त एतच्च तृणादि किं लक्षणम् ? इत्याह—अशुचि—अशुचिसमन्वितम्—अस्पृश्यवस्तुसम्बद्ध-मित्यर्थ । अचोक्षमपवित्र पूयित—क्वथित अशुचिगन्धवासित वा । अत एव दुरभिगन्ध—दुर्गन्धमित्यर्थः 'त सव्व'ति । तत्तथाविध तृणाद्य सर्व्वं न पुन किञ्चिदित्यर्थ । 'आहुणिअ'त्ति । आधूय आधूय संवर्त्त-कवातद्रवकुर्व्वणेन निजनिजस्थानेभ्यो वियोज्य एकान्ते योजनपरिमण्डलाद्बहि प्रदेशे एडयन्ति-धातूना-मनेकार्थत्वादपनयन्ति एडयित्वा च 'जेणेव'त्ति । यत्रैव भगवान् तीर्थंकरस्तीर्थंकरमाता च तत्रैवोपा-गच्छन्ति उपागत्य व भगवतस्तीर्थंकरस्य तीर्थंकरमातुश्च अदूरसामन्तेऽनतिदूरप्रत्यासन्नप्रदेशे 'आगाय-माणीओ'त्ति । आ-मर्यादया निजनिजजीतपरिपालननीत्या गायन्त्यस्तीर्थंकरस्य तीर्थंकरमातुश्च गुणो-त्कीर्त्तननिवद्धानि गीतानि श्रावयन्त्य 'परिगायमाणीओ'त्ति । परि-सामस्त्येन अत्यन्तानन्दोद्गारमि-श्रिताना मनोवाक्कायाना परस्परस्पर्द्धया यौगपद्येन गायन्त्यस्तिष्ठन्ति ।

अथोर्ध्वलोकवास्तव्याना दिक्कुमारीणां सप्रयोजनमागमनादिवक्तव्यतामाह

ते णं काले णं ते ण समए णं उड्ढलोअवत्थव्वाओ अट्ठ दिसाकुमारीओ महत्तरिआओ सएहिं सएहिं कूडेहिं सएहिं सएहिं भवणेहिं सएहिं सएहिं पासायवडिंसएहिं पत्तेअं पत्तेअं

चउहिं सामाणिअसाहस्सीहिं एवं तं चेव पुव्ववण्णिअं जाव विहरंति । तं जहा—

मेघंकरा मेघवती सुमेधा मेघमालिणी । सुवत्था वत्थमित्ता य वारिसेणा बलाहिगा ॥१॥

तए णं तासिं उड्ढलोगवत्थव्वाणं अट्ठण्हं दिसाकुमारीमहत्तरिआणं पत्तेअं पत्तेअं आसणाइं चलंति । एवं तं चेव भाणिअव्वं पुव्ववण्णिअं जाव अम्हे देवाणुप्पिए ! उड्ढलोगवत्थव्वाओ अट्ठ दिसाकुमारीमहत्तरिआओ जेणं भगवतो तित्थगरस्स जम्मणमहिमं करिस्सामो । तण्णं तुब्भेहिं ण भाइअव्वंतिकट्टु उत्तरपुरत्थिमं दिसीभागं अवक्कमंति अवक्कमित्ता जाव अब्भवद्दलए विउव्वंति विउव्वित्ता जाव णिहयरयं णट्ठरयं भट्ठरयं पसंतरयं उवसंतरयं करेंति करेत्ता खिप्पामेव पच्चुवसमंति पच्चुवसमित्ता एवं पुप्फवद्दलगंसि पुप्फवासं वासंति जाव कालागुरुपवर० जाव सुरवराभिगमणजोग्गं जेणेव भगवं तित्थगरे तित्थगरमाया य तेणेव उवागच्छंति उवागच्छित्ता जाव आगायमाणीओ परिगायमाणीओ चिट्ठंति ।

'तेणं कालेणमि'त्यादि । तस्मिन् काले तस्मिन् समये ऊर्ध्वलोकवास्तव्या अष्टौ दिक्कुमार्यो महत्तरिका 'सएहिं'ति । प्राकृतत्वात्सप्तम्यर्थे तृतीयेति कृत्वा स्वकीयेषु स्वकीयेषु कूटेषु नन्दनादिषु एव भवनान्यपि वाच्यम् । 'एवं तं चेव'त्ति । एवमुक्तप्रकारेण तदेव पूर्ववर्णितमेव यत्पूर्वं भोगङ्करादीनां वर्णितं तदेवेत्यर्थः कियद्दूरम् ? इत्याह—'जाव'त्ति । यावद्विहरन्ति । यावत्करणात् 'चउहिं महत्तरिआहिं'मित्यादि द्रष्टव्यं । अथ तासां नामान्याह—'तं जहे'त्यादि । तद्यथा—मेघङ्करेत्यादि सुगमम् । अथैवमासीनानां तासां किं जायते ? इत्याह—'तते णमि' त्यादि । उत्तरपुरत्थिमं दिसीभागं अवक्कमंती'ति पर्यन्तं प्राग्वत् । जाव 'अब्भवद्दलए विउव्वंति'त्ति । यावत् । अभ्रवार्दलकानि विकुर्वन्ति वा-पानीयं तस्य दलानि वार्दलानि तान्येव वार्दलकानि मेघा इत्यर्थ । आपो—जलं बिभ्रतीति अभ्राणि मेघास्तानि सन्त्यस्मिन्निति मत्वर्थीयेऽप्रत्ययेऽभ्रमाकाशमित्यर्थः अभ्रे वार्दलकान्यभ्रवार्दलकानि तानि विकुर्वन्ति आकाशे मेघान् विकुर्वन्तीत्यर्थः । यावत्करणात् 'विउव्विअसमुग्घाएणं समोहणंती'त्यादि द्रष्टव्यं । 'जाव णिहयरय'त्ति । यावन्निहतरजः निहतमुत्थानशक्तिविकलीकृतं रजो यत्र तत्तथा । एवमीषत्सूक्ष्माल्पबिन्दुसमूहेन निहतं सत्तत्क्षणमेव दृश्यं स्यादत आह—'णट्ठरय'त्ति । नष्ट—दृक्पथातीतं रजो यत्र तन्नष्टरजः प्रथमं तादृशं वर्षं वर्षन्ति यावद्यादृशेन रजांसि दृक्पथमपि नावतरन्तीत्यर्थः । अत एवाह—'भट्ठरय'त्ति । भ्रष्टमिव—स्वस्थानाच्च्युतमिव दूरतरपलायितमिव रजो यत्र तद्भ्रष्टरजः । अथोक्तार्थमेव विशेषणद्वयेन दृढयति—'पसंतरय'त्ति । प्रशान्तमितस्ततश्चलनक्रियाशून्यं रजो यत्र तत्प्रशान्तरजः । अत एवोपशान्त—चक्षूरोचविधापनादिनिजव्यापारशून्यं रजो यत्र तदुपशान्तरजः । एवंविधं योजनपरिमण्डलं विकुर्वन्ति । यावत्करणात् कर्म्मकरदृष्टान्तेन दार्ष्टान्तिकयोजना कर्त्तव्या । तथाहि 'से जहा णामए कम्मारगदारए सिआ तरुणे जाव सिप्पोवगए एगं महं दगवारगं वा दगकुंभगं वा

दगथालगं वा दगकलसगं वा गहाय आराम वा जाव पवं अतुरिअ जाव सव्वओ समंता आवरसेज्जा तहेव'त्ति। अस्यार्थ —पूर्ववत् । यथेत्युदाहरणोपन्यासेऽत्राप्यध्याहार्यः । तथा च यथा सः तरुणत्वादिधर्म्मोपेतो यथानामक कर्म्मकरदारक एकं महान्तं दकवारकं वा मृत्तिकामयभाजनविशेषं दककुम्भकं वा—उदकघट वा दकस्थालक वा कांस्यादिमयमुदकभृतभाजनं दककलशमुदकभृतमृङ्गारं गृहीत्वा 'आराम वे'त्यादि प्राग्वत् । 'आवरसेज्ज'त्ति । आवर्षेत्-आ समन्तात्सिञ्चेत् । एव दृष्टान्तेन । दार्ष्टान्तिकयोजना त्वेव—'तह चेव ताओवि अट्ठ दिसाकुमारी महत्तरिआओ अब्भवद्दलविउव्वित्ता खिप्पामेव पतणुतणायति पतणुतणायित्ता खिप्पामेव विज्जुआयति विज्जुआयित्ता णच्चोदग णातिमट्टिअ पविरलफुसिअ रयरेणुविणासण दिव्व सुरभिगंधोदगवास वासति वासित्ता तित्यगरस्स भगवतो जम्मणभवणस्स सव्वओ समता त जोअणपरिमडल'ति पर्यन्त द्रष्टव्यम् । अस्यार्थो भरतराज्याभिषेकावसरोक्तोऽवसातव्यः । एव योजनपरिमण्डल निहतरज कृत्वा 'खिप्पामेव'त्ति । क्षिप्रमेव प्रत्युपशाम्यन्ति प्रत्येक ता दिक्कुमार्यो गन्धोदकवर्षणान्निवर्त्तन्ते—गन्धोदकवर्षमुपसहरन्तीत्यर्थ । अथ ताः प्रत्युपशम्य यत्कुर्वन्ति तत्तासामेव कृत्येनातिदिशन्नाह 'एव पुप्फे'त्यादि । एवमिति प्रागुक्तगन्धोदकवृष्टिप्रकारेणैव 'पुप्फवद्दलगसि'त्ति । प्राकृतत्वात्तृतीयार्थे सप्तमी । तत पुष्पवार्द्दलकेन कृत्वा पुष्पवार्द्दलक विकुर्व्वित्येत्यर्थ । पुष्पवर्षं वर्षन्ति 'जाव कालागुरु'त्ति । यावत्कृष्णागुरु यावत्करणात् खिप्पामेव पच्चुवसमित्ता दोच्चपि विउव्विअसमुग्घाएण समोहणति समोहणित्ता जाव पुप्फवद्दलए विउव्वति विउव्वित्ता से जहा णाम ए मालागारदारए सिआ तरुणे बलव जाव सिप्पोवगए एग मह पुप्फपडलग वा पुप्फचगेरिअ वा पुप्फछज्जिअं वा गहाय जाव सव्वओ समता कयग्गाहगहिअकरयलपब्भट्ठविप्पमुक्केण दसद्धवण्णेण कुसुमेण मुक्कपुप्फपुजोवयारकलिअ करेज्जा तहेव ताओ विदिसाकुमारीओ पुप्फवद्दलए विउव्वित्ता खिप्पामेव पतणतणायति पतणुतणायित्ता जाव जोअणपरिमडल जलयलयभासुरप्पभूअस्स विटट्ठाइस्स दसद्धवण्णकुसुमस्स जाणुस्सेहप्पमाणमेत्त ओह वासति वासित्ता त जोअणपरिमडलमि'ति ग्राह्यम् । अस्यार्थ — गन्धोदकवर्षणात् क्षिप्रमेव प्रत्युपशम्य 'दोच्चपि'त्ति । गन्धोदकवृष्टिनिमित्ता या विकुर्व्वणा सा प्रथमा तदपेक्षया पुष्पवृष्टिनिमित्त याऽपरा सा द्वितीया अतस्तदर्थं द्वितीयमपि वार वैक्रियसमुद्घातेन समवहन्यन्ते समवहत्य च यावत्पुष्पवार्द्दलकानि विकुर्व्वन्ति पुष्पवृष्टियोग्यानि वार्द्दलकानीव पुष्पवार्द्दलकानि पुष्पवर्षुकान् मेघानि च विकुर्व्वन्तीत्यर्थ । विकुर्व्वणा चात्र जलस्थलसमुद्भूतानामेव कुसुमराशीना योजनपरिमण्डले समीहितसस्थानसस्थितिहेतवे वार्द्दलकाकृतिमात्ररूपत्वेन द्रष्टव्या न पुनः कुसुमान्यपि स्वरूपतो विकुर्वितानि तेषा जलजादित्वेनागमे प्रतीतत्वात् । यदुक्त—'विंटट्ठाइ सुरहिं जलथलय दिव्वकुसुमनीहारिं । पयरिंति समतेण दसद्धवण्ण कुसुमवास ॥१॥ इति । किंचाभिषेकादौ गन्धोदककुसुमादीनि स्वरूपसन्त्येव नियमेन साक्षादुपयुज्यमानानि तानि वैक्रियाणि न भवन्त्येव । अत एव सूर्याभप्रभृतीना देवानामिन्द्राभिषेकनिमित्तमाभियोगिका देवा मागधादितीर्थनदीह्रदादिभ्य उदकमृत्तिकाकुसुमकषायौषध्यादिद्रव्यसमुदायमादाय स्वस्वामिसमीपमायान्तीति प्रवचने प्रतीतम् । किं च यदि कुसुमान्यपि विकुर्व्वितान्येवाभविष्यन् तर्हि विकुर्व्वणामधिकृत्य सूत्ररचना 'सवट्टगवाय विउव्वति'त्ति

वत् 'अंभकुसुमे विउव्वंति' इत्येवरूपेण कर्मतया विशेष्यपद पुरस्कृत्यैवाभविष्यत् तथा च संवर्त्तकवा-तवदुदककुसुमादीन्यप्यभिषेकादौ स्वरूपसन्ति नियमेन साक्षान्नोपायोक्ष्यन् न चैवं तस्मान्न विकुर्व्वितानि किन्तु स्वरूपसन्त्येव । संवर्त्तकवातो हि यस्माद्विकुर्व्वितस्तस्मान्न कुसुमादिवदुपयुज्यते किंत्वशुचि-तृणाद्यपनयनमात्रेणैव तस्य कृतार्थत्वात् एवमशोकवृक्षादावपि परिभावनीय । तेषामपि छायादिजनकत्वे-नैव कृतप्रयोजनत्वात् । न च वार्द्दलिकानीवेतिरूपेण राजप्रश्नीयोपाङ्गादौ व्याख्यानानुपलम्भादिहेव शब्दस्यान्तर्भावो न युक्त इति शङ्कनीय तत्रापि तद्व्याख्यातृणा तथैवाभिप्रायात् अन्यथाऽहं मौनीत्यादि-वच्छब्दव्युत्पत्तिमात्रेणैव विरोधापत्तो । तथाहि-यदि वार्द्दलकानि तर्हि जलवृष्टियोग्यान्येव स्यु न पुन पुष्पवृष्टियोग्यान्यपि तत्र तेषा सामर्थ्याऽभावात् कारणानुरूपत्वात्कार्यस्य अन्यथा जगद्व्यवस्था ऽनास्थेया स्यात् । अथ यदि पुष्पवृष्टियोग्यानि तर्हि कुसुमदलिकानि स्युर्न पुनर्वार्द्दलकानि तेषा तथा स्वभावाऽभावात् । अथ दिव्यानुभावान्न किञ्चिदनुपपन्नम् ? इति चेत् । नैव, वार्द्दलकादिविकुर्व्वणाना दत्ताञ्जलितापत्ते । दिव्यानुभावेनैव तृणकाष्ठाद्यपनयनरज स्थगनकुसुमवृष्ट्यादि भविष्यति किमन्त-र्गडुना विकुर्व्वणाप्रयासेनेति यथा एकयैव विकुर्व्वणया दिव्यानुभावेन समीहितसकलार्थसिद्धे किमपरा-परविकुर्व्वणयेति । तस्मात् यत्र यद्विशेष्यपदपुरस्कारेण विकुर्व्वणाभणन तत्र तद्वस्तुस्वरूपविषय । शेषं तु तदुपमाविषयमिति तात्पर्यम् । एव समवसरणेऽप्यवसातव्य । न च प्रत्याख्यातसर्व्वसावद्याना साधूना साध्वीना च तथाविधजलस्थलसमुद्भूताना कुसुमानामुपरि गच्छता तिष्टतामुपविशता च किमिव सयमबाधा न स्याद् ? इति चेत् । उच्यते, तेषा कुसुमाना मनुष्यादिस्पर्शजन्या न काचिदाबाधा वा विबाधा वा स्यात् किन्तु प्रत्युत तीर्थकृदतिशयवशात्समवसरणस्थितिकाल तानि सुधासिक्तानीवाव-तिष्ठन्ते । एतेन यत्र साधुसाध्वीना गमनागमनादिसम्भव तत्र कुसुमानि न भविष्यन्तीति पराशङ्कापि परास्ता । साधूना कुसुमादिजीवपीडापरिहारेणैव तात्पर्यात् । यत्तु कश्चित् तीर्थकरसमवसरणभूमौ वैकियकुसुमव्यवस्थापनाय 'जलयथलयभासुरप्पभूअस्स'त्ति । राजप्रश्नीयवचन जलजस्थलजानामिव भास्वरमित्युपमया समासमुद्भावयति तदप्यसार तथासमासकरणेऽपि वैक्रियापेक्षया जलजादीनामेव भास्वरत्व सम्पन्नम् अन्यथोपमया समासाऽसम्भवात् तथा च यतो यद्भास्वर तदेव देवेन्द्रादय समव-सरणादावुपयोजयन्ति अन्यथा तीर्थकृता भक्तेरेव हानिप्रसक्ते । नहि सदपि चारुचन्दन परित्यज्य तत्कृत्य करीरकाष्ठेन कुर्व्वाण कोऽपि केनापि तद्भक्तोऽभिधीयते न च जलजस्थलज दिभ्यो भास्वर-मितिपञ्चमीतत्पुरुषविधाने वैक्रियाणामेव भास्वरता सम्पद्यते इति वाच्य । हस्तमस्तकौष्ठस्फुरण-पूर्व्वकाध्ययनाऽध्यापनानुकरणसमन्वितस्यापि साक्षात्तत्क्रियानुपयोगिन कथञ्चिच्चारुस्वरूपस्यापि दर्प्प-णसङ्क्रान्तसाधुरूपस्येव तीर्थकृत्पूजाभिषेकादावनुपयोगिना वैक्रियकुसुमानामभास्वरताया सार्व्वज-नीनत्वादित्यल प्रपञ्चेन । अथ प्रस्तुत व्याख्यायते- से जहे'त्यादि । स तरुणत्वादिगुणोपेतो यथा नामको यथेत्यध्याहार्यं यथा मालाकारदारक एक महत् पुष्पपटलक-पुष्पाधारभाजनविशेष तथा एका महती पुष्पचङ्गेरी लोकप्रतीता 'पुप्फछज्जिअ'ति । छद्यते-उपरि स्थग्यते इति छाद्या छाद्यैव च्छाद्यिका पुष्पैर्भृता छाद्यिका पुष्पछाद्यिका ता गृहीत्वा यावत्सर्व्वत समन्तात् कयग्गाहगहिअ'त्ति । इह मैथुन-

संरम्भे युवत्या मुखचुम्बननिमित्त केशेषु ग्रहणं कचग्राहस्तेन गृहीतं कचग्राहगृहीत तथा करतलाद्विप्रमुक्तं सत्प्रभ्रष्ट करतलप्रभ्रष्टविप्रमुक्त प्राकृतत्वात्पदव्यत्ययस्ततो विशेषणसमास. तेन दशार्द्धवर्णेन-पञ्चवर्णेन कुसुमेन जात्या एकवचनमतोऽनेककुसुमसमूहेनेत्यर्थ. । मुक्तपुष्पपुञ्जोपचारकलितं कुर्यात् । एवं दृष्टान्तमुपदर्श्य दार्ष्टान्तिकमाह-'तहेव'त्ति । तथैव ता अपि मेघङ्कराद्या दिक्कुमार्य पुष्पवार्दलकानि विकुर्वित्वा 'पतणतणायति'त्ति । अनुकरशब्दोऽय तेन प्रतनस्तनायन्ते-रानित कुर्वन्ति कृत्वा च योजनपरिमण्डल 'जलजथलजे'त्यादि । जलज शतपत्रादि पद्म, स्थलज चम्पककेतक्यादि तथा च जलज च स्थल ज च तच्च तद्भासुर च तत्प्रभूत चेति विशेषणकर्म्मधारय । अय भाव -जलजादिष्वपि कुसुमेषु यद्भासुरं-दीप्तिमन् न पुन स्वत. स्वस्थानभ्रशात् म्लानिमापन्न तदपि प्रभूत न पुनरल्प तस्य 'विट'त्ति । वृन्तस्थायिनोऽधोमुखवृन्तस्य एवविधस्य दशार्द्धवर्णस्य-पञ्चवर्णकुसुमसमूहस्य जानूत्सेधप्रमाणमात्रम् ओघ-सामान्य सर्वत्र समस्तभाव वर्षन्ति । अनियतस्वभावेन वर्षणे तु भूप्रदेशाना निम्नोन्नतिभवनेन असुन्दरता स्यात् क्वचिच्च 'ओहिमि'ति पाठ । तत्राऽवधि-मर्यादामाश्रित्येतिगम्यं समर्यादमित्यर्थ । यत्र प्रदेशे यावता सुन्दरता तत्र प्रदेशे तावती वृष्टि कुर्वन्ति । वर्षित्वा च योजनपरिमण्डल 'कालागुरुपवर जाव'त्ति । यावत्करणादखिलमिद 'कालागुरुपवरकुदुरुक्कतुरुक्कधूवमघमघंतगधुद्धुआभिराम सुगधवरगधिअ गधवट्टिभूअ दिव्वमि'ति ग्राह्य । तत्र गन्धवर्त्तिभूत सौरभ्यातिशयाद्गन्धद्रव्यगुटिकाकल्पमित्यर्थ शेष प्राग्वत् । 'सुरवराभिगमण'त्ति । सुरवराणा-शक्रेशानादीनामागमनयोग्यमागत्योपवेशनादियोग्यम् एवविध क्षेत्र कुर्वन्तीति शेष. । कृत्वा च 'जेणेव'त्यादि प्राग्वत् ।

अथ रुचकनाम्नस्त्रयोदशस्य द्वीपस्य मध्यभूतो रुचकनामापर्व्वत। तत्र पूर्व्वदिग्वास्तव्यानामष्टाना दिक्कुमारीणामागमनादिप्रयोजनमाह

**ते णं काले णं ते ण समए णं पुरत्थिमरुअगवत्थव्वाओ अट्ठ दिसाकुमारीमहत्तरिआओ सएहिं सएहिं कूडेहिं तहेव जाव विहरंति । तं जहा-**

**णंदोत्तरा य णंदा आणंदा णंदिवद्धणा । विजया य वेजयंती जयंती अपराजिता ॥१॥**

**सेसं तहेव जाव तुब्भेहिं न भाइअव्वं तिकट्टु भगवओ तित्थगरस्स तित्थगरमायाए अ पुरत्थिमेणं आदसहत्थगयाओ आगायमाणीओ परिगायमाणीओ चिट्ठंति । ते णं काले णं ते ण समए णं दाहिणरुअगवत्थव्वाओ अट्ठ दिसाकुमारीओ तहेव जाव विहरंति । तं०**

**समाहारा सुप्पइण्णा सुप्पबुद्धा जसोहरा । लच्छिमई सेसवई चित्तगुत्ता वसुंधरा ॥१॥**

**तहेव जाव ण भाइअव्वं तिकट्टु भगवतो तित्थगरस्स तित्थयरमाऊए अ दाहिणेणं भिंगारहत्थगयाओ आगायमाणीओ परिगायमाणीओ चिट्ठंति । ते णं काले णं ते णं समए णं पच्चिछमरुअगवत्थव्वाओ अट्ठ दिसाकुमारीमहत्तरिआओ सएहिं सएहिं जाव विहरंति । तं जहा-**

इलादेवी सुरादेवी पुहवी पउमावई । एगनासा नवमिश्रा भद्दा सीश्रा य अट्ठमा ॥१॥ तहेव जाव तुम्भेहिं ण भाइअव्वं तिकट्टु जाव भगवतो तित्थगरस्स तित्थगरमाऊए अ पच्च-त्थिमेणं तालअंटहत्थगयाश्रो आगायमाणीओ परिगायमाणीओ चिट्ठंति । ते णं काले णं ते णं समए णं उत्तरिल्लरुअग० जाव विहरंति । तं जहा

अलंबुसा मिस्सकेसी पुडरीका य वारुणी । हासा सव्वप्पभा चेव सिरी हिरि चेव उत्तरश्रो ॥१॥

तहेव जाव वंदित्ता भगवश्रो तित्थगरस्स तित्थगरमाऊए अ उत्तरेणं चामरहत्थगयाश्रो आगायमाणीओ परिगायमाणीओ चिट्ठंति । ते ण कालेणं ते णं समए णं विदिसिरुअग-वत्थव्वाओ चत्तारि दिसाकुमारी महत्तरिश्राश्रो तहेव जाव विहरंति । तं जहा—चित्ता य चित्तकणगा सुतेश्रा सोतामणी । तहेव जाव ण भाइअव्वं तिकट्टु भगवश्रो तित्थगरस्स तित्थ-गरमाऊए चउसु विदिसासु दीविश्राहत्थगयाश्रो आगायमाणीश्रो परिगायमाणीश्रो चिट्ठंति । ते णं काले ण ते णं समए णं मज्झिमरुअगवत्थव्वाश्रो चत्तारि दिसाकुमारीमहत्तरिश्राश्रो सएहिं सएहिं कूडेहिं तहेव जाव विहरंति । तं जहा-रूश्रा रूअंसा सुरूश्रा रूअगावती । तहेव जाव तुब्भेहिं ण भाइअव्वंतिकट्टु भगवश्रो तित्थगरस्स चउरंगुलवज्जं नाभिणालं कप्पंति कप्पेत्ता विवरगं खणंति खणित्ता विवरए णाभिं णिहणंति णिहणित्ता रयणाण य वयराण य पूरेंति पूरेत्ता हरिश्रालिश्राए पेढं बंधंति बंधेत्ता तिदिसिं तश्रो कयलीहरगे विउव्वंति । तते ण तेसिं कदलीहरगाणं बहुमज्झदेसभागे तश्रो चाउस्सालए विउव्वंति । तते ण तेसिं चाउ-स्सालगाणं बहुमज्झदेसभागे तश्रो सीहासणे विउव्वंति । तेसिं सीहासणाणं श्रयमेश्रारूवे वण्णावासे पण्णत्ते सव्वो वण्णगो भाणिश्रव्वो । तते णं ताश्रो रुअगमज्झवत्थव्वाश्रो चत्तारि दिसाकुमारीमहत्तरिश्राश्रो जेणेव भगवं तित्थगरे तित्थगरमाया य तेणेव उवागच्छंति उवागच्छित्ता भगवं तित्थगरं करयलसंपुडेणं गिण्हंति तित्थगरमायरं च बाहाहिं गिण्हंति गिण्हित्ता जेणेव दाहिणिल्ले कदलीहरए जेणेव चाउस्सालए जेणेव सीहासणे तेणेव उवा-गच्छंति उवागच्छित्ता भगवं तित्थगरं तित्थगरमायरं च सीहासणे णिसीश्रावेंति णिसीश्राइ-त्ता सयपागसहस्सपागेहिं तेल्लेहिं अब्भंगेंति अब्भंगेत्ता सुरभिणा गंधवट्टएणं उवट्टेंति उवट्टे-त्ता भगवं तित्थगरं करतलपुडेहिं तित्थगरमायरं च बाहासु गेण्हंति गेण्हेत्ता जेणेव पुरत्थिमिल्ले कदलीघरे जेणेव चाउस्सालए जेणेव सीहासणे तेणेव उवागच्छंति उवागच्छित्ता

भगवं तित्थगरं तित्थगरमायरं च सीहासणे णिसीआवेंति णिसीआवित्ता तीहिं उदगेहिं मज्जावेंति। तं जहा—गंधोदएणं, पुप्फोदएणं, सुद्धोदएणं मज्जावेत्ता सव्वालंकारविभूसिअं करिंति करेत्ता भगवं तित्थगरं करतलपुडेहिं तित्थगरमायरं च बाहाहिं गिण्हंति गिण्हित्ता जेणेव उत्तरिल्ले कदलीहरए जेणेव चाउरसालए जेणेव सीहासणे तेणेव उवागच्छंति उवागच्छित्ता भगवं तित्थगरं तित्थगरमायरं च सीहासणे णिसीआवेंति णिसीआवित्ता आभिओगे देवे सद्दावेंति सद्दावेत्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिआ! चुल्लहिमवंताओ वासहरपव्वयाओ सरसाइं गोसीसचंदणकट्ठाइं साहरह। तते णं ते आभिओगा देवा ताहिं रुअगमज्झवत्थव्वाहिं चउहिं दिसाकुमारीमहत्तरिआहिं एवं वुत्ता समाणा हट्ठतुट्ठ जाव विणएणं वयणं पडिच्छंति पडिच्छित्ता खिप्पामेव चुल्लहिमवंताओ वासहरपव्वयाओ सरसाइं गोसीसचंदणकट्ठाइं साहरंति। तते णं ता मज्झिमरुअगवत्थव्वाओ चत्तारि दिसाकुमारीओ महत्तरिआओ सरगं करेंति करेत्ता अरणिं घडेंति अरणिं घडेत्ता सरगेण अरणिं महेंति सरगेण अरणिं महित्ता अग्गिं पाडेंति अग्गिं पाडेत्ता अग्गिं संधुक्खेंति संधुक्खेत्ता गोसीसचंदणकट्ठाइं पक्खिवंति पक्खिवेत्ता अग्गिं उज्जालेंति उज्जालेत्ता समिहाकट्ठाइं पक्खिवेंति अग्गिहोमं करिंति करेत्ता भूतिकम्मं करेंति करेत्ता रक्खापोट्टलिअं बंधंति बंधित्ता णाणामणिरयणभत्तिचित्ते दुविहे पाहाणवट्टगोलए गहाय भगवतो तित्थगरस्स कण्णमूलंसि टिट्टिआवेंति भवउ भयव पव्वयाउए। तते णं ताओ रुअगमज्झवत्थव्वाओ चत्तारि दिसाकुमारीमहत्तरिआओ भगवं तित्थगरं करयलपुडेहिं तित्थगरमायरं च बाहाहिं गेण्हंति गेण्हेत्ता जेणेव भगवतो तित्थगरस्स जम्मणभवणे तेणेव उवागच्छंति उवागच्छित्ता तित्थगरमायरं सयणिज्जंसि णिसीआवेंति णिसीआवेत्ता भगवं तित्थगरं माउए पासे ठावेंति ठावेत्ता आगायमाणीओ परिगायमाणीओ चिट्ठंति॥

तेणं कालेणमित्यादि। तत्र पौरस्त्यो—व्यावहारिकपूर्वदिगवच्छिन्नः सन् यो रुचकः स पौरस्त्यरुचको भण्यते। यद्वा-तात्स्थ्यात्तद्व्यपदेश इति न्यायात् रुचकाद्रावेव पूर्वदिग्वर्त्तीन्यष्टावपि कूटानि पूर्वदिग्रुचकतया भण्यन्ते। तत्र वास्तव्या अष्टौ दिक्कुमारीमहत्तरिका। 'सएहिं सएहिं कूडेहिमि'त्यादि प्राग्वत्। परं नामानि 'णंदोत्तरे'त्यादीनि प्रतीतानि। 'सेस'ति। शेषमासनचलनावधिप्रयुञ्जनार्हज्जन्मावलोकनादि सर्वं तथैव भोगङ्करादीनामिव। कियद्दूरम्? इत्याह—'जाव तुब्भेहिं'ति। यावद्युष्माभिर्न भेतव्यमिति कृत्वा भगवतस्तीर्थकरस्य तीर्थकरमातुश्च पूर्वस्या दिशि आदर्शहस्तगता आदर्श—

दर्प्पणा हस्ते गताः—स्थिता यासां तास्तथा । 'आगायमाणीओ' इत्यादि प्राग्वत् । एवं दाक्षिणात्यरुचकवास्तव्यानां दिक्कुमारीणामागमनप्रयोजनमाह—'ते णं काले णमि'त्यादि व्याख्या प्राग्वत् । नवरं नामानि 'समाहारा सुप्रतिज्ञा'इत्यादीनि तीर्थंकराऽपेक्षया दक्षिणस्यां दिशि भृङ्गारहस्तगता इति । अथ पश्चिमदिग्रुचकवास्तव्याना प्रयोजनमाह—'ते ण काले णमि'त्यादि प्राग्वत् । नवरं नामानि 'इलादेवी' इत्यादीनि भगवतस्तीर्थंकरस्याऽपेक्षया पश्चिमायां तालवृन्तहस्तगता आगायन्त्य. परिगायन्त्यस्तिष्ठन्ति । अथोत्तरदिग्रुचकवास्तव्याना प्रयोजनमाह— 'ते ण काले णमि'त्यादि प्राग्वत् । नवर तासा नामानि 'अलंबुसे'त्यादि । 'अलम्बुसा मिश्रकेशी'त्यादीनि तीर्थंकराऽपेक्षया उत्तरस्यां चामरहस्तगता. आगायन्त्यः परिगायन्त्यस्तिष्ठन्ति । अथ रुचकगिरावेव विदिग्वास्तव्याना चतसृणा दिक्कुमारीणां प्रयोजनमाह—'ते ण काले णमि'त्यादि । अत्र विदिशो व्यावहारिक्य आग्नेय्यादयो ग्राह्याः । ताभिरवच्छिन्नो रुचक एवौपाधिकाश्चत्वारो विदिग्रुचका भण्यन्ते । यद्वा-तात्स्थ्यात्ताद्व्यपदेश इति-न्यायात् रुचकगिरौ विदिग्वर्त्तीनि यानि चत्वारि कूटानि तान्येव विदिग्रुचका भण्यन्ते तद्वास्तव्यास्तत्स्वामिन्य· चतस्रो दिक्कुमार्यो यावद्विहरन्ति । तासा नामानि—चित्रा, चित्रकनका, सुतेजा., सौदामिनी चेति । चतसृषु विदिक्षु-आग्नेयीप्रभृतिषु दीपिकाहस्तगता । शेषं प्राग्वत् । एव रुचकपर्व्वतोपरिवर्त्तिना षट्त्रिंशत कूटानां षट्त्रिंशत् दिक्कुमार्यो दर्शिता । अथ रुचकपर्व्वतादर्व्वाक् रुचकद्वीपान्तश्चतसृषु दिक्षु वास्तव्याना चतसृणा दिक्कुमारीणामागमनमाह— 'ते ण काले णमि'त्यादि प्राग्वत् । नवर 'मज्झिमरुअगवत्थव्वाओ'त्ति । मध्यमो रुचकपर्व्वतादर्व्वाचीनो यो रुचको-रुचक नामा द्वीप तत्र वास्तव्या रुचकद्वीपे पूर्व्वादिदिक्षु यानि चत्वारि कूटानि तत्स्वामिन्य इत्यर्थ । तासा नामान्याह—'रूवे'त्यादि रूपा रूपांशा सुरूपा रूपकावती चेति भगवतस्तीर्थंकरस्य चतुरङ्गुलवर्ज्जं नाभिनाल-नाभिसम्बन्धिनाल 'कप्पति'त्ति । छि दन्ति छित्वा विवरक—भूमौ गर्त्तारूप । खनन्ति खनित्वा विवरके नाभिं निदधति—निधिमिव कुर्व्वन्ति कृत्वा च 'रयणाण य'त्ति । प्राकृतत्वात् तृतीयार्थे षष्ठी तेन रत्नैर्वज्रैश्च पूरयन्ति तद्विवरकमिति गम्य । पूरयित्वा 'हरिआलिआए'त्ति । हरितालिका—दूर्व्वा तया पीठ बध्नन्ति विवरस्योपरीति ज्ञेय । बद्ध्वा च त्रिदिशि पश्चिमवर्ज्जं दिग्त्रये त्रीणि कदलीगृहाणि विकुर्व्वन्ति । 'तते णमि'त्यादि । ततस्तदनन्तर तेषा कदलीगृहाणा बहुमध्यदेशभागे त्रीणि चतु शालकानि—चतस्र शाला समाहृता येषु तानि चतु शालकानि भवनविशेषा तानि विकुर्व्वन्ति । विकुर्व्वित्वा ततस्तेषा चतु शालकाना बहुमध्यदेशभागे त्रीणि सिंहासनानि विकुर्व्वन्ति 'तेसि णमि'त्यादि । तेषा सिंहासनानामयमेतद्रूपो वर्णकव्यास प्रज्ञप्त सर्व्वो वर्णक सिंहासनसम्बन्धी प्रागुक्तो भणितव्य । 'तते णमि'त्यादि । तत सिंहासनत्रयविकुर्व्वणानन्तरं ताउ'त्ति । ता रुचकमध्यवास्तव्याश्चतस्रो दिक्कुमार्यो यत्रैव जन्मभवने भगवांस्तीर्थंकर तीर्थंकरमाता च तत्रैवोपागच्छन्ति उपागत्य भगवन्त तीर्थंकर 'करयलसंपुडेण' त्ति । करतलसम्पुटाभ्या तीर्थंकरमातर च 'बाहाहिं'त्ति । बाहाभ्या गृह्णन्ति गृहीत्वा च यत्रैव दाक्षिणात्य कदलीगृह यत्रैव तन्मध्ये चतु शालक भवन यत्रैव सिंहासन तत्रोपागत्य तीर्थंकर तन्मातर च सिंहासने निषीदयन्ति—उपवेशयन्ति उपवेश्य 'शतपाके'त्यादि प्राग्वत् । अभ्यङ्ग्य च 'गंध'त्ति । गन्धवर्त्तकेनोद्वर्त्त—

यन्ति । तथाविधसुगन्धद्रव्येण स्वगतेजोवृद्धिकरेण तैलस्नेहमपनयन्ति उद्वर्त्य च भगवन्त तीर्थंकरं करतलपुटाभ्या भगवन्मातर च बाह्वोर्गृह्णन्ति गृहीत्वा यत्रैव पौरस्त्यं कदलीगृहं यावत् सिंहासने निषीदयन्ति निषाद्य'तिहि'ति । त्रिभिरुदकैर्मज्जयन्ति । तद्यथा—गन्धोदकेन—श्रीखण्डकर्प्पूरादिमिश्रितजलेन, पुष्पोदकेन—शतपत्रादिपुष्परसमिश्रितोदकेन, शुद्धोदकेन स्वाभाविकजलेन मज्जयित्वा च सर्व्वालङ्कारविभूषितौ कुर्व्वन्ति मातृपुत्राविति गम्यं । यावत्सिंहासने निषाद्योपवेश्य आभियोगिकान् देवान् शब्दापयन्ति शब्दापयित्वा चैवमवादिषु' । क्षिप्रमेव भो देवानुप्रिया' ! क्षुल्लहिमवतो वर्षधरपर्व्वतात् सरसानि गोशीर्षचन्दनकाष्ठानि सहरत-समानयध्व ? ततस्ते आभियोगिका देवा. 'ताहिं रुअग'त्ति । 'साहरति' पर्यन्तं सुगमं । 'तते णमि'त्यादि । 'सरग'त्ति । शरक—शराकारमर्थात् काष्ठविशेष कुर्व्वन्ति । कृत्वा च अरणिकाष्ठ घटयन्ति—मथनाय शरकस्थितिहेतवे निम्नमध्यभाग कुर्व्वन्ति । घटयित्वा च शरकेणारणिं मथ्नन्ति मथित्वा चाग्नि पातयन्ति । प्राप्तसत्ताक कुर्व्वन्ति पातयित्वा चाग्निं सन्धुक्षन्ते 'धुक्षि सन्दीपने' इति वचनात् । अग्नि सन्दीपयन्ति-सप्रकाश कुर्व्वन्तीत्यर्थः । सन्धुक्ष्य च गोशीर्षचन्दनकाष्ठान्यर्थादीष-चूर्णीकृतगोशीर्षचन्दनखण्डसमूह प्रक्षिपन्ति । तथाविधैर्हि गोशीर्षचन्दनै' प्रगुणीकृतोऽग्नि सद्य एव स्वव्यापाराभिमुखो भवति प्रक्षिप्य चाग्निमुज्वालयन्ति उत्-प्राबल्ये दीपयन्ति उज्वाल्य 'समिह'त्ति । समिध्शब्दोऽत्र व्युत्पत्त्यर्थो वक्तव्योऽन्यथा काष्ठशब्दस्य वैयर्थ्यापत्ते । तथा च सम्यगिध्यते-दीप्यतेऽग्निरेभिरिति समिधि—आर्द्रस्वरूपानाश्रितानि काष्ठानि शुभवृक्षसम्बन्धीनि पवित्रदारुणि प्रक्षिपन्ति प्रक्षिप्य चाग्निहोम कुर्व्वन्ति कर्प्पूरादिसद्द्रव्यमिश्रितमधुघृताहुतिं कुर्व्वन्ति कृत्वा च 'भूइकम्म'ति । भूयते कुजनदृष्टिधातुप्रकोपादिसमुत्थदोषरहिततया शरीरेणाऽनयेति भूतिरित्येव व्युत्पत्त्यर्थमाग् चन्दनभस्मावसातव्य । तस्य कर्म्म बाह्वादौ चिह्नविशेषकृत्य कुर्व्वन्ति कृत्वा च रक्षापोट्टलिका—रक्ष्यते भूतप्रेतमन्त्रतन्त्रप्रयोगादिजन्यदोषेभ्योऽनयेति व्युत्पत्त्या रक्षा—भस्मैव तस्या पोट्टलिका बध्नन्ति बद्ध्वा च 'नाणामणो'त्यादि । नानामणिभक्तिचित्रौ द्वौ पाषाणवृत्तगोलकौ गृहीत्वा भगवतस्तीर्थंकृत कर्णमूले—श्रोत्रसमीपे 'टिट्टिआवेंति'त्ति । अनुकरणशब्दोऽय तेनान्योन्यमास्फालन जन्येत-टिट्टिकाशब्देन वादयन्ति । अद्यापि बालकाना पुरस्तात् दवरकनिबद्धगोलकद्वयमास्फालयन्तस्तत्ताडयितारो दृश्यन्ते । भवतु भगवान् पर्व्वतायुष्क इत्याशीर्वाद वदन्ति । 'तते णमि'त्यादि । तीर्थंकरमातर शयनीये निषाद्य तीर्थंकर मातु पार्श्वे स्थापयन्ति शेष प्राग्वत् । इत्येव चत्वारिंशद् रुचकद्वीपवासिन्य षोडश चोर्ध्वाधोलोकवास्तव्याश्चेति षट्पञ्चाशद्दिक्कुमार्यो यथा यथा जीतपरायणा भवति तथा दर्शितम् ।

अथ यथा शक्रेशानादयो देवेन्द्रा विदधति तथा क्रमेणाह

**ते णं काले णं ते णं समए णं सक्के देविंदे देवराया वज्जपाणी पुरंदरे सतक्कतु सहस्सक्खे मघवं पागसासणे दाहिणड्ढलोगाहिवई बत्तीसविमाणावाससयसहस्साहिवई एरावणवाहणे सुरिंदे अरयंबरवत्थधरे आलइअमालमउडे णवहेमचारुचित्तचंचलकुंडलविलिहिज्जमाणगंडे भासुरबोंदी पलंबवणमाले महिड्ढीए महज्जुतीए महब्बले महायसे महाणुभागे महासोक्खे-**

सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सभाए सोहम्माए सक्कंसि सीहासणंसि से णं तत्थ बत्तीसाए विमाणावाससयसाहस्सीणं, चउरासीए सामाणिअसाहस्सीणं, तायत्तीसाए तायत्तीसगाणं, चउण्हं लोगपालाणं, अट्ठण्हं अग्गमहिसीणं सपरिवाराणं, तिण्हं परिसाणं, सत्तण्हं अणिआणं, सत्तण्हं अणिआहिवईणं, चउण्हं चउरासीए आयरक्खदेवसाहस्सीणं, अण्णेसिं च बहूणं सोहम्मकप्पवासीणं वेमाणिआणं देवाण य देवीण य। अण्णे पढंति अण्णेसिं बहूणं देवाण य देवीण य आभिओगउववण्णगाणं। आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महयाहयणट्टगीअवाइअतंतीतलतालतुडिअघणमुइंगपडुपडहवाइअरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरंति। तते णं तस्स सक्कस्स देविंदस्स देवरण्णो आसणे चलति। तए णं से सक्के जाव आसणं चलिअं पासइ पासित्ता ओहिं पउंजति पउंजित्ता भगवं तित्थगरं ओहिणा आभोएति आभोएत्ता हट्ठतुट्ठचित्ते आणंदिए णंदिए पीतिमणे परमसोमणसिए हरिसवसविसप्पमाणहिअए धाराहयकयंबणीवसुरहिकुसुमचंचुमालइअऊसवितरोमकूवे विअसिअवरकमलवयणनयणे पयलिअवरकडगतुडिअकेऊरमउडकुण्डलहारविरायंतरइअवच्छे पालंबपलंबमाणघोलंतभूसणधरे ससभमं तुरिअं चवलं सुरिंदे सीहासणाओ अब्भुट्ठेति अब्भुट्ठेत्ता वेरुलिअवरिट्ठरिट्ठअंजणणिउणोविअ मिसिमिसिंतमणिरयणमंडिआओ पाउआओ ओमुअई ओमुइत्ता एगसाडिअं उत्तरासंग करेइ करेत्ता अंजलिमउलियग्गहत्थे तित्थयराभिमुहे सत्तट्ठपयाइं अणुगच्छइ अणुगच्छित्ता वामं जाणुं अंचेइ दाहिणं जाणुं धरणितलंसि णिहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि निवाडेइ निवाडेत्ता ईसिं पच्चुण्णमइ पच्चुण्णमित्ता कडगतुडिअथंभिआओ भुआओ साहरइ साहरित्ता करयलपरिग्गहिअं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—नमोत्थु णं अरहंताणं, भगवंताणं आदिगराणं तित्थयराणं सयंसंबुद्धाणं, पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुंडरीआणं पुरिसवरगंधहत्थीणं, लोगुत्तमाणं लोगनाहाणं लोगहिआणं लोगपईवाणं लोगपज्जोअगराणं, अभयदयाणं चक्खुदयाणं मग्गदयाणं सरणदयाणं जीवदयाणं बोहिदयाणं, धम्मदयाणं धम्मदेसियाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं, दीवो ताणं सरणं गई पइट्ठा अप्पडिहयवरनाणदंसणधराणं विअट्टच्छउमाणं, जिणाणं जावयाणं, तिन्नाणं तारयाणं, बुद्धाणं बोहयाणं, मुत्ताणं मोअगाणं, सव्वन्नूणं सव्वदरिसीणं, सिवमयलमरुअमणंतमक्खय-

-मव्वाबाहमपुणरावित्ति सिद्धिगइनामधेयं ठाणं संपत्ताणं, नमो जिणाणं जिअभयाणं। नमोत्थु णं भगवओ तित्थगरस्स आदिकरस्स जाव संपाविउकामस्स, वंदामि णं भगवंतं तत्थगयं इह-गए पासउ मे भगवं तत्थगए इहगयं तिकट्टु वंदति नमंसति वंदित्ता नमंसित्ता सीहासणवरंसि पुरत्थाभिमुहे सण्णिसण्णे। तते णं तस्स देविंदस्स देवरण्णो अयमेआरूवे जाव सकप्पे समु-प्पज्जित्था। उप्पण्णे खलु जंबुद्दीवे दीवे भगवं तित्थगरे तं जीअमेअं तीअपच्चुप्पण्णमणागयाणं सक्काणं देविंदाण देवराईणं तित्थगराणं जम्मणमहिमं करेत्तए। तं गच्छामि णं अहंपि भगवं तित्थगरस्स जम्मणमहिमं करेमित्तिकट्टु एवं संपेहेइ संपेहेत्ता हरिणेगमेसिं पायत्ताणिआहिवइं देवं सद्दावेइ सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ! सुहम्माए सभाए मेघोघरसिअ-गंभीरतरमहुरतरसद्दं जोअणपरिमंडलं सुघोषं सूसरं घंटं तिक्खुत्तो उल्लालेमाणे उल्लालेमाणे महया महया सद्देणं उग्घोसेमाणे उग्घोसेमाणे एव वयासी-आणवेइ णं भो! सक्के देविंदे देवराया। गच्छति णं भो! सक्के देविंदे देवराया जंबुद्दीवे दीवे भगवओ तित्थगरस्स जम्म-णमहिम करेत्तए। त तुब्भेवि णं देवाणुप्पिआ! सव्विड्ढीए सव्वजुतीए सव्वबलेण सव्व-समुदएण सव्वायरेण सव्वविभूतीए सव्वविभूसाए सव्वसंभमेण सव्वणाडएहिं सव्वावरोहेहिं सव्वपुप्फगंधमल्लालकारविभूसाए सव्वदिव्वतुडिअसद्दसण्णिणादेणं महया इड्ढीए जाव रवेणं णिअगपरिआलसंपरिवुडा सयाइं सयाइं जाणवाहणविमाणाइं दुरूढा समाणा अकालपरिहीणं चेव सक्कस्स जाव अंतिअं पाउब्भवह। तते णं से हरिणेगमेसी देवे पायत्ताणिआहिवई सक्केणं देविंदेणं देवरण्णा एवं वुत्ते समाणे हट्ठतुट्ठ जाव एवं देवोत्ति आणाए विणएणं वयणं पडि-सुणेति पडिसुणेत्ता सक्कस्स देविंदस्स देवरण्णो अंतिआओ पडिणिक्खमति पडिणिक्खमित्ता जेणेव सभाए सुहम्माए मेघोघरसिअगंभीरमहुरसद्दा जोअणपरिमंडला सुघोसा घंटा तेणेव उवागच्छति उवागच्छित्ता तं मेघोघरसिअगंभीरमहुरसद्दं जाव तिक्खुत्तो उल्लालेइ। तते ण तीए मेघोघरसिअगंभीरमहुरसद्दाए जोअणपरिमंडलाए सुघोसाए घंटाए तिक्खुत्तो उल्लालि-आए समाणीए सोहम्मे कप्पे अण्णेहिं एगूणेहिं बत्तीसाए विमाणवाससयसहस्सेहिं अण्णाइं एगूणाइं बत्तीसं घंटासयसहस्साइं जमगसमगं कणकणारवं काउं पयत्ताइंपि होत्था। तते णं सोहम्मे कप्पे पासादविमाणणिक्खुडावडिअसद्दसमुट्ठिअघंटापडिंसुआसयसहस्ससंकुले जाए आवि होत्था। तते णं तेसिं सोहम्मकप्पवासीण बहूणं वेमाणिआण य देवाण य देवीण य एगंतरतिपसत्तनिच्चप्पमत्तविसयसुहमुच्छिआणं सूसरघंटारसिअविउलबोलतुरिअचवलपडि-

घोहणे कए समाणे घोसणकोऊहलदिण्णकण्णएगग्गचित्तउवउत्तमाणसाणं से पायत्ताणि-आहिवई देवे तंसि घंटारवंसि णिसंतपडिसंतंसि समाणंसि तत्थ तत्थ तहिं तहिं देसे महया महया सद्देणं उग्घोसेमाणे उग्घोसेमाणे एवं वयासी-हंद! सुणंतु भवंतो बहवे सोहम्मकप्पवासी वेमाणिअदेवा देवीओ अ सोहम्मकप्पवईणो इणमो वयणं हिअसुहत्थं-आणवेइ णं भो! सक्के तं चेव अंतिअं पाउब्भवह। तते णं ते देवा य देवीओ अ एअमट्ठं सोच्चा हट्ठतुट्ठ जाव हिअया अप्पेगइआ वंदणवत्तिअं एवं पूअणवत्तिअं सक्कार० सम्माण० दंसण० कोऊ-हल्ल० अप्पे० सक्कस्स वयणमणुवत्तमाणा अप्पे० अण्णुण्णमणुवत्तमाणा अप्पे० जीअमेअं एवमादित्तिकट्टु जाव पाउब्भवंति। तते णं से सक्के देविंदे देवराया ते बहवे वेमाणिए देवे देवीओ अ अकालपरिहीणं चेव अंतिअं पाउब्भवमाणे पासति पासित्ता हट्ठ० पालयं णामं आभिओगिअं देवं सद्दावेति सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ! अणेगखंभ-सयसण्णिविट्ठं लीलट्ठिअसालभंजिआकलिअं ईहामिअउसभतुरगणरमगरविहगवालगकिंनररुरु-सरभचमरकुंजरवणलयपउमलयभत्तिचित्तं खंभुग्गयवइरवेइआपरिगयाभिरामं विज्जाहर-जमलजुअलजंतजुत्तंपिव अच्चीसहस्समालिणीयं रुअगसहस्सकलिअं भिसमाणं भिब्भिसमाणं चक्खुल्लोअणलेसं सुहफासं सस्सिरीअरूवं घंटावलिचलिअमहुरमणहरसरं सुहकंतदरिसणिज्जं निउणोविअमिसिमिसिंतमणिरयणघंटिआजालपरिक्खित्तं जोअणसयसहस्सविच्छिण्णं पंच जोअणसयमुच्चं सिग्घतुरिअजतिणणिव्वाहिं दिव्वं जाणविमाणं विउव्वाहि विउव्वित्ता एअमाणत्तिअं पच्चप्पिणाहि।

'ते ण काले णमि'त्यादि। तस्मिन् काले तस्मिन् समये शक्रस्यासनविशेषस्याधिष्ठाता शक्र देवानां मध्ये इन्दनात्—परमैश्वर्ययुक्तत्वाद्देवेन्द्र । देवेषु कान्त्यादिभिरधिक राजमानत्वात् देवराज । वज्र पाणावस्याऽसौ वज्रपाणि । असुरादिपुराणा दारणात् पुरन्दर । शत क्रतूना—कार्त्तिकश्रेष्ठिभवा-ऽपेक्षया अभिग्रहविशेषाणा पञ्चमप्रतिमारूपाणां वा यस्य सशतक्रतु । सहस्राक्ष —पञ्च मन्त्रिशता-नामक्ष्णामिन्द्रकार्यव्यापृतत्वात् । मघा देवा वशेऽस्येति मघवा । पाका—बलवन्तोऽरयो दानवविशेषा वा तान् शास्तीति पाकशासन । 'दाहिणड्ढ'त्ति । मेरोर्दक्षिणत सर्व्वस्यापि तदायत्तत्वात् दक्षिणार्द्धलोका-धिपति । 'बत्तीस'त्ति । द्वात्रिंशद्विमानशतसहस्राधिपति । ऐरावणो—गजरूप सुरो वाहन यस्य स तथा । सुराणामिन्द्र —आल्हाददायक । 'अरय'त्ति । अरजासि स्वच्छतयाऽम्बराणीवाऽऽकाश-कल्पानि वस्त्राणि धरतीति । तथा 'आलइअ'त्ति । आलगितौ—यथास्थाने निवेशितौ मालामुकुटौ यस्येति । नवहेमत्ति । नवाभ्यामिव-प्रत्यग्राभ्यामिव हेम्न सत्काभ्यां चारुभ्यां चित्राभ्यामाश्चर्यकृद्भ्या

चञ्चलाभ्यामितस्ततश्चलनपराभ्यां कुण्डलाभ्यां विलिख्यमानौ गण्डौ—कपोलौ यस्य स तथा । भासुरा—दीप्तिमती 'वरा—प्रधानाऽबोन्दी—वपुर्यस्य स तथा । प्रलम्बा—कण्ठपीठादारभ्य पादान्तयावलम्बिनी वनमाला-पञ्चवर्णपुष्पमाला भूषणविशेषो वा यस्य स तथा । 'महिड्ढीए' इत्यादि व्याख्यातार्थम् । अथोक्तस्वरूपः शक्रः सपरिवारो यत्रोपविशति तत्स्थानकमाह—'सोहम्मे'त्यादि । सौधर्म्मे कल्पे सौधर्म्मावतंसके विमाने तत्रैव सपरिकरस्य शक्रस्य निवासात् तत्रापि सभायां सुधर्म्मायां तत्रापि शक्रे—शक्रनाम्नि सिंहासने 'से णं तत्थे'त्यादि । स शक्रो णमित्यलङ्कारे तत्रोक्तनाम्नि सिंहासने उपविष्ट इति गम्यं । 'बत्तीसाए'त्ति । द्वात्रिंशतो विमानशतसहस्राणां चतुरशीतेः सामानिकसहस्राणां-तत्र समानया इन्द्रतुल्यया शक्त्याऽऽयुर्लक्षणया ऋद्ध्या चरन्तीति सामानिकाः यद्वा—समाने द्युतिविभवादौ भवाः सामानिकाः । ते च मातृपितृगुरूपाध्यायमहत्तरवत् शक्रस्य पूजनीयास्तेषां सहस्राणि तेषां पूर्व्वसकारस्य दीर्घत्वं स्त्रीत्वं च प्राकृतत्वात् । त्रयस्त्रिंशतस्त्रायस्त्रिंशानां पूज्यस्थानीयानां मन्त्रिकल्पानां चतुर्णां लोकपालानां-सोमयमवरुणकुबेराणाम् । अष्टानामग्रमहिषीणां शिवा-शची-अञ्जूप्रभृतीनां सपरिवाराणां-निजनिजपरिवारसहितानां । तिसृणां पर्षदामभ्यन्तरमध्यमबाह्यसञ्ज्ञानां प्रागुक्तस्वरूपाणां । 'सत्तण्ह'ति । 'सप्तानामनीकानाम्—अनिकानि च हस्त्यश्वरथपदातिवृषभनर्त्तकगायनजनरूपाणि । तेषां मध्ये आद्यानि पञ्चानीकानि सङ्ग्रामाय गन्धर्व्वनाट्यानीके तूपभोगाय, अनीकान्यपि स्वस्वाधिपतिरहितानि सम्यक् प्रयोजनोपयोगीनि न स्युरतः सप्तानामनीकाधिपतीनां चतुर्णां चतुरशीतेश्चतुरशीतिसङ्ख्यया चतुर्गुणानामित्यर्थः । आत्मरक्षकदेवसहस्राणां षट्त्रिंशत्सहस्राधिकानां लक्षत्रयाणामित्यर्थः । तत्रशक्रस्याऽऽत्मानं रक्षन्तीत्यात्मरक्षकाः गृहीतधनुर्द्दण्डादिप्रहरणाः सप्तानीकाधिपतीनामग्रतःपार्श्वस्थायिनः शक्रस्य प्राणरक्षकाः । एते च निजपरिवारभूता देवा देव्यश्च नियतसङ्ख्यापुरस्कारेणादर्शिताः. अथ च ये तस्मिन् सौधर्म्मे कल्पे पौरजनजानपदस्थानीया ये चाभियोग्यदासकल्पा अतिभूयासस्तान् विविच्य वक्तुमशक्यत्वात्समुदायेनाह—'अण्णेसिं चे'त्यादि । अन्येषामुक्तशेषाणां चकारः पूर्व्वाऽपेक्षया-समुच्चयवाची बहूनां सौधर्म्मकल्पवासिनां देवानां देवीनां च ये चात्र परिवारमात्रग्रहणमिच्छन्ति । तेषां मतमाह-'अण्णे पढंति'त्ति । अ ये आचार्याः पठन्ति—इह सूत्रपाठमेवं वदन्तीत्यर्थः । कथम् ? इत्याह-'अण्णेसिं चे'त्यादि । अन्येषां च बहूनां देवानां देवीनां च । किं लक्षणानाम् ? 'आभिओग'त्ति । आभियोगोपपन्नकानाम्—आभियोग्यतयोत्पन्नानाम् एतस्मिन् पक्षे पौरादिस्थानीयानां सेवकत्वं न भवतीत्यावेदितं द्रष्टव्यम् । 'आहेवच्चमि'त्यादि । अधिपतेः कर्म्म आधिपत्यं रक्षेत्यर्थः । एतच्च सामान्यत आरक्षकमात्रेणापि क्रियन्तेऽत आह—'पुरेवच्च'ति । पुरोऽग्रतो वर्त्तितुशीलः पुरोवर्त्ती तस्य कर्म्म पौरोवर्त्यं—सर्व्वेषामग्रेसरत्वम् । एतच्च स्वामित्वमन्तरेणापि नायकनियुक्तगृहचिन्तकनरवत्स्यादत आह—'सामित्त'ति । स्वामित्वं-नायकत्वं । तच्च पोषकत्वं विनापि मृगयूथाधिपतेरिव भवेदत आह—'भट्टित्त'ति । भर्तृत्वं—पोषकत्वम् । एतच्च किञ्चिदाधिक्येऽपि स्यादत आह-'महत्तरगत्त'ति । अतिशयेन महान् महत्तरः स एव महत्तरकस्तस्य भावो महत्तरकत्वम् । एतदाज्ञाविकलस्यापि स्वदासदासीवर्गं प्रति वणिज इव स्यादत आह—'आणाईसरसेणावच्च'ति । आज्ञया ईश्वर आज्ञेश्वरः सेनायाः पतिः

सेनापतिस्तस्य कर्म्म आज्ञेश्वरसेनापत्यं स्वसैन्यं प्रत्यद्भुताऽऽज्ञाप्राधान्यमित्यर्थः । अनेन सुभट-विषयाऽऽज्ञाया. प्राधान्यं सूचितं । 'कारेमाणे'त्ति । कारयन् नियुक्तैरिति गम्यम् । आत्मनोऽधिपतित्व-स्यापकव्यापाराभिमुखान् देवान् देवीश्च तदनुकूलप्रवृत्त्यादिना प्रयुञ्जान इत्यर्थः । तथा 'पालेमाणे' त्ति । पालयन्–स्वयमेव स्वस्याधिपत्याधिसमूचकाना सिंहासनादीनामुपभोगं कुर्व्वन्नित्यर्थः । ननु मनुष्याणामिव देवानां पराधीनाऽऽजीविकाया अभावात् यत्पोषकत्वमुक्तं तदयुक्तम् ? इति चेत् । मैव, यतो यथौचित्येन स्थानासनप्रदानादिना तेषामपि पोषकत्वं प्रतीतमेव । अत एव जिनजन्मोत्सवादौ विकुर्व्वितेऽपि पालकनाम्नि विमाने यथौचित्येन भद्रासनाद्यनुज्ञानं सामानिकस्यादि सङ्गमकामरस्य निजविमानाद्बहिःकरणं चेति । ननु इन्द्रसमानर्द्धिकाना सामानिकाना विमानानि पृथगेव भवन्ति । यदुक्तं भगवती तृतीयशतकप्रथमोद्देशके तिष्यकस्यानगारस्य सम्बन्धे–'सोहम्मे कप्पे सयंसि विमाणंसि'त्ति । तत कथमुक्तं सङ्गमकामरस्य विमानाद्बहिःकरणम् ? इति चेत् । मैव, यतः तत्र 'सयंसि विमाणंसि'त्ति सूत्रेण एकस्मिन्नेव निजस्वामिनो विमाने यस्य देवादेर्यावान् प्रदेशो विमानैकदेशभूत स्वातन्त्र्येण स्वस्वप्रभुतादिनियत तस्य तावान् स प्रदेशो निजनिजविमानतया भण्यते । अत एव काल्यादिदेव्याश्चमर-चञ्चा राजधान्या एकदेशोऽपि निजभवनतया भणित । एवं चन्द्रप्रभा–सूर्यप्रभादिदेवीनामपि चन्द्रादि-विमानैकदेशोऽपि निजनामैकदेशोपलक्षितो विमानतया भणित. । ननु अग्रमहिषीणा देवीप्रधानत्वा-त्पृथक् पृथक् भवनविमानाऽभ्युपगमे किं बाधकम् ? इति चेत् । उच्यते असम्भव एव बाधक । यतः प्रवचने अपरिगृहीतदेवीनामेव पृथक् पृथक् विमानानि भणितानि । यदुक्तम्–'अपरिग्गहदेवीण विमाण-लक्खा छ हु ति सोहम्मे' इत्यादि । तथा 'ईसाणे चउलक्खा' इत्यादि । न चैव क्वापि परिगृहीतदेवी-नामेतावन्ति विमानानि भवन्तीति भणित । तेनाग्रमहिषीणामिव सामानिकादिदेवानामपि निजनिज-स्वामिविमान एवोपपातस्थित्याद्यवसेय । न पुनरन्यत्र । एवं सामानिकादिदेवानामपि ये परिवारभूता देवा देव्यश्च तेषामप्युपपातस्थित्यादि निजनिजस्वामिनो विमानत्वेनाभिमते विमानैकदेश एवावसा-तव्यम् । अन्यथा परिवारस्य दूरावस्थानेन परिवाराऽपरिवारयोरविशेषापत्ते । किञ्च-सामानिकाना महर्द्धिकत्वात्पृथक्विमानाधिपतित्वकल्पनमपि न सङ्गच्छते । उपरितनदेवलोकेषु सहस्रारादिषु सामा-निकदेवाऽपेक्षया विमानानामल्पसङ्ख्याकत्वात् । यत सहस्रारे षट् सहस्राणि विमानानि सामानिकास्तु त्रिंशत्सहस्रा', आनतप्राणतयो. समुदितयोश्चत्वारि शतानि विमानानि सामानिकास्तु विंशतिसहस्रा, आरणाऽच्युतयो. समुदितयोस्त्रीणि शतानि विमानानि सामानिकास्तु दश सहस्रा इत्यादि । 'छच्च सहस्सा सहस्सारे' इत्यादिना सूत्रेणाऽग्रे वक्ष्यते । अत एव शक्रपरिकरभूता. सामानिकादयो निजनिजपरिकरस-मन्विता अपि जिनजन्मोत्सवादौ शक्राऽऽगमननिमित्तं निर्म्मापितपालकविमानमारूढा एवेह समायान्ति शक्रेण सहैकविमानवासित्वात् । न पुनरितरविमानवासिन इव पृथक् यानवाहनाद्यारूढा । नन्वेकस्मिन्नेव विमाने सामानिकादयो महर्द्धिका देवा. कया स्थित्या तिष्ठन्ति ? इति चेत् । उच्यते–देशकल्पे देवलोके ग्रामनगरादिकल्पेषु विमानेषु महर्द्धिकाना देवाना निवासभूमयो हि पाटककल्पा अवसातव्या । तत्रापि विमानाधिपतेर्नरपतेरिव यथोचितमध्यभागे निवासभूमिः । तत्परिकरस्य तु 'तस्स ण सीहा-

सणररो'त्यादि वक्ष्यमाणपालकविमानस्थित्यनुसारेण निवासभूमयोऽपि सम्भाव्यन्ते । शेषाणा यथा-सम्भव निवासभूमयोऽवसातव्या: । केचित्तु पृथिवीकल्पे देवलोके देशकल्पेषु विमानेषु ग्रामनगरादि-कल्पा महर्द्धिकाना निवासभूमय' । उभयोरपि युक्तियुक्तत्वेन एकतरनिर्णयो बहुश्रुतगम्य । एतेन ज्योतिष्कविमानानीव देवलोकविमानान्यपि पृथक् पृथक् स्थितानि सान्तराणि भविष्यन्तीति शङ्कापि व्युदस्ता । तथात्वे च 'सोहम्मस्स कप्पररा मज्झमज्झेण त दिव्व देवड्ढि जाव उवदसेमाणे उवदसेमाणे जेणेव सोहम्मस्स कप्पस्स उत्तरिल्ले णिज्जाणमग्गे तेणेव उवागच्छति'इत्यादि वक्ष्यमाणसूत्रानुपपत्ति स्यात् । नहि सान्तरेषु विमानेषु देवलोकमध्येन गमन उत्तराहेण मार्गेणावतरण च सगवति । सर्वतो मार्गस्य विद्यमानत्वादित्यल विस्तरेण । अथैव कारयन् पालयश्च शक्र कथमास्ते ? इत्याह—'महया-हये'त्यादि । महता रवेणेति सम्बन्ध । अहतनृत्येत्यादि प्राग्वत् । यावद्दिव्यान् भोगभोगान् भुञ्जानो विहरतीति । 'तते णमि'त्यादि । तत षट्पञ्चाशद्दिक्कुमारीकर्त्तव्यकृतेरनन्तर तस्य शक्रस्य देवेन्द्रस्य देवराजस्याऽऽसन चलति । तत स शक्रो यावदासन चलित पश्यति दृष्ट्वा चावधि प्रयुङ्क्ते प्रयुज्य च भगवन्त तीर्थकरमवधिना आभोगयति—परिभावयति पश्यतीत्यर्थ । जातमिति शेष । आभोग्य 'हट्ठ-तुट्ठे'त्यादि । हृष्टतुष्टमतीव तुष्ट । यद्वा-हृष्ट—विस्मयमापन्न यथाऽहो ! भगवान् जात इति । तुष्ट—तोपवत् यथा भव्यमभूद्यन्मया भगवानालोकित इति । एवविध चित्त यस्य स तथा आनन्दितो—हर्षं प्राप्त , नन्दित —समृद्धिमुपागत , प्रीतिर्मनसि यस्य स प्रीतिमना' भगवति बहुमानपरायणमना इति भाव । तत क्रमेण बहुमानोत्कर्षवशात् 'परमसोमणस्सिए'त्ति । शोभन मनो यस्य स सुमनास्तस्य भाव सौमनस्य परम च तत्सौमनस्य च परमसौमनस्यं तत्सञ्जातमस्येति परमसौमनस्यित । अत एवाह—'हरिस'त्ति । हर्षवशेन विसर्प्पद्विस्तारस्थायि हृदय यस्य स हर्षवशविसर्प्पद्हृदय. । 'धाराहय'त्ति । धाराहत यत्कदम्बकस्य नीपस्य सुरभिकुसुम तदिव चचुमालइअ'त्ति । पुलकित । अत एव 'ऊसविअ' त्ति । उच्छ्रितरोमकूप 'विअसिअ'त्ति । विकसितानि भूतलावतरणोद्भूतप्रमोदादुत्फुल्लानि वरकमलव-दानन नयने च यस्य स तथा । 'पयलिअ'त्ति । प्रचलितानि भगवद्गर्भोत्पत्तिदर्शनजनितसम्भ्रमातिरे-कात् कम्पितानि वराणि—प्रधानानि कटकानि च कङ्कणानि त्रुटिताश्च-बाहुरक्षका केयूराणि—चाङ्गदानि बाहुमूलभूषणानि मुकुट—च मौलिभूषण कुण्डले च कर्णाभरणे यस्य स तथा । हारेण विरा-जमानेन रचित—शोभित वक्षो यस्य स तथा । तत कर्म्मधारय । 'पालव'त्ति । प्रालम्बो झुम्बनक मुक्तामय प्रलम्बमानं घोलच्च—दोलायमान यद्भूषणमाभरण तद्धारयति य स तथा । ससम्भ्रम हर्ष-वशादेव विवक्षितक्रियाया बहुमानपूर्व्विका प्रवृत्ति सम्भ्रमस्तेन सह यथा स्यात्तथेति क्रियाविशेषण । त्वरित-शीघ्र चपल सम्भ्रमवशादेव व्याकुलता यथा स्यात् सुरेन्द्र' सिंहासनादभ्युत्तिष्ठति । अभ्युत्थाय च 'वेरुलिअ'त्ति । वैडूर्येण मध्यवर्तिना वरिष्ठे—प्रधाने रिष्टाञ्जने-रत्नविशेषौ ययोस्ते तथा निपुणेन—कुशलेन शिल्पिना 'ओअविअ'त्ति । परिकर्म्मिते । अत एव 'मिसिमिसित'त्ति । चिकचिकायमाने मणि-भिश्चन्द्रकान्तादिभि रत्नैश्च-कर्केतनादिभि मण्डिते ये ते तथा । तत पदचतुष्टयस्य कर्म्मधारय । एवंविधे पादुके अवमुञ्चति अवमुच्य च 'एगसाडिअ'ति । एकशाटिकमखण्डैकशाटकमयमुत्तरासङ्ग करोति

कृत्वा च अञ्जलिनाऽञ्जलिकरणतो मुकुलितौ—मुकुलीकृतावग्रहस्तौ येन स तथा । तीर्थकराभिमुखः सप्ताष्टपदान्यनुगच्छति अनुगम्य च वामं जानु 'अचेइ'त्ति । आकुञ्चयति-उत्पाटयति दक्षिणं जानु धरणीतले निहृत्य निवेश्येत्यर्थः त्रि कृत्वस्त्रीन् वारान् मूर्द्धानं—मस्तकं धरणीतले निपातयति-लगयतीत्यर्थः । निपात्य च ईषत्-मनाग् प्रत्युन्नमयति—अवनतत्वं मुञ्चति प्रत्युन्नम्य च कटकत्रुटितस्तम्भितौ भुजौ संहरति सङ्कोचयति संहृत्य करतलपरिगृहीतं शिरस्याऽऽवर्त्तं मस्तकेऽञ्जलिं कृत्वा एवमवादीत् । 'नमोत्थुं णमि'त्यादि । नमोऽस्त्ववति सर्वत्र सम्बध्यते सर्वत्र णंकारो वाक्यालङ्कारे चतुर्थ्यर्थे षष्ठी च प्राकृतत्वात् । ततोऽर्हन्ति-शक्रादिकृतां पूजामित्यर्हन्तस्तेभ्यो नम इति बहुवचनमद्वैतोच्छेदेन बहुत्वख्यापनार्थं । तथा कर्मारिहननात् 'अरिहंताण' । रुह जन्मनीति धातो कर्मबीजाभावे भवेऽप्ररोहाद् 'अरुहताणमि'ति पाठत्रयम् । अथ नामादिचतुर्विधानप्यर्हत सामान्यतो नमस्कृत्य विशेषतो भावार्हतः पृथग् नमस्कर्तुमाह—'भगवंताणमि'ति ।

भगोऽर्कज्ञानमाहात्म्ययशोवैराग्यमुक्तिषु । रूपवीर्यप्रयत्नेच्छा श्रीधर्मैश्वर्ययोनिषु ॥ १ ॥
इत्यर्कयोनिवर्ज द्वादशार्थभगयुक्तेभ्य । तत्र यशस्वी शाश्वतवैरिणामहिमयूरादीना वैरोपशमनात् । वैराग्यवान् ।

यदा मरुन्नरेन्द्रश्रीस्त्वया नाथोपयुज्यते । यत्र तत्र रतिर्नाम विरक्तत्व तदाऽपि ते' ॥१॥ इत्युक्ते । वीर्यवान् अपरिमितबलत्वात् । प्रयत्नस्तप कर्मादावुत्साह । इच्छा—भवाज्जन्तूनामुद्दिधीर्षा । श्रीश्चतुस्त्रिंशदतिशयरूपा । ऐश्वर्यमनेकेन्द्रादिदेवकोटिसेव्यत्व । ज्ञानमाहात्म्यमुक्तिरूपधर्मवत्त्व प्रतीतमेव । 'आदिगराणमि'त्यादि आदिकरेभ्य -श्रुतधर्मस्यार्थाऽपेक्षया नित्यत्वेऽपि शब्दाऽपेक्षया स्वस्वतीर्थेष्वादिकरणात् । तीर्थकरेभ्यस्तीर्थं—सङ्घ आद्यगणधरो वा तत्करणात् । स्वय सम्बुद्धेभ्य स्वयमेव—परोपदेश विनैव सम्यक्तत्त्वावबोधात् । कुत एव ? यत —पुरूषोत्तमेभ्य —भगवन्तः संसारेऽपि वसन्त सन्त सदा परार्थकृतो गौणीभूतस्वार्था उचितक्रियोपेता अदैन्या कृतज्ञा देवगुरुमहामानिनो गम्भीराशया इत्यादिगुणगणान्वितत्वात् । उत्तमत्वमेवोपमात्रयेणाह—पुरुषसिंहेभ्य —पुरुषा सन्त सिंहा इव कर्मारिष्वतिक्रूरत्वात् परीषहेषु सावज्ञत्वात्, उपसर्गेभ्यो निर्भयत्वाच्च, पुरुषसिंहास्तेभ्य । पुरुषवरपुण्डरीकेभ्य — पुण्डरीकाणि च धवलकमलानि वराणि च तानि पुण्डरीकाणि च वरपुण्डरीकाणि पुरुषा वरपुण्डरीकाणीव पुरुषवरपुण्डरीकाणि तेभ्यो धवलकमलसदृशाश्च भगवन्त कर्मपङ्के सम्भूता अपि दिव्यभोगजलेन वर्द्धितास्त्यक्त्वा चोभय जगल्लक्ष्मीनिवासास्तिर्यग्नरामरसेव्याश्च पुण्डरीकवद्वर्द्धन्त धवलता चामीषां सदाऽशुभमलरहितत्वादिति । एव पुरुषवरगन्धहस्तिभ्य—ईतिमारिदुर्भिक्षपरचक्रादिक्षुद्रगजाना भगवद्विहारपवनगन्धादेव भङ्गात् । न चामी पुरुषाणामेवोत्तमा किन्तु सकलजीवलोकस्यापीत्यत आह—लोकोत्तमेभ्य —लोकस्य भव्यसङ्घातस्योत्तमाश्चतुस्त्रिंशदतिशयोपेतत्वात् । लोकोत्तमत्वमेवाह—लोकनाथेभ्यः— लोकस्य भव्यलोकस्य नाथा-योगक्षेमकारिण । तत्राऽप्राप्तस्य सम्यग्दर्शनादेर्लम्भकत्वाद्योगकारित्व तस्यैव च प्राप्तस्य तत्तदुपद्रवाऽभावापादनेन पालकत्वात् क्षेमकारित्वमिति तेभ्य । तात्त्विकं च

नाथत्वं कथम् ? इत्याह—लोकहितेभ्यः—लोकस्यैकेन्द्रियादिप्राणिगणस्य पञ्चास्तिकायात्मकस्य वा तद्रक्षणरूपोपदेशेन सम्यक् प्ररूपणतश्च हिता-अनुकूलवृत्तयस्तेभ्यः । नाथत्वं च भव्यानां यथा-ऽवस्थितवस्तुप्रदीपनेन स्यादित्याह—लोकप्रदीपेभ्यः—लोकस्य देशनायोग्यस्य विशिष्टतिर्यग्नरामररूपस्योपदेशप्रभाभिर्मिथ्यात्वध्वान्तविध्वंसनेन पदार्थसार्थप्रकृष्टप्रकाशकत्वात् प्रदीपा इव प्रदीपा इति तेभ्यः । लोकप्रद्योतकरेभ्यः—लोकस्य लोकालोकरूपस्य समस्तवस्त्वात्मकस्य केवलाऽऽलोकपूर्वकप्रवचन-मरीचिमण्डलप्रवर्तनेन प्रद्योत-प्रकाशं कुर्वन्तीत्येवं शीलाः । यद्वा—लोकस्योत्कृष्टमतेर्गणधरादिभव्य-सत्त्वस्य प्रद्योत-विशिष्टज्ञानशक्तिं तत्क्षणद्वादशाङ्गीविरचनानुमेयां कुर्वन्तीति लोकप्रद्योतकरास्तेभ्यः । अनयोश्च पूर्वोक्तयोर्द्वयोर्विशेषणयोर्दृष्टदृश्यलोककृतो भेद इति । अभयदयेभ्यः—सप्त भयहरणादभयं दयन्ते इत्यभयदाः । सप्त भयस्थानानि त्विमानि—

'इहपरलोगादाणमकम्हा आजीविमरणमसिलोगा । सत्त भयठाणाइ जिणेहिं सिद्धंतभणिआइं ॥१॥ अथवा—प्राणान्तिकोपसर्गकारिष्वपि न भयं दयन्ते । अथवा अभया-सर्वप्राणिभयत्यागवती दया-कृपा येषां ते तथा तेभ्यः । अथ च यथाऽनर्थत्यागकारिणोऽमी तथाऽर्थप्रापका अपीत्याह—चक्षुर्दयेभ्यः—चक्षुरिव चक्षुः—शुभाऽशुभार्थविभागोपदर्शकत्वात् श्रुतज्ञानम् । यद्वा-श्रद्धास्वभावस्तत्त्वाववोधनिबन्धनं विशिष्टं आत्मधर्मं श्रद्धाविहीनस्याऽचक्षुष्मत इव तद्रूपतत्त्वदर्शनाऽयोगात् तद्दयन्त इति चक्षुर्दयास्तेभ्यः । यथाहि-किल लोके, कान्तारगतानां चौरैश्चक्षुर्बद्ध्वा विलुप्तधनानां जनानां कश्चित् चक्षुर्दत्त्वेप्सितमार्गप्रदर्शने-नोपकारी स्यादेवमेतेऽपि भगवन्तः संसारकान्तारान्तर्गतानां कुवासनया सज्ज्ञानचक्षुराच्छाद्य रागादि-चौरैर्विलुप्तधर्मधनानां श्रुतचक्षुर्दत्त्वा निर्वाणमार्गं प्रापयन्त उपकारिणो भवेयुरिति दर्शयन्नाह—मार्ग-दयेभ्यः—मार्गं—सम्यग्दर्शनादिकं मुक्तिपथं दयन्ते इति मार्गदयास्तेभ्यः । जीवाभिगमवृत्तौ तु मार्गो-विशिष्टगुणस्थानावाप्तिप्रगुणः स्वरसवाही क्षयोपशमविशेषस्तं दयन्त इति । अथ यथा चक्षुरुद्घाट्य दर्शयित्वा च मार्गं तान्निरुपद्रवमास्पदं प्रापयन् परमोपकारी स्यादेवमेतेऽपीत्याह—शरणदयेभ्यः । शरणं त्राणं नानाविधोपद्रवोपद्रुतानां रक्षास्पदं निर्वाणरूपं तद्दयन्त इति शरणदयास्तेभ्यः । यथाहि—लोके चक्षुरादिदानाद्दुःस्थानां जीवितदः इत्यभिधीयते तथैतेऽपीत्याह-जीवदयेभ्यः जीवनं जीवो भावप्राणधारण-मरणं तद्दयन्त इति । यद्वा—जीवेषु दया येषामिति जीवदयास्तेभ्यः । बोधिदयेभ्यः—बोधिस्तत्त्वार्थरुचि-रूपा जिनोक्तधर्मप्राप्तिस्तां दयन्त इति बोधिदयास्तेभ्यः । अनन्तरोक्तविशेषणकदम्बकं च भगवतां धर्मात्मकतया सम्पन्नमित्येतदेवाह-धर्मदयेभ्यः—धर्मं देशसर्वचारित्ररूपं दयन्त इति धर्मदयास्तेभ्यः । यथा च-धर्मदयत्वं तथाह—धर्मदेशकेभ्यः धर्मं पूर्वोक्तप्रकारं यथा भव्यमवन्ध्यदेशनातो देशयन्तीति धर्मदेशकास्तेभ्यः । धर्मदेशकत्वं चैतेषां धर्मस्वामित्वे सति न पुनर्नटवदिति दर्शयन्नाह—धर्मनायकेभ्यः—धर्मस्य क्षायिकज्ञानादेस्तद्वशीकारात्तत्फलप्रकर्षपरिभोगाच्च नायकास्तेभ्यः । धर्मसारथिभ्यः—धर्मरथस्य सारथय इव । यथा च किल सारथी रथं रथिकमश्वांश्च सम्यक् प्रवर्त्तयति रक्षति च एवं भगवन्तोऽपि संयमात्मप्रवचनाख्यानां चारित्रधर्माङ्गानां रक्षोपदेशनादिना धर्मसारथयः स्युरिति । धर्मवरचातुरन्तचक्रवर्त्तिभ्यः । त्रयः समुद्राश्चतुर्थो हिमवानिति चत्वारः क्षितेरन्तास्तेषु प्रभुतया भवा

इति चातुरन्तास्ते च ते चक्रवर्त्तिनश्च चातुरन्तचक्रवर्त्तिन । धर्म्मेषु वरा -श्रेष्ठास्तेषु चातुरन्तचक्रवर्त्तिन इव धर्म्मवरचातुरन्तचक्रवर्त्तिन । यथाहि-पृथिव्या शेषराजातिशायिनश्चातुरन्तचक्रवर्त्तिनो भवन्त्येव भगवन्तोऽपि धर्म्मवरेषु शेषप्रणेतृषु सातिशया उच्यन्त इति तेभ्य । यद्वा-अन्यकुतीर्थिकाऽपेक्षया धर्म्मवरेण नरकादिचतुर्गत्यन्तकरणाच्चतुरन्तेन मिथ्यात्व दिरिपुच्छेदकत्वाच्चक्रेणे वर्त्तितु शील येषा ते तथा तेभ्य । 'दीवो ताणमि'त्यादि । अत्र च प्रथमैकवचन चतुर्थ्यर्थे योज्य । तत्र दीप समस्तार्थ-प्रकाशकत्वाद्दीप इव दु स्थितस्य ससारसागरान्तर्वर्त्तिप्राणिगणस्याऽऽश्वासहेतुत्वाद् द्वीप इव वा । अनर्थप्रतिहननहेतुत्वात् त्राणम् । अर्थसम्पादनहेतुत्वाच्च शरण । गम्यते-सुस्थितत्यर्थं दु स्थितं राश्रीयत इति गति । प्रतिष्ठन्त्यस्यामिति प्रतिष्ठा-ससारगर्त्ता तत्प्राणिगणस्याधार इति । ततो दीपेभ्य इत्यादि । अप्रतिहतवरज्ञानदर्शनधरेभ्य । अप्रतिहते कटकुटचादिभिर्वरे क्षायिके ज्ञानदर्शने विशेषसामान्यावबोधरूपे धरतीति तेभ्य । ईदृश ज्ञानदर्शनधारित्वमावरणाऽभावात्सम्पद्यत इत्याह-व्यावृत्तछद्मभ्य. । व्यावृत्त छद्म-घातिकर्म्माणि ससारो वा येभ्य इति तेभ्यः । तदभावस्तु रागादिजयादित्याह-जिनेभ्यो-रागादिजेतृभ्यो रागादिजयश्च तज्जयोपायज्ञानपूर्वक एवेत्यत आह-ज्ञायकेभ्यो । जानन्तीति ज्ञायकास्तेभ्य यद्वा-अन्यभव्यसत्त्वै रागादीन् मदुपदेशदानादिना जापयन्तीति जापकास्तेभ्य । अत एव तीर्णेभ्यो भवार्णव ज्ञानादिपोतेन तारकेभ्योऽन्यानप्युपदेशवर्त्तिन । अज्ञाननिद्राप्रसुप्ते जगति स्वसविदितज्ञानेन जीवादितत्त्व बुद्ध्यन्ते रगेति बुद्धास्तेभ्य । अन्यानपि बोधयन्तीति बोधकास्तेभ्य । बाह्याऽभ्यन्तरपरिग्रहबन्धनात्कर्म्मबन्धनाद्वा मुक्ता इति तेभ्य । अन्यानपि तद्द्वयान्मोचयितृभ्य एतानि विशेषणानि भवावस्थामाश्रित्योक्तानि । अथ सिद्धावस्थामाश्रित्योच्यन्ते—सर्वज्ञेभ्यो-जीवस्वाभाव्यात्सर्व-वस्तुजात प्रधानविशेष गौणीकृतसामान्य च केवलज्ञानेन जानन्तीति सर्वज्ञास्तेभ्य । सामान्यप्रधान गौणोकृतविशेष च सर्वं केवलदर्शनेन पश्यन्तीति सर्वदर्शिनस्तेभ्य । प्रथम सर्वज्ञेभ्य इति विशेषण च केवलिनामाद्यसमये ज्ञान द्वितीयसमये च दर्शनमिति सूचनार्थम् उभयमपि च वस्तुविषयी कुर्वद्वस्तुनिरपेक्षमेव केवलिना । छद्मस्थाना तु उभय सापेक्ष च क्रमोऽपि प्रथम दर्शन पश्चाद्ज्ञानमिति प्रसङ्गाद् बोध्यमिति । 'सिवमयले'त्यादि । शिव—निरुपद्रवम्, अचल स्वाभाविकप्रायोगिक चलनाभावात्, अरुजमाधिव्याध्यभावात्, अनन्तमनन्तार्थविषयकज्ञानमयत्वात्, अक्षयमनाश साद्यनन्तत्वात्, अक्षत वा-परिपूर्णत्वात्, अव्याबाध-परेषा पीडाकारित्वाऽभावात् अपुनरावृत्ति -पुनर्भवेऽनवतारात् सिद्धिर्लोकान्त-क्षेत्ररूपा सा चासौ गतिश्च सैव नामधेयमभिधा यस्य ईदृश स्थान व्यवहारत सिद्धिक्षेत्र निश्चयतो यथावस्थितमात्मस्वरूप सम्यग् अशेषकर्म्मविच्युते प्राप्ता —सम्प्राप्तास्तेभ्य । जीवस्वरूपविशेषाण्यपीमानि उपचाराल्लोकाग्रे ज्ञेयानि। आद्यन्तकृतो नमस्कारो मध्यव्यापीत्यतोऽन्ते नमो जिनेभ्य इत्युक्तम्। एवं सर्वान् सामान्यतो भावार्हत स्तुत्वा तत्कालोत्पन्नाधिकृतजिनस्तुत्यर्थमाह—'नमोत्थु ण भगवतो तित्थगरस्से'त्यादि प्राग्वत् । जाव सपाविउकामस्स'त्ति । यावत्करणात् 'सयसबुद्धस्स'इत्यादि 'सिद्धिगइनामधेज्जं ठाण सपत्ताणमि'त्यन्त दृश्य । यद्यपि भगवत सर्वत्र निःस्पृहत्वात्सिद्धिगतौ कामो नास्ति तथाऽपि तदनुरूपचेष्टनात्सम्प्राप्तुकाम इव तस्याऽप्राप्तस्येत्यर्थ । अथ भगवत स्वस्य चातिशयज्ञान-

वत्र सूचयन्नेवात्मनो भक्तेरुत्कर्षं दर्शयति—'वंदामि णमि'त्यादि । वन्देऽहं भगवन्तं तत्र-जन्मभवने गतं इह-सौधर्म्मदेवलोके गतोऽहं पश्यतु 'मे'त्ति । प्राकृतत्वाद् द्वितीयार्थे षष्ठीतिकृत्वा मां भगवान् तत्रगत इहगतमितिकृत्वेनिवागोचरीकृत्य वन्दते-वाचा स्तौति, नमस्यति कायेन मनसा च, वन्दित्वानमस्यित्वा सिंहासनवरे पूर्वाभिमुखः सन्निषण्णः । 'तए णं तस्से'त्यादि । ततो निषदनानन्तरं तस्य देवेन्द्रस्य देवराजस्यायमेतद्रूपो वक्ष्यमाणस्वरूपो यावत्सङ्कल्पः समुदपद्यत यावत् करणात् 'अब्भत्थिए चिंतिए पत्थिए य'। अथ किं स्वरूपः सङ्कल्पः ? इत्याह—'उप्पण्णे खलु' इत्यादि । उत्पन्नो—जातः खलुरवधारणे भोशब्दोऽलङ्कारे जम्बूद्वीपे द्वीपे भगवांस्तीर्थकरः तदेतज्जीतं—कल्पः । केषाम् ? इत्याह—'तीअप्पुप्पण्ण'त्ति । अतीतवर्त्तमानानागताना शक्राणामित्यादि यावत् सम्प्रेक्ष्य-आत्मबुद्ध्या परिभाव्य 'हरिणेगमेसिं'ति । हरेरिन्द्रस्य नैगममादेशमिच्छतीति हरिनैगमेषी । केचित्तु-हरेरिन्द्रस्य नैगमेषीनामा देवं तं पदात्यनीकाधिपतिं शब्दापयति-आकारयति शब्दापयित्वा एवं वक्ष्यमाणमवादीत् तत्पुरस्तादिति गम्यं । किं तद् ? इत्याह-'खिप्पामेवे'त्यादि । क्षिप्रमेव भो देवानुप्रिया ! सुधर्म्मायां सभायां मेघानामोघो मेघसमूहस्तस्य रसितं—गर्ज्जितं तदपेक्षया गम्भीरतरो अतिशयेन गम्भीरो मधुरतरश्चातिमधुरः शब्दो यस्याः सा तथा तां । योजनपरिमण्डलां-योजनप्रमाणपारिमाण्डल्ययुतां सुघोषां सुघोषानाम्नी सुस्वरां-शोभनस्वरां घण्टां त्रीन् वारान् उल्लालयन् ताडयन् ताडयन् महता महता शब्देनोद्घोषयन् एवमवादीरिति । आर्षत्वादद्यतन्यपि पञ्चम्यर्थे व्याख्येया । तेनैव वद-सर्व्वेषां सुराणां पुरस्तादेव कथय । कथम् ? इत्याह-'आणवेइ'त्ति । आज्ञापयति भो ! शक्रो देवेन्द्रो देवराजः यथा गच्छति भो ! शक्रो देवेन्द्रो देवेराजो जम्बूद्वीपे द्वीपे भगवतस्तीर्थकरस्य जन्ममहिमां कर्त्तुं ततस्मात् 'तुब्भेवि णमि'ति । यूयमपि णमिति प्राग्वत् । देवानुप्रिया ! सर्व्वद्धर्या परिवारादिकया, सर्व्वद्युत्या—यथाशक्तिविस्फारितेन समस्तेन तेजसा, सर्व्वबलेन-समस्तहस्त्यादिसैन्येन, सर्व्वसमुदयेन-स्वस्वाभियोगादिसमस्तपरिवारेण, सर्व्वादरेण समस्तयावच्छक्तितुलनेन, सर्व्वविभूत्या-समस्तस्वाऽभ्यन्तरवैक्रियकरणादि-वाह्यरत्नादिसम्पदा, सर्व्वविभूषया-यावच्छक्तिस्फारोदारशृङ्गारकरणेन सर्व्वसम्भ्रमेण—सर्व्वोत्कृष्टसम्भ्रमो नामेह स्वनायकविषयबहुमान—स्थापनपरा स्वनायकोपदिष्टकार्य्यसम्पादनाय यावच्छक्तित्वरितत्वरितप्रवृत्तिः । 'सव्वनाडएहिमि' त्यादि प्राग्वत् । यावत् 'रवेण'ति । यावत्करणात् 'महया जुईए' इत्यादि द्रष्टव्यं । 'निअग'त्ति । निजक-आत्मीयं परिवारस्तेन सम्परिवृता -सम्यग् परिवाररीत्या परिवृता 'सयाइं सयाइं'इत्यादि । स्वकानि स्वकानि यानवाहनविमानानि प्रत्यारूढा सन्तः । 'अकाल'त्ति । न विद्यते कालस्य परिहीन—विलम्बो यत्र प्रादुर्भवने तदकालपरिहीनं क्रियाविशेषणमेतत् शक्रस्य यावदन्तिकं-समीपं प्रादुर्भवत—समागच्छत । यावत्करणात् 'देविंदस्से'त्यादि दृश्यं । 'तते णमि'त्यादि । ततः शक्राऽऽज्ञानन्तरं स हारनैगमेषी देवः पदात्यनीकाधिपतिः शक्रेण देवेन्द्रेण देवराजेनैवमुक्तः सन् हृष्टतुष्टो यावदेवं देवे ! इत्याऽऽज्ञाया-आदेशस्य विनयेन वचनं प्रतिशृणोति । यावत्करणात् 'करयलपरिग्गहिअमि'त्यादि दृश्यं । प्रतिश्रुत्य च शक्रस्यान्तिकात् प्रतिनिष्क्रामति प्रतिनिष्क्रम्य यत्रैव सुधर्म्मायां सभायां मेघोघरसितगम्भीरमधुरशब्दा योजनपरिमण्डला सुघोषा घण्टा तत्रैवोपागच्छति उपागत्य तामुक्तस्वरूपां घण्टां त्रीन् वारान्

उल्लालयति-ताडयति । 'तते णमि'त्यादि । ततस्तदनन्तरं तस्यां ताडितायां सत्यां सौधर्म्मे कल्पे 'अण्णेहिं'ति । सप्तम्यर्थे तृतीया तेनान्येषु एकोनद्वात्रिंशल्लक्षविमानेषु अन्यान्येकोनानि द्वात्रिंशत् घण्टालक्षाणि यमकसमक-समकालं 'कणकणारवमि'ति । अनुकरणवचनमिदं तेन कणकणतारवरूपं शब्दं कर्त्तुं प्रवृत्तान्यप्यभवन् । 'तते णमि'त्यादि । तत सौधर्म्मे कल्पे प्रासादविमाननिष्कुटेषु च ये आपतिता शब्दा –शब्दवर्गणापुद्गलास्तेभ्यस्तेभ्य समुच्छलितानि यानि घण्टाप्रतिश्रुता–घण्टाप्रतिध्वनीना शतसहस्राणि तै. सङ्कुलितोऽपि-व्याप्तोऽपि जातोऽभूत् । अय भाव घण्टाया महता प्रयत्नेन हरिनैगमेषिणा ताडितायां ये विनिर्गता शब्दपुद्गलास्तत्प्रतिघातवशत सर्व्वासु दिक्षु विदिक्षु च दिव्यानुभावत. समुच्छलिते प्रतिशब्दे सकलोऽपि सौधर्म्मे कल्पोऽसङ्ख्येययोजनकोटाकोटिप्रमाणोऽपि बधिरित उपजायत इति । एतेन द्वादशभ्यो योजनेभ्य समागत शब्द श्रोत्रग्राह्यो न परतस्तत कथं सर्व्वत्र घण्टाशब्दस्य श्रुतिरित्याशङ्काऽपि परास्ता । सर्व्वत्र दिव्यानुभावतस्तथाप्रतिशब्दोच्छलने यथोक्तदोषाऽसम्भवात् । 'तए णमि'त्यादि । ततो णमिति पूर्व्ववत् । तेषां सौधर्म्मकल्पवासिनां बहूनां वैमानिकाना देवाना देवीना च । किं लक्षणानाम् ? इत्याह-'एगत'त्ति । एकान्तेन सर्व्वात्मना रतौ-रमणे प्रसक्ता एकान्तरतिप्रसक्ता । यद्वा-एकान्ते कामकेलियोग्यगृहादौ रतौ-परिचारणायां प्रसक्ता । अत एव नित्यप्रमत्ता सन्तो विषयसुखेषु मूर्च्छिता–अध्युपपन्ना ततो विशेषणकर्म्मधारय । तेषामेकान्तरतिप्रसक्तनित्यप्रमत्तविषयसुखमूर्च्छितानां सुस्वरघण्टारसितस्य य सर्व्वासु दिक्षु विदिक्षु च प्रतिशब्दोच्छलनेन विपुल –सकलदेवलोकव्यापितया विस्तीर्णो बोल -कोलाहल तेन त्वरित–शीघ्रं चपलमाकुलं यथाभवति तथा प्रतिबोधने कृते सति 'घोसण'त्ति । कीदृग् घोषणं भविष्यतीत्येवं घोषणे कुतूहलेन दत्तौ कर्णौ यैस्ते घोषणकुतूहलदत्तकर्णा । तथा एकाग्रं घोषणश्रवणैकविषयं चित्तं येषां ते एकाग्रचित्ता । अत एवोपयुक्तमानसा । तत कर्म्मधारय । तेषां घोषणकुतूहलदत्तकर्णैकाग्रचित्तोपयुक्तमानसानां स पदात्यनीकाधिपतिर्देव तस्मिन् घण्टारवे निशान्तप्रतिशान्ते सति । तत्र निशातोऽत्यन्त मन्दीभूत । प्रतिशान्त सर्व्वात्मना प्रशान्त । 'तत्थ तत्थ'त्ति । तेषु तेषु विमानेषु तहिं तहिं'ति । तत्र देशे यत्र क्रीडापरायणा देवा देव्यश्च तिष्ठन्ति महता शब्देनोद्घोषयन् उद्घोषयन् एवमवादीत् । कथम् ? इत्याह–'हंदे'त्यादि । हन्देति हर्षे उक्त च–'हन्द हर्षेऽनुकम्पायां' हर्षश्च स्वाम्याद्दिष्टत्वात् तीर्थकृज्जन्ममहिमाकरणार्थं प्रस्थानसमारम्भाच्च शृण्वन्तु भवन्तो बहव सौधर्म्मकल्पवासिनो देवा देव्यश्च सौधर्म्मकल्पपते 'इणमो'त्ति । इदम्'ओ'इति वाक्यालङ्कारे आश्चर्ये वा वचनं । किंलक्षण ? हितसुखार्थं-हितार्थं सुखार्थं चेत्यर्थं । तत्र हितं-जन्मान्तरेऽपि कल्याणावहं तथाविधकुशल सुख च तस्मिन्नेव भवे निरुपद्रवता । किं तद्वचनमित्याह 'आण'त्ति । आज्ञापयति भो देवानुप्रिया ! शक्र इति तदेव प्रागुक्तमेव । कियद्दूरम् ? इत्याह–अतिअ-पाउब्भवह'त्ति पर्यन्त । 'तते णमि'त्यादि । ततस्ते सौधर्म्मकल्पवासिनो देवा देव्यश्च एनमर्थं हरिनैगमेषिणाऽनन्तरोक्तं श्रुत्वा निशम्य 'हट्ठतुट्ठे'त्यादि प्राग्वत् ।'अप्पेगइअ'त्ति । अपि सम्भावने । एकका: केचन वन्दनमभिवादन प्रशस्तकायवाङ्मन प्रवृत्तिरूप तत्प्रत्ययं तदस्माभिर्भगवत कर्त्तव्यमित्येवं निमित्तं एवमित्यनेनैव प्रकारेण । अप्येकका. पूजनप्रत्ययं-पूजन गन्धमाल्यादिना

म्यर्च्चनं 'सक्कारे'त्यादि । अप्येकका: सत्कारप्रत्ययं सत्कार. स्तुत्यादिभिर्गुणोन्नतिकरणम् । अप्येकका सन्मानप्रत्ययं-सन्मानो मानस. प्रीतिविशेष । अप्येकका दर्शनप्रत्ययं भगवद्दर्शनकरणार्थम् । अप्येकका: कुतूहलनिमित्त-कीदृशो भगवानयं शक्रोऽपि पूजयतीति कौतुकनिमित्तमित्यर्थः । अप्येकका शक्रस्य वचनमाज्ञानामनुवर्त्तमाना । अप्येकका अन्योन्यमनुवर्त्तमाना. । अप्येकका जीतमेतत्-कल्प एष एवमादि-इत्यादि निमित्तमिति कृत्वा यावत्प्रादुर्भवन्ति । यावत्करणात् 'सव्विड्ढीए' इत्यादिसङ्ग्रह. । 'तते णमि'त्यादि । तत स शक्रो बहून् देवान् देवींश्च, अकालपरिहीनमेव—कालविलम्बाऽभावेनैव अन्तिक प्रादुर्भवत पश्यति दृष्ट्वा च 'हट्ठ'त्यादि प्राग्वत् । पालकनाम्ना आभियोगिकं देवं शब्दापयति शब्दापयित्वा चैवमवादीत् । किमित्याह—'खिप्पामेवे'त्यादि । क्षिप्रमेव भो देवानुप्रिया ! दिव्यं यानविमान विकुर्वस्वेति सम्बन्ध । किं लक्षण यानविमानम् ? इत्याह—'अणेग'त्ति । अनेकेषु स्तम्भशतेषु सन्निविष्ट लीलया स्थिता सालभञ्जिका यत्रेति । 'ईहामिगे'त्यादि प्राग्वत् । 'खम्भुग्गय'त्ति । स्तम्भोद्गतया—स्तम्भोपरिवर्त्तिन्या वज्ररत्नमय्या वेदिकया परिगतं सद्यदभिराम 'विज्जाहर'त्ति । विद्याधरयोर्यमलयुगल-समश्रेणिक द्वन्द्व तच्च तद्यन्त्र च सञ्चरिष्णु पुरुषप्रतिमाद्वयरूप तेन युक्त तदिव । 'अच्चि'त्ति । अर्चिषां-किरणाना सहस्रै र्मालिनीय परिवारणीय । तथा रूपकसहस्रकलित 'भिसमाण' ति । दीप्यमान 'भिब्भिसमाण'त्ति । अतिशयेन दीप्यमान 'चक्खु'त्ति । चक्षु —कर्त्तु लोकने दर्शनीयत्वा-ऽतिशयात् श्लिष्यतीव यत्र तत्तथा । 'सुह'त्ति । शुभ —कोमल स्पर्शो यस्य तत्तथा, सश्रीकाणि रूपाणि, यत्र तत्तथा, घण्टावल्या.—घण्टाश्रेण्येर्वातवशेन चलिताया —कम्पिताया. मधुर —श्रोत्रमनोनिर्वृतिकर. मनोहर स्वरो यत्र तत्तथा, प्राकृतत्वाद्विशेषणस्य परनिपात. 'सुह कंत'त्ति । शुभ—यथोदितवस्तुलक्षणो-पेतत्वात् कान्त-कमनोयमत एव दर्शनीय 'निउणोविअ'त्ति । निपुणक्रिय 'उअविअ'त्ति । खचितानि 'मिसिमिसित'त्ति । दीप्यमानानि मणिरत्नानि यत्र घण्टिकाजाले तत्तथा तेन क्षुद्रघण्टिकासमुहेन परि-सामस्त्येन क्षिप्त योजनशतसहस्रविस्तीर्णं योजनलक्षविस्तार पञ्च योजनशतोच्च 'सिग्घतुरिअ'त्ति । शीघ्रत्वरितजवनवत्-वेगवत् 'निव्वाहि'ति । निर्व्वाहक तत कर्म्मधारय । दिव्य-प्रधान यानविमान-वाहनरूपविमान विकुर्व्वस्व विकुर्व्वित्वा ममैतामाज्ञप्तिका प्रत्यर्प्पय-सफलीकृत्य निवेदयेत्यर्थ ।

**तते णं से पालए देवे सक्केणं देविंदेण देवरण्णा एवं वुत्ते समाणे हट्ठतुट्ठ जाव वेउव्विअसमुग्घाएणं समोहणित्ता तहेव करेति । तस्स णं दिव्वस्स जाणविमाणस्स तिदिसिं तओ तिसोवाणपडिरूवगा वण्णओ । तेसिं पडिरूवगाणं पुरतो पत्तेअं पत्तेअ तोरणे वण्णओ जाव पडिरूवे । तस्स ण जाणविमाणस्स अंतो बहुसमरमणिज्जे भूमिभागे । से जहा णाम ए आलिंगपुक्खरेति वा जाव दीविआचम्मेति वा अणेगसंकुकीलगसहस्सवितते आवड्डपच्चावड्ड सेढिप्पसेढिसोत्थिअसोवत्थिअपूसमाणगवद्धमाणगमच्छंडगमकरंडाजारामाराफुल्लावलीपउमपत्तसागरतरंगवासंतलतापउमलयभत्तिचित्तेहिं सच्छाएहिं सप्पभेहिं समरीएहिं सउज्जोएहिं**

सम्प्राप्तानि—असलग्नानि पूर्वादिके—पूर्वापरदक्षिणोत्तरागतैर्वातै मन्द मन्दं शनैः शनैः एज्यमानानि—कम्पमानानि 'जाव'त्ति। यावन्निर्वृतिकरेण शब्देन तान् प्रत्यासन्नान् प्रदेशान् आपूरयन्ति यावत्करणात् 'झझमाणा' इत्यादि प्रागुक्तमवसातव्य । 'जाव'त्ति । यावदतीवोपशोभमानान्युपतिष्ठन्ति यावत्करणात् 'सिरीए'त्ति द्रष्टव्य । 'तरस णमि'त्यादि । तस्य सिंहासनस्य अपरोत्तरेण-वायव्या दिशि, उत्तरेणोत्तरस्या दिशि, उत्तरपूर्वस्यामीशान्या च 'एत्थ ण'ति। अत्रैतासु तिसृषु दिक्षु शक्रस्य चतुरशीतेः सामानिकसहस्राणा योग्यानि चतुरशीति भद्रासनसहस्राणि 'पुरत्थिमेण'ति । पूर्वस्यां दिशि अष्टानामग्रमहिषीणामष्टौ भद्रासनानि । एवमित्यमुना प्रकारेण दक्षिणपूर्वस्यामाग्नेय्यामभ्यन्तरपर्षदो द्वादशाना देवसहस्राणा योग्यानि द्वादश भद्रासनसहस्राणि दक्षिणस्या मध्यमाया पर्षदश्चतुर्दश देवसहस्राणा चतुर्दश भद्रासनसहस्राणि । दक्षिणपश्चिमेन बाह्यपर्षद षोडश देवसहस्राणा षोडश भद्रासनसहस्राणि । पश्चिमाया सप्तानामनीकाऽधिपतीना सप्त भद्रासनानि विकुर्वन्तीति शेष सर्वत्रापि द्रष्टव्य । 'तते णमि'त्यादि । तत सिंहासनस्य चतसृषु दिक्षु सामानिकादिदेवभद्रासनाना पृष्ठत इत्यर्थ । चतसृणां चतुरशीतीनाम् आत्मरक्षकदेवसहस्राणा षट्त्रिंशत्सहस्राधिकाना लक्षत्रयाणामित्यर्थ । तावन्ति भद्रासनानि एवमादीत्यादि । एवममुना प्रकारेण इत्यादि यदत्र विभाषितव्य—प्रतिपादनीयं तदखिल 'सूरिआभगमेण'ति । राजप्रश्नीयोक्तसूर्याभदेवगमेन—वक्तव्यताप्रकारेण ज्ञातव्यमिति शेष । कियद्दूरम् ? इत्याह—'जाव पच्चप्पिणति' । यावद्यथाऽऽदिष्ट कृत्य कृत्वा शक्राऽऽज्ञा प्रत्यर्पयतीति ।

तते णं से सक्के जाव हट्ठहिअए दिव्वं जिणिंदाभिगमणजोग्गं सव्वालंकारविभूसिअं उत्तरविउव्विअं रूव विउव्वति विउव्वित्ता अट्ठहिं अग्गमहिसीहिं सपरिवाराहिं णट्टाणीएणं गंधव्वाणीएणं सद्धिं त विमाणं अणुप्पयाहिणीकरेमाणे पुव्विल्लेणं तिसोवाणेणं दुरूहति दुरूहित्ता जाव सिंहासणंसि पुरत्थाभिमुहे णिसन्ने । तते णं एवं चेव सामाणिआवि उत्तरेणं तिसोवाणेणं दुरुहित्ता पत्तेअं पत्तेअं पुव्वण्णत्थेसु भद्दासणेसु णिसीअंति । अवसेसा य देवा य देवीओ अ दाहिणिल्लेणं दुरूहित्ता तहेव जाव णिसीअंति । तते णं सक्कस्स तंमि दुरूढस्स इमे अट्ठट्ठमंगलगा पुरओ अहाणु० । तयणंतरं पुण्णकलसभिंगार दिव्वायवत्तपडागा सचामरा दंसणरइअआलोकदरिसणिज्जा वाउद्धूअविजयवेजयंतिअसमूसिआ गयणतलमणुलिहंती पुरओ अहाणु० । तयणंतरं छत्तभिंगारं । तयणंतरं च णं वयरामयवट्टलट्ठसंठिअसुसिलिट्ठपरिघट्ठमट्ठसुपइट्ठिए विसिट्ठे अणेगवरपंचवण्णकुडभीसहस्सपरिमंडिआभिरामे वाउद्धूअविजयवेजयंतीपडागच्छत्तातिच्छत्तकलिए तुंगे गगणतलमभिलंघमाणसिहरे जोअणसहस्समूसिए महइमहालए महिंदज्झए पुरतो अहाणुपुव्वीए संपट्ठिए । तयणंतरं सुरूवणेवत्थहत्थपरिकच्छिआ सुसज्जा सव्वालंकारविभूसिआ पच अणिआ पंच अणिआहिवइणो । तयणंतरं बहवे-

आभिओगिआ देवा य देवीओ अ सएहिं सएहिं रूवेहिं जाव णिओगेहिं सक्कं देविंदं पुरतो अ मग्गतो अ पासओ अ अहाणु०। तयणंतरं च बहवे सोहम्मकप्पवासी देवा य देवीओ अ सव्विड्ढीए जाव दुरूढा समाणा मग्गओ अ जाव संपट्ठिआ। तते णं से सक्के तेणं पंचाणी-अपरिक्खित्तेणं जाव महिंदज्झएणं पुरतो पकड्ढिज्जमाणेणं पकड्ढिज्जमाणेणं चउरासीइ सामाणिअ जाव परिवुडे सव्विड्ढीए जाव रवेणं सोहम्मस्स कप्पस्स मज्झंमज्झेणं तं दिव्वं देविड्ढिं जाव उवदंसेमाणा उवदंसेमाणा जेणेव सोहम्मस्स कप्पस्स उत्तरिल्ले णिज्जाणमग्गे तेणेव उवागच्छति उवागच्छित्ता जोअणसयसाहस्सीएहि विग्गहेहिं ओवयमाणे अ वितीवयमाणे अ ताए उक्किट्ठाए जाव देवगईए वीइवयमाणे तिरिअमसंखिज्जाणं दीवसमुद्दाणं दीवसमुद्दाणं मज्झंमज्झेणं जेणेव णंदीसरवरे दीवे जेणेव दाहिणपुरत्थिमिल्ले रतिकरपव्वए तेणेव उवागच्छति। एवं जच्चेव सूरिआभस्स वत्तव्वया। णवर सक्काहिगारो वत्तव्वो जाव तं दिव्वं देविड्ढिं जाव दिव्वं जाणविमाणं पडिसाहरमाणे पडिसाहरमाणे जाव जेणेव भगवतो तित्थगरस्स जम्मणणगरे जेणेव भगवओ तित्थयरस्स जम्मणभवणे तेणेव उवागच्छति उवागच्छित्ता भगवओ तित्थगरस्स जम्मणभवणे तेणं दिव्वेणं जाणविमाणेणं तिक्खुत्तो आयाहिणं पयाहिणं करेइ करेत्ता भगवतो तित्थगरस्स जम्मणभवणस्स उत्तरपुरत्थिमे दिसीभागे चउरंगुलमसंपत्तं धरणितले तं दिव्वं जाणविमाणं ठवेति ठवेत्ता अट्ठहिं अग्गमहिसीहिं दोहि अ अणीएहिं गंधव्वाणीएण य णट्टाणीएण य सद्धिं ताओ दिव्वाओ जाणविमाणाओ पुरत्थिमिल्लेणं तिसोवाणपडिरूवगेणं पच्चोरुहति। तते णं सक्कस्स देविंदस्स देवरण्णो चउरासीइ सामाणिअसाहस्सीओ ताओ दिव्वाओ जाणविमाणाओ उत्तरिल्लेणं तिसोवाणपडिरूवगेणं पच्चोरुहंति। अवसेसा देवा य देवीओ अ ताओ दिव्वाओ जाणविमाणाओ दाहिणिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहंति।

तते णं से सक्के देविंदे देवराया चउरासीए सामाणीअसाहस्सीहिं जाव सद्धिं संपरिवुडे सव्विड्ढीए जाव दुंदुहिणिग्घोसणाइअरवेणं जेणेव भगवं तित्थयरे तित्थयरमाया य तेणेव उवागच्छति उवागच्छित्ता आलोए चेव पणामं करेति करेत्ता भगवं तित्थगरं तित्थगरमातरं च तिक्खुत्तो आयाहिणं पयाहिणं करेति करेत्ता करयल जाव एवं वयासी-णमोत्थु ते रयणकुच्छिधारिए एवं जहा दिसाकुमारीओ जाव धण्णासि पुण्णासि तं कयत्थे अहण्णं देवाणुप्पिए! सक्के णामं देविंदे देवराया भगवओ तित्थगरस्स जम्मणमहिमं करिस्सामि तेण तुम्भाहिं ण

**भाइअव्वं तिकट्टु ओसोवणिं दलयइ दलइत्ता तित्थगरपडिरूवगं विउव्वति विउव्वित्ता तित्थगरमाउआए पासे ठवेति ठवेत्ता पंचरूवे सक्के विउव्वइ विउव्वित्ता एगे सक्के भगवं तित्थगर करतलपुडेणं गिण्हति, एगे सक्के पिट्ठओ आयवत्तं धरेइ, दुवे सक्का उभओ पासिं चामरुक्खेवं करेंति, एगे सक्के पुरतो वज्जपाणी पकट्ठति। तए णं से सक्के देविंदे देवराया अण्णेहिं बहूहिं भवणवइ-वाणमंतर-जोइसिअ-वेमाणिएहिं देवेहिं देवीहि अ सद्धिं संपरिवुडे सव्विड्ढीए जाव णाइएणं ताए उक्किट्ठाए जाव वितीवयमाणे जेणेव मंदरे पव्वए जेणेव पंडगवणे जेणेव अभिसेअसिला जेणेव अभिसेअसीहासणे तेणेव उवागच्छति उवागच्छित्ता सीहासणवरगए पुरत्थाभिमुहे सण्णिसण्णे ॥**

'तते णमि'त्यादि। तत. स शक्रो यावत् हृष्टहृदयो दिव्य प्रधान जिनेन्द्रस्योत्पन्नस्य भगवतोऽभिगमनाय योग्यमुचित सर्व्वालङ्कारविभूषितम् उत्तरवैक्रिय रूप विकुर्व्वति विकुर्व्वित्वा अष्टाभिरग्रमहिषीभि सपरिवाराभि: नाट्यानीकेन गन्धर्व्वानीकेन च सार्द्धं तद्विमानमनुप्रदक्षिणीकुर्व्वन् पूर्व्वदिग्सम्बन्धिना त्रिसोपानकेनऽऽरोहति आरुह्य च यावत्सिंहासने पूर्व्वाभिमुखो निषण्ण.-उपविष्ट इत्यर्थः। यावत्करणात् यत्र सा मणिपीठिकेत्यादि द्रष्टव्यम् 'तते णमित्यादि। ततस्तदनन्तरम् 'एव चेव'त्ति। एवमेव शक्रवत् जिनेन्द्राभिगमनयोग्यानि सर्व्वालङ्कारविभूषितानि उत्तरवैक्रियरूपाणि विकुर्व्वित्वा तद्विमानमनुप्रदक्षिणीकुर्व्वन्तः 'सामाणिआवि'त्ति। सामानिका अपि उत्तरदिक्सम्बन्धिना त्रिसोपानेनारुह्य प्रत्येक प्रत्येक पूर्व्वन्यस्तेषु भद्रासनेषु निषीदन्ति। अवशेषाश्चाभ्यन्तरपार्षदादयो देवा देव्यश्च 'दाहिणिल्लेण'ति। दक्षिणदिक्सम्बन्धिना त्रिसोपानप्रतिरूपकेण आरुह्य 'तहेव'त्ति। तथैव प्रागुक्तसामानिकदेववत् स्वस्वोचितभद्रासनेषु निषीदन्ति। 'तते ण सक्करो'त्यादि। ततः शक्रस्य तस्मिन्विमाने आरूढस्य इमानि सकलजनप्रतीतानि अष्टौ अष्टमङ्गलकानि। अष्टमङ्गलमित्यखण्डमेव मङ्गलाभिधायकवोध्या पुरतोऽग्रतः 'सपट्ठिए' इत्यग्रे वक्ष्यमाण क्रियापद सर्व्वत्र सम्बन्धनीय पर बहुवचनपरतया वक्तव्यं। तेन सम्प्रस्थितानि 'अहाणु'त्ति। यथानुपूर्व्या स्वस्तिकस्तदनन्तर श्रीवत्स इत्यादि शास्त्रोक्तक्रमेणेत्यर्थ। तदनन्तर पूर्णकलशभृङ्गारदिव्यातपत्रपताका. सचामरा। कथभूता? इत्याह-'दसण'त्ति। दर्शनेऽवलोकने रतिर्यासु ता दर्शनरतिका:, इह दर्शनरतिकमपि किंचित् आलोकदर्शनीय न भवति अमङ्गलहेतुत्वात् यथा गर्भवती युवती। अत आह-'आलोक'त्ति। आलोके बहिःप्रस्थानसमय भाविनि दर्शनीया—द्रष्टु योग्या मङ्गलहेतुत्वात्। अन्येत्वाहु -आलोके दर्शनीयान पुनरत्युच्चेत्यर्थ तत. कर्मधारयः। 'वाउद्धूअ'त्ति। वातोद्धूता विजयसूचिका वैजयन्ती विजयवैजयन्ती च. सम्मुचये समुच्छ्रिता-ऊर्ध्वीकृता गगनतलमम्बरतलमनुलिखन्ती-अभिलङ्घयन्ती पुरतो यथानुपूर्व्या सम्प्रस्थिताः। तदनन्तर छत्रभृङ्गार छत्र च भृङ्गारश्च छत्रभृङ्गार विशिष्टवर्णकचित्रयुक्त। तदनन्तर महेन्द्रध्वज. सम्प्रस्थित। स च कीदृश? इति दर्शयति—'वयरामय'त्ति। वज्ररत्नमयी वृत्ता-वृत्ताकारा सस्थिता-सुसस्थानवती सुश्लिष्टा-यथोचितावयवसम्पन्ना परिघृष्टेव परिघृष्टा

खरशानया पाषाणप्रतिमावत्, मृष्टेव मृष्टा सुकुमारखरशानया पाषाणप्रतिमेव एवंविधा या लष्टिर्यष्टिस्तस्या सुप्रतिष्ठितः प्राकृतत्वाद्विशेषणानां परनिपातः। विशिष्टः-शेषध्वजेभ्योऽतिशायी 'अणेग'त्ति । अनेकानि-अनेकसङ्ख्याकानि वराणि-प्रधानानि पञ्च वर्णानि कुडभीसहस्राणि उत्सृतानि यत्र स तथा क्तान्तस्य परनिपातः सुखादिदर्शनात् । वातोद्धूतविजयवैजयन्तीपताकाछत्रातिछत्रकलितः । तुङ्गोऽत्युच्चो योजनसहस्रप्रमाणोच्छ्रयः 'गगन'त्ति । गगनतलमभिकाङ्क्षदिव-गृहीतुमभिलषदिव शिखरमग्रभागो यस्य स तथा योजनसहस्रमुत्सृतः । अत एव 'महइमहालए'त्ति । अतिशयेन महान् महेन्द्रध्वजः पुरो यथानुपूर्व्या सम्प्रस्थितः । 'तदणतर'ति। तदनन्तरं सुरूप नेपथ्यं हस्तं वेषसमूहः परिकक्षित—परिगृहीतं यैस्ते तथा सु-सुष्ठु अतिशयेन सज्जाः—परिपूर्णस्वसामग्रीसमायुक्ततया प्रगुणीभूता सर्वालङ्कारविभूषिता पञ्चानीकानि पञ्चानीकाधिपतयश्च । तदनन्तरं बहव आभियोगिका देवा देव्यश्च स्वकीयै स्वकीयै रूपै यावत्स्वकीयै स्वकीयैर्नियोगैः यावत्करणात् स्वकीयै स्वकीयैर्विभवैर्नेपथ्यैरित्यादि सङ्ग्रहः । शक्रं देवेन्द्र पुरतश्चाग्रत मार्गतश्च पृष्ठतः पार्श्वतश्चोभयोरपि पार्श्वयो 'अहा०'इति । यथानुपूर्व्या सम्प्रस्थिता । 'तयणतर'त्ति । तदनन्तरं च बहव सौधर्म्मकल्पवासिनो देवा देव्यश्च सर्व्वर्द्धया यावदारूढाः सन्तः मार्गतो यावत्सम्प्रस्थिताः यावत्करणात् पुरतः पार्श्वत इत्यादि । 'तते णमि'त्यादि । तत स शक्रः तेन प्रागुक्तस्वरूपेण पञ्चानीकपरिक्षिप्तेन यावन्महेन्द्रध्वजेन यावच्छन्दात् 'वयरामये'त्यादि वर्णनविशिष्टेनेत्यर्थः । पुरतः प्रकृष्यमाणेन प्रकृष्यमाणेन चतुरशीति सामानिकसहस्रैर्यावत्परिवृत यावत्करणादष्टाभिरग्रमहिषीभिरित्यादि यावत् चतसृभिश्च । चतुरशीतिभिरात्मरक्षकदेवसहस्रैरित्यादि द्रष्टव्य । सर्व्वर्द्धया यावद्रवेण यावत्करणात् सव्वजुईए'इत्यादि दृश्यं । 'सोहम्मस्स'त्ति । सौधर्म्मकल्पस्य मध्यमध्येन ता दिव्या देवर्द्धि यावदुपदर्शयन् उपदर्शयन् यावत्करणात् दिव्या देवद्युतिं देवानुभूतिमित्यादि परिग्रह । 'जेणेव'त्ति । येनैव क्षेत्रविभागेन सौधर्म्मकल्पस्य उत्तराहो निर्याणमार्गो—निर्गमनमार्ग । 'तेणेव'त्ति । तेनैव पार्श्वेनोपागच्छति उपागत्य योजनशतसाहस्रिकै —योजनलक्षप्रमाणैर्विग्रहै क्रमैरवपतन्-अधस्तादवतरन् व्यतिव्रजश्च गच्छन् 'ताए उक्किट्ठाए'इत्यादि । तयोत्कृष्टया यावद्देवगत्या व्यतिव्रजन् तिर्यगसङ्ख्येयाना द्वीपसमुद्राणा मध्यमध्येन 'जेणेव'त्ति । यस्मिन्नेव प्रदेशे नन्दीश्वरो द्वीपो यस्मिन्नेव प्रदेशे दक्षिणपौरस्त्य —आग्नेयवर्त्ती रतिकरनामापर्व्वतस्तस्मिन्नुपागच्छति । 'एवं जच्चेव'त्ति । एव यैव सूर्याभस्य राजप्रश्नीये श्रीमहावीरवन्दनार्थं समागच्छतो वक्तव्यतोक्ता साऽत्रापि वक्तव्या । नवरमय विशेषः— शक्राधिकारो वक्तव्यः सूर्याभस्थाने शक्रो वक्तव्य इत्यर्थ । कियद्दूरम् ? इत्याह—'जाव त दिव्वमि'त्यादि । यावत्तां दिव्यां देवर्द्धि यानविमान च 'पडिसाहरमाणे'त्ति । शनै शनै प्रतिसंहरन् प्रतिसहरन् यावद्यत्रैव भगवतस्तीर्थकरस्य जन्मनगर तत्रापि यत्रव भगवतस्तीर्थंकरस्य जन्मभवन तत्रैवोपागच्छति यावत्करणात्—'जेणेव जंबुद्दीवे दीवे जेणेव भारहे वासे' इत्यादि सङ्ग्रह । उपागत्य यावत्तेन दिव्येन यानविमानेन सह त्रीन् वारान् आदक्षिणप्रदक्षिणीकरोति कृत्वा च तीर्थकृतो जन्मभवनाऽपेक्षया उत्तरपूर्व्व दिग्विभागे-ईशानकोणे चतुरङ्गुलमसम्प्राप्त धरणीतले तद्दिव्य यानविमानं स्थापयति स्थापयित्वा च अष्टाभिरग्रमहिषीभिर्द्वाभ्यामनीकाभ्या द्वयोर्व्यक्तिमाह-गन्धर्वानीकेन नाट्यानीकेन च सार्द्ध

तस्माद्दिव्याद्यानविमानात् पूर्वदिक्सत्कनिना त्रिसोपानप्रतिरूपकेण प्रत्यवतरति 'तए ण सक्कस्से'-त्यादि ततः शक्रस्येत्यादि 'एवं वयासी' तिपर्यन्तं सुगमं व्याख्यातपूर्वं च । किमवादीदित्याह–'णमोत्थु ते'इत्यादि । नमोऽस्तु ते रत्नकुक्षिधारिके ! एवममुना प्रकारेण यथा पूर्वं दिक्कुमार्य उक्तवत्य । कियद्दूरम् ? इत्याह–'जाव धण्णासी'त्ति । यावत् त्वं धन्यासि पुण्यासि तत्तस्मात् यस्मात् तीर्थंकरजनन्यसीति हे कृतार्थे ! 'अहं णमि'ति प्राग्वत् । देवानुप्रिये ! शक्रो नाम देवेन्द्रो देवराजो भगवतस्तीर्थंकरस्य जन्ममहिमा करिष्यामि । तेन युष्माभिर्न भेतव्यमिति कृत्वा अवस्वापिनी निद्रा ददाति दत्वा च तीर्थंकरप्रतिरूपक–तीर्थंकरप्रतिविम्ब विकुर्व्वति विकुर्व्वित्वा तीर्थंकरमातु पार्श्वे स्थापयति स्थापयित्वा पञ्च शक्रान् विकुर्व्वति–पञ्च शक्ररूपाणि करोति विकुर्व्वित्वा च एक शक्रो भगवन्तं तीर्थंकरं करतलपुटेन गृह्णाति–करतलयो शुक्तिसम्पुटमिव सम्पुटं करतलसम्पुटं तेन । एक शक्र पृष्ठतो भगवन्मस्तके आतपत्रं–छत्र धरति । द्वौ शक्रौ भगवत उभयो पार्श्वयोश्चामरोत्क्षेपं कुरुतं-चामरे वीजयत इत्यर्थ । एकं शक्र पुरतो वज्रपाणि प्रवर्तते–क्षुद्रोपद्रवनिवारणार्थं वज्रमुल्लालयन् पुरतो गच्छतीत्यर्थ । 'तते णमि'त्यादि । तत स शक्रो देवेन्द्रो देवराजोऽन्यैर्बहुभिर्भवनपति-वानमन्तर-ज्योतिष्क-वैमानिकैर्देवैर्देवीभिश्च सार्द्धं सम्परिवृत सर्व्वर्द्ध्या यावन्नादितेन तथा उत्कृष्टया यावद्व्रजन् यत्रैव मन्दर पर्व्वत यावत्करणादेकत्र 'सव्वजुईए'इत्यादि । अपरत्र 'दिव्वाए देवगईए'इत्यादि दृश्य । यत्रैव पण्डकवन तत्रापि यत्रैव अभिषेकशिला तत्रापि यत्रैवाभिषेकसिंहासनं तत्रैवोपागच्छति उपागत्य सिंहासनवरगत पूर्वाभिमुख सन्निपण्ण–उपविष्ट ।

अथेशानेन्द्राऽऽगमनमाह

ते णं काले णं ते ण समए णं ईसाणे देविंदे देवराया सूलपाणी वसभवाहणे सुरिंदे उत्तरड्ढलोगाहिवई अट्ठावीस विमाणवाससयसहस्साहिवई अरयंबरवत्थधरे । एवं जहा सक्के । इमं णाणत्तं-महाघोसा घंटा, लहुपरक्कमो पायत्ताणिआहिवई, पुप्फओ विमाणकारी, दक्खिणा णिज्जाणभूमी, उत्तरपुरत्थिमिल्लो रइकरपव्वओ, मंदरे समोसरिओ जाव पज्जुवासइ । एवं अवसिट्ठावि इंदा भाणिअव्वा जाव अच्चुएत्ति । इमं णाणत्तं–

चउरासीइ असीई बावत्तरि सत्तरी अ सट्ठी अ । पण्णा चत्तालीसा तीसा बीसा दस सहस्सा । एते सामाणिआण ।

बत्तीसट्ठावीसा बारस अड चउरो अ सयसहस्सा । पण्णा चत्तालीसा छच्च सहस्सा सहस्सारे ॥२॥ आणयपाणयकप्पे चत्तारिसयाऽऽरणच्चुए तिण्णि । एते विमाणाणं । इमे जाण विमाणकारी देवा प० । तं०–

पालय पुप्फे सोमणसे सिरिवच्छे अ णंदिआवत्ते । कामगमे पीतिगमे मणोरमे विमल सव्वओभद्दे ।

सोहम्मगाणं सणंकुमारगाणं बंभलोअगाणं महासुक्कगाणं पाणयगाणं इंदाणं सुघोसा घंटा हरिणेगमेसी पायत्ताणिआहिवई उत्तरिल्ला णिज्जाणभूमी दाहिण-पुरत्थिमिल्ले रइकरपव्वए । ईसाणगाणं माहिंदलंतगसहस्सारअच्चुआण य इंदाणं महा-घोसा घंटा लहुपरक्कमे पायत्ताणिआहिवई दक्खिणे णिज्जाणमग्गे उत्तरपुरत्थिमिल्ले रइकर-पव्वए । परिसाओ णं जहा जीवाभिगमे । आयरक्खा सामाणिअचउग्गुणा सव्वेसिं, जाणवि-माणा जोअणसयसहस्सविच्छिण्णा, उच्चत्तेणं सविमाणप्पमाणा, महिंदज्झया सव्वेसिं जोअण-साहस्सिआ । सक्कवज्जा मंदरे समोसरंति जाव पज्जुवासंति ।

'तेणं कालेणमि'त्यादि । तस्मिन् काले तस्मिन् समये ईशानकल्पाधिपतित्वात् ईशान इति नाम्ना देवेन्द्रो देवराजः शूलपाणि –शूल पाणौ यस्येति स तथा 'वसह'त्ति । वृषभरूपो देवो वाहनं यस्य-स तथा सुरेन्द्र –उत्तरार्द्धलोकाधिपति. मेरोरुत्तरत. सर्वस्याऽपि तदधीनत्वात् अष्टाविंशतिविमानशत-सहस्राधिपति अरजोऽम्बरवस्त्रधर । एव यथा शक्रस्तथाऽयमपि वक्तव्य. । अथ भेदमाह–'इमं णाणत्त'ति । महाघोषा घण्टा लघुपराक्रमो नाम्ना पदात्यनीकाधिपति पुष्पको नाम्ना यानविमानकारी दक्षिणो-दक्षिणदिशि निर्याननिभूमि उत्तरपूर्व-ईशानकोणवर्ती रतिकरपर्वत यत्र विमान सङ्क्षिपति मन्दरे समव-सृत -समागत सन् यावत्पर्युपास्ते । शक्रस्तु नन्दीश्वरात्पूर्वं भगवतस्तीर्थंकरस्य जन्मभवने समागत इत्यादि भेदोऽवसातव्य । यावत्करणात् 'जेणेव भगव तित्थगरे तेणेव उवागच्छति उवागच्छित्ता भगव तित्थगर आयाहिणपयाहिण करेइ' इत्यादि द्रष्टव्यम् । अथ शेषानिन्द्रानधिकृत्यातिदेशमाह–'एवं अवसिट्ठावी'त्यादि । एवमीशानेन्द्रवत् अवशिष्टा अपीन्द्रा भणितव्या । कियद्दूरम् ? इत्याह–यावदच्युत इति–अच्युतेन्द्रनामा द्वादश देवलोकाधिपति । अयविशेषमाह–'इम णाणत्तमि'त्यादि । इद वक्ष्यमाण नानात्व-भेदोऽवसातव्य. । तत्र तावद्दशानामपि वैमानिकेन्द्राणा सामानिकसुरसङ्ख्यया भेदज्ञापनाय गाथामाह–'चउरासीइ'त्ति । चतुरशीति सहस्राणि सामानिका. शक्रस्य, ईशानस्याशीति सनत्कुमारस्य द्वासप्तति , माहेन्द्रस्य सप्तति , ब्रह्मेन्द्रस्य षष्टि , लान्तकेन्द्रस्य पञ्चाशत्, महाशुक्रेन्द्रस्य चत्वारिंशत्, सहस्रारेन्द्रस्य त्रिंशत्, प्राण-तेन्द्रस्य विंशति , अच्युतेन्द्रस्य दश सहस्राणि सामानिका इति गाथार्थ । 'एए'त्ति । एते सामानिका णमित्यलङ्कारे । अथ शक्रादीना विमानसङ्ख्यया भेदमाह–'वत्तीसट्ठ'त्ति । सोधर्म्मे द्वात्रिंशल्लक्षाणि विमानानि, ईशानेऽष्टाविंशति , सनत्कुमारे द्वादश, माहेन्द्रेऽष्टौ, ब्रह्मलोके चत्वारि लक्षाणि, लान्तके पञ्चाशत् सहस्राणि, शुक्रे चत्वारिंशत् सहस्राणि, सहस्रारे च षट् सहस्राणि, आनतप्राणतयो समु-दितयोश्चत्वारि शतानि, आरणाऽच्युतयोश्च समुदितयोस्त्रीणि शतानीति सार्द्धगाथार्थ । 'एते'त्ति । एतानि विमानानि णमिति प्राग्वत् पुस्त्व प्राकृतत्वादीति । अथ यानविमानकारिणा देवाना नामभिर्भेद-माह–'इमे जाण'त्ति । इमे वक्ष्यमाणा यानविमानकारिणो देवा । तद्यथा–'पालगे'त्यादि । पालक पुष्पक सौमनस श्रीवत्स नन्दावर्त्त कामगम प्रीतिगमो मनोरमो विमल सर्वतोभद्रश्चेति

गाथार्थः । अथ घण्टया भेदमाह—'सोहम्मगाणमि'त्यादि । सौधर्मकाणां सुधर्मदेवलोकवासिनाम् । एवं सनत्कुमारकाणां ब्रह्मलोककानां महाशुक्रकाणां प्राणतकानां चेन्द्राणां सुघोषा घण्टाः, बहुवचनं च अतीतादिकालाद्यपेक्षया वाऽवसातव्यम् । एवं हरिनैगमेषी पदात्यनीकाधिपति, उत्तरदिग्वर्त्तिनी निर्याणभूमिर्निर्गमनमार्गभूमिः, दक्षिणपौरस्त्य-आग्नेयकोणवर्ती रतिकरपर्वतः । 'ईसाणगाणमि' त्यादि । ईशानकानां माहेन्द्रलान्तकसहस्राराऽच्युतकानां चेन्द्राणां महाघोषा नाम्ना घण्टा, लघुपराक्रमो नाम्ना पदात्यनीकाधिपतिः, दाक्षिणात्यो निर्याणमार्गः, उत्तरपौरस्त्य-ईशानकोणवर्ती रतिकरपर्वतः । 'परिसाओ ण'त्ति । पर्षदाऽभ्यन्तरमध्यमबाह्यरूपाः यस्य यावद्देवदेवीप्रमाणा भवन्ति तस्य तावत्प्रमाणाः यथा जीवाभिगमे प्रोक्ताः तथाऽत्रापि वक्तव्याः । तच्चैव—शक्रस्याभ्यन्तरिकायां पर्षदि देवा द्वादश सहस्राणि देव्यश्च सप्त शतानि । मध्यमायां देवाश्चतुर्दश सहस्राणि देव्यश्च षट् शतानि । बाह्यायां देवाः षोडश सहस्राणि देव्यश्च पञ्च शतानि । इशानेन्द्रस्याऽभ्यन्तरिकायां देवा दश सहस्राणिदेव्यश्च नव शतानि । मध्यमायां देवा द्वादश सहस्राणि देव्यश्चाष्टौ शतानि । बाह्यायां देवाश्चतुर्दश सहस्राणि देव्यश्च सप्त शतानि । सनत्कुमारेन्द्रस्य पार्षद्या देव्यो देवलोकद्वयादूर्ध्वं न सन्तीति कृत्वा आभ्यन्तरिकायां पर्षदि देवा अष्टौ सहस्राणि, मध्यमायां दश, बाह्यायां द्वादश देवसहस्राणि । माहेन्द्रस्य तु क्रमेण षट्, अष्टौ दश च । ब्रह्मेन्द्रस्य च क्रमेण चत्वारि, षडष्टौ च । लान्तकेन्द्रस्य पुनः क्रमेण द्वे चत्वारि षट् च । शुक्रेन्द्रस्य क्रमेण एकं, द्वे, चत्वारि च देवसहस्राणि । सहस्रारेन्द्रस्य क्रमेण पञ्चशतानि, एकं, द्वे च सहस्रे । चेति । प्राणतेन्द्रस्याभ्यन्तरिकायामर्द्धतृतीयानि शतानि, मध्यमायां च पञ्च शतानि, बाह्यायां पुनरेकं सहस्रं देवानामिति । अच्युतेन्द्रस्य पञ्चविंशं शतं, अर्द्धतृतीयानि, पञ्च शतानि च देवाः क्रमेणेति । अथाऽऽत्मरक्षकदेवानधिकृत्य भेदमाह—'आयरक्ख'त्ति । आत्मरक्षकाः प्रागुक्तस्वरूपाः सामानिकचतुर्गुणाः यस्येन्द्रस्य यावन्तः सामानिकास्तेभ्यश्चतुर्गुणाऽऽत्मरक्षका देवा इत्यर्थः । यथा शक्रस्य चतुरशीति सहस्राणि सामानिकास्ते चतुर्गुणितास्त्रीणि लक्षाणि षट् त्रिंशत्सहस्राधिकानि आत्मरक्षका देवा भवन्त्येवमपरेषामपि परिभावनीया । अथ यानविमानान्यधिकृत्यापि भेदमाह—'सव्वेसिं'ति । सर्वेषामिन्द्राणां यानविमानानि योजनशतसहस्रविस्तीर्णानि आयामविष्कम्भाभ्यां योजनलक्षप्रमाणानीत्यर्थः । उच्चैस्त्वेन स्वविमानानि—सौधर्मावतंसकादीनि तेषामिव प्रमाणं येषां तानि स्वविमानप्रमाणानि । अथ विमानानां वैषम्ये महेन्द्रध्वजानामपि वैषम्यं भविष्यतीतिशङ्काऽपनोदार्थमाह—'महिंदज्झय'त्ति । महेन्द्रध्वजाः सर्वेषामपीन्द्राणां योजनसाहस्रिकाः—उच्चैस्त्वेन योजनानां सहस्रमेकं प्रमाणं येषां ते तथा । अथ शक्रेण सार्द्धमपरेषामिन्द्राणामागमनमधिकृत्य भेदमाह—'सक्क'त्ति । शक्रवर्ज्जा अर्थात्सर्वेऽपीन्द्राः मन्दरे समवसरन्ति—एकत्र समुदायीभवन्ति । शक्रस्तु प्रथमं तीर्थंकरभवनमायातीति प्रागभिहितं यावत्पर्युपासते भगवन्तमिति शेषः ।

अथ भवनपतीन्द्राणामागमनमाह

ते णं काले णं तेणं समए णं चमरे असुरिंदे असुरराया चमरचंचाए रायहाणीए, सभाए सुहम्माए, चमरंसि सीहासणंसि, चउसट्ठीए सामाणिअसाहस्सीहिं, तायत्तीसाए तायत्तीसेहिं,

चउहिं लोगपालेहिं, पंचहिं अग्गमहिसीहिं सपरिवाराहिं, तिहिं परिसाहिं, सत्तहिं अणिएहिं,सत्तहिं अणिआहिवईहिं, चउहिं चउसट्ठीहिं आयरक्खसाहस्सीहिं, अण्णेहिं अ। जहा सक्के। णवरि इमं णाणत्तं-दुमो पायत्ताणिआहिवई, ओघस्सरा घंटा, विमाणं पण्णासं जोअणसहस्साइं, महिंदज्झओ पंच जोअणसयाइं, विमाणकारी आभिओगिओ देवो, अवसिट्ठं तं चेव जाव मंदरे समोसरइ पज्जुवासइ। ते णं काले णं ते णं समए णं बली असुरिंदे एवमेव। णवरं सट्ठिं सामाणिअसाहस्सीओ, चउग्गुणा आयरक्खा, महादुमो पायत्ताणिआहिवई, महाओघस्सरा घंटा,सेसं तं चेव परिसाओ जहा जीवाभिगमे। ते णं काले णं ते णं समए णं धरणे तहेव। णाणत्तं-छ सामाणिअसाहस्सीओ, छअग्गमहिसीओ, चउग्गुणा आयरक्खाओ, मेघस्सरा घंटा, भद्दसेणो पायत्ताणिआहिवई, विमाण पणवीसं जोअणसहस्साइं, महिंदज्झओ अड्ढाइज्जाइं जोअणसयाइं। एवं असुरवज्जिआणं भवणवासि इंदाणं। णवरं असुराणं ओघस्सरा घंटा णागाणं मेघस्सरा। सुवण्णाण हंसस्सरा। विज्जूणं कोंचस्सरा। अग्गीणं मंजुस्सरा, दिसाणं मंजुघोसा, उदहीणं सुस्सरा, दीवाणं महुरस्सरा, वाऊणं णंदिस्सरा, थणिआणं णंदिघोसा।

चउसट्ठी सट्ठी खलु छच्च सहस्साओ असुरवज्जाण। सामाणिआओ एते चउग्गुणा आयरक्खाओ ॥ १ ॥ दाहिणिल्लाणं पायत्ताणिआहिवई भद्दसेणे उत्तरिल्लाणं दक्खो वाणमंतर-जोइसिआ णेअव्वा, एवमेव। णवरं चत्तारि सामाणिअसाहस्सीओ, चत्तारि अग्गमहिसीओ, सोलस आयरक्खसहस्सा, विमाणसहस्सं, महिंदज्झया पणवीसं जोअणसयं, घंटा दाहिणाणं मंजूस्सरा, उत्तराणं मंजुघोसा, पायत्ताणिविमाणकारी आभिओगिआ देवा। जोइसिआणं सुस्सरा, सुस्सरणिग्घोसा घंटा। मंदरे समोसरणं जाव पज्जुवासंति ॥

'ते ण काले णमि'त्यादि। तस्मिन् काले तस्मिन् समये चमरोऽसुरेन्द्रोऽसुरराजश्चमरचञ्चायां राजधान्यां, सुधर्मायां सभायां, चमरनाम्नि सिंहासने, चतुष्षष्ट्या सामानिकसहस्रैः, त्रयस्त्रिंशता त्रायस्त्रिंशैः, चतुर्भिर्लोकपालैः, पञ्चभिरग्रमहिषीभिः सपरिवाराभिः, तिसृभिः पर्षद्भिः, सप्तभिरनीकैः, सप्तभिरनीकाधिपतिभिः, चतसृभिश्चतुष्षष्टिभिरात्मरक्षकदेवसहस्रैः 'अण्णेहि'त्ति। अन्यैरपि चेत्यादि यथा-शक्रस्तथा चमरेन्द्रोऽपि। अथ भेदमाह-'णवरि'त्ति। नवरमिदं नानात्व-भेदः चमरेन्द्रस्य द्रुमो नाम्ना पदात्यनीकाधिपतिः, ओघस्वरा नाम्ना घण्टा, विमानं पञ्चाशद्योजनसहस्राणि विस्तीर्णं, महेन्द्रध्वजः पञ्च योजनशतान्युच्चैस्त्वेन गम्यः, विमानकारी चाभियोगिको देवो न पुनर्नियतनाम्ना तदधिकारी देवविशेषः। 'अवसिट्ठं तं चेव'त्ति। अवशिष्टं उद्घोषणादिकं शक्रवदस्यापि यावन्मन्दरे समवसरति यावत्पर्युपास्ते भगवन्तमिति। अथ बलीन्द्रागमनमाह—'ते ण काले णमि'त्यादि। तस्मिन् काले बलिनामा असुरेन्द्र

'एवमेव'त्ति । चमरेन्द्रवदेव । नवरं षष्टिः सामानिकसहस्राणि, चतुर्गुणा आत्मरक्षका देवा, महाद्रुम पदात्यनीकाधिपतिः, महौघस्वरा नाम्ना घण्टा, शेषं तदेव-उद्घोषणादि शक्रवदेव पर्षदश्च जीवाभिगमोक्ता अवसातव्याः । एवमसुरेन्द्रद्वयवक्तव्यतामभिधाय नागेन्द्रद्वयवक्तव्यतामाह—'तेणं कालेणं'मि' त्यादि । धरणो-धरणेन्द्रो नागराजस्तथैव-शक्रवदेव । नानात्वं पुनरस्य सामानिकाः षट् सहस्राणि, षट् चाग्रमहिष्यः, चतुर्गुणा आत्मरक्षकाश्चतुर्विंशति सहस्राणीत्यर्थः, मेघस्वरा घण्टा, भद्रसेनो नाम्ना पदात्यनीकाधिपतिः, विमानं पञ्चविंशतिः योजनसहस्राणि विस्तीर्णं, महेन्द्रध्वजोऽर्द्धतृतीयानि योजनशतानि । अथ शेषेन्द्रविषयेऽतिदेशमाह—'एवं असुरे'त्यादि । एवमिति धरणेन्द्रवत् असुरेन्द्रवर्ज्जितानां-चमरबलिव्यतिरिक्तानां भूतानन्दवेणुदेववेणुदालीहरिकान्तहरिस्सहअग्निशिखाग्निमानवपूर्णविशिष्टजलकान्तजलप्रभामितगत्यऽमितवाहनवेलम्बप्रभञ्जनघोषमहाघोषनाम्नां सप्तदशानां भवनवासीन्द्राणामपि ज्ञातव्यम् । अथ विशेषमाह—'णवरंमि'ति । नवरम्-असुराणामोघस्वरा घण्टा, नागानां मेघस्वरा, सुपर्णानां हंसस्वरा, विद्युत्कुमाराणां क्रौंचस्वरा, अग्निकुमाराणां मञ्जुस्वरा, दिक्कुमाराणां मञ्जुघोषा, उदधिकुमाराणां सुस्वरा, द्वीपकुमाराणां मधुरस्वरा, वायुकुमाराणां नन्दिस्वरा, स्तनितकुमाराणां नन्दिघोषा घण्टा वेदितव्या । यच्चात्र केषाञ्चिन्नाम्नां व्यतिक्रमो दृश्यते तत्सूत्रकाराणां गतिर्वैचित्र्यादवसातव्यम् । अथ चमरादीनां सामानिकसङ्ख्यामाह—'चउसट्ठी'त्यादिगाथा । चतुःषष्टिः सहस्राणि, चमरेन्द्रस्य, षष्टिः सहस्राणि च बलीन्द्रस्य, खलुरवधारणे । षट् च सहस्राणि असुरवर्ज्जानां धरणादीनामष्टादशानामपि प्रत्येकं प्रत्येकं सामानिका देवा ज्ञातव्याः । एतेऽनन्तरोक्ताश्चतुर्गुणिता आत्मरक्षका इति गाथार्थः । 'दाहिणिल्लाणमि'त्यादि । दाक्षिणात्यानां नवानामपि धरणेन्द्रादीनां पदात्यनीकाधिपतिर्भद्रसेन, उत्तराहाणां च भूतानन्दादीनां नवानां दक्षो नाम्ना पदात्यनीकाधिपतिः । अथ व्यन्तरज्योतिष्केन्द्र विषयेऽतिदेशमाह-'वाणमंतरे'त्यादि । वानमन्तरज्योतिष्केन्द्रा एवमेव-भवनपतय इव ज्ञातव्याः । तत्र व्यन्तरेन्द्रा द्वात्रिंशत् ते चैव-पिशाचभूतयक्षराक्षसकिन्नरकिंपुरुषमहोरगगन्धर्व्वअप्रज्ञप्तिप्रज्ञप्तिऋषिवादितभूतवादितक्रन्दितमहाक्रन्दितकुष्माण्डपवकनामसु षोडश निकायेषु प्रत्येकं द्वौ द्वाविन्द्रौ ते च काल-महाकाल-सुरूपप्रतिरूप-पूर्णभद्र-माणिभद्र-भीम-महाभीम-किन्नर-किंपुरुष-सत्पुरुष-महापुरुष—अतिकाय-महाकाय-गीतरति-गीतयश -सन्निहित-सामानिक-धातृ-विधातृ-ऋषि--ऋषिपाल--ईश्वर-महेश्वर-सुवत्स--विशाल-हासहासरति-श्वेत—महाश्वेत-पवक-पवकपतिनामानो द्वात्रिंशद्व्यन्तरेन्द्राः । ज्योतिष्केन्द्राणां—चन्द्रसूर्याणामसङ्ख्यातत्वेऽपि जात्यपेक्षया द्वावेव । अथातिदेशे विशेषमाह-'णवर'ति । नवर-द्वात्रिंशतो व्यन्तरेन्द्राणां द्वयोश्च चन्द्रसूर्ययोः प्रत्येकं चत्वारि सामानिकसहस्राणि, चतस्रोऽग्रमहिष्यः, षोडश आत्मरक्षकदेवसहस्राणि, विमानानि योजनसहस्रमेकं, महेन्द्रध्वजाश्च पञ्चविंशत्यधिकं योजनशतं, घण्टा दाक्षिणात्यानां षोडशानामिन्द्राणां मञ्जुस्वरा, उत्तराहाणां तु मञ्जुघोषा, पदात्यनीकाधिपतयो विमानकारिणश्चामीषां सर्व्वेषामपि अनियतनामानः स्वाम्यादिष्टा आभियोगिका देवाः । 'जोइसिआण'ति । ज्योतिष्केन्द्रयोः सुस्वरा-सुस्वरनिर्घोषेघण्टे क्रमेण ज्ञातव्ये । मंदरे समवसरणं यावत्पर्युपासते चतुस्त्रिंशतोऽपीन्द्रा इति ।

अथ चतुष्षष्टेरपीन्द्राणां क्रमेण कृत्यमाह

तते णं से अच्चुए देविंदे देवराया महं देवाहिवे आभिओगिए देवे सद्दावेइ सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ ! महत्थं महग्घं महारिहं विउलं तित्थगराभिसेअं उवट्ठवेह । तते णं ते हट्ठतुट्ठा जाव पडिसुणेत्ता उत्तरपुरत्थिमं दिसीभागं अवक्कमंति अवक्कमित्ता विउव्विअसमुग्घाएणं जाव समोहणित्ता अट्ठसहस्सं सोवण्णिअकलसाणं, एवं रुप्पमयाणं, मणिमयाणं, सुवण्णरुप्पमयाणं, सुवण्णमणिमयाणं, रुप्पमणिमयाणं, सुवण्णरुप्पमणिमयाणं, अट्ठसहस्सं भोमेज्जाणं अट्ठसहस्सं चंदणकलसाणं । एवं भिंगाराणं आदंसाणं थालाण पातीण सुपइट्ठाणं चित्ताणं रयणकरंडगाणं पुप्फचंगेरीणं । एवं जहा सूरिआभस्स सव्वचंगेरीओ सव्वपडलगाइं विसेसिअतराइं भाणिअव्वाइं । सीहासणछत्तचामरतेल्लसमुग्ग जाव सरिसवसमुग्गा तालिअंटा जाव अट्ठसहस्सं कडुच्छुआणं विउव्वित्ता साभाविए अ वेउव्विए अ कलसे जाव कडुच्छु अ गेण्हित्ता जेणेव खीरोदे समुद्दे तेणेव आगम्म खीरोदगं गेण्हंति गेण्हेत्ता जाइं तत्थ उप्पलाइं पउमाइं जाव सहस्सपत्ताइं ताइं गेण्हंति । एवं पुक्खरोदाओ जाव भरहेरवयाणं मागहाईणं तित्थाणं उदगं मट्टिअं च गेण्हंति गेण्हेत्ता एवं गंगाईणं महाणईणं जाव चुल्लहिमवंताओ सव्वतुअरे सव्वपुप्फे सव्वगंधे सव्वमल्ले जाव सव्वोसहीओ सिद्धत्थए अ गेण्हंति गेण्हेत्ता पउमद्दहाओ दहोदगं उप्पलादीणि अ । एवं सव्वकुलपव्वएसु वट्टवेअड्ढेसु सव्वमहद्दहेसु सव्ववासेसु सव्वचक्कवट्टिविजएसु वक्खारपव्वएसु अंतरणदीसु विभासेज्जा जाव उत्तरकुरुसु अ जाव सुदंसणभद्दसालवणे सव्वतुअरे जाव सिद्धत्थए अ गिण्हंति । एवं णंदणवणाओ सव्वतुअरे जाव सिद्धत्थए अ सरसं गोसीसचंदणं दिव्वं च सुमणदाम गिण्हंति । एवं सोमणसपंडगवणाओ अ सव्वतुअरे जाव सुमणदामं दद्दरमलयसुगंधिए गंधे गेण्हंति गेण्हेत्ता एगओ मिलायंति मिलाएत्ता जेणेव सामी तेणेव उवागच्छंति उवागच्छित्ता तं महत्थं जाव तित्थयराभिसेअं उवट्ठवेंति ॥

'तते ण से' इत्यादि । ततस्तदनन्तरं सोऽच्युतो देवेन्द्रो देवराजो महान् देवाधिप सर्व्वेष्वपीन्द्रेषु परमोत्कृष्टत्वात् आभियोगिकान् देवान् शब्दापयति शब्दापयित्वा च एवमवादीत्—क्षिप्रमेव भो देवानुप्रिया ! 'महत्थ'ति महानर्थो मणिकनकरत्नादिरूप उपयुज्यमानो यस्मिन् स महार्थस्त तथा 'महग्घ'ति । महान् अर्घ—पूजा यत्र स त 'महरिह'ति । महमुत्सवमर्हतीति महार्हस्त विपुल—विस्तीर्णं तीर्थकराभिषेक-तीर्थंकरजन्माभिषेकसामग्रीमुपस्थापयत सज्जीकुरुत । 'तते णमि' त्यादि । ततस्ते आभियोगिका देवा हृष्टतुष्टा यावत्प्रतिश्रुत्य यावत्करणात् करतलपरिगृहीत शिरस्यावर्त्तं मस्तके

ऽञ्जलिं कृत्वा 'एवं देवे'त्यादि सग्रहः । 'उत्तरे'त्यादि । उत्तरपूर्वं दिग्विभागमीशानकोणमपक्रम्य-गत्वा वैक्रियसमुद्घातेन यावत्समवहत्य अष्टसहस्रमष्टाधिकं सहस्रं सौवर्णिककलशानाम् । एवं रूप्यमयानां, मणिमयानां, सुवर्णरूप्यमयानां, सुवर्णमणिमयानां, रूप्यमणिमयानां, सुवर्णरूप्यमणिमयानां, भौमेयानां च प्रत्येकमष्टसहस्रम् अष्टसहस्रं वन्दनकलशानाम् । एवं भृङ्गाराणामादर्शानां स्थालानां पात्रीणां सुप्रतिष्ठानां—पात्रविशेषाणां चित्राणां रत्नकरण्डकानां पुष्पचङ्गेरीणाम् । 'एवं जहा सूरिआभस्से'त्यादि । एवं यथा सूर्याभस्य देवस्य वक्तव्यतायां सर्वचङ्गेर्यो—माल्यचङ्गेरीचूर्णचङ्गेरीप्रभृतयः । तथा सर्वपटलकानि—पुष्पपटलकमाल्यपटलकप्रभृतयः । 'विसेसिअ'त्ति । विशेषिततराणि-अतिविशिष्टतराणि भणितव्यानि तथा सिंहासनछत्रचामरतैलसमुद्गक यावत्सर्षपसमुद्गकाः तालवृन्ता यावदष्टसहस्रं कडुच्छुकानां धूपकडुच्छुकानां विकुर्वित्वा 'साभाविए'त्ति । स्वाभाविकान् विकुर्विताश्च कलशान् यावत्कडुच्छुकांश्च गृहीत्वा यत्रैव क्षीरोदसमुद्रस्तत्रैवागत्य क्षीरोदकं गृह्णन्ति गृहीत्वा च यानि तत्रोत्पलानि पद्मानि यावत् सहस्रपत्राणि तानि गृह्णन्ति यावत्करणात् कुमुदनलिनादीनां सग्रहः । एवमग्रेऽपि परिभावनीयम् । एवं पुष्करोदात्समुद्रादुदकादि गृह्णन्ति 'जाव'त्ति । यावत् भरतैरावताता-भरतैरावतसम्बन्धिनां मागधादीनां तीर्थानाम् उदकं मृत्तिकां च गृह्णन्ति । एवं गङ्गादीनां—गङ्गासिन्धुरक्तारक्तावतीप्रभृतीनां महानदीनां जलमुभयतटमृत्तिकां च गृह्णन्ति । यावत्क्षुल्लहिमवतोहिमवच्छिखरात् सर्वतुवरान् सर्वकषायान् यावत्सर्वसिद्धार्थकांश्च गृह्णन्ति गृहीत्वा च पद्मह्रदात् ह्रदोदकमुत्पलादीनि च गृह्णन्ति । एवं सर्वकुलपर्वतेषु-महाहिमवदादिषु, वृत्तवैताढ्येषु-गन्धापात्यादिषु, सर्वमहाह्रदेषु तिगिञ्छिकेसरिप्रभृतिषु, सर्ववर्षेषु—हैमवतादिषु, सर्वचक्रवर्त्तिविजयेषु—कच्छादिषु, वक्षस्कारपर्वतेषु, अन्तरनदीषु विभाषेत—सर्वेष्वप्येतेषु यथासम्भवं जलमृत्तिकादिग्रहणं वक्तव्यमित्यर्थः । 'जाव'त्ति । यावदुत्तरकुरुषु यावत्करणात् देवकुर्वादिसङ्ग्रहः । यावत्सुदर्शनभद्रशालवने । तत्र सुदर्शनो—मेरुस्तत्र तुवरान् यावत्सिद्धार्थकांश्च गृह्णन्ति यावत्करणात्पुष्पादीनां सङ्ग्रहः । एवं नन्दनवनात् सर्वतुवरान् यावत्सिद्धार्थकांश्च सरसं गोशीर्षचन्दनं दिव्यं च सुमनोदाम गृह्णन्ति । एवं सौमनसपण्डकवनाभ्यामपि च भाव्यं । तत्र 'दद्दर'त्ति । दर्दरश्चीवरावनद्धं कुण्डिकादिभाजनमुखं तेन गालितं तत्र पक्वं वा यन्मलयोद्भवतया प्रसिद्धत्वात् मलय—श्रीखण्डं येषु तान् सुगन्धिकान् परसगन्धोपेतान् गन्धान् गृह्णन्ति । गृहीत्वा चैकत्र मिलन्ति मिलित्वा च यत्रैव स्वामी भगवांस्तीर्थंकरस्तत्रैवोपागच्छन्त्युपागत्य च तं महार्थं यावत्तीर्थंकराभिषेकं तत्सामग्रीमित्यर्थः । उपस्थापयन्ति-उपनयन्ति ॥

तए णं से अच्चुए देविंदे दसहिं सामाणिअसाहस्सीहिं, तायत्तीसाए तायत्तीसएहिं, चउहिं लोगपालेहिं, तिहिं परिसाहिं, सत्तहिं अणिएहिं, सत्तहिं अणिआहिवईहिं, चत्तालीसाए आयरक्खदेवसाहस्सीहिं सद्धिं संपरिवुडे जाव तेहिं साभाविएहिं वेउव्विएहिं अ-वरकमलपइट्ठाणेहिं, सुरभिवरवारिपडिपुण्णेहिं, चंदणकयचच्चाएहिं, आविद्धकंठेगुणेहिं, पउमुप्प-

लपिहाणेहिं, करयलसुकुमालपरिग्गहिएहिं अट्ठसहस्सेण सोवण्णिआणं कलसाणं जाव अट्ठसहस्सेणं भोमिज्जाणं जाव सव्वोदएहिं सव्वमट्टिआहिं सव्वतुवरेहिं जाव सव्वोसहिसिद्धत्थएहिं सव्विड्ढीए जाव रवेणं महया महया तित्थयराभिसेएणं अभिसिंचंति । तते णं सामिस्स महया महया अभिसेगंसि वट्टमाणंसि इंदाईआ देवा छत्तचामरकलसधूवकडुच्छुअपुप्फगंध जाव हत्थगया हट्ठतुट्ठ जाव वज्जसूलपाणी पुरतो चिट्ठंति पंजलिउडा । एवं विजयाणुसारेण जाव अप्पेगइआ देवा आसिअसंमज्जिओवलित्तं करेंति जाव गंधवट्टिभूअं अप्पे० हिरण्णवासं वासंति । एवं सुवण्णरयणवइरआभरणपत्तपुप्फ-फलबीअमल्लगंधवण्ण जाव चुण्णवासं वासंति । अप्पे० हिरण्णविहिं भाएंति । एवं जाव चुण्णविहिं भाएंति । अप्पे० चउव्विहं वज्जं वाएंति । तं०-ततं विततं घणं झुसिरं । अप्पे० चउव्विहं गेअं गायंति । तं०-उक्खित्तं पयत्तं मंदं रोइआवसाणं । अप्पे० चउव्विहं णट्टं णच्चंति । तं०-अंचितं दुअं आरभडं भसोलं । अप्पे० चउव्विहमभिणयमभिणेंति । तं०-दिट्ठंतिअं पाडिस्सुतिकं सामंतोवणिवातिअं लोगमज्झावसाणिअं । अप्पे० बत्तीसतिविहं दिव्वं णट्टविहिं उवदंसेंति । अप्पे० उप्पयणिवायप्पवत्तं संकुचिअपसारिअं जाव संभंतं नाम-नट्ट-विहिं उवदंसेंति । अप्पे० पीणेंति । एवं बुक्कारेंति तंडवेंति लासेंति अप्फोडेंति वग्गंति सीह-णायं णदंति । अप्पे० सव्वाइं करेंति । अप्पे० हयहेसिअं । एवं हत्थिगुलगुलाइतं रहघण-घणाइतं । अप्पे० तिण्णिवि । अप्पे० उच्छलेंति । अप्पे० पच्छोलेंति । अप्पे० तिवइं अच्छेदंति, पाददद्दरं करेंति, भूमिचवेडं दलेंति । अप्पे० महया सद्देणं रावेंति । एवं संजोगा विभासिअव्वा । अप्पे० हक्कारेंति । एवं पुक्कारेंति थक्कारेंति ओवयंति उप्पयंति परिवयंति जलंति तवंति गज्जंति विज्जुआयंति वासिंति देवुक्कलिअं करेंति एवं देवकहकहगं करेंति । अप्पे० दुहदुहगं करेंति । अप्पे० विकिअभूतादिरूवाइं विउव्वित्ता पणच्चंति । एवमादि विभासेज्जा । जहा विजयस्स जाव सव्वओ समंता आहावेंति पहावेंति ॥

'तते णमि'त्यादि । ततः सोऽच्युतेन्द्रो दशभिः सामानिकसहस्रैरित्यादि यावत्सार्द्धं सम्परिवृत-यावत्तैः स्वाभाविकैर्विकुर्वितैश्च, वरकमलप्रतिष्ठानैः, सुरभिवरवारिप्रतिपूर्णैः, चन्दनकृतचर्चाकैः, आविद्धकण्ठेगुणैः — कण्ठाऽऽरोपितरक्तसूत्रतन्तुभिरित्यर्थः । पद्मोत्पलपिधानैः, करतलसुकुमाल-परिगृहीतैः, अनेकसहस्रैः सङ्ख्याकैः कलशैरितिगम्यं । तानेव व्यक्तिकरोति—'अट्ठसहस्सेणे'-त्यादि 'जाव रवेण'ति पर्यन्तं सुगमं । यावच्छब्दपरिगृहीतानामर्थानां तु वक्तव्यता प्रागुक्तानु-

सारेण स्वत एव कर्त्तव्या । 'महया महय'त्ति । महता महता तीर्थकराभिषेकेणाऽभिषिञ्चन्ति । 'तते ण सामिस्से'त्यादि । ततः स्वामिनस्तीर्थंकरस्य 'महया महया'इति । अतिशयेन महत्यभिषेके वर्त्तमाने इन्द्रादिका देवाः छत्रचामरकलशधूपकडुच्छुकपुष्पगन्ध यावद्हस्तगता । अत्र यावत्करणात् शतपत्रादि सङ्ग्रहः । हृष्टतुष्ट यावत् वज्रशूलपाणयः पुरतोऽग्रतस्तिष्ठन्ति । प्राञ्जलिपुटा सन्तः यावत्करणात्—'चित्तमाणदिआ' इत्यादि । 'एव विजये'त्यादि । एव विजयानुसारेण जीवाभिगमोक्तविजयदेववक्तव्यतानुसारेणेत्यर्थं । कियद्दूरम् ? इत्याह—जाव अप्पेगइअ'त्ति । यावदप्येकका देवा आसिक्तसमार्ज्जितोपलिप्तमर्थात्पण्डकवन कुर्व्वन्ति यावद्गन्धवर्त्तिभूत कुर्व्वन्तीति अत्रापि सम्बन्धनोय । यावत्करणात् अप्येकका देवा पण्डकवन मञ्चातिमञ्चकलित कुर्व्वन्तीत्यादि । अप्येकका देवा हिरण्यवर्षं वर्षंति । एव सुवर्णरत्नवज्राऽऽभरणपत्रपुष्पफलबीजमाल्यगन्धवर्ण यावच्चूर्ण वर्ष वर्षन्ति । अप्येकका देवा हिरण्यविधि—मङ्गलरूपहिरण्यप्रकार भाजयन्ति—शेषदेवेभ्यो विभज्य ददतीत्यर्थं । एव यावच्चूर्णविधि यावत्करणात् सुवर्णरत्नवज्राऽऽभरणपुष्पमाल्यगन्धवस्त्रविधिभाजनमपि ग्राह्यम् । अप्येककाश्चतुर्विध वाद्य वादयन्ति । तद्यथा—तत-मृदङ्गपटहादि, वितत-वीणादिक, घन-कसिकादि, शुषिर काहलादि । अप्येककाश्चतुर्विधं गेय गायन्ति । तद्यथा-उत्क्षिप्तं-प्रथमता समारभ्यमाण, प्रवृत्तम्—उत्क्षेपावस्थातोऽतिक्रान्तनागूभरेण प्रवर्त्तमानं, 'मन्द'ति-मध्यभागे मूर्च्छनादिगुणोपेततया मन्द मन्द घोलनात्मक, 'रोइअ'त्ति । रोचितावसान-रोचित यथोचितलक्षणोपेततया भावितम् एवविधमवसान यस्य तद्रोचितावसान क्वचिदादर्शे 'रोइअगमि'ति दृश्यते । तत्र रोचितकमिति भाव. । अप्येकका देवाश्चतुर्विध नृत्य नृत्यन्ति । तद्यथा—अञ्चित, द्रुतम्, आरभट, भसोल चेति नामकम् । अप्येकका देवाश्चतुर्विधमभिनयमभिनयन्ति । तद्यथा—दार्ष्टान्तिक, प्रातिश्रुतिक, सामान्यतो विनिपातिक, लोकमध्यावसानिकम् । एते नाटचभेदा अभिनयभेदाश्च तद्विधिज्ञेभ्योऽवसातव्या । अप्येकका देवा द्वात्रिंशद्विध दिव्य नाटचविधिमुपदर्शयन्ति । ते च स्वस्तिक-श्रीवत्साद्यष्टमङ्गलाकाराभिनयात्मकप्रथमनाटचविध्यादयोद्वात्रिंशन्नाटचविधयः क्रमेण यथा सूर्याभदेवेन भगवत श्रीमहावीरस्य पुरस्ताद्विहितास्तथाऽत्रापि देवाः कुर्व्वन्तीतिभाव । अप्येकका देवाः उत्पातपूर्व्वोनिपात प्रवृत्तो यस्मिन् स उत्पातनिपातप्रवृत्तस्त सङ्कुचितप्रसारितं यावत्सम्भ्रान्त नाम नाट्यविधि सामान्यतो नर्त्तनविधि द्वात्रिंशद्विध्युत्तीर्णमुपदर्शयन्ति । यावत्करणात् 'रिआरिअमि'त्यादि दृश्य । तत्र 'रिआरिअ'ति । गमनाऽऽगमनमिति । अप्येकका देवा पीनयन्ति-पीनमात्मान कुर्व्वन्ति स्थूला भवन्तीत्यर्थ । एव 'बुक्कारेति' । बूत्कार कुर्व्वन्ति । अप्येकका.—'ताडवय'ति । ताण्डवरूप नृत्य कुर्व्वन्ति । अप्येकका देवा लास्ययन्ति-लास्यरूपं नृत्य कुर्व्वन्ति । अप्येकका आस्फोटयन्ति भूम्यादिकमिति गम्यते । अप्येककाः देवा वल्गन्ति । अप्येककाः सिंहनाद नदन्ति । अप्येकका. 'सव्वाइ'ति । पीनत्वादीनि सर्व्वाण्यपि कुर्व्वन्ति । अप्येकका देवा हयहेषितं कुर्व्वंति । एवमप्येकका देवा हस्तिगडगडायित कुर्व्वन्ति । केचिद्देवा रथघणघणायित कुर्व्वन्ति । केचित् त्रीण्यपि—हयहेषितादीनि कुर्व्वन्ति । केचिदुच्छलन्ति । केचित्प्रोच्छलन्ति । केचित् त्रिपदीकामाच्छिन्दन्ति । केचित् पाददर्द्दर कुर्व्वन्ति । केचिद्भूमिचपेटा ददति । केचिन्महता महताशब्देन रवन्ति—

शब्द कुर्वन्ति । एव सयोगा अपि त्रयाणा चतुर्णां वा सयोगा विभाषितव्या. । केचिद्धक्कारेन्ति–हक्कार कुर्वन्ति । एवमपि केचित् पूत्कार कुर्वंति, केचित् धक्कारन्ति–धक्क इत्येव महता शब्देन शब्द कुर्वंति, केचिदवपतन्ति, केचिदुत्पतन्ति, केचित्परिपतन्ति-तिर्यक् निपतन्ति, केचित् ज्वलन्ति । ज्वालमालाऽऽकुला भवन्ति, केचित्तपन्ति, केचिद्गर्जयन्ति, केचित् विद्युत कुर्वन्ति, केचिद्वर्षं वर्षन्ति, केचिद् वोत्कलिका देवाना वातस्येवोत्कलिका ता कुर्वन्ति, केचिद् दा 'देवकहकहग'ति । प्रभूताना देवाना प्रमोदभरवशत स्वेच्छावचनैर्बोलकोलाहलो देवकहकहकस्त कुर्वन्ति । केचित् 'दुहदुहक्क' नामानुकरणशब्दस्त कुर्वन्ति । केचित् 'विकिअ'त्ति । विकृतानि–भयङ्कराणि भूतादिरूपाणि विकुर्वित्वा प्रणृत्यन्ति–प्रकृष्ट नृत्यन्ति । एवमादि विभाषयेत्–प्ररूपयेत् । यथा विजयदेवस्येन्द्राऽभिषेकाधिकारे भणितम् । कियद्दूरम् ? इत्याह–यावत्पर्व्वत समन्तादाधावन्ति प्रधावन्ति यावत्करणात्–अप्येकका चेलोत्क्षेपं कुर्वन्ति केचिद्वन्दनकलशहस्तगता" इत्यादि यावत्पण्डकवने हर्षवशविसर्प्पद्हृदया इतस्ततोऽहमहमिकया प्रधावन्तीति द्रष्टव्यम् ॥

**तए णं से अच्चुए इंदे सपरिवारे सामिं तेणं महया जाव अभिसेएणं अभिसिंचदि । अभिसिंचित्ता करयलपरिग्गहिअं जाव मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेंति वद्धावेत्ता ताहिं इट्ठाहिं जाव जयजयसद्दं पउंजति पउंजित्ता जाव पम्हलसुकुमालसुरहीए गंधकासाइए गायाइं लूहेइ । एवं जाव कप्परुक्खगंपिव अलंकिअविभूसिअं करेइ जाव णट्टविहिं उवदंसेति उवदंसेत्ता अच्छेहिं सण्हेहिं रययामएहिं अच्छरसा तंदुलेहिं भगवतो सामिस्स पुरतो अट्ठट्ठ–मंगले आलिहत । तं जहा–**

**दप्पणभद्दासणवद्धमाणवरकलसमच्छसिरिवच्छा । सोत्थिअ णंदावत्ता लिहिआ अट्ठट्ठमंगलया ॥ १ ॥ काउण करेइ उवयारं । किंते ? पाडलमल्लिअचंपकअसोगपुण्णागचूअमंजरिणवमालिअबउलतिलगकणवीरकुंदकोरंटपत्तदमणगवरसुरभिसुगंधगंधिगस्स कयग्गाहगहिअकरयलपब्भट्ठविप्पमुक्कसस दसद्धवण्णस्स कुसुमणिगरस्स । तत्थ चित्तं जाणुस्सेहपमाणमेत्तं ओहिणिकरं करेति करेत्ता चदप्पहरयणवइरवेरुलिअविमलदंडं कंचणमणिरयण भत्तिचित्तं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवगंधुत्तमाणुविद्धं च धूमवट्टिंविणिम्मुअंतं वेरुलिअमय कडुच्छुग पग्गहित्तु पयतेणं धूवं दाउण जिणवरिंदस्स सत्तट्ठ पयाइं ओसरित्ता दसंगुलिकं अंजलिं करिअ मत्थगंमी पयत्तो अट्ठसय विसुद्धगंथजुत्तेहिं महावित्तेहिं अ पुणरुत्तेहिं अत्थजुत्तेहिं संथुणइ संथुणित्ता वामं जाणुं अंचेति अंचेत्ता जाव करयलपरिग्गहिअं मत्थए अंजलिं कट्टु एवं वयासी-णमोत्थु ते सिद्ध ! बुद्ध ! णीरय ! समण ! समाहिअ ! समत्त ! समजोगी ! सल्लगत्तण ! णिब्भय ! णीरागदोस ! णिम्मम ! णिस्संग ! णीसल्ल ! माणमूरण**

गुणरयणसीलसायर ! मणंत ! मप्पमेय ! भविअधम्मवरचाउरंतचक्कवट्टी ! णमोत्थु ते अरहतोत्ति कट्टु वंदति णमंसति वंदित्ता नमंसित्ता णच्चासण्णे णातिदूरे सुस्सूसमाणे जाव पज्जुवासति । एवं जहा अच्चुअस्स तहा जाव ईसाणस्स वि भाणिअव्वं । भवणवइ-वाणमंतर जोइसिआ य सूरपज्जवसाणा सएणं सएणं परिवारेणं पत्तेअं पत्तेअं अभिसिंचति । तते णं से ईसाणे देविंदे देवराया पंच ईसाणे विउव्वति विउव्वित्ता एगे ईसाणे भगवं तित्थगरं करयलपुडेण गेण्हति गेण्हेत्ता सीहासणवरगए पुरत्थाभिमुहे सण्णिसण्णे एगे ईसाणे पिट्ठओ आयवत्तं धरेइ, दुवे ईसाणा उभओ पासिं चामरुक्खेवं करेंति, एगे ईसाणे पुरतो सूलपाणी चिट्ठति । तते णं से सक्के देविंदे देवराया आभिओगे देवे सद्दावेइ सद्दावेत्ता एसोवि तह चेव अभिसेआणत्तिं देइ तेवि तह चेव उवणेंति । तते ण से सक्के देविंदे देवराया भगवतो तित्थगरस्स चउद्दिसिं चत्तारि धवलवसहे विउव्वति । सेए संखतलविमलनिम्मलदधि-घणगोखीरफेणरययणिकरप्पगासे पासाईए दरसणिज्जे अभिरूवे पडिरूवे । तते णं तेसिं चउण्हं धवलवसभाणं अट्ठसु सिंगेहिंतो अट्ठ तोअधाराओ णिग्गच्छंति । तते णं ताओ अट्ठ तोअधाराओ उद्धं वेहायसं उप्पयंति उप्पयित्ता एगतो मेलायंति मेलायित्ता भगवतो तित्थगरस्स मुद्धाणंसि णिपतंति । तते णं से सक्के देविंदे देवराया चउरासीए सामणिअसा-हस्सीए एअस्सवि तह चेव अभिसेओ भाणिअव्वो जाव णमोत्थु ते अरहओत्तिकट्टु० ॥

'तते ण से' इत्यादि । तत. सोऽच्युतेन्द्र सपरिवार'-सामानिकादिपरिवारसहित. 'सामि'ति । स्वामिन-तीर्थंकर तेन महता महता यावत् अभिषेकेणाभिषेकसामग्र्या अभिषिञ्चति अभिषिच्य करतल-परिगृहीतं या वन् मस्तकेऽञ्जलि कृत्वा जयेन विजयेन वर्द्धापयति । यावत्करणाद् 'दसनहमि'त्यादि । वर्द्धापयित्वा च 'ताहिं'ति । ताभि -शास्त्रोक्ताभिरिष्टाभिर्याविज्जयजयशब्दं प्रयुङ्क्ते । यावत्करणात् 'कताहिमि'त्यादि । जाव 'पम्हल'त्ति । यावत्पक्ष्मलसुकुमारया सुरभ्या गन्धकाषायिकया लघुशाटिकयेति गम्य । गात्राणि रूक्षयति । यावत्करणात् 'जयजय नदा जयजय भद्दा भद्द ते अजिअं जिणाहि, जिअं च पालेहि, जिअमज्झे वसाहि । इंदो विव देवाणमि'त्यादि स्तुतिपूर्व्वकं जयजयशब्दप्रयुञ्जनी ग्राह्या। रूक्षयित्वा 'एव कप्परुक्खगपिव'त्ति । एव प्रागुक्तस्तुत्यादिप्रकारेण तत्पूर्व्वकमित्यर्थ । यावत्कल्पवृक्ष-कमिवालङ्कृतविभूषित करोति । यावत्करणात् सरसेन गोशीर्षचन्दनेन गात्राण्यनुलिम्पति अनुलिम्प्य च नाशिकानि श्वासवाह्य चक्षुर्हर स्पर्शेन हयलालापेलवातिरेक धवल कनकखचितान्तकर्म्म आकाशस्फ-टिकवन्निर्म्मल दिव्यमहत देवदूष्ययुगल परिधापयति परिधाप्य चाभियोगैर्देवैरालङ्कारिकभाण्डमानाय्य तीर्थंकरयोर्यहाराऽर्द्धहारैकावलीमुक्तावलीरत्नावलीत्राहुरक्षककटकाङ्गदकेयूरकटिसूत्रमुद्रिकादशककुण्डल-

मुकुटादिभिः तया सकलपार्थिवरत्नसारेण देवेन्द्रमनुष्येन्द्रमूर्द्धकृतनिवासेन निःशेषदोषापहारिणा प्रवर-लक्षणोपेतेन चूडामणिना च पूरिमसङ्घातिमपुष्पमाल्येन चेति सङ्ग्रह. । 'जाव नट्ट'त्ति । यावन्नाट्य-विधिमुपदर्शयति । यावत्करणात् प्रागुक्ताः समस्ता अपि नाट्यविधियो ग्राह्याः । नाट्यविधिमुप-दर्श्य च अच्छै स्वच्छै श्लक्ष्णैर्मसृणै रजतमयै अच्छरसैः—प्रत्यासन्नवस्तुप्रतिविम्बाऽऽधार भूतैरिव निर्म्मलैस्तन्दुलैर्दिव्यतन्दुलैरित्यर्थं । भगवत' स्वामिनः पुरस्तात् 'अट्ठट्ठ'त्ति । अष्टावष्टमङ्गल-कानि आलिखति । तद्यथेत्यादि प्राग्वत् । अष्टौ मङ्गलकानि कृत्वा च करोत्युपचार-भगवत्प्रतिपत्ति-लक्षणम् अथोक्तामेवार्थं व्यक्तीकरोति—किते'इत्यादि । किते इत्यखण्डमुपदर्शनार्थे 'पाडल'त्ति । पाटल-मल्लिकाचम्पकाशोकपुन्नागचूतमञ्जरीनवमालिकाबकुलतिलककरवीरकुन्दकुब्जककोरण्टकपत्रदमनकाना यथायोग वृक्षपत्रपुष्पाणा ये वरा—प्रधाना. सुरभय -सौरभ्यवत. सुगधा.—शोभनचूर्णास्तेषा गन्धो यस्मिन् स तथा तस्य कचग्रहगृहीतकरतलप्रभ्रष्टविप्रमुक्तस्य दशार्द्धवर्णस्य कुसुमनिकरस्य 'तत्थ'त्ति । तत्र भगवत परितो भूप्रदेशे चित्र-चित्रयुक्त जानूत्सेधप्रमाणमात्र 'ओहि'त्ति । अवधिना मर्यादया निकरं-विस्तारं करोति कृत्वा च 'चदप्पह'त्ति । चन्द्रप्रभादिरत्नमयविमलदण्ड 'णाणामणी'त्यादि प्राग्वत् । यावत् धूपकडुच्छुकं प्रगृह्य प्रयतः सन् 'ण'ति प्राग्वत् । जिनवरेन्द्राय धूप दत्वा सप्ताष्टपदानि पश्चादपसृत्य दशाङ्गुलिकमञ्जलिं मस्तके कृत्वा प्रयतः सन् 'अट्ठसते'त्यादि । विशुद्धो—निर्म्मलो लक्ष-णदोषरहितो ग्रन्थ.-ग्रन्थसन्दर्भस्तेन युक्तानि विशुद्धग्रन्थयुक्तानि ततोऽष्टशत च तानि विशुद्धग्रन्थयुक्तानि च तैर्महावृत्तै शोभनशब्दार्थनिबद्धकाव्यै अपुनरुक्तै'—पौनरुक्त्यदोषरहितैः । यत्तु-स्तुतौ पौनरुक्त्य न दोषायेति वचन तद्देवानामष्टोत्तरशतकाव्यरचनातिरिक्तस्थलेऽवसातव्यम् । अन्यथोक्तपदानुपपत्तेः। अथवा-पाठतोऽपुनरुक्तताऽवसातव्या । अर्थयुक्तैरर्थसारै सस्तौति सस्तुत्य च वाम जानु अञ्चत्युत्पाटयति । अञ्चित्वा च यावत्करतलपरिगृहीत मस्तकेऽञ्जलिं कृत्वा एवमवादीत्—यावत्करणाद्दक्षिण जानु धरणी-तले निपातयति निपातयित्वा च त्रीन् वारान् मूर्द्धान धरणीतले नमयति नमयित्वा चेषत्प्रत्युन्नमयति प्रत्युन्नम्य च कटकत्रुटितस्तम्भितौ भुजौ सहरति संहृत्येति सङ्ग्रह' । यदवादीत्तदाह—'नमोत्थु ते सिद्धे' त्यादि । नमोऽस्तु ते-तुभ्य हे सिद्ध !—परिनिष्ठितार्थं ! । एव बुद्धादीन्यपि पदानि सम्बोधनपरतया व्याख्येयानि । तत्र हे बुद्ध !—परिज्ञातसकलवस्तुतत्व !, हे नीरज —बद्ध्यमानकर्म्मरजोरहित !, हे श्रमण ! तपस्विन् !, हे समाहित !—ज्ञानादिसमाधियुक्त !, हे समाप्त ! सम्यग् समीहितमर्थं प्राप्त !, हे समयोगिन् ! समा अकुशला उदीरका योगा—मनोवाक्कायलक्षणा यस्य तस्य सम्बोधन । हे शल्य-कर्त्तन ! शल्यानि-मायादीनि कृन्ततीति शल्यकर्त्तन । हे निर्भय ! इहलोकादि सप्त भयरहित !-हे नीरागद्वेष !-निर्गतो रागो मायालोभलक्षणो द्वेष —क्रोधमानलक्षणश्च यस्मात् स तथा हे निर्मम ! ममत्वरहित !, हे निस्सङ्ग !—पुत्रकलत्रादिषु प्रतिबन्धरहित !, हे निःशल्य !—विशेषतोऽप्यैहिकाऽऽ-मुष्मिकाशसारहित !, हे मानमूरण सर्पगर्वोद्दलन !, गुणरत्नशीलसागर !, हे अनन्त !—अनन्तज्ञाना-त्मकत्वात्, हे अप्रमेय !-छद्मस्थज्ञानाऽगोचरत्वात्, मकारावलाक्षणिको । हे भव्यचातुरन्तचक्रवर्त्तिन् ! नमोऽस्तु ते-तुभ्य । कुत ? इत्याह—'अरहतो'त्ति । यतस्त्वमर्हन् त्रिभुवनपूज्योऽसि । नम शब्दस्य पौन-

त्वस्य स्तुत्यर्थत्वाददोष । इतिकट्टु-इतिकृत्वा वन्दते नमस्यति वन्दित्वा नमस्यित्वा च नात्यासन्नो नातिदूरश्च शुश्रूषन् यावत्पर्युपासते। अथ शेषेन्द्रविषयेऽतिदेशमाह-'एव जहे'त्यादि । एवं प्रागुक्तप्रकारेण यथाऽच्युतेन्द्रस्य भगवदभिषेककरण तथा यावदीशानस्यापि भणितव्यम् । यावत्करणात् पश्चानुपूर्व्या प्राणतेन्द्रादीनामपि भणितव्यम् । 'भवणवइ" इत्यादि । भवनपत्यादि सूर्यपर्यवसाना. चतुःपञ्चाशदपीन्द्रा एवमेव स्वकीयेन स्वकीयेन परिवारेण प्रत्येक प्रत्येक अभिषिञ्चन्ति । अथैव त्रिषष्टयापीन्द्रै रभिषेके कृते क्षेत्राधिपतित्वेन शक्रस्य तदनुतत्करणविधि प्रतिपिपादयिषु प्रथममीशानस्य कृत्यमाह- 'तते ण से' इत्यादि । ततस्तदनन्तरमीशानो देवेन्द्रो देवराज पञ्चेशानान् विकुर्व्वति विकुर्व्वित्वा एक ईशानस्तीर्थकर करतलपुटेनगृह्णाति गृहीत्वा सिंहासनवरगत पूर्व्वाभिमुख सन्निषण्ण । एक पृष्ठत आतपत्र धरति । द्वावीशानावुभयोः पार्श्वयोश्चामरोत्क्षेप कुरुत । एक पुरस्ताद् शूलपाणिस्तिष्ठति । 'तते ण से'इत्यादि । तत स शक्र आभियोगिकान् देवान् शब्दापयित्वा एषोऽपि शक्रोऽपि तथैव अभिषेकाऽऽज्ञप्ति-अभिषेकसामग्री सज्जीकर्त्तुमाज्ञा ददाति यथाऽच्युतेन्द्र पूर्व्व दत्तवान् 'तेवि तह'त्ति । तेऽप्याभियोगा देवा अपि तथैवाच्युतेन्द्राभियोगिका इवोपनयन्ति-अभिषेकसामग्रीमुपस्थापयन्ति । 'तते ण से' इत्यादि । ततः स शक्रश्चतसृषु दिक्षु धवलवृषभानुत्तमजातीयवृषभान् विकुर्वति । कि लक्षणान् ? श्वेतान् । श्वेतत्वमेवोपमया दढयति 'सखतले'त्यादि । शङ्खतल-शङ्खस्योपरितनो भाग शेष व्यक्त यावत्प्रतिरूपान् । तते ण तेसि मि'त्यादि । ततस्तेषा चतुर्णां धवलवृषभाणाम् 'अट्ठमु'त्ति । प्राकृतत्वात् सप्तमी पचम्यर्थे तेनाष्टभ्य शृङ्गेभ्य एकैकस्मात् शृङ्गादेकैकस्या धाराया निर्गमात् अष्टौ तोयधारा निर्गच्छन्ति 'तएण ताओ'ति । ततस्ता तोयधारा ऊर्ध्वं वेहाय-आकाश प्रत्युत्पतन्ति ऊर्ध्वं गच्छन्तीत्यर्थ. । ऊर्ध्वमुत्पत्यैकत्र मिलन्ति मिलित्वा च भगवतस्तीर्थंकरस्य मूर्ध्नि निपतन्ति । 'तते ण से'इत्यादि । 'एअस्से'ति । एतस्यापि-शक्रस्यापि तथैवाऽच्युतेन्द्रवदभिषेको भणितव्य । कियद्दूरम् ? इत्याह- 'जाव नमोत्थु ते' । इत्यादि ॥

**तते णं से ईसाणे देविंदे देवराया पंच मक्के विउव्वति विउव्वित्ता एगे मक्के भगवं तित्थगरं करयलपुडेण गिण्हति । एगे सक्के पिट्ठओ आयवत्तं धरेइ । दुवे सक्काउभओपासिं चामरुक्खेवं करेंति । एगे सक्के वज्जपाणि पुरतो पगच्छति । तते णं से मक्के चउरासीए सामाणिअसाहस्सीहिं जाव अण्णेहिं भवणवइ-वाणमतर-जोइसिअ-वेमाणिएहिं देवेहिं देवीहि अ सद्धिं संपरिवुडे सव्विड्ढीए जाव णादितरवेणं ताए उक्किट्ठाए जेणेव भगवओ तित्थगरस्स जम्मणणगरे जेणेव जम्मणभवणे जेणेव तित्थगरमाया तेणेव उवागच्छति उवागच्छित्ता भगवं तित्थगर माउए पासे ठवेति । तित्थगरपडिरूवग पडिसाहरति पडिसाहरित्ता ओसोवणिं पडिसाहरति पडिसाहरित्ता एग मह खोमजुअल कुडलजुअलं च भगवतो तित्थगरस्स उस्सीगमूले ठवेति ठवेत्ता एग मह सिरि दामगडं तवणिज्जलबूसग सुवण्णपयरगमंडिअ**

णाणामणिरयणविविहहारद्धहारउवसोभिअसमुदयं भगवतो तित्थगरस्स उल्लोअंसि णिक्खिवइ, तं णं भगवं तित्थगरे अणिमिसाए दिट्ठीए देहमाणे देहमाणे सुहंसुहेण अभिरममाणे चिट्ठति। ततेणं से सक्के देविंदे देवराया वेसमणदेवं सद्दावेति सद्दावेत्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिआ! बत्तीसं हिरण्णकोडीओ, बत्तीसं सुवण्णकोडीओ, बत्तीसं रयणकोडीओ, बत्तीसं णंदाइं, बत्तीसं भद्दाइं, सुभगे सुभगरूवजोव्वणगुणलावण्णे अ भगवतो तित्थगरस्स जम्मणभवणंसि साहराहि, साहरित्ता एअमाणत्तिअं पच्चप्पिणाहि। तते णं से वेसमणे देवे सक्केणं जाव विणएणं वयणं पडिसुणेइ, पडिसुणेत्ता जंभए देवे सद्दावेइ, सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिआ! बत्तीसं हिरण्णकोडीओ, जाव भगवओ तित्थगरस्स जम्मण-भवणंसि साहरह, साहरित्ता एअमाणत्तिअं पच्चप्पिणह। तते णं ते जंभगा देवा वेसमणेणं देवेणं एवं वुत्ता समाणा हट्ठतुट्ठ जाव खिप्पामेव बत्तीसं हिरण्णकोडीओ जाव भगवतो तित्थगरस्स जम्मणभवणंसि साहरंति, साहरित्ता जेणेव वेसमणे देवे तेणेव जाव पच्चप्पिणंति। तते णं से सक्के आभिओगे देवे सद्दावेइ, सद्दावेत्ता एवं वयासी-खिप्पामेव भो देवा! भगवतो तित्थगरस्स जम्मणणगरंसि सिंघाडग जाव महापहपहेसु महया महया सद्देणं उग्घोसेमाणा उग्घोसेमाणा एवं वदह-हंद! सुणंतु भो! भवंतो बहवे भवणवइ-वाणमंतर-जोइसिअ-वेमाणिआ देवा देवीओ अ जे णं देवाणुप्पिआ! तित्थगरमाऊए वा असुभं मणं पधारेइ, तस्स णं अज्जगमंजरिकाविव सत्तधा मुद्धाणं फुट्टतुत्तिकट्टु घोसणं घोसेह, घोसेत्ता एअमाणत्तिअं पच्च-प्पिणह। तते णं ते आभिओगिआ देवा जाव एवं देवोत्ति आणाए पडिसुणेंति, सक्कस्स देविंदस्स अंतिआओ पडिणिक्खमंति, पडिणिक्खमित्ता खिप्पामेव भगवओ तित्थगरस्स जम्मणनगरं सिंघाडग जाव एवं वयासी-हंद! सुणंतु भवंतो बहवे भवणवइ जाव जे णं देवाणु-प्पिआ तित्थगरस्स जाव फुट्टतुत्तिकट्टु घोसणं घोसेंति, घोसेत्ता एअमाणत्तिअं पच्चप्पिणंति। तते णं ते बहवे भवणवइ-वाणमंतर-जोइसिअ-वेमाणिआ देवा भगवतो तित्थगरस्स जम्मण-महिमं करेंति, करेत्ता जेणेव णंदीसरदीवे तेणेव उवागच्छंति, अट्ठाहिआओ महामहिमाओ करेंति करेत्ता जामेव दिसिं पाउब्भूआ तामेव दिसिं पडिगया॥

'पच सक्के'त्ति। तत इत्यध्याहार्यं। ततोऽभिषेकानन्तरं शक्रः पञ्च शक्रान् विकुर्वति, प्रयोजनं पाठसिद्धमेव। 'तते ण से' इत्यादि। ततः स शक्रश्चतुरशीत्या सामानिकसहस्रैरित्यादि यावत् तीर्थ-

करप्रतिरूपक प्रतिसंहरतीति पर्यन्त सुगमम् । संहृत्याऽवस्वापिनी निद्रा प्रतिसंहरति, प्रतिसंहृत्य च एकं महत् क्षोमयुगल-देवदूष्ययुगलं कुण्डलयुगलं च भगवतस्तीर्थंकरस्योच्छीर्षकमूले स्थापयति, स्थापयित्वा च एकं महान्त 'सिरिदामगंडं'ति । श्रीदाम्नां-शोभनवनमालानां काण्ड-समूहः श्रीदामकाण्डम् । अथवा गण्डो-दण्डक तद्वद्यराद् गण्ड एवोच्यते, श्रीदाम्नां गण्डः श्रीदामगण्डस्तं कीदृश ? 'तवणिज्ज'त्ति । तपनीय-रक्तसुवर्णं तन्मयो लम्बूसको-दाम्नोऽग्रिमभागे मण्डनविशेषो यस्य स तथा तं । सुवर्णप्रतरकमण्डित'-उभयो पार्श्वयो सुवर्णपत्रकेण मण्डितस्तं । 'णाणा'त्ति । नानारूपाणां मणीनां रत्नाना च ये विविधा-अनेकप्रकारा वर्णादिभिरिति गम्य हारा-अष्टादशसरिका अर्द्धहारा-नवसरिकास्तैरुपशोभितः समुदायो यस्य ता । भगवतस्तीर्थंकरस्योपर्युल्लोके निक्षिपति, दृष्टिपातनिमित्तमितिगम्य । अत आह-'तं णमि'ति । तद्दामगण्ड प्रति णमित्यलङ्कारे भगवांस्तीर्थंकरोऽनिमेषया दृष्टया पश्यन् पश्यन् सुखंसुखेनातिशयवत्सुखेनाभिरममाणः क्रीडंस्तिष्ठति । अथ शक्रो यत्कृतवास्तदाह 'तते ण से'इत्यादि । ततः स शक्रो वैश्रमण देवम्-उत्तरदिग्लोकपाल शब्दापयति, शब्दापयित्वा चैवमवादीत्-क्षिप्रमेव भो देवानुप्रिय ! द्वात्रिंशत हिरण्यकोटी.-द्वात्रिंशत्कोटिसौवर्णिकप्रमाणमघटितसुवर्णमित्यर्थ । द्वात्रिंशत सुवर्णकोटी , द्वात्रिंशत रत्नकोटीः, द्वात्रिंशत नन्दानि-नन्दन नन्द समृद्धि प्रमोदो वा, तत्कारणानि । तत्रोपविशना नराणा तथाविधवस्तुस्वभावात् अतर्किता समृद्धिः प्रमोदो वा जायतेऽतस्तत्कारणभूता आसनविशेषा अपि नन्दानि-नन्दासनानि भण्यन्ते । एव 'भद्दाइ'ति । भद्र-कल्याण तत्कारणान्यासनविशेषा अपि भद्राणि । तथा 'सुभगे'इत्यादि । सुभगानि-मनोहराणि सौभाग्यादीनि तत्र सौभाग्य-सर्वजनेष्टतारूपमाकृत्यादिलक्षण, यौवनमसम्पूर्णताजीर्णतादिस्वभावराहित्य, गुणा-शीतकाले उष्णता उष्णकाले च शीततेत्यादि लक्षणा , सुखहेतव , लावण्य च लवणिमा द्रष्टॄणां चक्षुरभ्रान्तिहेतुकान्त्यादियुक्तता । ततो द्वन्द्व पुस्त्वं च प्राकृतत्वात् । एतावन्ति वस्तूनि भगवतो भवने संहर-उक्तलक्षण जन्मभवन यथा भवति तथा कर्त्तव्यमित्यर्थ । उपलक्षणात् तत्र निवासिनो बन्धुजनादेरपि सौभाग्यादियुक्तता विधेया । तत्र यौवन वृद्धत्वेऽपि युवान इवाऽवभासन्ते तथा दिव्यशक्त्या विधेयमिति भाव । संहृत्य चैनामाज्ञप्तिकां प्रत्यर्प्पय । 'तते णमि'त्यादि । तत स वैश्रमणो देव शक्राऽऽदिष्टो विनयेन वचन प्रतिशृणोति, प्रतिश्रुत्य च जृम्भकान्-तिर्यक्जृम्भकाऽभिधानान् देवान् शब्दापयति,शब्दापयित्वा चैवमवादीत्-क्षिप्रमेव भो देवानुप्रिया ! द्वात्रिंशत हिरण्यकोटीर्यावद्भगवतस्तीर्थंकरस्य जन्मभवने संहरतेत्यादि प्राग्वत् । 'तते ण ते जभगा' इत्यादि सुगम । 'तते ण से सक्के' इत्यादि । महता महता शब्देनोद्घोषयन्त उद्घोषयन्त एव वक्ष्यमाण वदत, शेषं सुगम । 'हंदे'त्यादि । हन्तेति हर्षे शृण्वन्तु भवन्तो बहवो भवनपति-वानमन्तर-ज्योतिष्क-वैमानिका देवा देव्यश्च । 'जे ण'ति णमित्यलङ्कारे य कश्चित्तीर्थंकरस्य तीर्थंकरमातुर्वा अशुभ मन प्रधारयति-मनस्यशुभ चिंतयन्ति 'तस्स णमि'ति प्राग्वत् । 'अज्ज'त्ति । अर्ज्जकमञ्जरीवत् सप्तधा-सप्त प्रकारेणमूर्द्धा-मस्तक ण प्राग्वत् स्फुटत्विति कृत्वा घोषण घोषयत, घोषयित्वा एनामाज्ञप्तिका प्रत्यर्पयत । 'तते ण ते'इत्यादि । पच्चप्पिणतीति पर्यन्त । सुगमम् अथ सुमेरावेव जन्माभिषेकानन्तरं देवा यत्कुर्वन्ति तदाह-'तते ण ते' इत्यादि । ततस्ते बहवो भवनपत्यादयो देवा.

तीर्थंकरजन्माभिषेकमहिमा कृत्वा हर्षोद्रेकाद्भगवतस्तीर्थंकरस्य जन्ममहिमां—महोत्सवविशेष कुर्वन्ति कृत्वा च यत्रैव नन्दीश्वरवरो द्वीप: तत्रैवोपागच्छन्ति, तत्रोपागत्य अष्टाहिकामहिमा कुर्वन्ति । परं शक्रो भगवज्जन्मभवनान्नन्दीश्वरद्वीपे यातीति द्रष्टव्यम् । अष्टाहिकामहिमार्थं नियतस्थानविभागस्तु श्रीऋषभनिर्वाणाधिकारोक्तोऽवसातव्य: । अष्टाहिकामहिमा: कृत्वा 'जामेव'त्ति । यामेव दिशम-वलम्ब्येति गम्य प्रादुर्भूता यस्या दिश: सकाशान्नूऽप्रादुर्भूय मदंरगिरौ समागतास्तामेव दिश प्रतिगता.

इति जम्बूद्वीपप्रज्ञप्तिवृत्तौ तीर्थकृता जन्माभिषेको व्याख्यात. ( तृतीयोऽधिकार ) ।

# चतुर्थोऽधिकार:

अथ वलयाऽऽकारेण लवणसमुद्रेण परिवेष्टितो जम्बूद्वीप किं व्यवधानेनोताऽव्यवधानेन ? इति जिज्ञासुर्गौतम पृच्छति

**जंबुद्दीवस्स णं भते ! दीवस्स पएसा लवणसमुद्द पुट्ठा ? । हंता पुट्ठा, ते णं भंते ! किं जंबुद्दीवे दीवे, लवणसमुद्दे ? । गो० ! जंबुद्दीवे णं ते दीवे णो खलु ते लवणसमुद्दे । एवं लवणसमुद्दस्सवि पएसा जंबुद्दीवे पुट्ठा भाणिअव्वा । जंबुद्दीवे णं भंते ! दीवे जीवा उद्दाइत्ता उद्दाइत्ता लवणसमुद्दे पच्चायंति ? । गो० ! अत्थेगइआ पच्चायंति अत्थेगइआ णो पच्चायंति । एवं लवणस्सवि जंबुद्दीवे दीवे णेअव्वं ।**

'जबुद्दीवस्स ण भते ! 'इत्यादि । जबूद्वीपस्य भदन्त ! द्वीपस्य प्रदेशा -स्वसीमान्त्यरूपा लवण-समुद्रं स्पृष्टा ?-कर्त्तरि क्तस्तेन स्पृष्टवन्त: ? । काका प्रश्नावगति । पृच्छतश्चायमभिप्रायो - यदि स्पृष्टास्तर्हि वक्ष्यमाण पृच्छ्यते नो चेत्तर्हि नेतिभाव । भगवानाह—'हंते'त्यादि । हन्तेति प्रत्यवधारणे स्पृष्टा । एवमुक्ते पुन पृच्छति—'ते ण'ति । णमिति प्राग्वत् । ते-स्वसीमागतचरमरूपा प्रदेशा. भदन्त ! किं जम्बूद्वीपो द्वीप किं वा लवणसमुद्र ? । यद्येन सस्पृष्ट तत्किञ्चित् तद्व्यपदेशमश्नुवान-मुपलब्ध, यथा सुराष्ट्रेभ्य: सङ्क्रान्तो मगधदेश मागध इति । किञ्चित्तद्व्यपदेश न लभत एव, यथा तर्जन्या स्पृष्टा जेष्ठाङ्गुली जेष्ठैव । इहापि च जम्बूद्वीपसीमावर्त्तित्वात् चरमप्रदेशा लवणसमुद्र स्पृष्टवन्तस्ततो व्यपदेशचिन्तायां सशय इति प्रश्ने । भगवानाह—गौतम ! जम्बूद्वीप एव द्वीपो । णमिति निपातस्याऽवधारणार्थत्वात् । जम्बूद्वीप एव 'णो खलु'त्ति । नैव ते प्रदेशा लवणसमुद्र. । 'एव लवण'त्ति । एवमुक्तप्रकारेण लवणसमुद्रस्यापि प्रदेशा. जम्बूद्वीप स्पृष्टा भणितव्या । लवणसमुद्रस्य सर्वाऽभ्यन्तर-प्रदेशा जम्बूद्वीप स्पृष्टा सन्तोऽपि लवणसमुद्र एव, न पुनर्जम्बूद्वीप इति भाव । अथ जम्बूद्वीपवर्त्तिनो

जीवानधिकृत्य प्रश्नमाह—'जंबुद्दीवे णमि'त्यादि । जम्बूद्वीपे भदन्त ! द्वीपे ये जीवास्ते 'उद्दाइत्ता उद्दाइत्ता' अवद्राय अवद्राय 'द्राऽ कुत्सितगताविति'तिवचनात् । मृत्वा मृत्वा लवणे समुद्रे प्रत्यायान्ति—आगच्छन्ति ?। भगवानाह—गौतम ! अस्तीतिनिपातोऽत्र बह्वर्थः । सन्त्येकका जीवा ये अवद्राय लवणसमुद्रे प्रत्यायान्ति, सन्त्येकका ये न प्रत्यायान्ति । जीवानां स्वस्वकर्मपरिणतिविशेषेण गतेर्वैचित्र्यात् । 'एव लवणस्सवि' । एव लवणसमुद्रस्यापि जम्बूद्वीपे ज्ञातव्यम् । लवणसमुद्रे ये जीवास्ते च मृत्वा मृत्वा जम्बूद्वीपे प्रत्यायान्तीत्यादि ।

अथ प्रश्नोत्तरविषयीभूतान् वक्ष्यमाणानर्थानधिकृत्य सङ्ग्रहणीगाथामाह

'खंडा-जोअण-वासा पव्वय कूडा य तित्थसेढीओ । विजयदहसलिलाओ पिंडए होइ संगहणी ।१॥

जंबुद्दीवे णं भंते ! दीवे भरहप्पमाणमेत्तेहिं खंडेहिं केवइअं खंडगणिएणं पण्णत्ते ? । गो० ! णउअं खंडसयं खंडगणिएणं पण्णत्ते ? । जंबुद्दीवे णं भंते ! दीवे केवइअं जोअणगणिएणं पण्णत्ते । गो० !

'सत्तेव य कोडीसया णउआ छप्पण्णसयसहस्साइं । चउणउइं च सहस्सा सयं दिवड्ढं च गणिअपय' ॥१॥ जंबुद्दीवे ण भंते ! दीवे कइ वासा पण्णत्ता । गो० सत्त वासा पण्णत्ता । तं जहा-भरहे एरवए हेमवए एरण्णवए हरिवासे रम्मयवासे महाविदेहे अ । जंबुद्दीवे ण भंते ! दीवे केवइआ वासहरा पण्णत्ता ? । केवइआ मंदरपव्वया ? केवइआ चित्तकूडा ? केवइआ विचित्तकूडा ? केवइआ जमगपव्वया ? केवइआ कंचणगपव्वया ? केवइआ वक्खारा ? केवइआ दीहवेअड्ढा ? केवइआ वट्टवेअड्ढा पण्णत्ता ? । गो० ! जंबुद्दीवे छ वासहरपव्वया । एगे मंदरे पव्वए । एगे चित्तकूडे एगे विचित्तकूडे । दो जमगपव्वया । दो कंचणगसया । वीसं वक्खारपव्वया । चोत्तीसं दीहवेअड्ढा । चत्तारि वट्टवेअड्ढा । एवामेव सपुव्वावरेण जंबुद्दीवे दीवे दोण्णि अउणुत्तरा पव्वयसया भवंतीतिमक्खायं । जंबुद्दीवे णं दीवे केवइआ वासकूडा ? केवइआ वक्खारकूडा ? केवइआ वेअड्ढकूडा ? केवइआ मंदरकूडा पण्णत्ता ? । गो० ! छप्पण्णं वासहरकूडा । छण्णउइ वक्खारकूडा । तिण्णि छलुत्तरा वेअड्ढकूडसया । नव मंदरकूडा पण्णत्ता । एवामेव सपुव्वावरेण जंबुद्दीवे दीवे चत्तारि सत्तसट्ठ कूडसया भवंतीतिमक्खायं । जंबुद्दीवे णं भरहे वासे कइ तित्था पण्णत्ता ? । तओ तित्था पण्णत्ता । तं जहा—मागहे वरदामे पभासे । जंबुद्दीवे णं दीवे एरवए वासे कति तित्था प० ? । गो० ! तओ तित्था प० । तं० मागहे वरदामे पभासे । जंबुद्दीवे दीवे महाविदेहे वासे एगमेगे चक्कवट्टिविजए कति तित्था पं० ? । गो० !

तओ तित्था प० । तं०—मागहे वरदामे पभासे । एवामेव सपुव्वावरेण जंबुद्दीवे दीवे बिउत्तरे तित्थसए भवतीतिमक्खायं । जंबुद्दीवे दीवे केवइआ विज्जाहरसेढीओ ? केवइआ आभिओग-सेढीओ पण्णत्ताओ ? । गो० ! अट्ठसट्ठि विज्जाहरसेढीओ पं० । अट्ठसट्ठि आभिओगसेढीओ पं० । एवामेव पुव्वावरेणं जंबुद्दीवे दीवे छत्तीसे सेढिसए भवंतीतिमक्खायं । जंबुद्दीवे दीवे केवइआ चक्कवट्टिविजया ? केवइआओ रायहाणीओ ? केवइआओ तमिसगुहाओ ? केवइ-आओ खंडप्पवायगुहाओ ? केवइआ कयमालदेवा ? केवइआ णट्टमालया ? केवइआ उसभ-कूडा पं० ? । गो० ! जंबुद्दीवे दीवे चोत्तीसं चक्कवट्टिविजया । चोत्तीसं रायहाणीओ । चोत्तीसं तमिसगुहाओ । चोत्तीसं खंडप्पवायगुहाओ । चोत्तीसं कयमालगा । चोत्तीसं णट्टमालगा देवा । चोत्तीसं उसभकूडा पव्वया पण्णत्ता । जंबुद्दीवे णं केवइआ महादहा पण्णत्ता । गो० ! सोलस महादहा पण्णत्ता । जंबुद्दीवे णं केवइआओ महाणईओ वासहर-प्पवहाओ ? केवइआओ महानईओ कुंडप्पवहाओ पण्णत्ताओ ? । गो० ! जंबुद्दीवे दीवे चउद्दस महाणईओ वासहर० । छावत्तरिं च महाणईओ कुंडप्पवहाओ । एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे णवतिं महाणईओ भवंतीतिमक्खायं । जंबुद्दीवे णं भरहेरवएसु वासेसु कइ महाणईओ पण्णत्ताओ ? । गो० ! चत्तारि महाणईओ पण्णत्ताओ । तं०-गंगा सिंधू रत्ता रत्तावई । तत्थ णं एगमेगा महाणदी चउद्दसहिं सलिलासहस्सेहिं समग्गा पुरत्थि-मेणं पच्चत्थिमेणं लवणसमुद्दं समप्पेति । एवमेव सपुव्वावरेण ! जंबुद्दीवे दीवे भरहे-रवएसु वासेसु छप्पण्णं सलिलासहस्सा भवंतीतिमक्खाया । जंबुद्दीवे णं दीवे हेमवएरण्णवएसु वासेसु कइ महाणईओ पण्णत्ताओ ? । गो० ! चत्तारि महाणईओ प० । तं०-रोहिता रोहितंसा सुवण्णकूला रुप्पिकूला । तत्थ णं एगमेगा महाणदी अट्ठावीसाए सलिलासहस्सेहिं समग्गा पुरत्थिमेण पच्चत्थिमेण लवणसमुद्दं समप्पेति । एवामेव सपुव्वावरेण जंबुद्दीवे दीवे हेमवते-रण्णवतेसु वासेसु बारसुत्तरे सलिलासयसहस्से भवंतीतिमक्खाया । जंबुद्दीवे णं हरिवासरम्म-गवासेसु कति महाणईओ प० ? । गो० ! चत्तारि महाणईओ प० । तं०-हरी हरिकांता णरकंता णारीकांता । तत्थ णं एगमेगा महाणइ छप्पण्णाए सलिलासहस्सेहिं समग्गा पुरत्थिम-पच्चत्थिमेणं लवणसमुद्दं समप्पेति । एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे हरिवासरम्मगवासेसु दो चउवीसा सलिलासयसहस्सा भवंतीतिमक्खाया । जंबुद्दीवे दीवे महाविदेहे वासे कति

महाणईओ पण्णत्ताओ ? । गो० ! दो महाणईओ प० । तं०—सीआ सीओआ य । तत्थ णं एगमेगा महाणदी पंचहिं सलिलासयसहस्सेहिं बत्तीसाए सलिलासहस्सेहिं समग्गा पुरत्थिमपच्चत्थिमलवणसमुद्दं समप्पेति । एवामेव सपुव्वावरेण जंबुद्दीवे दीवे महाविदेहे वासे दस सलिलासयसहस्सा चउसट्ठिं च सलिलासहस्सा भवंतीतिमक्खायं । जंबुद्दीवे दीवे मंदरस्स पव्वयस्स दाहिणेणं केवइआ सलिलासयसहस्सा पुरत्थिमपच्चत्थिमाभिमुहा लवणसमुद्दं समप्पेंति ? । गो० ! एगे छण्णउए सलिलासयसहस्से पुरत्थिमपच्चत्थिमाभिमुहे लवणसमुद्दं समप्पेंति । जंबुद्दीवे दीवे मंदरस्स पव्वयस्स उत्तरेणं केवइआ सलिलासयसहस्सा पुरत्थिमपच्चत्थाभिमुहा लवणसमुद्दं समप्पेंति ? । गो० ! एगे छण्णउए सलिलासयसहस्से पुरत्थिमपच्चत्थिमाभिमुहे जाव समप्पेंति । जंबुद्दीवे णं केवइआ सलिलासयसहस्सा पुरत्थाभिमुहा लवणसमुद्दं समप्पेंति ? । गो० ! सत्त सलिलासयसहस्सा अट्ठावीसं च सहस्सा पुरत्थाभिमुहा लवणं समुद्दं समप्पेंति । जंबुद्दीवे णं केवइआ सलिलासयसहस्सा पच्चत्थिमाभिमुहा लवणं० ? । गो० ! सत्त सलिलासयसहस्सा अट्ठावीसं च सहस्सा जाव समप्पेंति । एवामेव सपुव्वावरेण जंबुद्दीवे दीवे चउद्दस सलिलासयसहस्सा छप्पण्णं च सहस्सा भवंतीतिमक्खाया ।

'खंडा जोअणे'त्यादि । जम्बूद्वीवे भरतप्रमाणमात्राणि कति खण्डानि ? । गणितपदेन कियन्ति योजनानि ? । कियन्ति वर्षाणि भरतादीनि ? । कति पर्वता—वर्षधरवक्षस्कारादयः ? । कति कूटानि हिमवदादिवर्षधरवर्त्तीनि ? । कति च तीर्थानि—मागधादीनि चक्रवर्त्तिना समुद्रावतरणस्थानानि ? । कति श्रेणयो विद्याधरादीनां ? । कति च विजया ? कति च ह्रदा ? । सलिला—नद्यश्च ? इति । 'पिंडए'त्ति । पिण्डके—समुदाये भवति सङ्ग्रहणी—गाथेति गम्यमिति सङ्ग्रहणीगाथाया. समासार्थः । अथ विस्तर जिज्ञासुर्यथोद्देश निर्देश इति न्यायात् प्रथम खण्डसङ्ख्या पृच्छति—'जंबुद्दीवे णमि'त्यादि प्रश्न. सुगम. । भगवानाह—गौतम ! नवत्यधिक खण्डशत खण्डगणितेन प्रज्ञप्त । तच्चैव-भरतक्षेत्र षड्विंशत्यधिकानि पञ्च योजनशतानि षट् चैकोनविंशतिभागा योजनस्य । ५२६-६/१९/ तच्च नवत्यधिकशतेन गुणित योजनाना लक्षमेक स्यात् । अयमाव —भरतादीनि क्षेत्राणि हिमवद्वर्षधराद्यन्तरितानि निषधवर्षधर यावत् द्विगुणद्विगुणविष्कम्भानि एवमैरावतादीनि शिखरिवर्षधराद्यन्तरितानि नीलिवर्षधर यावद्विज्ञेयानि । अन्तरा महाविदेहोऽपि निषधाऽपेक्षया द्विगुण । तथा च एको भागो भरतक्षेत्र । द्वौ भागौ हिमवान् । चत्वारो भागा हैमवतक्षेत्रम् । अष्टौ भागा महाहिमवान् । षोडश भागा हरिवर्षक्षेत्रं । द्वात्रिंशद्भागा निषधः । चतुःषष्टिभागा महाविदेह । द्वात्रिंशद्भागा नीली । षोडश भागा रम्यकक्षेत्रम् । अष्टौ भागा रूपी । चत्वारो भागा हैरण्यवतक्षेत्र । द्वौ भागौ शिखरी । एको भाग ऐरावतक्षेत्र चेति सर्व्वसङ्कलने नवत्यधिक शतमेक भागा भवेयु । तेन तावत्तमो भागो भरतक्षेत्र तावन्ति च

भरतखण्डानि जम्बूद्वीपश्चेति । अथ योजनगणितेन कियन्ति योजनानि जम्बूद्वीप ? इति पृच्छति 'जंबुद्दीवे णमि' इत्यादि प्रश्नः । प्राग्वत् । भगवानाह—गौतम ! 'सत्तेवे'ति गाथा । सप्तैव कोटिशतानि नवति कोट्यधिकानि षट्पञ्चाशत् शतसहस्राणि—लक्षाणीत्यर्थ. । चतुर्नवति च सहस्राणि शत च द्व्यर्धं—सार्धशतमित्यर्थः । योजनाना गणितपद—जम्बूद्वीपे योजनप्रमाणानि एतावन्ति चतुरस्राणि खण्डानि भवन्ति । चकारद्वय समुच्चये । तृतीयस्तु गव्यूतादिसूचकस्तेन गव्यूतमेक धनूषि च पञ्चदश शतानि पञ्चदशाधिकानि षष्टि चाङ्गुलानीति जम्बूद्वीपस्य गणितपदपरिमाणमित्यक्षरार्थः । भावार्थस्त्वयं—'विक्खभपायगुणिओ परिरओ तस्स गणियपय'ति वचनात् । जम्बूद्वीपस्य विष्कम्भो योजनलक्षमेक तस्य पादः-चतुर्थांश पञ्चविंशति सहस्ररूपस्तेन गुणितः परिरय. किञ्चिदधिकषोडशसहस्राधिकयोजनलक्षत्रय-लक्षण । सप्त कोटिशतानि नवति कोटय इत्याद्युक्तलक्षण गणितपद भवति । तत्र जम्बूद्वीपपरिरय-करण तु प्राग्भावितमिति । अथ जम्बूद्वीपे कति वर्षाणि ? इति पृच्छति—'जबूद्दीवे णमि'त्यादि प्रश्नः प्राग्वत् । भगवानाह—गौतम ! सप्त वर्षाणि । तद्यथेत्यादि सुगमम् । अथ जम्बूद्वीपे पर्वतसङ्ख्या प्रश्नयति—'जम्बुद्दीवे णमि'त्यादि प्रश्ननिर्वचने सुगमे । तत्र चतुस्त्रिशद्दीर्घवैताढ्या—द्वात्रिंशत् महाविदेहविजयेषु, द्वौ च भरतैरावतयो. । चत्वारो वृत्तवैताढ्याः पुनर्हैमवत-हरिवर्ष-रम्यक—ऐरण्यवत-क्षेत्रमध्यभागवर्त्तिनोऽवसातव्या । अथ सर्वाऽग्रसङ्ख्यामाह—'एवामेव'त्ति । एवमेवपूर्वं चाऽपर च पूर्वाऽपर पूर्वापरवचने इत्यर्थ. । ताभ्या सह यत्तत्सपूर्वाऽपर तेन स पूर्वाऽपरेण—सर्वाऽग्रेणेत्यर्थ । 'जबूद्दीपे द्वीपे दोण्णि'त्ति । द्वे एकोनसप्तत्यधिके पर्वतशते—एकोनसप्तत्यधिकशतद्वय २६९ पर्वतानामित्यर्थ । भवत रयातामित्याख्यात मयाऽन्यैश्च तीर्थकृद्भिरिति । अथ कूटसङ्ख्या पृच्छति—'जबुद्दीवे णमि'त्यादि । जम्बूद्वीपे भदन्त ! द्वीपे कियन्ति वर्षधरकूटानि ? कियन्ति वक्षस्कारकूटानि ? कियन्ति वैताढ्यकूटानि ? कियन्ति मन्दरकूटानि प्रज्ञप्तानि ? । भगवानाह—गौतम ! षट्पञ्चाशद्वर्षधरकूटानि—तत्रैकादश हिमवति, अष्टौ महाहिमवति, नव निषधे नव च नीलवति, अष्टौ रुक्मिणी, एकादश शिखरिणि चेति । सर्वसङ्ख्यया षट्पञ्चाशत् । षण्णवतिर्वक्षस्कारकूटानि । तानि चैव—षोडशसु विजयवक्षस्कारेषु प्रत्येक प्रत्येक चतुर्णां कूटानां सद्भावात् चतुःषष्टि । माल्यवत्सोमनसविद्युत्प्रभगन्धमादनसञ्ज्ञेषु चतुर्षु गजदन्तेषु क्रमेण नव, सप्त, नव, सप्त सङ्ख्याकानि कूटानि द्वात्रिंशत् । सर्वसङ्ख्यया षण्णवतिः कूटानीति । 'तिण्णि छलुत्तार'त्ति । त्रीणि षडुत्तराणि वैताढ्यकूटशतानि । चतुस्त्रिंशत्यपि वैताढ्येषु प्रत्येक नव नव कूटसद्भावेनोक्तसङ्ख्याकानि नव मन्दरकूटानीति । अथ सर्वसङ्ख्यामाह—'एवामेव'त्ति । एवमेव सपूर्वाऽपरेण सर्वाऽग्रेण जम्बुद्वीपे द्वीपे चत्वारि सप्तषष्टानि सप्तषष्ट्यधिकानि कूटशतानि भवन्तीत्याख्यात मयेति । अथ तीर्थसङ्ख्या पृच्छति जबुद्दीपे द्वीपे भदन्त ! भरतक्षेत्रे कति तीर्थानि प्रज्ञप्तानि ? । भगवानाह-गौतम ! त्रीणि तीर्थानि प्रज्ञप्तानि । तद्यथा—मागध वरदामः प्रभासश्चेति । 'जबुद्दीवे णमि'त्यादि प्रश्ननिर्वचने प्राग्वत् । 'जबुद्दीवे णमि'त्यादि । महाविदेहे वर्षे एकैकस्मिन् चक्रवर्त्तिविजये कति तीर्थानि ? इति शेष प्राग्वत् । अथ सर्वसङ्ख्यामाह—'एवामेव'त्ति । एवमेव पूर्वाऽपरेण-भरतैरावतमहाविदेहविजय-

लक्षणैश्चतुस्त्रिंशता चक्रवर्त्तिविजयैस्त्रिभिर्गुणितैरित्येवं प्रकारेण द्व्यु त्तरं तीर्थशतं भवतीत्याख्यातम् । अथ श्रेणिसङ्ख्या पृच्छति–'जंबुद्दीवे णमि'त्यादि प्रश्ननिर्वचने सुगमे । तत्र 'छत्तीसे सेढिसए'त्ति। षट्त्रिंशदधिकं श्रेणिशत भवतीत्याख्यातम् । अथ चक्रवर्त्तिविजयादीनां सङ्ख्यां पृच्छति–'जंबुद्दीवे दीवे' इत्यादि प्रश्नं सुगमं । भगवानाह–गौतम ! जंबुद्वीपे द्वीपे चतुस्त्रिंशच्चक्रवर्त्तिविजया इत्यादि सुगमं । तत्र द्वात्रिंशद्विजया महाविदेहे, द्वौ च भरतैरावते इति चतुस्त्रिंशत् । एवं राजधान्यादिष्वपि चतुस्त्रिंशत्सङ्ख्या अवसातव्या । अथ जम्बुद्वीपे कियन्तो महाह्रदा ? इति पृच्छति–'जंबुद्दीवे णमि'त्यादिप्रश्नं प्राग्वत् । भगवानाह–गौतम ! षोडश महाह्रदा प्रज्ञप्ता । तत्र षड् हिमवदादिवर्षधरशिखरवर्तिनः पद्मह्रदादयः, दश च देवकुरूत्तरकुरुमध्य वर्त्तिनो नीलवदादयः प्रतीता। । अथ महानदी सङ्ख्याविषय प्रश्नमाह–'जंबुद्दीवे णमि'त्यादि प्रश्नः प्राग्वत् । भगवानाह गौतम ! चतुर्दशमहानद्यो वर्षधरप्रवहाः प्रज्ञप्ताः । तत्र हिमवच्छिखरिभ्यः षट्, महाहिमवन्निषधनीलिरुक्मिभ्योऽष्टाविति चतुर्दश । 'छावत्तरि' ति । षट्सप्ततिर्महानद्य कुण्डप्रवहा । तत्र शीतानीलवतो', शीतोदानिषधयोश्चान्तरालवर्तिषु षोडश विजयेषु प्रत्येकमेकैकभावेन षोडश गङ्गा, षोडश सिन्धवश्च महानद्यो भवन्ति । एव शीता निषधयोः शीतोदा नीलवतोश्चान्तरालवर्त्तिषु षोडश विजयेषु षोडश रक्ता, षोडश रक्तावत्यश्च नद्योऽभिधातव्याः। द्वादश च वक्षस्कारवद्विजयमर्यादाविधायिन्योऽन्तर्नद्य । एवमेव सर्वाऽग्रेण जम्बूद्वीपे नवतिर्महानद्यो भवन्तीत्याख्यातम् । ननु गङ्गादीनामेव वर्षधरप्रवहाना चतुर्दशाना महानदीत्वव्यपदेशो युक्तस्तासामेव स्वातन्त्र्येणाऽवोर्जगती विदार्य समुद्रे प्रवेशात् । शेषास्तु महाविदेहान्तर्वर्त्तिन्यश्चतुष्षष्टिर्गङ्गादयो द्वादशचान्तर्नद्य. शीता शीतोदा च शरणीकृत्य समुद्रप्रवेशिन्य. शीतादिपरिकरभूता एव कथं महानदीत्वव्यपदेशभाजः ? इति चेत् । सत्य, भरतादिवर्त्तिगङ्गादीनामिव सपरिकरत्वात् विजयाना षट्खण्डविभागकरणात् तत्स्वामिनीना समानर्द्धिकत्वात् । महाविदेहेष्वपि गङ्गादीनामन्तर्नदीना च वक्षस्काराणामिव विजयमर्यादाविधायित्वात् परिमाणेन महत्त्वात् समुद्रवद्दुस्तरत्वाच्च महानदीत्वव्यपदेशस्य युक्तियुक्तत्वादित्यल विस्तरेणेति । अथ भरतैरावतयोर्महानदीविषयं प्रश्नमाह–'जंबुद्दीवे णमि'त्यादि । प्रश्नः प्राग्वत् । भगवानाह–गौतम ! चतस्रो महानद्यः प्रज्ञप्ताः । तद्यथा–गङ्गा, सिन्धु, रक्ता, रक्तावती चेति । 'तत्थ'त्ति । तत्रैकैका महानदी चतुर्दशभिः सलिलासहस्रैः समग्रा–सहिताः पूर्वेण-पूर्वदिशा पश्चिमेन–पश्चिमदिशा लवणसमुद्र समाप्नोति । न पुनरेकाकिन्येवेति भावः । तत्र गङ्गारक्ते पूर्वेण, सिन्धुरक्तावत्यौ च पश्चिमेन लवणसमुद्र प्रविशत इत्यर्थ । सर्वसङ्ख्यया चतुर्दश चतुर्गुणिताः षट्पञ्चाशत्सलिलासहस्राणि भवन्तीत्याख्यातम् । अथ हैमवतैरण्यवतयोर्वर्षयोर्नदीसङ्ख्यां पृच्छति 'जंबुद्दीवे णमि'त्यादि प्रश्न. प्राग्वत् । भगवानाह–गौतम ! चतस्रो महानद्य प्रज्ञप्ताः । तद्यथा–रोहिता रोहितांशा सुवर्णकूला रुक्मिकूला चेति । तत्रैका महानदी अष्टाविंशत्या सलिलासहस्रैः सहिता लवणसमुद्र प्रविशति । तत्र रोहिता–सुवर्णकूले पूर्वेण, रोहितांशा–रुक्मिकूले पश्चिमेन, सर्वाऽग्रेण द्वादश सहस्राधिक लक्षमेक नदीनामिति । जंबूद्दीवे णमि'त्यादि प्रश्नादि प्राग्वत् । सर्वाऽग्रसङ्ख्या चतुर्विंशतिसहस्राधिके द्वे लक्षे । अथ महाविदेहे सङ्ख्या पृच्छति 'जंबुद्दीवे दीवे'इत्यादि प्रश्ननिर्व-

चने प्राग्वत् । 'एवामेवे'त्यादि । एवमेव सपूर्व्वापरेण जम्बूद्वीपे द्वीपे महाविदेहे वर्षे दश सलिलाशतसहस्राणि चतु षष्टिश्च सलिलासहस्राणि भवन्तीत्याख्यातम् । तद्व्यक्तिस्त्वेव-प्रतिविजयं गङ्गासिन्ध्वो रक्तारक्तावत्योश्च परिकरभूता नद्योऽष्टाविंशतिसहस्राणि द्वात्रिंशता विजयैर्गुणितानि भवन्त्यष्टौ लक्षाणि षण्णवतिश्च सहस्राणि तानि प्रति कुरु चतुरशीति नदीसहस्रसद्भावेन देवकुरूत्तरकुरुसम्बन्धिना-ऽष्टषष्टयधिकैकलक्षेण सहितान्युक्तसङ्ख्याका भवन्तीत्याख्यातम् । अथ मेरोर्दक्षिणेन कियन्तो नद्य समुद्र प्रविशन्ति ? इति पृच्छति—'जबुद्दीवे दीवे'इत्यादि प्रश्न. प्राग्वत् । भगवानाह—गोतम ! एक षण्णवत्यासहस्रैर्युतं सलिलाशतसहस्र शेष प्राग्वत् । अथ मेरोरुत्तरता कियत्यः सलिलाः पूर्वपश्चिमा-ऽभिमुखा लवणसमुद्रं प्रविशन्ति ? इति पृच्छति—'जबुद्दीवे'इत्यादि । अनन्तरसूत्रवत् । अथ जम्बूद्वीपे कियन्ति सलिलासहस्राणि पूर्वाऽभिमुखानि लवणसमुद्रं प्रविशन्ति ? इति पृच्छति—'जबुद्दीवे णमि'त्यादि प्रश्न' प्राग्वत् । भगवानाह गौतम ! सप्त सलिलाशतसहस्राणि अष्टाविंशतिश्च सहस्राणि यावत्प्रविशन्ति । अथैव पश्चिमाऽभिमुखप्रवेशममधिकृत्याऽपि प्रश्नमाह 'जबुद्दीवे णमि'त्यादि प्रश्ननिर्वचने प्राग्वत् । अथ जम्बूद्वीपे सर्व्वनदीसङ्ख्यामाह 'एवामेव'त्ति । एवमेव सपूर्व्वाऽपरेण-सर्व्वसमुदायेन जम्बूद्वीपे द्वीपे चतुर्दश सलिलाशतसहस्राणि षट्पञ्चाशत्सहस्राणि च भवन्तीत्याख्यातम् । एतेन 'खडा जोअणे'त्यादि द्वारगाथोक्त द्वारदशक व्याख्यातम् ।

अथ जम्बूद्वीपे ज्योतिःस्वरूपजिज्ञासया प्रथम चन्द्रादिसङ्ख्या पृच्छति

**जंबुद्दीवे णं भंते ! कइ चंदा पभासिंसु पभासंति पभासिस्संति ? कइ सूरा तवइंसु तवेंति तविस्संति ? केवइआ णक्खत्ता जोगं जोइंसु जोएंति जोइस्संति ? केवइआ महग्गहा चारं चरिंसु चरंति चरिस्संति ? केवइआ तारागणकोडाकोडीओ सोभिंसु सोभिंति सोभिस्संति ? । गो० ! जंबुद्दीवे दीवे दो चंदा पभासिंसु ३ । दो सूरिआ तवइंसु ३ । छप्पण्णं णक्खत्ता जोगं जोगिंसु ३ । छावत्तरं महागहसयं चारं चरिंसु ३ ।**

**एगं च सयसहस्सं तेत्तीसं खलु भवे सहस्साइं । नव य सया पण्णासा तारागणकोडिकोडीणं ॥**

'जंबुद्दीवे णमि'त्यादि । जम्बूद्वीपे भदन्त ! द्वीपे कति-कियन्तश्चन्द्राः प्रभासितवन्त.—प्रकाशनीय वस्तु प्रकाशितवन्त., प्रभासयन्ति-प्रकाश कुर्व्वन्ति, प्रभासयिष्यन्ति-प्रकाश करिष्यन्ति ? इति काल-त्रितयान्तर्भावेन 'प्रश्न । तथा कति सूर्याः ' 'तवइसु'त्ति । तापितवन्त -आतपनामकर्म्मोदयात् पर-पदार्थविषय ताप जनितवन्त' । एव तापयन्ति, तापयिष्यन्ति ? । नन्वत्र णिगन्तप्रयोग कथम् ? इति चेत्, उच्यते सूर्यबिम्बानि तावत्स्वयमनुष्णस्वभावान्येव परेषा तापजनकानि । ततस्तपनक्रिया-मधिकृत्य प्रयोजकप्रत्ययप्रयोगमन्तरेण विवक्षितसम्यगर्थानुपपत्ते । यत्त्वत्र 'चार चरिंसु'इति वक्ष्यमाण-

प्रयोगसम्भवेऽपि 'पभासिंसु तवइंसु'त्ति क्रियाप्रयोगः । तत्प्रभासकत्वं तापकत्वं च ज्योतिषां मध्ये चन्द्र-सूर्ययोरेवाऽसाधारणधर्म्मौ सर्वजनप्रसिद्धाविति-हेतोरवसातव्यम् । चारक्षेत्रमधिकृत्य सर्व्वेषामपि ग्रहाणां साम्येऽपि जम्बूद्वीपप्रवेशनिर्गमनिमित्तकदक्षिणोत्तराभिमुखनियताऽनेकमण्डलचारित्वं चन्द्रसूर्ययोरेव । भौमादीनां तु वक्रातिचारादिगतिनिमित्तकाऽनियताऽनेकमण्डलचारित्वमिति विशेषः । तथा 'केवइआ'त्ति । कियन्ति नक्षत्राणि योगं स्वयं नियतैकमण्डलचारित्वेऽप्यनियताऽनेकमण्डलचारिभिर्निज-क्षेत्रान्तराऽऽगतैर्ग्रहैः सह सम्बन्धं शुभाऽशुभनिमित्तसूचकं 'जोइंसु'त्ति । युक्तवन्ति, युञ्जन्ति, योक्ष्यन्ति च ? इति । तथा कियन्तो महाग्रहा-भौमादयः चारं-चारक्षेत्रं चरितवन्तश्चरन्ति, चरिष्यन्ति, च ? इति । भौमादीनामपि चन्द्रसूर्ययोरिव चारक्षेत्रस्य सत्त्वात् । तथा कियन्त्यस्ताराणकोटाकोट्यः शोभितवत्य, शोभन्ते, शोभिष्यन्ते ? । ताराणां च नक्षत्रवत्सर्व्वकालं नियतैकमण्डलचारित्वेन चन्द्राद्युक्तकारणाऽभावेन च शोभामात्राश्रयणं । भगवानाह-गौतम ! जम्बूद्वीपे द्वीपे द्वौ चन्द्रौ, प्रभासितवन्तौ, प्रभासेते, प्रभासिष्येते च । द्रव्यास्तिकनयमतेन सर्व्वकालमेवविधाया एव जगत्स्थितेः सद्भावात् । तथा द्वौ सूर्यौ तापितवन्तौ, तापयतः, तापयिष्यतः । 'छप्पण्ण'ति । षट्पञ्चाशन्नक्षत्राणि योगं युक्तवन्ति, युञ्जन्ति, योक्ष्यन्ति चेति । प्रतिचन्द्रमष्टाविंशतेर्नक्षत्राणां सत्त्वात् । तथा प्रति चन्द्रमष्टाशीतेर्ग्रहाणां सद्भावात् षट्सप्तत्यधिकं शतमेकं महाग्रहाश्चारं चरितवन्तश्चरन्ति, चरिष्यन्ति चेति । तथा 'एगं च'त्यादि गाथा । प्रति चन्द्रं ताराणां षट्षष्टिः कोटाकोटिसहस्राणि नव शतानि पञ्चसप्तत्यधिकानि तानि द्विगुणीकृतानि जातं एकं शतसहस्रं त्रयस्त्रिंशत्सहस्राणि नव शतानि पञ्चाशदधिकानि-शोभितवन्ति-शोभन्ते शोभिष्यन्ते चेति क्रियापदान्यध्याहार्याणीति गाथार्थः ।

अथ जम्बूद्वीपवर्त्तिनोः सूर्ययोः कति मण्डलानि ? इति प्रश्नयति

**'कइ णं भंते ! सूरमंडला' पण्णत्ता ? । गो० ! एगं चउरासीए मंडलसए पण्णत्ते । जंबुद्दीवे णं भंते ! दीवे केवइअं ओगाहेत्ता ? केवइआ सूरमंडला पण्णत्ता ? । गो० ! जंबुद्दीवे णं दीवे असीतं जोअणसयं ओगाहेत्ता । एत्थ णं पण्णट्ठि सूरमंडला-पण्णत्ता । लवणे णं भंते! समुद्दे केवइअं ओगाहेत्ता ? । केवइआ सूरमंडला पण्णत्ता ? । गो० ! लवणे णं समुद्दे तिण्णि तीसे जोअणसए ओगाहेत्ता । एत्थ णं एगुणवीसे सूरमण्डलसए पण्णत्ते । एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे लवणसमुद्दे एगे चुलसीए सूरमंडलसए भवंतीतिमक्खायं । सव्वब्भंतराओ णं भंते ! सूरमंडलाओ केवइअं अबाहाए सव्वबाहिरए सूरमंडले पण्णत्ते ? । गो० ! पंचदसुत्तरे जोअणसए अबाहाए सव्वबाहिरए सूरमंडले पण्णत्ते । सूरमंडले णं भंते ! सूरमंडलस्स य एस णं केवइअं अबाहाए अंतरे पण्णत्ते ? । गो० ! दो दो जोअणाइं अबाहाए अंतरे पण्णत्ते सूरमंडले णं भंते ! केवइअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं ? केवइअं बाहल्लेणं**

**पण्णत्ते ? गो० ! अडयालीसं एगसट्ठिभागे जोअणस्स आयामविक्खंभेणं । तं तिगुणं सविसेसं परिक्खेवेणं । चउवीसं एगसट्ठिभागे जोअणस्स बाहल्लेणं ।**

'कति ण भंते !' इत्यादि प्रश्नः प्राग्वत् । भगवानाह गौतम ! एकं चतुरशीत-चतुरशीत्यधिकं मण्डलशतं प्रज्ञप्तं । पुंस्त्वं प्राकृतत्वात् । अथ सर्व्वाण्यपि मण्डलानि जम्बूद्वीपे उतान्यत्राऽपि ? । इति प्रश्ने सति गौतम ! कियन्ति जम्बूद्वीपे, कियन्ति च लवणसमुद्रे इति निर्वचने सिद्धे । जम्बूद्वीपे कियन्ति योजनान्यवगाह्य ? कियन्ति सूर्यमण्डलानि ? इति जिज्ञासु पृच्छति--'जंबुद्दीवे णमि'त्यादि । जम्बूद्वीपे भदन्त ! द्वीपे कियत् किं प्रमाण क्षेत्रमिति गम्यम् । अवगाह्य कति सूर्यमण्डलानि? इति प्रश्ने । भगवानाह गौतम ! जम्बूद्वीपे अशीतमशीत्यधिकं योजनशतमवगाह्य । 'एत्थ ण'ति । अत्रान्तरे पञ्चषष्टिः सूर्यमण्डलानि प्रज्ञप्तानि । अथ प्राग्वल्लवणसमुद्रवर्त्तिमण्डलविषय प्रश्नमाह--'लवणे णमि'त्यादि प्रश्न' प्राग्वत् । भगवानाह गौतम ! लवणसमुद्रे त्रीणि त्रिंशानि-त्रिंशदधिकानि योजनशतान्यवगाह्य । अत्रान्तरे 'एगूणवीसे'ति । एकोनविंशमेकोनविंशत्यधिक सूर्यमण्डलशत प्रज्ञप्तम् । अथोभयमीलने सङ्ख्यामाह 'एवामेव'त्ति । एवमेव सपूर्व्वापरेण-सर्व्वसमुदायेन जम्बूद्वीपे द्वीपे लवणसमुद्रे च चतुरशीत्यधिक-सूर्यमण्डलशतं भवतीत्याख्यातम् । ननु मण्डलानामिवान्तराणामपि विविच्य सङ्ख्यावश्य वक्तव्यार्हा कथ नोक्ता ? इति चेत्, उच्यते-अवगाहयोजन-भणनेनाऽनुक्ताऽप्युक्तप्राया स्वय परिभावनीया । तथाहि सर्व्वाण्यप्यन्तराणि त्र्यशीत्यधिक शतमेक । तेषा मध्ये चतुःषष्टिरन्तराणि जम्बूद्वीपे सम्पूर्णानि । अष्टादशाधिक च शतमेक लवणे । एक चावशिष्ट यज्जगत्युपरिवर्त्ति तस्य द्विपञ्चाशदेकषष्टिभागा जम्बूद्वीपे, योजनमेक नव चैकषष्टिभागा लवणसमुद्रे इति । अथ जम्बूद्वीपलवणयोरवगाहभणनेन सिद्धेऽप्यर्थे 'द्विर्बद्ध सुवद्धमि'ति न्यायात् सर्व्वाऽभ्यन्तरमण्डलात् सर्व्वबाह्यमण्डल कियदबाधया ? इति प्रश्नयति--'सव्व०मतराओ ण'ति । सर्व्वाऽभ्यन्तराद्भदन्त ! मण्डलात् कियदबाधया-कियदन्तरालक्षेत्र विमुच्येत्यर्थः सर्व्वबाह्यमण्डल प्रज्ञप्त ? । भगवानाह--गौतम ! दशोत्तराणि योजनशतानि ५१० अवाधया सर्व्वबाह्यमण्डल प्रज्ञप्तम् । एतच्च सर्व्वाऽभ्यन्तरमण्डलाद्बहिर्निष्क्रामत सर्व्वबाह्यमण्डलादन्त प्रविशतो वा सूर्यस्य परिभ्रमणगत्या शनै शनैः प्रवेशे निर्गमे चाष्टचत्वारिंशदेकषष्टिभागाधिकयोजनद्वयलक्षणे प्रतिदिवस चारक्षेत्रे अनुपयुज्यमान यदाद्य मण्डल तत्परित्यज्य मण्डलाना मण्डलान्तराणा च त्र्यशीत्यधिकेन शतेन यावत्क्षेत्र व्याप्त तावदेवोक्त द्रष्टव्यम् । अय भावः-चन्द्रयो सूर्ययोश्च क्षेत्र द्विविध-स्थितिक्षेत्र चारक्षेत्र च । तत्र यदा स्थितिक्षेत्र चिन्त्यते तदा जम्बूद्वीपवर्त्तिनोश्चन्द्रयोरुत्तरायण दक्षिणायन वा कुर्व्वतोर्यत् पञ्चदशाना मण्डलानामाद्यं मण्डल तत् स्थितिक्षेत्र । तत्र स्थितस्यैवोत्तरायणादेः सम्भवात् । तत्र मण्डल नाम निजबिम्बप्रमाण चक्रवालविष्कम्भक्षेत्रम् । एव सूर्ययोरपि चतुरशीत्यधिक-मण्डलशतमध्ये यदाद्य तत् स्थितिक्षेत्र ततः शेष चारक्षेत्रम् । उभयोर्मीलने क्षेत्रविष्कम्भमान दशाधिकानि पञ्च योजनशतानि अष्टचत्वारिंशदेकषष्टिविभागाश्च । तथाहि--सूर्यमण्डलानामन्तराणि त्र्यशीत्यधिक शत १८३/ एषा च विष्कम्भमान द्वे द्वे योजने । अतस्ते त्र्यशीत्यधिकेन शतेन गुणिते जातानि षट्

षष्ट्यधिकानि त्रीणि शतानि ३६६ । एवं च ये सूर्यमण्डलसम्बन्धिनोऽष्टचत्वारिंशदेकषष्टिभागास्तेऽपि तया गुणिता जाता अष्टाशीति शतानि द्वात्रिंशदधिकानि । तेषां च योजनाऽऽनयनार्थमेकषष्ट्याभागे हृते लब्धं योजनानां चतुश्चत्वारिंशं शतं १४४ भागाश्चाष्टचत्वारिंशदिति । एतच्च पूर्वराशौ प्रक्षिप्यते जातं यथोक्तं ५१०-४८/६१ क्षेत्रमानं । प्रकृतसूत्रं च चारक्षेत्रमधिकृत्यैवोक्तं । तेन दशोत्तराण्येव पञ्च शतानि भवन्ति । ननु उत्तरायणं कुर्वन् सूर्यः सर्वबाह्यमण्डलात् सर्वाऽभ्यन्तरमण्डलं यावत् चारक्षेत्रं चरति । दक्षिणायनं कुर्वंश्च सर्वाऽभ्यन्तरमण्डलात्सर्वबाह्यमण्डलं यावच्चारक्षेत्रं चरति । तया द्वे अपि मण्डले सूर्यस्य चारक्षेत्रमेव सम्पन्नम् ? इति चेत्, मैवम्-अभिप्रायाऽपरिज्ञानात् । यतः सर्वाऽभ्यन्तरं सर्वबाह्यं वा मण्डलं सूर्यः सकृदेव चरति द्वितीयादिमण्डलानि तु द्विशः । यदुक्तं 'बासीतं मंडलसयं दुक्खुत्तो चरति । तं जहा-णिक्खममाणे चेव पविसमाणे चेव दुवे अ खलु मंडलाइं सइं चरति । तं जहा-सव्वब्भंतरे चेव मंडलं सव्वबाहिरे चेव मंडलं'ति । सूर्यप्र० प्रथमप्राभृतकस्य प्रथमप्राभृतप्राभृतके । एवं च सति यदा सूर्यः सर्वाऽभ्यन्तरमण्डलात् बहिर्निष्क्रामन् सर्वबाह्यमण्डलं यावद्दक्षिणायनं सर्वबाह्यमण्डलं यावद्-दक्षिणायनं सर्वबाह्यमण्डलादन्तः प्रविशन् सर्वाऽभ्यन्तरमण्डलं यावदुत्तरायणं च करोति । तदा सर्वाऽभ्यन्तरमण्डलं सर्वबाह्यमण्डलं च चरममण्डलतया चारक्षेत्रं भण्यते । न पुनः प्रथममण्डलतयाऽपि । द्वितीयादीनां मण्डलानामिव द्विशश्चारक्षेत्रत्वाऽभावात् गमनाऽऽगमनाभ्यां तत्क्षेत्रस्य चारतया स्पृष्टत्वाऽभावात् । तस्मात् द्वयोरप्ययनयोः प्रथममण्डलं परित्यज्य द्वितीयमण्डलमेव मूलमवसातव्यम् । यदागमः—'जया णं सूरिए सव्वब्भंतराओ मंडलाओ सव्वबाहिरमंडलं उवसंकमित्ता चारं चरति तया णं सव्वब्भंतरं मंडलं पणिहाय'-प्रणिधाय-मर्यादीकृत्य तत्परतः द्वितीयमण्डलादारभ्येत्यर्थः । 'एगेण तेसीतेणं राइदिअसएणं' एकेन त्र्यशीतेन-त्र्यशीत्यधिकेन रात्रिदिवशतेनेत्यर्थः । 'पंचदसुत्तरे जोअणसए विक्कंपइत्ता' विकम्प्य-विमुच्येत्यर्थः । चारं-चारक्षेत्रं चरति 'तया णं उत्तमकट्ठपत्ता उक्कोसिआ अट्ठारसमुहुत्ता राई'त्ति । सूर्य-प्र० प्रा० १ प्रा० प्रा० ६ । अथाऽनन्तरोदिताया योजनसङ्ख्यायाः परिज्ञानम् । अन्तरालक्षेत्रस्य मण्डलस्य च योजनादिसङ्ख्यापरिज्ञाने सत्येव सम्यग् स्यादतस्तदर्थं प्रसङ्गतस्तत्परिध्यादि परिज्ञानार्थं च गौतमः पृच्छति 'सूरमंडले णमि'त्यादि । सूर्यमण्डलेन सह भदन्त ! सूर्यमण्डलस्य च 'एस णं'ति । एतत् प्रश्नाभिप्रायविषयीभूतं वक्ष्यमाणं णमिति प्राग्वत् । 'केवइअं'ति । कियद् अबाधया अन्तरं प्रज्ञप्तं ? । सर्वत्रापि पुंस्त्वं प्राकृतत्वात् । भगवानाह—गौतम ! द्वे द्वे योजने अबाधया अन्तरं प्रज्ञप्तम् । 'सूरमंडले' णमि'त्यादि । सूर्यमण्डलं भदन्त ! कियदायामविष्कम्भेन ? कियत्परिक्षेपेण ? कियद्बाहल्येन । चकारः समुच्चये गम्यः । प्रज्ञप्तम् ? । भगवानाह—गौतम ! अष्टचत्वारिंशतमेकषष्टिभागान् योजनस्यायामविष्कम्भेन 'तं तिगुणं'ति । तदनन्तरोक्तमायामविष्कम्भमानमेव त्रिगुणं सविशेषं-किञ्चिदधिकं साधिकषष्ठभागाधिकमित्यर्थः । परिक्षेपेण-परिधिना । 'चउवीसं'ति । चतुर्विंशतिमेकषष्टिभागान् योजनस्य बाहल्येन प्रज्ञप्तम् । आयामास्याद्धप्रमाणेनोच्चत्वात् । यदुक्तं—'चंदाइविमाणायामवित्थडाअद्धमुच्चत्तं'ति । एवमन्तरमण्डलपरिज्ञाने दशाधिकपञ्च योजनशतपरिज्ञानमुकरमेव प्राग् भावितं च ।

अथ मण्डलानां मन्दरस्य च परस्परं कियदन्तरम् ? इति पृच्छति

जंबुद्दीवे णं दीवे मंदरस्स पव्वयस्स केवइअं अबाहाए सव्वब्भंतरए सूरमंडले पण्णत्ते ? । गो० ! चोआलीसं जोअणसहस्साइं अट्ठ य वीसे जोअणसए अबाहाए सव्वब्भंतरए सूरमंडले पण्णत्ते । जंबुद्दीवे णं मंदरस्स पव्वयस्स केवइअं अबाहाए सव्वब्भंतराणंतरे सूरमंडले पण्णत्ते ? । गो० ! चोआलीसं जोअणसहस्साइं अट्ठ य बावीसे जोअणसए अडयालीसं च एगसट्ठि भागा जोअणस्स अबाहाए सव्वब्भंतराणंतरे सूरमंडले पण्णत्ते । जंबुद्दीवे णं मंदरस्स केवइअं अबाहाए अब्भंतराणंतरतच्चे सूरमंडले पण्णत्ते ? । गो० ! चोआलीसं जोअणसहस्साइं अट्ठ य पणवीसे जोअणसए पणतीसं च एगसट्ठिभागे जोअणस्स अबाहाए अब्भंतरे तच्चे सूरमंडले पण्णत्ते । एवं खलु एतेणं उवाएणं णिक्खममाणे सूरिए तयाणंतराओ तयणंतरं मंडलाओ मंडलं संकममाणे संकममाणे सूरिए दो दो जोअणाइं अडयालं च एगसट्ठिभागे जोअणस्स एगमेगे मंडले अबाहावुड्ढिं अभिवुड्ढेमाणे अभिवुड्ढेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति । जंबुद्दीवे णं मंदरस्स पव्वयस्स केवइअं अबाहाए सव्वबाहिरए सूरमंडले पण्णत्ते ? । गो० ! पणयालीसं जोअणसहस्साइं तिण्णितीसे जोअणसए अबाहाए सव्वबाहिरए सूरमंडले पण्णत्ते । जंबुद्दीवे णं मंदरस्स पव्वयस्स केवइअं अबाहाए बाहिराणंतरे सूरमंडले पण्णत्ते ? गो० ! पणयालीसं जोअणसहस्साइं तिण्णि अ सत्तावीसे जोअणसए तेरस य एगसट्ठिभागे जोअणस्स अबाहाए बाहिराणंतरे सूरमंडले पण्णत्ते । जंबुद्दीवे णं मंदरस्स पव्वयस्स केवइअं अबाहाए बाहिरतच्चे सूरमंडले पण्णत्ते ? । गो० ! पणयालीसं जोअणसहस्साइं तिण्णि अ चउवीसे जोअणसए छव्वीसं च एगसट्ठिभागे जोअणस्स अबाहाए बाहिरए तच्चे सूरमंडले पण्णत्ते । एवं खलु एतेणं उवाएणं पविसमाणे सूरिए तयाणंतराओ तयणंतरं मंडलाओ मंडलं संकममाणे संकममाणे दो दो जोअणाइं अडयालीसं च एगसट्ठिभागे जोअणस्स एगमेगे मंडले अबाहावुड्ढिं णिव्वेड्ढेमाणे णिव्वेड्ढेमाणे सव्वब्भंतरमंडलं उवसंकमित्ता चारं चरति ।

'जंबुद्दीवे दीवे' इत्यादि प्रश्न सुगम । भगवानाह गौतम ! चतुश्चत्वारिंशद्योजनसहस्राणि अष्टौ च विंशत्यधिकानि योजनशतानि अबाधया सर्वाभ्यन्तरं सूर्यमण्डलं प्रज्ञप्तम् । तच्चैव-मंदराज्जम्बूद्वीपस्यान्तप्रदेशं पञ्चचत्वारिंशत् योजनसहस्राणि तेभ्योऽशीत्यधिके योजनशते जम्बूद्वीपान्तश्चारक्षेत्रपरिमाणे शोधिते भवति यथोक्तं परिमाणमन्तरमिति । अथ द्वितीयमण्डलमधिकृत्य प्रश्नयति-'जंबु-

द्दीवे दीवे'इत्यादि। सर्वाऽभ्यन्तरमण्डलानन्तरं द्वितीयमण्डलमित्यर्थः। शेष सुगमम्। अथ तृतीय-मण्डलमाह जंबुद्दीवे णमि'त्यादि। सर्वाऽभ्यन्तरमण्डलानन्तर 'तच्चे'त्ति। तृतीयं। शेषं प्राग्वत्। अथ गौतमप्रश्नितमेवोपसंहारेणातिदिशन्नेव भगवान् सर्वत्र सूर्यचारमवतारयति। 'एवं खलि'त्यादि। एवमुक्तरीत्या अनन्तरानन्तरोदिता योजनसङ्ख्या ध्रुवाङ्कतयाऽभ्युपगम्याऽभ्युपगम्य खलुरवधारणे 'एएण'ति। एतेनानन्तरोदितेन 'दो दो जोअणाइमि'त्यादिना इहैव वक्ष्यमाणेन वा अष्टचत्वारिंशदेकष-ष्टिभागाधिकयोजनद्वयवृद्धिरूपेण उपायेन निष्क्रमणकारणभूतेन क्षेत्रेण निष्क्रामन् मण्डलपरिभ्रमणगत्या शनैः शनैर्दक्षिणाभिमुख मण्डलानि गच्छन् 'तयाणतराओ'त्ति। तस्माद्विवक्षितादभिगतात् तृतीयादेः 'तयणतर'ति। तद्विवक्षितमनन्तरमव्यवधानेनाभिगम्यमान चतुर्थादिक तदनन्तरात् तदनन्तर-मित्यत्र तच्छब्दरूपयोर्विशेषणयोः क्रमेण विशेष्ये आह—'मडलाओ मडल'ति। मण्डलात् मण्डल तदनन्तरान्मण्डलात् तदनन्तरं मण्डल तृतीयान्मण्डलाच्चतुर्थं मण्डलं, चतुर्थात्पञ्चमं, पञ्चमात्षष्ठ, षष्ठात्सप्तममित्यादिक्रमेणेत्यर्थ। 'सकममाणे'त्ति। सङ्क्रामन् सङ्क्रामन् सङ्क्रम कुर्वन् सूर्यो द्वे द्वे योजने अष्टचत्वारिंशतमेकषष्टिभागाश्च योजनस्य एकैकस्मिन् मण्डले अबाधावृद्धिमभिवर्द्धयन् अभिवर्द्धयन् सर्वबाह्यमण्डल यावदुपसङ्क्रम्य चार चरति। इयमत्र भावना-सर्वाऽभ्यन्तरमण्डले प्रविष्ट. सन् प्रथमप्रदेशादूर्ध्वं शनैः शनैस्तदनन्तर द्वितीयमण्डलाभिमुख तथाकथञ्चन मण्डलगत्या परिभ्रमति यथा तस्य प्रथममण्डलस्य पर्यन्ते सर्वाभ्यन्तरमण्डलगतान् अष्टचत्वारिंशतमेकषष्टि-भागान् योजनस्यापरे च द्वे योजने अतिक्रान्तो भवति कालतोऽप्येकेनाऽहोरात्रेणेत्यर्थाद् बोध्यम्। यदुक्तं-'तया णं दो जोअणाइं अडयालीस च एगसट्ठि भागे जोअणस्स एगमेग मडल एगमेगेण राइदिएण विकपइत्ता विकंपइत्ता सूरिए चार चरती'ति। (सू प्र प्रा १ प्रा. प्रा. ६)। अथातिदेशेनोक्तस्य सर्वबाह्यमण्डलस्यान्तर व्यक्त्या पृच्छति—'जबुद्दीवे णमि'त्यादि। यद्वा—येनैव क्रमेण सर्वाभ्यन्तरमण्ड-लात्सर्वबाह्यमण्डल यावत्सूर्यो निष्क्रान्तस्तेनैव क्रमेण सर्वबाह्यमण्डलात् सर्वाभ्यन्तरमण्डल यावदन्तः प्रविशति उतान्यथा च? इति शङ्कायां प्रथमं सर्वबाह्यस्य मण्डलस्य मेरोश्चाऽन्योऽन्यमबाधान्तराल प्रश्नयति—'जबूद्दीवे णमि'त्यादि प्रश्नः सुगमः। भगवानाह—गौतम! पञ्च चत्वारिंशत योजनसहस्राणि त्रीणि च त्रिंशदधिकानि योजनशतानि शेषं स्पष्टम्। अथ सर्वबाह्यान्मण्डलाद्यद्द्वितीयं मण्डल तद्विषयं प्रश्नमाह—जंबुद्दीवे णमि'त्यादि प्रश्न प्राग्वत्। भगवानाह—गौतम! पञ्चचत्वारिंशतं योजन-सहस्राणि त्रीणि सप्तविंशत्यधिकानि योजनशतानि त्रयोदश चैकषष्टिभागान् योजनस्य ४५३२७/$\frac{13}{61}$ अबाधया बाह्याऽनन्तरं-सर्वबाह्यमण्डलात् अनन्तरं—जम्बूद्वीपप्रवेशाभिमुखस्य चारक्षेत्रस्यादिभूत द्वितीयं मण्डल प्रज्ञप्तम्। अथैवमेव तृतीयमण्डल पृच्छति—'जबुद्दीवे णमि'त्यादि प्रश्न प्राग्वत्। भगवानाह—गौतम! पञ्चचत्वारिंशत योजनसहस्राणि त्रीणि च चतुर्विंशत्यधिकानि योजनशतानि षड्विंशतिं चैकषष्टिभागान् योजनस्य ४५३२४—$\frac{26}{61}$ अबाधया बाह्य तृतीय मण्डल प्रज्ञप्तम्। अथ गौतम प्रश्नितमति देशेनाह—'एव खलि'त्यादि। व्याख्या च प्रागुक्तैव। नवर प्रविशन् उत्तराभिमुखानि मण्डलानि चरन् अबाधावृद्धि निर्वेष्टयन् निर्वेष्टयन्—हापयन् हापयन्नित्यर्थ।

अथोक्तानामेव मण्डलानामायामादि जिज्ञासुः पृच्छति

जंबुद्दीवे दीवे सव्वब्भंतरए णं भंते ! सूरमंडले केवइअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं पण्णत्ते ? । गो० ! णवणउतिं जोअणसहस्साइं छच्च चत्ताले जोअणसए आयामविक्खंभेणं तिण्णि अ जोअणसयसहस्साइं पण्णरस य जोअणसहस्साइं एगूणणउइं च जोअणाइं किंचि विसेसाहिए परिक्खेवेणं । अब्भंतराणंतरे णं भंते ! सूरमंडले केवइअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं पण्णत्ते ? । गो० ! णवणउइं जोअणसहस्साइं छच्च पणयाले जोअणसए पणतीसं च एगसट्ठिभागे जोअणस्स आयामविक्खंभेणं । तिण्णि अ जोअणसयसहस्साइं पण्णरस सहस्साइं एगं च सत्तुत्तरं जोअणसयं परिक्खेवेणं पण्णत्ते । अब्भंतराओ तच्चे णं भंते ! सूरमंडले केवइअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं पण्णत्ते ? । गो० ! णवणवतिं जोअणसहस्साइं छच्च एकावण्णे जोअणसए णव य एगसट्ठिभागे जोअणस्स आयामविक्खंभेणं । तिण्णि अ जोअणसयसहस्साइं पण्णरसं जोअणसहस्साइं एगं च पणवीसं जोअणसयं परिक्खेवेणं । एवं खलु एतेणं उवाएणं णिक्खममाणे सूरिए तयाणंतराओ तयाणंतरं मंडलाओ मंडलं संकममाणे संकममाणे पंच पंच जोअणाइं पणतीसं च एगसट्ठिभागा जोअणस्स एगमेगे मंडले विक्खंभवुड्ढिं अभिवुड्ढेमाणे अभिवुड्ढेमाणे अट्ठारस अट्ठारस जोअणाइं परिरयवुड्ढिं अभिवुड्ढेमाणे अभिवुड्ढेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति । सव्वबाहिरए णं भंते ! सूरमंडले केवइअं आयामविक्खंभेणं । केवइअं परिक्खेवेणं प० ? । गो० ! एगं जोअणसयसहस्सं छच्च सट्ठे जोअणसए आयामविक्खंभेणं । तिण्णि अ जोअणसयसहस्साइं अट्ठारस सहस्साइं तिण्णि अ पणरसुत्तरे जोअणसए परिक्खेवेणं । बाहिराणंतरे णं भंते ! सूरमंडले केवइअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं पण्णत्ते ? । गो० ! एगं जोअणसयसहस्सं छच्च चउपण्णे जोअणसए छव्वीसं च एगसट्ठिभाए जोअणस्स आयामविक्खंभेणं । तिण्णि अ जोअणसयसहस्साइं अट्ठारस सहस्साइं दोण्णि अ सत्ताणउए जोयणसए परिक्खेवेणं । बाहिरतच्चे णं भंते ! सूरमंडले केवतिअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं पण्णत्ते ? । गो० ! एगं जोअणसयसहस्सं छच्च अडयाले जोअणसए बावण्णं च एगसट्ठिभागे जोअणस्स आयामविक्खंभेणं । तिण्णि अ जोअणसयसहस्साइं अट्ठारस य सहस्साइं दोण्णि अ अउणासीए जोअणसए

किंचिविसेसाहिए परिक्खेवेणं । एवं खलु एतेणं उवाएणं पविसमाणे सूरिए तदाणंतराओ तदाणंतरं मंडलाओ मंडलं संकममाणे संकममाणे पंच पंच जोअणाइं पणतीसं एगसट्ठिभागे जोअणस्स एगमेगे मंडले विक्खंभवुड्ढि णिवुड्ढेमाणे णिवुड्ढेमाणे अट्ठारस अट्ठारस जोअणाइं परिरयवुड्ढिं णिवुड्ढेमाणे णिवुड्ढेमाणे सव्वब्भंतरमंडलं उवसंकमित्ता चारं चरति ॥

'जंबुद्दीवे' इत्यादि । जम्बूद्वीपे द्वीपे सर्व्वाऽभ्यन्तरं भदन्त ! सूर्यमण्डलं 'केवइअ'ति । कियत्प्रमाणमायामविष्कम्भाभ्यां ? कियच्च परिक्षेपेण प्रज्ञप्तम् ? । भगवानाह. गौतम ! नवनवतिं योजनसहस्राणि षट् च शतानि चत्वारिंशदधिकानि ९९६४० आयामविष्कम्भाभ्यां । तच्चैवं—सर्व्वाऽभ्यन्तरं मण्डलं तावदेकतोऽशीत्यधिकं योजनशतमवगाह्य स्थितं अपरतोप्येवमेवेत्युभयमीलने च जातानि षष्ट्यधिकानि त्रीणि शतानि ३६० । तानि च जम्बूद्वीपविष्कम्भादपसार्यन्ते जातं यथोक्तं ९९६४० प्रमाणमिति । अथ परिधिमाह-'तिण्णि अ'त्ति । त्रीणि च योजनशतसहस्राणि । चकारो भिन्नक्रमद्योतकः । तेनानन्तरमायामाद्युक्तमुच्यते च परिरय इति पञ्चदश सहस्राणि एकोननवत्यधिकानि ३१५०८९ किञ्चिद्विशेषाधिकानि परिक्षेपतः । तच्चैवं सर्व्वाऽभ्यन्तरमण्डलस्य विष्कम्भस्य वर्गो विधीयते । जातं नवकद्वयं द्विकोऽष्टक एकको द्विको नवकः षट्को द्वे च शून्ये ९९२८१२९६०० । ततो दशभिर्गुणने जातमेकमधिकं शून्यं ९९२८१२९६००० । अस्य

'विसमपयचइअवग्गे मूले ठाणुट्ठिए दुगुणिए अ । लद्धपतिठिअ धुअवग्ग दुगुण पुणद्धिअ करणी' ॥ १ ॥

ति । गाथोक्तकरणेन वर्गमूलाऽऽनयने लब्धं ३१५०८९ यथोक्तं परिरयपरिमाणं । शेषं तिष्ठति द्विक एककोऽष्टकः शून्यं सप्तको नवकश्च २१८०७९ । एतच्च चतुरादिगुणित छेदकराशिना च विभक्तं गव्यूतादिकं लभ्यते तेन किञ्चिद्विशेषाधिकं ज्ञातव्यम् । एतत्करणविस्तरस्तु प्राग् जम्बूद्वीपपरिरयकरणावसरे भावितः । अथैवं द्वितीयमण्डलमधिकृत्य पृच्छति—'अब्भंतराणंतरे णमि'त्यादि । अभ्यन्तराऽनन्तरं सर्व्वाऽभ्यन्तराऽव्यवधानेन नापरं द्वितीयमित्यर्थः । शेषं सुगमं । नवरं परिक्षेपे सप्तोत्तरं योजनशतं किञ्चिदूनं वक्तव्यं । यदागमः 'एगं च सत्तुत्तरं जोअणसयं किञ्चिविसेसूणं परिक्खेवेणं पण्णत्ते'त्ति । सूर्यप्रज्ञप्तौ । यद्वात्र सूत्रे व्यवहारनयवलम्ब्य किञ्चिन्न्यूनत्वस्याऽविवक्षणम् । एवमग्रेऽपि किञ्चिन्न्यूनाधिकविषये यत्र विशेषो नोपलभ्यते तत्रेदमेवाकूतमभिधातव्यम् । सूर्यप्रज्ञप्तिवृत्तौ तथैव समर्थनात् । या च पञ्चत्रिंशदेकषष्टिभागाधिकपञ्चयोजनवृद्धिः सा हृयुभयपार्श्वसम्बन्धिनोर्मण्डलान्तरमण्डलयोः क्षेत्रप्रमाणस्य प्रक्षेपादवसातव्या । एवमग्रेऽपि परिभावनीयम् । अथ तृतीयमण्डलस्यायामादि पृच्छति—'अब्भतराओ तच्चे णमि'त्यादि प्रश्नः प्राग्वत् । भगवानाह—गौतम ! नवनवतिं योजनसहस्राणि एकपञ्चाशदधिकानि षड्योजनशतानि नव चैकषष्टिभागा योजनस्य ९९६५१ अंशाः ९/६१ आयामविष्कम्भेन । 'तिण्णि'त्ति । त्रीणि योजनशतसहस्राणि पञ्चदश च योजनसहस्राणि एकं च पञ्चविंशत्यधिकं योजनशतं परिक्षेपेणेति । अथ गौतमप्रश्नितमेवातिदेशेन भगवानाह—'एवं खलु'त्यादि । एवमुक्तप्रकारेण खलुर्निश्चये एतेनोपा-

येन प्रत्यहोरात्रमेकैकमण्डलमोचनरूपेण निष्क्रामन् सूर्य तदनन्तरान्मण्डलात् तदनन्तरं मण्डलं सङ्क्रामन् सङ्क्रामन् एकैकस्मिन् मण्डले पञ्च पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्येत्येव परिमाणा विष्कम्भवृद्धिमभिवर्द्धयन् अभिवर्द्धयन् । व्यवहारनयेनाष्टादशाऽष्टादश योजनानि परिरयवृद्धिमभिवर्द्धयन् अभिवर्द्धयन्, निश्चयनयमतेन तु सप्तदश योजनानि अष्टात्रिंशत चैकषष्टिभागान् योजनस्येति द्रष्टव्यम् । यदुक्त—'सत्तरस जोअणाइं अट्ठतीस च एगसट्ठि भागा १७ अंशा ३८/६१ । एअ निच्छएण । सववहारेण पुणो अट्ठारस जोअणाइं'ति । सर्व्वबाह्यमण्डलमुपसङ्क्रम्य चार चरति । अथ सर्व्वबाह्यमण्डलस्यातिदेशेन सिद्धमप्यायामादिपरिमाण व्यक्त्या पृच्छति—'सव्वबाहिरए णमि'त्यादि प्रश्न सुगम । भगवानाह-गौतम ! एक योजनशतसहस्र-लक्षमेकमित्यर्थ । षट् च षष्ट्यधिकानि योजनशतानि १००६६० आयामविष्कम्भेन । त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि ३१८३१५ परिक्षेपत । नवरं पञ्चदशोत्तराणि किञ्चिन्न्यूनानि द्रष्टव्यानि । अथ सर्व्वबाह्यमण्डलाऽपेक्षया द्वितीय मण्डलमायामादिना पृच्छति—'बाहिराणतरेणमि'त्यादि । सर्व्वबाह्यानन्तरमर्व्वाक्तन द्वितीयमित्यर्थः । 'भदते'त्यादि व्यक्त । भगवानाह—गौतम ! एक योजनशतसहस्र षट् च योजनशतानि चतुष्पञ्चाशदधिकानि षड्विंशति चैकषष्टिभागान् योजनस्य १००६५४—२६/६१ आयामविष्कम्भेन । 'तिण्णि'त्ति । त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि द्वे च योजनशते सप्तनवत्यधिके ३१८२९७ परिक्षेपत. । अथ तृतीयमण्डलस्याऽऽयामादि पृच्छति—'बाहिरतच्चे णमि'त्यादि । बाह्य तृतीय सर्व्वबाह्यमण्डलमधिकृत्य तृतीयमित्यर्थ । भगवानाह—गौतम ! एकं योजनशतसहस्र षट् च योजनशतानि अष्टचत्वारिंशदधिकानि द्विपञ्चाशच्चैकषष्टिभागान् योजनस्य १००६४८ अंशा ५२/६१ आयामविष्कम्भेन । तथा 'तिण्णि'त्ति । त्रीणि च योजनशतसहस्राणि अष्टादश सहस्राणि द्वे शते एकोनाशीत्यधिके ३१८२७९ किञ्चिद्विशेषाधिके परिक्षेपतः । अथ गौतमप्रश्नितमुपसहारेण भगवानाह-'एव खल्वि'त्यादि । एतत्सूत्र प्राग्व्याख्यानानुसारेण परिभावनीय । तत्र 'णिव्वेढ्ढेमाणे'इति । निर्व्वेष्टयन् निर्व्वेष्टयन्—हापयन् हापयन्नित्यर्थ । यद्यपि प्रकृतसूत्र प्रायः 'अबाहावुड्ढि णिवुड्ढेमाणे'इति दृश्यते । तथाप्येवविधस्य शब्दस्य क्वाऽपि व्याख्यानाऽनुपलम्भात् सूर्यप्रज्ञप्तिवृत्तौ चोक्तव्याख्यानस्यैवोपलम्भाच्चेति चिन्त्यम् ।

अथ सर्व्वाभ्यन्तरमण्डलवर्ती सूर्य एकैकेन मुहूर्त्तेन यावत्क्षेत्रमतिक्रामति तावत्क्षेत्र प्रश्नयति

**जया णं भंते ! सूरिए सव्वब्भंतरं मडलं उवसंकमित्ता चार चरति तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छति ? । गो० ! पंच पच जोअणसहस्साइं दोण्णि अ एगावण्णे जोअणसए एगुणतीसं च सट्ठिभागे जोअणस्स एगमेगेण मुहुत्तेणं गच्छति । तया णं इहगयस्स मणुअस्स सीआलीसाए जोअणसहस्सेहिं दोहिं अ तेवट्ठेहिं जोअणसएहिं एक्कवीसाए जोअणस्स सट्ठिभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छति । से णिक्खममाणे सूरिए णवं**

संवच्छरं अयमाणे पढमंसि अहोरत्तंसि सव्वब्भंतराणंतरमंडलं उवसंकमित्ता चारं चरति। जया णं भंते! सूरिए अब्भतराणंतरमंडलं उवसंकमिता चारं चरति। तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छति?। गो०! पंच पंच जोअणसहस्साइं दोण्णि अ एगावण्णे जोअणसए सीआलीसं च सट्ठिभागे जोअणस्स एगमेगेणं मुहुत्तेणं गच्छति। तया णं इहगयस्स मणुअस्स सीआलीसाए जोअणसहस्सेहिं एगूणासीते जोअणसए सत्तावण्णं च सट्ठिभागेहिं जोअणस्स सट्ठिभागं च एगसट्ठिहा छेत्ता एगूणवीसाए चुण्णिआभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छति। से णिक्खममाणे सूरिए दोच्चंसि अहोरत्तंसि अब्भंतरं तच्च मंडलं उवसंकमित्ता चारं चरति। जया णं भंते! सूरिए अब्भंतरं तच्चं मंडलं उवसंकमित्ता चारं चरति। तयाणं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छति?। गो०! पंच पंच जोअणसहस्साइं दोण्णि अ बावण्णे जोअणसए पंच य सट्ठिभागे जोअणस्स एगमेगेणं मुहुत्तेणं गच्छति। तया णं इहगयस्स मणुअस्स सीआलीसाए जोअणसहस्सेहिं छण्णउतीए जोअणेहिं तेत्तीसाए अ सट्ठिभागेहिं जोअणस्स सट्ठिभागं च एगसट्ठिहा छेत्ता दोहिं चुण्णिआभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छति। एवं खलु एएणं उवाएणं णिक्खममाणे सूरिए तयणंतराओ तयाणंतरं मंडलाओ मंडलं संकममाणे संकममाणे अट्ठारस अट्ठारस सट्ठिभागे जोअणस्स एगमेगे मंडले मुहुत्तगइं अभिवुड्ढेमाणे अभिवुड्ढेमाणे चुलसीइं जोअणाइं पुरिसच्छायं णिव्वुड्ढेमाणे णिव्वुड्ढेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति। जया णं भंते! सूरिए सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति। तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छति?। गो०! पंच पंच जोअणसहस्साइं तिण्णि अ पंचुत्तरे जोअणसए पण्णरस य सट्ठिभागे जोअणस्स एगमेगेणं मुहुत्तेणं गच्छति। तया णं इहगयस्स मणुअस्स एक्कतीसाए जोअणसहस्सेहिं अट्ठहि अ एक्कतीसे जोअणसएहिं तीसाए सट्ठिभागेहिं जोअणस्स सूरिए चक्खुप्फासं हव्वमागच्छति। एस णं पढमे छम्मासे। एस णं पढमस्स छम्मासस्स पज्जवसाणे। से सूरिए दोच्चे छम्मासे अयमाणे पढमंसि अहोरत्तंसि बाहिराणतरं मंडलं उवसंकमित्ता चारं चरति। जया णं भंते! सूरिए बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरति। तया णं एगमेगेणं मुहुत्तेण केवइअं खेत्तं गच्छति?। गो०! पंच पंच जोअणसहस्साइं तिण्णि अ चउरुत्तरे जोअणसए सत्तावण्णं च सट्ठिभागे जोअणस्स एगमेगेणं मुहुत्तेणं गच्छति। तया णं इहगयस्स मणुअस्स एक्कतीसाए जोअणसहस्सेहिं नवहि अ सोलसुत्तरेहिं जोअणसएहिं

ओगुणतालीसाए सट्ठिभागेहिं जोअणस्स सट्ठिभागं च एगट्ठिधा छेत्ता सट्ठीए चुण्णिआभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छति । से पविसमाणे सूरिए दोच्चंपि अहोरत्तंसि बाहिरतच्चं मंडलं उवसंकमित्ता चारं चरति । जया णं भंते ! सूरिए बाहिरतच्चं मंडलं उवसंकमित्ता चारं चरति तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छति ? । गो० ! पंच पंच जोअणसहस्साइं तिण्णि अ चउरुत्तरे जोअणसए ओगुणतालीसं च सट्ठिभागे जोअणस्स एगमेगेण मुहुत्तेणं गच्छति । तया णं इहगयस्स मणुअस्स एगाहिएहिं बत्तीसाए जोअणसहस्सेहिं एगूणपण्णाए य सट्ठिभागेहिं जोअणस्स सट्ठिभागं च एगट्ठिहा छेत्ता तेवीसाए चुण्णिआभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छति । एवं खलु एएणं उवाएणं पविसमाणे सूरिए तयाणंतराओ तयाणंतरं मंडलाओ मंडलं संकममाणे संकममाणे अट्ठारस अट्ठारस सट्ठिभागे जोअणस्स एगमेगे मंडले मुहुत्तगइं निव्वुड्ढेमाणे निव्वुड्ढेमाणे सातिरेगाइं पंचासीतिं पंचासीतिं जोअणाइं पुरिसच्छायं अभिवुड्ढेमाणे अभिवुड्ढेमाणे सव्वब्भतरं मंडलं उवसंकमित्ता चारं चरति । एस णं दोच्चे छम्मासे । एस णं दोच्चस्स छम्मासस्स पज्जवसाणे । एस णं आइच्चे संवच्छरे । एस णं आइच्चस्स संवच्छरस्स पज्जवसाणे पण्णत्ते ॥

'जया णमि'त्यादि । यदा भदन्त ! सूर्य सर्वाऽभ्यन्तरमण्डलमुपसङ्क्रम्य चार चरति 'तया ण' ति । तदा णमिति प्राग्वत् । एकैकेन मुहूर्तेन कियत्क्षेत्र गच्छति ? सूर्य इति गम्य । भगवानाह-गौतम ! पञ्च पञ्च योजनसहस्राणि द्वे द्वे योजनशते एकपञ्चाशदधिके एकोनत्रिंशत चैकषष्टिभागान् योजनस्य ५२५१ अ शा २९/६० । एकैकेन मुहूर्तेन गच्छति । तत् कथमवसीयते ? इति चेत्, उच्यते-यद्यपि द्वाभ्यां सूर्याभ्यामेकेनाहोरात्रेण परिपूर्णं मण्डल भवति । तथापि सूर्यस्य गतिचारविचारणायामेकेन सूर्येण यत् परिपूर्णं मण्डल भवति । तदेवेहाऽधिकृतमवसातव्य । तच्च द्वाभ्यामहोरात्राभ्या परिभ्रमणत. समाप्यते । द्वयोश्चाहोरात्रयोर्मुहूर्ता षष्टिर्भवन्ति । ततो मण्डलपरिरयस्य षष्ट्या भाग हारयेत् । यच्च भागलब्ध तन्मुहूर्तगतिप्रमाण । तत्र सर्वाऽभ्यन्तरमण्डले परिरयपरिमाण त्रीणि लक्षाणि पञ्चदश सहस्राणि नवाशीत्यधिकानि ३१५०८९ । अस्य च षष्ट्या भागे हृते लब्ध यथोक्त मुहूर्तगतिपरिमाणम् । अथाऽस्मिन् सर्वाऽभ्यन्तरमण्डले कियति क्षेत्रे वर्तमानः सूर्य इहगताना मनुष्याणा चक्षुर्गोचरमायातीति प्रश्नावकाशमाशङ्क्य निर्वचनमाह-'तया णमि'त्यादि । तदा सर्वाऽभ्यन्तरचारचरणकाले उदयमान सूर्य इहगतस्य मनुष्यस्य जातावेकवचन । तेनेह भरतगताना मनुष्याणा सप्तचत्वारिंशता योजनसहस्रैर्द्वाभ्या त्रिषष्टाभ्या-त्रिषष्ट्यधिकाभ्यां योजनशताभ्याम् एकविंशत्या च षष्टिभागैर्योजनस्य ४७२६३-२१/६० । चक्षुःस्पर्शं हव्व-शीघ्रमागच्छति । कास्त्रोपपत्ति ? इतिचेत्, उच्यते-इह हि दिवसस्यार्द्धेन यावत्क्षेत्र व्याप्यते तावति व्यवस्थितो ह्युदयमान. सूर्यश्चक्षुर्विषयो भवति । सर्वाऽभ्यन्तरे च

मण्डले दिवसोऽष्टादश मुहूर्त्तप्रमाण । तेषा चार्द्धं नव मुहूर्त्ता भवन्ति । एकैकस्मिश्च मुहूर्त्ते सर्वाऽभ्यन्तर-मण्डलचारी सूर्य. पञ्च पञ्च योजनसहस्राणि द्वे च शते एकपञ्चाशदधिके एकोनत्रिंशत च षष्टिभागान् योजनस्य ५२५१ अशा २९/६० गच्छति । तत एतावन्मुहूर्त्तगतपरिमाण नवभिर्मुहूर्त्तैर्गुण्यते । जात यथोक्त दृष्टिपथप्राप्तताविषये परिमाणमिति । अथ सर्वाऽभ्यन्तरमण्डलमुपसम्पद्य द्वितीयसमये कीदृश-श्चार चरति ? इत्याह–' से णिक्खममाणे'त्ति । तत स सूर्यो निष्क्रामन् सर्वाऽभ्यन्तरमण्डलमुपसम्पद्य द्वितीयसमये एव । तस्मात् प्रागुक्तप्रकारेणेतिवाक्यमध्याहार्यं । दक्षिणाभिमुख मण्डलानि सञ्चरन् सूर्यो नव सवत्सरमाददानो नवस्य सवत्सरस्य प्रथमे अहोरात्रे अभ्यन्तरानन्तर सर्वाऽभ्यन्तराद् द्वितीयं मण्डलमुपसङ्क्रम्य चार चरति । अथ द्वितीयमण्डले चारक्षेत्रविषय प्रश्नमाह 'जया णमि'त्यादि प्रश्न सुगम । भगवानाह गौतम ! पञ्च पञ्च योजनसहस्राणि द्वे च एकपञ्चाशदधिके योजनशते सप्तचत्वारिंशत च षष्टिभागान् योजनस्य ५२५१ अ शा ४७/६० । एकेकेन मुहूर्त्तेन गच्छति । अय भाव –पूर्वमण्डलपरिरयपरिमाणादस्य मण्डलस्य परिमाणे व्यवहारत परिपूर्णान्यष्टादश योजनानि । निश्चयत किञ्चिदूनानि वर्द्धन्ते । तेषां च योजनाना षष्टया भागे हृते लब्धा अष्टादश षष्टिभागा। योजनस्य । ते च प्राक्तनमण्डलमुहूर्तगतिपरिमाणे प्रक्षिप्यन्ते । ततो जात यथोक्त प्रकृतमण्डले मुहूर्त्त-गतिपरिमाणमिति । एवमग्रेऽपि प्रक्षेपविधानेनाऽऽधिक्यमवसातव्यमिति । अत्रापि दृष्टिविषयप्राप्तता-विषयं परिमाणमाह–'तया णमि'त्यादि । तदा द्वितीयमण्डलचारकाले इहगतस्य मनुष्यस्य सप्तचत्वा-रिंशता योजनसहस्रैरेकोनाशीत्यधिकेन योजनशतेन सप्तपञ्चाशता षष्टिभागैर्योजनस्य एक च षष्टि-भागमेकषष्टिधा छित्वा तादृशैरेकोनविंशत्या चूर्णिकाभागै -भागभागाश्चूर्णिकाभागा उच्यन्ते ४७१७९/-५७/६०/१९/६१ । सूर्यश्चक्षु स्पर्शमागच्छति । अत्राप्यानयनविधि प्राग्वत् । नवर दिवसोऽष्टादश मुहूर्त्तप्रमाणो द्वाभ्या मुहूर्त्तैकषष्टिभागाभ्यामूनस्तस्यार्द्धं नव मुहूर्त्ता एकेन मुहूर्त्तैकषष्टिभागेन हीना अवसातव्याः । तथा च मुहूर्त्तैकगतिपरिमाणमुक्तलक्षणेन दिवसार्द्धपरिमाणेन गुणित विवक्षितपरिमाणं भवतीत्यर्थः । अथ द्वितीयमण्डलान्निष्क्रामन् सूर्य कथ चरति ? इत्याह–'णिक्खममाणे'त्ति । द्वितीयस्मादपि मण्डलात् सूर्य. प्रागुक्तप्रकारेण निष्क्रामन् नवस्य सवत्सरस्य सम्बन्धिनि द्वितीयेऽहोरात्रे, अब्भतर'त्ति । सर्वाऽभ्यन्तरात् मण्डलात् तृतीयमण्डलमुपसङ्क्रम्य चार चरति । अथात्राप्येकमुहूर्त्तगन्तव्यक्षेत्रपरिमाण पृच्छति–'जया णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह गौतम ! पञ्च पञ्च योजनसहस्राणि द्वे योजनशते द्विपञ्चाशदधिके पञ्च च षष्टिभागान् योजनस्य ५२५२-भागा ५/६० । एकैकेन मुहूर्त्तेन गच्छति । अत्रापि पूर्वमण्डलमुहूर्त्तगतिपरिमाणमष्टादशभिरेकषष्टिभागैर-धिक यथोक्त परिमाण भवतीति ज्ञेयम् । अथात्रापि दृष्टिपथावतरणमधिकृत्य परिमाणमाह 'जया णमि'त्यादि । तदा तृतीयमण्डलचारकाले इहगतस्य मनुजस्य सप्तचत्वारिंशता योजनसहस्रै षण्णवत्या च योजनै त्रयस्त्रिंशता च षष्टिभागैर्योजनस्य षष्टिभाग च एकमिति गम्यम् । एकषष्टिधा छित्त्वा तत्सम्बन्धिभ्यां द्वाभ्या चूर्णिकाभागाभ्या ४७०९६ भागा ३३/६० चू० २/६१ । सूर्यश्चक्षु.स्पर्शमाग-च्छति । तच्चैवम् अस्मिन् मण्डले दिवसोऽष्टादशमुहूर्त्तप्रमाणश्चतुर्भिमुहूर्त्तैकषष्टिभागैरूनस्तस्यार्द्धं

नव मुहूर्त्ता द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यां हीनाः । एतच्च मुहूर्त्तैकगतिपरिमाणेनाऽनन्तरोक्तेन गणित यथोक्तं परिमाण स्यादित्यर्थः । अथ गौतमाभिप्रायाऽऽरूढं प्रश्नसमूह भगवानेवोपसहारेणाह 'एवं खलिव'त्यादि । एवमेव एतेन प्रागुक्तप्रकारेण उपायेन शनै. शनैस्तत्तद्बहिर्मण्डलाभिमुखगमनरूपेण निष्क्रामन् सूर्यस्तदनन्तरान्मण्डलात् तदनन्तरं मण्डलं सङ्क्रामन् सङ्क्रामन् अष्टादश अष्टादश षष्टिभागान् योजनस्य व्यवहारत. परिपूर्णान्निश्चयत' किञ्चिदूनान् एकैकस्मिन् मण्डले मुहूर्त्तगतौ । द्वितीया सप्तम्यर्थे प्राकृतत्वात् । अभिवर्द्धयमानः अभिवर्द्धयमान. पूर्वपूर्वमण्डलाऽपेक्षया बाह्यबाह्यमण्डलस्य परिरयपरिमाणस्याष्टादशभिरष्टादशभिश्च योजनैरधिकत्वात् । 'चुलसीइ'ति । चकारो भिन्नक्रमद्योतकोऽध्याहार्य । तेन चतुरशीतिं चतुरशीतिं च योजनानि 'पुरिसच्छाय'त्ति । पुरुषस्य छाया यतो भवति सा पुरुषच्छाया । सा चेह प्रस्तावात् प्रथमतः सूर्यस्योदयमानस्य दृष्टिपथप्राप्तताऽवसातव्या । अत्रापि द्वितीया सप्तम्यर्थे प्राकृतत्वात् । तेन तस्या पुरुषच्छायाया 'णिव्वट्टेमाणे'त्ति । निर्वर्त्तयन् निर्वर्त्तयन्—हापयन् हापयन्नित्यर्थः । अयं भाव —एकैकस्मिन् एकैकस्मिन् मण्डले गतौ ध्रुवाङ्कतयाऽष्टादशैकषष्टिभागान् योजनस्याभिवर्द्धयमाना अभिवर्द्धयमान दृक्पथप्राप्ततायां च ध्रुवाङ्कतया चतुरशीतिं चतुरशीतिं योजनानि हापयन् हापयन् पूर्वपूर्वमण्डलदृष्टिपथप्राप्तताऽपेक्षया चोत्तरोत्तरमण्डलदृष्टिपथप्राप्ततायां चतुरशीतिं चतुरशीतिं योजनानि हानिमापादयन् आपादयन् यावत्सर्ववाह्यमण्डलमुपसङ्क्रम्य चार चरतीति सम्बन्धः । यच्चात्र ध्रुवाङ्कत्वमभिहित तत्स्थूलतयाऽवगन्तव्यम् । सूक्ष्मपर्यालोचनया तु यथासम्भव न्यूनाधिकत्वमपि । तेन पुरुषच्छायाया दृष्टिपथप्राप्ततारूपायां द्वितीयादिकेषु केषुचिन् मण्डलेषु चतुरशीति' चतुरशीतिर्योजनानि किञ्चिन्न्यूनानि । उपरितनेषु मण्डलेषु चाधिकान्यधिकतराणि द्रष्टव्यानि । अत एव सर्ववाह्यान् मण्डलादर्वाचीनेषु मण्डलेषु 'साइरेगाइं पचासीइं जोअणाइ पुरिसच्छाय'ति सूत्रकार एव वक्ष्यति । एतदानयनप्रकारस्त्विह ग्रन्थगौरवभयादनुक्तोऽपि सूर्यप्रज्ञप्तौ द्वितीयप्राभृतसम्बन्धिनस्तृतीयप्राभृतप्राभृतस्य टीकातोऽवसातव्यः । अथातिदेशेन सिद्धमपि सर्ववाह्यमण्डलं व्यक्त्या पृच्छति 'जया ण भंते !'इत्यादि यदा भदन्त ! सूर्य. सर्ववाह्यमण्डलमुपसङ्क्रम्य चार चरति । तदानीमेकैकेन मुहूर्त्तेन कियत्प्रमाण क्षेत्र गच्छति ? इति प्रश्नः । भगवानाह गौतम ! पञ्च पञ्च योजनसहस्राणि त्रीणि च शतानि पञ्चोत्तराणि पञ्चदश च षष्टिभागान् योजनस्य ५३०५ अंशा' $\frac{15}{60}$ । एकैकेन मुहूर्त्तेन गच्छति । तथाहि अस्मिन् मण्डले परिरयपरिमाण तिस्रो लक्षा अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि ३१८३१५ । तत एतस्य परिमाणस्य षष्ट्या भागो ह्रियते । लब्ध यथोक्तमिह मुहूर्त्तगतिपरिमाणमिति । अथाऽत्रैव दृष्टिपथप्राप्ततापरिमाणमाह 'तया ण इहे'त्यादि । तदा सर्ववाह्यमण्डलचारकाले इहगतस्य मनुष्यस्य एकत्रिंशता योजनसहस्रैः अष्टभिश्चैकत्रिंशदधिकैर्योजनशतैः त्रिंशता च षष्टिभागैर्योजनस्य ३१८३१ $\frac{30}{60}$ । सूर्य शीघ्र चक्षु स्पर्शमागच्छति । तथाहि—अस्मिन् मण्डले चार चरति सूर्ये दिवसो द्वादश मुहूर्त्तप्रमाणो भवति । दिवसस्य चार्द्धेन यावन्मात्र क्षेत्र व्याप्यते तावति क्षेत्रे व्यवस्थित उदयमान सूर्य उपलभ्यते । द्वादशाना च मुहूर्त्तानामर्द्धं षट् मुहूर्त्ता । ततो यदत्र मण्डले मुहूर्त्तगतिपरिमाणमनन्तरोक्त

जया णं भंते ! सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति, तया णं केमहालए दिवसे ? केमहल्लिआ राई भवति ? । गो० ! तया णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारस मुहुत्ते दिवसे भवति । जहण्णिआ दुवालस मुहुत्ता राई भवति । से णिक्खममाणे सूरिए णवं संवच्छरं अयमाणे पढमंसि अहोरत्तंसि अब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरति । जया णं भंते ! सूरिए अब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरति, तया णं केमहालए दिवसे भवति ? केमहालया राई भवति ? । गो० ! तया णं अट्ठारस मुहुत्ते दिवसे भवति दोहिं एगसट्ठिभागमुहुत्तेहिं ऊणे । दुवालस मुहुत्ता राई भवति दोहि अ एगसट्ठिभागमुहुत्तेहिं अहिआ । से णिक्खममाणे सूरिए दोच्चंसि अहोरत्तंसि जाव चरति, तया णं केमहालए दिवसे ? केमहालया राई भवति ? । गो० ! तया णं अट्ठारस मुहुत्ते दिवसे भवति चउहिं एगसट्ठिभागमुहुत्तेहिं ऊणे । दुवालस मुहुत्ता राई भवति चउहिं एगसट्ठिभागमुहुत्तेहिं अहिआ । एवं खलु एतेणं उवाएणं णिक्खममाणे सूरिए तयणंतराओ तयणंतरं मंडलाओ मंडलं संकममाणे दो दो एगसट्ठिभागमुहुत्ते एगमेगे मंडले दिवसखित्तस्स णिवुड्ढेमाणे णिवुड्ढेमाणे रयणिखेत्तस्स अभिवुड्ढेमाणे अभिवुड्ढेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता, चारं चरति । जया णं सूरिए सव्वब्भंतराओ मंडलाओ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति, तया णं सव्वब्भंतरं मंडलं पणिहाय एगेणं तेसीतेणं राइंदिअसएणं तिण्णि छावट्ठे एगसट्ठिभागसए मुहुत्तस्स एगदिवसखेत्तस्स अभिणिव्वुड्ढेत्ता रयणिखेत्तस्स अभिवड्ढेत्ता चारं चरति । जया णं भंते ! सूरिए सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति, तया ण केमहालए दिवसे भवति ? केमहालया राई भवति ? । गो० ! उत्तमकट्ठपत्ता उक्कोसिआ अट्ठारस मुहुत्ता राई भवति । जहण्णए दुवालस मुहुत्ते दिवसे भवति । एस णं पढमे छम्मासे । एस णं पढमस्स छम्मासस्स पज्जवसाणे । से पविसमाणे सूरिए दोच्चं छम्मासं अयमाणे पढमंसि अहोरत्तंसि बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरति । जया णं भते ! सूरिए बाहिराणंतरं मडलं उवसंकमित्ता चारं चरति, जया णं भंते ! सूरिए बाहिराणंतर मंडलं उवसंकमित्ता चारं चरति । तया णं केमहालए दिवसे भवति ? केमहालया राई भवति ? । गो० ! अट्ठारस मुहुत्ता राई भवति दोहिं एगसट्ठिभागमुहुत्तेहिं ऊणा । दुवालस मुहुत्ते दिवसे भवति दोहिं एगट्ठिभागमुहुत्तेहिं अहिए । से पविसमाणे सूरिए दोच्चंसि अहोरत्तंसि बाहिर तच्चं मंडल उवसंकमित्ता चारं चरति, जया णं भंते ! सूरिए बाहिरं तच्चं मंडल उवसंकमित्ता

**चारं चरति, तया णं केमहालए दिवसे भवति ? केमहालया राई भवति ? गो० ! तया णं अट्ठारस मुहुत्ता राई भवति चउहिं एगट्ठिभागमुहुत्तेहिं ऊणा । दुवालस मुहुत्ते दिवसे भवति चउहिं एगट्ठिभागमुहुत्तेहिं अहिए । एवं खलु एतेणं उवाएणं पविसमाणे सूरिए तयाणंतराओ तयाणंतरं मंडलाओ मंडलं उवसंकमित्ता चारं चरति । दो दो एगट्ठिभागमुहुत्ते एगमेगे मंडले रयणिखेत्तस्स णिवुड्ढेमाणे णिवुड्ढेमाणे, दिवसखेत्तस्स अभिवुड्ढेमाणे अभिवुड्ढेमाणे सव्वब्भंतरमंडलं उवसकमित्ता चारं चरति । जया णं भंते ! सूरिए सव्वबाहिराओ मंडलाओ सव्वब्भंतरमंडलं उवसंकमित्ता चारं चरति । तया णं सव्वबाहिरमंडलं पणिहाय एगेणं तेसीएणं राइंदिअसएणं तिण्णि छावट्ठे एगसट्ठिभागमुहुत्तसए रयणीखेत्तस्स णिव्वुड्ढेत्ता दिवसखेत्तस्स अभिवड्ढेत्ता चारं चरति । एस णं दोच्चे छम्मासे । एस णं दोचस्स छम्मासस्स पज्जवसाणे । एस णं आइच्चसंवच्छरे । एस णं आइच्चसंवच्छरस्स पज्जवसाणे पण्णत्ते ।**

'जया ण भते !' इत्यादि । यदा भदन्त ! णमित्यलङ्कारे । सूर्य सर्वाऽभ्यन्तरमण्डलमुपसङ्क्रम्य चार चरति 'तदा णमि'ति । प्राग्वत् । 'के महालए'त्ति । महान् आलय–आश्रयो व्याप्यतया कालरूपो व्याप्यक्षेत्ररूपो वा यस्य स 'किमि'ति किं प्रमाण यस्येति किंप्रमाण स चासौ महालयश्च किंप्रमाण महालयो दिवस. ? । प्रमाणशब्दस्येह सूत्रानुलोम्याल्लोपो द्रष्टव्यः । 'एव 'केमहल्लिअ'त्ति । किंप्रमाणा महती रात्रिर्भवति ? इति प्रश्ने । भगवानाह गौतम ! 'तया ण'ति । तदा णमिति प्राग्वत् । उत्तमकाष्ठप्राप्त' काष्ठशब्दश्चेह प्रकर्षवाची तेन परमप्रकर्ष प्राप्तो यतो नापरोऽधिको भवति स इत्यर्थ । 'उक्कोस'त्ति । उत्कर्षतीति उत्कर्ष स एवोत्कर्षक उत्कृष्ट इत्यर्थ । अष्टादश मुहूर्तो दिवसो भवति । तस्मिन्नेव च सर्वाऽभ्यन्तरे मण्डले चार चरति सूर्ये जघन्या–सर्वलघ्वी द्वादश मुहूर्ता रात्रि । अथ सर्वाऽभ्यन्तरमण्डले सूर्यस्य सकृदेव चारात् तदनु कथ चरति ? इत्याह–' से णिक्खममाणे'इत्यादि । तत स सूर्यो निष्क्रामन् सर्वाऽभ्यन्तरमण्डलाद्बहि सञ्चरन् नव सवत्सरमर्थात्सूर्यसवत्सरम् । 'अयमाणे'त्ति । आददान –प्रवर्त्तयमान प्रथमे अहोरात्रे सर्वाऽभ्यन्तरान्मण्डलादनन्तर द्वितीय मण्डलमुपसङ्क्रम्य चार चरति । 'जया णमि'त्यादि सुगम । 'तया ण'ति । तदा णमिति प्राग्वत् । किंमहालय –किंप्रमाणो दिवसो भवति ? किंप्रमाणा च रात्रि ? । भगवानाह गौतम ! तदा णमिति प्राग्वत् । अष्टादश मुहूर्त्तप्रमाणो दिवसो द्वाभ्या मुहूर्तैकषष्टिभागाभ्यामूनो भवति । रात्रिश्च द्वादश मुहूर्त्तप्रमाणा ताभ्यामधिका । कथमेतदवसीयते ? इति चेत्, उच्यते–इहैक मण्डलमेकेनाऽहोरात्रेण द्वाभ्या सूर्याभ्या परिसमाप्यते । एकैकश्च सूर्य प्रत्यहोरात्र मण्डलस्य त्रिंशदधिकानष्टादश शतसङ्ख्याकान् भागान् परिकल्प्य एकैक भाग दिवसक्षेत्रस्य रात्रिक्षेत्रस्य वा यथायोग्य हापयिता वर्द्धयिता वा भवति । स चैको मण्डलगतस्त्रिंशदधिकाष्टादश शततमो भागो द्वाभ्या मुहूर्तैकषष्टिभागाभ्या गम्यते । तथाहि–तानि मण्डलगतानि त्रिंशदधिकान्यष्टादशशतानि भागाना द्वाभ्या सूर्याभ्यामेकेनाऽहोरात्रेण गम्यन्ते । अहोरात्रश्च त्रिंशन्मुहूर्त्तप्रमाण. तत सूर्यद्वयापेक्षया षष्टिर्मुहूर्त्ता लभ्यन्ते ततस्त्रैराशिककर्मावकाश ।

तत् षड्भिर्गुण्यते । जातं यथोक्तं दृष्टिपथप्राप्ततापरिमाणमिति । अथ समुदायेन कालमधिकृत्य निगमनवाक्यमाह-'एस णं'ति । एष-अनन्तरोक्ततयाऽध्यक्षसिद्धं सर्वाऽभ्यन्तरमण्डलादारभ्य सर्वबाह्यमण्डलं यावत्सूर्यचारेणोपलक्षितसमुदायात्मकं कालविशेषः प्रथमा षण्मासी-षण्णां मासानां समाहारः षण्मासी प्राकृतत्वात् पुंस्त्वम् । अथ सर्वबाह्यमण्डले यदुक्तं तदेव किं सम्पन्नम् ? इत्याह 'एस णं' ति । एतच्चरममण्डलं सर्वबाह्यमण्डलं सूर्यचारनिमित्तकत्र्यशीतितमोऽहोरात्रो वा प्रथमायाः षण्मास्याः पर्यवसानमन्तो भवतीति । अथ द्वितीयायां षण्मास्यां सूर्यः कथं चरति ? इत्याह 'से सूरिए'इत्यादि । स सूर्यः द्वितीयषण्मास्यां अयमानः सर्वबाह्यमण्डलादुक्तक्रमेणाभ्यन्तरं प्रविशन् द्वितीयां षण्मासीमाददानः-प्रवर्त्तयन्नित्यर्थः । प्रथमे अहोरात्रेऽर्थात् द्वितीयायाः षण्मास्या इति द्रष्टव्यं । 'बाहिराणंतरं' ति । सर्वबाह्यमण्डलात् अनन्तरमर्वाचीनं द्वितीयं मण्डलमुपसङ्क्रम्य चारं चरति । अथ बाह्याऽनन्तरे चारं चरन् सूर्यः एकेन मुहूर्त्तेन कियत्प्रमाणं क्षेत्रं गच्छति ? इति प्रश्नयति 'जया णमि'त्यादि प्रश्नः प्राग्वत् । भगवानाह गौतम ! पञ्च पञ्च योजनसहस्राणि त्रीणि चतुरुत्तराणि योजनशतानि सप्तपञ्चाशतं च षष्टिभागान् योजनस्य ५३०४ अंशाः $\frac{५७}{६०}$ । एकैकेन मुहूर्त्तेन गच्छति । तथाहि प्रकृते मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादशसहस्राणि द्वे शते सप्तनवत्यधिके ३१८२९७ योजनानां ततः षष्ट्या भागे हृते लब्धं यथोक्तमिह मण्डले मुहूर्तगतिपरिमाणम् । अत्रापि दृष्टिपथप्राप्तताविषयपरिमाणमाह 'तया णं इहें'त्यादि । इहगतानां मनुष्याणाम् एकत्रिंशता योजनसहस्रैर्नवभिः षोडशोत्तरैर्योजनशतैः एकोनचत्वारिंशता च षष्टिभागैर्योजनस्य 'सट्ठिभागं च'त्ति । षष्टिभागं चैकमेकषष्टिधा छित्वा तादृशैश्च षष्ट्या चूर्णिकाभागैः (३१९१६/ $\frac{३९}{६०}$/$\frac{६०}{६१}$) सूर्यश्चक्षुस्पर्शमागच्छति । तथाहि-प्रकृतमण्डलचारिणि सूर्ये दिवसो द्वादश मौहूर्त्तिको द्वाभ्यां च मुहूर्त्तैकषष्टिभागाभ्यामधिकस्तेषां चार्द्धं षट् मुहूर्ताः एक एकषष्टिभागश्च । एतच्च सर्वमप्येकषष्टिभागाः सप्तषष्ट्यधिकानि त्रीणि शतानि ३६७ । एतैश्च प्रकृतमण्डलपरिरय परिमाणे ३१८२९७ गुणिते जातम् एकादश कोट्योऽष्टषष्टि लक्षाश्चतुर्दशसहस्राणि नव शतानि नवनवत्यधिकानि ११६८१४९९९ । तस्य चैकषष्ट्या गुणितया षष्ट्या-षष्ट्यधिकषट्त्रिंशच्छतलक्षणया ३६६० भागो ह्रियते लब्धं यथोक्तं ३१९१६ अंशाः $\frac{३९}{६०}$ चू० $\frac{६०}{६१}$ मानमिति। अथ सूर्यस्य तृतीयमण्डलचारमाह-'से पविसमाणे' इत्यादि । स प्रविशन् सूर्यः द्वितीयस्य षण्मासस्य 'दोच्चंसि'त्ति । द्वितीये अहोरात्रे 'बाहिरतच्चं'त्ति । सर्वबाह्यान्मण्डलादर्वाचीनं तृतीयं मण्डलमुपसङ्क्रम्य चारं चरति । अथ तृतीयमण्डलचारी सूर्य एकैकेन मुहूर्त्तेन कियत्प्रमाणं क्षेत्रं गच्छति ? इति प्रश्नयति-'जया णं भंते !' इत्यादि प्रश्नः प्राग्वत् । भगवानाह गौतम ! तदा पञ्च पञ्च योजनसहस्राणि त्रीणि चतुरुत्तराणि योजनशतानि एकोनचत्वारिंशतं च षष्टिभागान् योजनस्य ५३०४ क० $\frac{३९}{६०}$ । एकैकेन मुहूर्त्तेन गच्छति । तस्मिन् मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादशसहस्राणि द्वे शते एकोनाशीत्यधिके ३१८२७९ । अस्य षष्ट्या भागे हृते प्रकृतमण्डले यथोक्तं मुहूर्त्तगतिपरिमाणं भवेत् । अत्राऽपि दृष्टिपथप्राप्तताविषये परिमाणमाह 'तया णमि'त्यादि । इहगतानां मनुष्याणाम् एकाधिकैर्द्वात्रिंशता सहस्रैरेकोनपञ्चाशता षष्टिभागैः त्रयोविंशत्या च चूर्णिकाभागैः ३२००१ क $\frac{४९}{६०}$ चू० $\frac{२३}{६१}$ ।

चक्षुःस्पर्शमार्गं गच्छति । तथाहि—प्रकृतमण्डलचारिणि: सूर्ये दिवसो द्वादशमौहूर्तिकश्चतुर्भिर्मुहूर्तैकषष्टि-भागैरधिकस्तस्यार्द्धं च षट् मुहूर्ता. द्वौ चैकषष्टिभागौ । एतच्च सर्वमप्येकषष्टिभागा: त्रीणि शतान्य-ष्टषष्ट्यधिकानि ३६८ । एतैश्च प्रकृतमण्डलपरिरयपरिमाणे ३१८२७९ गुणिते जातमेकादश कोट्य एकसप्ततिर्लक्षा षड्विंशति. सहस्राणि षट् शतानि द्विसप्तत्यधिकानि ११७१२६६७२ । एतस्यैकषष्ट्या गुणितया षष्ट्या ३६६० भागो ह्रियते । लब्ध यथोक्त ३२००१ क० ४९/६० चू० २३/६१ परिमाणम् । अथ सर्वबाह्यान्मण्डलादर्वाचीनेषु चतुरादिषु मण्डलेषु अतिदेशमाह 'एव खलु'इत्यादि । एवमेव एतेन प्रागुक्तप्रकारेण उपायेन शनैः शनैस्तत्तदभ्यन्तरमण्डलाभिमुखगमनरूपेणाऽभ्यन्तरं प्रविशन् प्रविशन् सूर्यस्तदनन्तरान्मण्डलात् तदनन्तरं मण्डल सङ्क्रामन् सङ्क्रामन् अष्टादश अष्टादश षष्टिभागान् योजनस्य व्यवहारित. परिपूर्णान्निश्चयत किञ्चिदूनान् एकैकस्मिन् मण्डले मुहूर्त्तगतौ । द्वितीया सप्त-म्यर्थे-प्राकृतत्वात् । निर्वेष्टयन् निर्वेष्टयन्—हापयन् हापयन् पूर्वपूर्वमण्डलाऽपेक्षया अभ्यन्तराऽभ्यन्तर-मण्डलपरिरयपरिमाणस्याष्टादशभिरष्टादशभिर्योजनैर्हीनत्वात् । 'साइरेगाइ'ति । सातिरेकाणि पञ्चाशीतिं पञ्चाशीतिं योजनानि 'पुरिसच्छाय'ति । भिन्नक्रमद्योतकश्चकारोऽध्याहार्य. । अत्रापि द्वितीया सप्तम्यर्थे । तेन पुरुषच्छाया त्र दृष्टिपथप्राप्ततारूपायाम् अभिवर्द्धयन् अभिवर्द्धयन् इदमपि सर्वबाह्यान्मण्डलादर्वा-चीनेपु कतिपयेषु मण्डलेषु वर्त्तित्वेन स्थूलत उक्त द्रष्टव्य । परमार्थतस्तु येनैव क्रमेण सर्वाऽभ्यन्तर-मण्डलात् परतो दृष्टिपथप्राप्तता हापयन् हापयन् विनिर्गत तेनैव क्रमेण सर्वबाह्यान्मण्डलादर्वाचीनेपु मण्डलेपु दृष्टिपथप्राप्ततामभिवर्द्धयन् अभिवर्द्धयन् प्रविशति । तत्र सर्वबाह्यमण्डलादर्वाचीनद्वितीय-मण्डलगतात् दृष्टिपथप्राप्ततापरिमाणात् सर्वबाह्यमण्डले पञ्चाशीतिं योजनानि नव षष्टिभागान् योज-नस्य एक च षष्टिभागमेकषष्टिधा छित्वा तस्य सत्कान् षष्टिभागान् हापयन्ति । एव सर्वबाह्यमण्डला-दर्वाचीने द्वितीये मण्डले प्रविशन् तावद्भूयोऽपि दृष्टिपथप्राप्ततापरिमाणेऽभिवर्द्धयति । एतद्विषयेऽपि करणविधिस्तु सूर्यप्रज्ञप्तिटीकातोऽवसातव्य । एवमभिवर्द्धयन् तावद्वक्तव्यो यावत् 'सव्वब्भतर'त्ति । सर्वाऽभ्यन्तरमण्डलमुपसङ्क्रम्य चार चरति । अथ समुदायकालमधिकृत्य निगमनवाक्यमाह—'एस ण दोच्चे'त्ति । एपोऽनन्तरोक्त सर्वबाह्यमण्डलादारभ्य सर्वाऽभ्यन्तरमण्डल यावत् सूर्यचारोपलक्षित कालविशेष. द्वितीया षण्मासी । सूत्रे पुस्त्व प्राकृतत्वात् । षण्मासात्मक कालविशेषो भवतीत्यर्थ । अथ सर्वाऽभ्यन्तरमण्डल किं सम्पन्नम् ? इत्याह 'एस ण'ति । एष सर्वाऽभ्यन्तरमण्डलसूर्यचारनिमित्त-कस्त्र्यशीत्यधिकशततमोऽहोरात्र द्वितीयाया षण्मास्या: पर्यवसान भवति । अथोभयोरपि षण्मास्यो निगमनवाक्यमाह—'एस ण'ति । एष सव्वाऽभ्यन्तरमण्डलाद्यावत्सर्व्वबाह्यमण्डल सर्व्वबाह्यमण्डलाच्च यावत्सव्वाऽभ्यन्तरमण्डल सूर्यचारेणोपलक्षित षट्षष्ट्यधिकत्रिशतरात्रिदिवप्रमाणो द्वादशमासात्मक काल आदित्यसवत्सरो भवति । अथ सव्वाऽभ्यन्तरमण्डले किं सम्पन्नम् ? इत्याह—'एस ण'ति । एष षट्षष्ट्यधिकत्रिशततमोऽहोरात्र आदित्यसवत्सरस्य पर्यवसान भवति ।

अथ सव्वाऽभ्यन्तरमण्डलचारिणि सूर्ये किं प्रमाणो दिवस ? किं प्रमाणा च रात्रि ? इति जिज्ञासुर्गौतम पृच्छति

यदि षष्ट्या मुहूर्त्तैरष्टादश-शतानि त्रिंशदधिकानि मण्डलस्य भागाना गम्यन्ते । तर्त एकेन मुहूर्त्तेन किं गम्यते ? राशित्रयस्थापना ६०-१८३०-१ । अत्रान्त्येन राशिना एककलक्षणेन मध्यस्य राशेर्गुणनात् एकेन गुणितं तदेव भवतीति जातानि अष्टादश शतानि त्रिंशदधिकानि तेषामाद्येन राशिना षष्टि-लक्षणेन भागो ह्रियते । लब्धा सार्द्धं त्रिंशद्भागाः । एतावन्मुहूर्त्तेन गम्यते । मुहूर्त्तश्च एकषष्टिभागी-क्रियते । तत आगतमेको भागो द्वाभ्या मुहूर्त्तैकषष्टिभागाभ्यां गम्यते । यदि वा त्र्यशीत्यधिकेनाहोरात्र-शतेन षट् मुहूर्त्ता हानौ वृद्धौ वा प्राप्यन्ते । तत एकेनाऽहोरात्रेण किं प्राप्यते ? राशित्रयस्थापना १८३-६-१ । अत्रान्त्येन राशिना एकलक्षणेन मध्यराशिर्गुण्यते जातास्त एव षट् तेषा त्र्यशीत्यधिकेन शतेन भागहरण तत्रोपरितनराशेस्तोकत्वात् भागो न लभ्यते । ततश्छेद्यच्छेदकराश्योस्त्रिकेनाऽपवर्त्तना कर्त्तव्या । जात-उपरितनो राशिर्द्विकरूपः । अधस्तन एकषष्टिरूप । आगतं द्वावेकषष्टिभागौ मुहूर्त्तस्य एकस्मिन्नहोरात्रे वृद्धौ हानौ वा प्राप्येते इति । अथ द्वितीयेऽहोरात्रे सूर्य. कथ चरति ? इत्याह-'से णिक्खममाणे'इत्यादि । स निष्क्रामन् सूर्यो द्वितीयेऽहोरात्रे यावच्चरति । यावत्करणात् 'अब्भतरतच्चं मडल उवसकमित्ता चार चरति'त्ति द्रष्टव्य । तत्राऽभ्यन्तरात्तृतीय मण्डलमुपसङ्क्रम्य चार चरती-त्यर्थ । यदेत्यध्याहार्यं । 'तदा ण'ति । तदानीं किंप्रमाणो दिवस ? किंप्रमाणा च रात्रिर्भवति ? । भगवानाह-गौतम ! यदा सूर्य सर्व्वाऽभ्यन्तरमण्डलमपेक्ष्य तृतीय मण्डलमुपसङ्क्रम्य चार चरति । तदा चतुर्भिर्मुहूर्त्तैकषष्टिभागैर्हीनोऽष्टादश मुहूर्त्तप्रमाणो दिवसो भवति । प्राकृतत्वाद् 'एगसट्ठिभागमुहुत्ते-हिमि'त्यत्र मुहूर्त्तशब्दस्य व्यत्यय. 'दुवालस मुहुत्त'त्ति । द्वादश मुहूर्त्ता रात्रिश्चतुर्भिर्मुहूर्त्तस्यैकषष्टि-भागैरधिका भवति । अथ गौतमप्रश्नसमूहमतिदेशेन भगवान्निर्व्वक्ति-'एव खलु'त्यादि । एवमुक्तरीत्या खल्वेतेनाऽनन्तरोदितेनोपायेन प्रतिमण्डल रात्रिदिवसविषयमुहूर्त्तैकषष्टिभागद्वयहानिवृद्धिरूपेण निष्क्रा-मन् मण्डलपरिभ्रमणगत्या शनै शनैर्दक्षिणाभिमुखं गच्छन् सूर्य 'तयाणतराओ'त्ति । तस्माद्विवक्षि-तादनन्तरान्मण्डलात् 'तयणतर'ति । तद्विवक्षितमनन्तर मण्डल सङ्क्रामन् एकैकस्मिन् मण्डले मुहूर्त्तस्य द्वौ द्वावेकषष्टिभागौ दिवसक्षेत्रस्य निर्व्वेष्टयन् निर्व्वेष्टयन् हापयन् हापयन् रजनिक्षेत्रस्य प्रतिमण्डल द्वौ द्वावेकषष्टिभागौ मुहूर्त्तस्याऽभिवर्द्धयन् अभिवर्द्धयन् त्र्यशीत्यधिकशततमेऽहोरात्रे प्रथमषण्मासी-पर्यवसानभूते सर्व्ववाह्यमण्डलमुपसङ्क्रम्य चार चरति । अथ सर्व्ववाह्यमण्डले सूर्यस्य सकृदेव चारात् तदनन्तर यथा चरति तथा भगवानाह-जया ण सूरिए'इत्यादि । यदा-यस्मिन् काले अहोरात्ररूपे सूर्य सर्व्वाऽभ्यन्तरान्मण्डलान्मण्डलपरिभ्रमणगत्या शनै शनैर्निष्क्रम्य सर्व्ववाह्यमण्डल मुपसङ्क्रम्य चार चरति । 'तदा ण'ति । तदा सर्व्वाऽभ्यन्तरमण्डल प्रणिधाय-मर्यादीकृत्य द्वितीया-न्मण्डलादारभ्येत्यर्थ । एकेन त्र्यशीत्यधिकेन रात्रिदिवशतेन । त्रीणि शतानीति गम्य । षट्षष्ट्य-धिकानि मुहूर्त्तैकषष्टिभागान् दिवसक्षेत्रस्य निर्व्वेष्ट्य-हापयित्वा रजनीक्षेत्रस्य तावतस्तान् भागान् अभिवर्द्ध्य चार चरति । अथ सर्व्ववाह्यमण्डले चरति सूर्ये रात्रिदिवसयोर्व्यक्त्या परिमाण पृच्छति-'जया ण भते !' इत्यादि प्रश्न प्राग्वत् । भगवानाह-गौतम ! तदा उत्तमकाष्ठप्राप्ता सर्व्वोत्कृष्टा अष्टादश मुहूर्त्ता रात्रिर्भवति । जघन्यश्च-सर्व्वजघन्य. द्वादश मुहूर्त्तप्रमाणो दिवसो

भवति । अथ विवक्षितसमुदायकालमधिकृत्य निगमनमाह–'एस णं' ति। एषा प्रथमषण्मासी । पुंस्त्व प्राकृतत्वात् । अथ सर्व्वबाह्यमण्डल यत्सम्पन्न तदाह–'एस णमि'त्यादि । एष त्र्यशीत्यधिकशतत-मोऽहोरात्र प्रथमषण्मास्याः पर्यवसान भवति । अथ सर्व्वबाह्यमण्डलचाराऽनन्तर यथा सूर्य सञ्चरति तथा भगवानाह–'से पविसमाणे'इत्यादि । स सूर्य सर्व्वबाह्यमण्डलादभ्यन्तर प्रविशन् उत्तराऽभिमुख सञ्चरन् द्वितीया षण्मासीमाददान प्रथमेऽहोरात्रे सर्व्वबाह्यमण्डलादनन्तरमर्व्वा-चीन द्वितीय मण्डलमुपसङ्क्रम्य चार चरति । अथ द्वितीयमण्डले चरति सूर्ये रात्रि–दिवसयो परिमाण पृच्छति 'जया ण भते ! 'इत्यादि प्रश्न सुगम । भगवानाह, गौतम ! अष्टादश मुहूर्त्ता रात्रिर्भवति द्वाभ्या मुहुर्त्तैकषष्टिभागाभ्यामूना । द्वादश मुहूर्त्तो दिवसस्ताभ्यामेव भागाभ्यामधिकः । 'से पविसमाणे'त्ति । स सूर्य प्रविशन् द्वितीयेऽहोरात्रे 'बाहिर तच्च'ति । सर्व्वबाह्यान्मण्डलादर्व्वाचीन तृतीय मण्डलमुपसङ्क्रम्य चार चरति । अथ तृतीये मण्डले चरति सूर्ये रात्रिदिवसयो परिमाणं पृच्छति–'जया ण भते ! 'इत्यादि प्रश्ननिर्व्वचने सुगमे । अथ चतुरादिषु मण्डलेषु त्र्यशीत्यधिकशततम-पर्यन्तेषु गौतमप्रश्नसमूहस्यातिदेशेन भगवान्निर्वचनमाह–'एव खलु'त्यादि । एवमुक्तरीत्या खल्वेतेना-ऽनन्तरोदितेनोपायेन प्रतिमण्डल रात्रिदिवसविषयमुहुर्त्तैकषष्टिभागद्वयहानिवृद्धिरूपेण प्रविशन् मण्डल-परिभ्रमणगत्या शनै शनैरुत्तराभिमुख गच्छन् 'तयणंतराओ'त्ति । विवक्षितमण्डलाद्विवक्षितमण्डलमुप-सङ्क्रम्य चार चरतीति । अथोक्तमेवार्थं व्यनक्ति–'दो दो एगट्ठिभागे'त्यादि यावत् 'अभिवड्ढेत्ता चार चरती'तिपर्यन्त सुगम व्याख्या त च । अथ निगमनवाक्यचतुष्टयमाह–'एस ण दोच्चे'त्ति । एषा द्वितीया षण्मासो । 'एस ण'ति । एष षट्षष्ट्यधिकत्रिशततमोऽहोरात्रो द्वितीयषण्मास्याः पर्यवसान । 'एस ण' ति । एष एव प्रमाणकालविशेष आदित्यसवत्सर । 'एस ण'ति । एष षट्षष्ट्यधिकत्रिशततमोऽहोरात्र आदित्यस्य–आदित्यसम्बन्धिन सवत्सरस्य पर्यवसानमिति निगमनवाक्यचतुष्टयम् ।

अथ तापक्षेत्रसस्थितिविषय प्रश्नमाह

**जया णं भंते ! सूरिए सव्वब्भतरं मंडलं उवसंकमित्ता चारं चरति । तया णं किंसंठिआ तावक्खेत्तसंठिती पण्णत्ता ? । गो० ! उड्ढीमुहकलंबुआपुप्फसंठिआ तावक्खेत्तसंठिती पण्णत्ता । अंतो संकुआ, बाहिं वित्थडा, अंतो वट्टा, बाहिं पिहुला, अंतो अंकमुहसंठिआ, बाहिं सगडुद्धी-मुहसंठिआ । उभओ पासे णं तीसे दो बाहाओ अवट्ठिआओ भवंति पणयालीसं पणयालीसं जोअणसहस्साइं आयामेणं । दुवे अ णं तीसे बाहाओ अणवट्ठिआओ भवंति । तं.-सव्वब्भंत-रिआ चेव सव्वबाहिरा चेव बाहा । तीसे णं सव्वब्भंतरिआ बाहा मंदरपव्वयंतेणं नव जोअण-सहस्साइं चत्तारि छलसीते जोअणसए णव दसभागे जोअणस्स परिक्खेवेणं । एस णं परि-क्खेवविसेसे कओ आहितेति वएज्जा ? । गो० ! जे णं मंदरस्स पव्वयस्स परिक्खेवे । तं परिक्खेवं तिहिं गुणेत्ता दसहिं छेत्ता दसहिं भागे हीरमाणे । एस णं परिक्खेवविसेसे**

आहितेति वदेज्जा । तीसे णं सव्वबाहिरिआ बाहा लवणसमुद्दंते णं चउणवइं जोअणसहस्साइं अट्ठ य अट्ठट्ठे जोअणसए चत्तारि अ दसभागे जोअणस्स परिक्खेवेणं । से णं भंते! परिक्खेवविसेसे कओ आहिएति वएज्जा ? । गो० ! जे णं जंबुद्दीवस्स दीवस्स परिक्खेवे । तं परिक्खेवं तिहिं गुणेत्ता दसहिं छेत्ता दसहिं भागे हीरमाणे । एस णं परिक्खेवविसेसे आहितेति वएज्जा । तया णं भंते ! तावखेत्ते केवइयं आयामेणं पण्णत्ते ? । गो० ! अट्ठहत्तरिं जोअणसहस्साइं तिण्णि अ तेत्तीसे जोयणसते जोअणस्स तिभागं च आयामेणं पण्णत्ते ।

मेरुस्स मज्झयारे जाव य लवणस्स रुंदछब्भागो । तावायामो एसो सगडुद्धीसंठिओ नियमा ॥

तया णं भंते ! किंसंठिआ अंधकारसंठिती पण्णत्ता ? । गो० ! उद्धीमुहकलंबुआपुप्फसंठिआ अंधकारसंठिती पण्णत्ता । अंतो संकुआ, बाहिं वित्थडा, तं चेव जाव तीसे णं सव्वब्भंतरिआ बाहा मंदरपव्वयंतेणं छज्जोअणसहस्साइं तिण्णि अ चउव्वीसे जोअणसए छच्च दस भागे जोअणपरिक्खेवेणं । से णं भंते ! परिक्खेवविसेसे कओ आहितेति वदेज्जा ? । गो० ! जे णं मंदरस्स पव्वयस्स परिक्खेवे । तं परिक्खेवं दोहिं गुणेत्ता दसहिं छेत्ता दसहिं भागे हीरमाणे । एस णं परिक्खेवविसेसे आहितेति वदेज्जा । तीसे णं सव्वबाहिरिआ बाहा लवणसमुद्दंते तेवट्ठिं जोअणसहस्साइं दोण्णि अ पणयालीसे जोअणसए छच्च दसभागे जोअणस्स परिक्खेवेणं । से णं भंते । परिक्खेवविसेसे कओ आहितेति वदेज्जा ? । गो० ! जे णं जंबुद्दीवस्स दीवस्स परिक्खेवे । तं परिक्खेवं दोहिं गुणेत्ता जाव तं चेव । तया णं भंते ! अंधकारे केवइए आयामेणं पण्णत्ते ? । गो० ! अट्ठहत्तरिं जोअणसहस्साइं तिण्णि अ तेत्तीसे जोअणसते जोअणतिभागं च आयामेणं पण्णत्ते । जया णं भंते ! सूरिए सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति । तया णं किंसंठिआ तावखेत्तसंठिती प० ? । गो० ! उद्धीमुहकलंबुआपुप्फसंठिआ प० । तं०-तं चेव सव्वं णेअव्वं । णवरिं णाणत्तं जं अंधकारसंठितीए पुव्ववण्णिअं पमाणं तं तावखित्तसंठितीए णेअव्वं, जं तावखेत्तसंठीतीए पुव्ववण्णिअं पमाणं तं अंधकारस्स णेअव्वं ॥

'जया णं भंते !' इत्यादि । यदा भदन्त ! सूर्यः सर्वाऽभ्यन्तरमण्डलमुपसङ्क्रम्य चार-चारक्षेत्र चरति । तदा किंसंस्थिता–किंसंस्थानवती कस्येव वा संस्थिता तापक्षेत्रसंस्थितिः प्रज्ञप्ता ? । भगवानाह गौतम ! 'उद्धीमुह'त्ति । ऊर्ध्वमुखकलम्बुकापुष्पसंस्थिता–ऊर्ध्वमुखस्य कलम्बुकापुष्पस्येव-नालिकापुष्पस्येव संस्थितं-संस्थानं यस्याः सा तथा । सा च कथंभूता ? इत्याह-'अंतो संकुअ'त्ति ।

अन्तर्मेरुदिशि सङ्कुचा-सङ्कुचिता । 'बाहिं'ति । बहिर्लवणदिशि विस्तृता । तथा 'अंतो वट्ट'त्ति । अन्तर्मेरुदिशि वृत्ता अर्द्धवलयाकारा सर्वतो वृत्तमेरुगतान् त्रीन् द्वौ वा दश भागानभिव्याप्य तस्या व्यवस्थितत्वात् । बहिर्लवणदिशि पृथुला मुकुलभावेन विस्तारमुपगता-एतदेव संस्थानकथनेन स्पष्टयति-'अंतो अंकमुह'त्ति । अन्तर्मेरुदिशि अङ्क-पद्मासनोपविष्टस्योत्सङ्गरूप आसनबन्धः तस्य मुखमग्रभागोऽर्द्धवलयाकारस्तस्येव संस्थित संस्थान यस्या सा तथा । 'बाहिं सगडुद्धि'त्ति । बहिः शकटोद्धिमुखसंस्थिता । जीर्णादर्शेषु तु क्वचित् 'सत्थीमुहसंठिअ'त्ति । पाठस्तत्र स्वस्तिक-प्रतीतस्तस्य मुखमग्रभागस्तस्येवाऽतिविस्तीर्णतया संस्थित यस्या सा तथा । अयं च पाठ सूर्यप्रज्ञप्तिसूत्रसंवादी व्याख्याऽप्युक्तरूपैवेत्यवसेयम् । उभओ पासेण'त्ति । उभयपार्श्वेन-मेरुपर्वतस्योभयो पार्श्वयोस्तस्यास्तापक्षेत्रसंस्थिते सूर्यभेदेन द्विधा व्यवस्थिताया प्रत्येकमेकैकभावेन ये द्वे बाहे ते आयामेन जम्बूद्वीपगतमायाममाश्रित्यावस्थितेअवस्थितस्वभावे भवत । सा चैकैका आयामत किंप्रमाणा ? इत्याह-'पणयालीस'त्ति । पञ्चचत्वारिंशत्पञ्चचत्वारिंशद्योजनसहस्राणि ४५००० आयामेन । अथाऽपरे अपि द्वे बाहे आह-'दुवे अ ण'त्ति । द्वे च तस्यास्तापक्षेत्रसंस्थितेर्बाहे अनवस्थिते-अनियतस्वरूपे भवत । तद्यथा-सर्वाऽभ्यन्तरा सर्वबाह्या च बाहा । चेवोऽवधारणे । तत्र या मेरुसमीपे विष्कम्भमधिकृत्य बाहा सा सर्वाऽभ्यन्तरा । या तु लवणदिशि जम्बूद्वीपे पर्यन्तविष्कम्भमधिकृत्य बाहा सा सर्वबाह्या । आयामश्च दक्षिणोत्तरायततया प्रतिपत्तव्य. । विष्कम्भः पूर्वापरायततयेति । अथ सर्वाऽभ्यन्तरमण्डले तापक्षेत्रसंस्थितेरभ्यन्तरपरिरयमाह-'तीसे णमि'त्यादि । तस्यास्तापक्षेत्रसंस्थिते सर्वाऽभ्यन्तरबाहा मेरुपर्वतान्ते-मन्दरसमीपे । सा च परिक्षेपेण मन्दरपरिक्षेपगततया नव योजनसहस्राणि चत्वारिंशद्योजनशतानि षडशीत्यधिकानि नव च दशभागान् योजनस्य ९४८६ अंशा $\frac{9}{10}$ भवति परिक्षेपेण-परिरयेण । एवमुक्ते भगवान् गौतमः प्रश्नयति-'एस णमि'त्यादि । एष तापक्षेत्रसंस्थिते परिरयविशेषो मन्दरपरिरयपरिक्षेपेण विशेष । कुतः-कस्मात्कारणादेव प्रमाण आख्यातो नोनो नाऽधिको चेति वदेत् ? । भगवानाह-गौतम ! 'जे ण'ति । णमिति प्राग्वत् । यो मन्दरस्य पर्वतस्य परिक्षेप परिरयगणित प्रसिद्धः । त परिक्षेप 'तिहिं'ति । त्रिभिर्गुणयित्वा तदनन्तर च दशभिश्छित्वा-दशभिर्विभज्य । अथ कस्मादेव क्रियते ? इति चेत्, उच्यते-इह सर्वाऽभ्यन्तरे मण्डले वर्त्तमान सूर्यो जम्बूद्वीपगतस्य चक्रवालस्य यत्र तत्र प्रदेशे तत्तच्चक्रवालक्षेत्रप्रमाणानुसारेण त्रीन् दशभागान् प्रकाशयति । एतच्च प्रागेवोक्त । सम्प्रति च मन्दरसमीपे तापक्षेत्रचिन्तायां मन्दरपरिरय सुखावबोधार्थ प्रथमतस्त्रिभिर्गुण्यते गुणयित्वा च दशभिर्विभज्यते । ततो मन्दरसमीपे यथोक्त तापक्षेत्रपरिमाणमागच्छति । तथाहि-मन्दरपर्वतस्य विष्कम्भो दश सहस्राणि १०,००० । तेषा वर्गो दश कोट्य १०,००,००,००० । तासा दशभिर्गुणने जात कोटिशतम् १,००,००,००,००० अस्य वर्गमूलानयने लब्धानि एकत्रिंशत्सहस्राणि षट् शतानि किञ्चिन्न्यूनत्रयोविंशत्यधिकानि, पर व्यवहारत. परिपूर्णानि विवक्ष्यन्ते ३१६२३ । एष राशिस्त्रिभिर्गुण्यते जातानि चतुर्नवतिसहस्राणि अष्टौ शतानि एकोनसप्तत्यधिकानि ९४,८६९ । एतेषा दशभिर्भागहारे लब्धानि नव योजनसहस्राणि चत्वारि शतानि षडशीत्यधिकानि नव च दशभागा-योजनस्य । तत एष-एतावाननन्तरोदितप्रमाण

परिक्षेपविशेषस्तापक्षेत्रसंस्थितेराख्यात इति वदेत् स्वशिष्येभ्य । अत्रार्थे पूर्वाचार्यगाथाऽपि-

'मदरपरिरयरासी तिगुणे दस भाइअंमि जं लद्ध । त होइ तावखेत्तं अभितरमण्डले रविणो ॥१॥ इति । अथ लवणसमुद्रदिशि जम्बूद्वीपपर्यन्ते या सर्वबाह्या बाहा तस्या विष्कम्भपरिमाणमाह—'तीसे णमि'इत्यादि । तस्यास्तापक्षेत्रसंस्थितेः लवणसमुद्रान्ते- लवणसमुद्रसमीपे सर्वबाह्या सा परिक्षेपेण चतुर्नवतिर्योजनसहस्राणि अष्टौ चाष्टषष्ट्यधिकानि योजनशतानि चतुरश्च दशभागान् योजनस्य ९४८६८ अंशा ४/१० परिक्षेपेण । अथैवमुक्ते भगवान् गौतम पृच्छति—'से णं भंते !'इत्यादि । स एतावान् परिक्षेपविशेषो भदन्त ! तापक्षेत्रसंस्थिते कुत आख्यातो नोनो नाऽधिको चेति वदेत् ? । भगवानाह गौतम ! 'जे णं'ति । यो जम्बूद्वीपस्य परिक्षेपस्त त्रिभिर्गुणित्वा तदनन्तरं च दशभिश्छित्वा—दशभिर्विभज्य । अत्रार्थे करण प्रागुक्तमनुसरणीयम् । दशभिर्भागे ह्रियमाणे यथोक्तं जम्बूद्वीपपर्यन्ते तापक्षेत्रपरिमाणमागच्छति । तथाहि—जम्बूद्वीपस्य परिक्षेपस्त्रीणि लक्षाणि षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके ३१६२२७ योजनानि त्रीणि गव्यूतानि ३, अष्टाविंशत्यधिक धनु शतं १२८, त्रयोदशाऽङ्गुलानि १३ एक चाऽर्द्धाऽङ्गुलम् । एतावता च योजनमेकं किञ्चिन्न्यूनमिति व्यवहारत. परिपूर्णं विवक्ष्यते । ततो द्वे शतेऽष्टाविंशत्यधिके वेदितव्ये ३१६२२८ । एवंविधे परिरये त्रिभिर्गुणिते जातानि नव लक्षाणि अष्टचत्वारिंशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि ९४८६८४ । एतेषां दशभिर्भागे हृते लब्ध यथोक्तं जम्बूद्वीपपर्यन्ते सर्वबाह्याया बाहाया विष्कम्भपरिमाणं । 'एस ण'ति । एष एतावानन्तरोदितप्रमाण परिक्षेपविशेषो जम्बूद्वीपस्य तापक्षेत्रसंस्थितेराख्यात इति वदेत् । उक्त चेदमन्यत्रापि 'जंबुद्दीवपरिरये तिगुणे दस भाइअंमि ज लद्ध । त होई तावखेत्तं अभितरमंडले रविणो ॥ १ ॥ इति । तदेव जम्बूद्वीपे तापक्षेत्रसंस्थिते सर्वाऽभ्यन्तराया सर्वबाह्यायाश्च बाहायाः विष्कम्भपरिमाणमुक्तम् । अथ सामस्त्येनायामतस्तापक्षेत्रपरिमाण जिज्ञासु पृच्छति 'तया ण'ति । तदा णमित्यलङ्कारे भदन्त ! तापक्षेत्र कियत्—किंप्रमाणमायामत. सामस्त्येन दक्षिणोत्तरायततया प्रज्ञप्तम् ? । भगवानाह—गौतम ! 'अट्ठहत्तरिमि'त्यादि । अष्टसप्तति योजनसहस्राणि त्रीणि योजनशतानि त्रयस्त्रिंशदधिकानि योजनत्रिभाग चाऽऽयामेन दक्षिणोत्तरायततया प्रज्ञप्तम् । अथैव प्रमाणता कथम् ? इति व्यक्तये गाथामाह—'मेरुस्से'त्यादि । मेरोर्मन्दरस्य मध्याकारान्—मध्यभागान् मेरुसमीपादित्यर्थ । पञ्चम्यर्थे सप्तमी प्राकृतत्वात् । यावल्लवणस्य—लवणसमुद्रस्य रुन्दस्य—विस्तारस्य षड्भाग.—षष्ठो भागस्तापाऽऽयामस्तापक्षेत्रस्य दैर्घ्यं । किं भूत ? शकटोद्धिसंस्थितः अन्तः सङ्कीर्णो बहिर्विस्तृत इत्यर्थं । अयं भाव —सर्वाऽभ्यन्तरे मण्डले वर्त्तमानस्य सूर्यस्य तापक्षेत्र दक्षिणोत्तरायततया मेरोरारभ्य तावद्वर्द्धते यावल्लवणसमुद्रस्य षष्ठो भाग । तत्र मेरोरारभ्य जम्बूद्वीपपर्यन्त यावत् पञ्चचत्वारिंशद्योजनसहस्राणि, लवणस्य च विस्तारो द्वे योजनलक्षे । तयो. षष्ठो भागस्त्रयस्त्रिंशद्योजनसहस्राणि त्रीणि योजनशतानि त्रयस्त्रिंशदधिकानि योजनस्य च त्रिभाग । तत उभयमीलने यथोक्तमायामपरिमाणं भवति । एव सूत्रे व्यवस्थितेऽपि सूर्यप्रज्ञप्तिवृत्तौ युक्त्यन्तरेणापि यथाऽन्यथासमर्थितं तथा प्रदर्श्यते--इह हि सर्वाऽभ्यन्तरे मण्डले वर्त्तमानस्य सूर्यस्य लेश्या अभ्यन्तरं प्रविशति मेरुणा प्रस्खल्यते । यदि पुनर्न प्रस्खल्यते तदा

मेरोः सर्वमध्यभागगत प्रदेशमधिकृत्याऽऽयामतो जम्बूद्वीपस्य पञ्चाशत योजनसहस्राणि प्रकाशयेत् । अत एवेत्थ जम्बूद्वीपस्य पञ्च शत योजनसहस्राणि प्रकाश्यानि सम्भाव्य सर्वाऽभ्यन्तरेऽपि मण्डले वर्त्तमाने सूर्ये तापक्षेत्रस्यायामप्रमाण ज्योतिष्करण्डकमूलटीकाया श्रीपादलिप्तसूरिभिः त्र्यशीतियोजनसहस्राणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि योजनस्य च त्रिभाग इत्युक्त । युक्तं चैतत् सम्भावनया तापक्षेत्राऽऽयामपरिमाणम् । अन्यथा जम्बूद्वीपमध्ये तापक्षेत्रस्य पञ्चचत्वारिंशत्सहस्रमात्रपरिमाणाऽभ्युपगमे यथा सूर्यो वहिर्निष्क्रामति तथा तत्प्रतिवद्ध तापक्षेत्रमपि । ततो यदा सूर्यः सर्वबाह्यमण्डलमुपसङ्क्रम्य चारं चरति तदा सर्वथा मन्दरसमीपे प्रकाशो न प्राप्नोति । तस्मात् पादलिप्तसूरिव्याख्यानमभ्युपगन्तव्यमिति' । सूर्यप्रज्ञप्तिवृत्तौ चतुर्थप्राभृतके । तदेव सर्वाऽभ्यन्तरमण्डलमधिकृत्य तापक्षेत्रसस्थितिरुक्ता । अथ सर्वाऽभ्यन्तरमण्डलमधिकृत्यान्धकारसस्थिति पृच्छति–'तया ण भते !' इत्यादि । तदा सर्वाऽभ्यन्तरमण्डलचारकाले 'किंसठिअ'त्ति । किं सस्थान यस्याः । यदि वा कस्येव सस्थित सस्थान यस्या. सा तथा । अन्धकारसस्थिति प्रज्ञप्ता ? । भगवानाह–गौतम ! ऊर्ध्वमुखीकृतकलम्बुकापुष्पसंस्थिता अन्धकारसस्थिति प्रज्ञप्ता । सा चान्तर्मेरुदिशि विष्कम्भमधिकृत्य सङ्कुचा–सङ्कुचिता वहिर्लवणदिशि विस्तृता 'त चेव'त्ति । तदेव यथा प्रागुक्त तापक्षेत्रसस्थितेर्वर्णन तदेवान्धकारवर्णनमपीत्यर्थ । कियद् दूरम् ? इत्याह–'जाव तीसे' णमि'त्यादि । यावत्तस्याः सर्वाऽभ्यन्तरा बाहा यावत्करणात् 'अतो वट्ट'त्यादि द्रष्टव्यम् । तत्र सर्वाऽभ्यन्तरा बाहा मन्दरपर्वतान्ते–मेरुपर्वतसमीपे षड् योजनसहस्राणि त्रीणि शतानि चतुर्विंशत्यधिकानि ६३२४ षट् च दश भागान् योजनस्य $\frac{6}{10}$ परिक्षेपेण–परिरयेण । अथामुमेवार्थं स्पष्टावबोधनार्थं पृच्छति–'से ण भते !' इत्यादि । सपरिक्षेपविशेष –उक्तप्रमाणलक्षणपरिक्षेप इत्यर्थ । कुत –कस्मात् कारणात् आख्यातो मयाऽन्यैश्च तीर्थंकरैर्नोनाऽधिको वेति भगवान् वदेत् ? एव प्रश्ने कृते भगवानाह गौतम ! यो णमित्यलङ्कारे मन्दरस्स पर्वतस्य परिरयपरिक्षेपः प्रागुक्त इति गम्य । त परिक्षेप द्वाभ्या गुणयित्वा । अथ द्वाभ्या गुणन कथम् ? इति चेत् । उच्यते–इह हि सर्वाऽभ्यन्तरमण्डले चार चरतो सूर्ययोरेकस्यापि सूर्यस्य चक्रवालस्य यत्र तत्र प्रदेशे यत् तच्चक्रवालक्षेत्रानुसारेण दश भागास्त्रयः प्रकाश्या भवन्ति । अपरस्यापि सूर्यस्य दश भागास्त्रय प्रकाश्या । उभयमीलने षड् दशभागा भवन्ति । तेषा च त्रयाणा त्रयाणा दश भागानामपान्तराले द्वौ द्वौ दश भागौ रजनी । ततो द्वाभ्या गुणनमिति । तौ च द्वौ दश भागाविति दशभिश्छित्वा–दशभिर्भागे ह्रियमाणे 'एस ण'त्ति । एष परिक्षेपविशेष आख्यात इति वदेत् । एव यथोक्तमन्धकारसस्थितेर्मन्दरपरिरयपरिक्षेपेण परिमाणमागच्छतीत्यर्थ । तच्चैव–मेरुपर्वतपरिरयपरिमाणमेकत्रिंशद्योजनसहस्राणि षट् शतानि त्रयोविंशत्यधिकानि ३१६२३ । एतद् द्वाभ्या गुण्यते । जातानि त्रिषष्टिसहस्राणि द्वे शते षट्चत्वारिंशदधिके ६३२४६ । एतेषा दशभिर्भागे हृते लब्धानि षट् योजनसहस्राणि त्रीणि शतानि चतुर्विंशत्यधिकानि षट् च दश भागा योजनस्य ६३२४ अ० $\frac{6}{10}$ । तत एव एतावाननन्तरोदितप्रमाणोऽन्धकारसंस्थिते परिक्षेपविशेषोऽवसातव्य । अथ बाह्याया बाहायाः विष्कम्भपरिमाणमाह–'तीसे णमि'त्यादि । तस्या अन्धकारसस्थिते सर्वबाह्या बाहा लवणसमुद्रसमीपे-जम्बूद्वीपपर्यन्त इत्यर्थ ।

'तेवड्ढि'त्ति । प्राग्वत् सुगमम् । अथोक्तमेव स्पष्टार्थं पृच्छति—'से ण भंते !' इत्यादि । स एतावान् परिक्षेपविशेषो--जम्बूद्वीपपरिक्षेपविशेषः कुत आख्यातो नोनो नाधिको चेति वदेत् ? । भगवानाह गौतम ! 'जे णमि'त्यादि । यो णमिति प्राग्वत्--जम्बूद्वीपस्य परिक्षेपः प्रागुक्तपरिमाणः । तं परिक्षेपं द्वाभ्यां गुणयित्वा जाव 'त चेव'त्ति । यावत्तदेव—प्रागुक्तमेव वक्तव्यम् । तच्चैवं 'दसहिं छेत्ता दसहिं भागे हीरमाणे एस णमि'त्यादि । तदेवमुक्तं सर्वबाह्यायां बाहायां विष्कम्भपरिमाणम् । अथ सामस्त्येनान्धकारसंस्थितेरायामपरिमाणं पृच्छति—'तया णं भंते !' इत्यादि । इदं च तापक्षेत्रसंस्थितिगताऽऽयामपरिमाणवत्परिभावनीयं । तत्तुल्यात् । तदेवं सर्वाऽभ्यन्तरमण्डले तापक्षेत्रसंस्थितिं चाऽभिधाय सम्प्रति सर्वबाह्यमण्डले तामेव प्रश्नयति—'जया णं भंते !'इत्यादि । व्याख्यानं च सर्वाऽभ्यन्तरमण्डलसूत्रवदवसातव्यम् । अथ विशेषमाह—'णवरिमि'त्यादि । नवरं केवलमिदं नानात्वं भेदः 'जं अंधकार' त्ति । यदभ्यन्तरमण्डलगते सूर्येऽन्धकारसंस्थितेः पूर्ववर्णितं प्रमाणं तद्बाह्यमण्डलगते सूर्ये तापक्षेत्रसंस्थिते प्रमाणं ज्ञेयं । यच्च सर्वाऽभ्यन्तरमण्डलगते सूर्ये तापक्षेत्रसंस्थिते पूर्ववर्णितं प्रमाणं तद्बाह्यमण्डलवर्तिनि सूर्येऽन्धकारस्थितेः ज्ञातव्यं । विशेषापेक्षया सूत्रपाठरचनाविस्तरः सूर्यप्रज्ञप्तिसूत्रानुसारेण वक्तव्यं ।

अथोक्तप्रकारेण तापान्धकारयोः क्षेत्रसंस्थितिपरिमाणमवगम्य सिंहावलोकनन्यायेन दृष्टिपथप्राप्तताविषयपरिमाणे प्रतीतिर्वैपरीत्येनैवेति सिद्धवत्पुरस्कारेण काक्वा गौतमः प्रश्नयति

**जंबुद्दीवे णं भंते ! दीवे सूरिआ उग्गमणमुहुत्तंसि दूरे अ मूले अ दीसंति ? मज्झंतिअमुहुत्तंसि मूले अ दूरे अ दीसंति ? अत्थमणमुहुत्तंसि दूरे अ मूले अ दीसंति ? । हंता गो० ! तं चेव जाव दीसंति । जंबुद्दीवे णं भंते ! दीवे सूरिआ उग्गमणमुहुत्तंसि अ मज्झंतिअमुहुत्तंमि अ अत्थमणमुहुत्तंसि अ सव्वत्थ समा उच्चत्तेणं ? । हंता गो० ! तं चेव जाव उच्चत्तेणं । जइ णं भंते ! जंबुद्दीवे दीवे सूरिआ उग्गमणमुहुत्तंसि अ मज्झं० अत्थ० सव्वत्थ समा उच्चत्तेणं । कम्हा णं भंते ! जंबुद्दीवे दीवे सूरिआ उग्गमणमुहुत्तंसि अ दूरे अ मूले अ दीसंति ? जाव अत्थमणमुहुत्तंसि अ दूरे अ मूले अ दीसंति ? । गो० ! लेसापडिघाएणं उग्गमणमुहुत्तंसि दूरे अ मूले अ दीसंति । लेसाहितावेण मज्झंतिअमुहुत्तंसि अ मूले अ दूरे अ दीसंति । लेसापडिघाएणं अत्थमणमुहुत्तंसि दूरे अ मूले अ दीसंति । एवं खलु गोअमा ! तं चेव जाव दीसंति । जंबुद्दीवे णं भंते ! दीवे सूरिआ किं तीतं खेत्तं गच्छंति ? पडुप्पण्णं गच्छंति ? अणागयं खेत्तं गच्छंति ? । गो० ! णो तीतं खेत्तं गच्छंति, पडुप्पण्णं गच्छंति, णो अणागयं खेत्तं गच्छंति । तं भंते ! किं पुट्ठं गच्छंति ? जाव णिअमा छद्दिसिं । एवं ओभासेंति । तं भंते ! किं पुट्ठं ओभासेंति ? एवं आहारपयाइं णेअव्वाइं । 'पुट्ठोगाढमणंतरमणु-मह-आदि-विसयाऽणुपुव्वी अ ।**

**जाव णियमा छद्दिसिं । एवं उज्जोवेंति, तवेंति, पभासेंति । जंबुद्दीवे णं भंते । दीवे सूरिआ णं किं तीते खेत्ते किरिआ कज्जति ?, पडु० ?, अणा० ? । गो० ! णो तीते खेत्ते किरिआ कज्जति, पडुप्पण्णे खेत्ते किरिआ कज्जति, णो अणागए । सा भंते ! किं पुट्ठा कज्जति, अपुट्ठा कज्जति ? । गो० पुट्ठा, णो अपुट्ठा कज्जति जाव नियमा छद्दिसिं ।।**

'जंबुद्दीवे णमि'त्यादि । जम्बूद्वीपे भदन्त ! द्वीपे सूर्यौ उद्गमनमुहूर्ते—उदयकाले दूरे च द्रष्टृस्थानाऽपेक्षया व्यवहिते देशे 'मूले अ'त्ति । मूले चाऽऽसन्ने द्रष्टृप्रतीत्यऽपेक्षया प्रत्यासन्नदेशे दृश्येते । अय भाव जघन्यतोऽपि साधिकसपादसप्तचत्वारिंशद्योजनसहस्रैर्व्यवहित सर्व्वाऽभ्यन्तरमण्डलवर्त्तिन सूर्यमुदयसमये भरतक्षेत्रवर्त्तिनो मनुजा पश्यन्तो दूरवर्त्तिनमपि प्रत्यासन्नतया मन्यन्ते । एवमस्तमनसमयेऽपि वक्ष्यमाणमवसातव्य । मध्याह्ने पुनरष्ट योजनशतैर्व्यवहितत्वेन प्रत्यासन्नमपि दूरतया मन्यन्ते इति पूर्वसूत्राऽपेक्षया वैसदृश्यमाह—'मज्झ'त्ति । मध्यो-मध्यमोऽन्तो विभागो गगनस्य दिवसस्य वा मध्यान्त स यस्य मुहूर्तस्याऽस्ति स मध्यान्तिक स चासौ मुहूर्त्तश्च मध्यान्तिकमुहूर्त्त । तत्र मूले चाऽऽसन्नदेशे द्रष्टृस्थानाऽपेक्षयाऽष्टभिरेव योजनशतैर्व्यवहितत्वात् । दूरे च व्यवहितदेशे द्रष्टृप्रतीत्यऽपेक्षया सूर्यौ दृश्येते । अय भाव.—मध्याह्ने उदयदर्शनाऽपेक्षया प्रत्यासन्न सूर्य पश्यन्तोऽपि मन्यन्ते दूरतयेति । तथा 'अत्थमणे'त्यादिसूत्रमुदयवदवसातव्यम् । एव काक्वा प्रश्निते भगवानाह-'हंते' त्यादि । हन्तेत्यभ्युपगमे तेनैवमेव । तदेवाऽऽह-'तं चेव'त्ति । तदेव यथा त्वया पृष्टं तथैवेत्यर्थ । यावद् दृश्येते । अथ प्रतीतिवैपरीत्ये ह्युच्चत्ववैषम्य हेतुर्भविष्यतीति चेतस्याधाय पृच्छति-'जंबुद्दीवे णमि'ति । जम्बूद्वीपे भदन्त ! द्वीपे सूर्यावुद्गमनमुहूर्त्ते वा मध्यान्तिकमुहूर्ते वाऽस्तमनमुहूर्ते वा सर्व्वत्र समा-उच्चत्वेन ? इति । काक्वा प्रश्ने भगवानाह-'हंते'त्यादि प्राग्वत् । समभूतलाऽपेक्षयाऽष्टौ योजनशतान्येवोच्चत्वेन सर्व्वत्रापीति कृत्वाऽभ्युपगमनवचन 'त चेवे'त्यादि । अथ काक्वा प्रश्नितमपि भगवताऽभ्युपगत निशम्योत्साहाऽतिशयात् भगवदुक्तमनूद्यैव गौतमो विपरीतप्रतीतौ किं निमित्तम् ? इति पृच्छति—'जइ ण भंते ! 'इत्यादि भदन्त ! सूर्यावुद्गमनादिमुहूर्त्तेषु समावुच्चत्वेन तर्हि 'कम्हा ण'ति । कस्माद्धेतोर्भदन्त ! सूर्यो उद्गमनमुहूर्त्ते वा दूरे अ मूले अ'त्ति । प्राग्वत् दृश्येते । इति काक्वा पृष्टे भगवानाह गौतम ! 'लेस्सापरिघाएण'ति । लेश्यापरिघातेन । भगवत्यां तु 'लेस्सा पडिघाएण'ति पाठस्तत्र लेश्याप्रतिघातेन । लेश्यायास्तेजस परिघात प्रतिघातो वा दूरदूरतरवर्त्तितया मन्दमन्दतरभवनम् । एतच्च प्रदीपादावपि प्रतीतमेव । तेन लेश्या प्रतिघातेन हेतुभूतेन । अय भाव —स्वरूपेण दूरस्थोऽपि सूर्यो मन्दतरलेश्य सुखदृश्यत्वेन द्रष्टृणामासन्नप्रतीतिं जनयति । अतस्तौ दूरे च मूले च दृश्येते इति । 'लेस्साहितावेण'त्ति । लेश्यायास्तेजोरूपाया अभिताप—सर्व्वत प्रतपन तेन मध्यान्तिकमुहूर्ते मूले च प्रत्यासन्नदेशेऽपि दूरे-दूरप्रतीतिं जनयति सूर्य तस्मात् तथा दृश्येते सूर्यौ । अय भाव —मध्याह्ने हि सूर्य सर्व्वत प्रवृद्धतेज प्रतापो दुर्दृश्यत्वेन प्रत्यासन्नोऽप्यसौ दूरप्रतीतिं जनयतीति । 'एव खलि'त्ति निगमनवाक्य सुगमम् । अथ क्षेत्रमधिकृत्य सूर्ययोश्चारविषय प्रश्नमाह—'जंबुद्दीवे णमि'त्यादि । जम्बूद्वीपे भदन्त ! द्वीपे सूर्यौ किमतीत क्षेत्र गच्छत. उत

प्रत्युत्पन्न—वर्त्तमानकाले गम्यमानमित्यर्थः । गच्छतः ? अनागतं—गमिष्यमाणं वा गच्छतः ? । भगवानाह गौतम ! नो अतीत क्षेत्रं गच्छतः, अतीतक्षेत्रस्यातिक्रान्तत्वात् । प्रत्युत्पन्नं-गमनक्रिया-गोचरीभूत क्षेत्र गच्छत, नो अनागत तस्याऽऽगमिष्यत्कालगमनयोग्यत्वात् । इह यदाऽऽकाशखण्डमादित्य स्वतेजसा व्याप्नोति तत्क्षेत्रमुच्यते । अथ प्रत्युत्पन्नं क्षेत्र गच्छन्तौ सूर्यौ किं स्पृष्टमस्पृष्टं वा क्षेत्र गच्छत ? इति प्रश्नोत्तरसूत्रमाह—'त भंते !' इत्यादि । तत् क्षेत्र भदन्त ! किं स्पृष्टं गच्छत. ? । यावत्करणात् 'अपुट्ठं गच्छति ? । गो० ! पुट्ठं गच्छति, णो अपुट्ठ गच्छंति' । त भंते ! किं ओगाढ गच्छति, अणोगाढ गच्छंति ? । गोअमा ! ओगाढ गच्छति, णो अणोगाढ । त भंते ! किं अणंतर गच्छंति, परंपरं गच्छति ? गो० ! अणतर, णो परपर । त भंते ! किं अणु गच्छति, बायर गच्छति ? गो० ! अण गच्छति, बायरपि गच्छति । त भंते ! कि उड्ढं गच्छति, अहे गच्छति, तिरिअ गच्छति ? गो० ! णो उड्ढं, तिरिअ गच्छति, णो अहे गच्छति । त भंते ! किं आइ गच्छति, मज्झे गच्छति, पज्जवसाणे गच्छति ? णो आइ गच्छति, मज्झे गच्छति, णो पज्जवसाणे गच्छति । त भंते ! किं सविसय गच्छति, अविसय गच्छति ? गो० ! सविसय गच्छति, णो अविसय गच्छति । त भंते ! किं आणुपुव्विं गच्छति, अणाणुपुव्वि गच्छंति ? गो० ! आणुपुव्वि गच्छति, णो अणाणुपुव्वि गच्छति । त भंते ! किं एगदिसिं गच्छति, जाव छद्दिसिं गच्छति ? गो० ! एगदिसिं गच्छति, णो दो दिसिं, जाव-छद्दिसिं'ति सङ्ग्रह । एतत्सूत्ररचनाया मूल 'पुट्ठो गाढमणतरे'त्याद्यनन्तरवक्ष्यमाणसङ्ग्रहसूत्रवाक्यमेवावसातव्यम् । एवममुना प्रकारेण यत्क्षेत्रमवभासयत. सूर्यौ तदपि वक्तव्यम् । तद्दिशमाह—'त भंते ! किमि'त्यादि । तद्भदन्त ! किं स्पृष्ट क्षेत्रमवभासयत-ईषदुद्योतयतः ? । एवमनया दिशा आहारपदानि प्रज्ञापनोपाङ्गे यथा नारकादीनामाहारमधिकृत्योक्तानि तथाऽत्रापि ज्ञातव्यानि । पर 'पुट्ठोगाढे'ति सङ्ग्रहसूत्रानुसारेणैव प्रश्न-निर्व्वचनात्मकसूत्ररचना । नन्वेव सूत्ररचनायाम् 'एव आहारपयाइ णेअव्वाइमि'त्यादिदेशवाक्यस्य वैयर्थ्यमापद्येत ? । इति चेत्, मैवम्—अवभासादिविषयकेषु निर्व्वचनवाक्येषु विधिनिषेधनियममधिकृत्याऽऽहारपदानुसृतेरेवाऽऽवश्यकत्वाद्वैयर्थ्याऽभावात् । अथानन्तरोक्तेऽनन्तरवक्ष्यमाणे चार्थे सङ्ग्राहक-वाक्यमाह 'पुट्ठोगाढे'त्यादि । स्पृष्टम्, अवगाढम्, अनन्तरम्, अणु, अद्य, आदि., विषयः, आनुपूर्व्वी च । यावन्नियमात् षड्दिश । यावत्करणात् उक्तार्थाना यथासम्भव विपक्षभूता अर्था ग्राह्या । तत्रैव-स्पृष्टस्य विपक्षमस्पृष्टम् । अवगाढस्य विपक्षमनवगाढम् । एवमणोर्बादरम् । अधो विपक्षमूर्ध्वं, तिर्यग्च । आदेर्मध्यादि । विषयस्याऽविषय । आनुपूर्व्व्या अनानुपूर्व्वी । 'च' समुच्चये । दिश पूर्व्वाद्यपेक्षया पश्चिमादय इति सङ्ग्रहवाक्यस्य समासार्थः । विस्तरस्तु प्रागुक्तसूत्ररचनानुसारेणावसातव्य. । यद्यप्यत्र गाथापूर्व्वार्द्धं तथापि तद्वाक्यान्तरेव गणनीयम् । अथाऽत्रभासानुसारेण यदन्यद्वक्तव्य तदाह 'एव उज्जोवेति'त्ति । एव यथाऽवभास उक्तस्तथा इदमपि । तत्रोद्योतयतोऽत्यर्थं द्योतयत, तापयत. उष्णरश्मित्वात् तयो । 'भासति'त्ति । भासयत -शोभयत इत्यर्थः । अथोक्तमेवार्थं शिष्यहिताय प्रकारान्तरेणाह—जंबुद्दीवे णमि'त्यादि । क्रियाऽत्राऽवभासनादिरूपा सा सूर्ययो. किमतीतक्षेत्रे क्रियते इति-भवतीत्यर्थः । एव प्रत्युत्पन्नेऽनागते चेति पृष्टे भगवानाह—गौतम ! नोऽतीते-अतिक्रान्ते क्षेत्रे

भवति तस्य मुक्तत्वात्, प्रत्युत्पन्ने च-स्वक्रियाविषयीभूते क्रियते-अवभासादिक्रिया भवति, नो अनागते निजप्रकाशाऽगोचरत्वात् । 'सा भंते !' इत्यादि । साऽवभासादिरूपा क्रिया किं भदन्त ! 'पुट्ठ'त्ति । स्पृष्टात् तेजसा स्पर्शनात् या सा स्पृष्टेत्युच्यते ? । भगवानाह-गौतम ! स्पृष्टा भवति, नाऽस्पृष्टा । यावन्नियमात् षड् दिशः । यावत्करणात् अवगाढाऽनन्तरादीनां संग्रहः ।

अथोर्ध्वमधः पूर्वभागेऽपरविभागे च सूर्यौ यावत्प्रकाशयतस्तन्निरूपणार्थं सूत्रमाह

**जंबुद्दीवे णं भंते ! दीवे सूरिआ केवइअं खेत्तं उड्ढं तवयंति ? अहे, तिरिअं च ? । गो० ! एगं जोअणसयं उड्ढं तवयंति । अट्ठारस जोअणसयाइं अहे तवेंति । सीआलीसं जोअणसहस्साइं दुण्णि अ तेवट्ठे जोअणसए एगवीसं च एगसट्ठिभागे जोअणस्स तिरिअं तवेंति । अंतो भंते ! माणुसोत्तरपव्वयस्स जे चंदिमसूरिआ गहगणणक्खत्ततारारूवा, ते णं भंते ! देवा किं उड्ढोववण्णगा, कप्पोववण्णगा, विमाणोववण्णगा, चारोववण्णगा, चारठिईआ, गतिरतिआ, गतिसमावण्णगा ? । गो० ! अंतो माणुसोत्तरस्स पव्वयस्स चंदिमसूरिआ जाव तारारूवा, ते णं देवा णो उड्ढोववण्णगा, णो कप्पोववण्णगा, विमाणोववण्णगा, चारोववण्णगा, णो चारठितीआ, गतिरतिआ, गतिसमावण्णगा, उड्ढामुहकलंबुआपुप्फसंठाणसंठिएहिं जोअणसाहस्सिएहिं तावक्खित्तेहिं साहस्सीहिं विउव्वाहिं बाहिराहिं परिसाहिं महयाहयणट्टगीअवाइअतंतीतलतालतुडिअघणमुइंगपडुप्पवाइअरवेणं दिव्वाइं भोगभोगाइं भुंजमाणा महया भा हया उक्किट्ठसीहणायबोलकलकलरवेणं अच्छं पव्वयरायं पयाहिणावत्तमंडलचारं मेरुं अणुपरिअट्टंति ॥**

'जंबुद्दीवे णमि'त्यादि । जम्बुद्वीपे भदन्त ! द्वीपे कियत्प्रमाणं क्षेत्रं सूर्यावूर्ध्वमधश्च तापयतः प्रकाशयतः ? । कियत्क्षेत्रं तिर्यक् पूर्वभागेऽपरभागे चेत्यर्थः ? । भगवानाह गौतम ! एकं योजनशतमूर्ध्वं तापयतः प्रकाशयतः, स्वविमानस्योपरि योजनशतप्रमाणस्यैव तापक्षेत्रस्य भावात् 'अट्ठारस'त्ति । अष्टादश योजनशतानि 'अहे'त्ति । अध तापयतः-एतच्चाधोलौकिकग्रामाऽपेक्षया द्रष्टव्यम् । तथाहि-अधोलौकिकग्रामा समभूतलभूभागमधिकृत्याऽधो योजनसहस्रेण व्यवस्थिता । तत्रापि सूर्यप्रकाशः प्रसरति । ततः समभूतलभागस्याऽधो योजनसहस्रं तदूर्ध्वं चाष्टौ योजनशतानीत्युभयमीलनेऽष्टादश योजनशतानि । सीआलीस'त्ति । सप्तचत्वारिंशद्योजनसहस्राणि द्वे योजनशते त्रिषष्ट्यधिके एकविंशतिं च षष्टिभागान् योजनस्य ४७२६३ अंशा. २१/६० तिर्यक्स्वविमानात्पूर्वभागेऽपरभागे च प्रत्येकं तापयतः । अथ मनुष्यलोकान्तर्वर्तिनो ज्योतिष्का देवा कीदृशा वक्तव्या ? कथं चोत्पन्ना ? कथं वा स्थिता ? इति जिज्ञासुः पृच्छति 'अंतो भंते !' इत्यादि । अन्तर्मध्ये भदन्त ! मानुषोत्तरपर्वतस्य

मानुषस्य मनुष्यक्षेत्रस्य सीमाकारितया उत्तार-परो मानुषोत्तार । यद्यप्यय मनुष्यलोक जगतीव जम्बूद्वीपः समन्ततः परिवेष्ट्य स्थितः । तथापि जगती जम्बूद्वीपक्षेत्रान्तर्वर्त्तिनी । अय च नामव्युत्पत्त्यैव मनुष्यलोकाद्बहिर्वर्त्ति ज्ञातव्यः । अत एव यदेव मनुष्यलोकपरिरयपरिमाण तदेवास्याऽभ्यन्तरपरिरयपरिमाण । यदुक्तम्

'एगा जोअणकोडी लक्खा वायाल तीस य सहस्सा । दोअ सय अउणपण्णा अब्भितरपरिरओ तस्स'त्ति ॥ १ ॥ वाह्यपरिरयपरिमाण त्वेका योजनकोटी द्विचत्वारिंशल्लक्षा. षट्त्रिंशत्सहस्राणि सप्त शतानि त्रयोदशाधिकानि । यतो मूले द्वाविंशत्यधिकानि दश योजनशतानि विस्तीर्णः । एवमपरतोऽपीत्युभवमीलने चतुश्चत्वारिंशदधिके ( २०४४ ) षड्भागाऽधिकत्रिगुणीकृत्याऽभ्यन्तर-परिरये प्रक्षिप्येते । जायते च यथोक्त परिरयपरिमाण । तथा एकविंशत्यधिकानि सप्तदश शतानि समुच्छ्रिता १७२१ । त्रिंशदधिकानि चत्वारि योजनशतानि क्रोशमेक च भूमाववगाढ. ४३० क्रो० ? । मध्यभागे च त्रयोविंशत्यधिकानि सप्त योजनशतानि ७२३ । उपरि च चतुर्विंशत्यधिकानि चत्वारि योजनशतानि ४२४ विस्तीर्ण इति प्रसङ्गतोऽवसातव्यम् । 'जे चंदिमे'त्यादि । ये चन्द्रसूर्याग्रहनक्षत्रतारारूपाश्चकारोऽध्याहार्य । ते भदन्त ! देवा किमूर्ध्वोपपन्नका ? द्वादशभ्य कल्पेभ्य-उपर्युत्पन्ना इत्यर्थः । कल्पोपपन्नका. सौधर्मादि द्वादश देवलोकोत्पन्ना ? । विमानेषु सामान्यत उत्पन्नका विमानोपपन्नकाः ? चारो-मण्डलगत्या परिभ्रमण तमुपपन्ना-आश्रिताश्चारोपपन्ना. ? चारो यथोक्तस्वरूपस्तस्य स्थितिरभावो येषा ते चारस्थितिका अपगतचारा इत्यर्थ. । गतौ रतिरासक्ति प्रीतिर्येषा ते गतिरतिकाः ? एतेन गतौ रतिमात्रमुक्तम् । सम्प्रति गतियुक्तत्वमेव प्रश्नयति-गतिसमापन्नका.—गतियुक्ता इत्यर्थः ? । एव प्रश्ने कृते भगवानाह गौतम ! अन्तर्मानुषोत्तरस्य पर्व्वतस्य ये चन्द्रसूर्यग्रहनक्षत्रताारूपा देवा । 'ते ण देवा' । णमिति प्राग्वत् नोर्ध्वोपपन्नका, नो कल्पोपन्नका, किन्तु विमानोपपन्नका । चारोपपन्नका —चारसहिता., नो चारस्थितिका । स्वरूपतो गतिरतिकाः, गतिसमापन्नकाश्च साक्षाद्गतियुक्ता इत्यर्थ । 'उड्ढामुहे'त्यादि । ऊर्ध्वमुखीकृतकलम्बुका-पुष्पसस्थानसस्थितैर्योजनसाहस्रिकैरनेकयोजनशतसहस्रप्रमाणैस्तापक्षेत्रे साहस्रिकाभिरनेकसहस्रसङ्ख्याकाभि वैकुर्विकाभिर्विकुर्वितनानारूपधारिणीभि वाह्याभि. पर्षद्भिः बहुवचन व्यक्त्यपेक्षया 'महयाहये'त्यादि । महता अहतनृत्तगीतवादित्रतन्त्रीतलतालत्रुटितघनमृदङ्गपटुप्रवादितरवेण दिव्यान् भोगभोगान् भुञ्जाना महता महता उत्कृष्टत—उत्कर्षवशेन ये मुच्यन्ते सिंहनादास्ते उत्कृष्टसिंहनादास्तेव । यश्च बोलो-मुखे हस्त दत्त्वा महता शब्देन पूत्करण । यश्च कलकलो—व्याकुलशब्दसमूहस्तेषा रवेण अर्थात् वेगेन गच्छत्सु विमानेषु स्वभावतो गतिरतिकैर्वाह्यपर्षदन्तर्गतैर्देवै क्रियमाणेन 'अच्छ' । अतीव स्वच्छमतिनिर्म्मल जाम्बूनदरत्नबहुलत्वात् पर्व्वतराज-पर्व्वतेन्द्र प्रदक्षिणावर्त्तमण्डलचार यथा भवति तथा मेरुमनुलक्षीकृत्य पर्यटन्ति ।

अथ ज्योतिष्केन्द्रविषय प्रकारान्तरेण प्रश्नमाह—

**तेसि णं भंते ! देवाणं जाहे इंदे चुए भवति से कहमियाणिं पकरेंति ? । गो० ! जाव चत्तारि-पंच वा सामाणिआ देवा तं ठाणं उवसंपज्जित्ताण विहरंति । जाव तत्थ णं इंदे उववण्णे भवति । इंदट्ठाणे णं भंते ! केवतिअं कालं विरहिते उववाएणं ? । गो० ! जहण्णेणं एगं समयं उक्कोसेणं छम्मासे विरहिते उववाएणं । बहिआ णं भंते ! माणुसोत्तरपव्वयस्स जे चंदिमसूरिआ जाव तारारूवा तं चेव णेअव्वं । णाणत्तं विमाणोववण्णगा, णो चारोववण्णगा, चारठितिआ, णो गतिरतिआ, णो गतिसमावण्णगा, पक्किट्ठगसंठाणसंठिएहिं जोअणसयसहस्सि-एहिं तावखेत्तेहिं सयसाहस्सीहिं विउव्वाहि परिसाहि बाहिराहिं महयाहयणट्टगीअवाइअ जाव भुंजमाणा सुहलेसा मंदलेसा मंदातवलेसा चित्तंतरलेसा अण्णोण्णसमोगाढाहिं लेसाहिं कूडाविव ठाणसंठिआ सव्वओ समंता ते पएसे ओभासेंति उज्जोवेंति पभासेंति । तेसि णं भंते ! देवाणं जाहे इंदे चुए भवति से कहमियाणिं पकरेंति जाव जहण्णेणं एक्कं समयं उक्कोसेणं छम्मासे ॥**

'तेसि णं भते !' इत्यादि । तेषा भदन्त ! ज्योतिष्कदेवाना यदा इन्द्रश्च्युतो भवति तदानी ते देवा इदानीमिन्द्ररहितकाले कथं प्रकुर्वन्ति ? भगवानाह गौतम ! यावच्चत्वार पञ्च वा सामानिका. देवा समुदितीभूय, तत्स्थानमिन्द्रस्थानमुपसम्पद्य विहरन्ति—तदिन्द्रस्थान परिपालयन्तीत्यर्थ । कियन्त कालम् ? इत्याह—'जाव तत्थ'त्ति । यावत्तत्रेन्द्र उपपन्नो न भवति—यावत्तत्रापर इन्द्र उत्पन्नो न स्या-दित्यर्थ । अथेन्द्रस्थानविरहकाल पृच्छति—'इंदठाणे णमि'त्यादि । इन्द्रस्थान भदन्त ! कियन्त काल-मुपपातेन विरहित ? प्रज्ञप्तम् इति गम्यम् । भगवानाह गौतम ! जघन्येनैक समय यावदुत्कर्षत षण्मासान् । अथोक्तप्रकारेण मनुष्यलोकबहिर्वर्त्तिचन्द्रादिविषय प्रश्नमाह—'बहिआ ण भते !'इत्यादि । अत्र प्रश्ननिर्वचने 'तं चेव'त्ति । प्रागुक्तमेव ज्ञातव्यम् । अथ विशेषमाह—'णाणत्त'ति । नानात्व-भेदः पुनरेव विमानोपपन्नका , णो चारोपपन्नका । चारस्थितिका । नो गतिरतिका —गमने प्रीतिभाजो न भवन्तीत्यर्थः । अत एव न गतिसमापन्नका । अथ मनुष्यक्षेत्रबहिर्वर्त्तिना चन्द्रादीना प्रकाश्य क्षेत्रसस्था-नादिनिरूपयन्नेव स्वरूपमाह—'पक्किट्ठ'त्यादि । पक्वा-विषमा या इष्टका-लोकप्रतीता तत्सस्थानेन सस्थि-तानि । अयं भाव इष्टका हि चतुरस्रापि विष्कम्भापेक्षया दैर्घ्येण प्रायः पादाधिका भवति । सा च सस्थानतः समैव स्यात् । प्रकाश्यक्षेत्र तु वलयाकारेण सस्थित सद्विभक्तमत उपमोपमेययोर्वैषम्यं सम्प-द्येत अतो पक्वेतिविशेषण । पक्वता चान्त. सङ्कीर्णा बहिश्च विस्तीर्णेत्येवरूपेणाऽवसातव्या न पुनर्यथा-कथञ्चिदपीति । यत्तु सूर्यप्रज्ञप्तिसूत्रे 'पक्किट्ठसठाणे'तिपाठ श्रीमलयगिरिणा गत्यन्तरमकृत्वैव व्याख्यात तत्र पक्वपदस्य प्रयोजन सम्यग्न विद्म इति । 'जोअण'त्ति । योजनशतसहस्रै रातपक्षेत्रैर्विष्कम्भत । आयामतस्तु अनेकयोजनशतसहस्रप्रमाणैरित्यर्थादवसातव्यम् । 'सयसाहस्सीहिं'ति । शतसहस्रिकाभिर-नेकशतसहस्रसङ्ख्याकाभि । सूर्यप्रज्ञप्तौ तु—'साहस्सिआहिं'ति पाठः । बाह्याभि पर्षद्भिः 'महये'त्यादि प्राग्वत् । 'सुहलेस'त्ति । शुभलेश्या सुखलेश्या वा । एतच्च विशेषण चन्द्रमसः प्रति ज्ञेय । तेन ते चन्द्रा

नातिशीततेजस किन्तु सुखोत्पादहेतुपरमलेश्याका इत्यर्थः । पुन कथं भूता ? मन्दलेश्या । एतच्च विशेषण सूर्याणामेव तथा मन्दाऽऽतपलेश्या इति । मन्दा-नात्युष्णस्वभावा आतपरूपा लेश्या-रश्मिसङ्घातो येषा ते तथा । पुनः कथ भूताश्चन्द्रादित्या ? इत्याह–'चित्ततर'त्ति । चित्रमन्तर लेश्या च येषा ते तथा । तत्रान्तर तावच्चन्द्राणा सूर्यान्तरितत्वात् सूर्याणा च चन्द्रान्तरितत्वात् । लेश्याश्च चन्द्राणां शीताः सूर्याणा चोष्णा' । तासा च परस्परेण सन्मिश्रत्वाच्चित्रता । अत एवाह–'अण्णोण्णसमोगाढाहिं' ति । परस्परमवगाढाभिर्लेश्याभि । तथाहि-चन्द्रमसा सूर्याणा च प्रत्येक लेश्या योजनशतसहस्रप्रमाणविस्तारा., चन्द्रसूर्याणा च सूचिपङ्क्त्या व्यवस्थिताना परस्परमन्तर पञ्चाशद्योजनसहस्राणि । ततश्चन्द्रप्रभासन्मिश्रिता – सूर्यप्रभा', सूर्यप्रभासन्मिश्रिताश्चन्द्रप्रभा । इत्थ परस्परमवगाढाभिर्लेश्याभि 'कूटाविव'त्ति । कूटानीव पर्व्वतोपरिव्यवस्थितशिखराणीव स्थानस्थिता –सदैवैकत्र स्थाने स्थिता सर्व्वत समन्ताव् 'ते पएसे'त्ति । तान् प्रदेशान् स्वस्वप्रत्यासन्नान् अवभासयन्ति, उद्योतयन्ति, प्रभासयन्ति । अथ तत्रेन्द्रविषय प्रकारान्तरेण प्रश्नमाह 'तेसि णमि'त्यादि प्राग्वत् । यावत्करणात् 'चत्तारि पच वा सामाणिआ देवा'इत्यादि ग्राह्य । इत्युक्ता सूर्यवक्तव्यता ।

अथ चन्द्रवक्तव्यता जिज्ञासया प्रथम चन्द्रमण्डलसङ्ख्या प्रश्नयति

**कइ णं भंते ! चदमंडला पण्णत्ता । गो० ! पण्णरस चंदमंडला पण्णत्ता । जंबुद्दीवे णं भंते ! दीवे केवइअं ओगाहेत्ता केवइआ चंदमंडला पण्णत्ता ? । गो० ! जंबुद्दीवे दीवे असीइअं जोअणसयं ओगाहित्ता पंच चंदमंडला पण्णत्ता । लवणे ण भते ! पुच्छा । लवणे णं समुद्दे तिण्णि तीसे जोअणसए ओगाहेत्ता । एत्थ णं दस चंदमंडला पण्णत्ता । एवामेव सपुव्वावरेण जंबुद्दीवे दीवे लवणे अ समुद्दे पण्णरस चदमंडला भवंतीतिमक्खाया । सव्वब्भंतराओ णं भंते ! चंदमंडलाओ केवइअं अबाहाए सव्वबाहिरए चंदमंडले पण्णत्ते ? । गो० ! पचदसुत्तरे जोअणसए अबाहाए सव्वबाहिरएचदमंडले पण्णत्ते । चदमंडलस्स ण भते ! चदमंडलस्स य एस णं केवइअ अबाहाए अंतरे पण्णत्ते ? । पणतीसं-पणतीसं जोअणाइं तीसं च एगसट्ठिभागे जोअणस्स एगसट्ठिभागं च सत्तहा छेत्ता चत्तारि चुण्णिआभागे चंदमंडलस्स चदमंडलस्स अबाहाए अंतरे पण्णत्ते । चदमंडलस्स णं भंते ! केवइअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं ? केवइअ बाहल्लेणं प० ? । गो० ! छप्पण्णं एगसट्ठिभागे जोअणस्स आयामविक्खंभेणं । तं तिगुणं सविसेसं परिक्खेवेणं । अट्ठावीसं एगसट्ठिभागे जोअणस्स बाहल्लेणं ॥**

'कई ण भते !'इत्यादि । कति भदन्त ! चन्द्रमण्डलानि प्रज्ञप्तानि ? । गौतम ! पञ्चदशमण्डलानि प्रज्ञप्तानि । अथ पञ्चदशानामपि मण्डलाना मध्ये जम्बूद्वीपे कतीति पृच्छति–'जबुद्दीवे णमि' त्यादि । जम्बूद्वीपे भदन्त ! द्वीपे 'केवइअ'ति । कियत्प्रमाणमर्थात्क्षेत्रमवगाह्य कियन्ति चन्द्रमण्डलानि

प्रज्ञप्तानि ? । भगवानाह-गौतम ! 'जम्बूद्वीपे द्वीपे अशीत्यधिक योजनशतमवगाह्य पञ्च चन्द्रमण्डलानि प्रज्ञप्तानि । अथ लवणे मण्डलसङ्ख्या पृच्छति-'लवणे ण भंते !'इत्यादि पृच्छा प्राग्वत् । भगवानाह-गौतम ! लवणसमुद्रे त्रीणि त्रिंशदधिकानि ३३० योजनशतान्यवगाह्य । 'एत्थ ण' अत्रान्तरे दश चन्द्र-मण्डलानि प्रज्ञप्तानि । 'एवामेव'त्ति । एवमेव 'सपुव्वावरेण'ति । पूर्वाऽपरसमुदायेन जम्बूद्वीपे लवणे-चेत्यर्थ. । पञ्चदश मण्डलानि भवन्तीत्याख्यातानि । अथ सर्वाऽभ्यन्तरान्मण्डलात्सर्वबाह्यमण्डल कियदाबाधया ? इति प्रश्नयति 'सव्वब्भतराओ णमि'त्यादि । प्रश्न. सुगम । भगवानाह गौतम ! पञ्च दशोत्तराणि योजनशतानि ५१० अबाधया कृत्वा सर्वाऽभ्यन्तरान्मण्डलात्सर्वबाह्यमण्डल प्रज्ञप्तम् । एतच्च चन्द्रस्य चारक्षेत्रमप्यष्टाभिरेकषष्टिभागैरूनमवसातव्यम् । सूत्रे चाल्पत्वादविवक्षितमिति । अथ चन्द्रमण्डलाना परस्परमन्तरविषय प्रश्नमाह 'चंदमडलस्स णमि'त्यादि । चन्द्रमण्डलस्य भदन्त ! चन्द्रमण्डलस्य च 'एस ण'ति । एष णमिति शब्द आर्षसङ्केतवशात् अन्योन्यार्थाऽभिधायी सम्भाव्यते । तेन परस्पर कियदबाधयाऽन्तर प्रज्ञप्त ? । भगवानाह गौतम ! 'पणतीस'ति । पञ्चत्रिंशत् पञ्च-त्रिशत् योजनानि त्रिशदेकषष्टिभागा योजनस्य एकस्यैकषष्टिभागस्य सप्तधा छित्वा चतुरश्चूर्णिका-भागान् ३५ अशा. ३०/६१ चू० ४/७ । तच्चैव-दशोत्तराणि पञ्च योजनशतान्यष्टाभिरेकषष्टिभागैरूनानि ५०९ अ० ५३/६१ चन्द्रस्य चारक्षेत्र । तत्रादिमण्डलक्षेत्र षट्पञ्चाशदेकषष्टिभागा योजनस्य प्रक्षिप्यन्ते । जात ५१० अ० ४८/६१ तत्र पञ्चदश मण्डलानि षट्पञ्चाशता गुण्यन्ते । जात ८४० । एकषष्ट्या च भागे हृते । जातानि योजनानि त्रयोदश १३ सप्तचत्वारिंशच्चैकषष्टिभागा योजनस्य । एतच्च मूलराशेः शोध्यते शोधिते च शेष ४९७ अ० १/६१ । एतच्चतुर्दशभिरन्तरैर्विभज्यते लब्ध योजनानि पञ्चत्रिंशत् त्रिंशच्चैकषष्टिभागाश्चत्वारश्च चूर्णिका -सप्तधा छिन्नस्यैकषष्टिभागस्येति । अथ चन्द्रमण्डलस्या-ऽऽयामादिविषय प्रश्नमाह-'चंदमडलस्स णमि'त्यादि । चन्द्रमण्डल भदन्त ! कियदायामविष्कम्भेन ? कियत्परिक्षेपेण-परिधिना ? कियद्बाहल्येन च प्रज्ञप्त ? । भगवानाह-गौतम ! षट्पञ्चाशदेकषष्टिभागा योजनस्याऽऽयामविष्कम्भाभ्या । तदेव त्रिगुण सविशेष किञ्चिदधिक परिक्षेपेण । अष्टाविंशतिमेकषष्टि-भागान् योजनस्य बाहल्येन ।

अथ सर्वाऽभ्यन्तरमण्डलस्य मन्दरस्य च परस्पर कियदन्तरम् ? । इति प्रश्नयति-

**जंबुद्दीवे णं दीवे मंदरस्स पव्वयस्स केवइअं अबाहाए सव्वब्भंतरए चंदमंडले पण्णत्ते ? । गो० । चोआलीसं जोअणसहस्साइं अट्ठ य वीसे जोअणसए अबाहाए सव्वब्भंतरे चंदमंडले पण्णत्ते । जंबुद्दीवे दीवे मंदरस्स केवइअं अबाहाए अब्भंतराणंतरे चंदमंडले पण्णत्ते ? । गो० ! चोआलीसं जोअणसहस्साइं अट्ठ य छप्पण्णे जोअणसए पणवीसं च एगट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता चत्तारि अ चुण्णिआभागे अबाहाए अब्भंतराणंतरे चंदमंडले पण्णत्ते । जंबुद्दीवे ण दीवे मंदरस्स पव्वयस्स केवइअं अबाहाए अब्भंतरतच्चे**

मंडले पण्णत्ते ? । गो० ! चोआलीसं जोअणसहस्साइं अट्ठ य बाणउए जोअणसए एकावण्णं च एगट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छित्ता एगं चुण्णिआभागं अब्भंतरतच्चे मंडले पण्णत्ते । एवं खलु एएणं उवाएणं णिक्खममाणे चंदे तयाणंतराओ तयाणंतरं मंडलाओ मंडलं संकममाणे संकममाणे छत्तीसं छत्तीसं जोअणाइं पणवीसं च एगट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता चत्तारि अ चुण्णिआभागे । एगमेगे मंडले अबाहाए वुड्ढिं अभिवुड्ढेमाणे अभिवुड्ढेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति । जंबुद्दीवे णं दीवे मंदरस्स पव्वयस्स केवइअं अबाहाए सव्वबाहिरे चंदमंडले पण्णत्ते ? । गो० ! पणतालीसं जोअणसहस्साइं तिण्णि तीसे जोअणसए अबाहाए सव्वबाहिरए चंदमंडले पण्णत्ते । जंबुद्दीवे णं दीवे मंदरस्स पव्वयस्स केवइअं अबाहाए बाहिराणंतरे चंदमंडले पण्णत्ते ? । गो० ! पणयालीसं जोअणसहस्साइं दोण्णि अ तेणउए जोअणसए पणतीसं च एगट्ठिभागे जोअणस्स एगट्ठिभागं सत्तहा छेत्ता तिण्णि अ चुण्णिआभागे अबाहाए बाहिराणंतरे चंदमंडले पण्णत्ते । जंबुद्दीवे णं दीवे मंदरस्स पव्वयस्स केवइअं अबाहाए बाहिरतच्चे चंदमंडले पण्णत्ते ? । गो० ! पणयालीसं जोअणसहस्साइं दोण्णि अ सत्तावण्णे जोअणसए नव य एगट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता छ चुण्णिआभागे अबाहाए बाहिरतच्चे चंदमंडले पण्णत्ते । एवं खलु एतेण उवाएणं पविसमाणे चंदे तयणंतराओ तयणंतरं चंदमंडलाओ चंदमंडलं संकममाणे संकममाणे छत्तीसं छत्तीसं जोअणाइं पणवीसं च एगट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता चत्तारि अ चुण्णिआभागे एगमेगे मंडले अबाहाए वुड्ढिं निव्वुड्ढेमाणे निव्वुड्ढेमाणे सव्वब्भंतरमंडलं उवसंकमित्ता चारं चरति ।

जंबुद्दीवे दीवे इत्यादि । जम्बूद्वीपे भदन्त ! द्वीपे मन्दरस्य पर्वतस्य कियदबाधया सर्वाऽभ्यन्तरं चन्द्रमण्डलं प्रज्ञप्तं ? । भगवानाह—गौतम ! चतुश्चत्वारिंशद्योजनसहस्राणि अष्टौ शतानि विंशत्यधिकानि अबाधया सर्वाऽभ्यन्तरं चन्द्रमण्डलं प्रज्ञप्तम् । अथ सर्वाऽभ्यन्तरद्वितीयमण्डलस्य मेरोश्च कियदबाधयाऽन्तरमिति प्रश्नयति—'जंबुद्दीवे दीवे' इत्यादि । जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य कियदबाधया सर्वाऽभ्यन्तराऽनन्तर—द्वितीयमित्यर्थः । चन्द्रमण्डलं प्रज्ञप्तं ? भगवानाह—गौतम ! चतुश्चत्वारिंशद्योजनसहस्राणि अष्टौ शतानि षट्पञ्चाशदधिकानि पञ्चविंशतिं चैकषष्टिभागान् योजनस्य एकषष्टिभागं च सप्तधा छित्वा चतुरश्चूर्णिकाभागान् अबाधया अभ्यन्तराऽनन्तरं द्वितीयं मण्डलं प्रज्ञप्तम् । अथ तृतीयमण्डलस्याऽबाधां पृच्छति 'जंबुद्दीवे णमि'त्यादि । मन्दरस्य पर्वतस्य कियदबाधया अभ्यन्तरतृतीयं सर्वाऽभ्यन्तरमण्डलात् तृतीयं चन्द्रस्य मण्डलं प्रज्ञप्तं ? । भगवानाह

गौतम ! चतुश्चत्वारिंशद्योजनसहस्राणि अष्टौ शतानि द्विनवत्यधिकानि एकपञ्चाशतमेकषष्टिभागान् योजनस्य एकं च चूर्णिकाभागमबाधयाऽन्तरं प्रज्ञप्तम् । अथ चतुर्थादीनि चन्द्रमण्डलान्यतिदिशति— 'एवं खलु'त्यादि । एवममुना प्रकारेण खलुरवधारणे एतेनोपायेन निष्क्रामन् चन्द्रस्तदनन्तरान्मण्डलात्तदनन्तरं मण्डलं तृतीयाच्चतुर्थं, चतुर्थात्पञ्चममित्याद्यपेक्षया चतुर्थादिमण्डलं संक्रामन् षट्त्रिंशत् षट्त्रिंशद् योजनानि पञ्चविंशतिं चैकषष्टिभागान् योजनस्य एकषष्टिभागं च सप्तधा छित्वा चतुरश्चूर्णिकाभागान् 'एगमेगे'त्ति । एकैकस्मिन् मण्डले अबाधया वृद्धिमभिवर्द्धयन् सर्व्वबाह्यमण्डलमुपसंक्रम्य चारं चरति । चन्द्र इति गम्यम् । अथ सर्व्वबाह्यचन्द्रमण्डलस्य मन्दरस्य चाऽबाधयाऽन्तरं प्रश्नयति- 'जंबुद्दीवे णमि'त्यादि । मन्दरस्य पर्व्वतस्य कियदबाधया सर्व्वबाह्यं चन्द्रमण्डलं प्रज्ञप्तं ? । भगवानाह- गौतम ! पञ्चचत्वारिंशद्योजनसहस्राणि त्रीणि त्रिंशदधिकानि योजनशतानि ४५३३० अबाधया सर्व्वबाह्यं मण्डलं प्रज्ञप्तम् । अथ सर्व्वबाह्याद् द्वितीयं मण्डलं पृच्छति—'जंबुद्दीवे णमि'त्यादि प्रश्नं सुगमः । भगवानाह—गौतम ! पञ्चचत्वारिंशद्योजनसहस्राणि द्वे च त्रिनवत्यधिके योजनशते पञ्चत्रिंशतं चैकषष्टिभागान् योजनस्य त्रीन् चूर्णिकाभागान् अबाधया बाह्यानन्तरं द्वितीयमित्यर्थं चन्द्रमण्डलं प्रज्ञप्तम् । अथ तृतीयं प्रश्नयति—'जंबुद्दीवे णमि'त्यादि प्रश्नं प्राग्वत् । भगवानाह—गौतम ! पञ्चचत्वारिंशद्योजनसहस्राणि द्वे च सप्तपञ्चाशदधिके योजनशते नव चैकषष्टिभागान् योजनस्य षट् च चूर्णिकाभागान् ४५२५७ अ० $\frac{९}{६१}$ चू० $\frac{६}{७}$ । अथ चतुर्थादीनि सर्व्वबाह्यमण्डलान्यतिदिशति—'एवं खलु'त्यादि । एवं खल्वेतेनोपायेन प्रविशन् चन्द्रः तदनन्तराच्चन्द्रमण्डलात्तदनन्तरचन्द्रमण्डलं तृतीयाच्चतुर्थं, चतुर्थात्पञ्चममित्यादि क्रमेण संक्रामन् संक्रामन् षट्त्रिंशतं योजनानि पञ्चविंशतिं चैकषष्टिभागान् योजनस्य चतुरश्चूर्णिकाभागान् एकैकस्मिन् मण्डलेऽबाधया वृद्धिं निर्व्वेष्टयन् निर्वेष्टयन् हापयन् हापयन् सर्व्वाऽभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति ।

सर्व्वाऽभ्यन्तरमण्डलस्याऽऽयामादि प्रश्नयति

**सव्वब्भंतरे णं भंते ! चंदमण्डले केवइअं आयामविक्खंभेणं ?, केवइअं परिक्खेवेणं पण्णत्ते ?। गो० ! णवणउइं जोअणसहस्साइं छच्च चत्ताले जोअणसए आयामविक्खंभेणं, तिण्णि अ जोअणसयसहस्साइं पण्णरस जोअणसहस्साइं अउणाणउइं च जोअणाइं किंचिविसेसाहिए परिक्खेवेणं प० । अब्भतराणंतरे सा चेव पुच्छा । गो० ! णवणउइं जोअणसहस्साइं सत्त य बारसुत्तरे जोअणसए एगावण्णं च एगट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता एगं चुण्णिआभागं आयामविक्खंभेणं । तिण्णि अ जोअणसयसहस्साइं पन्नरस जोअणसहस्साइं तिण्णि अ एगूणवीसे जोअणसए किंचिविसेसाहिए परिक्खेवेणं । अब्भंतरतच्चे णं जाव पण्णत्ते ?। गो० ! णवणउइं जोअणसहस्साइं सत्त य पंचासीए जोअणसए एगतालीसं एगट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता दोण्णि अ चुण्णिआ सत्तभागे आयामविक्खंभेणं । तिण्णि अ जोअणसय-**

सहस्साइं पण्णरस जोअणसहस्साइं पंच य अउणापण्णे जोअणसए किंचिविसेसाहिए परिक्खेवेणं। एवं खलु एएणं उवाएणं णिक्खममाणे चंदे जाव संकममाणे संकममाणे बावत्तरिं बावत्तरिं जोअणाइं एगावण्णं च एगट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता एगं च चूण्णिआभागं। एगमेगे मंडले विक्खंभवुड्ढिं अभिवुड्ढेमाणे अभिवुड्ढेमाणे दो दो तीसाइं जोअणसयाइं परिरयवुड्ढिं अभिवुड्ढेमाणे अभिवुड्ढेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति। सव्वबाहिरए णं भंते! चंदमंडले केवइअं आयामविक्खंभेणं? केवइअं परिक्खेवेणं पण्णत्ते? । गो०! एगं जोअणसयसहस्सं छच्च सट्ठे जोअणसए आयामविक्खंभेणं तिण्णि जोअणसयसहस्साइं अट्ठारस सहस्साइं तिण्णि अ पण्णरसुत्तरे जोअणसए परिक्खेवेणं। बाहिराणंतरं पुच्छा। गो०! एगं जोअणसयसहस्सं पंच य सत्तासीए जोअणसए नव य एगट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता छ चुण्णिआभागे आयामविक्खंभेणं तिण्णि अ जोअणसयसहस्साइं अट्ठारस सहस्साइं पचासीइं च जोअणाइं परिक्खेवेणं। बाहिरतच्चे णं भंते! चंदमंडले जाव पण्णत्ते? । गो०! एगं जोअणसयसहस्सं पंच य चोद्दसुत्तरे जोअणसए अउणावीसं च एगसट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता पंच चुण्णिआभागे आयामविक्खंभेणं। तिण्णि अ जोअणसयसहस्साइं सत्तरस सहस्साइं अट्ठ य पणपण्णे जोअणसए परिक्खेवेणं। एवं खलु एतेणं उवाएणं पविसमाणे पविसमाणे चंदे जाव संकममाणे बावत्तरिं बावत्तरिं जोअणाइं एगावण्णं च एगसट्ठिभागे जोअणस्स एगसट्ठिभागं च सत्तहा छेता एगं चुण्णिआभागं। एगमेगे मंडले विक्खंभवुड्ढिं णिव्वुड्ढेमाणे णिव्वुड्ढेमाणे दो दो तीसाइं जोअणसयाइं परिरयवुड्ढिं णिव्वुड्ढेमाणे णिव्वुड्ढेमाणे सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति ॥

'सव्वब्भंतरे णमि'त्यादि प्रश्न सुगम। भगवानाह-गौतम! नवनवतिं योजनसहस्राणि षट्शतानि चत्वारिंशदधिकानि ९९६४०। तच्चैव सर्वाऽभ्यन्तरमण्डलमेकतोऽशीत्यधिक योजनशत जम्बूद्वीपमवगाह्य स्थितम्। एवमपरतोऽपि। उभयमीलने त्रीणि षष्ट्यधिकानि शतानि ३६०। एतच्च जम्बूद्वीपविष्कम्भात् शोध्यते। शोधिते च यथोक्तमायामविष्कम्भपरिमाण स्यात्। 'तिण्णि'त्ति। त्रीणि योजनशतसहस्राणि पञ्चदशयोजनसहस्राणि एकोननवत्यधिकानि ३१५०८९ विशेषाधिकानि परिक्षेपेण। एतत्करणं तु 'विक्खंभवग्गे'त्यादि करणगाथाऽनुसारेण स्वयं परिभावनीयम्। अथ द्वितीयमण्डलस्याऽऽयामादि पृच्छति-'अब्भंतराणंतरे चेव'त्ति। पृच्छा च प्राग्वत्। गौतम! नवनवतिं योजनसहस्राणि सप्त च द्वादशोत्तराणि योजनशतानि एकपञ्चाशत चैकषष्टिभागान् योजनस्य एकं च

चूर्णिकाभागम् आयामविष्कम्भाभ्या । त्रीणि च योजनशतसहस्राणि पञ्चदशसहस्राणि त्रीणि शतान्येकोनाशीत्यधिकानि किञ्चिद्विशेषाधिकानि 'परिक्खेवेण' परिक्षेपेण । अथ तृतीये पृच्छति-'अब्भतरतच्चे' इत्यादि प्रश्न प्राग्वत् । भगवानाह-गौतम ! नवनवतिं योजनसहस्राणि सप्त शतानि पञ्चाशीत्यधिकानि एकचत्वारिंशतमेकषष्टिभागान् योजनस्य द्वौ च चूर्णिकाभागौ आयामविष्कम्भाभ्यां । 'तिण्णि' त्ति । त्रीणि योजनशतसहस्राणि पञ्चदश सहस्राणि पञ्च शतानि एकोनपञ्चाशदधिकानि किञ्चिद्विशेषाऽधिकानि परिक्षेपेण । अथ चतुर्थादिषु मण्डलेषु भगवानेवातिदेशेन निर्व्वक्ति-'एव खल्वि'त्यादि। एव खल्वेतेनोपायेन-प्रागुक्तप्रकारेण निष्कामन् चन्द्रो यावत्सड्क्रामन्-तृतीयमण्डलाच्चतुर्थं मण्डल, चतुर्थात्पञ्चममित्यादिक्रमेण 'चावरारि'ति । द्विसप्तति द्विसप्तति योजनानि एकपञ्चाशत चैकषष्टिभागान् योजनस्य एक च चूर्णिकाभाग । एकैकस्मिन् मण्डले विष्कम्भवृद्धयाऽभिवर्द्धयन् द्वे द्वे योजनशते त्रिंशदधिके परिरयवृद्धिमभिवर्द्धयन् सर्व्वबाह्यमण्डलमुपसड्क्रम्य चार चरति । अथ बाह्यमण्डलस्याऽऽयामादि पृच्छति-'सव्वबाहिरए णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह-गौतम ! एक योजनशतसहस्रं षट्शतानि षष्ट्यधिकानि १००६६० आयामविष्कम्भाभ्या तथा त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि ३१८३१५ परिक्षेपेण । सूत्रेऽनुक्तमपि किञ्चिद्विशेषाधिक द्रष्टव्यम् । अथ बाह्याद् द्वितीयमण्डलस्याऽऽयामादि पृच्छति-'बाहिराणतरे णमि'त्यादि प्रश्न । भगवानाह- गौतम ! एक योजनशतसहस्र पञ्च शतानि सप्ताशीत्यधिकानि नव चैकषष्टिभागान् योजनस्य षट् च चूर्णिकाभागान् १००५८७ अ० $\frac{9}{61}$ चू० $\frac{6}{7}$ आयामविष्कम्भाभ्या । 'तिण्णि'त्ति । त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि पञ्चाशीतिं च योजनानि ३१८०८५ परिक्षेपेण । अथ तृतीयमण्डलस्याऽऽयामादि पृच्छति-'बाहिरतच्चे' इत्यादि प्रश्न प्राग्वत् । भगवानाह-गौतम ! एकं योजनशतसहस्रं पञ्च च चतुर्दशोत्तराणि योजनशतानि एकोनविंशतिं चैकषष्टि भागान् योजनस्य पञ्च चूर्णिकाभागान् १००५१४ अ० $\frac{19}{61}$ चू० $\frac{5}{7}$ आयामविष्कम्भाभ्या । 'तिण्णि'त्ति । त्रीणि योजनशतसहस्राणि सप्तदश सहस्राणि अष्टशतानि पञ्चपञ्चाशदधिकानि ३१७८५५ परिक्षेपेण । अथ चतुर्थादिषु शेषमण्डलेषु भगवानतिदिशति-'एव खल्वि'त्यादि । एव खल्वेतेनोपायेन प्रविशन् चन्द्रो द्वासप्ततिं द्वासप्ततिं योजनानि एकपञ्चाशतमेकषष्टिभागान् योजनस्य एक च चूर्णिकाभाग ७२ अ० $\frac{51}{61}$ चू० $\frac{1}{7}$ एकैकस्मिन् मण्डले विष्कम्भवृद्धि निर्व्वेष्टयन् निर्व्वेष्टयन्-हापयन् हापयन् द्वे द्वे त्रिंशदधिके योजनशते परिरयवृद्धया निर्व्वेष्टयन् निर्व्वेष्टयन्-हापयन् हापयन् सर्व्वाऽभ्यन्तर मण्डलमुपसड्क्रम्य चार चरति ।

अथ चन्द्र प्रतिमुहूर्त्तं कियत्क्षेत्र गच्छति ? इति प्रश्नयति

**जया णं भंते ! चंदे सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति तया णं चंदे एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छति ? । गो० ! पंच जोअणसहस्साइं तेवत्तरिं च जोअणाइं सत्तत्तरिं च चोआले भागसए गच्छति मंडलं तेरसहिं सहस्सेहिं सत्तहि अ पणुवीसेहिं सएहिं छेत्ता । तया णं इहगयस्स मणुस्सस्स सीआलीसाए जोअणसहस्सेहिं दोहिं तेवट्ठेहिं जोअण-**

सएहिं एगवीसाए अ सट्ठिभागेहिं जोअणस्स चंदे चक्खुप्फासं हव्वमागच्छति । जया णं भंते ! चदे अब्भतराणंतरं मंडलं उवसंकमित्ता चारं चरति जाव केवइअं खेत्तं गच्छति ? । गो० ! पंच जोअणसहस्साइं सत्तत्तरिं च जोअणाइं छत्तीसं च चोवत्तरे भागसए गच्छति । मंडलं तेरसहिं सहस्सेहिं जाव छेत्ता । जया णं भंते ! चंदे अब्भतरतच्चं मंडलं उवसंकमित्ता चारं चरति तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छति ? । गो० ! पंच जोअणसहस्साइं असीतिं जोअणाइं तेरस भागसहस्साइं तिण्णि अ अउणातीसे भागसए गच्छति । मंडलं तेरसहिं जाव छेत्ता । एवं खलु एएणं उवाएणं णिक्खममाणे चंदे तयाणंतराओ जाव संकममाणे संकममाणे तिण्णि तिण्णि जोअणाइं छण्णउइं च पंचावण्णे भागसए एगमेगे मंडले मुहुत्तगइं अभिवुड्ढेमाणे अभिवुड्ढेमाणे सव्वबाहिरमंडलं उवसंकमित्ता चारं चरति । जया णं भंते ! चदे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति । तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छति ? । गो० ! पंच जोअणसहस्साइं इक्कं पणुवीसं जोअणसयं अउणत्तरिं च णउए भागसए गच्छति । मंडलं तेरसहिं भागसहस्सेहिं सत्तहि अ जाव छेत्ता । तया णं इहगयस्स मणुस्सस्स एकतीसाए जोअणसहस्सेहिं अट्ठहि अ एगतीसेहिं जोअणसएहिं चदे चक्खुप्फासं हव्वमागच्छति । जया णं भंते ! बाहिराणंतरं पुच्छा । गो० ! पंच जोअणसहस्साइं एकवीसुत्तरं जोअणसयं एक्कारस य सट्ठे भागसहस्से गच्छति । मंडलं जाव तेरसहिं छेत्ता । जया णं भंते ! बाहिरतच्चं पुच्छा । गो० । पंच जोअणसहस्साइं एक्कं च अट्ठारसुत्तरं जोअणसयं चउद्दस य पंचुत्तरे भागसए गच्छति । मंडलं तेरसहिं सहस्सेहिं सत्तहि अ पणवी-सेहिं सएहिं छेत्ता । एवं खलु एएणं उवाएणं जाव संकममाणे संकममाणे तिण्णि तिण्णि जोअणाइं छण्णउइं च पंचावण्णे भागसए एगमेगे मंडले मुहुत्तगइं णिवुड्ढेमाणे सव्वब्भतर-मंडलं उवसंकमित्ता चारं चरति ।

'जया ण भंते !' इत्यादि प्रश्न सुगम । भगवानाह गौतम ! पञ्च योजनसहस्राणि त्रिसप्तति च योजनानि, सप्तसप्तति चतुश्चत्वारिंशदधिकानि भागशतानि $5073\frac{7744}{13725}$ गच्छति । अथोक्त प्रमाणं कथम् ? इति शिष्याकूतं चेतस्याधायाऽभिदधाति मंडलमि'त्यादि मण्डलं तावदिहाऽर्थात् सर्वाऽभ्यन्तरं ग्राह्यं । तत्परिमाण त्रीणि लक्षाणि पञ्चदशसहस्राणि एकोननवतिश्च ३१५०८९ । त्रयोदशसहस्रैः सप्तभिश्च शतैः पञ्चविंशत्यधिकै-१३७२५ श्छित्त्वा विवक्षित परिमाण भवतीति शेषः । तच्चैव-चन्द्रमण्डलस्य परिसमाप्तिकालो द्वाषष्टिर्मुहूर्ता एकस्य च मुहूर्तस्य एकविंशत्यधिकशतद्वयछेदकृता स्त्रयोविंशतिरंशा $62\frac{23}{221}$ । यदुक्तं

'बावट्ठी पुण रूवा तेत्रीस अंसगा य बोद्धव्वा । दो चेव एक्कवीसा छेओ पुण तेसि बोद्धव्वो'।।२५८।। इति ज्यो० । अस्या अर्थः द्वाषष्टि पुना रूपाणि–द्वाषष्टिसङ्ख्याका मुहूर्त्ता इत्यर्थः । एकस्य च मुहूर्त्तस्य त्रयोविंशतिरंशा बोद्धव्या –चन्द्रमण्डलसमाप्तिकालपरिमाणेन ज्ञातव्या इत्यर्थः । किंरूप-छेदकृताः पुनस्त्रयोविंशतिरंशा ? इत्यत आह–छेद पुनस्तेषामंशाना बोद्धव्या द्वे शते एकविंशे-एक-विंशत्यधिके एतावता कालेन चन्द्रस्तन्मण्डलपरिभ्रमणेन पूरयतीति गाथार्थः । तत सवर्णनार्थं द्वाषष्टि-र्मुहूर्त्ता अपि द्वाभ्यामेकविंशत्यधिकाभ्या शताभ्यां गुण्यन्ते । गुणयित्वा चोपरितनास्त्रयोविंशतिरंशाः प्रक्षिप्यन्ते । जातानि त्रयोदश सहस्राणि सप्त शतानि पञ्चविंशत्यधिकानि १३७२५ । तथा सर्वा-ऽभ्यन्तरमण्डले परिरयपरिमाण त्रीणि योजनलक्षाणि पञ्चदश सहस्राणि नवाऽशीत्यधिकानि ३१५०८९ । इह च यत् छेदराशिर्मुहूर्त्ताशराशिरूपो विहितस्तत. परिरयपरिमाणमपि एकविंशत्यधि-कशतद्वयेन गुण्यते । जात षट्को नवक पटकस्त्रिकश्चतुष्कः षट्क षट्को नवकश्च ६९६३४६६९ । तत एतेषा त्रयोदशभि सहस्रैः सप्तभि शतै पञ्चविंशत्यधिकैर्भागो ह्रियते । हृते च भागे लब्धानि पञ्च योजनसहस्राणि त्रिसप्तत्यधिकानि अशाश्च सप्तसप्तति शतानि चतुश्चत्वारिंशदधिकानि ५०७३–७७४४/१३७२५ । एतावती सर्वाऽभ्यन्तरमण्डले चन्द्रस्य प्रतिमुहूर्त्त गतिरितितात्पर्यम् । अथ तदानी चन्द्रः कियद् दूर चक्षुषा दृश्यन्ते ? इत्याह 'तया ण इहे'त्यादि । यदा सर्वाऽभ्यन्तरमण्डले चन्द्रश्चार चरति तदा इह-भरतक्षेत्रवर्त्तिनो मनुष्यस्य सप्तचत्वारिंशतो योजनसहस्रेभ्यो द्वाभ्या त्रिषष्ट्यधिकाभ्या योजनशताभ्यमेकविंशतिश्च षष्टिभागेभ्यो योजनस्य चन्द्रश्चक्षु स्पर्शमागच्छति । अथ द्वितीयमण्डले चन्द्र-गति प्रश्नयति–'जया ण भंते !'इत्यादि । अभ्यन्तरानन्तर-द्वितीयमित्यर्थः । भगवानाह–गौतम ! पञ्च योजनसहस्राणि सप्तसप्तति च योजनानि, षट्त्रिंशत च चतु सप्तत्यधिकानि भागशतानि ५०७७-३६७४/१३७२५ गच्छति । अथ तत्प्रकारमाह-'मडलमि'त्यादि । मण्डल द्वितीयमण्डलपरिरयपरिमाणं त्रीणि लक्षाणि पञ्चदश सहस्राणि त्रीणि शतानि एकोनविंशत्यधिकानि ३१५३१९ । एतद् द्वाभ्यामेक-विंशत्यधिकाभ्या शताभ्यां गुण्यते । जात षट्को नवक षट्कोऽष्टक पञ्चकश्चतुष्को नवको नवकश्चेति ६९६८५४९९ । एतेषां त्रयोदशभि सहस्रै· सप्तभिश्च शतै पञ्चविंशत्यधिकैर्भागो ह्रियते लब्ध यथोक्त मानम् ५०७७ ३६७४/१३७२५ एतावती द्वितीयमण्डले चन्द्रमसः प्रतिमुहूर्त्त गतिरितिभाव । अथ तृतीयमण्डले चन्द्रगतिं पृच्छति–'जया ण भंते ! चदे'त्यादिप्रश्न प्राग्वत् । भगवानाह–गौतम ! पञ्च योजनसहस्राणि अशीति योजनानि, त्रयोदशभागसहस्राणि त्रीणि चैकोनत्रिंशदधिकानि भागशतानि ५०८० १३३२९/१३७२५ गच्छति । एतत्प्रकारमाह–'मडलमि'त्यादि । मण्डल तृतीयमण्डलपरिमाण त्रीणि लक्षाणि पञ्चदश सहस्राणि पञ्च शतानि एकोनपञ्चाशदधिकानि ३१५५४९ । 'जाव'त्ति । यावच्छित्वा । यावत्करणात् एतत् एकविंशत्यधिकेन शतद्वयेन गुण्यते । जात षट्को नवक सप्तकस्त्रिकः षट्कस्त्रिको द्विको नव-कश्चेति ६९७३६३२९ । एतेषा त्रयोदशसहस्रै पञ्चविंशत्यधिकै सप्तभिश्च शतैर्भागे हृते लब्ध यथो-क्त मानम् ५०८० १३३२९/१३७२५ । एतावती तृतीयमण्डले चन्द्रमस. प्रतिमुहूर्त्तं गतिरिति भाव । अथ चतुर्या-दिषु मण्डलेषु अतिदेशमाह–'एव खलु'त्यादि । एव खल्वेतेनोपायेन निष्क्रामन् चन्द्रस्तदनन्तरान्मण्ड-

लात्तदनन्तरं मण्डल—तृतीयाच्चतुर्थं, चतुर्थात् पञ्चममित्यादि क्रमेण यावत्सङ्क्रामन् त्रीणि त्रीणि योजनानि षण्णवतिं च भागशतानि पञ्चपञ्चाशदधिकानि ३ ९६५५/१३७२५ एकैकस्मिन् मण्डले मुहूर्त्तगतिमभिवर्द्धयन् अभिवर्द्धयन् सर्ववाह्यमण्डलमुपसङ्क्रम्य चार चरति । अथ सर्ववाह्यमण्डले गतिविषयं प्रश्नमाह—'जया णमि'त्यादि प्रश्नः प्राग्वत् । भगवानाह गौतम । पञ्च योजनसहस्राणि एकं च पञ्चविंशत्यधिकं योजनशतम्, एकोनसप्ततिं च नवत्यधिकानि भागशतानि ५१२५ ६९९०/१३७२५ गच्छति । एतत्प्रकारमाह—'मंडलमि'त्यादि । मण्डल सर्ववाह्यमण्डलपरिरयपरिमाण तिस्रो लक्षा' अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि ३१८३१५ । एतावत् द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यन्ते । जात सप्तक' शून्य त्रिकश्चतुष्क सप्तक षट्क एकक पञ्चक' ७०३४७६१५ । एतेषां 'तेरसहिं'ति । त्रयोदशभिः सहस्रै सप्तभि' शतैः पञ्चविंशत्यधिकैर्भागे हृते लब्ध यथोक्तं मानम् ५१२५ ६९९०/१३७२५ । एतावती सर्वबाह्यमण्डले चन्द्रमस प्रतिमुहूर्त्तं गति । अथ सर्वबाह्यमण्डले वर्त्तमानश्चन्द्र' कियद् दूर चक्षुषा दृश्यते ? इति दर्शयति 'तया णमि'त्यादि । यदा सर्वबाह्यमण्डलचारी चन्द्रस्तदा इहगतस्य मनुष्यस्य एकत्रिंशता योजनसहस्रैरष्टभिश्चैकत्रिंशदधिकैर्योजनशतै ३१८३१ चक्षु स्पर्शं हव्व—शीघ्रमागच्छति । अथ सर्ववाह्यमण्डलाद् द्वितीयमण्डले चारगतिं प्रश्नयति—'जया णमि' त्यादि पृच्छा प्राग्वत् । भगवानाह—गौतम ! पञ्च योजनसहस्राणि एकविंशत्यधिक योजनशतम् एकादश च 'सट्ठे'त्ति । षष्ट्यधिकानि भागसहस्राणि षष्ट्याऽधिकान्येकादशसहस्राणि भागा इत्यर्थः ५१२१ ११०६०/१३७२५ । एतत्कथमित्याह मंडलमि'त्यादि । मण्डल—सर्वबाह्यमण्डलाद्द्वितीयमण्डलपरिरयपरिमाण त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि पञ्चाशीतिं योजनानि ३१८०८५ । एतत् द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते । जात सप्तकं शून्य द्विको नवकः षट्क सप्तकोऽष्टक पञ्चकश्चेति ७०२९६७८५ । एतेषां १३७२५ मेवमङ्करूपेण छेदराशिना भागे हृते लब्ध यथोक्तं मानम् ५१२१–११०६०/१३७२५ । एतावती बाह्यद्वितीयमण्डले चन्द्रमस प्रतिमुहूर्त्तं गति । अथ बाह्यतृतीयमण्डलविषय प्रश्नमाह—'जया णमि'त्यादि प्रश्न' प्राग्वत् । भगवानाह—गौतम ! पञ्च योजनसहस्राणि एक चाष्टादशोत्तर योजनशत पञ्चोत्तराणि चतुर्दशभागशतानि ५११८–१४०५/१३७२५ गच्छति । तत्कथमित्याह—'मंडलमि'त्यादि । मण्डल बाह्यतृतीयमण्डलपरिमाण तिस्रो लक्षा सप्तदश सहस्राणि अष्टौ च पञ्चपञ्चाशदधिकानि शतानि ३१७८५५ । एतद्द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यन्ते । जात सप्तक शून्य द्विकश्चतुष्क' पञ्चको नवक' पञ्चकद्वय च ७०२४५९५५ । एतेषां १३७२५ लक्षणेन छेदराशिना भागे हृते लब्धं यथोक्त मानं ५११८–१४०५/१३७२५ । एतावती तृतीयमण्डले चन्द्रमस. प्रतिमुहूर्त्तं गतिरिति । अथ बाह्यचतुर्थादिषु मण्डलेषु सर्व्वाऽभ्यन्तरमण्डलपर्यवसानेषु अतिदेशमाह—'एव खलि'त्यादि । एव खलु एतेनोपायेन यावत्सङ्क्रामन् सङ्क्रामन् तृतीयान्मण्डलाच्चतुर्थं, चतुर्थात्पञ्चममित्यादिक्रमेण 'तिण्णि'त्ति । त्रीणि त्रीणि योजनानि षण्णवतिं च पञ्च भागशतानि पञ्चाशदधिकानि एकैकस्मिन मण्डले मुहूर्त्तगतिं 'णिव्वुड्ढेमाणे'त्ति । निर्व्वेष्टयन् निर्व्वेष्टयन्—हापयन् हापयन् सर्व्वोऽभ्यन्तरमण्डलमुपसङ्क्रम्य चार चरति । इत्येव चन्द्रमण्डलचारादि वक्तव्यतोक्ता ।

अथ नक्षत्रमण्डलस्वरूपजिज्ञासुः प्रथम नक्षत्रमण्डलसङ्ख्यां पृच्छति

कइ णं भंते ! णक्खत्तमंडला पण्णत्ता ? । गो० ! अट्ठ णक्खत्तमंडला पण्णत्ता । जंबुद्दीवे दीवे केवइअं ओगाहेत्ता ? केवइआ णक्खत्तमंडला पण्णत्ता ? । गो० ! जंबुद्दीवे दीवे असीतं जोअणसयं ओगाहेत्ता । एत्थ णं दो णक्खत्तमंडला पण्णत्ता । लवणे णं समुद्दे केवइअं ओगाहेत्ता ? केवइआ णक्खत्तमंडला पण्णत्ता ? । गो०! लवणे णं समुद्दे तिण्णि तीसे जोअणसए ओगाहेत्ता । एत्थ णं छ णक्खत्तमंडला पण्णत्ता । एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे लवणसमुद्दे अट्ठ णक्खत्तमंडला भवंतीतिमक्खाया । सव्वब्भंतराओ ण भंते ! णक्खत्तमंडलाओ केवइअं अबाहाए सव्वबाहिरए णक्खत्तमंडले पण्णत्ते ?। गो०! पंचदसुत्तरे जोअणसए अबाहाए सव्वबाहिरए णक्खत्तमंडले पण्णत्ते । णक्खत्तमंडलस्स ण भंते ! णक्खत्तमंडलस्स य एस णं केवइअं अबाहाए अंतरे पण्णत्ते ? । गो० ! दो जोअणाइं णक्खत्तमंडलस्स य णक्खत्तमंडलस्स य अबाहाए अंतरे पण्णत्ते । णक्खत्तमंडले णं भंते ! केवइअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं ? केवइअं बाहल्लेणं प० ? । गो० ! गाउअं आयामविक्खंभेणं । तं तिगुणं सविसेसं परिक्खेवेणं अद्धगाउअं बाहल्लेणं पण्णत्ते । जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइअं अबाहाए सव्वब्भंतरे णक्खत्तमंडले पण्णत्ते ? । गो० ! चोआलीसं जोअणसहस्साइं अट्ठ य वीसे जोअणसए अबाहाए सव्वब्भंतरए णक्खत्तमंडले पण्णत्ते । जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइअं अबाहाए सव्वबाहिरए णक्खत्तमंडले पण्णत्ते ? । गो० पणयालीसं जोअणसहस्साइं तिण्णि अ तीसे जोअणसए अबाहाए सव्वबाहिरए णक्खत्तमंडले पण्णत्ते । सव्वब्भंतरए णं भंते ! णक्खत्तमंडले केवइअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं पण्णत्ते ? । गो० ! णवणउइं जोअणसहस्साइं छच्च चत्ताले जोअणसए आयामविक्खंभेणं । तिण्णि जोअणसयसहस्साइं पण्णरस य सहस्साइं अउणाणउइं च जोअणाइं किंचिविसेसाहिए परिक्खेवेणं पण्णत्ते । सव्वबाहिरए णं भंते ! णक्खत्तमण्डले केवइअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं पण्णत्ते ? । गो० ! एगं जोअणसयसहस्सं छच्च सट्ठे जोअणसए आयामविक्खंभेणं तिण्णि जोअणसयसहस्साइं अट्ठारस य सहस्साइं तिण्णि अ पण्णरसुत्तरे जोअणसए परिक्खेवेणं । जया णं भंते ! णक्खत्ते सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छति ? । गो० ! पंच जोअणसहस्साइं दोण्णि अ पण्णट्ठे जोअ-

णमए अट्ठारस य भागसहस्से दोण्णि अ तेवट्ठे भागसए गच्छति । मंडलं एक्कवीसाए भागसहस्सेहिं नवहि अ सट्ठेहिं सएहिं छेत्ता । जया णं भंते ! णक्खत्ते सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति, तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छति ? । गो० ! पंच जोअणसहस्साइं तिण्णि अ एगूणवीसे जोअणसए सोलस भागसहस्से तिण्णि अ पण्णट्ठे भागसए गच्छति । मंडलं एक्कवीसाए भागसहस्सेहिं नवहि अ सट्ठेहिं सएहिं छेत्ता ! एते णं भंते ! अट्ठ णक्खत्तमंडला कइहिं चंदमंडलेहिं समोअरंति ? । गो० ! अट्ठहिं चंदमंडलेहिं समोअरंति । तं जहा—पढमे चंदमंडले, ततिए चंदमंडले, छट्ठे, सत्तमे, अट्ठमे, दसमे, एक्कारसमे, पण्णरसमे चंदमंडले एगमेगेण भंते ! मुहुत्तेणं चंदे केवइआइं भागसयाइं गच्छति ? । गो० ! जं जं मंडलं उवसंकमित्ता चारं चरति, तस्स तस्स मंडलस्स परिक्खेवस्स सत्तरस अट्ठट्ठे भागसए गच्छति, मंडलं सयसहस्सेण अट्ठाणउतीए अ सएहिं छेत्ता । एगमेगेणं भंते ! मुहुत्तेणं सूरिए केवइआइं भागसयाइं गच्छति ? गो० ! जं जं मंडलं उवसंकमित्ता चारं चरति, तस्स तस्स मंडलपरिक्खेवस्स अट्ठारस तीसे भागसए गच्छति । मंडलं सयसहस्सेण अट्ठाणउतीए अ सएहिं छेत्ता । एगमेगेणं भंते ! मुहुत्तेणं णक्खत्ते केवइआइं भागसयाइं गच्छति ? । गो० ! जं जं मंडलं उवसंकमित्ता चारं चरति, तस्स तस्स मंडलपरिक्खेवस्स अट्ठारस पणतीसे भागसए गच्छति । मंडलं सयसहस्सेणं अट्ठाणउइए अ सएहिं छेत्ता ॥

'कति ण भंते !' इत्यादि । कति भदन्त ! नक्षत्रमण्डलानि प्रज्ञप्तानि ? । भगवानाह—गौतम ! अष्टौ नक्षत्रमण्डलानि प्रज्ञप्तानि । तत्र प्रथम नक्षत्रमण्डलम्—अभिजित्-श्रवण-धनिष्ठा-शतभिषक्-पूर्वभाद्रपदो-त्तरभद्रपदा—रेवत्य-श्विनी-भरणी—पूर्वफाल्गुनी—उत्तरफाल्गुनी—स्वातिसङ्ज्ञैर्द्वादशभिर्नक्षत्रैर्भवति । द्वितीय पुनर्वसु—मघाभ्या । तृतीय कृत्तिकया । चतुर्थं रोहिणी-चित्राभ्या । पञ्चम विशाखाभिः। षष्ठमनुराधानक्षत्रेण । सप्तम ज्येष्ठया । अष्टम नक्षत्रमण्डल मृगशीर्ष-आर्द्रा-पुष्य अश्लेषा-मूल-हस्त-पूर्वाषाढो-त्तराषाढाभिरष्टभिर्नक्षत्रैर्भवति । अथ जम्बूद्वीपे कति नक्षत्रमण्डलानि ? इति जिज्ञासु पृच्छति-'जंबुद्दीवे णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! जम्बूद्वीपे द्वीपे अशीत्यधिक योजनशतमवगाह्य । 'एत्थ ण'ति । अत्रान्तरे द्वे नक्षत्रमण्डले प्रज्ञप्ते । अथ लवणसमुद्रमधिकृत्य पृच्छति—प्रश्न प्राग्वत् । भगवानाह—गौतम ! लवणे समुद्रे त्रीणि शतानि त्रिंशदधिकानि योजनान्यवगाह्य । अत्रान्तरे षट् नक्षत्रमण्डलानि प्रज्ञप्तानि । 'एवामेव'त्ति । एवमेव सपूर्वापरेण-पूर्वापरसमुदायमीलनेन जम्बूद्वीपे द्वीपे लवणसमुद्रे चाष्टौ नक्षत्रमण्डलानि भवन्तीत्याख्यातानि । अथ सर्वाभ्यन्तरसर्वबाह्यमण्डलयोरन्तर जिज्ञासु पृच्छति—'सव्वब्भतराओ णमि'त्यादि । सर्वाभ्यन्तराद्भदन्त ! नक्षत्रमण्डलात् कियद-

बाधया सर्व्वबाह्यं नक्षत्रमण्डलं प्रज्ञप्त ? । भगवानाह–गौतम ! पञ्चदशोत्तराणि योजनशतानि अवाधया सर्व्वबाह्यं नक्षत्रमण्डलमर्थात्सर्व्वाऽभ्यन्तरान्मण्डलात् प्रज्ञप्तम् । अथ मण्डलानां परस्परमन्तरविषय प्रश्नमाह–'णक्खत्तमडलस्स णमि'त्यादि । नक्षत्रमण्डलस्य नक्षत्रमण्डलस्य च 'एस-ण'ति । एष ण परस्पर कियदवाधयाऽन्तर प्रज्ञप्त ?। भगवानाह–द्वे योजने नक्षत्रस्य च नक्षत्रस्य चाऽबाधयाऽन्तर प्रज्ञप्तम् । अथ नक्षत्रमण्डलस्याऽऽयामादि पृच्छति 'नक्खत्तमण्डले णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह गौतम ! गव्यूतमेकमायामविष्कम्भाभ्या । तत्त्रिगुण तु सविशेष परिक्षेपेण । अर्द्धगव्यूतं वाहल्येन । एतच्च विमानावेगाढक्षेत्रापेक्षयाऽवगन्तव्यम् । अथ सर्व्वाऽभ्यन्तरनक्षत्रमण्डलस्य मन्दरस्य चाऽन्योऽन्य कियदवाधया अन्तरम् ? इति जिज्ञासु पृच्छति 'जबुद्दीवे णमि'त्यादि प्रश्नः प्राग्वत् । भगवानाह गौतम ! चतुश्चत्वारिंशत योजनसहस्राणि अष्टौ च विंशत्यधिकानि योजनशतानि अवाधया सर्व्वाऽभ्यन्तर नक्षत्रमण्डलं प्रज्ञप्तम् । अथ सर्व्वबाह्यस्य नक्षत्रमण्डलस्य मन्दरस्य परस्परमन्तर पृच्छति 'जबुद्दीवे णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह गौतम ! पञ्चचत्वारिंशत योजनसहस्राणि त्रिंशदधिकानि त्रीणि योजनशतानि च अवाधया सर्व्वबाह्यं नक्षत्रमण्डल प्रज्ञप्तम् । अथ सर्व्वाऽभ्यन्तरमण्डलस्याऽऽयामादि प्रश्नयति–'सव्वब्भतरे णमि' त्यादि प्रश्न प्राग्वत् । भगवानाह–गौतम ! नवनवति योजनसहस्राणि चत्वारिंशदधिकानि षट् शतानि चाऽऽयामविष्कम्भाभ्या 'तिण्णि'त्ति । त्रीणि योजनशतसहस्राणि पञ्चदश सहस्राणि एकोननवति च योजनानि ३१५०८९ किञ्चिद्विशेषाधिकानि परिक्षेपेण प्रज्ञप्तानि । अथ सर्व्ववाह्यमण्डलस्याऽऽयामादि प्रश्नयति–'सव्ववाहिरए णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह–गौतम ! एकं योजनशतसहस्र षष्ट्यधिकानि षट् योजनशतानि चाऽऽयामविष्कम्भाभ्यां 'तिण्णि' त्ति । त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि योजनानि ( ३१८३१५ ) परिक्षेपेण । अथ सर्व्वाभ्यन्तरमण्डले वर्त्तमानं नक्षत्रमेकेन मुहूर्त्तेन कियत्क्षेत्र गच्छति ? इति प्रश्नयति–'जया ण भते 'इत्यादि प्रश्न सुगम' । भगवानाह–गौतम ! पञ्च योजनसहस्राणि द्वे च पञ्चषष्ट्यधिके योजनशते अष्टादश च भागसहस्राणि द्वे च त्रिषष्ट्यधिके भागशते गच्छति । अथैव कथम् ? इति शिष्याऽऽकूतमभ्युपगम्य निर्वक्ति–'मडलमि'त्यादि । मण्डल तावदिह सर्व्वाभ्यन्तरनक्षत्रमण्डलपरिमाण त्रीणि योजनलक्षाणि पञ्चदश सहस्राणि एकोननवत्यधिकानि ३१५०८९ । एकविंशत्या भागसहस्रैर्नवभि षष्ट्यधिकै शतै छित्वा यथोक्त परिमाणं भवतीति शेष । तन्पैव नक्षत्रमण्डलस्य परिसमाप्तिकाल एकोनषष्टिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्य सप्तषष्ट्यधिकत्रिशतच्छेदकृतानि त्रीणि शतानि सप्तोत्तराण्यशाना ५९-३०७/३६७ । यदुक्त -'एगूणसट्ठिरूवा सत्तहि अहिगाओ तिण्णि अससया ३०७ । तिण्णेव य सट्ठा छेओ पुण तेसि बोद्धव्वो ।।२५५।। इति ज्यो० । अस्यार्थ - एकोनषष्टिरूपाणि एकोनषष्टिसङ्ख्याका मुहूर्त्ता, सप्तभिरधिकानि त्रीणि च अंशशतानि, किंरूपछेदकृतास्तेऽशा ? इत्यत आह छेद पुनस्तेषामशाना बोद्धव्यः त्रीणि शतानि सप्तषष्ट्यधिकानि । एतावता कालेन नक्षत्र स्व स्व मण्डल परिभ्रमणेन परिसमाप्नोतीति गाथार्थ । ज्यो० वृत्तिः । तत. सवर्णनार्थम् एकोनषष्टिर्मुहूर्त्ता अपि त्रिभि शतै सप्तषष्ट्यधिकैर्गुण्यन्ते । गुणयित्वा चोपरितना अशाः

सप्तोत्तरत्रिशतसङ्ख्याका प्रक्षिप्यन्ते । जातमेकविंशति सहस्राणि नव शतानि षष्टयधिकानि २१९६० । सर्वाऽभ्यन्तरे च मण्डले परिरयपरिमाण पुन तिस्रो लक्षाः पञ्चदश सहस्राणि नवाऽशीत्यधिकानि । यत इह छेदराशिर्मुहूर्त्ताशरूपस्तत परिरयपरिमाणमपि त्रिभि शतैः सप्तषष्ट्यधिकैर्गुण्यते । जातमेककद्वय पञ्चक षट्कस्त्रिक सप्तकः षट्कद्वयं त्रिकश्चे ११५६३७६६३ ति । एतस्यैकविंशति सहस्रैर्नवभिः शतैः षष्ट्यधिकैश्च भागो ह्रियते लब्ध यथोक्त मानं ५२६५–$\frac{१८२६३}{२१९६०}$ । एतावती सर्वाऽभ्यन्तरे मण्डले वर्त्तमानानामभिजिदादीना द्वादशानामपि नक्षत्राणा प्रतिमुहूर्तं गतिः । अथ सर्वबाह्यमण्डले नक्षत्रचारमधिकृत्य प्रश्नयति–'जया ण भते !' इत्यादि प्रश्नः सुगमः । भगवानाह–गौतम ! पञ्च योजनसहस्राणि त्रीणि च शतान्येकोनविंशतिरधिकानि षोडश भागसहस्राणि त्रीणि च शतानि पञ्चषष्ट्यधिकानि ५३१९-$\frac{१६३६५}{२१९६०}$ । एतत्कथमवसीयते ? इति शिष्याऽऽकूतमभ्युपगम्याह-'मडलमि'त्यादि । मण्डल सर्वबाह्यमण्डलपरिरयपरिमाण तिस्रो लक्षा अष्टादश सहस्राणि त्रीणि च शतानि पञ्चदशोत्तराणि ३१८३१५ । एतत्रिभि शतै सप्तषष्टयधिकैर्गुण्यते । जातमेककद्वय षट्कोऽष्टको द्विक एकक. षट्कः शून्य पञ्चकश्चे- ११६८२१६०५ ति । एतस्य 'एक्कवीसाए'त्ति । एकविंशत्या मण्डलसहस्रैर्भागसहस्रैर्नवभि शतै षष्ट्यधिकैर्भागो ह्रियते । लब्ध यथोक्त मानम् ५३१९ $\frac{१६३६५}{२१९६०}$ । एतावती सर्वबाह्ये मण्डले वर्त्तमानाना मृगशीर्षप्रभृतीना नक्षत्राणां प्रतिमुहूर्तं गतिरवसातव्या । एव शेषेष्वपि नक्षत्रमण्डलेष्वनन्तरवक्ष्यमाणचन्द्रमण्डलसमवतारानुसारत परिरयपरिमाण परिभाव्य प्रतिमुहूर्त गतिपरिमाण वक्तव्यम् । अथाष्टावपि नक्षत्रमण्डलानि केषु चन्द्रमण्डलेषु समवतरन्ति ? इति प्रश्नयति–'एते णमि'त्यादि । एतानि भदन्त । अष्टौ नक्षत्रमण्डलानि कतिषु चन्द्रमण्डलेषु । तृतीया सप्तम्यर्थे प्राकृतत्वात् समवतरन्ति? इति प्रश्ने भगवानाह-गौतम ! 'अट्ठहि'ति । अष्टसु चन्द्रमण्डलेषु समवतरन्ति । तद्यथा- पढमे'त्ति । प्रथमे चन्द्रमण्डले प्रथम नक्षत्रमण्डल समवतरति । तृतीये चन्द्रमण्डले द्वितीय नक्षत्रमण्डल । षष्ठे चन्द्रमण्डले तृतीय नक्षत्रमण्डल । यत षष्ठ चन्द्रमण्डल लवणसमुद्रे । अत एव तृतीय नक्षत्रमण्डलमपि लवणसमुद्रेऽभिहित । जम्बूद्वीपे द्वयोरेव नक्षत्रमण्डलयो. प्रागभिहितत्वात् । सप्तमे चन्द्रमण्डले चतुर्थं नक्षत्रमण्डलम् । एवमष्टमे पञ्चम, दशमे षष्ठ, एकादशे सप्तम, पञ्चदशेऽष्टम नक्षत्रमण्डल समवतरतीति । अथ चन्द्रादयो निजनिजमण्डलस्य कीदृशान् कतिभागानेकेन मुहूर्त्तेन गच्छन्ति ? इति जिज्ञासाया प्रथम चन्द्रविषय प्रश्नमाह–'एगमेगेणमि'त्यादि । एकैकेन भदन्त ! मुहूर्त्तेन चन्द्र कियन्ति भागशतानि निजमण्डलस्येति गम्य गच्छति ? । भगवानाह–गौतम ! यद्यन्मण्डलमुपसङ्क्रम्य चार चरति, चन्द्र इति गम्य तस्य तस्य मण्डलस्य सम्बन्धिनः परिक्षेपस्य सप्तदश 'अट्ठट्ठे'त्ति । अष्टषष्टयधिकानि भागशतानि गच्छति । अथैते च भागा कीदृशा ? इत्याह–'मडलमि'त्यादि । मण्डल–विवक्षितमण्डलपरिरयपरिमाण 'सयसहस्सेण'ति । शतसहस्रेण–लक्षेणाऽष्टानवत्या च शतै –अष्टानवत्या शतैरधिकेनैकेन लक्षणेत्यर्थ. । १०९८०० छित्वा–विभज्य । इयमत्र भावना–इह प्रथमतश्चन्द्रमसो मण्डलकालो निरूपणीयः । तदनन्तर तदनुसारेण मुहूर्तगतिपरिमाण परिभावनीय । तत्र मण्डलकालनिरूपणार्थमिद त्रैराशिक–यदि सप्तदशभि शतैरष्टषष्ट्यधिकै सकलयुगवर्त्तिभिरर्द्धचन्द्रमण्डलै अष्टादश शतानि त्रिंशदधिकानि रात्रिदिवाना लभ्यन्ते । ततो

द्वाभ्यामर्द्धमण्डलाभ्यामेकेन मण्डलेनेति भाव । कति रात्रिदिवा लभ्यन्ते ? । राशित्रयस्थापना १७६८-१८३०-२ । अत्रान्त्येन राशिना द्विकलक्षणेन मध्यमस्य राशेर्गुणने जात षट्त्रिंशच्छतानि षष्ठ्यधिकानी ३६६० ति । तेषामाद्येन राशिना भागहरणे लब्ध द्वे रात्रिदिवे । शेषं तिष्ठति चतुर्विंशत्यधिकं शतम् । तत्रैकैकस्मिन् रात्रिदिवे त्रिंशन्मुहूर्त्ता इति तस्य त्रिंशता गुणने जात सप्तत्रिंशच्छतानि विंशत्यधिकानी ३७२० ति । तेषा सप्तदशभि शतैरष्टपष्ठ्यधिकैर्भागे हृते लब्ध द्वौ मुहूर्त्तौ । तत शेषछेद्यछेदकराश्योरष्टकेनापवर्त्तना । ततो जातश्छेद्यो राशिस्त्रयोविंशति छेदकराशिर्द्वे शते एकविंशत्यधिके । आगतं मुहूर्त्तस्यैकविंशत्यधिकशतद्वयभागास्त्रयोविंशति २/२/ $\frac{23}{221}$ । एतावता कालेन द्वे अर्द्धमण्डले । परिपूर्णे चरति । किमुक्त भवति--एतावता कालेन परिपूर्णमेकमण्डलं चन्द्रश्चरति । तदेवं मण्डलकालपरिज्ञान कृतम् । साम्प्रतमेतदनुसारेण मुहूर्त्तगतिपरिमाण चिन्त्यते । तत्र ये द्वे रात्रिदिवे ते मुहूर्त्तीकरणार्थं त्रिंशता गुण्यते । जाता षष्टिर्मुहूर्त्ता ६० । तत उपरितनौ द्वौ मुहूर्त्तौ प्रक्षिप्येते । जात द्वापष्टि ६२ । एषा सवर्णनार्थं द्वाभ्या शताभ्यामेकविंशत्यधिकाभ्या गुण्यते । गुणयित्वा चोपरितनास्त्रयोविंशति प्रक्षिप्यन्ते । जात त्रयोदश सहस्राणि सप्त शतानि पञ्चविंशति १३७२५ श्चेति । एतदेकमण्डलकालगतमुहूर्त्तसत्कैकत्रिंशत्यधिकशतद्वयभागाना परिमाण । ततस्त्रैराशिककर्म्मावतार । यदि १३७२५ उक्तलक्षणाना भागाना मण्डलभागा एक लक्षमष्टानवति शतानि च १०९८०० लभ्यन्ते । तत एकेन मुहूर्त्तेन किं लभ्यते ? । राशित्रयस्थापना-१३७२५-१०९८००--१ । इहाद्यो राशिर्मुहूर्त्तगतैकविंशत्यधिकशतद्वयरूप । तत. सवर्णनार्थमन्त्यो राशिरेकलक्षणो द्वाभ्या शताभ्यामेकविंशत्यधिकाभ्या गुण्यते । जात द्वे शते एकविंशत्यधिके २२१ । ताभ्या मध्यो राशिर्गुण्यते । जात द्विकश्चतुष्कोद्विक. षट्क पञ्चकोऽष्टक शून्यद्वय २४२६५८०० चेति । तेषा त्रयोदशभि सहस्रै सप्तभिश्च शतै पञ्चविंशत्यधिकैर्भागो ह्रियते । लब्ध सप्तदश शतानि अष्टषष्ठ्यधिकानि १७६८ । एतावतो भागान् यत्र तत्र वा मण्डले चन्द्रो मुहूर्त्तेन गच्छति । अथ सूर्य एकैकेन मुहूर्त्तेन निजमण्डलस्य कीदृशान् कति भागान् गच्छति ? इति प्रश्नयति-'एगमेगेणमि'त्यादि प्रश्न: प्राग्वत् । भगवानाह-गौतम ! यद्यन्मण्डलमुपसङ्क्रम्य सूर्यश्चार चरति, तस्य मण्डलस्य सम्बन्धिन परिक्षेपस्याऽष्टादश भागशतानि त्रिंशदधिकानि गच्छति । अथैते च भागा कीदृशा ? इत्याह-'मडलमि'त्यादि । मण्डल शतसहस्रेणाऽष्टानवत्या च शतैश्छित्वा ।' कथमेतदवसीयते ? । इतिचेद्, उच्यते-त्रैराशिकबलात् । तथाहि-यदि षष्ठ्या मुहूर्त्तैरेक शतसहस्रमष्टानवति शतानि मण्डलभागाना लभ्यन्ते । तत एकेन मुहूर्त्तेन कति भागान् लभामहे ? । राशित्रयस्थापना ६०-१०९८००-१ । अत्रान्त्येन राशिना एककलक्षणेन मध्यमराशेर्गुणने जात स तावानेव । एकेन गुणित तदेव भवतीतिवचनात् । तत आद्येन राशिना षष्टिलक्षणेन भागो ह्रियते । लब्धमष्टादश शतानि त्रिंशदधिकानि १८३० । एतावतो भागान् मण्डलस्य सूर्य एकैकेन मुहूर्त्तेन गच्छति । अथ नक्षत्रमेकैकेन मुहूर्त्तेन निजमण्डलस्य कीदृशान् ? कति भागान् गच्छति? इति प्रश्नयति-'एगमेगे णमि'त्यादि । एकैकेन भदन्त ! मुहूर्त्तेन कियतो भागान् मण्डलस्य नक्षत्र गच्छति ? । भगवानाह-गौतम ! यद्यदात्मीयकालप्रतिनियत मण्डलमुपसङ्क्रम्य चारं चरति, तस्य

तस्याऽऽत्मीयमण्डलस्य सम्बन्धिनः परिक्षेपस्य-परिधेरष्टादश भागशतानि पञ्चत्रिंशदधिकानि गच्छति । एते च भागाः कीदृशाः? इत्याह—'मंडल'त्ति । मण्डलं शतसहस्रेण-लक्षेणेत्यर्थः । अष्टानवत्या च शतैः १०९८०० छित्वा । इहापि प्रथमतो मण्डलकालो निरूपणीयः । ततस्तदनुसारेण मुहूर्त्तगतिपरिमाण-भावना । तत्र मण्डलकालप्रमाणचिन्तायामिदं त्रैराशिकं । यथाऽष्टादशभिः शतैः पञ्चत्रिंशदधिकैः सकलयुगभाविभिरर्द्धमण्डलैरष्टादश शतानि त्रिंशदधिकानि रात्रिदिवानां लभ्यन्ते । ततो द्वाभ्यामर्द्ध-मण्डलाभ्यामेकैकेन परिपूर्णेन मण्डलेनेति भावः । किं लभामहे ? । राशित्रयस्थापना १८३५—१८३०-२ । अत्राऽन्त्येन-राशिना मध्यमराशेर्गुणने जातं षट् त्रिंशच्छतानि षष्ट्यधिकानि ३६६० । तत आद्येन राशिना १८३५ भागहरणे । लब्धमेकं रात्रिदिवं, शेषाः तिष्ठन्ति अष्टादश शतानि पञ्चविंशत्यधिकानि १८२५ । ततो मुहूर्त्ताऽऽनयनार्थमेतत्त्रिंशता गुण्यते । जातानि चतुष्पञ्चाशत्सहस्राणि सप्त शतानि पञ्चाशद-धिकानि ५४७५० इति । एतस्याष्टादशभिः शतैः पञ्चत्रिंशदधिकैर्भागे हृते लब्धमेकोनत्रिंशन्मुहूर्त्ताः । ततः शेषछेद्यच्छेदकराश्योः पञ्चकेनाऽपवर्त्तना । जातः उपरितनो राशिः त्रीणि शतानि सप्तोत्तराणि ३०७ छेदकराशिस्त्रीणि शतानि सप्तषष्ट्यधिकानि ३६७ । तत आगतमेकं रात्रिदिवम् । एकस्य च रात्रिदिवस्य एकोनत्रिंशन्मुहूर्त्ता एकस्य च मुहूर्त्तस्य सप्तषष्ट्यधिकत्रिशतभागानां त्रीणि शतानि सप्तोत्तराणि १-२९-$\frac{307}{367}$ इदानीमेतदनुसारेण मुहूर्त्तगतिपरिमाणं चिन्त्यते-तत्र रात्रिदिवे त्रिंशन्मुहूर्त्ता तेषु उपरितना एकोनत्रिंश-न्मुहूर्त्ता प्रक्षिप्यन्ते । जातमेकोनषष्टिर्मुहूर्त्ता । ततः सवर्णनार्थं त्रिभिः शतैः सप्तषष्टयधिकैर्गुण्यन्ते । गुण-यित्वा चोपरितनानि त्रीणि शतानि सप्तोत्तराणि क्षिप्यन्ते । जातमेकविंशतिसहस्राणि नव शतानि षष्टय-धिकानि २१९६० । ततस्त्रैराशिक—यदि मुहूर्त्तगतसप्तषष्टयधिकत्रिशतभागानामेकविंशत्या सहस्रैर्नवभिः शतैः षष्टयधिकैरेकं शतसहस्रमष्टानवतिं शतानि मण्डलभागानां लभ्यन्ते । तत एकेन मुहूर्त्तेन किं लभामहे ? । राशित्रयस्थापना २१९६०—१०९८००-१ । अत्राद्यो राशिर्मुहूर्त्तगतसप्तषष्टयधिकत्रिशत-भागरूपः । ततोऽन्योऽपि राशिस्त्रिभिः शतैः सप्तषष्टयधिकैर्गुण्यते । जातं त्रीण्येव शतानि सप्तषष्टय-धिकानि ३६७ । तैर्मध्यो राशिर्गुण्यते । जातं चतुष्कं शून्यं द्विको नवकः षट्कद्वयं शून्यद्वय-४०२९६६०० चेति । एतस्यादिराशिना एकविंशति- सहस्राणि नव शतानि षष्ट्यधिकानीत्येवरूपेण भागो ह्रियते । लब्धमष्टादश शतानि पञ्चत्रिंशदधिकानि १८३५ । एतावतो भागान् नक्षत्रं प्रतिमुहूर्त्तं गच्छति । तदेवं यतश्चन्द्रो यत्र तत्र वा मण्डले एकैकेन मुहूर्त्तेन मण्डलपरिक्षेपस्य सप्तदश शतानि अष्टषष्टयधिकानि १७६८ भागानां गच्छति । सूर्योऽष्टादश शतानि त्रिंशदधिकानि १८३० । नक्षत्रम-ष्टादश शतानि पञ्चत्रिंशदधिकानि १८३५ । ततश्चन्द्रेभ्यः सूर्याः शीघ्रगतयः, सूर्येभ्यश्च नक्षत्राणि शीघ्रगतीनि । ग्रहास्तु अङ्गारादयो वक्राऽतिचारमन्दगतिभावतो न नियतगतिप्रस्थानाः । ततो न तेषा-मुक्तप्रकारेण गतिप्रमाणप्ररूपणा कृता । उक्तं च—

'चंदेहिं सिग्घयरा सूरा सूरेहिं होंति णक्खत्ता । अणिअयगइपत्थाणा हवंति सेसा गहा सव्वे ॥१॥ इति ( ज्यो० गा० १४६ ) इत्येवं चन्द्रसूर्यनक्षत्राणामेकेन मुहूर्त्तेन निजनिजमण्डलपरिरयवि-भागचारः प्रदर्शितः ।

अथ भूगोलकावाद्यादिमतनिराकरणार्थं दिशोऽधिकृत्य जम्बूद्वीपवर्त्तिनोर्द्वयो सूर्ययोरुदयादिस्वरूपं पृच्छति

**जंबुद्दीवे णं भंते ! दीवे सूरिआ उदीणपाईणमुग्गच्छ पाईणदाहिणमागच्छंति ? पाईण-दाहिणमुग्गच्छ दाहिणपडीणमागच्छंति ? दाहिणपडीणमुग्गच्छ पडीणउदीणमागच्छंति ? पडीणउदीणमुग्गच्छ उदीणपाईणमागच्छंति ? । हंता गोअमा ! जहा पंचमसए पढमे उद्देसए जाव णेवत्थि उस्सप्पिणी । अवट्ठिए णं तत्थ काले पण्णत्ते समणाउसो ! । इच्चेसत्ति जंबुद्दीवपण्णत्ती । सूरपण्णत्ती वत्थुसमासेण समत्ता भवति ।**

**जंबुद्दीवे ण भंते ! दीवे चंदमा उदीणपाईणमुग्गच्छ पाईणदाहिणमागच्छंति ? । जहा सूरवत्तव्वया—जहा पंचमसयस्स दसमे उद्देसए । जाव अवट्ठिए णं तत्थ काले पण्णत्ते सम-णाउसो ! । इच्चेसा जंबुद्दीवपण्णत्ती । चंदपण्णत्ती वत्थुसमासेण समत्ता भवति ।**

'जंबुद्दीवे णमि'त्यादि । जम्बूद्वीपे भदन्त ! द्वीपे सूर्यौ यथायोग मण्डलपरिभ्रम्या भ्रमन्तौ मेरो-रुदक्प्राच्याम्—उत्तरपूर्वस्या दिशि पूर्वविदेहाऽपेक्षया उद्गत्य प्राग् दक्षिणपूर्वस्यामागच्छत' क्रमेणा-ऽस्त यात इत्यर्थ । ततो भरतादिक्षेत्राऽपेक्षया प्राग् दक्षिणपूर्वस्यामुद्गत्य दक्षिणाऽपरस्यामागच्छत । तत्रापि च दक्षिणाऽपरस्यामपरविदेहाऽपेक्षयोद्गत्य अपाच्युदीच्यामागच्छत । तत्रापि चाऽपरोत्तरस्यामै-रावतादि क्षेत्राऽपेक्षयोद्गत्योत्तरपूर्वस्यामागच्छत' । ईशान्या दृष्टिपथमागत्याग्नेय्यामदृश्यौ स्याताम् , आग्नेय्या दृष्टिपथमागत्य नैर्ऋत्यामदृश्यौ स्यातामित्यादि प्रश्नार्थ । अथ भाव -इह चोद्गमनमस्तमन च द्रष्टृजनाऽपेक्षयैव तेन येषामदृश्यौ सन्तौ दृश्यौ तौ स्याता ते तयोरुद्गमन व्यवहरन्ति । येषा तु दृश्यौ सन्तावदृश्यौ स्तस्ते तयोरस्तमय व्यवहरन्तीत्यनियतावुदयास्तमयौ इत्येव सामान्यत सूर्ययोरुदयविधि' । विशेषत पुनरेव-यदेक सूर्य प्राग्दक्षिण-यामुद्गच्छति तदाऽपरोऽप्यपरोत्तरस्या दिशि समुद्गच्छति । दक्षिणपूर्वोद्गतश्च सूर्यो भरतादीनि क्षेत्राणि मेरोर्दक्षिणदिग्भावीनि मण्डलपरिभ्रम्या परिभ्रमन् प्रकाश यति—अपरोऽपरोत्तरस्यामुद्गत सन् तत ऊर्ध्वं मण्डलपरिभ्रम्या परिभ्रमन् ऐरावतादीनि क्षेत्राणि मेरो-रुत्तरदिग्भावीनि प्रकाशयति । भारतश्च सूर्यो दक्षिणाऽपरस्यामागत सन्नपरमहाविदेहक्षेत्राऽपेक्षयोदयमा-सादयति । ऐरावत सूर्य पुनरुत्तरपूर्वस्यामागत पूर्वविदेहाऽपेक्षया समुद्गच्छति । ततो दक्षिणा-परस्यामुद्गतः सन् तत ऊर्ध्वं मण्डलगत्या परिभ्रमन् अपरविदेहान् प्रकाशयति । उत्तरपूर्वस्या-मुद्गतस्तु तत ऊर्ध्वं मण्डलगतया भ्रमन् पूर्वविदेहानवभासयति । तत एष पूर्वविदेहप्रकाशको भूयो दक्षिणाऽपरस्या भरतादिक्षेत्राऽपेक्षयोदयमासादयति । अपरविदेहप्रकाशकस्तु अपरोत्तरस्यामैरावतादि-क्षेत्राऽपेक्षयोदयमासादयतीति । जम्बूद्वीपे सूर्ययोरुदयविधिविषये कावचा प्रश्ने कृते भगवानाह—गौतम ! 'हन्ते'ति शब्दोऽव्यय शिष्यवचनानुवादपुरस्सर तदभ्युपगमार्थे द्रष्टव्य । तेन हे गौतम ! इत्थमेव यथा

त्वं प्रश्नयसि तथैवेत्यर्थः । एतेन सूर्यः पश्चिमसमुद्रं प्रविश्य पाताले गत्वा पुनः पूर्वसमुद्रे उदेतीति परवादिमतं निषिद्धमिति । अथेह ग्रन्थगौरवभयाद् गौतमप्रश्नस्याऽनुवादं ग्रन्थान्तरेण दर्शयन्नाह– 'जहा पंचमसए' इत्यादि । यथा पञ्चमशते, भगवत्या इतिगम्य, प्रथमोद्देशके । कियद्दूरम् ? इत्याह 'जावे'त्यादि भगवत्याः पञ्चमशतके प्रथमोद्देशकेऽपि यावन्नैवास्ति अवसर्पिणी पूर्वपश्चिमविदेहयोः । यतस्तत्र हे श्रमण ! आयुष्मन् ! कालोऽवस्थितः प्रज्ञप्तः । यद्यपि सूत्रेऽतिदिष्टमिह व्याख्याने साक्षाद्वक्तव्यं तथापि ग्रन्थगौरवभयात् प्रायः प्रतीतत्वात् भगवतीगतमेव सूत्रं सव्याख्यानमिहाऽप्यवतारणीयम् । अथोपसंहारेण निगमनमाह–'इच्चेस'त्ति । एषा सूर्यवक्तव्यताप्रतिबद्धा एकदेशरूपा जम्बूद्वीपप्रज्ञप्तिः सूर्यप्रज्ञप्तिवस्तुसमासेन-सूर्यविचारप्रतिबद्धप्ररूपणालक्षणवस्तुसङ्क्षेपेण प्रज्ञप्ता-आख्याता भवति। समासकथनेन विस्तरजिज्ञासुना भगवत्युपाङ्गं सूर्यप्रज्ञप्तिरेवावलोकनीयेतिभावः ।

अथ सूर्यवच्चन्द्रविषयं-प्रश्नमाह–'जंबुद्दीवे णमि'त्यादि । जम्बूद्वीपे भदन्त ! द्वीपे चन्द्रौ उदीचीनप्राचीनमीशान्यामुद्गत्य प्राचीनदक्षिणामागच्छतः इत्यादि यथा सूर्यवक्तव्यता तथा चन्द्रस्यापि । अतिदेशमाह–'जहा पंचमे'त्ति । यथा पञ्चमशतकस्य, भगवत्या इतिगम्य, दशमोद्देशके । कियद्दूरम् ? इत्याह–'जावे'त्यादि प्राग्वत् । उपसंहारमाह–इत्येषा प्रागुक्तचन्द्रवक्तव्यताप्रतिबद्धा जम्बूद्वीपप्रज्ञप्तेरेकदेशरूपा चन्द्रप्रज्ञप्तिवस्तुसमासेन चन्द्रविचारप्रतिबद्धप्ररूपणालक्षणवस्तुसङ्क्षेपेण समाप्ता भवति । अत्रापि विस्तरार्थिना उपासकदशाङ्गस्योपाङ्गं चन्द्रप्रज्ञप्तिरेवावलोकनीयेतिभावः ।

अथ चन्द्रादिचारहेतुकाः संवत्सरविशेषा भवन्तीति चन्द्रादिचारनिरूपणानन्तरं संवत्सरभेदान् प्रश्नयति

**कइ णं भंते ! संवच्छरा पण्णत्ता ? । गो० ! पंच संवच्छरा पण्णत्ता । तं०–णक्खत्तसंवच्छरे जुगसंवच्छरे पमाणसंवच्छरे लक्खणसंवच्छरे सणिच्छरसंवच्छरे । णक्खत्तसंवच्छरे णं भंते ! कइविहे पण्णत्ते ? । गो० ! दुवालसविहे पण्णत्ते । तं०–सावणे भद्दवए आसोए जाव आसाढे । जं वा विहप्फती महग्गहे दुवालसेहिं संवच्छरेहिं सव्वणक्खत्तमंडलं समाणेति सेत्तं णक्खत्तसंवच्छरे । जुगसंवच्छरे णं भंते ! कइविहे पण्णत्ते ? । गो० ! पंचविहे पण्णत्ते । तं चंदे चंदे अभिवड्ढिए चंदे अभिवड्ढिए चेव । पढमस्स णं भंते ! चंदसंवच्छरस्स कइ पव्वा पण्णत्ता ? । गो० ! चउव्वीस पव्वा पण्णत्ता । बित्तिअस्स णं भंते ! चंदसंवच्छरस्स कइ पव्वा पण्णत्ता ? । गोअमा ! चउव्वीसं पव्वा पण्णत्ता । एवं पुच्छा तत्तिअस्स । गो० ! छव्वीसं पव्वा पण्णत्ता । चउत्थस्स चंदसंवच्छरस्स चउव्वीसं पव्वा । पंचमस्स णं अभिवड्ढिअस्स छव्वीसं पव्वा पण्णत्ता । एवामेव सपुव्वावरेणं पंचसंवच्छरिए जुगे एगे चउव्वीसे पव्वसए पण्णत्ते सेत्तं जुगसंवच्छरे । पमाणसंवच्छरे णं कइविहे पण्णत्ते ? । पंचविहे पण्णत्ते । तं०–णक्खत्ते**

चंदे उदू आइच्चे अभिवड्ढिए । सेत्तं पमाणसंवच्छरे। लक्खणसंवच्छरे णं भंते ! कइविहे पण्णत्ते ? । गो० ! पंचविहे पण्णत्ते । तं०—

समगं णक्खत्ता जोगं जोएंति समगं उदूपरिणमंति । णच्चुण्ह णाइसीओ बहुउदओ होइ णक्खत्तो। १॥
ससिसमगपुण्णमासिं जोएंति विसमचारिणक्खत्ता । कडुओ बहुदगो वा तमाहु संवच्छरं चंदं ॥२॥
विसमं पवालिणो परिणमंति अणुदूसु दिंति पुप्फफलं । वासं न सम्म वासति तमाहु संवच्छरं कम्मं।३
पुढविदगाणं तु रसं पुप्फफलाणं च देति आइच्चो । अप्पेणवि वासेणं सम्मं निप्फज्जए सस्सं ॥४॥
आइच्चतेअतविआ खणलवदिवसा उऊ परिणमंति। पूरेति णिण्णथलए तमाहु अभिवड्ढिअं जाण ॥५॥

सेत्तं लक्खणसंवच्छरे सणिच्छरसंवच्छरे । णं भंते ! कइविहे पण्णत्ते ? । गो० ! अट्ठावीसतिविहे पण्णत्ते । तं जहा

अभिई सवण धणिट्ठा सयभिसया दो अ हुंति भद्दवया । रेवइ अस्सिणि भरणी कत्तिअ तह रोहिणी ॥१॥ जाव उत्तराओ आसाढाओ । जं वा सणिच्छरे महग्गहे तीसाए संवच्छरेहिं सव्वं णक्खत्तमंडलं समाणेति । सेत्तं सणिच्छरसंवच्छरे ।

'कइ णं भंते !' इत्यादि । कति भदन्त ! संवत्सराः प्रज्ञप्ताः ? । भगवानाह—गौतम ! पञ्च संवत्सराः प्रज्ञप्ताः । तद्यथा—नक्षत्रसंवत्सरो, युगसंवत्सरः, प्रमाणसंवत्सरो, लक्षणसंवत्सरः, शनैश्चरसंवत्सरश्चेति । अथ नक्षत्रसंवत्सरमाह—'णक्खत्तसंवच्छरे णमि'त्यादि । नक्षत्रसंवत्सरो भदन्त ! कतिविधः प्रज्ञप्तः ? । भगवानाह—गौतम ! द्वादशविधः प्रज्ञप्तः । तद्यथा—श्रावणो भाद्रपद आश्विनो यावदाषाढः । यावत्करणात्कार्त्तिकादीनां संग्रहः । अत्र भावः—यावता कालेनाष्टाविंशत्या नक्षत्रैः सह क्रमेण चन्द्रस्य योगपरिसमाप्तिः तावान् कालविशेषो द्वादशभिर्गुणितो नक्षत्रसंवत्सरः । उक्तं च 'णक्खत्तचंदजोगो बारसगुणिओ अ णक्खत्तो'त्ति (ज्यो० गा० ३५) । अत्र पुनरेकोनितनक्षत्रपर्याययोगः—एकोननक्षत्रमासः सप्तविंशतिरहोरात्रा एकविंशतिश्च सप्तषष्टिभागा अहोरात्रस्य । एष राशिर्यदा द्वादशभिर्गुण्यते तदा त्रीण्यहोरात्रशतानि सप्तविंशत्यधिकानि एकपञ्चाशच्च सप्तषष्टिभागा अहोरात्रस्य ३२७—$\frac{51}{67}$ । एतावत्प्रमाणो नक्षत्रसंवत्सरः । स च द्वादशविधो द्वादशमासात्मक इत्यर्थः । यत्तु श्रावणादिमासेष्वपि संवत्सरव्यपदेशः । स चाऽवयवेषु समुदायोपचारादेवेति । अथ प्रकारान्तरेणापि नक्षत्रसंवत्सरमाह—'जं वा विहप्फे'त्यादि । यद्वाशब्दः पक्षान्तरद्योतकः । अथवा वाशब्दः पक्षान्तरद्योतको यत् बृहस्पतिर्महाग्रहो योगमधिकृत्य द्वादशभिः संवत्सरैः सर्वनक्षत्रमण्डलं समानयति—परिसमापयति । एष नक्षत्रसंवत्सरः । किमुक्तं भवति—यावता कालेन बृहस्पति नामा महाग्रहो योगमधिकृत्याऽभिजिदादीन्यष्टाविंशतिमपि नक्षत्राणि परिसमापयति । 'से त्तं'ति । स तत्तस्मात्कारणात् तावान् कालविशेषो द्वादश-

वर्षप्रमाणो नक्षत्रसंवत्सरः । अथ क्रमप्राप्तं युगसंवत्सरं प्ररूपयति–'युगसंवच्छरे णं'ति । युगसंवत्सरो भदन्त ! कतिविधः प्रज्ञप्तः ? । भगवानाह–गौतम ! पञ्चविधः प्रज्ञप्तः । तद्यथा–चन्द्रश्चन्द्रोऽभिवर्द्धितश्चन्द्रोऽभिवर्द्धितश्चेति । यदुक्तं–'चंदो चंदोभिवड्ढिओ अ चंदोभिवड्ढिओ चेव । पंचसहिअं जुगमिणं दिट्ठं तेलुक्कदंसीहिं' ।।१।। (ज्यो० गा० ४९) त्ति । पञ्चानामपि युगसंवत्सरव्यपदेशोऽवयवेषु समुदायोपचारादेव । स्थानाङ्गादौ तथैव व्याख्यातत्वात् । तत्र द्वादश पूर्णमासीपरावर्त्ताः यावता कालेन समाप्तिमुपयान्ति तावान् कालविशेषश्चान्द्रः संवत्सरः । उक्तं च–'पुण्णिमपरिअट्टा पुण बारस संवच्छरो हवइ चंदो'त्ति ( ज्यो० गा० ३५ ) । एकश्च पूर्णमासीपरावर्त्त एकश्चन्द्रमासः । तस्मिंश्च चन्द्रमासे रात्रिंदिवपरिमाणचिन्तायाम् एकोनत्रिंशदहोरात्रा द्वात्रिंशच्च द्वाषष्टिभागा रात्रिंदिवस्य । एतद्द्वादशभिर्गुण्यते जातानि त्रीणि शतानि चतुःपञ्चाशदधिकानि रात्रिंदिवानां द्वादश च द्वाषष्टिभागा रात्रिंदिवस्य । एवं परिमाणश्चान्द्रः संवत्सरः । तथा यस्मिन् संवत्सरे अधिकमाससम्भवेन त्रयोदश चन्द्रमासा भवन्ति सोऽभिवर्द्धितः संवत्सरः । उक्तं च–'तेरस य चंदमासा एसो अभिवड्ढिओ अ णायव्वो' त्ति (ज्यो० गा० ३६) एकस्मिंश्च चन्द्रमासे अहोरात्रा एकोनत्रिंशद् भवन्ति द्वात्रिंशच्च द्वाषष्टिभागा २९-$\frac{32}{62}$ अहोरात्रस्य । एतच्चानन्तरोक्तं तत एष राशिस्त्रयोदशभिर्गुण्यते । जातानि त्रीण्यहोरात्रशतानि त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च द्वाषष्टिभागा ३८३-$\frac{44}{62}$ । एतावदहोरात्रप्रमाणोऽभिवर्द्धितः संवत्सर उपजायते । ननु कथमधिकमाससम्भवो येनाऽभिवर्द्धितसंवत्सर उपजायते ? कियता वा कालेन सम्भवति ? इति । उच्यते–इह युगं चन्द्रादिपञ्चसंवत्सरात्मकं सूर्यसंवत्सराऽपेक्षया परिभाव्यमानमन्यूनाऽतिरिक्तानि पञ्च वर्षाणि भवन्ति । सूर्यमासश्च सार्द्धत्रिंशदहोरात्रप्रमाणः । चन्द्रमासस्तु एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागादिनस्य । ततो गणितसम्भावनया सूर्यसंवत्सरसत्कत्रिंशन्मासातिक्रमे एकश्चन्द्रमासोऽधिको लभ्यते । स च यथा प्राप्यते तथा पूर्वाऽऽचार्यप्रदर्शितेयं करणगाथा

'चंदस्स जो विसेसो आइच्चस्स य हविज्ज मासस्स । तीसइ गुणिओ संतो हवइ हु अहिमासगो इक्को । ।। १ ।। ( ज्यो० गा० ९२ ) अस्या अक्षरगमनिका–'आदित्यसंवत्सरसम्बन्धिनो मासस्य मध्यात् चन्द्रस्य–चन्द्रमासस्य यो भवति विश्लेषः । इह विश्लेषे कृते सति यदवशिष्यते तदप्युपचाराद् विश्लेषः । स त्रिंशता गुणितः सन् भवत्येकोऽधिकमासः । ततः सूर्यमासपरिमाणात् सार्द्धत्रिंशदहोरात्ररूपाच्चन्द्रमासपरिमाणम् एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्येत्येवंरूपं शोध्यते । ततः स्थितं पश्चाद् दिनमेकमेकेन द्वाषष्टिभागेन न्यूनं । तच्च दिनं त्रिंशता गुण्यते । जातानि त्रिंशद्दिनानि एकश्च द्वाषष्टिभागस्त्रिंशता गुण्यते जातास्त्रिंशद् द्वाषष्टिभागा ते त्रिंशद्दिनेभ्यः शोध्यन्ते । ततः स्थितानि शेषाणि एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्य । एतावत्परिमाणश्चान्द्रमास इति । भवति सूर्यसंवत्सरसत्कत्रिंशन्मासाऽतिक्रमे एकोऽधिको मासः ।' युगे च सूर्यमासाः षष्टिः ततो भूयोऽपि सूर्यसंवत्सरसत्कत्रिंशन्मासातिक्रमे द्वितीयोऽधिको मासो भवति । उक्तं च

'सट्ठीए अईआए हवइ हु अहिमासगो जुगद्धंमि । बावीसे पव्वसए हवइ हु बीओ जुगद्धंमि ।।१।।

( ज्यो० गा० ९३ ) अस्या अक्षरगमनिका–'एकस्मिन् युगेऽनन्तरोदितस्वरूपे पर्व्वणा-पक्षाणा षष्टौ अतीताया-षष्टिसङ्ख्येषु पक्षेषु अतिक्रान्तेष्वित्यर्थः । एतस्मिन्नवसरे युगार्द्धे–युगार्द्धप्रमाणे एकोऽधिको मासो भवति । द्वितीयस्त्वधिको मासो द्वाविंशे–द्वाविंशत्यधिके पर्व्वशते-पक्षशतेऽतिक्रान्ते युगस्यान्ते–युगस्य पर्यवसाने भवति ।' । तेन युगमध्ये तृतीये सवत्सरेऽधिकमास पञ्चमे चेति द्वौ युगेऽभिवर्द्धित–सवत्सराविति । अथ युगे पर्व्वसङ्ख्या जिज्ञासु प्रतिवर्ष पर्व्वसङ्ख्या पृच्छति–'पढमस्स णमि'त्यादि सुगमम् । अथ द्वितीयस्य चन्द्रसवत्सरस्य पर्व्वाणि पृच्छति 'बितीयस्स णमि'त्यादि सुगमम् । अथ तृतीयेऽभिवर्द्धिते सवत्सरे पर्व्वाणि पृच्छति–'एव पुच्छे'त्यादि । एव प्रागुक्तप्रकारेण पृच्छा । भगवानाह–गौतम ! अभिवर्द्धिते त्रयोदशमासाऽऽत्मकत्वात् षड्विंशति पर्व्वाणि प्रज्ञप्तानि । अथ चतुर्थस्य चन्द्र-सवत्सरस्य पर्व्वाणि निर्वक्ति 'चउत्थस्से'त्यादि । चतुर्विंशति । 'पचमस्स णमि'त्यादि । प्राग्वत्–षड्-विंशति पर्व्वाणि । अथ सर्वसङ्ख्यामाह 'एवमेव'त्ति । सपूर्व्वाऽपरेण-पूर्व्वाऽपरगणितमीलनेन पञ्च-सवत्सरात्मके युगे चतुर्विंशत्यधिक पर्व्वशत प्रज्ञप्तम् । अथेह कस्मिन्नयने कस्मिन् वा मण्डले ? किं पर्व्व समाप्तिमुपयाति ? इति करणचिन्ताया, तथा किं पर्व्व ? कस्मिंन्नक्षत्रचन्द्रयोगे परिसमाप्तिमु-पयाति ?, कस्मिन् वा सूर्यमण्डले ?, किं पर्व्व समाप्तिमुपयाति ? इति करणचिन्ताया च तज्जिज्ञासु-भिर्ज्योतिष्करण्डकसूत्रे एकोनविंशतितमे प्राभृतके–'इच्छापव्वेहिं गुणमि'त्यादि करणगाथाना वृत्तिरव–लोकनीया । अथ निगमन माह–'से त्त'ति । स-एष युगसवत्सर । अथ प्रमाणसवत्सरविषय प्रश्नमाह-पमाणसवच्छरे णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह गौतम ! पञ्चविध प्रज्ञप्त । तद्यथा–'नक्खत्ते'त्ति । नक्षत्रसवत्सर । एव चन्द्रादयोऽपि वाच्या । तत्र नक्षत्रचन्द्राभिवर्द्धितसवत्सराणा स्वरूप प्रागभिहितम् । नवर प्राग् नक्षत्रमण्डलस्य चन्द्रभोगमात्र विवक्षितमिह तु दिनदिन भागादिप्रमाणमिति । एव चन्द्राऽभिवर्द्धितयोरपि प्राग् युगाऽवयवमात्रमिह तु प्रमाणमिति विशेष. । ऋतुसवत्सरस्तावदेवम्–ऋतवो लोकप्रसिद्धा वसन्तादय.-। तत्प्रधान. सवत्सर ऋतुसवत्सर ।-स च द्वे -घटिके एको मुहूर्त्त, त्रिंशन्मुहूर्त्ता अहोरात्र, पचदश परिपूर्णा अहोरात्रा पक्ष, द्वौ पक्षौ मासो, द्वादश मासा सवत्सरो, यस्मिश्च सवत्सरेऽहोरात्राणा परिपूर्णानि त्रीणि शतानि पञ्चाधिकानि भवन्ति-। एष ऋतुसवत्सर । अस्य चाऽपरमपि नामद्वय कर्म्मसवत्सर सावनसवत्सरश्चेति ज्ञेयम् । तत्र कर्म्म-लौकिको व्यवहार । यतो लौकिका त्रिंशतमहोरात्रान मास परिगणयन्ति । इत्थभूतमासद्वयात्मक वसन्तादिकमृतु, तथाभूताना च षण्णा वसन्तादीना समुदाय सवत्सर । यानि च लोके कर्म्माणि प्रवर्त्तन्ते तानि सर्व्वाण्यमु सवत्सर-मधिकृत्यैवेत्येष कर्म्मसवत्सर । तथा सावन-कर्म्मसु प्रेरण 'षूद प्रेरणे'-इतिवचनात् । तत्प्रधान सवत्सर सावनसवत्सर । तथा चोक्त

'वे नालिआ मुहुत्तो सट्ठिं पुण णालिआ अहोरत्तो । पण्णरस अहोरत्ता पक्खो तीस दिणा मासो ।३०।।
सवच्छरो उ बारस मासा पक्खा य ते चउव्वीस । तिण्णेव सया सट्ठा हवति राइदिआण तु ।। ३१ ।।

इअ एस कमो भणिओ णिअमा सवच्छरस्स कम्मस्स । कम्मोत्ति सावणोत्ति अ उउइत्तिअ तस्स नामाणि' ।। ३२ ।। इति ज्यो० । आदित्यसवत्सर –पुनर्यावता कालेन षडपि प्रावृडादय ऋतवः परिपूर्णा

आवृता भवन्ति तावान् कालविशेष आदित्यसंवत्सर । उक्तं च—'छप्पि उऊ परिअट्टा एसो संवच्छरो अ आइच्चो'त्ति । (ज्यो० गा० ३४) निगमनमाह-'से त्त'ति । स एष प्रमाणसंवत्सरः । अथ लक्षण-संवत्सरभेदान् प्रश्नयति—'लक्खणे'त्यादि । लक्षणसंवत्सरो भदन्त ! कतिविध प्रज्ञप्त. ? । भगवानाह गौतम ! पञ्चविध प्रज्ञप्त । तद्यथा—'समग नक्खत्तो'त्यादि । नक्षत्रसंवत्सरादयोऽनन्तरोक्ता एव गाथा पञ्चकेन वक्ष्यमाणलक्षणैरुपेता लक्षणसंवत्सरा भवन्तीति कृत्वा प्रथम नक्षत्रसंवत्सरस्य लक्षण यथा-'समग'ति । यस्मिन् संवत्सरे समकम् एवकारोऽध्याहार्यं । समकमेव-एककालमेव ऋतुभिः सहेति गम्यते नक्षत्राणि—उत्तराऽऽषाढादीनि योग युञ्जन्ति—चन्द्रेण सह योग युञ्जन्ति सन्ति ता ता पूर्णमासी समा-पयन्ति । तथा 'समग' उऊ'त्ति । समकमेव—एककालमेव तया तया परिसमाप्यमानया पौर्णमास्या सह ऋतवो निदाघाद्या परिणमन्ति—परिसमाप्तिमुपयान्ति । इयमत्र भावना—यस्मिन् संवत्सरे नक्षत्रैर्मास-सदृशनामकैस्तस्य तस्य ऋतो पर्यन्तवर्त्ती मास समाप्यते । तेषु च नक्षत्रेषु ता ता पूर्णमासी परिसमा-पयत्सु तया तया पौर्णमास्या सह ऋतवोऽपि निदाघादिका परिसमाप्तिमुपयान्ति । यथा उत्तराऽऽषाढा-नक्षत्रे आषाढी पौर्णमासी ऋतव परिसमापयन्ति । तथा आषाढपौर्णमास्या सह निदाघोऽपि ऋतुः परिसमाप्तिमुपैति । स नक्षत्रसंवत्सरः नक्षत्राऽनुरोधेन तस्य तस्य तथापरिणममानत्वात् । एतेन लक्षण-द्वयमभिहित द्रष्टव्यम्' । यद्वा-समक रामतया नक्षत्राणि कृत्तिकादीनि योग—कार्त्तिकपौर्णमास्यादि-तिथ्या सह सम्बन्ध योजयन्ति—कुर्वन्ति । इदमुक्त भवति—यानि नक्षत्राणि यासु तिथिषु उत्सर्गता भवन्ति यथा कार्त्तिक्या कृत्तिका । तानि तानि तास्वेव यत्र भवन्ति । यथोक्त

'जेट्ठो वच्चइ मूलेण सावणो घणिट्ठाहिं । अद्दासु अ मग्गसिरो सेसा नक्खत्तनामिआ मास'त्ति ।। यद्वा—यत्र समतयैव ऋतव परिणमति न विषमतया । कार्त्तिक्या अनन्तर हेमन्तर्त्तु पौष्या अनन्तर शिशिरर्त्तुरित्येवमवतरन्तीतिभावः । तथा 'णच्चुण्ह'त्ति । 'न विद्यतेऽतिशयेनोष्णमुष्णरूप परितापो यस्मिन् सो नात्युष्ण । तथा न विद्यते अतिशयेन शीत यत्र स नाऽतिशीत' । बहूदक यत्र स बहूदक । एवरूपै पञ्चभि समस्तैर्लक्षणैरुपेतो भवति, नक्षत्रसंवत्सर, एतै पञ्चभिर्लक्षणै पञ्चविधोऽप्यय-मेवोच्यते । यदागम'—'ता णक्खत्तसंवच्छरे पचविहे पण्णत्ते । त०—समग णक्खत्तो'त्यादि सूर्यप्रज्ञप्तौ प्रा १० प्रा.प्रा. २० । इह गाथायामष्टमोऽशक'पञ्च कलो गाथाछन्दसो वहुलत्वात् । स्थानाङ्गटीकाया तु-पञ्च माऽष्टमोवंशो पचकलावितीय विचित्रेति छन्दोविद्धिरूपदिश्यते इत्युक्त पर यथालिखितगाथाया पञ्चमो ऽशके पञ्चकलको न दृश्यते इति हृश्यम् । अथ चन्द्रसंवत्सरलक्षणमाह-'ससिसमगे'त्यादि । 'यस्मिन् संवत्सरे नक्षत्राणि विषमचारीणि-मासविसदृशनामानीत्यर्थ । शशिना समक योगमुपगतानि ता ता पौर्ण-मासी युञ्जन्ति-परिसमापयन्ति । यश्च कटुक शीताऽऽतपरोगादिदोषबहुलतया परिणामदारुणो बहूदकश्च तमाहुर्महर्षय संवत्सर चान्द्र —चन्द्रसम्बन्धिन चन्द्राऽनुरोधतस्तत्र मासाना परिसमाप्तिभावात् । न मास-सदृशनामकनक्षत्राऽनुरोधत ' । स्थानाङ्गे तु—'ससिसगलपुण्णमासी'ति पाठस्तद्वृत्तिश्चैव—'ससि'त्ति । विभक्तिलोपात् शशिना-चन्द्रेण सकलपौर्णमासो समस्तराका य संवत्सर इति गम्यते । योजयति । अथवा यत्र शशी सकला पौर्णमासी योजयति—आत्मना सम्बन्धयति तथा विषमचारीणि यथा स्वतिथिषु

अवर्त्तीनि नक्षत्राणि यत्र स विषमचारिनक्षत्र । तथा कटुकोऽतिशीतोष्णसद्भावात् । तमेवंविधमाहुर्लक्षणतो ब्रुवते तद्विद सवत्सर चान्द्र चन्द्रचारलक्षणलक्षितत्वात् । अथ कर्म्मसवत्सरलक्षणमाह— 'विषम-पवालिणो'इत्यादि । यस्मिन् सवत्सरे वनस्पतयो विषम-विषमकाल प्रवालिन परिणमन्ति । 'प्रवाल पल्लवाऽङ्कुर' इति तद्युक्ततया परिणमन्ति—अङ्कुरोद्भेदाद्यवस्था यान्ति । तथा अनृतुषु-अस्वकाल ददति-प्रयच्छन्ति पुष्पफलं । यथा चैत्रादिषु कुसुमादिदायिनोऽपि स्वरूपेण भूता माघादिषु पुष्पादि प्रयच्छन्ति । तथा वर्षं—वृष्टिमुदक वा न सम्यक् यस्मिन् सवत्सरे मेघो तमाहुर्महर्षय सवत्सर कार्मणं । तस्य च ऋतुसवत्सर सावनसवत्सरश्चेति द्वौ पर्यायौ । अथ सूर्यसवत्सरस्य लक्षणमाह— पुढविदगाण तिव'त्यादि । पृथिव्या उदकस्य पुष्पानां फलानां च रसमादित्यसवत्सरो ददाति । तथाऽल्पेनापि-स्तोकेनापि वर्षेण—वृष्ट्या सस्य निष्पद्यते—अन्तर्भूतण्यर्थत्वात् सस्य निष्पादयति । किमुक्त भवति—यस्मिन् सवत्सरे पृथिवी तथाविधोदकसम्पर्कादतीव सरसा भवति । उदकमपि परिणामसुन्दररसोपेत परिणमते। पुष्पानां च—मधूदकादिसम्बन्धिना फलाना च-चूतफलादीना रस प्रचुरो मधुरश्च सम्भवति, स्तोकेनापि वर्षेण सस्य—शाल्यादिधान्य सर्व्वत्र सम्यगभिमत निष्पद्यते तमादित्यसवत्सर लक्षणत उपदिशन्ति । अथाऽभिवर्द्धितसवत्सरस्य लक्षणमाह—'आई-चे'त्यादि । आदित्यतेजसा तप्ता पृथिव्यादितापेऽप्युपचारात् 'खणलवे'त्यादि । तत्र क्षणो-मुहूर्त्तो । लव-एकोनपञ्चाशदुच्छ्वासप्रमाण । दिवसोऽहोरात्र । तत इतरेतरद्वन्द्व । ऋतवो-मासद्वयप्रमाणा एते परिणमन्त्यतिक्रामन्ति यत्रेति गम्यते । यश्च सर्व्वाण्यपि निम्नस्थानानि स्थलानि च जलेन पूरयन्ति त सवत्सरमभिवर्द्धितमाहुः पूर्व्वर्षय इति जानीहि । अथ निगमनमाह—'से त्तमि'ति । स एष लक्षणसवत्सर इति । अथ शनैश्चरसवत्सर भेदत: प्रश्नयति—'सणिच्छरसवच्छरे णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! शनैश्चरसवत्सरोऽष्टाविंशतिविध' प्रज्ञप्त. । तद्यथा—'अभिइ'त्ति गाथा । 'जाव उत्तरासाढ'त्ति । यावदुत्तराऽऽषाढा । यावत्करणात् मृगशिर आर्द्रा-पुनर्वसु पुष्याऽश्लेषा मघा पूर्व्वफाल्गुनीउत्तरफाल्गुनी हस्त चित्रा स्वाति विशाखाऽनुराधा ज्येष्ठा मूल पूर्व्वाऽऽषाढाना सङ्ग्रह । शेष सुगमं । नवरमेतैर्नक्षत्रैरुपलक्षणभूतैर्विभक्त शनैश्चरसवत्सर । अय भाव —'यस्मिन् सवत्सरे अभिजिन्नक्षत्रेण सह शनैश्चरो योगमुपादत्ते सोऽभिजिच्छनैश्चरसवत्सर.' । एवं-श्रवणादिषु पूर्व्वाषाढपर्यन्तेषु परिभावनीयम् । 'अथ प्रकारान्तरमाह-'ज वा'इत्यादि । यद्वा-वाशब्द प्रकारान्तरोद्योतक । यत्सर्व्वं-समस्त नक्षत्रमडल शनैश्चरो महाग्रहस्त्रिंशता सवत्सरैः समानयति एतावान् कालविशेष त्रिंशद्वर्षप्रमाण शनैश्चरसवत्सर । निगमनमाह-'से त्तमि'त्यादि ।

अथाऽनन्तरप्रतिपादितानां सवत्सराणामेकैकस्मिन् सवत्सरे कति मासा भवन्ति ? इति पृच्छति—

**एगमेगस्स णं भंते ! संवच्छरस्स कइ मासा प० ? । गो० ! दुवालस मासा पण्णत्ता । तेसि णं दुविहा णामधेज्जा पण्णत्ता । तं०—लोइआ लोउत्तरिआ य । तत्थ लोइआ णाम । तं जहा-सावणे भद्दवए जाव आसाढे । लोउत्तरिए णामं । तं जहा —**

**अभिणंदिए पइट्ठे अ विजए पीइवद्धणे । सेअंसे सिवे चेव सिसिरे वि अ हेमवं ॥१॥**

णवमे वसंतमासे दसमे कुसुमसंभवे । 'इकारसे णिदाघे अ वणविरोही अ बारस' ॥२॥ एगमेगस्स णं भंते ! मासस्स कइ पक्खा पण्णत्ता ? । गो० ! दो पक्खा पण्णत्ता । तं०-बहुलपक्खे अ सुक्कपक्खे अ । एगमेगस्स णं भंते ! पक्खस्स कइ दिवसा पण्णत्ता ? । गो० ! पण्णरस दिवसा पण्णत्ता । तं०-पडिवा दिवसे,बिइआ दिवसे जाव पण्णरमी दिवसे । एतेसि णं भंते ! पण्णरसण्हं दिवसाणं कति णामधेज्जा पण्णत्ता ? । गो० ! पण्णरस नामधेज्जा पण्णत्ता तं०—

'पुव्वंगे सिद्धमणोरमे अ तत्तो अ मणोहरे चेव । जसभद्दे अ जसधरे सव्वकामसमिद्धे अ ॥१॥
इंदमुद्धाभिसित्ते अ सोमणसे धणंजए अ बोद्धव्वे । अत्थसिद्धे अभिजाए अच्चसणे सयंजए चेव ।२।

'अग्गिवेसे उवसमे दिवसाणं हुंति णाम धेज्जाइं' । एएसि णं भंते ! पण्णरसण्हं दिवसाणं कति तिथी पण्णत्ता ? । गो० ! पण्णरस तिही पण्णत्ता । तं जहा—णंदे भद्दे जये तुच्छे पुण्णे पक्खस्स पंचमी, पुणरवि णंदे भद्दे जए तुच्छे पुण्णे पक्खस्स दसमी, पुणरवि नंदे भद्दे जए तुच्छे पुण्णे पक्खस्स पण्णरमी । एवं एए तिगुणा तिहीओ सव्वेसिं दिवसाणं । एगमेगस्स णं भंते ! पक्खस्स कइ राईओ प० ? । गो० ! पण्णरस राईओ पण्णत्ताओ । त जहा—पडिवा राई जाव पण्णरसी राई । एतासि णं भंते ! पण्णरसण्हं राईणं कइ णामधेज्जा प० ? । गो० ! पण्णरस णामधेज्जा प० । तं०

उत्तमा य सुणक्खत्ता एलावच्चा जसोधरा । सोमणसा चेव तहा सिरिसंभूआ य बोद्धव्वा ।
विजया य वेजयंती जयंती अपराजिआ य इच्छा य । समाहारा चेव तहा तेआ तहेव अतितेआ ।

देवाणंदा निरती रयणीणं णामधेज्जाइं' । एआसि णं भंते ! पण्णरसण्हं राईणं कति तिही पण्णत्ता ? । गो० ! पण्णरस पण्णत्ता । तं०- उग्गवती भोगवती जसवती सव्वसिद्धा सुहणामा । पुणरवि उग्गवती भोगवती जसवती सव्वसिद्धा सुहणामा । पुणरवि उग्गवती भोगवती जसवती सव्वसिद्धा सुहणामा । एवं तिगुणा एए तिहीओ सव्वेसिं राईणं । एगमेगस्स णं भंते ! अहोरत्तस्स कई मुहुत्ता प० ? । गो० ! तीसं मुहुत्ता प० तं०-

रुद्दे-सेए मित्ते वाउ सुपीए तहेव अभिचदे । माहिंदे बलवंते बंभे बहुसच्चे चेव ईसाणे ॥१॥
सट्ठे अ भाविअप्पा वेसमणे दारुणे अ आणंदे । विजए अ वीससेणे पायावच्चे तह य उवसमे अ
गंधव्व अग्गिवेसे सयवसहे आतवं च अममं च । अणवं भोमे वसहे सव्वट्ठे रक्खसे इअ

एगमेगस्स णमि'त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! द्वादश मासा प्रज्ञप्ता । अथ के ते मासा ? इति शिष्याऽऽकाङ्क्षाया भगवानाह—'तेसि णमि'त्यादि । तेषा च द्वादशानामपि मासाना नामधेयानि द्विविधानि प्रज्ञप्तानि । तद्यथा—लौकिकानि लोकोत्तरिकाणि । तत्र लोके-जैनजनातिरिक्ते-ऽपि जनसमूहे । न केवल जैनप्रवचन एव । किन्तु तदितरेऽप्यपीत्यर्थं । प्रसिद्धानि लौकिकानि । न च जैनप्रसिद्धाना नाम्ना भिन्नत्वेन वक्ष्यमाणत्वात् लौकिकनामानि जैनानामप्रसिद्धानि ? इति शङ्कनीय । लोकप्रसिद्धाना नाम्ना सर्वज्ञमूलके जैनप्रवचने अप्रसिद्धत्वमिति वक्तुमप्यशक्यत्वात् । जैनानामपि लोकोत्तरमार्गाऽभ्युपगन्तृत्वेऽपि लोकान्तःपातित्वाच्च । 'लोउत्तरिअ'त्ति । लोकोत्तरे जैनप्रवचने एव प्रसिद्धानि लोकोत्तराणि-जैनव्यतिरिक्तानामप्रसिद्धानीत्यर्थं । अन्यथा द्वैविध्यव्याहतेरुभयोरपि साम्याऽऽपत्ते । यत्तु जैनप्रवचनवाह्येषु जैनाऽऽभासेषु बोटिकादिषु प्रसिद्धानि तत्ततो निर्गतत्वेन स्वस्मिन्ना-रोपितजैनव्यपदेशवत् तदाभासत्वेन तदनुवादमात्ररूपाणीति न किञ्चिच्चर्चनीय । तस्माल्लोकोत्तराणि नामानि न लोकप्रसिद्धानीति तात्पर्यं । तत्र लोकप्रसिद्धनामान्याह—'तत्थे' त्यादि व्यक्तम् । 'लोउत्तरिआ णाम' ति । लोकोत्तराणि नामानि । तद्यथा—अभिनादित चन्द्रप्रज्ञप्त्यादौ तु 'अहिणदिए' त्ति पाठस्त-त्राभिनन्दित इति प्रथमं नाम श्रावणमासस्य, भाद्रपदस्य सुप्रतिष्ठित इति नाम । एवमग्रेऽपि भावना कार्या । तृतीयो मासो विजय , चतुर्थ प्रीतिवर्द्धन , पञ्चम श्रेयान्, षष्ठ शिव , सप्तम शिशिरोऽष्टमो हिमवान्, नवमो वसन्तमास , दशम कुसुमसम्भव , एकादशो निदाघ , द्वादशो वनविरोधी चेति क्रमेणाश्वि-नादि नामभिर्योजनीयम् । अथ प्रतिमास कति पक्षा भवन्ति ? इति पृच्छति—'एगमेगस्स णमि' त्यादि प्रश्न सुगम. । भगवानाह—गौतम ! द्वौ पक्षौ प्रज्ञप्तौ । तयोश्च नामधेये गुणनिष्पन्ने इमे । तद्यथा-वहुलपक्ष शुक्लपक्षश्च । तत्र सूर्यास्तमनाऽनन्तर योऽन्धकारवहुल पक्ष स वहुलपक्ष । यस्तु ज्योत्स्नाधवलिततया शुक्ल पक्ष स शुक्लपक्ष । अथ प्रति पक्ष दिवससङ्ख्या पृच्छति—'एगमेगस्स णमि' त्यादि सुगमम् । अथ पञ्चदशानामपि दिवसाना नामानि पृच्छति—'एतेसि णमि' त्यादि प्रश्नादि सुगम । तद्यथा-पुव्वंग' त्ति । प्रथम प्रतिपल्लक्षणो दिवस पूर्वाङ्गनामा, द्वितीय सिद्धमनोरम , तृतीयो मनोहर , एव क्रमेण यशोभद्रो, यशोधर , सर्वकामसमृद्ध, इन्द्रमूर्द्धाऽभिषिक्त , सोमनसो, धनञ्जयोऽर्थसिद्धोऽभिजातो-ऽत्यशन , शतञ्जयोऽग्निवेश्म उपशमश्चेति नामधेयानि भवन्तीति । अथ पञ्चदशानामपि दिवसाना कति तिथयो भवन्ति ? इति पृच्छति—'एएसि णमि' त्यादि प्रश्न प्राग्वत् । भगवानाह—गौतम ! पञ्चदश तिथय प्रज्ञप्ता । एतत्प्रश्नविषये निदान त्वेवम्—इह हि तिथयो द्विधा भवन्ति । दिवसतिथयो रात्रि-तिथयश्च । तत्र यस्तिथे पूर्वभाग स दिवसतिथिरित्युच्यते । यस्तु तिथे पश्चिमो भाग स रात्रितिथि । तथा च सति पञ्चदश दिनाना मध्ये कति दिवसरूपास्तिथयो भवन्ति ? इति गौतमस्य प्रश्नावकाश । अथ तासा नामान्याह—तद्यथा- नद' त्ति । नन्दा नाम्नी प्रथमा दिवसतिथि द्वितीया भद्रा, तृतीया जया, चतुर्थी तुच्छा, पूर्णा पक्षस्य पञ्चमी । तत पुनरपि षष्ठी तिथिर्नन्दा, सप्तमी भद्रा, अष्टमी जया, नवमी तुच्छा पूर्णा पक्षस्य दशमी । तत पुनरपि एकादशी तिथिर्नन्दा, द्वादशी भद्रा त्रयोदशी जया चतु-

दशी तुच्छा, पूर्णा पक्षस्य पञ्चदशीति । एव 'एए' इत्यादि । एवमुक्तप्रकारेण एता. अनन्तरोदितास्तिथयो नन्दाद्या सर्व्वत्र स्त्रीत्वेऽपि पुस्त्वनिर्देश प्राकृतत्वात् । 'तिगुण' त्ति । त्रिगुणिता. नन्दा भद्रादिरूपेण त्रिगुणितनामान इत्यर्थ । केषा ? । सर्व्वेषा दिवसाना—सर्व्वपक्षसम्बन्धिना दिवसानामुक्तप्रकारेण तिथिनामानि वक्तव्यानीत्यर्थ । अथ यथा एकस्य पक्षस्य दिवसा—दिवसनामानि पूर्व्वार्द्धलक्षणास्तिथयश्च प्रश्नविषयीकृता । तथा रात्रि—रात्रिनामानि पश्चार्द्धभागलक्षणास्तिथीश्च क्रमेण प्रश्नविषयीकरोति—'एगमेगस्स णमि' त्यादि प्रश्न. सुगम । भगवानाह—गौतम ! पञ्च दशरात्रय प्रज्ञप्ता । तद्यथा-प्रतिपत्प्रथमा रात्रि यावत्पञ्चदशी रात्रि । यावत्करणात् द्वितीया रात्रिरित्यादिग्राह्यम् ।

'एतासि णमि' त्यादि । एतासा भदन्त ! पञ्चदशाना रात्रीणा कतिनामधेयानि प्रज्ञप्तानि ? । भगवानाह—गौतम ! पञ्चदश नामधेयानि प्रज्ञप्तानि । तद्यथेति प्राग्वत् । उत्तमा प्रथमा रात्रि, द्वितीया सुनक्षत्रा । एव क्रमेण एलापत्या, यशोधरा, सोमनसा, श्रीसभूता, विजया, वैजयन्ति, जयन्ती, पूर्व्वार्द्धलक्षणास्तिथयश्च प्रश्नविषयीकृता । तथा रात्रि रात्रिनामानि पश्चार्द्धभागलक्षणास्तिथीश्चक्रमेण प्रश्नविषयी करोति 'एगमेगस्स णमि' त्यादि प्रश्न सुगम । भगवानाह—गौतम ! पञ्चदशरात्रय प्रज्ञप्ता । तद्यथाप्रतिपत्प्रथमारात्रि यावत्पञ्चदशीरात्रि । यावत्करणात् द्वितीयारात्रिरित्यादिग्राह्यम् ।

'एतासि णमि' त्यादि । एतासां भदन्त ! पञ्चदशाना रात्रीणा कति नामधेयानि प्रज्ञप्तानि ? । भगवानाह-गौतम ! पञ्चदश नामधेयानि प्रज्ञप्तानि । तद्यथेति प्राग्वत् । उत्तमा प्रथमा रात्रि, द्वितीया सुनक्षत्रा । एव क्रमेण एलापत्या, यशोधरा, सोमनसा, श्रीसभूता, विजया, वैजयन्ति, जयन्ती, अपराजिता, इच्छा, समाहारा, तेजा, अतितेजा, देवानन्दा, निरतीति पञ्चदश्या एव द्वितीय नामेति । रजनीना नामधेयानीति सार्द्धश्लोकद्वयी । अथैतासा तिथी प्रश्नयति—'एआसि णमि' त्यादि । एतासा भदन्त ! पञ्चदशाना रात्रीणा कति तिथय—पश्चार्द्धभागरूपा रात्रितिथय प्रज्ञप्ता ? । भगवानाह—गौतम ! पञ्चदश प्रज्ञप्ता । तद्यथा-प्रथमा तिथिरुग्रवती, द्वितीया भोगवती, एव क्रमेण यशोमती, सर्व्वसिद्धा, शुभनामा, पुनरपि उग्रवती, भोगवती, यशोमती, सर्व्वसिद्धा, शुभनामा, पुनरपि उग्रवती, भोगवती, यशोमती, सर्व्वसिद्धा, शुभनामा चेति । 'एव तिगुण' त्ति । एवमुक्तप्रकारेण त्रिगुणा -त्रिगुणिता उग्रवत्यादिरूपेण त्रिगुणितनामान इत्यर्थ । एता अनन्तरोक्तनामानस्तिथय । 'सव्वेसिं' ति । सर्व्वासा—सर्व्वपक्षसम्बन्धिनीना रात्रीणा पुस्त्व प्राकृतत्वात् । अथैकस्याऽहोरात्रस्य मुहूर्त्तसङ्ख्या पृच्छति— एगमेगस्स णमि' त्यादि प्रश्न सुगम । भगवानाह—गौतम ! त्रिशन्मुहूर्त्ता वक्ष्यमाणनामधेया इति शेष । नामान्याह—'रुद्दे' त्यादि गाथात्रय । तत्र प्रथमो मुहूर्त्तो रुद्रो, द्वितीय श्रेयान् । एव क्रमेण मित्र, वायु सुपीतोऽभिचन्द्रो, माहेन्द्रो, बलवान्, ब्रह्मा, बहुसत्य , ईशान , त्वष्टा, भावितात्मा, वैश्रमणो, दारुण , आनन्दो, विजयो, विश्वसेन , प्राजापत्य , उपशमो, गन्धर्व्वोऽग्निवेश्य , शतवृषभ , आतपवान्, अमम , ऋणवान्, भौमो, वृषभ , सर्व्वार्थ , राक्षसश्चेति । सर्व्वत्रापि चकारा समुच्चये 'इअ' । इति एते उक्तनामानो मुहूर्त्ता एकस्याऽहोरात्रस्येति । प्राकृतत्वात् ह्रस्वता ।

अथ तिथिनिबद्धानि तिथ्यर्द्धरूपाणि करणानि कियन्ति ? इति पृच्छति–

कइ णं भंते ! करणा पण्णत्ता ? । गो० ! एक्कारस करणा प० । तं०–बवं, बालवं, कोलवं, थीविलोअणं, गराइं, वाणिज्जं, विट्ठी, सउणी, चउप्पयं, णागं, कित्थुग्घं । एतेसि णं भंते ! इक्कारसण्हं करणाणं कइ करणा चरा ? कइ करणा थिरा पं० ? । गो० ! सत्त करणा चरा । चत्तारि करणा थिरा पण्णत्ता । तं जहा–बवं, बालवं, कोलवं, थीविलोअणं, गरादि, वणिज्जं, विट्ठी । एते णं सत्त करणा चरा । चत्तारि करणा थिरा पं० । तं०–सउणी, चउप्पयं, णागं, कित्थुग्घं । एते णं चत्तारि करणा थिरा । एते णं भंते ! चरा थिरा वा कदा भवंति ? । गो० ! सुक्कपक्खस्स पडिवाए राओ बवे करणे भवति । बितिआए दिवा बालवे करणे भवति । राओ कोलवं करणे भवति । ततिआए दिवा थीविलोअणं करणं भवति । राओ गरादिं करणं भवति । चउत्थीए दिवा वणिज्जं । राओ विट्ठी । पंचमीए दिवा बवं । राओ बालवं । छट्ठीए दिवा कोलवं । राओ थीविलोअणं । सत्तमीए दिवा गरादिं । राओ वणिज्जं । अट्ठमीए दिवा विट्ठी । राओ बवं । णवमीए दिवा बालवं । राओ कोलवं । दसमीए दिवा थीविलोअणं । राओ गराइं । एक्कारसीए दिवा वणिज्जं । राओ विट्ठी । बारसीए दिवा बवं । राओ बालवं । तेरसीए दिवा कोलवं । राओ थीविलोअणं । चउद्दसीए दिवा गरादि करणं । राओ वणिज्जं । पुण्णिमाए दिवा विट्ठी करणं भवति । राओ बवं भवति । बहुलस्स पक्खस्स पडिवए दिवा बालवं । राओ कोलवं । बितिआए दिवा थीविलो–अणं । राओ गराइं । ततिआए दिवा वणिज्जं । राओ विट्ठी । चउत्थीए दिवा बवं । राओ बालवं । पंचमीए दिवा कोलवं । राओ थीविलोअणं । छट्ठीए दिवा गराइं । राओ वणिजं । सत्तमीए दिवा विट्ठी । राओ बवं । अट्ठमीए दिवा बालवं । राओ कोलवं । णवमीए दिवा थीविलोअणं । राओ गराइं । दसमीए दिवा वणिज्जं । राओ विट्ठी । एक्कारसीए दिवा बवं । राओ बालवं । बारसीए दिवा कोलवं । राओ थीविलोअणं । तेरसीए दिवा गरादि । राओ वणिज्जं । चउद्दसीए दिवा विट्ठी । राओ सउणिं । अमावसाए दिवा चउप्पयं । राओ णागं । सुक्क पक्खस्स पडिवाए दिवा कित्थुग्घं करणं भवति ।

'कइ णं भंते !' इत्यादि प्रश्न प्राग्वत् । भगवानाह–गौतम ! एकादश करणानि प्रज्ञप्तानि । तद्यथा–बव, बालवं, कौलव, स्त्रीविलोचन, गरादी, वणिज, विष्टि, शकुनी, चतुष्पद, नागं, किंस्तुघ्न

चेति । तत्र ज्योतिःशास्त्रेषु गरादिस्थाने गर, स्त्रीविलोचनस्थाने च तैतिलमिति । अथोक्तेषु करणेषु कति चराणि ? कति च स्थिराणि? इति प्रश्नयति-'एतेसि णमि' त्यादिप्रश्नः सुगम' । भगवानाह-गौतम ! सप्त करणानि चराणि । चत्वारि करणानि स्थिराणि प्रज्ञप्तानि । 'तद्यथे' त्यादि निर्व्वचन सुगमम् । अथैतानि चराणि स्थिराणि वा करणानि कस्मिन् काले भवन्ति ? इति पृच्छति-'एते णमि' त्यादि प्रश्न सुगम । भगवानाह-गौतम ! शुक्लस्य पक्षस्य प्रतिपदि 'राओ' त्ति । रात्रौ बव करणं भवति। द्वितीयाया दिवा बालव । रात्रौ कौलव । तृतीयाया दिवा स्त्रीविलोचन । रात्रौ गरादि । चतुर्थ्यां दिवा वणिज । रात्रौ विष्टि । पञ्चम्या दिवा बव । रात्रौ बालवमित्यादि । क्रमेण यावत् शुक्लपक्षस्य प्रतिपदि दिवा किंस्तुघ्न करण भवतीति पाठसिद्धमेव । नवर कृष्णचतुर्द्दश्या रात्रौ शकुनि । अमावास्याया दिवा चतुष्पद । रात्रौ नाग । शुक्लपक्षस्य प्रतिपदि दिवा किंस्तुघ्न चेति । चत्वारि करणानि स्थिराणि भवन्तीति ज्ञेयम् ।

अथ सवत्सरादीना नक्षत्रपर्यन्ताना नवानामप्यादि प्रश्नयति

**किमादिआ णं भंते ! संवच्छरा ? किमादिआ अयणा ? किमादिआ उऊ ? किमादिआ मासा ? किमादिआ पक्खा ? किमादिआ अहोरत्ता ? किमादिआ मुहुत्ता ? किमादिआ करणा ? किमादिआ णक्खत्ता पण्णत्ता ? । गो० ! चंदाइआ संवच्छरा । दक्खिणाइआ अयणा । पाउसाइआ उऊ । सावणादिआ मासा । बहुलादीआ पक्खा । दिवसादिआ अहोरत्ता । रुद्दादिआ मुहुत्ता । बालवादिआ करणा । अभिजिदाइआ णक्खत्ता पण्णत्ता समणाउसो ! । पंच संवच्छरिए णं भंते ! जुगे केवइआ अयणा ? केवइआ उऊ ? एवं मासा ? पक्खा ? अहोरत्ता ? केवइआ मुहुत्ता पण्णत्ता ? । गो० ! पच संवच्छरिए णं जुगे दस अयणा । तीसं उऊ । सट्ठी मासा । एगे वीसुत्तरे पक्खसए । अट्ठारस तीसा अहोरत्तसया चउप्पण्णं मुहुत्तसहस्सा नवसया पण्णत्ता ।**

'किमादिआ ण भते !' इत्यादि । किमादिका क-किनामाऽर्थात् सवत्सर आदौ येषा ते किमादिका सवत्सरा ?, किं किं नाम अयनमादौ ययोस्ते किमादिके अयने ?, एव किमादिका ऋतव ?, किमादिका मासा ?, किमादिकौ पक्षौ ? किमादिका अहोरात्रा ? प्रथम दिवा रजनी वेत्यर्थ । किमादिका मुहूर्त्ता ?, किमादिकानि करणानि ?, किमादिकानि नक्षत्राणि प्रज्ञप्तानि ? । भगवानाह-गौतम ! चन्द्रादिका सवत्सरा । दक्षिणादिके अयने । प्रावृडादिका ऋतव । श्रावणादयो मासा । बहुलादय पक्षा, कृष्णपक्षाद्या पक्षा इत्यर्थ । दिवसादिका अहोरात्रा । रौद्रादिका मुहूर्त्ता । बालवादिकानि करणानि । अभिजिदादिकानि नक्षत्राणि प्रज्ञप्तानि । हे श्रमण ! हे आयुष्मन् ! इति श्रोतुरुत्साहप्रवृद्ध्यर्थ

शिष्याऽऽमन्त्रणम् । इयमत्र भावना-यत्संवत्सरादिकमुत्सर्प्पिण्यवसर्पिणीयुगैः सह युगपत्समुदेति तदेव तज्जातीयानामादित्वेन विवक्षितम् । अत एवाह

'सावणबहुलपडिवए बालवकरणे अभीइणक्खत्ते । सव्वत्थ पढमसमए जुगस्स आइं वियाणाहि' त्ति ॥१॥ (ज्यो. गा ५५) । अन्यथा चन्द्रादिसंवत्सराणामाऽऽवृत्त्या समुदाये किं कस्यादिरुच्यते । तथा चोत्सर्प्पिण्या अवयवभूता सुषमासुषमादय कालविशेषा अवसर्पिण्या दुष्षमादुष्षमादयोऽवयवभूता' कालविशेषा प्रवचने प्रतीता तेषा चादिर्युग युगस्यादि समयेन सह प्रवृत्तेरन्त्यसमयेन सह निवृत्तेश्च । एवं श्रावणमास-कृष्णपक्षप्रतिपत्तिथि-बालवकरण-चन्द्रसंयुक्ताभिजिन्नक्षत्राणामपि प्रवृत्तिनिवृत्ती युगस्यादि समयेन सहाऽवसातव्ये । यदुक्त सूर्यप्रज्ञप्ति (प्रा १० प्रा प्रा १) वृत्तौ- 'इह सर्व्वेषामपि सुषमासुषमादिरूपाणां कालविशेषाणामादिर्युगम्-'एए उ सुसमसुसमादओ अद्धाविसेसा जुगादिणा सहपवट्टंति जुगंतेण सह समप्पेंति' त्ति । पादलिप्तसूरिवचनप्रामाण्यात् । युगस्य चाऽऽदि प्रवर्त्तते श्रावणमासे बहुलपक्षे प्रतिपदि तिथौ बालवकरणे अभिजिन्नक्षत्रे चन्द्रेण सह योगमुपागच्छति । च चोक्त ज्योतिष्करण्डके

'सावणबहुलपडिवए बालवकरणे अभिइणक्खत्ते । सव्वत्थ पढमसमए जुगस्स आइं वियाणाहि' त्ति ॥५५॥ । "इह 'सव्वत्थ' त्ति । सर्व्वत्र भरतैरावतमहाविदेहेषु" । श्रावणमासे बहुलपक्षे-कृष्णपक्षे इत्यर्थ । प्रतिपदि तिथौ बालवकरणे अभिजिन्नक्षत्रे प्रथमसमये युगस्यादि विजानीहि । किमुक्त भवति- "एतावद्युगस्यादौ सर्व्वेष्वपि क्षेत्रेषु अव्यभिचारि" । यतो यद्यपि सुषमासुषमादिकालविशेषा महाविदेहे न सन्ति, उत्सर्प्पिण्याद्यभावात् । तथापि युगस्य-चन्द्र-चन्द्र-अभिवर्द्धित-चन्द्र-अभिवर्द्धितसंवत्सरात्मकस्य सद्भावात् । तस्मात्सर्व्वेषामपि कालविशेषाणामादौ चन्द्रसंवत्सरादीनामभिजिन्नक्षत्रपर्यन्तानामादिरेव द्रष्टव्य । युगस्याप्यादिभूतस्य संवत्सरस्यैव सद्भावात् । एवं संवत्सरस्याऽप्यादिर्मासो मासस्याप्यादि पक्ष' पक्षस्याप्यादिर्दिवस, स च भरतैरावतयोरेव । महाविदेहेषु तु रात्रिरेवादिभूताऽवसातव्या । उक्त च ज्योतिष्करण्डके

'आदी जुगस्स संवच्छरो उ मासस्स अद्धमासो उ । दिवसो भरहेरवए राई अ विदेहवासेसु ॥१॥ त्ति (ज्यो गा ५२) एतद्वृत्तिर्यथा-'युगस्य-चन्द्रचन्द्राऽभिवर्द्धित चन्द्राऽभिवर्द्धित रूपसंवत्सरपञ्चकात्मकस्यादि संवत्सर । स च चान्द्रस्तन्मासाद्येव युगस्य प्रवर्त्तनात् । तस्य च चान्द्रस्य संवत्सरस्यादिर्मास. स च श्रावण । यत आषाढपौर्णमासीचरमसमय पाश्चात्ययुगस्य पर्यवसान । ततोऽभिनवयुगस्यादिर्मास प्रवर्त्तमान श्रावण एव भवति । तस्यापि च मासस्यादिरर्द्धमास-पक्ष, पक्षद्वयमीलने मासस्य भावात् । सोऽपि च पक्षो-बहुलो वेदितव्य । पौर्णमास्यनन्तर बहुलपक्षस्यैव भावात् । तस्यापि च बहुलस्यार्द्धमासस्यादिर्भरतैरावतयोर्दिवसो महाविदेहेषु च रात्रि । तथाहि-आषाढपौर्णमासीरात्र्यनन्तरमस्मिन् भरतक्षेत्रे युगस्यादि प्रवर्त्तते । ततो दिवस एव पक्षादिरुपपद्यते । यदा च भरतक्षेत्रे दिवसस्तदैवैरवतेऽपि दिवस । तदा च पूर्व्वविदेहेषु अपरविदेहेषु च (रात्रिरत ऐरवतेऽप्यर्द्धमासस्यादिर्दिवसो महाविदेहेषु) रात्रिरिति । नवरमिह

प्रावट्ऋतौ पूर्वार्द्धेऽतिक्रान्ते युगस्य प्रथमसमयो वेदितव्य । उक्तं च ज्योतिष्करण्डकवृत्तौ—'इह सूर्यर्त्तु-चिन्ताया मासा आषाढादयो द्रष्टव्या । आषाढमासादारभ्य ऋतुना प्रथमत प्रवर्त्तनात्' । न चैव यत्सर्वे-त्सरादिकमुत्सर्पिण्यवसर्पिणीयुगै सह युगपत्समुदेति । तदेव तज्जातीयेषु आदित्वेन विवक्षितमिति यदुक्त तद्व्यभिचरितम् ? इति शङ्कनीय । विशेषचिन्ताया तदतिरिक्तस्थल एव पर्यवसानात् । यद्वा-सामान्यत उक्तस्वरूपेऽपि न किञ्चिदनुपपन्न । प्रावट्ऋतौ पूर्वार्द्धेऽतिक्रान्तेऽपि तेन सह प्रवर्त्तमानत्वाऽविरोधात् । ऋतूना मध्ये प्रावृटा ऋतुना सहैव प्रवर्त्तनात् । ननु किमादिका उत्सर्पिण्य ? किमादिका अवसर्पिण्य ? किमादिकानि युगानि ? इति कथ न प्रश्नविषयीकृतानि ? । इति चेत् ।, उच्यते—उत्सर्पिण्यादीनामे-कव्यक्तिकत्वेन किं कस्याऽऽदि ? इति वक्तुमप्यशक्यत्वात् । नहि 'स्कन्धमारुह्य कश्चिद् व्रजती' ति न्यायात् प्रश्नोत्थानस्याऽप्यनवकाशात् । नन्वेव तर्हि अहोरात्रस्याऽप्येकव्यक्तिकत्वेन किमादिका अहोरात्रा ? इत्यादि प्रश्नाऽनुपपत्ति प्रसज्येत ? इति चेत् । मैवम्, अहोरात्रस्याऽप्येकव्यक्तिकत्वेऽपि दिवसरात्रिभ्या-मन्योऽन्यविलक्षणाभ्या विभागद्वय विचिन्त्य सुषमादुष्पमादिकालविशेषस्य युगस्य च प्रथमसमये दिवसो वा रात्रिर्वा समुदेतीति प्रश्नावकाशस्य सुकरत्वात् । अथैकैकस्मिन् सवत्सरे कत्ययनादीनि प्रज्ञप्तानि ? इति प्रश्नयति—'पच सवच्छरिए णमि' त्यादि । पञ्च सावत्सरिके भदन्त ! युगे कियन्ति अयनानि ? कियन्त ऋतव ? । एव मासा ?, पक्षा ?, अहोरात्रा ?, कियन्तो मुहूर्ता प्रज्ञप्ता ? । भगवानाह—गौतम ! पञ्च सावत्सरिके युगे दशायनानि, प्रतिवर्षद्वयोरयनयो सद्भावात् । त्रिंशदृतव —प्रतिवर्ष षण्णाम् ऋतूना-सद्भावात् । षष्टिर्मासा –प्रतिवर्ष द्वादशाना मासाना सद्भावात् । एक विंशत्युत्तर च पक्षशत, प्रतिवर्ष चतुर्विंशते पक्षाणा सद्भावात् । ननु युगे पर्व्वाणि चतुर्विंशत्यधिक शत भणितानि । पक्षास्त्विह विंशत्य-धिक शतमिति पर्व्व–पक्षयो क प्रतिविशेष ? । इति चेत् । उच्यते, पर्व्वाणि तावन्पूर्णिमाऽमावास्यातिथि लक्षणानि कालपर्वाणि । पक्षास्तु कृष्ण–शुक्लपक्षनामानोऽर्द्धमासात्मका इति महान् विशेष । सङ्ख्या-वैपम्य तु अभिवर्द्धितेऽपि वर्षे 'आसाढे मासदुपया' इत्यादौ सूर्यचारस्य तदवस्थानात्, मासप्रतिबद्धनियत-कृत्येषु लाग्निकादिशुभकृत्येषु चानुपयोगित्वात्, श्रावणादीना मासनाम्ना द्वादशानामेव सद्भावाच्च, सन्ता-वपि मासौ मासगणनाया न विवक्षितौ । तदनुरोधेन पक्षौ अपीति । यत्तु प्रवचने-'पर्व्वपर्यायोऽपि पक्ष' इति तत्तदेकदेशे समुदायोपचारादेव । न च मासपक्षादीना सङ्ख्यानियम सूर्यसंवत्सराऽपेक्षया भविष्य-ति ? इति शङ्कनीय । तत्राऽपि कृष्णादीना पक्षाणा पर्व्वसमानसङ्ख्याकत्वादिति । 'अट्ठारसे' त्यादि । अष्टादश त्रिंशदधिकानि शतानि १८३० अहोरात्रा । तथाहि—युगे त्रयश्चन्द्रसंवत्सरा, द्वौ चाऽभिवर्द्धित-सवत्सरौ । तत्र चान्द्रसवत्सरे चैकस्मिन् अहोरात्राणा त्रीणि शतानि चतुष्पञ्चाशदधिकानि द्वादश च द्वा-षष्टिभागा अहोरात्रस्य ३५४–१२/६२ । तत एतत्त्रिभिर्गुण्यते जातान्यहोरात्राणा दश शतानि द्वाषष्ट्यधि-कानि षट्त्रिंशच्च द्वाषष्टिभागा अहोरात्रस्य १०६२–३६/६२ । अभिवर्द्धितसवत्सरे च एकैकस्मिन् अहो-रात्राणा त्रीणि शतानि त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च द्वाषष्टिभागा अहोरात्रस्य ३८३–४४/६२ । एतदद्वाभ्या गुण्यते जातानि सप्त शतानि षट्षष्ट्यधिकानि, अष्टाशीतिश्च द्वाषष्टि भागा अहोरात्रस्य ७६६-

८८/६२ प्राक्तनाश्च षट्त्रिंशत् द्वाषष्टिभागा अष्टाशीतौ प्रक्षिप्यन्ते। जातं चतुर्विंशत्यधिकं शतं। तस्य द्वाषष्ट्या भागे हृते द्वावहोरात्रौ तौ च पूर्वेषु अहोरात्रेषु प्रक्षिप्येते। ततः सर्वसङ्कलनया जातं यथोक्तमानम् १८३०। एतावन्तो युगे अहोरात्राः। तथा 'चउप्पण्णं' ति। चतुष्पञ्चाशन्मुहूर्त्तानां सहस्राणि नव च शतानि ५४९००। एकैकस्मिन्नहोरात्रे त्रिंशतो मुहूर्तानां सद्भावात्।

अथ चन्द्रसूर्यावावलिकादि काल-क्रमेण नियतचारिणौ, शेषास्तु भौमादयोऽतिचारादिभिर्हेतुभूतैरनियतचारिणो नक्षत्रैः सह सम्बन्धेनैव मनुजानां शुभफलहेतवो भवन्ति। ततः सविस्तरं नक्षत्रस्वरूपं जिज्ञासुः प्रश्नविषयीकरिष्यमाणानामर्थानां द्वाराणि गाथयाह

**जोगो देवयतारग्गगोत्तसंठाणचंदरविजोगो। कुलपुण्णिमावमंसा य सण्णिवाए अ णेता य ॥१॥ कइ णं भंते! णक्खत्ता प०? । गो०! अट्ठावीसं णक्खत्ता पण्णत्ता। तं०—अभिई, सवणो, धणिट्ठा, सयभिसया, पुव्वभद्दवया, उत्तरभद्दवया, रेवई, अस्सिणि, भरणी, कत्तिआ, रोहिणी, मिगसिर, अद्दा, पुणव्वसु, पुस्सं, अस्सेसा, मघा, पुव्वफग्गुणि, उत्तरफग्गुणि, हत्थो, चित्ता, साति, विसाहा, अणुराहा, जेट्ठा, मूले, पुव्वासाढा, उत्तरासाढा ॥**

'जोगो देवये' त्यादि। योगा-सुषमासुषमादिकालविशेषाणामाद्यसमये किं नक्षत्रं चन्द्रयोगि स्याद्? इत्येवरूपेण सम्बन्धः। तथा कानि नक्षत्राणि चन्द्रस्य दक्षिणोत्तर-प्रमर्द्दयोगिनि? इत्यादि विचारप्रतिबद्धं प्रथमं द्वारं। तथाऽष्टाविंशतेर्नक्षत्राणां मध्ये कस्य नक्षत्रस्य का देवता? इति द्वितीयं। किंनक्षत्रं कति तारात्मकम्? इति तृतीयं। कस्य नक्षत्रस्य किं गोत्रम्? इति चतुर्थं। नक्षत्राणां संस्थानानि कीदृशानि? इति पञ्चमं। चन्द्रेण सूर्येण वा किं नक्षत्रं कति मुहूर्त्तयोगी? इति षष्ठं। कियन्ति नक्षत्राणि कुलानि, उपलक्षणादुपकुलानि, कुलोपकुलानि, च? इति सप्तमं। कति पौर्णमास्योऽमावास्यो च? इत्यष्टमं। 'सण्णिवाए' त्ति। सन्निपात-चन्द्रयोगमधिकृत्य पौर्णमास्यमावास्यानां सम्बन्धः। स च श्रावणादिमासषट्कस्य पौर्णमासीनां, माघादिमासषट्कस्य चाऽमावास्यानां, तथा माघादिमासषट्कस्य पौर्णमासीनां, श्रावणादिमासषट्कस्य चाऽमावास्यानां च परस्परं नक्षत्रनियमोऽवसातव्य इति नवमं। कति नक्षत्राणि स्वयमस्तगमनेनाहोरात्रपरिसमाप्त्या कं मासं नयन्ति? इति नेतृणीतिदशमं। चकारः समुच्चये अन्तरावक्ष्यमाणप्रश्नान्तरसूचको वा वेदितव्य इतिद्वारगाथासमासार्थः। यत्तु सङ्ग्राहिणीगाथाया छाया वक्ष्यते सा च नेतृद्वारान्तर्गताऽवसातव्या। तस्याः पृथक्द्वारतया वक्ष्यमाणत्वाऽभावात्। न चाऽग्रे सङ्ग्राहिणीगाथाया वक्ष्यमाणत्वेनेयं द्वारगाथाऽधिका? इति शङ्कनीयं। बहुवक्तव्यत्वेन शिष्योत्साहप्रवृद्धचर्यमादौ द्वारगाथाया युक्तत्वात्। अथ 'यथोद्देशं निर्देशः' इति न्यायात् प्रथमं योगं जिज्ञासुः योगगर्भां नक्षसङ्ख्यां पृच्छति-'कइ णमि' त्यादि प्रश्ननिर्वचने सुगमे। अत्र योगगर्भता त्वेवम्-अभिजिदादिनक्षत्रभणनेन सुषमासुषमादेराद्ये समयेऽभिजिन्नक्षत्रेण सह चन्द्रस्य सम्बन्धः सूचितः। अन्यथा

नक्षत्रमालाया मण्डलगत्या परिभ्रमणेऽमुक नक्षत्र सर्व्वेषामादिभूतमिति वक्तुमप्यशक्यमिति । अय भाव –यद्यप्यन्यतीर्थिका सुषमासुषमादिकालविशेषाणा नाम्नापि परिज्ञानशून्या. । तथापि नाम्ना युगस्य कालविशेषस्यादिं ब्रुवाणा चन्द्रनक्षत्रयोर्योगमधिकृत्य पञ्च विप्रतिपत्तारो भवन्ति । तथाहि–केचिदन्य-तीर्थिका कृत्तिकादीनि भरणीपर्यन्तानि नक्षत्राणि ब्रुवन्ति । तत्र तेषामयमाशय.–कालविशेषस्य युगस्य प्रथमसमये कृत्तिका नक्षत्रमुदेति समाप्तिश्च युगस्य भरणीनक्षत्रस्यान्त्यसमयेन । एवमपरे केचित् मघा-दीन्यश्लेषापर्यवसानानि । केचिद्धनिष्ठादीनि श्रवणपर्यवसानानि । केचिदश्विन्यादीनि रेवतीपर्यवसानानि । केचिद्भरण्यादीन्यश्विनीपर्यवसानानि वदन्तीत्यर्थ । तेषा च प्रावादुकाना मतनिराकरणाय गौतमेन प्रश्ने-कृते भगवता अभिजिदादीनि नक्षत्राणि निरुक्तानीतिभाव ।

अथ नक्षत्राणा दिग्विभागेन चारमधिकृत्य चन्द्रेण सह योग साक्षादेव प्रश्नयति

**एतेसि णं भंते ! अट्ठावीसाए णक्खत्ताणं कयरे णक्खत्ता जे णं सदा चंदस्स दाहि-णेणं जोगं जोएंति ?, कयरे णक्खत्ता जे णं सदा चंदस्स उत्तरेणं जोगं जोएंति ?, कयरे णक्खत्ता जे णं णक्खत्ता चंदस्स दाहिणेण वि उत्तरेण वि पमद्दंपि जोगं जोएंति ?, कयरे णं णक्खत्ता जे णं णक्खत्ता चंदस्स दाहिणेण वि पमद्दंपि जोगं जोएंति ?, कयरे णं णक्खत्ते जे णं णक्खत्ता सदा चंदस्स पमद्दं जोगं जोएंति ? । गो० ! एएसि णं अट्ठावी-साए णक्खत्ताणं तत्थ णं जे ते णक्खत्ता सदा चंदस्स दाहिणेणं जोगं जोएंति ते णं छ । तं०–संठाण अद्द पुस्सोसिलेस हत्थो तहेव च मूले अ । बाहिरओ बाहिरमंडलस्स छप्पेते णक्खत्ता । तत्थ णं जे ते णक्खत्ता सदा चंदस्स उत्तरेणं जोएंति ते णं बारस । तं०–अभिई, सवणो, धणिट्ठा, सयभिसया, पुव्वभद्दवया, उत्तराभद्दवया, रेवई, अस्सिणि, भरणी पुव्व-फग्गुणी, उत्तरफग्गुणी, साई । तत्थ णं जे ते णक्खत्ता जे णं सदा चंदस्स दाहिणेणं वि उत्तरेण वि पमद्दंपि जोगं जोएंति ते णं सत्त । तं०–कत्तिआ, रोहिणी, पुणव्वसु, मघा. चित्ता, विसाहा, अणुराहा । तत्थ णं जे ते णक्खत्ता दाहिणओ वि पमद्दं च जोगं जोएंति ताओ णं दुवे आसाढाओ सव्वबाहिरे मंडले जोगं जोइंसु वा । तत्थ णं जे ते णक्खत्ते जे णं णक्खत्ते सदा चंदस्स पमद्दं जोएंति सा णं एगा जेट्ठा ।**

'एतेसि णमि' त्यादि । एतेषा भदन्त ! अष्टाविंशतेर्नक्षत्राणा मध्ये कतराणि–कियन्ति किना-मानि च नक्षत्राणि यानि णमित्यलङ्कारे । सदा चन्द्रस्य दक्षिणेन–दक्षिणस्या दिशि व्यवस्थितानि योग युञ्जन्ति–कुर्व्वन्ति ? । दक्षिणदिग्व्यवस्थितान्युत्तरदिग्स्थितेन चन्द्रेण सह योगमनुभवन्तीत्यर्थ । तथा

कतराणि नक्षत्राणि यानि सदा चन्द्रस्योत्तरेणोत्तरस्या दिशि व्यवस्थितानि योग युञ्जन्ति ?। तथा कतराणि नक्षत्राणि यानि सदा दक्षिणस्यामपि दिशि स्थितानि उत्तरस्यामपि दिशि स्थितानि प्रमर्द्द-मपि-प्रमर्द्दरूपमपि च योगं युञ्जन्ति ?। तथा कतराणि नक्षत्राणि यानि नक्षत्राणि दक्षिणस्यामपि दिशि व्यवस्थितानि प्रमर्द्दमपि च योग युञ्जन्ति ?। तथा कतरन्नक्षत्र यन्नक्षत्र सदा चन्द्रस्य प्रमर्द्दरूपम् एवकारोऽध्याहार्यस्तेन प्रमर्द्दरूपमेव योग युनक्ति ? प्रमर्द्दयोगस्वरूप तु तृतीयप्रश्ननिर्व्वचनव्याख्याऽवसरे वक्ष्याम इति योगविपयेऽविच्छित्त्या प्रश्नपञ्चकम् । अथ भगवानाह-गौतम ! एतेपामष्टाविंशतेर्नक्ष-त्राणा 'तत्थ' त्ति । तत्र यानि यानि नक्षत्राणि सदा चन्द्रस्य दक्षिणस्या दिशि व्यवस्थितानि योग युञ्जन्ति तानि णमित्यलङ्कारे । 'छ' त्ति । षट् । तद्यथा-'संठाणे' त्यादि । गाथापूर्व्वार्द्धं स्पष्ट । नवर संस्थानं-मृगशिर । उत्तरार्द्धेन हेतुमाह 'बाहिरे' त्यादि । षडप्येतानि नक्षत्राणि बाह्यमण्डलस्य-पञ्चदशस्य चन्द्र-मण्डलस्य 'बहिरि' ति । बहि स्थितानि चार चरन्ति । तथा चोक्त करणविभावनाया-'पण्णरसस्स चद-मडलस्स बाहिरओ मिगसिर, अद्दा, पुस्सो, असिलेसा, हत्थ, मूलो' त्ति । तत सदैव दक्षिणदिग्-व्यवस्थितान्येवैतानि चन्द्रेण सह योग युञ्जन्ति-उपपद्यन्ते, नाऽन्यथेति प्रथमप्रश्ननिर्व्वचनं । 'तत्थ ण जे ते' इत्यादि । तत्र तेपामष्टाविंशतिनक्षत्राणा मध्ये ण प्राग्वत् । यानि तानि नक्षत्राणि सदा चन्द्रस्योत्तरे-णोत्तरस्या दिशि व्यवस्थितानि योग युञ्जन्ति तानि द्वादश । तद्यथा-अभिई, सवणो इत्यादि नामानि प्रतीतानि । एतानि द्वादशाऽपि नक्षत्राणि सर्व्वाऽभ्यन्तरे चन्द्रमण्डले चार चरन्ति । तथा चोक्त करण-विभावनाया-'से पढमे सव्वब्भतरे चदमडले णक्खत्ता इमे त०-अभिई, सवणे इत्यादि । यदा च तै सह चन्द्रस्य योगस्तदा स्वभावाच्चन्द्र शेपेष्वेव मण्डलेषु वर्त्तते । तत सदैवैतानि उत्तरदिग्व्यवस्थितान्येव चन्द्रमसा सह योगमुपयान्तीति । ननु सर्व्वाऽभ्यन्तरमण्डलादतिरिक्तेष्वेव मण्डलेषु वर्त्तमानेन चन्द्रमसा सह सर्व्वाऽभ्यन्तरमण्डलवर्त्तीन्येव नक्षत्राणि योगमुपयान्ति । तत्र योग किमुच्यते ? इति चेत् । उच्यते-नक्षत्रसीमावर्तिना चन्द्रेण सह नक्षत्राणा सम्बन्धो योग । तत्र नक्षत्रसीमा तावदायामविष्कम्भाभ्या विचार्यमाणा आयामत सर्व्वेषामपि नक्षत्राणा दक्षिणोत्तरतो दशोत्तराणि पञ्च योजनशतप्रमाणा समानैव । विष्कम्भतस्तु नक्षत्रसीमान्तर्वर्त्ती चन्द्रावस्थानकालहेतुकाऽनेकप्रकारा । तथाहि-अष्टाविंशति-नक्षत्राणां मध्ये ज्येष्ठाऽऽर्द्रा स्वात्य-श्लेषा-भरणी-शतभिपक्नामानि पट् नक्षत्राणि पञ्चदश मौहूर्त्ति-कानि । विशाखा-पुनर्वसु-रोहिण्यु-त्तरफाल्गुन्यु-त्तरापाढो-त्तरभाद्रपदनामानि पट् नक्षत्राणि पञ्च चत्वारिंशन्मौहूर्त्तिकानि । अश्विनी-कृत्तिका मृगशिर-पुष्य-मघा-पूर्व्वफाल्गुनी-हस्त-चित्रा-ऽनुराधा-मूल-पूर्वाषाढा-श्रवण-धनिष्ठा-पूर्व्वभाद्रपद-रेवतीनामानि पञ्चदश नक्षत्राणि त्रिंशन्मौहूर्त्तिकानि । एक चाभिजिन्नक्षत्र सातिरेकनवमौहूर्त्तिकम् । एवं भागकरणे निदान त्वेव यन्नक्षत्रसमाश्रितश्चन्द्र पञ्चदश मुहूर्त्तगन्तव्यक्षेत्राऽतिक्रमेऽपरनक्षत्रसीमानमाश्रयति तन्नक्षत्र चन्द्रयोगि सत् पञ्चदश मौहूर्त्तिक भण्यते । न पुन पञ्चदश मुहूर्त्तैर्मण्डलपरिभ्रम्या निजमण्डलक्षेत्र समापयति । एव यन्नक्षत्रसीमान्तर्वर्त्ती चन्द्रस्त्रिं-शन्मुहूर्त्तगन्तव्यक्षेत्रमतिक्रम्याऽपरनक्षत्रसीमानमाश्रयति तन्नक्षत्र त्रिंशन्मौहूर्त्तिकम् । एव पञ्चत्रिंशन्मौ-

हूर्त्तिकमपि परिभावनीय । यत्तु सातिरेकनवमौहूर्त्तिकमभिजिन्नक्षत्र तत्र तावत्कालगन्तव्यक्षेत्रमतिक्रम्य चन्द्रोऽपरनक्षत्रसीमानमाश्रयति । तेनाऽभिजिन्नक्षत्रस्य सीमाविष्कम्भ सर्व्वलघु । तस्य चन्द्रयोगयोग्य-पूर्व्वाऽपरसीमापरिच्छिन्न क्षेत्रपरिमाण अष्टानवति शताधिकैकलक्ष १०९८०० भागाना षट् शतानि त्रिंश-दधिकानि । कथमेतदवसीयते ? इति चेत् । उच्यते-इहाभिजित सप्तषष्टि खण्डीकृतस्याऽहोरात्रगम्यस्य क्षेत्रस्य सत्का एक विंशतिभागाश्चन्द्रयोगयोग्या । एवविधैर्नैकेन भागेन चन्द्रो निजमण्डल परिधेस्त्रिशतो-ऽष्टनवतिशताधिकैकलक्षतमान् भागानतिक्रामति । अत एकैकस्मिन् भागेत्रिंशद्भागपरिकल्पनादेकविंशति-स्त्रिशता गुण्यते । जातानि षट् शतानि त्रिंशदधिकानि । एष चाऽभिजिन्नक्षत्रस्य सीमाविष्कम्भ शेष-नक्षत्रसीमाऽपेक्षया लघु । एव शेषनक्षत्राणामपि सीमाविष्कम्भोऽत्रसातव्य । विस्तरार्थिना तु ज्योतिष्क-रण्डकसूत्रवृत्तिरवलोकनीयेति द्वितीयप्रश्ननिर्व्वचनम् । 'तत्थ ण जे ते' इत्यादि तत्र तेषामष्टाविंशति-नक्षत्राणा मध्ये यानि नक्षत्राणि यानि चन्द्रस्य दक्षिणस्यामपि दिशि स्थितानि योग युञ्जन्ति । उत्तर-स्यामपि दिशि व्यवस्थितानि योग युञ्जन्ति । प्रमर्द्दमपियोग युञ्जन्ति । तत्र प्रमर्द्दयोगस्तावदेव-यन्न-क्षत्र चन्द्रस्य न दक्षिणतो नाऽप्युत्तरत, किन्तु कदाचित्प्राग् पुरतो वा निजनिजमण्डल एव चारिणा स्वासीमान्तस्थेन चन्द्रेण सह योगि स्यात्तस्य नक्षत्रस्य यश्चन्द्रयोग स प्रमर्द्दनामा योगो भण्यते । तमपि युञ्जन्ति तानि सप्त । तद्यथा-'कत्तिआ' इत्यादि व्यक्तम् । एतेषा सम्बन्धस्त्वेवम्-एतानि नक्षत्राणि चन्द्रस्य मध्यमण्डलवर्त्तीनि तेनैतेभ्यो नक्षत्रेभ्यो यदा चन्द्रो दक्षिणमण्डलचारी तदा चन्द्रेण सहोत्तर-योगीनि, यदा तेभ्य उत्तरमण्डलचारी तदा दक्षिणयोगीनि । यदा कदाचिन्नक्षत्रमण्डलमध्यचारी तदा तान्युभयसम्बन्धविकलानि तृतीयप्रमर्द्दयोगयोगीनीति । केचित्पुनर्ज्येष्ठानक्षत्रमपि दक्षिणोत्तरप्रमर्द्दयोगि मन्यन्ते । तथा चोक्त लोकश्रिया-'पुणव्वसु-रोहिणी-चित्ता-मह-जिट्ठा-ऽणुराह-कत्तिअविसाहा चद उभय-जोगी' ति । एतट्टीकायाम् । एतानि नक्षत्राणि उभययोगीनि चन्द्रस्योत्तरेण दक्षिणेन च युज्यन्ते कदा-चित भेदमुपयान्तीति । तच्च वेक्ष्यमाणज्येष्टानक्षत्रसूत्रेण सह विरोधीति न प्रमाणमिति तृतीय निर्वचन । 'तत्थ ण जे ते' इत्यादि । तत्र तेषामष्टाविंशतेर्नक्षत्राणा मध्ये ये ते नक्षत्रे ये ण प्राग्वत् । चन्द्रस्य दक्षिणेनापि-दक्षिणस्यामपि दिशि व्यवस्थिते योग युङ्क्त । प्रमर्द्द च-प्रमर्द्दरूप च योग युङ्क्त । ते ण प्राग्वत् । 'दुवे' त्ति । द्वे आषाढे-पूर्व्वाषाढोत्तराषाढरूपे ते हि चतुस्तारे-पूर्व्वाषाढनक्षत्र चतुस्ता-रमित्यग्रे वक्ष्यते । तत्र द्वे द्वे तारे सर्व्वबाह्यस्य पञ्चदशस्य मण्डलस्याऽभ्यन्तरतो द्वे द्वे बहि । तथा-चोक्त करणविभावनाया-'पुव्वुत्तराणा आसाढाणा दो दो अब्भतरओ दो दो बाहिरओ सव्वबाहिरस्स' त्ति । तत्र द्वे तारे अभ्यन्तरत तयोर्मध्येन चन्द्रो गच्छतीति । तदपेक्षया प्रमर्द्दयोग युङ्क्त इत्युच्यते । ये तु द्वे द्वे तारे वहिस्ते चन्द्रस्य पञ्चदशेऽपि मण्डले चार चरत सदा दक्षिणव्यवस्थिते ततस्तदपेक्षया दक्षिणेन योग युङ्क्त इत्युक्त । सम्प्रत्येतयोरेव प्रमर्द्दयोग भावनार्थं सूत्रकार एव किञ्चिदाह 'सव्वबाहिरे' इत्यादि । पूर्व्वाषाढोत्तराषाढे सर्व्वबाह्ये मण्डले व्यवस्थिते एव चन्द्रेण सह योगमयुङ्क्ता युङ्क्तो योक्ष्यतो वा । ततश्च यदा पूर्व्वाषाढोत्तराषाढाभ्या सह चन्द्रो योगमुपैति ततो नियमतोऽभ्यन्तरतारकाणा मध्येन

गच्छतीति तदपेक्षया प्रमर्द योग युङ्क्त इत्युक्तमिति चतुर्थप्रश्ननिर्व्वचन। 'तत्थ णमि' त्यादि। तत्र सर्व्वनक्षत्राणा मध्ये यत्र तन्नक्षत्र यन्नक्षत्र सदा चन्द्रस्य प्रमर्द योग युनक्ति। 'सा ण' प्राग्वत्। एका ज्येष्ठा। तदेव नक्षत्राणा चन्द्रमण्डलै. सह योगभणनेन मण्डलगत्या परिभ्रमणरूपाश्चन्द्रमार्गा भणिता। तद्भणनेन च योग इति प्रथम द्वार व्याख्यातम्।

अथ किं नक्षत्र? किं देवताकम्? इति द्वितीयद्वारविषय प्रश्नमाह—

एतेसि णं भंते! अट्ठावीसाए णक्खत्ताणं अभिई णक्खत्ते किं देवयाए पण्णत्ते?। गो०! बम्हदेवयाए पण्णत्ते। सवणे णं णक्खत्ते विण्हु देवयाए पण्णत्ते। धणिट्ठा वसु-देवयाए पण्णत्ते। एतेणं कमेणं णेअव्वाओ अणुपरिवाडीए इमाओ देवयाओ—बम्ह, विण्हु, वसु, वरुण, अय, अभिवुड्ढी, पूसे, आसे, जमे, अग्गी, पयावई, सोमे, रुद्दे, अदिती, बहफ्फई, सप्प, पिउ, भग, अज्जम, सविता, तट्ठा, वाऊ, इंदग्गी, मित्ता, इंद, नेरती, आउ, वीस्स य। एवं णक्खत्ताणं एताए परिवाडीए णेअव्वा। जाव उत्तरासाढा किं देवयाए पण्णत्ते?। गो०। विस्सदेवयाए पण्णत्ते। एतेसि णं भंते! अट्ठावीसाए णक्खत्ताणं अभिई णक्खत्ते कई तारे पण्णत्ते?। गो०! तितारे पण्णत्ते। एवं णेअव्वा। जस्स जत्तिआओ ताराओ। इमं च णं तं तारग्गं

तिगतिगपंचगसयं दुग दुग बत्तीसगं तिगं च तिगं।
छप्पंचगतिगएक्कग पंचगतिगछक्कगं चेव॥ १॥

सत्तगदुगदुगपंचग इक्किक्कग पंच चउतिगंचेव।
इक्कारसग चउक्कं चउक्कगं चेव तारग्गं॥ २॥

'एतेसि णमि' त्यादि। एतेषा भदन्त! अष्टाविंशतेर्नक्षत्राणा मध्ये अभिजिन्नक्षत्र किं देवताक—किं नामा देवता यस्य तत्तथा प्रज्ञप्तम्?। एव प्रश्ने कृते भगवानाह-गौतम! ब्रह्मदेवताक ब्रह्म देवता-स्वामी यस्य तत्तथा। एव शेषनक्षत्रदेवता भगवानेव निर्व्वक्ति-'सवणे' इत्यादि। श्रवणनक्षत्र विष्णु-देवताक प्रज्ञप्त। धनिष्ठानक्षत्रं वसुदेवताक प्रज्ञप्तम्। अतिदेशमाह-'एते ण कमेणमि' त्यादि। एतेनानन्तरोक्तप्रकारेण क्रमेण ज्ञातव्या अनुपरिपाट्याऽभिजिदादीनामिति। 'इमाउ' त्ति। इमा-वक्ष्य-माणा देवता. तथाहि—'बम्ह, विण्हु' इत्यादि। अभिजितो ब्रह्मा, श्रवणस्य विष्णु, धनिष्ठाया वसु, शतभि-भिषजो वरुण, पूर्व्वभद्रपदस्याऽज, उत्तरभद्रपदस्यऽभिवृद्धि, ज्योतिःशास्त्रे तु अस्याऽहिर्बुध्न नामेति। रेवत्या पूषा, अश्विन्या अश्व:, स च गन्धर्व्वनामेति ज्योतिष्करण्डे। भरण्या यम, कृत्तिकाया अग्नि,

जोएति ? । गो० ! णव मुहुत्ते सत्तावीसं च सत्तट्ठिभागे मुहुत्तस्स चंदेण सद्धिं जोएइ । एवं इमाहिं गाहाहिं अणुगंतव्वं ।

अभिइस्स चंदजोगो सत्तट्ठी खंडिओ अहोरत्तो । ते हुंति नव मुहुत्ता सत्तावीसं कलाओ अ ।१।
सयभिसया भरणीओ अद्दा अस्सेस साई जिट्ठा य । एए छण्णक्खत्ता पण्णरस मुहुत्तसंजोगा ।२।
तिण्णेव उत्तराइं पुणव्वसू रोहिणी विसाहा य । एए छण्णक्खत्ता पणयाल मुहुत्तसंजोगा ।३।
अवसेसा णक्खत्ता पण्णरस वि हुंति तीसइ मुहुत्ता । चंदंमि एस जोगो णक्खत्ताणं मुणेअव्वो ।४।

एतेसि णं भंते ! अट्ठावीसाए णक्खत्ताणं अभिइणक्खत्ते कइ अहोरत्ते सूरेण सद्धिं जोगं जोएति ? । गो० ! चत्तारि अहोरत्ते छच्च मुहुत्ते सूरेण सद्धिं जोगं जोएति ।

एवं इमाहिं गाहाहिं णेअव्वं ।

अभिइ छच्च मुहुत्ते चत्तारि अ केवले अहोरत्ते । सूरेण समं गच्छति एत्तो सेसाण वुच्छामि ।१।
सयभिसया भरणीओ अद्दा अस्सेस साइ जेट्ठा य । वच्चंति मुहुत्ते एक्कवीसइं छच्चेव अहोरत्ते ।२।
तिण्णेव उत्तराइं पुणव्वसु रोहिणी विसाहा य । वच्चंति मुहुत्ते तिण्णि चेव वीसं अहोरत्ते ।३।
अवसेसा णक्खत्ता पण्णरस सूर सहगया जंति । बारस चेव मुहुत्ते तेरस य समे अहोरत्ते ।४।

'एएसि णमि' त्यादि । एतेषां भदन्त ! अष्टाविंशतेर्नक्षत्राणां मध्येऽभिजिन्नक्षत्रं कति मुहूर्त्तान् चन्द्रे-चन्द्रेण सह योगं युनक्ति ? । भगवानाह-गौतम ! 'णवे' त्यादि नव मुहूर्त्तान् एकस्य च मुहूर्त्तस्य सप्तविंशति सप्तषष्टि भागान् यावच्चन्द्रेण सार्द्धं योगं युनक्ति । अथ सर्वनक्षत्राणां चन्द्रयोगमुहूर्त्तसङ्ग्रह-प्रतिपादनार्थमाह-'एवमि' ति । एवमुक्तप्रकारेण इमाभिर्वक्ष्यमाणाभिर्गाथाभिरनुगन्तव्यं-ज्ञातव्यं । सर्वनक्षत्राणां मुहूर्त्तप्रमाणमिति गम्यं । गाथा आह-'अभिइस्स' त्ति गाथा । अभिजिन्नक्षत्रस्य चन्द्रेण सह योग सप्तषष्टिभागीकृतो योऽहोरात्रस्तस्य सत्का ये एकविंशति भागास्तावन्तं कालं भवति । ते चैक-विंशति सप्तषष्टिभागा परिभाव्यमाना नव मुहूर्त्ता सप्तविंशति सप्तषष्टिभागाश्च भवन्ति । तथाहि-सप्तषष्टिखण्डीकृतस्याऽहोरात्रस्य सत्का ये एकविंशतिभागास्ते मुहूर्त्तगतभागकरणार्थं त्रिंशता गुण्यन्ते । जातानि षट् शतानि त्रिंशदधिकानि । तेषां सप्तषष्ट्या भागहारे लब्धा नव मुहूर्त्ता एकस्य च मुहूर्त्तस्य सप्तविंशति सप्तषष्टि भागा ९-२७/६७ इतिगाथार्थं । अथ पञ्चदशमुहूर्त्तयोगीनि नक्षत्राण्याह-'सयभि-सया०' गाथा । शतभिषक्, भरणी, आर्द्रा, अश्लेषा, स्वाति, ज्येष्ठा चेति । एतानि षट् नक्षत्राणि प्रत्येक चन्द्रेण सह पञ्चदशमुहूर्त्तसंयोगीनि । एतेषां नक्षत्राणां पञ्चदश मुहूर्त्तान् यावच्चन्द्रेण सह योग इत्यर्थः ।

तथाहि-एतेषां प्रत्येकं सप्तषष्टिखण्डीकृतस्याऽहोरात्रस्य सत्कान् त्रयस्त्रिंशद्भागानेकस्य सप्तषष्टि भागस्यार्द्धं च यावच्चन्द्रेण सह योगः । ततो मुहूर्त्तगतभागकरणार्थं त्रयस्त्रिंशत्त्रिंशता गुण्यन्ते । जातानि नव शतानि नवत्यधिकानि । यदपि चार्द्धं तदपि त्रिंशता गुणयित्वा द्विकेन भक्ता लब्धा पञ्चदशभागाः । सर्वसङ्कलनया जातं भागानां पञ्चोत्तरं सहस्रम् । एतस्य सप्तषष्ट्या भागे हृते लब्धाः पञ्चदश मुहूर्त्ता इति । अथ पञ्चचत्वारिंशन्मुहूर्त्तचन्द्रसयोगीनि नक्षत्राण्याह-'तिण्णेव' त्ति गाथा । तिस्र उत्तराः-उत्तरफाल्गुनी, उत्तराषाढा, उत्तरभद्रपदा चेति तथा पुनर्वसु, रोहिणी, विशाखा । एतानि षट् नक्षत्राणि चन्द्रेण सह पञ्चचत्वारिंशन्मुहूर्त्तसयोगीनि भवन्ति । पण्णामप्येतेषां नक्षत्राणां प्रत्येकं चन्द्रेण सह योगं पञ्चचत्वारिंशन्मुहूर्त्तान् यावद्भवतीत्यर्थः । तथाहि-एतेषां प्रत्येकं सप्तषष्टिखण्डीकृतस्याऽहोरात्रस्य-सत्कानां भागानां शतमेकमेकस्य च भागस्यार्द्धं यावच्चन्द्रेण सह योगः । तत्रापि भागानां मुहूर्त्तगतभाग-करणार्थं शतं प्रथमतस्त्रिंशता गुण्यते । जातानि त्रीणि सहस्राणि । यच्चैकमर्द्धं तदपि त्रिंशता गुणयित्वा द्वाभ्यां विभक्ता लब्धा पञ्चदशभागाः । ते च पूर्वराशौ प्रक्षिप्यन्ते । जातः पूर्वराशिस्त्रीणि सहस्राणि पञ्चदशोत्तराणि । एतेषां सप्तषष्ट्या भागहारे लब्धा पञ्चचत्वारिंशन्मुहूर्त्ता इति । अथ त्रिंशन्मुहूर्त्त-चन्द्रयोगीनि नक्षत्राण्याह-'अवसेसा' त्ति । अवशेषाण्युक्तव्यतिरिक्तानि श्रवण, धनिष्ठा, पूर्वभद्रपदा, रेवत्यश्विनि, कृत्तिका, मृगशिर, पुष्य, मघा, पूर्वफाल्गुनी, हस्त, चित्रा, मूल, अनुराधा, पूर्वाऽऽषाढा नामानि पञ्चदशापि नक्षत्राणि चन्द्रेण सह योगमधिकृत्य त्रिंशन्मुहूर्त्तानि भवन्ति । तथाहि-एतेषां काल-मधिकृत्य प्रत्येकं सीमाविष्कम्भो मुहूर्त्तगतसप्तषष्टिभागानां दशोत्तरे द्वे सहस्रे । ततस्तयोः सप्तषष्ट्या भागे हृते लब्धास्त्रिंशन्मुहूर्त्ता इति । एवमेव चन्द्रे-चन्द्रविषये योगे नक्षत्राणां ज्ञातव्यः । इत्युक्तो नक्षत्राणां चन्द्रेण सह योगः । अथ सूर्येण सह तं प्ररूपयति-'एतेसि णमि'-त्यादि-। एतेषामष्टाविंशते-र्नक्षत्राणां मध्ये अभिजिन्नक्षत्रं कत्यहोरात्रान् सूर्येण सार्द्धं योगं युनक्ति ? । भगवानाह-गौतम ! अभिजिन्नक्षत्रं चतुरोऽहोरात्रान् षट् मुहूर्त्तान् यावत्सूर्येण सार्द्धं योगं युनक्ति । अथ सर्वनक्षत्राणां सूर्ययोगकालसङ्ग्रहार्थमाह-'एवमि' त्यादि । एवमित्युक्तप्रकारेण इमाभिर्वक्ष्यमाणाभिर्गाथाभिः सर्व-नक्षत्राणां सूर्ययोगकालप्रमाणं ज्ञातव्यं । तत्राऽभिजिन्नक्षत्रस्य सूर्ययोगप्रमाणं विशेषतोऽभिधित्सुर्गाथामाह-'अभिई' त्ति गाथा । अभिजिन्नक्षत्रं चतुरः केवलान् परिपूर्णान् अहोरात्रान् षट् च मुहूर्त्तान् यावत्सूर्येण समं गच्छति । कथमेतदवसीयते ? । इति चेत्, उच्यते-इह पूर्वाऽऽचार्यप्रदर्शितमेतद्विषयमिदं करणं ।

जं रिक्खं जावइए वच्चइ चंदेण भागसत्तट्ठी । तं पण भागे राइदिअस्स सूरेण तावइए, ॥ १६२ ज्यो० ।

व्याख्या-यन्नक्षत्रं यावत् सप्तषष्टि भागान् चन्द्रेण समं व्रजति तन्नक्षत्रं तावतो रात्रिदिवस्य पञ्चभागान्-पञ्चम भागान् सूर्येण समं व्रजतीति करणं सर्वत्रापि परिभावनीयं । तत्राभिजिदेकविंशति सप्तषष्टि भागान् चन्द्रेण सह वर्त्तते । तत एतावत पञ्च भागान् अहोरात्रस्य सूर्येण समं वर्त्तमानमवसेयम् । एकविंशतेश्च पञ्चभिर्भागे हृते लब्धाश्चत्वारोऽहोरात्रा षट् मुहूर्त्ता इति । 'इत्तो सेसाण वुच्छामि' त्ति । अतः ऊर्ध्वं शेषा-णामपि नक्षत्राणां सूर्येण समं योगान् कालपरिमाणमधिकृत्य वक्ष्यामीतिप्रतिज्ञातमेव निर्वाहयति-'सय-

रोहिण्या. प्रजापति, मृगशिरस सोम, आर्द्राया रुद्र', पुनर्वस्वोरदिति, पुष्यस्य वृहस्पति, अश्लेषाया सर्प्प, मघाया पितृनामादेव, पूर्व्व फाल्गुन्या भग, उत्तरफाल्गुन्या अर्यमा, हस्तस्य सविता, चित्राया-स्त्वष्टा, स्वातेर्वायु, विशाखाया ऐन्द्राग्नी, अनुराधाया मित्र, ज्येष्ठाया इन्द्र मूलस्य नैर्ऋति, पूर्व्वाषा-ढाय आप, उत्तराषाढाया विश्वे। 'एव णक्खत्ताण' त्ति। एवमुक्तप्रकारेण नक्षत्राणामभिजिदादीना एतया परिपाट्या ब्रह्मा, विष्णुरित्याद्युक्तलक्षणया ज्ञातव्या। देवता इति गम्य। कियद् दूरम्? इत्याह-'जाव' त्ति। यावदुत्तराषाढानक्षत्र कि देवताक प्रज्ञप्त?। भगवानाह-गौतम! विश्वदेवताक प्रज्ञप्तम्। अथ प्रतिनक्षत्र तारासङ्ख्या पृच्छति-'एतेसि णमि' त्यादि प्रश्न प्राग्वत्। भगवानाह-गौतम! अभि-जिन्नक्षत्र त्रितार प्रज्ञप्तम्। 'एवमि' त्ति। अनेन प्रकारेण ज्ञातव्या-यस्य नक्षत्रस्य यावत्यस्तारा। 'इम च' त्ति। इदं वक्ष्यमाण तत्ताराग्र-तारापरिमाण वेदितव्यम्। अथ वक्ष्यमाण गाथाद्वयेनाह-'तिगतिग' त्ति। 'सत्तग' त्ति। गाथाद्वय सुगम। योजना चैवम्-अभिजित्त्रितार, श्रवणनक्षत्र त्रितार, धनिष्ठा पञ्चतार-मित्यादि। यावदुत्तराषाढानक्षत्रं चतुस्तारमिति। इति ताराग्रमिति तृतीयं द्वारम्।

अथ कस्य नक्षत्रस्य कि गोत्रम्? इति चतुर्थं द्वारं पृच्छति

**एतेसि णं भंते! अट्ठावीसाए णक्खत्ताणं अभिई णक्खत्ते किं गोत्ते पण्णत्ते? गो०! मुग्गलायणसगोत्ते। गाहा-**

**मोग्गलायणसंखायणे अ तह अग्गताव कण्णिल्ले। तत्तो अ जाउकण्णे धणंजए चेव बोद्धव्वे।१।**

**पुस्सायणे अ अस्सायणे अ भग्गवेसे अ अग्गिवेसे अ। गोअम भारद्दाए लोहिच्चे चेव वासिट्ठे।२।**

**ओमज्जायणा मंडव्वायणे अ पिंगायणे अ गोवल्ले।**

**कासव कोसिअ दब्भा य चामरच्छाय सुंगा य॥३॥**

**गोल्लवाण तिगिच्छायणे अ कच्चयणे अ हवइ मूले।**

**तत्तो अ वल्लिआयण वग्घावच्चे अ गुत्ताइ।**

**एएसि णं भंते! अट्ठावीसाए णक्खत्ताणं अभिई णक्खत्ते किं संठिए पण्णत्ते?। गो० गोसीसावलिसंठिए पण्णत्ते। गाहा-**

**गोसीसावलि-काहार-सउणि-पुप्फोवयारवावी अ। नावा आसक्खंधग-भग-छुरधारा अ सगडुद्धी।१।**

**मिगसीसावलिरुहिरबिंदु-तुल-वद्धमाणग-पडागा पागारे पल्लंके हत्थे मुहफुल्लए चेव॥२॥**

**खीलग दामणि एगावली अ गयदंत विच्छुयलंगुलया। गयविक्कमे तत्तो सीहणिसाई अ संठाणा॥३॥**

'एतेसि णमि' त्यादि । एतेपामष्टाविंशतेर्नक्षत्राणां मध्ये अभिजिन्नक्षत्रं किं गोत्रं प्रज्ञप्तं ? । भगवानाह—गौतम ! 'मोग्गल्ला'० 'पुस्सायणे'० 'ओमज्जायणे'० 'गोल्लवाण'० । इति गाथाचतुष्टयं । तत्र अभिजितो मुद्गलायनगोत्रं, श्रवणस्य साङ्ख्यायनं, धनिष्ठाया अग्रतापनं, शतभिषजः 'कण्णिल्ल' कन्यागोत्रं इल्ल स्वार्थिकः, पूर्व्वभद्रपदस्य जातुकर्ण्यम्, उत्तरभद्रपदस्य धनञ्जयं, च समुच्चये । एवोऽवधारणे वोद्धव्यं । 'पुस्स' त्ति । रेवत्या पुष्यायनं, अश्विन्या अश्वायनं, भरण्या अभग्नवैश्यं, कृत्तिकाया अग्निवैश्यं, रोहिण्या गौतमं, मृगशिरसो भारद्वाजम्, आर्द्राया लौहित्यायनं, पुनर्वस्वोर्वासिष्ठं, पुष्यस्याऽवमज्जायनम्, अश्लेषाया माण्डव्यायनं, मघाया पिङ्गायनं, पूर्व्वफाल्गुन्याः गोवल्ल्यम्, उत्तरफाल्गुन्या काश्यपं, हस्तस्य कौशिकं, चित्राया दर्भ्भं, स्वातेश्चामरच्छायं, विशाखाया शुङ्गम्, अनुराधाया गोल्लव्यानं, जेष्ठायाश्चिकित्सायनं, कात्यायनं भवति मूले-मूलनक्षत्रे, पूर्वाषाढाया वल्लिकायनम, उत्तराषाढाया व्याघ्रापत्यं । 'गोत्ताइ' त्ति । प्रागुक्तनामभिर्गोत्राणीति गाथाचतुष्टयार्थ । यद्यपि लोके प्रकाशकाऽऽद्यपुरुषाऽभिधानस्तदपत्यसन्तानो गोत्रं । यथा गर्गस्याऽपत्यसन्तानो गर्गाऽभिधानो गोत्रं । तच्च नक्षत्राणां न सम्भवति तेषामौपपातिकत्वात् तत इत्थं गोत्रसम्भवो द्रष्टव्यः—यस्मिन्नक्षत्रे चरद्भिः शुभैरशुभैश्च ग्रहैर्यस्य गोत्रस्य सम्बन्धिनां सर्व्वेपामपि मनुष्याणां शुभं वाऽशुभं वा क्रमेण समानमेव फलं भवति तद्गोत्रं तस्य नक्षत्रस्यापि व्यवहर्त्तव्यमिति । नक्षत्राणां गोत्रमिति चतुर्थं द्वारम् । अथ कस्य नक्षत्रस्य किं संस्थानम् ? इति पञ्चमं द्वारं प्रश्नयति—'एतेसि णमि' त्यादि । एतेषां भदन्त ! अष्टाविंशतिर्नक्षत्राणां मध्येऽभिजिन्नत्रं किं संस्थितं—कस्येव संस्थितं संस्थानं यस्य तत्किंसंस्थितं प्रज्ञप्तं ? । भगवानाह—गौतम ! 'गोसीस' त्ति । गो शीर्षं तस्याऽऽवलिस्तत्पुद्गलानां दीर्घरूपा श्रेणिस्तत्संस्थितं संस्थानं यस्य तत्तथा । एवं सर्व्वनक्षत्राणां संस्थानसङ्ग्राहिका गाथा । यथा—'गोसीसावली' त्यादि गाथात्रयं । तत्र अभिजिद्गोशीर्षाऽऽवलिसंस्थानं । श्रवणं कासारसंस्थानं । धनिष्ठा 'सउणि' त्ति । शकुनिपञ्जरसंस्थानं । शतभिषक् पुष्पोपचारसंस्थितं । वावी' त्ति । पूर्व्वभद्रद्वयं वापीसंस्थानम् । उभयोरप्यर्द्धवापीसंस्थानात् द्वयोर्मिलने वापीसंस्थानमिति । रेवती नौसंस्थानम् । अश्विनी अश्वस्कन्धसंस्थानं । भरणी भगसंस्थानं । कृत्तिका क्षुराधारसंस्थानं । रोहिणी शकटोद्धिसंस्थानं । मृगशिरो मृगशीर्षाऽऽवलिसंस्थानम् । आर्द्रा रुधिरबिंदुसंस्थानं । पुनर्वसु तुलासंस्थानं । पुष्यं सुप्रतिष्ठितवर्द्धमानकसंस्थानम् । अश्लेषा पताकासंस्थानं । मघा प्राकारसंस्थाने । फाल्गुनीद्वयं पल्यङ्कसंस्थानं प्रत्येकमर्द्धपल्यङ्काऽऽकारात् । हस्तो हस्तसंस्थानं । चित्रा मुखमण्डनसुवर्णपुष्पसंस्थानं । स्वातिः कीलकसंस्थानं । विशाखा दामनीसंस्थानं, दामनी नाम पशुबन्धनम् । अनुराधा एकावलिसंस्थानं । ज्येष्ठा गजदन्तसंस्थानं । मूलं वृश्चिकलाङ्गूलसंस्थानं । पूर्व्वाषाढा गजविक्रमसंस्थानम् । उत्तराषाढानक्षत्रं सिंहनिषीदनसंस्थानं चेति । पञ्चमं संस्थानद्वारम् ।

अथ किं नक्षत्रचन्द्रेण सूर्येण वा सह कति मुहूर्त्तयोगीति षष्ठं द्वारं पिपृच्छिषुरिदमाह

**एएसि णं भंते ! अट्ठावीसाए णक्खत्ताणं अभिइणक्खत्ते कइ मुहुत्ते चंदेण सद्धिं जोगं**

भिसय' त्ति गाथा। शतभिषक्, भरणी, आर्द्रा अश्लेषा, स्वाति-ज्येष्ठा चेति । षट् नक्षत्राणि प्रत्येकं षडेवाऽहोरात्रान् एकविंशतिं च मुहूर्त्तान् सूर्येण समं व्रजन्ति । तथाहि-एतानि नक्षत्राणि प्रत्येकं चन्द्रेण समं सार्द्धान् त्रयस्त्रिंशत्सङ्ख्याकान् सप्तषष्टिभागान् अहोरात्रस्य व्रजन्ति । अपार्द्धक्षेत्रत्वादेतेषां। ततः एतावतः पञ्च भागान् अहोरात्रस्य सूर्येण समं व्रजन्तीति त्रयस्त्रिंशतश्च पञ्चभिर्भागे हृते लब्धा षट् अहोरात्रा। पश्चादवतिष्ठन्ते सार्द्धास्त्रयः पञ्च भागास्ते सवर्णनाया जाताः सप्त ते च त्रिंशता गुण्यन्ते। जाते द्वे शते दशोत्तरे। एते च मुहूर्त्तार्द्धगते। ततः परिपूर्णमुहूर्त्ताऽऽनयनाय दशभिर्भागो ह्रियते। लब्धा एकविंशतिमुहूर्त्ता इति। 'तिण्णेव' त्ति गाथा। एतानि षट् नक्षत्राणि विंशतिमहोरात्रान् त्रीन् मुहूर्त्तांश्च सूर्येण समं व्रजन्ति। एतानि हि षडपि नक्षत्राणि चन्द्रेण समं सप्तषष्टि भागानां शतमेकस्य च भागस्यार्द्धं प्रत्येकं व्रजन्ति। ततः एतावतः पञ्च भागान् अहोरात्रस्य सूर्येण समं व्रजनमवगन्तव्यं। शतस्य च पञ्चभिर्भागे हृते लब्धानि विंशतिरहोरात्राः। यदपि चैकस्य पञ्च भागस्यार्द्धमुद्धरति तदपि त्रिंशता गुण्यते। जातास्त्रिंशत्। तस्य दशभिर्भागे हृते लब्धास्त्रयो मुहूर्त्ता इति। 'अवसेस' त्ति गाथा। अवशेषाणि श्रवण-धनिष्ठादीनि पञ्चदशानि प्रागुक्तानि नक्षत्राणि सूर्येण सहगतानि त्रयोदश समान् परिपूर्णान् अहोरात्रान् द्वादश मुहूर्त्तान् यावद्यान्ति। तथाहि-अमूनि परिपूर्णान् सप्तषष्टिभागान् चन्द्रेण समं व्रजन्ति। ततः सूर्येण सहैतानि पञ्चभागानप्यहोरात्रस्य सप्तषष्टिसङ्ख्याकान् गच्छन्ति । सप्तषष्टेश्च पञ्चभिर्भागे हृते लब्धास्त्रयोदशाहोरात्राः। शेषौ द्वौ भागौ तिष्ठतः। तौ च त्रिंशता गुण्यते। जाताः षष्टिस्तस्याः पञ्चभिर्भागे हृते लब्धाः द्वादश मुहूर्त्ताः। इत्येवमुक्तो नक्षत्राणां सूर्येण सह योगः। तत्प्रतिपादनेन च चन्द्ररवियोग इति षष्ठं द्वारम्।

अथ कति नक्षत्राणि कुलानि ? इत्यादि पृच्छति

**कइ णं भंते ! कुला ?, कति उवकुला ?, कति कुलोवकुला प० ? । गो० ! बारस कुला। बारस उवकुला। चत्तारि कुलोवकुला पण्णत्ता। बारस कुला तं०-धणिट्ठाकुलं उत्तर-भद्दवयाकुलं अस्सिणीकुलं, कत्तिआकुलं, मिगसिरकुलं, पुस्सकुलं, मघाकुलं, उत्तरफग्गुणी-कुलं, चित्ताकुलं, विसाहाकुलं, मूलकुलम्, उत्तरासाढाकुलं चेति।**

**मासाणं परिणामा हुंति कुला उवकुलाओ हेट्ठिमगा। हुंति पुण कुलोवकुला अभिई, सय, अद्द, अणुराहा ॥१॥ बारस उवकुला तं०-सवणो उवकुलं, पुव्व भद्दवया उवकुलं, रेवती उ०, भरणी उ०, रोहिणी उ०, पुणव्वसु उ०, अस्सेसा उ०, पुव्वाफग्गुणी उ०, हत्थो उ०, साती उ०, जेट्ठा उ०, पुव्वासाढा उ०, चत्तारि कुलोवकुला । तं०-अभिई कुलोव-कुलं, सयभिसया कुलोवकुलं, अद्दा कुलोवकुलं, अणुराहाकुलोवकुलं । कइ णं भंते ! पुण्णि-**

माओ ?, कइ अमावसाओ प० ? । गो० ! बारस पुण्णिमाओ बारस अमावासाओ पण्णत्ताओ । तं०—साविट्ठी, पोट्ठवई, आसोई, कत्तिगी, मग्गसिरी, पोसी, माही, फग्गुणी, चेत्ती, वेसाही, जेट्ठामूली, आसाढी । साविट्ठिण्णं भंते ! पुण्णमासि कइ णक्खत्ता जोगं जोएंति ? । गो० ! तिण्णि णक्खत्ता जोएंति । तं जहा—अभिई, सवणो धणिट्ठा य । पोट्ठवइ णं भंते ! कइ णक्खत्ता जोगं जोइंति ? । गो० ! तिण्णि णक्खत्ता जोएंति । तं०-सयभिसया, पुव्वभद्दवया, उत्तरभद्दवया य । आस्सोइ णं पुण्णिमं कइ णक्खत्ता जोगं जोएंति ? । गो० ! दो-रेवती, अस्सिणी य । कत्तिइण्णं दो-भरणी, कत्तिआ य । मग्गसिरि णं दो-रोहिणी, मग्गसिरं च । पोसि णं तिण्णि-अद्दा, पुणव्वसू, पुस्सो अ । माघि णं दो-अस्सेसा, मघा य । फग्गुणि णं दो-पुव्वाफग्गुणी, उत्तराफग्गुणी अ । चित्तिण्णं दो-हत्थो, चित्ता य । विसाहि णं दो-साती, विसाहा य । जेट्ठामूली णं तिण्णि—अणुराहा, जेट्ठा, मूलो य । आसाढी णं दो-पुव्वासाढा, उत्तरासाढा य । साविट्ठि णं भंते ! पुण्णिमं किं कुलं जोएति ?, उवकुलं जोएति ?, कुलोवकुलं जोएति ? । गो० ! कुलं वा जोएति । उवकुलं वा जोएति । कुलोवकुलं वा जोएति । कुलं जोएमाणे धणिट्ठा णक्खत्ते जोएंति । उवकुलं जोएमाणे सवणे णक्खत्ते जोएति । कुलोवकुलं जोएमाणे अभिइ णक्खत्ते जोएइ । साविट्ठि णं पुण्णमासिं किं कुलं वा जोएति ? जाव कुलोवकुलं वा जोएति ? । कुलेण वा जुत्ता जाव कुलोवकुलेण वा जुत्ता साविट्ठी पुण्णिमा जुत्तत्ति वत्तव्वं सिआ । पोट्ठवइ णं भंते ! (पुण्णिमं) किं कुलं जोएति ३ ? । पुच्छा—गो० ! कुलं वा उवकुलं वा कुलोवकुलं वा जोएति । कुलं जोएमाणे उत्तरभद्दवया णक्खत्तं जोएति । उव० पुव्वभद्दवया । कुलोव०सयभिसया णक्खत्तं जोएति । पोट्ठवइ णं पुण्णिमं कुलं वा जोएति जाव कुलोवकुलं जोएति । कुलेण वा जुत्ता जाव कुलोवकुलेण वा जुत्ता पोट्ठवया पुण्णमासिणी जुत्तत्ति वत्तव्वं सिआ । आसोइ णं भंते ! पुच्छा । गो० ! कुलं वा जोएति । उवकुलं वा जोएति । णो लभति कुलोवकुलं । कुलं जोएमाणे अस्सिणी णक्खत्ते जोएति । उवकुलं जोएमाणे रेवती णक्खत्तं जोएति । आसोइ ण पुण्णिमं कुलं वा जोएइ उवकुलं वा जोएइ । कुलेण वा जुत्ता उवकुलेण वा जुत्ता आस्सोइ पुण्णिमा जुत्तत्ति वत्तव्वं सिआ । कत्तिगिण्णं भंते ! पुण्णिमं कुलं ३ पुच्छा । कुलं वा जोएति, उवकुलं वा जोएति ।

णो कुलोवकुलं जोएति । कुलं जोएमाणे कत्तिआ णक्खत्ते जोएति । उव० भरणी । कत्तिइं जाव वत्तव्वं सिआ । मग्गसिरि णं भंते ! पुण्णिमं किं कुलं० ? तं चेव । दो जोएति । णो लभति कुलोवकुलं । कुलं जोएमाणे मग्गसिरे णक्खत्ते जोएति । उव० रोहिणी । मग्गसिरि णं पुण्णिमं जाव वत्तव्वं सिआ । एवं सेसिआओ वि जाव आसाढी । पोसी, जेट्ठामूली कुलं वा उवकुलं वा कुलोवकुलं वा । साविट्ठिण्णं भंते ! अमावासं कइ णक्खत्ता जोएंति ? । गो० ! दो णक्खत्ता जोएति । तं०-अस्सेसा य महा य । पोट्ठवइएणं अमावासं कइ णक्खत्ता जोएंति ? । गो० ! दो-पुव्वाफग्गुणी उत्तराफग्गुणी अ । आसोइ णं दो-हत्थो चित्ता य । कत्तिइ णं दो-साती विसाहा य । मग्गसिरि णं तिण्णि-अणुराहा, जेट्ठो, मूलो अ । पोसि णं दो-पुव्वासाढा उत्तरासाढा य । माहि णं भंते ! तिण्णि-अभिई, सवणो, धणिट्ठा । फग्गुणि णं तिण्णि-सयभिसया, पुव्वाभद्दवया, उत्तराभद्दवया । चेत्तिण्णं दो-रेवती, अस्सिणी अ । वइसाहि णं दो-भरणी, कत्तिआ य । जेट्ठामूलि णं दो-रोहिणी, मिगसिरं च । आसाढि णं तिण्णि-अद्दा, पुणव्वसु, पुस्सोअ साविट्ठि णं भंते ! अमावासं किं-कुलं जोएति ? उवकुलं जोएति ? कुलोवकुलं जोएति ? । गो० ! कुलं वा जोएति । उवकुलं वा जोएति । णो लभति कुलोवकुलं । कुलं जोएमाणे मघा णक्खत्तेणं जोएति । उवकुलं जोएमाणे अस्सेसा णक्खत्तेणं जोएति । साविट्ठि णं अमावासं कुलं वा जोएति । उवकुलं वा जोएति । कुलेण वा जुत्ता उवकुलेण वा जुत्ता साविट्ठि अमावासा जुत्तत्ति वत्तव्वं सिआ । पोट्ठवइ णं भंते ! अमावासं तं चेव । दो जोएति । णो लभति कुलोवकुलं । कुलं जोएमाणे उत्तराफग्गुणी णक्खत्ते जोएति । उव० पुव्वाफग्गुणी । पोट्ठवइ णं अमावासं जाव वत्तव्वं सिआ । मग्गसिरि णं तं चेव । कुलं मूल णक्खत्ते जोएति । उव० जेट्ठा । कुलोव० अणुराहा जाव जुत्तत्ति वत्तव्वं सिआ । एवं माहीए फग्गुणीए आसाढीए कुलं वा उवकुलं वा कुलोवकुलं वा । अवसेसिआ णं कुलं वा उवकुलं वा जोएति । जया णं भंते ! साविट्ठि पुण्णिमा भवति तयाणं महाहिं अमावासा भवति ? । जया णं महाहिं पुण्णिमा भवति तया णं साविट्ठि अमावासा भवति ? । हंता, गो० ! जया णं साविट्ठि तं चेव वत्तव्वं । जया णं भंते ! पोट्ठवई पुण्णिमा भवति तया णं फग्गुणी आमावासा भवति ? जया णं फग्गुणी पुण्णिमा भवति ? तयाणं पोट्ठपदा अमावासा भवति ? । हंता, गो० ! तं

चेव। एवं एतेणं अभिलावेणं इमाओ पुण्णिमाओ इमाओ अमावासाओ णेअव्वाओ। अस्सिणी पुण्णिमा चेत्ती अमावासा। कत्तिगी पुण्णिमा वेसाही अमावासा। मग्गसिरि पुण्णिमा जेट्ठा-मूली अमावासा। पोसी पुण्णिमा आसाढी अमावासा॥

'कइ णं भंते!' इत्यादि प्रश्नः सुगमः। भगवानाह—गौतम! द्वादश कुलानि, द्वादशोपकुलानि, चत्वारि च कुलोपकुलानि प्रज्ञप्तानि। तत्र द्वादश कुलानि कानि? इत्याह—'बारसे'त्यादि। द्वादश कुलानि। तद्यथा—धणिट्ठ'त्ति। धनिष्ठा कुलमित्यादि नामानि प्रसिद्धानि। अथोक्तनामकुलनक्षत्राणां, वक्ष्यमाणानां चोपकुलानां कुलोपकुलानां च लक्षणानि विभणिषुर्गाथामाह—मासाणमि'त्यादि। मासानां—श्रावणादीनां परिणामानि-परिसमापकानि यानि नक्षत्राणि। अयं भावः—यैर्नक्षत्रैर्मासानां परिसमाप्तयो जायन्ते तानि नक्षत्राणि कुलानि भवन्ति। पुंस्त्वनिर्देशः प्राकृतत्वात्। अत्र प्रायः इत्यध्याहार्यं। तेन कदाचिदन्यथाऽपीति। तद्वचञ्जकानि तु प्रायो माससदृशनामान्येव लोकप्रसिद्धान्यवसातव्यानि। प्रायोग्रहणात् श्रावणज्येष्ठयोर्मासयोर्न श्रवणज्येष्ठे परिसमापके किन्तु तदुत्तरवर्तिनी धनिष्ठामूले इति। यद्यपि सूर्यप्रज्ञप्तिवृत्तौ धनिष्ठाऽपरपर्यायया श्रविष्ठया परिसमाप्ते. श्रावणमासस्याऽभिधानं श्राविष्ठो मास इति भणितं। तथापि ज्येष्ठमासस्य परिसमाप्तिर्मूलेनेति प्रायोऽध्याहारः सार्थक एव। तथा च मासपरिणामकान्येव-श्रावणो मासो धनिष्ठया परिसमाप्तिमुपैति, भाद्रपद उत्तरभाद्रपदया, अश्वयुगश्विन्या, कार्तिकः कृत्तिकया, मार्गशीर्षो मृगशिरसा, पोषः पुष्येण, माघो मघाभिः, फाल्गुनः उत्तरफाल्गुन्या, चैत्रश्चित्रया, वैशाखो विशाखया, ज्येष्ठो मासो मूलेन, आषाढः उत्तराषाढया चेति। एवं कुलनक्षत्राणां लक्षणं मासपरिसमाप्तिरेवावसातव्यम्। उपकुलानां लक्षणं यथा उवकुला ओ हेट्ठिमय' त्ति। उपकुलानि-कुलसमीपवर्तीन्यपि 'हेट्ठिम' त्ति। अधस्तनानि यानि श्रवणादीनि तान्युपकुलानि भवन्ति। कुलाऽधस्तनवर्तित्वमेवोपकुलानां लक्षणमित्यर्थः। अथ कुलोपकुलानां लक्षणं यथा—'पुणो कुलोवकुला' इति। 'हेट्ठिमगा हु ति' त्तिपदस्य लालाघण्टान्यायेनेहापि सम्बन्धात् उपकुलानामपि नक्षत्राणां यानि नक्षत्राणि अधस्तनानि तानि कुलोपकुलानि। नामत आह—'अभिई' इत्यादि। अभिजित्, शतभिषक्, आर्द्रा, अनुराधा चेति चत्वारि नक्षत्राणि। एतेषां लक्षणमुपकुलाऽधस्तनवर्तित्वमेव द्रष्टव्यं। न च कुलोपकुलनाम्नामग्रे वक्ष्यमाणत्वात्पौनरुक्त्यमाशङ्कनीयं। कुलादिनक्षत्रापेक्षयाऽल्पसङ्ख्यात्वज्ञापनार्थम् आर्याचरणपूर्त्यर्थं वा तथाभणने शङ्काया अनवकाशात्। न चैतावतैवाऽलं किमग्रिमग्रन्थेन? इति वाच्यं। यतः—परिपाट्या कालप्राप्तत्वं तु वक्ष्यमाणसूत्रस्यैवेति गाथार्थः। अथोपकुलान्याह—'बारस'त्ति। द्वादशोपकुलानि तद्यथेति व्यक्त्युपदर्शने श्रवणः उपकुलं पूर्वभद्रपदा उपकुलमित्यादि व्यक्तम्। अथ कुलोपकुलान्याह—'चत्तारी' त्यादि व्यक्तमिति। कुलेति सप्तमं द्वारं। अथ कति पौर्णमास्योऽमावास्यो चेत्यष्टमं द्वारं प्ररूपयति—'कइ णमि'त्यादि। कति-कियन्त्यो णमित्यलङ्कारे भदन्त! वर्षमध्ये पौर्णमास्यः?, कति चामावास्यः प्रज्ञप्ताः?। भगवानाह—गौतम! जातिभेदमधिकृत्य द्वादश पौर्णमास्यः, द्वादश चाऽमावास्यः प्रज्ञप्ताः। 'तं जहा साविट्ठी'त्यादि।

श्रविष्ठा–धनिष्ठा तस्या भवा श्राविष्ठी–श्रावणमासभाविनी, प्रोष्ठपदा–उत्तरभद्रपदा तस्या भवा पौष्ठपदी भाद्रपदमासभाविनी, एवमाश्वयुजी आश्विनमासभाविनी। एव कार्त्तिक्यादयोऽपि परिभाव-नीया। नवर ज्येष्ठामूली–ज्येष्ठामूलयोर्भवाऽवसातव्या। इति मासक्रमेण तत्तन्नामानुरूपनक्षत्रयोगात् द्वादशाना पौर्णमासीना नामान्युक्तानि। अथ यैर्नक्षत्रैरेकैका पूर्णिमा समाप्यते तानि नक्षत्राणि प्रश्न-यन्नाह–'साविट्ठी ण भते!' इत्यादि। श्राविष्ठी भदन्त! पूर्णिमा कति नक्षत्राणि युञ्जन्ति? कति नक्षत्राणि चन्द्रेण सह सयुज्य परिसमापयन्ति? इति प्रश्नार्थ। भगवानाह- गौतम! त्रीणि नक्षत्राणि योगं युञ्जन्ति। कानि तानि? इत्याह–'तद्यथे'त्यादि व्यक्तम्। इह च यद्यपि श्रवण–धनिष्ठारूपे द्वे एव नक्षत्रे श्राविष्ठी पौर्णमासी परिसमापयत तथापि अभिजिन्नक्षत्र श्रवणेन सह सम्बद्धमिति तदपि परि-समापयतीति विवक्षित। यत्तु–एकैकस्या पूर्णिमाया एकैकेन नक्षत्रेण समाप्तावपि श्रावणमासस्य श्रावि-ष्ठ्या पूर्णिमायास्त्रीणि नक्षत्राणि परिसमापकानि, आश्विनमासस्याऽश्वयुज्या पूर्णिमाया द्वे नक्षत्रे परि-समापके इत्यादिभणन तद्युगमध्ये एकैकेन नाम्ना पञ्च पञ्च पौर्णमासी रविकृत्योक्तमवसातव्य। तेन यथोक्त-सड्ख्यान्येव नक्षत्राणि परिसमापकानि भवन्ति। एतत्करण त्विह ग्रन्थगौरवभयादनुक्तमपि ज्योतिष्क-रण्डस्यैकोनविंशतितमप्राभृतात्, सूर्यप्रज्ञप्त्यादिभ्यो वाऽवसातव्य। तत्करणस्य फल भूत तात्पर्य तु सर्वासामपि पूर्णिमाना व्याख्याऽवसरे वक्ष्याम। तत्र श्राविष्ठ्या तात्पर्य त्वेव–धनिष्ठा नक्षत्रस्य षड्विं-शतौ मुहूर्तेषु गतेषु एकस्य च मुहूर्तस्य द्विचत्वारिंशति द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य द्वयो सप्तषष्टिभागयो २६–४२/६२। २/६७ प्रथमा श्राविष्ठी पौर्णमासी समाप्तिमियर्ति। तथा धनिष्ठानक्षत्रस्य एकस्य च मुहूर्तस्य पञ्चदशसु द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य पञ्चदश सुसप्तषष्टिभागेषु गतेषु ०–१५/६२। १५/६७ द्वितीया श्राविष्ठी पौर्णमासी समाप्तिमेति। तथा श्रवणनक्षत्रस्य त्रिषु मुहूर्तेषु एकस्य च मुहूर्तस्य पञ्चाशति द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्याऽष्टाविंशतौ सप्तषष्टिभागेषु गतेषु ३–५०/६२। २८/६७ तृतीया श्राविष्ठी पौर्णमासी समाप्तिमुपगच्छति। एव चतुर्थी श्राविष्ठी पौर्णमासी धनिष्ठानक्षत्रस्य त्रयोदशसु मुहूर्तेषु एकस्य च मुहूर्तस्याऽष्टाविंशतौ द्वाषष्टिभागेषु एकस्य च द्वाषष्टि-भागस्य द्विचत्वारिंशति सप्तषष्टिभागेषु १३–२८/६२। ४२/६७ गतेषु समाप्नोति। पञ्चमी श्राविष्ठी पौर्णमासी श्रवणनक्षत्रस्य सप्तदशसु मुहूर्तेषु एकस्य च मुहूर्तस्य एकस्मिन् द्वाषष्टिभागे एकस्य च द्वाषष्टि-भागस्य पञ्चपञ्चाशति सप्तषष्टिभागेषु १७–१/६२। ५५/६७ गतेषु परिसमाप्तिमधिगच्छति। तेदव यानि नक्षत्राणि श्राविष्ठी पौर्णमासी परिसमापयन्ति तान्युक्तानि। सम्प्रति यानि प्रोष्ठपदी परिसमापयन्ति तान्याह–'पोट्ठवइ णमि' त्यादि। प्रोष्ठपदी–भाद्रपदी णमित्यलङ्कारे भदन्त! पौर्णमासीं कति नक्ष-त्राणि युञ्जन्ति? कति नक्षत्राणि यथायोग चन्द्रेण सह योग परिसमापयन्तीत्यर्थ। एव सर्वत्रापि युञ्जन्तीत्यस्य पदस्य भावना कार्या। भगवानाह–गौतम! त्रीणि नक्षत्राणि युञ्जन्ति। तद्यथा–शतभिषक्, पूर्वभद्रपदा, उत्तरभद्रपदा चेति। तत्र प्रथमा प्रोष्ठपदी पूर्णिमामुत्तरभद्रपदा नक्षत्र सप्तदशसु मुहू-र्त्तेषु एकस्य च मुहूर्तस्य सप्तचत्वारिंशति द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य त्रिषु सप्तषष्टिभागेषु

१७-४७। ३ गतेषु समापयन्ति। एवं द्वितीयामुत्तरभद्रपदा एकविंशतौ-विंशतौ षोडशसु च क्रमेण मुहूर्त्तादिषु २१-२०। १६ गतेषु। तथा तृतीया शतभिषक् नवसु-पञ्चपञ्चाशति एकोनत्रिंशति च मुहूर्त्तादिषु ९-५५। २९ गतेषु। तथा चतुर्थीमुत्तरभद्रपदा चतुर्षु त्रयस्त्रिंशति त्रिचत्वारिंशति च मुहूर्त्तादिषु ४-३३। ४३ गतेषु। तथा पञ्चमी प्रोष्ठपदी पूर्णिमा पूर्व्वभद्रपदा अष्टसु षट्सु षट्पञ्चाशति च मुहूर्त्तादिषु ८-६। ५६ गतेषु परिसमापयति। आसोइ णमि' त्यादि। आश्वयुजी पौर्णमासी-शेषं प्राग्वत्। इह यद्यपि उत्तरभद्रपदा काञ्चिदाश्वयुजी परिसमापयन्ति तथापि प्रोष्ठपदीमपि परिसमापयति। तत्रैव लोके तस्य प्राधान्य तन्नाम्ना तस्या. पौर्णमास्या अभिधानात्। अतस्तदिह न विवक्षितमिति भाव.। तत्र प्रथमामाश्वयुजी पौर्णमासीमश्विनी अष्टसु द्विपञ्चाशति चतुर्षु च क्रमेण मुहूर्त्तादिषु ८-५२। ४ गतेषु। तथा द्वितीया रेवती द्वादशसु-पञ्चविंशतौ सप्तदशसु च मुहूर्त्तादिषु १२-२५। १७ गतेषु। तथा तृतीया-मुत्तरभद्रपदा त्रिंशति षष्टौ त्रिंशति च मुहूर्त्तादिषु ३०-६०। ३० गतेषु। तथा चतुर्थी रेवती पञ्चविंशतौ अष्टत्रिंशति चतुश्चत्वारिंशति च मुहूर्त्तादिषु २५-३८। ४४ गतेषु। पञ्चमी चाऽऽश्वयुजीमुत्तरभद्रपदा चतुश्चत्वारिंशति एकादशसु सप्तपञ्चाशति च क्रमेण मुहूर्त्तादिषु ४४-११। ५७ गतेषु परिसमापयन्ति। अथ शेषपूर्णिमाविषय-निर्व्वचनमेवाह-'कत्तिइ ण दो' इत्यादि सुगम। नवरमिहाऽश्विन्यपि कार्त्ति-कीपूर्णिमा परिसमापयन्ति परं साऽऽश्वयुज्या पूर्णिमाया प्रधानेति नेह विवक्षा। तत्र प्रथमां कार्त्तिकी पूर्णिमा कृत्तिका एकोनत्रिंशति सप्तपञ्चाशति पञ्चसु च मुहूर्त्तादिषु २९-५७। ५ गतेषु। द्वितीया कृत्तिका त्रिषु त्रिंशति अष्टादशसु च मुहूर्त्तादिषु ३-३०। १८ गतेषु। तृतीयाम् अश्विनी द्वाविंशतौ त्रिषु एकत्रिंशति च २२-३। ३१ मुहूर्त्तादिषु गतेषु। चतुर्थी कार्त्तिकी कृत्तिका षोडशसु त्रिचत्वारिंशति पञ्चचत्वारिंशति १६-४३। ४५ मुहूर्त्तादिषु गतेषु। पञ्चमी कार्त्तिकी पूर्णिमा भरणी पञ्चसु षोडशसु अष्टापञ्चाशति च मुहूर्त्तादिषु ५-१६। ५८ गतेषु परिसमापयन्ति। 'मग्गसिर णमि'-त्यादि-मार्गशीर्षी पूर्णिमा। शेषं व्यक्त। तत्र प्रथमा मृगशिरो नक्षत्रमेकविंशतौ शून्ये (दशसु) षट्सु च मुहूर्त्तादिषु, २१-(१०)०। ६ गतेषु। द्वितीया रोहिणी एकोनचत्वारिंशति पञ्चत्रिंशति एकोनविंशतौ च मुहूर्त्तादिषु ३९-३५। १९ गतेषु। तृतीया रोहिणी त्रयोदशसु अष्टसु द्वात्रिंशति च मुहूर्त्तादिषु १३-८। ३२ गतेषु। चतुर्थी मृगशिर सप्तसु अष्टचत्वारिंशति षट्चत्वारिंशति च मुहूर्त्तादिषु ७-४८। ४६ गतेषु। पञ्चमी मार्गशीर्षी पूर्णिमा रोहिणी षड्विंशति एकविंशति एकोनषष्टौ च मुहूर्त्तादिषु २६-२१। ५९ गतेषु परिसमापय। 'पोसि णमि, त्यादि। पौषी पौर्णिमासी, शेष प्राग्वत्। तत्र प्रथमा पौषी पौर्णमासी पुनर्वसुनक्षत्र द्विचत्वारिंशति पञ्चसु (सप्तदशसु) सप्तसु च क्रमेण मुहूर्त्तादिषु ४२-५। (१७) ७ गतेषु परिसमापय। एवं द्वितीया पौषी पुनर्वसु पञ्चदशसु चत्वारिंशति विंशतौ च मुहूर्त्तादिषु १५-४०। २० गतेषु। तृतीया पौषीमधिकमासा-दर्व्वाक्तनीमार्द्रानक्षत्र चतुर्षु त्रयोदशसु त्रयस्त्रिंशति च मुहूर्त्तादिषु ४-१३। ३३ गतेषु अधिकमाससम्भाविनी। पुनस्तामेव तृतीया पुष्यनक्षत्र दशसु अष्टादशसु चतुस्त्रिंशति च मुहूर्त्तादिषु १०-१८। ३४ गतेषु। चतुर्थी पुनर्वसु अष्टाविंशतौ त्रिपञ्चाशति सप्तचत्वारिंशति २८-५३। ४७ गतेषु। पञ्चमी-पौषी पूर्णिमा

पुनर्वसु द्वयो षड्विंशतौ षष्टौ २-२६ । ६० मुहूर्त्तादिषु गतेषु परिसमापय । 'माहिं णमि' त्यादि । माघी पौर्णमासी । शेषं व्यक्त । चशब्दात् काञ्चिन्माघी पूर्व्वफाल्गुनीनक्षत्र काञ्चित्पुष्यनक्षत्र च । तत्र प्रथमा माघी मघा नक्षत्रं अष्टादशसु दशसु अष्टेसु च मुहूर्त्तादिषु १८-१० । ८ गतेषु । द्वितीयामश्लेषा (एकविंशतौ) षट्षु पञ्चचत्वारिंशति एकविंशतौ च मूहूर्त्तादिषु (२१) ६-४५ । २१गतेषु । तृतीया पूर्व्वफाल्गुनी एकस्मिन् त्रयोविंशतौ पञ्चत्रिंशतौ च मुहूर्त्तादिषु १-२३ । ३५ गतेषु । चतुर्थी माघी मघा नक्षत्र चतुर्षु अष्टपञ्चाशति अष्टचत्वारिंशति मुहूर्त्तादिषु ४-५८ । ४८ गतेषु । पञ्चमी माघी पुष्यनक्षत्र त्रयोविंशतौ एकत्रिंशति एकषष्टौ च क्रमेण मुहूर्त्तादिषु २३-३१ । ६१ गतेषु परिसमापय । 'फग्गुणि णमि' त्यादि । फाल्गुनी पौर्णमासी । शेषं सुगम । तत्र प्रथमा फाल्गुनी पूर्णिमामुत्तरफाल्गुनीनक्षत्र चतुर्त्रिंशतौ पञ्चदशसु नवसु च क्रमेण मुहूर्त्तादिषु २४-१५ । ९ गतेषु परिसमापय । द्वितीया पूर्व्वफाल्गुनी सप्तविंशतौ पञ्चाशति द्वाविंशतौ च मुहूर्त्तादिषु २७-५० । २२ गतेषु । तृतीया फाल्गुनीमुत्तरफाल्गुनी सप्तत्रिंसति अष्टाविंशतौ षट्त्रिंशति च मुहूर्त्तादिषु ३७-२८ । ३६ गतेषु । चतुर्थीमुत्तरफाल्गुनीनक्षत्रं एकादशसु एकस्मिन् एकोनपञ्चाशति च मुहूर्त्तादिषु ११-१ । ४९ गतेषु । पञ्चमी फाल्गुनीपूर्णिमामुत्तरफाल्गुनीनक्षत्र चतुर्दशसु षट्त्रिंशति द्वाषष्टौ च क्रमेण मुहूर्त्तादिषु १४-३६ । ६२ गतेषु परिसमापय । 'चित्ति णमि' त्यादि । चैत्री पौर्णमासी द्वे नक्षत्रे युक्त इत्यादि प्राग्वत् । तत्र प्रथमा चैत्री पौर्णमासी चित्रानक्षत्र पञ्चदशसु विंशतौ दशसु च क्रमेण मुहूर्त्तादिषु १५-२० । १० गतेषु । द्वितीया चैत्री हस्तनक्षत्रमष्टादशसु पञ्चपञ्चाशति त्रयोविंशतौ च मुहूर्त्तादिषु १८-५५ । २३ गतेषु । तृतीया चैत्री चित्रानक्षत्रमष्टाविंशतौ त्रयस्त्रिंशति सप्तत्रिंशति च मुहूर्त्तादिषु २८-३३ । ३७ गतेषु । चतुर्थी चैत्री चित्रा नक्षत्रं द्वयो षट्सु पञ्चाशति च मुहूर्त्तादिषु २-६ । ५० गतेषु । पञ्चमी चैत्री चित्रा नक्षत्र पञ्चसु एकचत्वारिंशति त्रिषष्टौ च मुहूर्त्तादिषु ५-४१ । ६३ गतेषु परिसमापयति । 'विसाहि णमि' त्यादि । वैशाखी पौर्णमासी द्वे नक्षत्रे युक्त । स्वातिर्विशाखा चेति । चशब्दादनुराधा च । इदमत्र-नुराधानक्षत्र विशाखात पर विशाखा चास्या पौर्णमास्या प्रधाना तत परस्यामेव पौर्णमास्या तत्सान्निध्यात्-क्षादुपात्तमेहेति । तत्र प्रथमा वैशाखी पौर्णमासी विशाखानक्षत्र षट्त्रिंशति पञ्चविंशतौ एकादशसु च मुहूर्त्तादिषु ३६-२५ । ११ गतेषु । द्वितीया वैशाखी विशाखानक्षत्र नवसु षष्टौ चतुर्विंशतौ च मुहूर्त्तादिषु ९-६० । २४ गतेषु । तृतीयामनुराधानक्षत्र चतुर्षु अष्टात्रिंशति अष्टात्रिंशति च मुहूर्त्तादिषु ४-३८ । ३८ गतेषु । चतुर्थी विशाखानक्षत्र त्रयोविंशतौ एकादशसु एकपञ्चाशति च मुहूर्त्तादिषु २३-११ । ५१ गतेषु । पञ्चमी वैशाखी स्वातिनक्षत्र एकादशसु षट्चत्वारिंशति चतुष्षष्टौ च मुहूर्त्तादिषु ११-४६ । ६४ गतेषु परिसमापयति । 'जेट्ठामूली णमि' त्यादि । ज्येष्ठामूली पौर्णमासी त्रीणि नक्षत्राणि युञ्जन्ति । अनुराधा, ज्येष्ठा, मूल चेति । तत्र प्रथमा ज्येष्ठामूली पौर्णमासी मूलनक्षत्र द्वादशसु त्रिंशति द्वादशसु च मुहूर्त्तादिषु १२-३० । १२ गतेषु । द्वितीया ज्येष्ठानक्षत्र एकस्मिन् त्रिषु पञ्चविंशतौ च मुहूर्त्तादिषु १-३ । २५ गतेषु । तृतीया मूलनक्षत्रं पञ्चविंशतौ त्रिचत्वारिंशति एकोनचत्वारिंशति च मुहूर्त्तादिषु २५-४३ । ३९ गतेषु ।

चतुर्थी ज्येष्ठामूली ज्येष्ठानक्षत्रं चतुर्दशसु षोडशसु द्विपञ्चाशति च मुहूर्त्तादिषु १४-१६ । ५२ गतेषु । पञ्चमी ज्येष्ठामूलीमनुराधानक्षत्रं सप्तदशसु एकपञ्चाशति पञ्चषष्टौ च मुहूर्त्तादिषु १७-५१ । ६५ गतेषु परिसमापयति । 'आसाढी णमि' त्यादि । आसाढी पौर्णमासी द्वे नक्षत्रे युङ्क्त इत्यादि व्यक्तं । तत्र प्रथमामाषाढी पूर्णिमामुत्तराषाढानक्षत्रमष्टादशसु पञ्चत्रिंशति त्रयोदशसु च मुहूर्त्तादिषु १८-३५ । १३ गतेषु । द्वितीया पूर्णिमा पूर्वाषाढानक्षत्रं द्वात्रिंशतौ अष्टासु षड्विंशतौ च मुहूर्त्तादिषु ३२-८ । २६ गतेषु । तृतीयामाषाढीमुत्तराषाढा नक्षत्रमेकत्रिंशति अष्टचत्वारिंशति चत्वारिंशति च मुहूर्त्तादिषु ३१-४८ । ४० गतेषु । चतुर्थीमाषाढीमुत्तराषाढानक्षत्रं पञ्चसु एकविंशतौ त्रिपञ्चाशति च मुहूर्त्तादिषु ५-२१ । ५३ गतेषु । पञ्चमीमाषाढीमधिकमासादर्वाचीनीं पूर्वाषाढानक्षत्रमष्टसु षट्पञ्चाशति षट्-षष्टौ च मुहूर्त्तादिषु ८-५६ । ६६ गतेषु परिसमापयति । अधिकमाससम्बन्धिनीं पुनस्तामेव पञ्चमीमाषाढी पौर्णमासीमुत्तराषाढा नक्षत्रं स्वयमेव परिसमाप्नुवत् परिसमापयति । किमुक्तं भवति-एकत्र पञ्चम्याषाढी पौर्णमासी परिसमाप्तिमेति । अन्यत्र योगमधिकृत्योत्तराषाढा नक्षत्रमिति । तदेवं यानि नक्षत्राणि या पौर्णमासी युञ्जन्ति तान्युक्तानि । अथ गतार्थमपि मन्दमतिव्युत्पत्त्यर्थम् उक्तार्थदार्ढ्यार्थं च कुलादि-योजनां प्रश्नयति- साविट्ठि णं भंते !' इत्यादि । श्राविष्ठी भदन्त ! पौर्णमासी किं कुलं युनक्ति ? इत्यादि प्रश्ननिर्वचने सुगमे । 'तत्र कुलं युञ्जद्धनिष्ठानक्षत्रं तस्यैव कुलप्रसिद्धस्य सतः श्राविष्ठ्या पौर्णमास्या भावात् । उपकुलं युञ्जत् श्रवणनक्षत्रं युनक्ति । कुलोपकुलं युञ्जत् अभिजिन्नक्षत्रं युनक्ति । तद्धि तृतीयायां श्राविष्ठ्या पौर्णमास्या द्वादशसु मुहूर्त्तेषु किञ्चित्समधिकेषु शेषेषु चन्द्रेण सह योगमुपैति । ततः श्रवणसहचरत्वात् स्वयमपि तस्याः पौर्णमास्याः पर्यन्ते वर्त्तमानत्वात् तदपि तां परिसमापयतीति विवक्षितत्वाद्युनक्तीत्युक्तम् । सू० प्र० वृत्तौ । अथोक्तवक्तव्यतां पुरस्कृत्योपसंहारमाह- 'साविट्ठी णमि' त्यादि । यतस्त्रिभिरपि कुलादिभिः श्राविष्ठ्यां पौर्णमास्यां योजनाऽस्ति तत एव श्राविष्ठी पौर्णमासी कुलं वा युनक्ति यावत्कुलोपकुलं वा युनक्तीति वक्तव्यं स्यादिति स्वशिष्येभ्यः प्रतिपादनं कुर्यात् । यदि वा कुलेन वा युक्ता सती श्राविष्ठी, उप-कुलेन वा युक्ता कुलोपकुलेन वा युक्तेति वक्तव्यं स्यात् । 'पोट्ठवइ णं भंते !' इत्यादि । 'वत्तव्वयं सिआ' त्ति । पर्यन्तं श्राविष्ठीवद्वक्तव्यं । 'आसोइ णमि' त्यादि । अत्रापि योजना प्राग्वत् । 'नवरं णो लब्भति' त्ति । कुलोपकुलं न लभते- न युनक्तीत्यर्थ । 'कत्तिगिण्णमि' त्यादि, 'मिग्गसिरि णमि' त्यादि च सूत्रद्वयं प्राग्वत् । अथ शेषपूर्णिमाविषयेऽतिदेशमाह- 'एवं सेसिआओ' त्ति । एवं शेषा अपि पूर्णिमा वक्तव्या । 'जाव' त्ति । यावदाषाढी पौर्णमासी । यावत्करणात् पौषी माघी, फाल्गुनी, चैत्री वैशाखी ज्येष्ठामूली चेतिसङ्ग्रह । नवरं पौषी ज्येष्ठामूली च पूर्णिमा कुलमपि उपकुलमपि, कुलोपकुलमपि च युनक्तीति शेष । शेषासु पौर्णमासीसु कुलोपकुलं नास्तीति भाव । इत्येवं पौर्णमासीवक्तव्यताऽभिहिता । अथाऽमावस्याया वक्तव्य-तामाह- साविट्ठि णं भंते !' इत्यादि । श्राविष्ठी मासपरिसमापकेन श्रविष्ठानक्षत्रेणोपलक्षितो य श्रावणो मास सोऽप्युपचारात् श्रविष्ठा, तत्र भवा श्राविष्ठी । किमुक्तं भवति- श्रविष्ठानक्षत्रपरिसमाप्यमान-श्रावणमासभाविनीममावास्याम् । एवमग्रेऽप्यभिधानार्थ, परिभावनीया । भदन्त ! कति नक्षत्राणि

युञ्जन्ति ?-यथायोग चन्द्रेण सह संयुज्य श्राविष्ठीममावास्या परिसमापयन्ति ? इति प्रश्नार्थः । भगवानाह-गौतम ! द्वे नक्षत्रे युङ्क्त. । तद्यथा-अश्लेषा मघा चेति । इह व्यवहारनयमतेन यस्मिन्नक्षत्रे पौर्णमासी भवति तत आरभ्यार्वाक्तने पञ्चदशे नक्षत्रेऽमावास्या भवति, यस्मिंश्च नक्षत्रेऽमावास्या तत आरभ्यपरतः पञ्चदशे नक्षत्रे पौर्णमासी । तत्र श्राविष्ठी पौर्णमासी किल श्रवणे धनिष्ठायां चोक्ता । ततः श्राविष्ठ्याममावास्यायामप्यस्यामश्लेषा मघाश्चोक्ता । लोके च तिथिगणनाऽनुसारतो गतायामप्यमावास्यायां वर्त्तमानायामपि च प्रतिपदि यस्मिन्नहोरात्रे प्रथमतोऽमावास्याऽभूत् स सकलोऽप्यहोरात्रोऽमावास्येति व्यवह्रियते । मघानक्षत्रमप्येव व्यवहारतोऽमावास्यायां प्राप्यते इति न कश्चिद्विरोध । परमार्थतः पुनरिमां श्राविष्ठीममावास्यामिमानि त्रीणि नक्षत्राणि परिसमापयन्ति । तद्यथा-पुनर्वसु पुष्योऽश्लेषा चेति । अत्रापि चन्द्रयोगपरिज्ञानार्थं करण ज्योतिष्करण्डकैकोनविंशतितमप्राभृतात् सूर्यप्रज्ञप्तीत्यादिभ्यो वा द्रष्टव्यम् । तत्तात्पर्यं तु प्रत्यमावास्या वक्ष्यमाण त्वेव-प्रथमा श्राविष्ठीममावास्यामश्लेषानक्षत्र त्रयोदशसु मुहूर्त्तेषु, एकस्य च मुहूर्त्तस्य एकविंशतौ द्वाषष्टि भागेषु, एकस्य च द्वाषष्टि भागस्य एकस्मिन् सप्तषष्टिभागे १३-२१ । १ गतेषु समाप्तिमुपनयति । एवं मुहूर्त-भाग-भागभागाऽनुक्रमेण द्वितीया श्राविष्ठीममावास्या पुष्यनक्षत्र षोडशसु, षट्पञ्चाशति चतुर्दशसु च १६-५६। १४ गतेषु परिसमापयति । तृतीयां पुनर्वसु पञ्चविंशति, एकोनत्रिंशति, सप्तविंशतौ च मुहूर्त्तादिषु २५-२९ । २७ गतेषु । चतुर्थीमश्लेषा शून्ये सप्तसु, एकचत्वारिंशति च मुहूर्त्तादिषु ०-७ । ४१ गतेषु । पञ्चमी श्राविष्ठीममावास्या पुष्य त्रिषु, द्विचत्वारिंशति, चतुःपञ्चाशति च मुहूर्त्तादिषु ३-४२ । ५४ गतेषु परिसमापयति । पोट्ठवति णमि' त्यादि व्यक्तम् । इदमपि व्यवहारत । परमार्थतः पुनस्त्रीणि नक्षत्राणि मघादीनि । तत्र प्रथमा प्रोष्ठपदीममावास्यामुत्तरफाल्गुनी चतुर्षु षड्विंशतौ, द्वयोर्मुहूर्त्तादिषु ४-२६ । २ गतेषु । द्वितीयां च पूर्वफाल्गुनीनक्षत्र सप्तसु एकषष्टौ, पञ्चदशसु च मुहूर्त्तादिषु ७-६१ । १५ गतेषु । तृतीया पुनर्मघानक्षत्रं एकादशसु, चतुस्त्रिंशति, अष्टाविंशतौ च मुहूर्त्तादिषु ११-३४ । २८ गतेषु । चतुर्थी पूर्वाफाल्गुनी एकविंशतौ, द्वादशसु, द्विचत्वारिंशति मुहूर्त्तादिषु २१-१२ । ४२ गतेषु । पञ्चमी प्रोष्ठपदीममावास्या मघानक्षत्र चतुर्विंशतौ सप्तचत्वारिंशति, पञ्चपञ्चाशति च मुहूर्त्तादिषु २४-४७ । ५५ गतेषु परिसमापयन्ति । 'आसोइ णं भंते !' इत्यादि । हस्त, चित्रा चेति द्वे नक्षत्रे व्यवहारत । निश्चयत पुनराश्वयुजीमुत्तरफाल्गुनी, हस्तश्चेति द्वे अवसातव्ये । तद्यथा-प्रथमाऽऽश्वयुजीममावास्या हस्त पञ्चविंशतौ, एकत्रिंशति, त्रिषु च मुहूर्त्तादिषु २५-३१ । ३ गतेषु । द्वितीयामाश्वयुजीमुत्तरफाल्गुनी चतुश्चत्वारिंशति, चतुर्षु, षोडशसु च मुहूर्त्तादिषु ४४-४ । १६ गतेषु । तृतीयामाश्वयुजीमुत्तरफाल्गुनी सप्तदशसु, एकोनचत्वारिंशति, एकोनत्रिंशति च मुहूर्त्तादिषु १७-३९ । २९ गतेषु । चतुर्थीमाश्वयुजी हस्तो द्वादशसु, सप्तदशसु, त्रिचत्वारिंशति च मुहूर्त्तादिषु १२-१७ । ४३ गतेषु । पञ्चमीमाश्वयुजीममावास्यामुत्तरफाल्गुनीनक्षत्र त्रिंशति, द्विपञ्चाशति षट्पञ्चाशति च मुहूर्त्तादिषु ३०-५२ । ५६ गतेषु परिसमापयतीति । 'कत्तइ णमि' त्यादि । कार्त्तिकीममावास्या णमिति प्राग्वत् । स्वातिर्विशाखा चेति द्वे नक्षत्रे युङ्क्त इति व्यवहारत. । निश्चयतः

पुनस्त्रीणि चित्रादीनि नक्षत्राणि परिसमापयन्ति । तद्यथा-प्रथमा कार्त्तिकीममावास्या विशाखा नक्षत्र षोडशसु, षट्त्रिंशतौ, चतुर्षु च मुहूर्त्तादिषु १६-३६ । ४ गतेषु । द्वितीया कार्त्तिकी स्वाति पञ्चसु, नवसु, सप्तदशसु, च मुहूर्त्तादिषु ५-९ । १७ गतेषु । तृतीया कार्त्तिकी चित्रानक्षत्रमष्टसु, चतुश्चत्वारिंशति, त्रिंशति च मुहूर्त्तादिषु ८-४४ । ३० गतेषु । चतुर्थी कार्त्तिकी विशाखा (त्रयोदशसु) त्रिषु, द्वाविंशतौ, चतुश्चत्वारिंशति च मुहूर्त्तादिषु (१३) ३ २२ । ४४ गतेषु । पञ्चमी कार्त्तिकीममावास्या चित्रानक्षत्रम् एकविंशतौ, सप्तपञ्चाशति, सप्तपञ्चाशति च मुहूर्त्तादिषु २१-५७ । ५७ गतेषु परिसमापयन्ति । 'मग्ग-सिरि णमि' त्यादि । मार्गशीर्षीममावास्याम् अनुराधा-ज्येष्ठा-मूलनामानि त्रीणि नक्षत्राणि व्यवहारत । निश्चयत पुनर्विशाखादीनि त्रीणि नक्षत्राणि परिसमापयन्ति । तद्यथा-प्रथमा मार्गशीर्षीममावस्या ज्येष्ठा-नक्षत्र सप्तसु, एकचत्वारिंशति, पञ्चसु च मुहूर्त्तादिषु ७-४१ । ५ गतेषु । द्वितीयमनुराधानक्षत्रम् एकादशसु, चतुर्दशसु, अष्टादशसु च मुहूर्त्तादिषु ११-१४ । १८ गतेषु । तृतीया मार्गशीर्षी विशाखा एकोनत्रिंशति, एकोनपञ्चाशति, एकत्रिंशतौ च मुहूर्त्तादिषु २९-४९ । ३१ गतेषु । चतुर्थीमनुराधा चतुर्विंशतौ, सप्त-विंशतौ, पञ्चचत्वारिंशति च मुहूर्त्तादिषु २४-२७ । ४५ गतेषु । पञ्चमी मार्गशीर्षीममावास्या विशाखा त्रिचत्वारिंशति, शून्ये, अष्टपञ्चाशति च मुहूर्त्तादिषु ४३-० । ५८ गतेषु परिसमापयन्ति । 'पोसि णमि' त्यादि । पूर्वोत्तराषाढे द्वे नक्षत्रे युङ्क्त इति व्यवहारत । निश्चयत पुनर्मूलादीनि त्रीणि नक्षत्राणि परि-समापयन्ति । तथाहि-प्रथमा पौषीममावास्या पूर्वाषाढानक्षत्रमष्टाविंशतौ, षट्चत्वारिंशति, षट्सु च मुहूर्त्तादिषु २८-४६ । ६ गतेषु । द्वितीया पूर्वाषाढा द्वयोर्मुहूर्तयोरेकोनविंशतो, एकोनविंशतौ च मुहूर्त्ता-दिषु २-१९ । १९ गतेषु । (तृतीया पौषीमधिकमासादर्वाक्तनी मूलनक्षत्र पञ्चसु, चतुष्पञ्चाशति, द्वात्रिंशति च मुहूर्त्तादिषु ५-५४ । ३२ गतेषु) तृतीया (अधिकमास भाविनी) मुत्तराषाढा एकादशसु, एकोनषष्टौ, त्रयस्त्रिंशति च मुहूर्त्तादिषु ११-५९ । ३३ गतेषु । चतुर्थी पूर्वाषाढा पञ्चदशसु, (षट्पञ्चाशति) द्वात्रिंशति, षट्चत्वारिंशति च मुहूर्त्तादिषु १५-(५६) ३२ । ४६ गतेषु । पञ्चमी पौषीममावास्या मूलनक्षत्रमेकोन-विंशतौ, पञ्चसु (पञ्चाशति), एकोनषष्टौ च मुहूर्त्तादिषु १९-(५०) ५ । ५९ गतेषु परिसमापयन्ति । 'माहि णमि' त्यादि व्यक्त । नवरमभिजिच्छ्रवणो, धनिष्ठा चेति व्यवहारत । निश्चयत पुनरुत्तराषाढाऽभिजित् श्रवणश्चेति त्रीणि नक्षत्राणि । तथाहि-प्रथमा माघीममावास्या श्रवण दशसु, षड्विंशतौ, अष्टसु च मुहूर्त्तादिषु १०-२६ । ८ गतेषु । द्वितीया माघीम्-अभिजित् त्रिषु, षड्विंशतौ, विंशतौ च मुहूर्त्तादिषु ३-२६ । २० गतेषु (उत्तराषाढा अष्टात्रिंशति चतुर्विंशतौ विंशतौ च मुहूर्त्तादिषु ३८-२४ । २० गतेषु) । तृतीया माघी-श्रवण त्रयोविंशतौ, एकोनचत्वारिंशति, पञ्चत्रिंशति च मुहूर्त्तादिषु २३-३९ । ३५ गतेषु । चतुर्थी माघीम्-अभिजित् षट्सु, सप्तत्रिंशति, सप्तचत्वारिंशति च मुहूर्त्तादिषु ६-३७ । ४७ गतेषु । पञ्चमी माघीममावास्यामुत्तराषाढा पञ्चविंशतौ, दशसु; षष्टौ च मुहूर्त्तादिषु २५-१० । ६० गतेषु परिसमाप-यन्ति । 'फग्गुणि णमि' त्यादि व्यक्त । नवर शतभिषगादीनि व्यवहारत । निश्चयत पुनर्धनिष्ठादीनि त्रीणि नक्षत्राणि । तथाहि-प्रथमा फाल्गुनीममावास्या पूर्वभद्रपदा (षट्सु) एकस्मिन्, एकत्रिंशति, नवसु

च मुहूर्त्तादिषु ६ (१)-३१ । ९ गतेषु । द्वितीया धनिष्ठा विंशतौ, चतुर्षु, द्वाविंशतौ च मुहूर्त्तादिषु २०-४ । २२ गतेषु । तृतीया पूर्व्वाषाढा चतुर्द्दशसु, चतुश्चत्वारिंशति, षट्त्रिंशति, च १४-४८ । ३६ मुहूर्त्तादिषु गतेषु । चतुर्थी शतभिषक् त्रिषु, सप्तदशसु, एकोनपञ्चाशति च मुहूर्त्तादिषु ३-१७ । ४९ गतेषु । पञ्चमी च फाल्गुनीममावास्या धनिष्ठानक्षत्रं षट्सु, द्विपञ्चाशति, द्वाषष्टौ च मुहूर्त्तादिषु ६-५२ । ६२ गतेषु । परिसमापयन्ति । 'चित्ति णमित्यादि । चैत्रीममावास्या रेवती, अश्विनी चेति नक्षत्रद्वयं परिसमापयति । तदपि व्यवहारत. । निश्चयत पुन पूर्व्वभद्रपदा, उत्तरभद्रपदा, रेवती चेति त्रीणि नक्षत्राणि युञ्जन्ति । तथाहि-प्रथमा चैत्रीमनावास्यामुत्तरभद्रपदानक्षत्र सप्तत्रिंशति, षट्त्रिंशति, दशसु च मुहूर्त्तादिषु ३७-३६ । १० गतेषु । द्वितीयामुत्तरभद्रपदा एकादशसु, नवसु, त्रयोविंशतौ च मुहूर्त्तादिषु ११-९ । २३ गतेषु । तृतीया रेवती पञ्चसु, एकोनपचाशति, सप्तत्रिंशति च मुहूर्त्तादिषु ५-४९ । ३७ गतेषु । चतुर्थी (उत्तरभद्रपदा) चतुर्विंशतौ द्वाविंशतौ पञ्चाशति च मुहूर्त्तादिषु २४-२२ । ५० गतेषु । पञ्चमी चैत्रीममावास्यां पूर्व्वभद्रपदा सप्तविंशतौ, सप्तपञ्चाशति, त्रिषष्टौ च मुहूर्त्तादिषु २७-५७ । ६३ गतेषु परिसमापयन्ति । चन्द्रप्रज्ञप्त्यादौ तु-'चेत्ति ण तिण्णि-उत्तरभद्दवया, रेवई अस्सिणी अ'त्ति । पाठो दृश्यते । 'वईसाहिं णमि'त्यादि । भरणी कृत्तिका चेति व्यवहारत । निश्चयत पुना रेवत्यादीनि त्रीणि नक्षत्राणि वैशाखीममावास्या परिसमापयन्ति । तथाहि-प्रथमा वैशाखीमश्विनी अष्टाविंशतौ, एकचत्वारिंशति, एकादशसु च मुहूर्त्तादिषु २८-४१ । ११ गतेषु । द्वितीया चाश्विनी द्वयोश्चतुर्दशसु, (एकोनचत्वारिंशति) चतुर्विंशतौ (त्रयोविंशतौ) च मुहूर्त्तादिषु २-१४ (३९) । २४ (२३) गतेषु । तृतीया भरणी एकादशसु, चतुपञ्चाशति, अष्टात्रिंशति च मुहूर्त्तादिषु ११-५४ । ३८ गतेषु । चतुर्थीमश्विनी पञ्चदशसु सप्तविंशतौ, एकपञ्चाशति च मुहूर्त्तादिषु १५-२७ । ५१ गतेषु । पञ्चमी रेवती एकोनविंशतौ, शून्ये, चतुषष्टौ च मुहूर्त्तादिषु १९-० । ६४ गतेषु परिसमापयन्ति । 'जेट्ठामूलिमि'त्यादि । रोहिणी,मृगशिरश्चेति व्यवहारत' । निश्चयत पुन कृत्तिका, रोहिणी चेति द्वय । तथाहि प्रथमा ज्येष्ठामूलीममावास्या रोहिणी एकोनविंशतौ, षट्चत्वारिंशति, द्वादशसु च १९-४६ । १२ मुहूर्त्तादिषु गतेषु । द्वितीया कृत्तिका त्रयोविंशतौ, एकोनविंशतौ, पञ्चविंशतौ च मुहूर्त्तादिषु २३-१९ । २५ गतेषु । तृतीया रोहिणीनक्षत्रं द्वात्रिंशति, एकोनषष्टौ, एकोनचत्वारिंशति च मुहूर्त्तादिषु ३२-५९ । ३९ गतेषु । चतुर्थी रोहिणी षट्सु, द्वात्रिंशति, द्विपञ्चाशति च मुहूर्त्तादिषु ६-३२ । ५२ गतेषु । पञ्चमी ज्येष्ठामूलीममावास्या कृत्तिका दशसु, पञ्चसु, पञ्चषष्टौ च मुहूर्त्तादिषु १०-५ । ६५ गतेषु परिसमापयन्ति । 'आसाढि णमि'त्यादि । आर्द्रा, पुनर्वसु, पुष्यश्चेति व्यवहारत । निश्चयत. पुनर्मृगशीर्षादीनि त्रीणि नक्षत्राणि परिसमापयन्ति । तथाहि-प्रथमामाषाढीममावास्यामार्द्रानक्षत्र (द्वादशसु) दशसु, एकपञ्चाशति, त्रयोदशसु च मुहूर्त्तादिषु (१२) १०-५१ । १३ गतेषु । द्वितीया मृगशिर चतुर्द्दशसु, चतुर्विंशतौ, षड्विंशतौ च मुहूर्त्तादिषु १४-२४ । २६ गतेषु । तृतीयां, पुनर्वसु नवसु, द्वयोश्चत्वारिंशति च मुहूर्त्तादिषु ९-२ । ४० गतेषु । चतुर्थी मृगशिर सप्तविंशतौ, सप्तत्रिंशति, त्रिपञ्चाशति च मुहूर्त्तादिषु २७-३७ । ५३ गतेषु । (पञ्चमीमाषाढीमधिकमासादर्व्वाचीन

अथाऽनन्तरोक्तयोरन्वयव्यतिरेकयोस्तात्पर्यमाह-'केवलमि'ति । केवल परिवारद्धर्या-परिवारसमृद्धया एते सर्वेऽपि सपरिवारका अह तेषा स्वामीत्येव निजस्फीतिविशेषप्रदर्शनाभिप्रायेणेत्यर्थः । 'णो चेव ण'ति । न चैव-न पुनर्मैथुनप्रत्यय-मैथुननिमित्त स्पर्शादिभोग भुञ्जानो विहर्त्तुं प्रभुरिति तात्पर्यम् । अथ सामान्यतो ग्रहादीना देवीनामान्याह-'विजये'त्यादि । विजया, वैजयन्ती, जयन्ती, अपराजिता चेति । 'सव्वेसि'ति । सर्वेषा ग्रहादीना-ग्रहनक्षत्रताराणा एता-उक्तनामानोऽग्रमहिष्य वक्तव्या-भणितव्या । 'इमाहिं'ति । इमाभिर्गाथाभिरिदानी वक्ष्यमाणसङ्ग्रहणीगाथाभिरुक्तनाम्ना ग्रहादीनामिति गम्य । यद्यप्यत्र बहुष्वा-दर्शेषु अन्यथापि पाठो दृश्यते पर-तथापि व्याख्यातपाठस्यैवोपादेयत्व द्रष्टव्य । जीर्णादर्शेषु तथैव दृष्टत्वाज्जी-वाभिगमसङ्गतत्वाच्च ता गाथा आह-'बम्हे विण्हू० पिउभग०' । ब्रह्मा अभिजित्, विष्णु श्रवण , वसुर्द्ध-निष्ठा, वरुणः शतभिषक्, अज पूर्वभद्रपदा, वृद्धिरुत्तरभद्रपदा, ज्योति शास्त्रे चाऽहिर्बुध्न इति । पूषा रैवती, अश्वोऽश्विनी, यमो भरणी, अग्नि कृत्तिका, प्रजापती रोहिणी, सोमो मृगशिर , रुद्र आर्द्रा, अदिति पुनर्वसु , बृहस्पति पुष्य , सार्प्पोऽश्लेषा, पितृ मघा, भग पूर्वफाल्गुनी, अर्यमा उत्तरफाल्गुनी, सविता हस्त , त्वष्ट्रा चित्रा, वायु स्वाति , ऐन्द्राग्नी विशाखा, मित्रोऽनुराधा, इन्द्रो ज्येष्ठा, नैर्ऋति-र्मूलम्, । आप पूर्वाषाढा, विश्वे उत्तराषाढा चेति । द्विगुणीकृतानि षट्पञ्चाशन्नक्षत्राणि जम्बूद्वीपे भवन्ति । यद्यप्येते नक्षत्राणामधिष्ठायकत्वेन स्वामिन प्रागभिहिता , तथापि स्वस्वामिभावसम्बन्धाल्ल-क्षणया एतन्नामकानि नक्षत्राण्यप्युच्यन्ते । यद्वा-एतदुपलक्षितनामकानि नक्षत्राणि भवन्तीति स्वय परि-भावनीयानि । तथाहि-ब्रह्मा देवताऽस्येति ब्राह्म्य, ब्रह्मदैवत, ब्रह्मभ, ब्रह्मनक्षत्र चेति नामभिरभिजिन्न-क्षत्रम् । एव यावत् वैश्व, विश्व दैवत, विश्वभ, विश्वनक्षत्रमित्यादिना उत्तराषाढा नक्षत्रमुच्यते । यच्चाऽत्रा-ऽऽदिशब्दगृहीताना नक्षत्राणा नामसङ्ग्रहणीगाथाद्वय प्रथमतयोपदर्शित तदल्पसङ्ख्यावत्वेनाल्पवक्तव्य-त्वादवसातव्यम् । अथ ग्रहाणा नामसङ्ग्रहणीगाथाद्वयमाह- इगालय'इत्यादि । अङ्गारको, विकालो, लोहिताक्ष', शनैश्चर', आधुनिक , प्राधुनिक , 'कणग'त्ति । कणकेन सहैकदेशेन समान नाम येषा ते कनकसनामान । ते च पञ्चैव क्रमेण द्रष्टव्या । तथाहि-कण , कणक कणकणक', कणकवितानक , कणकसन्तानक., सोम , सहितो-ऽश्वासन , कार्योपग , कर्च्चुर , अजकरक , दुन्दुभक , 'सखसनामावि'त्ति । प्रागुक्तव्युत्पत्या शङ्खसमाननामानस्त्रय । तथाहि-शङ्ख , शङ्खनाभ , शङ्खवर्णाभ एव भाणि-अव्व'ति । एव प्रागुक्तप्रकारेण भणितव्य । यावद्भाव-केत्वो -सप्ताशीत्यष्टाशीतितमयोर्ग्रहयोरग्रमहिष्य । प्राकृतत्वात्समाहाराद्वा एकत्वप्रयोग । यावत्करणात् शेषग्रहाणा सङ्ग्रहार्थमुक्तशेषा सङ्ग्रहणीगाथा यथा-"तिन्नेव कसनामा नीले रुप्पि अ हवति चत्तारि । भास तिल पुप्फवण्ण दग दगवण्णे काय वझे अ ॥३॥ इदग्गि धूमकेतु हरि पिंगलए बुहे अ सुक्के स । वहस्सई राहु अगच्छी माणवगे कामफासे अ ॥४॥ धुरए पमुहे विअडे विसधिकप्पे तहा पगप्पे अ । जडालए अ अरुणे अग्गिअ काले महाकाले ॥५॥ सोत्थिअ सोवत्थिअए वद्धमाणग तहा पलवे अ । निच्चालोए निच्चुज्जोए अ सयमपभे चेव ओभासे ॥६॥ सेअंकर खेमंकर आभंकर पभंकरे अ बोद्धव्वे । अरए विरए अ तहा असोग तह वीअसोगे अ ॥७॥

होइ वितत्त विवत्थे विसाल तह साल सुव्वए चेव । अणिअट्टी एगजडी होइ विजडी अ बोद्धव्वे ॥८॥
कर करए रायग्गल बोद्धव्वे पुप्फ भाव केऊ अ । अट्ठासीइ गहा खलु णायव्वा आणुपुव्वीए ॥९॥

इति । आसा व्याख्या–तिन्नेवे'त्यादि । य कसनामान । तद्यथा–'कंस', कसनाभ', कसवर्णाभ', 'नीलीरुप्पि अ हवति चत्तारि' त्ति । नीले रुप्ये च शब्दे विषयभूते द्विद्विनामसम्भवात् सर्वसङ्ख्यया चत्वार । तद्यथा–नील, नीलावभास, रूप्पी, रुप्यवभास, भासेति नाम द्वयोपलक्षण । तद्यथा-भस्मः, भस्मराशि, तिल, पुष्पवर्ण., दक., दकवर्ण, काय, वन्ध्य., इन्द्राग्नि', धूमकेतु, हरि, पिङ्गल. बुध., शुक्र, बृहस्पति, राहु, अगस्ति, माणवक, कामस्पर्श., धुर, प्रमुख., विकट, विसन्धिकल्प., प्रकल्प, जटाल, अरुण, अग्नि, काल, महाकाल, स्वस्तिक., सौवस्तिक, वर्धमानक., प्रलम्ब, नित्यालोक., नित्योद्योत, स्वयप्रभ, अवभास., श्रेयस्कर, क्षेमङ्कर., आभङ्कर, प्रभङ्कर, अरजाः, विरजा, अशोक, वीतशोक, वितत, विवस्त्र, विशाल, शाल', सुव्रत, अनिवृत्ति, एकजटी, द्विजटी, कर., करिक. राजा, अर्गल, पुष्प, भाव, केतुश्चेत्यष्टाशीतिर्ग्रहा आनुपूर्व्या ज्ञातव्या इति । एते च द्विगुणीकृता भवन्ति षट्सप्तत्यधिक शतमेकम् । अथ ज्योतिष्कानामायु स्थितिस्वरूप पञ्चदश द्वारमाह–'चदविमाणे णमि'त्यादि । चन्द्रविमाने भदन्त ! देवाना कियन्त काल स्थिति. प्रज्ञप्ता ? । भगवानाह–गौतम ! जघन्येन चतुर्भाग–पल्योपम–पल्योपमस्य चतुर्थो भाग इत्यर्थ । उत्कर्षत पल्योपम वर्षशतसहस्राऽभ्यधिक । चन्द्रविमाने हि चन्द्रदेव उत्पद्यते, अन्ये–तत्सामानिकाऽऽत्मरक्षकादयः । तत्र चन्द्रसमस्तु सामानिकानामुत्कृष्टा, जघन्या चाऽऽत्मरक्षकादीनामिति । 'चदविमाणे णमि'त्यादि । चन्द्रविमाने भदन्त ! देवीना कियन्त काल स्थिति प्रज्ञप्ता ? । भगवानाह–गौतम ! जघन्येन चतुर्भागपल्योपममुत्कर्षत पल्योपमार्द्ध पञ्चाशता वर्षसहस्रैरभ्यधिक । 'सूरविमाणे णमि'त्यादि । चन्द्रविमानदेवादीनामिव सूर्यविमानविषयाण्यपि स्थितिसूत्राणि वाच्यानि । नवरमुत्कर्षत पल्योपम वर्षसहस्राभ्यधिकम्, अर्द्धपल्योपम च पञ्चभिर्वर्षशतैरभ्यधिकमिति । 'गहविमाणे णमि'त्यादि । ग्रहविमाने देवाना जघन्यतश्चतुर्भागपल्योपमम् उत्कर्षत परिपूर्ण पल्योपमं । ग्रहविमाने देवीना जघन्येन चतुर्भागपल्योपमम्, उत्कर्षतोऽर्द्धपल्योपम । 'नक्खत्तविमाणे णमि'त्यादि । नक्षत्रविमाने देवाना जघन्येन चतुर्भागपल्योपमम्, उत्कर्षतोऽर्द्धपल्योपम नक्षत्रविमाने देवीना जघन्येनाष्टभागपल्योपमम्, उत्कर्षतश्चतुर्भागपल्योपम । 'ताराविमाणे णमि'त्यादि । ताराविमाने देवाना जघन्येनाष्टभागपल्योपमम्, उत्कर्षेण चतुर्भागपल्योपम, देवीना जघन्यतोऽष्टभागपल्योपममुत्कर्षतः सातिरेकमष्टभागपल्योपममिति ।

अथ ज्योतिष्कानामल्पबहुत्ववक्तव्यतात्मक षोडश द्वारमाह —

**एतेसि णं भंते ! चंदिम सूरिअ–गह णक्खत्त–तारारूवाणं कयरे कयरेहिंतो अप्पा वा बहुआ वा तुल्ला वा विसेसाहिआ वा ? । गो० ! चंदिम–सूरिआ दुवे तुल्ला सव्वत्थोवा,**

णक्खत्ता संखेज्जगुणा, गहा संखेज्जगुणा, तारारूवा संखेज्जगुणा। जंबुद्दीवे णं भंते! दीवे जहण्णपए वा उक्कोसपए वा केवइआ तित्थगरा सव्वग्गेणं प०?। गो०! जहण्णपए चत्तारि, उक्कोसपए चोत्तीसं तित्थगरा सव्वग्गेणं पण्णत्ता। जंबुद्दीवे णं भंते! दीवे केवइआ जहण्णपए उक्कोसपए वा चक्कवट्टी सव्वग्गेणं पण्णत्ता?। गो०! जहण्णपए चत्तारि, उक्कोसपए तीसं चक्कवट्टी सव्वग्गेणं पण्णत्ता। बलदेवा वि तत्तिआ चेव जत्तिआ चक्कवट्टी। वासुदेवा वि तत्तिआ चेव। जंबुद्दीवे दीवे केवइआ णिहिरयणा सव्वग्गेणं प०?। गो०! तिण्णि छलुत्तरा णिहिरयणसया सव्वग्गेणं पण्णत्ता। जंबुद्दीवे दीवे केवइआ रयणसया परिभोगत्ताए हव्वमागच्छंति?। गो०! जहण्णपए छत्तीसं उक्कोसपए दोण्णि सत्तरा णिहिरयणसया परिभोगत्ताए हव्वमागच्छंति। जंबुद्दीवे दीवे केवइआ पंचिंदिअरयणसया सव्वग्गेणं प०?। गो०! दो दसुत्तरा पंचिंदिअरयणसया सव्वग्गेणं पण्णत्ता। जंबुद्दीवे दीवे जहण्णपए वा उक्कोसपए वा केवइआ पंचिंदिअरयणसया परिभोगत्ताए हव्वमागच्छंति?। गो०! जहण्णपए अट्ठावीसं उक्कोसपए दोण्णि अ दसुत्तरा पंचिंदिअरयणसया परिभोगत्ताए हव्वमागच्छंति। जंबुद्दीवे णं भंते! दीवे केवइआ एगिंदिअरयणा सव्वग्गेणं०?। गो०! दो दसुत्तरा एगिंदियरयणसया सव्वग्गेणं पण्णत्ता। जंबुद्दीवे णं भंते! दीवे केवइआ एगिंदिअरयणसया परिभोगत्ताए हवमागच्छंति?। गो०! जहण्णपए अट्ठावीसं, उक्कोसेणं दोण्णि दसुत्तरा एगिंदिअरयणसया परिभोगत्ताए हव्वमच्छंति॥

'एएसि णमि'त्यादि एतेषां भदन्त! चन्द्र-सूर्य-ग्रह-नक्षत्र-तारारूपाणां कतरे कतरेभ्योऽल्पा? कतरे कतरेभ्यो बहुका? कतरे कतरैस्तुल्या? अत्र पञ्चमी तृतीयार्थे व्याख्येया। कतरेभ्यो विशेषाधिका वा?। भगवानाह-गौतम! चन्द्रसूर्या एते द्वयेऽपि परस्परं तुल्या-प्रतिद्वीपं प्रतिसमुद्रं च चन्द्रसूर्याणां समसङ्ख्याकत्वात् शेषेभ्यो ग्रहादिभ्यः सर्व्वेभ्योऽपि स्तोका, तेभ्योऽपि नक्षत्राणि सङ्ख्येयगुणानि-अष्टाविंशतिगुणत्वात्, तेभ्यो ग्रहा सङ्ख्येयगुणा-सातिरेकत्रिगुणत्वात्, तेभ्योऽपि तारा सङ्ख्येयगुणा-प्रभूतकोटीकोटीगुणत्वादिति। इति सङ्ग्रहणीगाथाद्वयोक्तानि षोडश द्वाराणि व्याख्यातानि। अथ जम्बूद्वीपे जघन्योत्कृष्टपदाभ्यां तीर्थंकरादीन् पृच्छति-'जंबुद्दीवे णमि'त्यादि। जम्बूद्वीपे भदन्त! द्वीपे जघन्यपदे-सर्व्वस्तोकपदे सर्व्वबहुत्वपदे कति तीर्थंकरा सर्व्वाग्रेण प्रज्ञप्ता?। भगवानाह-गौतम! जघन्यपदे चत्वारः उत्कर्षपदे चतुस्त्रिंशत् परिमितास्तीर्थंकरा सर्व्वाग्रेण प्रज्ञप्ता। तत्र जघन्यपदे चत्वारस्तीर्थंकरा महाविदेहेष्वेव द्वात्रिंशतो विजयानामन्यतरेषु चतुर्षु विजयेषु भवन्ति। उत्कृष्टपदे तु चतुस्त्रिंशत्तीर्थंकरा

भरतैरावतयोर्द्वात्रिंशति विजयेषु च प्रत्येकमेकैकमद्भावेनावसातव्या' । 'जंबुद्दीवे णमि'त्यादि । जघन्यपदे चत्वार, उत्कृष्टपदे तु त्रिंशत् चक्रवर्त्तिनो भवन्ति । तद्यथा—अष्टाविंशतिर्महाविदेषु एको भरते एकश्चैरवते क्षेत्रे शेषेषु च चतुर्षु विजयेषु चत्वारो वासुदेवा जघन्यपदवर्त्तिनो भवन्ति । एव वासुदेवसूत्रेऽपि वक्तव्य । यतो यदा उत्कृष्टपदवर्त्तिनो वासुदेवा तदा जघन्यपदवर्त्तिनश्चक्रवर्त्तिन. स्युरितिशेष सुगम । 'वलदेवा वि'त्ति । वलदेवा अपि तावन्त एव यावन्तश्चक्रवर्त्तिन जघन्यपदे चत्वार, उत्कृष्टपदे त्रिंशदित्यर्थ । 'वासुदेव'त्ति । वासुदेवा अपि तावन्त एव-चक्रवर्त्तितुल्या एव जघन्यतश्चत्वार., उत्कृष्टतस्तु त्रिंशदिति । अथ जम्बूद्वीपे निधिरत्नसङ्ख्या पृच्छति- जंबुद्दीवे' इत्यादि । जम्बूद्वीपे द्वीपे कियन्ति निधिरत्नानि सर्व्वाऽग्रेण प्रज्ञप्तानि ? । भगवानाह—गौतम ! त्रीणि षडुत्तराणि निधिरत्नगतानि सर्व्वाऽग्रेण प्रज्ञप्तानि । नव निधिरत्नानि चतुस्त्रिंशद्गुणितानि उक्तसङ्ख्याकानि भवन्ति । अथ विवक्षितकाले भोग्यतामधिकृत्य प्रश्नयति—जंबुद्दीवे दीवे' इत्यादि । जम्बूद्वीपे कियन्ति रत्नानि परिभोग्यतया 'हव्व ति । शीघ्रमागच्छन्ति ?—विवक्षितकाले परिभोग्यानि भवन्तीत्यर्थ । भगवानाह—गौतम ! जघन्यपदे षट्त्रिंशत् जघन्यतश्चतुर्णामेव चक्रवर्त्तिना सद्भावात् उत्कृष्टपदे 'दोण्णि'त्ति । द्वे सप्तत्यधिके निधिरत्नशते परिभोग्यतया शीघ्रमागच्छन्ति उत्कृष्टपदे त्रिंशतश्चक्रवर्त्तिना सद्भावात् । नव निधिरत्नानि त्रिंशद्गुणितानि उक्तसङ्ख्याकानि भवन्तीत्यर्थ । 'जंबुद्दीवे' इत्यादि प्रश्नः प्राग्वत् । भगवानाह—गौतम ! द्वे दशोत्तरे पञ्चिंदियरत्नशते सर्व्वाऽग्रेण प्रज्ञप्ते । अथ विवक्षितकाले पञ्चेन्द्रियरत्नाना भोग्यता पृच्छति- जंबुद्दीवे इत्यादि प्रश्न सुगम । भगवानाह—गौतम ! जघन्यपदे अष्टाविंशति उत्कृष्टपदे द्वे दशोत्तरे पञ्चेन्द्रियरत्नशते परिभोग्यतया शीघ्रमागच्छन्ति । जघन्यतश्चतुर्णामुत्कर्षतस्त्रिंशतश्चक्रवर्त्तिना सद्भावात् । चक्रवर्त्तिसङ्ख्या सप्तगुणिता यथेप्सितसङ्ख्या भवतीत्यर्थ । अथैकेन्द्रियरत्नसङ्ख्या पृच्छति—'जंबुद्दीवे णमि' त्यादि । एतच्च पञ्चेन्द्रियरत्नसूत्रवद्व्याख्येयम् ।

अथ जम्बूद्वीपस्योद्वेधादिजिज्ञासया सिंहावलोकनन्यायेनाऽऽयामादि प्रश्नयति

**जंबुद्दीवे णं भंते ! दीवे केवइअं आयामविक्खंभेणं ? केवइअं परिक्खेवेणं ? केवइअं उव्वेहेणं ? केवइअं उड्ढं उच्चत्तेणं ? केवइअं सव्वग्गेणं प० ? । गो० ! जंबुद्दीवे दीवे एगं जोअणसयसहस्सं आयामविक्खंभेणं । तिण्णि जोअणसयसहस्साइं सोलस य सहस्साइं दोण्णि अ सत्तावीसे जोअणसए, तिण्णि अ कोसे, अट्ठावीसं च धणुसयं, तेरस य अंगुलाइं अद्धंगुलं च किंचिविसेसाहिए परिक्खेवेणं । एगं जोअणसहस्सं उव्वेहेणं । णवणउतिं जोअणसहस्साइं सातिरेगाइं उड्ढं उच्चत्तेणं । सातिरेगं जोअणसयसहस्सं सव्वग्गेणं । जंबुद्दीवे णं भंते ! दीवे किं सासए असासए ? । गो० ! सिअ सासए सिअ असासए । से केणट्ठेणं भंते ! एवं वुच्चइ—सिअ सासए सिअ असासए ? । गो० ! दव्वट्ठयाए सासए, वण्णपज्जवेहिं गंधरसफासपज्जवेहिं**

असासए। से तेणठेणं गो०। एवं वुच्चति सिअ सासए, सिअ असासए। जंबुद्दीवे णं भंते ! दीवे कालतो केवचिरं होति ?। गो०। ण कया णासि, ण कयाइ णत्थि, ण कयाइ ण भविस्सति। भुविं च भवति भविस्सति च। धुवे णितिए सासए अक्खए अव्वए अवट्ठिए णिच्चे जंबुद्दीवे दीवे पण्णत्ते। जंबुद्दीवे णं भंते ! दीवे किं पुढविपरिणामे, आउअपरिणामे, जीवपरिणामे, पोग्गल-परिणामे ?। गो० ! पुढविपरिणामे वि, आउअपरिणामे वि, जीवपरिणामे वि, पोग्गल परिणामे वि। जंबुद्दीवे णं भंते ! दीवे सव्वपाणा सव्वभूता सव्वजीवा सव्वसत्ता पुढविकाइ-अत्ताए आउ-तेउ-वाउ-वणस्सइ-काइअत्ताए उववण्णपुव्वा ?। हंता गो० ! असइं अदुवा अणंतखुत्तो ॥

'जंबुद्दीवे णमि'त्यादि प्रश्नः सुगमः। भगवानाह-गौतम ! जम्बूद्वीपो द्वीप एकं योजनशतसहस्रमाया-मविष्कम्भाभ्यां त्रीणि योजनशतसहस्राणि षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके ३१६२२७, त्रय क्रोशाः एकमष्टाविंशत्यधिकं धनुःशतं १२८, त्रयोदशाङ्गुलानि १३ अर्द्धाङ्गुलं च किञ्चिद्विशेषाधिकं परिक्षेपेण-परिरयेण, एकं योजनसहस्रमुद्वेधेन, नवनवतिर्योजनसहस्राणि सातिरेकाणि ऊर्ध्वमुच्चैस्त्वेन, सातिरेकं योजनशतसहस्रं सर्वाग्रेण। अयंभावः-जम्बूद्वीपवर्त्तिनो हि तीर्थकृतो जम्बूद्वीपवर्त्तिन्येव सुमेरावभिषिच्यन्ते। स च सुमेरुः समभूतलात् योजनसहस्रमेकं भूमाववगाढः। नवनवतिर्योजनसहस्राण्युच्चः। तदुपरि च चत्वारिंशद्योजनानि सुमेरुचूलेतिकृत्वा जम्बूद्वीपस्योद्वेधोच्चत्वादिनिरूपणानिदानं सुमेरुरेवेति। अथ जम्बूद्वीप. किं शाश्वत उताऽशाश्वत ? इत्यादिस्वरूपं पृच्छति-'जंबुद्दीवे णमि'त्यादि। जम्बूद्वीपो भदन्त ! द्वीपः किं शाश्वत उताऽशाश्वतः ?। भगवानाह-गौतम ! स्यात् शाश्वतः स्यादशाश्वतः-कथञ्चिन्नित्यः कथञ्चिद-नित्य इत्यर्थः। अथोक्तस्वरूपे निमित्तं पृच्छति-'से केणट्ठेणमि'त्यादि प्रश्नसूत्रं सुगमं। भगवानाह- गौतम ! द्रव्यार्थतया-द्रव्यार्थिकनयमतेन शाश्वतः। द्रव्यास्तिकनयो हि द्रव्यमेव तात्विकमभिमन्यते न पर्यायान्, द्रव्यं चान्वयि परिणामित्वात्। अन्यथा द्रव्यत्वाऽयोगात्। अन्वयित्वाच्च सकलकालभावीति द्रव्यार्थिकतया शाश्वतः। 'वण्णपज्जवेहिं'ति। वर्णपर्यायैस्तत्तदन्यसमुत्पद्यमानैः श्वेतपीतादिवर्णविशेषरूपैः। एवं गन्ध-पर्यायैः-सुरभिदुरभिगन्धविशेषरूपैः, रसपर्यायैस्तिक्तकटुकादिरसविशेषरूपैः, स्पर्शपर्यायैः-शीतोष्णादि-स्पर्शविशेषरूपैः। उपलक्षणमेतत् तत्तदन्यपुद्गलविचटनोच्चटनैश्चाऽशाश्वतः। किमुक्तं भवति-पर्याया-स्तिकनयमतेन पर्यायप्राधान्यविवक्षया न शाश्वतः, पर्यायाणां प्रतिक्षणभावितया कियत्कालभावितया वाऽवश्यं विनाशित्वात्। 'से तेणट्ठेणमि'त्युपसंहारवाक्यं सुगमं। इह द्रव्यास्तिकनयवादी स्वमतप्रतिष्ठा-पनार्थमेवमाह

नात्यन्ताऽसत उत्पादो नाऽपि सतो विद्यते विनाशो वा। नासतो विद्यते भावो नाभावो विद्यते सतः ॥१॥

इति वचनात्। यौ तौ दृश्येते प्रतिवस्तूत्पादविनाशौ तदाविर्भावतिरोभावमात्रं, यथा सर्पस्यो-

त्फणत्वविफणत्वे, तस्मात्सर्वं वस्तु नित्यमिति । एव च तन्मतचिन्तायां संशयस्तावत्–द्रव्यार्थतया शाश्वतोऽपि घटादिवत् उत सकलकालमेवरूप एव ? इति । ततस्तथाविधसंशयापनोदार्थं भगवन्तं भूय. पृच्छति–'जंबुद्दीवे णमि'त्यादि । जम्बूद्वीपो भदन्त ! द्वीप कालत कियच्चिरं–कियन्तं कालं यावद्भवति ?–एवरूपः कियन्तं कालमवतिष्ठत इति भाव । भगवानाह–गौतम ! न कदाचिन्नासीत्–सर्वदैवाऽऽसीदिति भावोऽनादित्वात् । न कदाचिन्न भवति–वर्त्तमानकालचिन्तायां सर्वदैव भवतीत्यर्थ सदैवभावात् , न कदाचिन्न भविष्यति- किन्तु भविष्यच्चिन्तायां सर्वदैव भविष्यमाणत्वात् अपर्यवसितत्वात् । तदेव कालत्रयचिन्तायां नास्तित्व–प्रतिषेध विधाय सम्प्रत्यस्तित्व प्रतिपादयति–'भुविं चे'त्यादि । अभूच्च भवति च भविष्यति चेति । त्रिकालाऽवस्थायित्वात् । ध्रुवो मेर्वादिवत् । ध्रुवत्वादेव सदैव स्वस्वरूपे नियत' । नियतत्वादेव शाश्वत –शश्वद्भवनस्वभाव । शाश्वतत्वादेव सततं गङ्गासिन्धुप्रवाहप्रवृत्तावपि पद्मह्रद इवाऽनेकपुद्गलविघटनेऽपि तावन्मात्राऽन्यपुद्गलोच्चटनसम्भवात् अक्षय –न विद्यते क्षयो–यथोक्तस्वरूपाऽऽकारपरिभ्रंशो यस्य सोऽक्षय । अक्षयादेवाऽव्ययोऽव्ययशब्दवाच्य मनागपि स्वरूपचलनस्य जातुचिदपि असम्भवात् । अव्ययत्वादेव अवस्थित' स्वप्रमाणे स्थिरस्वभाव. मानुषोत्तरपर्वताद् बहि समुद्रवत् । एव स्वप्रमाणे सदाऽवस्थानेन चिन्त्यमानो नित्यो–धर्माऽस्तिकायादिवत् । जम्बूद्वीप प्रज्ञप्तो मयाऽन्यैश्च तीर्थकृद्भिरिति । अथ जम्बूद्वीपस्य कालतो नित्यत्वेऽपि परिणतिं पृच्छति– जंबुद्दीवे णमि'त्यादि । जम्बूद्वीपो भदन्त ! द्वीपः किं पृथिवीपरिणाम ? अप्परिणाम ? जीवपरिणाम ? पुद्गलपरिणामो वा ? । इति प्रश्ने कृते भगवानाह–गौतम ! पृथिविपरिणामोऽपि, अप्परिणामोऽपि, जीवपरिणामोऽपि, पुद्गलपरिणामोऽपि । सर्वेषामपि द्वीपसमुद्राणां पृथिव्यब्जीवपुद्गलपरिणामात्मकत्वात् । अथैव जम्बूद्वीपे सर्वेऽपि प्राणादय उत्पन्नपूर्वा उत न ? इति पृच्छति– जंबुद्दीवे णमि'त्यादि । जम्बूद्वीपे भदन्त ! द्वीपे सर्वे प्राणा–द्वीन्द्रियादय , सर्वे भूता तरवः, सर्वे जीवा –पञ्चेन्द्रिया., सर्वसत्त्वा –पृथिव्यादय –पृथिवीकायिकत्वेन, अप्कायिकत्वेन तेजस्कायिकत्वेन, वायुकायिकत्वेन, वनस्पतिकायिकत्वेन च उत्पन्नपूर्वा ? । भगवानाह–गौतम ! असकृदुत्पन्नपूर्वाः । अथवा अनन्तकृत्व सर्व्वेषामपि सांव्यवहारिकराश्यन्तर्गतानां जीवानां सर्व्वेषु स्थानेषु प्रायोऽनन्तश उत्पादात् ॥

अथ जंबूद्वीपस्य नाम्न. सान्वर्थतया नामनिमित्तं पृच्छति—

से केणट्ठेणं भंते ! एवं वुच्चइ–जंबुद्दीवे दीवे ? । गो० ! जंबुद्दीवे णं दीवे तत्थ तत्थ देसे तहिं तहिं बहवे जंबुरुक्खा, जंबुवणा, जंबुवणसंडा, णिच्चं कुसुमिआ जाव पडिमंजरिवडिंसगधरा सिरीए अईव अईव उवसोभेमाणा उवसोभेमाणा चिट्ठंति । जंबूए सुदंसणाए अणाढीए णामं देवे महिड्ढीए जाव पलिओवमट्ठितीए परिवसति से तेणट्ठेणं एवं वुच्चति–जंबुद्दीवे जंबुद्दीवे । तए णं समणे भगवं महावीरे मिथिलाए णयरीए, माणिभद्दे चेइए, बहूणं समणाणं, बहूणं समणीणं, बहूणं सावयाणं, बहूणं साविआणं, बहूणं देवाणं, बहूणं देवीणं,

**मज्झगए एवमाइक्खइ, एवं भासइ, एवं पण्णवेति, एवं परूवेति–जंबुद्दीवपण्णत्ती णाम अज्जो अज्झयणे अट्ठं च हेउं च पसिणं च कारणं च वागरणं च भुज्जो भुज्जो उवदंसेति त्तिबेमि।**

**इति सिरि जंबुद्दीवपण्णत्तीसुत्तं समत्तं।**

'से केणट्ठे णमि'त्यादि। अथ केनार्थेन–केन निमित्तेन भदन्त! एवमुच्यते–जम्बूद्वीपो जम्बूद्वीप ?। भगवानाह–गौतम! जम्बूद्वीपे द्वीपे तत्र तत्र देशे, तस्य देशस्य तत्र तत्र प्रदेशे बहवो जम्बूवृक्षा, जम्बूवनानि, जम्बूवनखण्डा.। इह एकजातीयवृक्षसमुदायो वनम्, अनेकजातीयवृक्षसमूह' खण्ड। केवल प्रधानेन व्यपदेश इति जम्बूवन जम्बूखण्ड इति भेदेनोपात्त। 'निच्च'नित्य सर्व्वकाल षट्स्वपि ऋतुषु कुसुमिता:–कुसुमानि जातानि येषु ते तथा 'जाव पडिमजरी'त्यादि। यावत्प्रतिविशिष्टो मञ्जरीरूपोऽवतसकस्तद्धरा। यावत्करणात् नित्यं पल्लविता, नित्य स्तवकिता, नित्य गुल्मिता नित्य गुच्छिता, नित्य यमलिता., नित्य विनता., नित्य प्रणता, फलभारेणेत्यादिग्रह' 'सिरिए'त्ति। श्रिया अतीवाऽतीव उपशोभमाना' उपशोभमाना स्तिष्ठन्ति। 'जंबूए'इत्यादि। सुदर्शनापरपर्याया जम्बू अनादत –न आदता–आदरक्रियाविषयीकृता शेषा जंबूद्वीपगता देवा येनाऽऽत्मनोऽत्यद्भुत महर्द्धिकत्वमीक्षमाणेन सोऽनादत नाम्ना अनादत इत्यभिधानो देवो महर्द्धिक पल्योपमस्थितिक परिवसति तदेतेनार्थेन गौतम! एवमुच्यते–'जम्बूद्वीपो जम्बूद्वीप'। अथ सुधर्म्मस्वाम्येव जम्बूनामान स्वशिष्यमुद्दिश्य यदुक्तवांस्तदाह–'तए णमि' त्यादि। 'सति धर्म्मिणि धर्म्माश्चिन्त्यन्ते'इति वचनात्। यस्मात् कारणादनन्तरोक्तस्वरूपो जम्बूद्वीपः शाश्वतभावेन कालत्रयेऽपि सत्ताभाग् 'तए ण'ति। तस्मात् कारणात् णमित्यलङ्कारे 'अज्जो'त्ति। वक्ष्यमाणोपसहारवाक्यगतमिहापि सम्बन्धनीय। तेन हे आर्य! शोभनाऽनुष्ठायिन्निति शिष्याऽऽमन्त्रण श्रमणो भगवान् महावीरो मिथिलाया नगर्यां, माणिभद्रे चैत्ये, बहूना श्रमणानामित्यादि। यावद्बहूना देवीना च मध्यगत –एतत्समुदायपर्षन्मध्यवर्त्ती न पुनरेकान्ते–रहोवृत्त्या कस्यचिदेकतरादे. पुरस्तादित्यर्थ। एवमाख्याति–प्रागुक्तस्वरूपेण यथोक्त कथयति, एव भाषते–वाग्योगेन, एव प्रज्ञापयति–तस्य फल ज्ञापयति, एव प्ररूपयति–दर्पणतल इव प्रतिरूपश्रोतृणा हृदये सङ्क्रामयति। यद्वा–आख्याति सामान्यत, भाषते विशेषत, प्रज्ञापयति व्यक्तपर्यायवचनत', प्ररूपयति उपपत्तित.। अथोक्तपदार्थवाचकशब्दसन्दर्भस्याऽभिधान ज्ञापयन्नेवोक्तमेवार्थमुपसहरति–'जंबुद्दीवे'त्यादि। हे आर्य! जम्बूद्वीपप्रज्ञप्तिनाम्नि विभक्तिलोप प्राकृतत्वात् अध्ययने अर्थं–प्रयोजनमुपदिशति भगवानितिगम्य। तत्र प्रयोजन सर्वोत्कृष्टं मोक्षलक्षण जम्बूद्वीपवर्त्तिना हेयोपादेयज्ञेयभावमापन्नानामनेकविधवस्तूना सम्यक्परिज्ञानादेव चकार समुच्चये। अथोक्तस्वरूप ज्ञान हेतुनिर्णायकनिगमनवाक्येनैवेत्यत आह–हेऊ'त्ति। हेतु भगवानुपदिशति तत्र हेतुर्नामनिमित्त। तच्च नैमित्तिकवदनादिसिद्ध नैमित्तिकाऽसहचरित वा स्यात्। तथाहि– से तेणट्ठेण जंबुद्दीवे दीवे' इत्यादि निगमनवाक्य। तत्र जम्बूद्वीपस्य नाम्ना निमित्त जम्बूवृक्ष। स च जम्बूद्वीपवदनादिसिद्ध। क्वचिच्च निगमनवाक्यमन्तरेणाऽप्याधेयमेवाधिकरणस्य नाम्न. प्रवृत्तिनिमित्त सूचक। यथा–'वेअड्ढे पव्वए कइ

कूडा पण्णत्ता ? । गो० ! नवकूडा प० । तं०-सिद्धाययणकूडे' इत्यादि । यावत् 'वेसमण कूडे'त्ति । अत्र यदादिम कूट सिद्धायतनकूटसञ्ज्ञ तस्य नाम्न प्रवृत्तिनिमित्त यदावेय सिद्धायतनमर्हद्भवन तदेव । एव दक्षिणार्द्धभरतकूटान्यपि परिभावनीयानि । अथ द्वितीय निमित्त यथा-'भरहे नाम राया चाउरत चक्कवट्टी समुप्पजित्था' इत्यादि यावत् 'से तेणट्ठे ण एव वुच्चति-भरहे वासे भरहे वासे' । अत्राऽसङ्ख्येयकालवर्षान्तरेण भरतनामाचक्रवर्ती समुत्पन्न समुत्पत्स्यते चेत्यतो भरतक्षेत्र भरतक्षेत्रमित्युच्यते । एतच्च नामनिमित्त कादाचित्कम् कालविशेषाऽपेक्षया नैमित्तिकासहचरितमपि व्यावर्त्तकमसदुपलक्षणमितिवचनात् उपलक्षणभूतमवसातव्यम् । अथ निमित्तस्यापि सम्यक्परिज्ञान प्रश्ने सति भवतीत्यत आह-'पसिण च'त्ति । प्रश्न भगवानुपदिशति 'से केणट्ठे ण भते ! एव वुच्चति-भरहे वासे भरहे वासे'इत्यादिरूप । यद्यपि प्रश्नवचन शिष्यस्यैव भवति न पुनर्भगवतस्तस्य निर्वचनवक्तृत्वात् तथापि हे आयुष्मन्नित्यादि कोमलाऽऽमन्त्रणादिना सुशिष्य प्रति प्रश्नकरणाऽभिमुखीकरणद्वारा भगवानेवोपदिशतीति न दोष । तथा प्रश्नस्यापि सशयादिकारणपूर्वकत्वमेवेत्यत आह-'कारण च'त्ति । कारण हि कार्यसाधन । तच्च द्विविधम्-औत्सर्गिकमापवादिक च । तत्राद्य 'तत्थ ण वहवो वाणमतरा देवा देवीओ अ आसयति सयती' त्यादि । तत्र जगतीगतवनखण्डवर्त्तिपु मालतीप्रभृतिमण्डपेषु ये शिलापट्टकास्तेपु वानमन्तरादयो देवाः देव्यश्च क्रीडादिनिमित्तमायान्ति । तत्राऽऽगमनकारणमौत्सर्गिक शिलापट्टकादिस्थानानामतिरमणीयतैव । आपवादिक यथा-'जया ण एगमेगे चक्कवट्टिविजए भगव तित्थगरा समुप्पज्जति । ते णं काले ण ते ण समए ण अहेलोगवत्थव्वयाओ अट्ठदिसाकुमारीओ महत्तरिआओ' इत्यादि । यावत् 'जामेव दिसि पाउब्भूआ तामेव दिसि पडिगया'इति । अत्र षट्पञ्चाशतो दिक्कुमारीणा चतुष्षष्टेश्चेन्द्राणा सपरिकराणामिहमनुष्यलोकेऽवश्यमागमन, तत्र तीर्थकृता जन्मैव कारण । तच्च

'चत्तारि पच जोअणसयाइ गधो अ मणुअलोगस्स । उड्ढ वच्चइ जेण न हु देवा तेण आविति'त्ति । औत्सर्गिकवचनस्यापवादरूपमेव । अत एव

पचसु जिणकल्लाणेसु चेव महरिसीतवाणुभावाओ । जम्मतरणेहेण य आगच्छति सुरा इहय'ति । अपवादस्थानानि प्रवचने प्रतीतानि, इह च मनुष्यलोको समुदायाऽऽकीर्णो नगरादिलक्षणो द्रष्टव्यो न पुन. प्रवचनप्रसिद्धो मनुष्यक्षेत्ररूप । अन्यथा दुर्गन्धहेतुकोद्वेगव्यग्राणा देवादीना जगत्यादौ क्रीडादिनिमित्तमागमनाऽभावप्रसक्तौ प्रवचनवाधाप्रसङ्गो दुर्निवार्य । किञ्च-मनुष्यक्षेत्रान्तर्गतनिवासभूमीनामनेकदेवदेवीकोटीनामद्भुतपुण्यप्रकृत्युपभोगवियोग एव संपद्येत । दुरभिगन्धाभिव्रङ्गमयेन चतु. पञ्च योजनशतपरित्यागार्हे मनुष्यक्षेत्रे निजनिवासभूमीना सद्भावात् । तस्मान्मनुष्यसमुदायाऽऽकीर्णेषु नगरादिषु देवदेवीनामाऽऽगमने किञ्चिदाऽऽपवादिक प्रयोजन वक्तव्य । तच्च जिनजन्मोत्सवादिक प्रागुक्तमवसातव्य । ननु कारणमपवाद इति वचनात् 'उत्सर्गश्चेत्कथ कारणं कारण चेत्कथमुत्सर्गं' इति शीतोष्णस्पर्शाविव सहाऽनवस्थानलक्षणविरोधे कारणोत्सर्गाविति कथमौत्सर्गिक कारणम् ? इति चेत् । सत्यं, नह्यपवादाऽविनाभूत उत्सर्गं कारणत्वेनेहाधिकृत., किन्त्वसत्प्रतिपक्षत्वेन कार्यमात्रजनक कारणमौत्सर्गिक कारणमित्यस्यु-

पगम्य कारण द्वे विध्यप्रतिपादन न दोषावहमिति । अथोक्तस्वरूपयो. कारणयो. सम्यक् निर्णयो व्याकरण नैवेत्यत आह-'वागरणं च'ति । व्याकरण हि पृष्टार्थकथन, तत्र 'कहि ण भते ! जबुद्दीवे दीवे चुल्लहिमवते वासहरपव्वए प० । गो० ! हिमवतस्स वासस्स दाहिणेण भरहस्स वासस्स उत्तरेणमि'त्यादि पृष्टार्थस्य कथनं । तथा-'तस्स ण बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे एत्थ ण एक्के मह पउमद्दहे णामं दहे पण्णत्ते पाईणपडीणायते उदीणदाहिणविच्छिन्ने' इत्यादि प्रसङ्गतोऽपृष्टार्थस्यापि कथनम् । एतच्च प्रसङ्गतोऽपि विनयप्रतिपत्त्यादिकारणैरनुकलितो गुरु. श्रोतृविशेषमासाद्य स्वयमेव कथयति । चकार सर्व्वत्र समुच्चये द्रष्टव्य इति । अथैवमर्थादिव्याकरणपर्यन्त भगवान् कथमुपदिशति ? इत्याह-भुज्जो भुज्जो'त्ति । भूयो भूयो-वारवारमुपदिशति, सकृत्कथने हि श्रोता विस्मरणशीलोऽलसो वा स्यात्, वारवार च कथने कथं भगवान् वारवारमुपदिशतीति चिन्तापरायणोऽलसोऽपि श्रवणाऽभिमुखीस्यादिति सप्रयोजन वारवारमुपदेशनमितिश्री सुधर्म्मस्वामी-पञ्चमो गणधर. श्रीजम्बूस्वामिन स्वशिष्य प्रति 'बेमी'ति । ब्रवीति ॥

इति श्रीजम्बूद्वीपप्रज्ञप्तिवृत्तौ ज्योतिष्कवक्तव्यताऽधिकारप्रतिवद्धश्चतुर्थोऽधिकारो व्याख्यात । तद्व्याख्याने च व्याख्यात जम्बूद्वीपप्रज्ञप्तिनामक ज्ञाताधर्म्मकथाङ्गस्योपाङ्गमिति ।

**इति श्री जम्बूद्वीपप्रज्ञप्तिवृत्तिः समाप्ता ।**

**वृत्तावस्यां सहस्राणि चतुर्दश शतद्वयम् द्विपञ्चाशत्तथाश्लोका ग्रन्थमानं विनिश्चितम् ॥१॥**

## प्रशस्तिः

आसीद्वासववृन्दमौलिमुकुटभ्राजिष्णुरत्नप्रभा-पूरप्लावितपादपङ्कजयुग सिद्धार्थराजाङ्गज । तेभ्योऽभि. सुभग व्दधाद्गणधर श्रीमान् सुधर्माभिधस्तत्पट्ट चरमेतरक्षितिभृत श्रृङ्ग विवस्वानिव ॥१॥
विश्वोऽऽशयपयोराशिचन्द्रानिस्तन्द्रवृत्तय. । तत्परम्परयाऽभूवन् श्रीजगच्चन्द्रसूरय ॥२॥
वर्षे विशिखवस्वक्षि-कौमुदीकान्तसम्मिते १२८५ । तपोभिर्दुस्तपैर्लेभे 'तपे'तिविरुद च यै ॥३॥
आनन्दविमलाह्वाना सूरय सिद्धिभूरय । तेषा क्रममलञ्चक्रु कलहंसा इवाम्बुजम् ॥४॥
पाणिसिद्धीषुशीतांशु प्रमिते परिवत्सरे १५८२ । विदधे यै क्रियोद्धार सत्त्वानुग्रहकारिभि ॥५॥
ये वैराग्यवता व्रजेषु परमा सूर्या इवार्ऽप्यष्मता ये मुख्या सुधिया च येषु मरुता वृक्षा इवोर्व्वीरुहाम् । ये सौभाग्यभृता भरेषु सुभगा सिहा इवौजस्विना ये चार्या गुणीना गणेषु सरितामीशा इवाम्भोभृताम् ॥६॥

दितदुरितनिदान साधुतामाददान. सुविहितहितदान स्मेरपद्मोद्यदान. ।
अजनि विजयदान सूरिराट् शददानः कृतमनसिजदानस्तत्पदे श्रीनिदान ॥ ७ ॥

प्रकटप्रभावभवनं भुवनाऽऽर्च्या हीरविजयसूरीन्द्रा । तत्पट्टे विजयन्ते विजयश्रीदोर्लतालसिता ॥ ८ ॥

मेवातमालवमरुस्थलमेदपाट-गौडादिदेशपतिसाहिअकब्बरेण ।

आकारितै सबहुमानमनिन्द्यविद्यै-र्यैर्मध्य[1]मण्डलमलङ्क्रियते स्म पूज्यैः ॥९॥

यद्वाक्प्रहृष्टहृदयोऽवनिजानिमुख्य श्रीमानकब्बरनृप कृपया परीत ।

'वध्या न देहिन इहे' ति वदन् वचासि दत्ते रम डावरसर शमिसिन्धुराणाम् ॥१०॥

यद्दर्शनात्प्राप्तपरप्रमोद साहि स च द्वादश वासराणि ।

श्री वार्षिके पर्व्वणि सर्व्वदेशे व्यधादमारे पटह पटिष्ठम् ॥११॥

सिद्धान्ततर्ककाव्यादि-कवाड मयजलधिकनकशैलानाम् । परवादिगर्व्वपर्व्वत-पर्व्वतविद्वेषिलीलानाम् ॥१२॥

कल्पकिरणावलीमुखबहुशास्त्रग्रथनलब्धसिद्धीनाम । श्रीधर्म्मसागराऽभिध-वाचकचक्रैकचक्रभृताम् ॥१३॥

ऐदयुगीनसुविहित-सद सदनसदनरत्नसदृशानाम् । महिममणिमण्डितानां वानरऋषि पण्डितानां च ॥१४॥

साहाय्यात्सज्जितोत्साहैर्विश्वोपकृतिकाङ्क्षिभि । श्रीजीवाभिगमव्योति -वरण्डाद्यनुसारिभि ॥१५॥

वर्षे श्री विक्रमार्काद् ग्रहदहनरसश्वेतरश्मि प्रमाणे १६३९ ।

स्वातौ दीपोत्सवीयेऽह्नि निखिलकला-कौमुदीकौमुदीशे ।

तैरेषा शास्त्ररेखा सहृदयहृदयानन्द कन्दाम्बु जम्बू-

द्वीपप्रज्ञप्तिवृत्तिर्विविधरसमयी-निर्म्ममे निर्म्ममेशै ॥१६॥ कुलकम् ।

तत्पट्टपूर्वपर्व्वतपयोजिनी प्राणवल्लभप्रतिमै । वरधर्म्मकर्म्मनिर्म्मितिकलावलापेन्दुशितिकण्ठै ॥१७॥

सौभाग्यभाग्यरतिशैलसुतैकपादैः प्रोत्फुल्लपद्मदलपेशलपाणिपादै ।

दुर्व्वादिवृन्दवदनाम्बुजशीतपादै सूरीश्वरैर्विजयसेनमुनीन्द्रपादै ॥१८॥

वाचकवृन्दवतंसै सकलकलाकमलिनीकमलिनीशै । कल्याणविजयवाचकमुख्यै सम्प्राप्तसौख्यैश्च ॥१९॥

कल्याणकेलिनिलयै श्रीमत्कल्याणकुशलकुशलैश्च । श्रीलब्धिसागराभिध-विबुधैरुपलब्धिलब्धैश्च ॥२०॥

सम्भूय भूयसी भक्ति विभ्रद्भिर्भगवद्गिरि । पत्तने शोधयाञ्चक्रे वक्रेतरगुणैरियम् ॥२१॥

तच्चरणनलिननिलय प्रशस्तिमेतां जगत्स्थितिप्रतिमाम् ।

हेमविजयकविरकरोत्पुरुषोत्तमपालनप्रथिताम् ॥ २२ ॥

यावत् शीतमरीचिमण्डलमिदं व्योमाङ्गण गाहते यावत्पङ्कजिनीपतिर्वितनुते भासाभरैश्चातपम् ।

रम्यालङ्कृतिशालिनीवरपदन्यासालसद्वर्णभाक् तावद्वृत्तिरियं वशेव कुरुतां कामोत्सवानङ्गिनाम् ।२३।

इति श्रीजम्बूद्वीपप्रज्ञप्तिवृत्तिप्रशस्ति ।

१ दिल्लीदेशं ।